महर्षिशुक्राचार्यविरचिता

# शुक्रनीतिः

व्याख्याकार

डॉ. जगदीशचन्द्र मिश्र

## पुस्तक परिचय

नीतिशास्त्र से भिन्न अन्य सभी शास्त्रों ने व्यवहारिक जगत् के किसी एक भाग का ही वर्णन किया है, किन्तु सार्वजनिक हित एवं सामाजिक सुरक्षा का बन्धकत्व नीतिशास्त्र ही देता है, क्योंकि धर्म, अर्थ, काम और मोक्ष रूप पुरूषार्थ चतुष्टय का यह साधक है । इसी परम्परा में संस्कृत के विश्वविजयी नीतिग्रन्थों में भृगुपुत्र दानवगुरू शुक्राचार्य द्वारा रचित शुक्रनीति भी एक अद्भुत ग्रन्थ है । इनकी मौलिकता पर उँगली उठाने वाले भी इनकी लोकप्रियता के सम्बन्ध में दो मत नहीं रखते । संस्कृत में ऐसे श्रेष्ठ ग्रन्थों की भी एक विशाल परम्परा है, जिन्हें प्रामाणिक लेखकों के अभाव में मौलिक मानने में हिचकिचाहट हो सकती हैं, किन्तु जो लोकप्रियता में अब भी अतुल है ।

ऐतिहासिक दृष्टिकोण से विचार करने पर शुक्रनीति की विशिष्टता और महत्ता और अधिक स्पष्ट हो जाती है । इसके अध्ययन से तत्कालीन भारतीय समाज, उसके चिन्तन और उसकी प्रवृत्ति पर पूर्ण प्रकाश पड़ता है । राजनीति सम्बन्धी तथ्यों का ज्ञान, जो सामान्यतः सार्वजनीन कहा जा सकता है, हमें इस ग्रन्थ से मिलता है । इस ग्रन्थ की अपनी विशिष्ट गरिमा है ।

विषयवस्तु के संकलन की दृष्टि से व्यावहारिक तथ्य-निरूपण में इस ग्रंथ की महत्ता अद्वितीय है । यह

॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला

२७४

महर्षिशुक्राचार्यविरचिता

# शुक्रनीतिः

श्रीमज्जीवानन्दविद्यासागरभट्टाचार्यकृतव्याख्योपेता

तथा

'विमला'-संस्कृत-हिन्दीव्याख्याभ्यां समुपबृंहिता

## भाग-2

व्याख्याकार

डॉ॰ जगदीशचन्द्र मिश्र

साहित्याचार्यः, व्या॰ शा॰

एम॰ ए॰ (द्वितीय), पी-एच्॰ डी॰, डिप्-इन-एड्

चौखम्बा सुरभारती प्रकाशन

वाराणसी

ISBN : 978-93-81484-43-2 (Set)

प्रकाशक :

**चौखम्बा सुरभारती प्रकाशन**

(भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक)

के 37/117 गोपाल मंदिर लेन, पोस्ट बॉक्स न. 1129

वाराणसी-221001

दूरभाष : (0542) 2335263



संस्करण : 2019

₹ 1600 (1-2 part)

अन्य प्राप्तिस्थान :

**चौखम्बा पब्लिशिंग हाउस**

4697/2, भू-तल (ग्राउण्ड फ्लोर)

गली न. 21-ए, अंसारी रोड़, दरियागंज

नई दिल्ली-110002

दूरभाषः (011) 32996391, टेलीफैक्सः (011) 23286537

*

**चौखम्बा संस्कृत प्रतिष्ठान**

38 यू. ए. बंगलो रोड़, जवाहर नगर,

पोस्ट बॉक्स न. 2113, दिल्ली-10007

*

**चौखम्बा विद्याभवन**

चौक (बैंक ऑफ बड़ोदा भवन के पीछे)

पोस्ट बॉक्स न. 1069, वाराणसी-221001

**मुद्रक**

डीलक्स ऑफसेट प्रिंटर्स, दिल्ली

# चतुर्थाऽध्यायस्य प्रथमं प्रकरणम्

**अथ मिश्रप्रकरणं प्रवक्ष्यामि समासतः।**
**लक्षणं सुहृदादीनां समासाच्छृणुताधुना॥ १ ॥**

**अन्वयः**—अथ मिश्रप्रकरणं समासतः प्रवक्ष्यामि। सुहृदादीनां लक्षणं समासात् अधुना शृणुत॥ १ ॥

**व्याख्या**—अथ = तत्पश्चात्, मिश्रप्रकरणम्—मिश्राणाम् = मिश्रितानेकविषयाणाम्, प्रकरणम् = परिच्छेदः, समासतः = सङ्क्षेपेण, प्रवक्ष्यामि = कथयामि। तत्र सुहृदादीनाम् = मित्रप्रभृतीनाम्, लक्षणम् = चिह्नम्, समासात् = संक्षेपात्, अधुना = इदानीम्, शृणुत = आकर्ण्यतामित्यर्थः॥ १ ॥

**हिन्दी**—अब अनेक विषयों का प्रकरण सङ्क्षेप में कहता हूँ। उनमें सर्वप्रथम मित्र के लक्षण संक्षेप में इस समय आप लोग सुनें॥ १ ॥

**अथेति**। अथ अनन्तरं मिंश्राणां विवधविषयाणां प्रकरणं सङ्क्षेपात् प्रवक्ष्यामि। तत्र सुहृदादीनां लक्षणं समासतः सङ्क्षेपात् अधुना साम्प्रतं प्रथममित्यर्थः शृणुत।। १ ॥

**मित्रः शत्रुश्चतुर्धा स्यादुपकारापकारयोः।**
**कर्त्ता कारयिता चानुमन्ता यश्च सहायकः॥ २ ॥**

**अन्वयः**—उपकारापकारयोः मित्रः शत्रुश्च चतुर्धा स्यात्। कर्त्ता कारयिता अनुमन्ता च यः सहायकः॥ २ ॥

**व्याख्या**—उपकारापकारयोः = हिताहितयोः, क्रमेण मित्रः = सुहृद्, च = पुनः, शत्रुः = रिपुः, अत्र मित्रशब्दस्य पुंल्लिङ्गप्रयोगः आर्षत्वादिति, चतुर्धा = चतुर्विधः, स्यात् = भवेत्। कर्त्ता = स्वयमनुष्ठाता, कारयिता = प्रेरकः, अनुमन्ता = अनुमतिप्रदाता, च = पुनः, यश्च सहायकः = सहायः स्यात्॥ २ ॥

**हिन्दी**—मनुष्य किसी का उपकार या अपकार करने से मित्र या शत्रु बन जाता है। ये मित्र एवं शत्रु चार तरह के होते हैं। क्रमशः उपकार एवं अपकार करने वाला, कराने वाला, अनुमति देने वाला तथा सहायक; इन चार भेदों से चार तरह के मित्र एवं शत्रु होते हैं॥ २ ॥

**मित्र इति**। उपकारापकारयोः सतो क्रमेण मित्रः शत्रुश्च स्यात्। स च प्रत्येकं चतुर्धा चतुर्विधः कर्त्ता, कारयिता, अनुमन्ता तथा यश्च सहायकः साहाय्यकारी सः तथा च कर्त्ता मित्रः, कारयिता मित्रः, अनुमन्ता मित्रः, सहायमित्रः। कर्त्ता शत्रुः कारयिता शत्रुः अनुमन्ता शत्रुः सहायः शत्रुः, मित्रशब्दश्चात्र पुंल्लिङ्ग आर्षः॥ २ ॥

**यस्य सुद्रवते चित्तं परदुःखेन सर्वदा।**
**इष्टार्थे यततेऽन्यस्याप्रेरितः सत्करोति यः॥ ३ ॥**

आत्मस्त्रीधनगुह्यानां शरणं समये सुहृत्।
प्रोक्तोत्तमोऽयमन्यश्च त्रिद्व्येकपदमित्रकः ॥ ४ ॥

**अन्वयः**—यस्य चित्तं परदुःखेन सर्वदा सुद्रवते, यः अन्यस्य इष्टार्थे यतते, तथा अप्रेरितः सत्करोति, समये आत्मनः स्त्रियाः धनानां गुह्यानां शरणं; सः अयं उत्तमः सुहृत् प्रोक्तः। अन्यश्च त्रिद्व्येकपदमित्रकः अस्ति ॥ ३-४ ॥

**व्याख्या**—यस्य = जनस्य, चित्तम् = हृदयम्, परदुःखेन—परेषाम् = अन्येषाम्, दुःखेन = पीडया, सुद्रवते = सुष्ठुतया गलति, सर्वदा = सततम्, यः = पुरुषः, अन्यस्य = परस्य, इष्टार्थे = वाञ्छितार्थसाधने, यतते = प्रयत्नं कुरुते, तथा अप्रेरितः = अप्रचोदितः, सत्करोति = हितङ्करोति, समये = यथावसरे, आत्मनः = स्वस्य, स्त्रियाः = पत्न्याः, धनानाम् = वित्तानाम्, गुह्यानाम् = परेषां गुप्तविषयाणाम्, शरणम् = आश्रयस्थानम्, सोऽयम् = एषः, उत्तमः = उत्कृष्टः, सुहृत् = मित्रम्, प्रोक्तम् = कथितम्। अन्यश्च = अपरश्च, त्रिद्व्येकपदमित्रमस्ति। अर्थात् परपीडया यस्य चित्तं सुद्रवते, यश्चान्याभिलषितार्थप्राप्तये प्रयत्नं करोति, तथाऽप्रचोदितः सन्नपि सत्केरोति सः त्रिपदमित्रकः, यस्य हृदयम् परपीडया द्रवति, पराभिलषितार्थे यतते, सः द्विपदमित्रकः, यस्य जनस्य हृदयं परदुःखेनैव गलति सः एकपदमित्रको भवति ॥ ३-४ ॥

**हिन्दी**—जिसका हृदय अपने मित्र के दुःख से महादुःखी रहता है और जो अपने मित्र की अभीष्ट सिद्धि के लिए सतत प्रयत्नशील रहता है तथा बिना कहे ही मित्र का हितसाधन करता है एवं मित्र की स्त्री, धन और गोपनीय विषयों की समय आने पर रक्षा करता है, वह उत्कृष्ट मित्र कहलाता है। इससे भिन्न योग्यतानुसार कम पादवाला होने से त्रिपद, द्विपद तथा एकपद मित्र कहलाता है। कहने का तात्पर्य यह है कि जिसका हृदय मित्र-दुःख से कातर है, जो मित्र की अभीष्ट सिद्धि के लिए प्रयास करता है तथा बिना कहे ही उसका उपकार करता है, वह त्रिपदमित्रक होता है। जिसका मन मित्र के दुःख से दुःखी होता है तथा मित्र की अभीष्ट सिद्धि के लिए प्रयास करता है, वह द्विपद मित्र कहलाता है तथा जिसका हृदय केवल मित्र के दुःख से दुःखी होता है, वह एकपद मित्र कहलाता है ॥ ३-४ ॥

**यस्येति। आत्मेति।** यस्य चित्तं परदुःखेन सर्वदा सुद्रवते, गलति, यः अन्यस्य इष्टार्थे अभिप्रेतार्थसाधने यतते, तथा अप्रेरितः अकथितः सन्नपि सत्करोति उपकरोति। किन्तु यः समये यथासमये आत्मनः स्त्रियाः धनानां गुह्यानाम् अन्येषां गुप्तविषयाणां शरणं रक्षिताः, सः अयम् उत्तमः सुहृत् प्रोक्तः कथितः। प्रोक्तोत्तम इति सन्धिरार्षः। अन्यश्च त्रिद्व्येकपदमित्रकः अस्ति तथाहि यस्य चित्तं परदुःखेन गलति, यश्च अन्यस्य इष्टार्थे यतते तथा अप्रेरितोऽपि सत्करोति सः त्रिपदमित्रकः, यस्य चित्तं परदुःखेन गलति, यश्च अन्यस्य इष्टार्थे यतते, सः द्विपदमित्रकः, यस्य चित्तं परदुःखेन गलति सः एकपदमित्रक इति भावः ॥ ३-४ ॥

अनन्यस्वत्वकामत्वमेकस्मिन् विषये द्वयोः।
वैरिलक्षणमेतद् वान्येष्टनाशनकारिता ॥ ५ ॥

**अन्वयः**—द्वयोः एकस्मिन् विषये अनन्यस्वत्वकामत्वं वा अन्येष्टनाशनकारिता एतत् वैरिलक्षणम् ॥ ५ ॥

**व्याख्या**—द्वयोः = उभयोः पुंसोः, एकस्मिन् = कस्मिंश्चित्, विषये = व्यापारे, अनन्य-

स्वत्वकामित्वम् = स्वस्वामित्वमात्राभिलाषत्वम्, वा = अथवा, अन्येष्टनाशनकारिता—अन्येषाम् = आत्मभिन्नजनानाम्, इष्टानाम् = अभिलषितानाम्, नाशनकारिता = विघातकत्वम्, एतत् = पूर्वोक्तद्वयम्, वैरिलक्षणम् = शत्रुताविधायकम् ॥ ५ ॥

**हिन्दी**—एक ही वस्तु के विषय में दो आदमी का अपना वर्चस्व कायम करना अथवा एक-दूसरे की अभिलषित वस्तु को विनष्ट करना—ये दोनों लक्षण वैरभाव रखने के हैं ॥ ५ ॥

**अनन्येति**। द्वयोः एकस्मिन् विषये वस्तुनि अनन्यस्वत्वकामत्वं निजस्वामित्वमात्रकामना वा अथवा अन्येषाम् इष्टानां नाशनकारिता विनाशकत्वमित्यर्थः, एतत् उभयं वैरिलक्षणं शत्रुताप्रयोजकमित्यर्थः ॥ ५ ॥

**भ्रात्रभावे पितृद्रव्यमखिलं मम वै भवेत्।**
**न स्यादेतस्य वश्येऽयं ममैव स्यात् परस्परम् ॥ ६ ॥**
**भोक्ष्येऽखिलमहं चैतद्विनान्यं स्तः सुवैरिणौ।**
**द्वेष्टि द्विष्ट उभौ शत्रू स्तश्चैकतरसंज्ञकौ ॥ ७ ॥**

**अन्वयः**—भ्रातुः अभावे अखिलं पितृद्रव्यं मम वै भवेत्, एतस्य न स्यात्, अयञ्च ममैव वश्यं स्यात्। अहम् अन्यं विना अखिलम् एतत् भोक्ष्ये, परस्परं द्वौ तौ सुवैरिणौ स्तः। यश्च द्वेष्टि द्विष्टः तौ एकतरसंज्ञकौ शत्रू स्तः ॥ ६-७ ॥

**व्याख्या**—भ्रातुः = सोदरस्य, अभावे = सत्ताभावे, अखिलम् = सकलम्, पितृद्रव्यम् = आनुवांशिकधनम्, ममैव = मदीयैव, वै = इति निश्चयेन, भवेत् = स्यात्, एतस्य = भ्रातुः न = नहि, स्यात् = भवेत्, अयञ्च = एषश्च, विना = विहाय, अखिलम् = समग्रम्, एतत् = धनं वस्तुजातम्, च, भोक्ष्ये = उपभोगं करिष्यामि, अनेन प्रकारेण, परस्परम् = अन्योऽन्यम्, यौ = भ्रातारौ, विचारयतः इति शेषः, तौ = भ्रातारौ, सुवैरिणौ = घोरारी, स्तः = भवतः। यश्च = यो हि भ्राता, द्वेष्टि = द्वेषं करोति, यश्च = भ्राता, द्विष्टः = सापत्न्यभावभूतः, तौ = सोदरौ, एकतरसंज्ञकौ = एकतरनामानौ, शत्रू = रिपू, स्तः = भवतः ॥ ६-७ ॥

**हिन्दी**—अपने भाई के रहने के बावजूद भी पिता का अर्जित सारा धन मेरा ही है हो, किसी दूसरे भाई के हाथ न लगे, दूसरा भाई मेरे अधीन रहे, मैं किसी के अधीन न रहूँ; इसे अलग हटा कर सम्पूर्ण धन का मैं अकेले उपभोग करूँ—इस प्रकार जो परस्पर भाई लोग एक-दूसरे के प्रति विचार रखते हैं, वे एक-दूसरे के परम शत्रु कहलाते हैं। जो केवल द्वेष करता है या किसी के द्वेष का पात्र होता है, वे दानों एकतरफा दुश्मन कहलाते हैं ॥ ६-७ ॥

उभयप्रकारं दृष्टान्तेन दर्शयति—**भ्रात्रभावे इति। भोक्ष्ये इति।** भ्रातुः अभावे अविद्यमानतायामपीत्यर्थः, अखिलं समग्रं पितृद्रव्यं मम वै ममैव वैशब्दोऽवधारणे। भवेत्, एतस्य भ्रातुः न स्यात्, अयञ्च भ्राता ममैव वश्यः स्यात्। अहम् अन्यं विना अखिलं समग्रम् एतत् वस्तु भोक्ष्ये इत्येवं परस्परं यौ मन्त्रयत इति शेषः, तौ सुवैरिणौ परमशत्रू स्तः भवतः। यश्च द्वेष्टि, द्वेषं करोति, यश्च द्विष्टः द्वेषविषयीभूतः तौ एकतरसंज्ञकौ एकतरनामानौ शत्रू स्तः भवतः ॥ ६-७ ॥

**शूरस्योत्थानशीलस्य बलनीतिमतः सदा।**
**सर्वे मित्रा गूढवैरा नृपाः कालप्रतीक्षकाः ॥ ८ ॥**

**भवन्तीति किमाश्चर्य्यं राज्यलुब्धा न ते हि किम्?।**
**न राज्ञो विद्यते मित्रं राजा मित्रं न कस्य वै॥९॥**

**अन्वयः**—शूरस्य सदा उत्थानशीलस्य बलनीतिमतः सर्वे गूढवैराः कालप्रतीक्षकाः नृपाः मित्राः भवन्ति इति आश्चर्यं किम्? ते हि किं राज्यलुब्धाः न? राज्ञः मित्रं न विद्यते, राजाऽपि कस्य मित्रं न वै॥८-९॥

**व्याख्या**—शूरस्य = पराक्रमशालिनः, सदा = सर्वदा, उत्थानशीलस्य = उन्नतिशीलस्य, तथा बलनीतिमतः = शक्तिशालिनो नयशालिनो जनस्य, सर्वे = सकलाः, गूढवैराः = प्रच्छन्नशत्रुत्वम्, कालप्रतीक्षकाः = समयापेक्षिणः, नृपाः = राजानः, मित्राः = सुहृद्भूताः, भवन्ति = जायन्ते, इति = अस्मिन् विषये, आश्चर्यम् = विस्मयः, किम् = इति प्रश्ने? ते = नृपाः, हि = यतः, किमिति प्रश्ने, राज्यलुब्धाः = जनपदगृध्नवः, न = नहि, अपितु, राज्यलुब्धाः एव, केवलं कालं प्रतीक्षन्ते एव। कोऽपि जनः राज्ञः = नृपस्य, मित्रम् = सुहृत्, न = नहि, विद्यते = अस्ति, राजाऽपि = नृपोऽपि, कस्यापि, मित्रम् = सुहृद्, न = नहि, वै = इति निश्चयेन भवतीति॥ ८-९॥

**हिन्दी**—जो राजा शूर, सदा उन्नतिशील, बल तथा नीति से युक्त होता है, उसके सभी राजा लोग मौके का इन्तजार करने वाले होते हैं। वे छिपे ढंग से दुश्मनी तथा ऊपर से मित्रता करने वाले होते हैं। इस बात पर आश्चर्य करना क्या उचित है? क्या वे राजे राज्य के लोभी नहीं होते हैं? अर्थात् अवश्य होते हैं। इससे यही सिद्ध हुआ कि न तो राजा का कोई मित्र होता है और न राजा किसी का मित्र होता है॥८-९॥

**शूरस्येति। भवन्तीति।** शूरस्य विक्रमशालिनः सदा उत्थानशीलस्य उद्योगिनः तथा बलनीतिमतः बलशालिनो नीतिपरायणस्य च जनस्य सर्वे गूढवैराः गुप्तशात्रवाः कालप्रतीक्षकाः समयापेक्षिणः नृपाः मित्राः मित्रभूताः भवन्ति इत्यत्र आश्चर्य्यं किम्? ते हि नृपाः किं राज्यलुब्धाः न? अपितु राज्यलुब्धा एव केवलं कालं प्रतीक्षन्ते इति भावः। कोऽपि जनः राज्ञः मित्रं न विद्यते, राजापि कस्यापि मित्रं न वै नैवेत्यर्थः॥८-९॥

**प्रायः कृत्रिममित्रे ते भवतश्च परस्परम्।**
**केचित् स्वभावतो मित्राः शत्रवः सन्ति सर्वदा॥१०॥**

**अन्वयः**—प्रायः ते परस्परं कृत्रिममित्रे भवतः। च केचित् स्वभावतः मित्राः शत्रवः सर्वदा सन्ति॥१०॥

**व्याख्या**—प्रायः = बहुधा, ते = नृपाः, परस्परम् = अन्योन्यम्, कृत्रिममित्रे = अनैसर्गिकसुहृदौ, भवतः = स्तः, च = पुनः, केचित् = कश्चन, स्वभावतः = निसर्गतः, मित्राः इत्यार्षप्रयोगः, सुहृदः, शत्रवः = अरयः, सर्वदा = कदाचित्, सन्ति = भवन्तीति भावः॥१०॥

**हिन्दी**—प्रायः वे राजे आपस में बनावटी मित्र बने रहते हैं। किन्तु इनमें कुछ ऐसे भी होते हैं, जो निःस्वार्थ प्रेम करते हैं या शत्रु बन जाते हैं॥१०॥

**प्राय इति।** प्रायः बाहुल्येन तौ प्रजाराजानौ परस्परं कृत्रिममित्रे कार्य्यजबन्धू भवतः। किञ्च केचित् स्वभावतः मित्राः सर्वदा कदाचिदित्यर्थः, शत्रवः सन्ति भवन्ति॥१०॥

**माता मातृकुलं चैव पिता तत् पितरौ तथा।**
**पितृपितृव्यात्मकन्या पत्नी तत् कुलमेव हि॥ ११॥**
**पितृमात्रात्मभगिनीकन्यकासन्ततिश्च या।**
**प्रजापालो गुरुश्चैव मित्राणि सहजानि हि॥ १२॥**

**अन्वयः**—माता मातृकुलं पिता तत् पितरौ तथा पितृपितृव्यात्मकन्या पत्नी तत् कुलमेव हि पितृमात्रात्मभगिनीकन्यकासन्ततिः च प्रजापालः गुरुः हि एतानि सहजानि मित्राणि॥ ११-१२॥

**व्याख्या**—माता = जननी, मातृकुलम् = मातामहप्रभृतयः, पिता = जनकः, तत् = तस्य पितुः, पितरौ—माता च पिता च पितरौ = पितामहः पितामही च, तथा, पितुः पितृव्यः = पितुः पितृसोदरः, आत्मकन्या = स्वसुता, पत्नी = भार्या, तत् = तस्याः, कुलम् = श्वसुरादयः, पितृभगिनी = पितृष्वसा, मातृभगिनी = मातृष्वसा, आत्मभगिनी = स्वसहोदरा, तासाम् = भगिनीनाम्, कन्यकाश्च = सुताश्च, या च सन्ततिः तासाम्, सन्ततिः = प्रसवः, प्रजापालः = प्रजारक्षको नृपतिः, तथा गुरुः = शुभचिन्तकः आचार्यः, हि = इति निश्चयेन, एतानि = पूर्वोक्तानि, सहजानि = स्वाभाविकाः, मित्राणि = सुहृदो भवन्तीति भावः॥ ११-१२॥

**हिन्दी**—माता, ननिहाल के सम्बन्धी वर्ग, पिता, दादा-दादी तथा पिता के चाचा, अपनी बेटी, पत्नी तथा ससुराल के सम्बन्धी वर्ग, फूफी, मौसी, बहन और इनकी सन्तान, प्रजापालक राजा और शुभचिन्तक गुरु—ये सभी किसी भी व्यक्ति के स्वाभाविक मित्र होते हैं॥ ११-१२॥

**मातेति**। माता, मातृकुलं मातामहादिः पिता तथा तस्य पितुः पितरौ मातापितरौ पितामहः पितामही चेत्यर्थः, पितुः पितृव्यः, आत्मकन्या, पत्नी, तस्याः कुलं श्वशुरादिः, पितृभगिनी, मातृभगिनी, आत्मभगिनी, तासां कन्यकाश्च या च सन्ततिः पुत्र इत्यर्थः, प्रजापालः, भूपतिः, तथा गुरुः एतानि सहजानि मित्राणि हिशब्दोऽवधारणार्थः॥ ११-१२॥

**विद्या शौर्य्यञ्च दाक्ष्यञ्च बलं धैर्य्यञ्च पञ्चमम्।**
**मित्राणि सहजान्याहुर्वर्त्तयन्ति हि तैर्बुधाः॥ १३॥**

**अन्वयः**—विद्या शौर्य्यं दाक्ष्यं बलं तथा पञ्चमं धैर्यं सहजानि मित्राणि आहुः। हि बुधाः तैः वर्त्तयन्ति॥ १३॥

**व्याख्या**—विद्या = ज्ञानम्, शौर्यम् = पराक्रमः, दाक्ष्यम् = कौशलम्, बलम् = शक्तिम्, तथा पञ्चमम्, धैर्यम् = धीरत्वम्, मनःस्थैर्यमित्यर्थः, एतानि सहजानि = स्वाभाविकानि, मित्राणि = सुहृदः, आहुः = कथयन्ति। हि, बुधाः = पण्डिताः, तैः = पूर्वोक्तैः विद्यादिभिः, वर्त्तयन्ति = जीवन्ति॥ १३॥

**हिन्दी**—विद्या, वीरता, चतुरता, शक्ति तथा धैर्य—ये पाँचों किसी भी व्यक्ति के सहज मित्र कहलाते हैं। बुद्धिमान् व्यक्ति इन्हीं के सहारे अपनी आजीविका का निर्वाह करते हैं॥ १३॥

**विद्येति**। विद्या, शौर्य्यं दाक्ष्यं नैपुण्यं, बलं तथा पञ्चमं धैर्य्यम् एतानि सहजानि मित्राणि आहुः कथयन्ति बुधा इति शेषः, बुधाः पण्डिताः तैः विद्यादिभिः वर्त्तयन्ति जीवन्ति॥ १३॥

**पित्रोर्निदेशवर्त्ती यः स पुत्रोऽन्वर्थनामवान्।**
**श्रेष्ठ एकस्तु गुणवान् किं शतैरपि निर्गुणैः॥ १४॥**

**अन्वयः**—यः पित्रोः निदेशवर्त्ती सः पुत्रः अन्वर्थनामवान्। एकः गुणवान् श्रेष्ठः, निर्गुणैः शतैरपि किम्?॥ १५॥

**व्याख्या**—यः= पुत्रः, पित्रोः= जननी-जनकयोः, निदेशवर्त्ती= आज्ञापालकः, सः= असौ, पुत्रः= सुतः, अन्वर्थनामवान्= सार्थकनामा, भवतीति भावः। एकः= एकमात्रः, गुणवान्= गुणज्ञः, श्रेष्ठः= उत्कृष्टः, निर्गुणैः= गुणहीनैः, शतैः= शतसंख्यकैः, अपि किम्= न किमपीत्यर्थः॥ १४॥

**हिन्दी**—माता-पिता की आज्ञा का पालन करने वाला पुत्र ही सार्थक पुत्र है, क्योंकि सैकड़ों निर्गुण पुत्रों की अपेक्षा एक गुणवान् पुत्र ही श्रेष्ठ होता है॥ १४॥

**पित्रोरिति**। यः पुत्रः पित्रोः मातापित्रोः निदेशवर्त्ती आज्ञावर्त्ती सः पुत्रः अन्वर्थनामवान् यथार्थनामा इत्यर्थः। एकः गुणवान् पुत्रः श्रेष्ठः, निर्गुणैः शतैरपि किम्? न किमपि प्रयोजनमित्यर्थः॥ १४॥

**स्वभावतो भवन्त्येते हिंस्रो दुर्वृत्त एव च।**
**ऋणकारी पिता शत्रुर्माता स्त्री व्यभिचारिणी॥ १५॥**

**अन्वयः**—एते स्वभावतः मित्राणि भवन्ति। तथाहि—हिंस्रः दुर्वृत्तः तथा ऋणकारी पिता व्यभिचारिणी माता च स्त्री शत्रुः॥ १५॥

**व्याख्या**—एते= पूर्वोक्ताः, स्वभावतः= निसर्गतः, मित्राण्यपि= सुहृदोऽपि, कदाचित्कारणवशाच्छत्रवो भवन्ति। तथाहि हिंस्रः= हिसंकः, दुर्वृत्तः= दुराचारी, तथा ऋणकारी= ऋणकर्त्ता, पिता= जनकः, व्यभिचारिणी= पुंश्चली, माता= जननी, च= पुनः, स्त्री= भार्या, शत्रुः= रिपुः, भवतीति भावः॥ १५॥

**हिन्दी**—पूर्वोक्त स्वाभाविक मित्र भी कारणवश कभी शत्रु बन जाते हैं। जैसे ऋणकर्त्ता पिता, दुराचारिणी माता एवं पत्नी दुश्मन होते हैं॥ १५॥

**स्वभावत इति**। एते पूर्वोक्ताः मात्रादयः स्वभावतः मित्राणि अपि कदाचित् शत्रवः भवन्तीत्यन्वयः। तथाहि हिंस्रः दुर्वृत्तः तथा ऋणकारी पिता, व्यभिचारिणी माता स्त्री च शत्रुः॥ १५॥

**आत्मपितृभ्रातरश्च तत् स्त्रीपुत्राश्च शत्रवः।**
**स्नुषा श्वश्रूः सपत्नी च ननान्दा यातरस्तथा॥ १६॥**

**अन्वयः**—आत्मपितृभ्रातरश्च तत् स्त्रीपुत्राश्च तथा स्नुषा श्वश्रूः, सपत्नी ननान्दा यातरः शत्रवः भवन्ति॥ १६॥

**व्याख्या**—आत्मनः= स्वस्य, पितुः= जनकस्य, भ्रातरः= सोदराः, अर्थात् पितृव्यश्च, तथा तत्= तेषाम्, स्त्रियः= पत्न्यः, पुत्राश्च= सुताश्च, तथा स्नुषा= पुत्रवधूः, श्वश्रूः= पतिपत्नीप्रसूः, सपत्नी= समानः पतिर्यस्याः सा= समानपतिका, ननान्दा= भर्तृपत्नी, यातरः= ज्येष्ठस्य जाया देवरपत्न्यश्च वेति, कदाचित् शत्रवः= रिपवो भवन्ति, विपरीताचारादिति॥ १६॥

**हिन्दी**—सगे भाई, चाचा, चाची, चचेरा भाई, सास-पतोहू, सौत-सौत, ननद-भौजाई तथा जेठानी-देवरानी—ये सभी प्रायः परस्पर शत्रु होते हैं॥ १६॥

**आत्मेति।** आत्मनः पितुश्च भ्रातरः सोदराः पितृव्याश्च इत्यर्थः, तेषां स्त्रियः पुत्राश्च तथा स्नुषा पुत्रवधूः, श्वश्रूः श्वशुरपत्नी, सपत्नी, ननान्दा, यातरः देवरपत्न्यश्च कदाचिद्विरुद्धाचाराः शत्रवः भवन्तीति शेषः॥ १६ ॥

**मूर्खः पुत्रः कुवैद्यश्चारक्षकस्तु पतिः प्रभुः।**
**चण्डश्चण्डा प्रजा शत्रुरदाता धनिकश्च यः॥ १७॥**

**अन्वयः**—मूर्खः पुत्रः, कुवैद्यः, अरक्षकः पतिः, चण्डः प्रभुः, चण्डाः प्रजा तथा यः धनिकः च अदाता सः शत्रुः॥ १७ ॥

**व्याख्या**—मूर्खः = निर्बुद्धिः, पुत्रः = सुतः, कुवैद्यः = कुत्सितचिकित्सकः, अरक्षकः = अत्राणदः, पतिः = स्वामी, चण्डः = कोपनः, प्रभुः = स्वामी, चण्डा = अतिकोपना, प्रजा = जनाश्च, तथा च यः = पुरुषः, धनिकः = सम्पत्तिशाली, अथ च अदाता = कृपणः, सः = असौ, शत्रुः = रिपुः, भवतीति॥ १७ ॥

**हिन्दी**—मूर्ख बेटा, अधकचरा वैद्य, पालने में अक्षम पति, क्रोधी राजा, क्रोधी प्रजा या सन्तान तथा नहीं देने वाला कंजूस धनी—ये सभी शत्रु होते हैं॥ १७ ॥

**मूर्ख इति।** मूर्खः पुत्रः, कुवैद्यः कुचिकित्सकः, अरक्षकः पतिः चण्डः कोपनः प्रभुः स्वामी चण्डा प्रजा च तथा यः धनिकः धनवान् अथ च अदाता कृपणः सः शत्रुः॥ १७ ॥

**दुष्टानां नृपतिः शत्रुः कुलटानां पतिव्रता।**
**साधुः खलानां शत्रुः स्यान्मूर्खाणां बोधको रिपुः॥ १८॥**

**अन्वयः**—नृपतिः दुष्टानां शत्रुः, पतिव्रता कुलटानां, साधुः खलानां शत्रुः, बोधकः मूर्खाणां रिपुः स्यात् हि॥ १८ ॥

**व्याख्या**—नृपतिः = राजा, दुष्टानाम् = दुर्वृत्तानाम्, शत्रुः = रिपुः, पतिव्रता = साध्वी, कुलटानाम् = पुंश्चलीनाम्, साधुः = सत्पुरुषः, खलानाम् = दुर्वत्तानां, शत्रु = रिपुः, भवन्तीति, बोधकः = ज्ञापकः, मूर्खाणाम् = अज्ञानाम्, शत्रुः = रिपुः, स्यात् = भवेत्॥ १८ ॥

**हिन्दी**—दुश्चरित्रों के लिए राजा शत्रु होता है, व्यभिचारिणी औरतों के लिए सच्चरित्र नारी, सज्जनों के लिए दुर्जन शत्रु होते हैं और मूर्खों के लिए उपदेशक ही शत्रु होता है॥ १८ ॥

**दुष्टानामिति।** नृपतिः दुष्टानां शत्रुः, पतिव्रता कुलटानां व्यभिचारिणीनां शत्रुः, साधुः खलानां दुर्जनानां शत्रुः, बोधकः उपदेशकः मूर्खाणां शत्रुः स्यात्॥ १८ ॥

**उपदेशो हि मूर्खाणां क्रोधायैव शमाय न।**
**पयःपानं भुजङ्गानां विषायैवामृताय न॥ १९ ॥**

**अन्वयः**—मूर्खाणाम् उपदेशः क्रोधाय एव न शमाय। भुजङ्गानां पयःपानं विषाय एव न अमृताय॥ १९ ॥

**व्याख्या**—मूर्खाणाम् = ज्ञानहीनानाम्, उपदेशः = बोधनम्, क्रोधाय = कोपाय, एव = केवलं भवति, न = नहि, शमाय = शान्तये भवति। यथा भुजङ्गानाम् = सर्पाणाम्, पयःपानम् = क्षीरभोजनम्, विषाय = विषवर्द्धनाय, एव = केवलं भवति, न = नहि, अमृताय = सुधाच्यवनायेति॥ १९ ॥

**हिन्दी**—मूर्खों को उपदेश देना उसके क्रोध को बढ़ाना है, न कि उसकी शान्ति के लिए होता है। साँप को दूध पिलाने से उसका जहर ही बढ़ता है, न कि अमृत चूता है॥१९॥

**उपदेश इति।** मूर्खाणाम् उपदेशः क्रोधाय एव कोपवर्द्धनाय, न शमाय न शान्तये। अस्तीति शेषः। सर्पाणां पयःपानं दुग्धपानं विषाय विषवर्द्धनाय अमृताय न अमृतक्षरणाय इत्यर्थः॥१९॥

**आसमन्ताच्चतुर्दिक्षु सन्निकृष्टाश्च ये नृपाः।**
**तत्परास्तत्परा येऽन्ये क्रमाद्धीनबलारयः॥२०॥**
**शत्रूदासीनमित्राणि क्रमात् ते स्युस्तु प्राकृताः।**
**अरिर्मित्रमुदासीनोऽनन्तरस्तत्परः परः॥२१॥**
**क्रमशो वा नृपा ज्ञेयाश्चतुर्दिक्षु तथारयः।**
**स्वसमीपतरा भृत्या ह्यमात्याद्याश्च कर्षिताः॥२२॥**

**अन्वयः**—आसमन्तात् चतुर्दिक्षु ये नृपाः सन्निकृष्टाः ये च तत्पराः पुनश्च तत्पराः, ये अन्ये ते क्रमात् हीनबलारयः ते तु क्रमात् प्राकृताः मित्राणि उदासीनाः तथा शत्रवः स्युः। किञ्च अरिः मित्रम् उदासीनः अनन्तरः तत्परः तथा परः एते चतुर्दिक्षु क्रमशः नृपाः ज्ञेयाः। तथा स्वसमीपतराः भृत्याः कर्षिताः अमात्याद्याश्च अरयः ज्ञेयाः॥२०-२२॥

**व्याख्या**—आसमन्तात् = परितः, चतुर्दिक्षु = समन्तात्, ये नृपाः = राजानः, सन्निकृष्टाः = समीपवर्त्तिनः, ये = नृपाः, च = पुनः, तत्पराः—तत् = तस्य, पराः = परवर्त्तिनः, पुनश्च = भूयश्च, तत्पराः = तदनन्तरवर्त्तिनः, अन्ये = अपरे राजानः, ते = नृपाः, क्रमात् = क्रमशः, हीनबलारयः—हीनानि = अल्पतराणि, बलानि = सामर्थ्याणि, अरयः = शत्रवश्च, येषां तादृशाः भवन्ति। ते = नृपास्तु, क्रमात् = आनुपूर्व्येण, प्राकृताः = स्वाभाविकाः, मित्राणि = सुहृदः, उदासीनाः = तटस्थाः निःस्पृहाः वा, तथा शत्रवः = अरयः, स्युः = भवेयुः। किञ्च, अरिः = शत्रुः, मित्रम् = सुहृद्, उदासीनः = तटस्थः, अनन्तरः = पश्चात्, तत्परः—तत् = तस्य, परः = परवर्त्ती, तथा परः = अन्यः, एते = पूर्वोक्ताः चतुर्दिक्षु = सर्वतः, क्रमशः = आनुपूर्व्येण, स्थिताः, नृपाः = राजानः, प्राकृताः मित्रशत्रवः, ज्ञेयाः = बोध्याः। तथा स्वसमीपतराः - स्वस्य = आत्मनः, समीपतराः = अतिसन्निकृष्टाः, भृत्याः = सेवकाः, कर्षिताः = क्लेशिताः, अमात्याद्याश्च = आप्तसचिवादयश्च, अरयः = शत्रवो भवन्ति॥२०-२२॥

**हिन्दी**—किसी भी राजा के राज्य की सभी ओर चारों दिशाओं में अत्यन्त निकटवर्त्ती राजे तथा उस राज्य के बाद वाले राजे के रास्ते तथा उनकी सीमा से बाहर के राजे क्रमशः स्वाभाविक रूप से समीपवर्त्ती राजे दुश्मन, उनके बाद वाले राजे उदासीन तथा उनके बादवाले राजे मित्र होते हैं। फिर कम ताकत वाले दुश्मन भी पार्श्ववर्त्ती, मध्यवर्ती एवं दूरवर्ती होने के कारण क्रम से शत्रु, उदासीन एवं मित्र होते हैं। फिर दुश्मन, दोस्त और उदासीन राजाओं के भी उनके चारों ओर रहने वाले पार्श्ववर्ती राजे दुश्मन, मध्यवर्त्ती राजे उदासीन एवं दूरवर्त्ती राजे मित्र होते हैं। अपने अत्यन्त निकटवर्त्ती सेवक एवं मंत्री प्रभृति भी राजा के द्वारा कष्ट दिये जाने पर भी दुश्मन बन जाते हैं॥२०-२२॥

**आसमन्तादित्यादि।** आसमन्तात् सर्वतः चतुर्दिक्षु ये नृपाः निकटवर्त्तिनः, ये च तत्पराः तदनन्तरवर्त्तिनः तत्पराः पुनश्च तदनन्तरवर्त्तिनः अन्ये नृपाः ते क्रमात् हीनानि बलानि अरयः शत्रवश्च

येषां तादृशाः भवन्ति। ते तु क्रमात् प्राकृताः सहजाः मित्राणि उदासीनाः मध्यस्थाः तथा शत्रवः स्युः। किञ्च अरिः मित्रम् उदासीनः, अनन्तरः तत्परः तथापरः अन्यः एते चतुर्दिक्षु क्रमशः स्थिताः नृपाः प्राकृताः मित्रशत्रवः ज्ञेयाः। तथा स्वस्य समीपतराः अतिसन्निकृष्टाः भृत्याः कर्षिताः क्लेशिताः अमात्याद्याश्च अरयः शत्रवः ज्ञेया इति शेषः॥ २०-२२ ॥

**बृंहयेत् कर्षयेत् मित्रं हीनाधिकबलं क्रमात्॥ २३ ॥**

**अन्वयः**—हीनाधिकबलं मित्रं क्रमात् बृंहयेत् कर्षयेच्च॥ २३ ॥

**व्याख्या**—हीनाधिकबलम्—हीनबलम् = न्यूनशक्तिम्, अधिकबलम् = आत्मनोऽधिक-शक्तिशालिनम्, मित्रम् = सुहृदम्, क्रमात् = क्रमशः, बृंहयेत् = वर्द्धयेत्, हीनबलम्, अधिकबलम् = निजाधिकबलशालिनो मित्रराजानम्, च = पुनः, कर्षयेत् = क्षीणं कुर्यात्॥ २३ ॥

**हिन्दी**—कम बल वाले और अधिक बल वाले राजाओं को भी क्रमशः कम बल वाले को अधिक बलशाली तथा अपने से अधिक बलशाली को क्षीणबल बनाना चाहिए॥ २३ ॥

**बृंहयेदिति**। हीनाधिकबलं हीनबलम् अधिकबलञ्च मित्रं बृंहयेत् वर्द्धयेत् कर्षयेच्च कृशीकुर्य्यात्॥ २३ ॥

**भेदनीया कर्षणीयाः पीडनीयाश्च शत्रवः।**
**विनाशनीयास्ते सर्वे सामादिभिरुपक्रमैः॥ २४ ॥**

**अन्वयः**—ते सर्वे शत्रवः सामादिभिः उपक्रमैः भेदनीयाः कर्षणीयाः पीडनीयाः च विनाशनीयाः॥ २४ ॥

**व्याख्याः**—ते = पूर्वोक्ताः, सर्वे = सकलाः, शत्रवः = अरयः, सामादिभिः = सामदान-भयभेदादिभिः, उपक्रमैः = उपायज्ञानपूर्वकारम्भैः, भेदनीयाः = विदारणीयाः, कर्षणीयाः = क्षरणीयाः, पीडनीयाः = क्लेशनीयाः, च = पुनः, विनाशनीयाः = विध्वंसनीयाः॥ २४ ॥

**हिन्दी**—और जो राजे दुश्मन हैं उनमें सामादि उपायों से भेद डालकर उन्हें कमजोर बना कर एवं सता कर विनष्ट कर देना चाहिए॥ २४ ॥

**भेदनीया इति**। ते सर्वे शत्रवः सामादिभिः सामदानभेदाद्यैः उपायैः भेदनीयाः प्रकृतिषु मनोभङ्गं प्रापणीयाः कृशीकरणीयाः विनाशनीयाश्च॥ २४ ॥

**मित्रं शत्रुं यथायोग्यैः कुर्य्यात् स्ववशवर्त्तिनम्।**
**उपायेन यथा व्यालो गजः सिंहोऽपि साध्यते॥ २५ ॥**

**अन्वयः**—उपायेन यथा व्यालः गजः सिंहोऽपि साध्यते। तथा यथायोग्यैः मित्रं शत्रुं स्व-वशवर्त्तिनं कुर्यात्॥ २५ ॥

**व्याख्या**—उपायेन = उचितसाधनेन, यथा = येन प्रकारेण, व्यालः = सर्पः, गजः = द्विपः, सिंहोऽपि = मृगराजोऽपि, साध्यते = वशीक्रियते, तथा = तेनैव प्रकारेण, यथायोग्यैः = यथार्हैः, साधनैः, मित्रम् = सुहृदम्, शत्रुम् = रिपुम्, च, स्ववशवर्त्तिनम्—स्वस्य = आत्मनः, वशवर्त्तिनम् = वशानुगम्, कुर्यात् = विधेयात्॥ २५ ॥

**हिन्दी**—जैसे सही उपाय से लोग विषैले साँप, मतवाले हाथी और सिंह को वशवर्त्ती

बना लेते हैं, उसी तरह अच्छे साधनों से दोस्त और दुश्मनों को अपना वशानुगामी बनाना चाहिए ॥ २५ ॥

**मित्रमिति**। यथा उपायेन व्यालः सर्पः सिंहः गजः हस्ती च साध्यते वशीक्रियते तथा यथायोग्यैः उपायैरित्यर्थः, मित्रं शत्रुञ्च स्वस्य वशवर्त्तिनं कुर्य्यात् ॥ २५ ॥

**भूमिष्ठाः स्वर्गमायान्ति वज्रं भिन्दन्त्युपायतः ॥ २६ ॥**

**अन्वयः**—उपायतः भूमिष्ठाः स्वर्गम् आयान्ति च वज्रं भिन्दन्ति ॥ २६ ॥

**व्याख्या**—उपायतः = सदुपायेन, भूमिष्ठाः = धरास्थाः जनाः, स्वर्गम् = अपरलोकम्, आयान्ति = व्रजन्ति, च = पुनः, वज्रम् = ऐन्द्रास्त्रम्, भिन्दन्ति = स्फोटयन्ति ॥ २६ ॥

**हिन्दी**—क्योकि उपाय से मनुष्य धरती पर रहकर भी स्वर्ग में पहुँच जाते हैं और वज्र को भी चीर डालते हैं ॥ २६ ॥

**भूमिष्ठा इति**। उपायतः उपायेन भूमिष्ठाः पृथिवीस्था जनाः स्वर्गम् आयान्ति गच्छन्ति, वज्रं भिन्दन्ति च ॥ २६ ॥

**सुहृत्सम्बन्धिस्त्रीपुत्रप्रजाशत्रुषु ते पृथक्।**
**सामदानभेददण्डाश्चिन्तनीयाः स्वयुक्तितः ॥ २७ ॥**

**अन्वयः**—ते सामदानभेददण्डाः स्वयुक्तितः सुहृत्सम्बन्धिस्त्रीपुत्रप्रजाशत्रुषु च पृथक् पृथक् चिन्तनीयाः ॥ २७ ॥

**व्याख्या**—ते = पूर्वोक्ताः, सामदानभेददण्डाः = उपायभेदाः, स्वयुक्तितः = आत्मकौशलेन, सुहृत्सु = मित्रवर्गेषु, सम्बन्धिषु = बान्धवेषु, स्त्रीषु = नारीषु, पुत्रेषु = सुतेषु, प्रजासु = प्रशासितजनेषु, शत्रुषु = रिपुषु, च = पुनः, पृथक् पृथक् = भिन्नं भिन्नम्, चिन्तनीयाः = विचारणीयाः ॥ २७ ॥

**हिन्दी**—मित्रवर्ग, सम्बन्धी, बेटे, प्रजा और शत्रु—इन सबों के बारे में पूर्वोक्त साम, दान तथा दण्ड का प्रयोग अपनी युक्ति से अलग-अलग सोचना चाहिए ॥ २७ ॥

**सुहृदिति**। ते सामदानभेददण्डाः स्वयुक्तितः निजयुक्त्यनुसारेण सुहृत्सु सम्बन्धिषु, स्त्रीषु, पुत्रेषु प्रजासु शत्रुषु च पृथक् पृथक् चिन्तनीयाः ॥ २७ ॥

**एकशीलवयोविद्याजातिव्यसनवृत्तयः ।**
**साहचर्य्ये भवेन्मित्रमेभिर्यदि तु सार्जवैः ॥ २८ ॥**
**त्वत्समस्तु सखा नास्ति मित्रे साम इदं स्मृतम्।**
**मम सर्वं तवैवास्ति दानं मित्रे सजीवितम् ॥ २९ ॥**

**अन्वयः**—ये एकशीलवयोविद्याजातिव्यसनवृत्तयः सार्जवैः एभिः साहचर्ये यदि मित्रं भवेत् तदा मित्रे त्वया समः सखा नास्ति, इदं साम स्मृतम्। किञ्च मित्रे मम सर्वं तवैवास्ति इदं सजीवितं दानं स्मृतम् ॥ २८-२९ ॥

**व्याख्या**—ये = पूर्वोक्ताः, एकः = समानः, शीलम् = स्वभावम्, वयः = अवस्थाक्रमः, विद्या = ज्ञानम्, जातिः = कुलं, व्यसनम् = दोषः, वृत्तिः = आजीविका, येषां ते तथोक्ताः, सार्जवैः = कपटशून्यैः, एभिः = एतैः, साहचर्ये = सहवर्त्तित्वे, यदि = चेत्, मित्रम् = मित्रत्वम्,

भवेत् = स्यात्, तदा = तस्मिन् मित्रे, त्वया = भवता, समः = सदृशः, सखा = मित्रम्, नास्ति = न विद्यते। इदम् = एतत्, साम = सान्त्वनावचनम्, स्मृतम् = कथितम्। किञ्च तथाविधे मित्रे, मम = मदीयम्, सर्वम् = सकलम्, वस्तु, तवैव = भवतः एव, अस्ति = विद्यते, इदम् = एतत्, सजीवितम् = जीवनसहितम्, दानम् = प्रदानवचनम्, स्मृतम् = कथितमिति शेषः॥ २८-२९॥

**हिन्दी**—जिनके आपस में स्वभाव, उम्र, ज्ञान, जाति, आदत और आजीविका—ये सभी बातें समान हैं, वे यदि निष्कपटभाव से सरल होकर एक जगह मिलते हैं तो परस्पर मित्र बन जाते हैं। ऐसे मित्रों के साथ 'तुम्हारे समान मेरा दूसरा कोई मित्र नहीं है' ऐसा कहना ही 'साम' कहलाता है तथा 'मेरी सारी वस्तु ही नहीं मेरी जान भी तुम्हारी ही है' ऐसा कहना मित्र के लिए 'दानवाक्य' कहलाता है॥ २८-२९॥

**एकेति। त्वत्सम इति।** ये एकः समानः शीलं वयः वयः क्रमः विद्या जातिः व्यसनं दोषः वृत्तिः जीवनोपायश्च येषां ते तथोक्ताः, सार्जवैः अकपटैः एभिः साहचर्य्ये यदि मित्रं मित्रत्वमित्यर्थः, भावप्रधानो निर्देशः, भवेत् तदा तस्मिन् मित्रे त्वया समः सखा नास्ति इदं साम सान्त्ववचनं स्मृतम्। किञ्च तथाविधे मित्रे मम सर्वं वस्तु तवैव अस्ति,इदं सजीवितं जीवनसहितं दानं दानवाक्यं स्मृतमिति शेषः॥ २८-२९॥

**मित्रेऽन्यमित्रसुगुणान् कीर्त्तयेद् भेदनं हि तत्।**
**मित्रे दण्डो न करिष्ये मैत्रीमेवंविधोऽसि चेत्॥ ३०॥**

**अन्वयः**—मित्रे अन्यमित्रसुगुणान् यत् कीर्त्तयेत् तत् हि भेदनम्। चेत् एवंविधोऽसि मैत्रीं न करिष्ये इति मित्रे दण्डः॥ ३०॥

**व्याख्या**—मित्रे = सुहृत्सम्मुखे, अन्येषाम् = अपरेषाम्, मित्राणाम् = सुहृदाम्, सुगुणान् = श्रेष्ठगुणान्, यत्कीर्त्तयेत् = वर्णयेत्, तद्गुणकथनम्, तस्य = मित्रस्य, भेदनम् = भेदकम्, हि = इति निश्चयेन भवति। चेत् = यदि, एवंविधः = एतादृशः, असि = भवसि, तदा भवता सह, मैत्रीम् = सौहार्दम्, न = नहि, करिष्ये = विधास्ये, इति वचनम्, मित्रे = सुहृदि, दण्डः = दण्डाख्यो भेदः, कथितः इति शेषः॥ ३०॥

**हिन्दी**—मित्र के सामने अन्य मित्रों के सुन्दर गुणों का बखान करना उस मित्र के लिए भेदवाक्य होता है और 'तुम यदि ऐसे हो तो तुम्हारे साथ दोस्ती नहीं करूँगा' यह कहना ही मित्र के लए 'दण्ड' वाक्य है॥ ३०॥

**मित्रे इति।** मित्रे अन्येषां मित्राणां सुगुणान् उत्तमगुणान् यत् कीर्त्तयेत् तत् कीर्त्तनं तस्य मित्रस्य भेदनं मनोभङ्गकरणं हि। चेत् यदि त्वम् एवंविधः एतादृशः असि, तदा त्वया सह मैत्रीं न करिष्ये इति वचनं मित्रे दण्डः स्मृत इति शेषः॥ ३०॥

**यो न संयोजयेदिष्टमन्यानिष्टमुपेक्षते।**
**उदासीनः स न कथं भवेच्छत्रुः सुसान्धिकः ?॥ ३१॥**

**अन्वयः**—यः इष्टं न संयोजयेत् अन्यानिष्टं उपेक्षते, सः उदासीनः सुसान्धिकः शत्रुः कथं न भवेत् ?॥ ३१॥

**व्याख्या**—यः = जनः, इष्टम् = अभिलषितम्, न = नहि, संयोजयेत् = सम्मेलयेत्, तथा अन्यकृतम् = अपरजनसम्पादितम्, अनिष्टम् = अनभिलषितम्, उपेक्षते = उपेक्षां कुरुते, सः

उदासीनः = निःस्पृहः, सः = असौ, सुसान्धिकः = सुष्ठुतया सन्धिना साध्यः, शत्रुः = रिपुः, कथम् = केन प्रकारेण, न = नहि, भवेत् = स्यात्, अपितु रिपुरेव भवेदिति ॥ ३१ ॥

**हिन्दी**—जो व्यक्ति अपनी अभिलषित वस्तु की सिद्धि न करे और दूसरों के द्वारा किये गये अनभिलषित काम की उपेक्षा करे, ऐसा निःस्पृह व्यक्ति भलीभाँति सन्धि करने के बावजूद भी भला क्यों न दुश्मन हो ? ॥ ३१ ॥

**य इति**। यः इष्टं न संयोजयेत् न कुर्य्यात्, तथा अन्यकृतमनिष्टम् उपेक्षते न पश्यति स उदासीनः, सः सुसान्धिकः सुष्ठु सन्धिना साध्यः शत्रुः कथं न भवेत्? अपितु शत्रुरेव ॥ ३१ ॥

**परस्परमनिष्टं न चिन्तनीयं त्वया मया।**
**सुसाहाय्यं हि कर्त्तव्यं शत्रौ साम प्रकीर्त्तितम् ॥ ३२ ॥**

**अन्वयः**—त्वया मया च परस्परं अनिष्टं न चिन्तनीयं प्रत्युत सुसाहाय्यं कर्त्तव्यम्, इति शत्रौ साम प्रकीर्त्तितम् ॥ ३२ ॥

**व्याख्या**—त्वया = भवता, मया च परस्परम्, अनिष्टम् = अहितम्, न = नहि, चिन्तनीयम् = विचारणीयम्, प्रत्युत = अपितु, सुसाहाय्यम् = सुष्ठूपकृतिः, कर्त्तव्यम् = अनुष्ठेयम्, इति = एवम्, शत्रौ = रिपौ, साम = उपायभेदः, प्रकीर्तितम् = कथितम् ॥ ३२ ॥

**हिन्दी**—तुम्हें और हमें परस्पर एक-दूसरे के अनिष्ट का विचार नहीं रखना चाहिए, प्रत्युत एक-दूसरे की सहायता करनी चाहिए—इस प्रकार कहना शत्रु के लिए सामवाक्य कहलाता है ॥ ३२ ॥

**परस्परमिति**। त्वया मया च परस्परं परस्परस्य अनिष्टं न चिन्तनीयं प्रत्युत सुसाहाय्यं कर्त्तव्यं हि इति वचनं शत्रौ साम प्रकीर्त्तितम् ॥ ३२ ॥

**करैर्वा प्रमितैर्ग्रामैर्वत्सरे प्रबलं रिपुम्।**
**तोषयेत् तद्धि दानं स्याद् यथायोग्येषु शत्रुषु ॥ ३३ ॥**

**अन्वयः**—यथायोग्येषु शत्रुषु प्रबलं रिपुं वत्सरे प्रमितैः करैः ग्रामैः वा यत् तोषयेत् तत् हि दानम् ॥ ३३ ॥

**व्याख्या**—यथायोग्येषु = यथोचितेषु, शत्रुषु = रिपुषु मध्ये, प्रबलम् = प्रकर्षबलशालिनम्, रिपुम् = अरिम्, वत्सरे = प्रतिवर्षे, प्रमितैः = प्रमाणितैः, स्तोकैः, करैः = राजस्वैः, ग्रामैर्वा = वसतिभिर्वा, यत् तोषयेत् = तृप्येत् मोदयेद्वा, तत् हि = तदेव, तादृशे शत्रौ दानम्, कथितमिति शेषः ॥ ३३ ॥

**हिन्दी**—अपने से अधिक शक्तिशाली शत्रु को वार्षिक मालगुजारी देकर या छोटा-सा कोई गाँव देकर या यथोचित कुछ देकर उसे संतुष्ट कर लेता है, वही दान कहलाता है ॥ ३३ ॥

**करैरिति**। यथायोग्येषु शत्रुषु मध्ये प्रबलं रिपुं शत्रुं वत्सरे वत्सरे प्रमितैः परिमितैः करैः राजस्वैः ग्रामैर्वा त्यक्तैरिति शेषः, यत् तोषयेत् तत् हि तदेव तादृशे शत्रौ दानं प्रकीर्त्तितमिति शेषः ॥ ३३ ॥

**शत्रुसाधकहीनत्वकरणात् प्रबलाश्रयात्।**
**तद्धीनतोज्जीवनाच्च शत्रुभेदनमुच्यते ॥ ३४ ॥**

**अन्वयः**—शत्रुसाधकहीनत्वकरणात् प्रबलाश्रयात् तद्धीनतोज्जीवनाच्च शत्रुभेदनम् उच्यते ॥ ३४ ॥

**व्याख्या**—शत्रोः = रिपोः, साधकम् = पराभवसाधनम्, यत् हीनत्वकरणम् = अकिञ्चनत्वं साधनम्, तस्मात् प्रबलस्य = प्रकर्षबलशालिनः, आश्रयात् = अवष्टम्भात्, तस्मात् रिपोः ये हीनाः = निकृष्टाः, तेषां भावः, तद्धीनता = तस्मान्निकृष्टता, तस्या उज्जीवनात् = तद्धीनानां प्रबलीकरणात्, शत्रुभेदनम्—शत्रौ = रिपौ, भेदनम् = छेदनम्, शत्रुभेद इति कथ्यते ॥ ३४ ॥

**हिन्दी**—दुश्मन के समस्त साधनों को निकृष्ट बनाकर दुश्मन से अधिक ताकतवर का सहारा लेकर और शत्रुहीन बल वालों को शक्तिशाली बनाकर शत्रु को कमजोर बनाना 'शत्रुभेदन' कहलाता है ॥ ३४ ॥

**शत्रिति**। शत्रोः साधकं पराजयसाधनं यत् हीनत्वकरणं लाघवसम्पादनं तस्मात् प्रबलस्य शत्रोरधिकस्य बलवतः आश्रयात् शत्रोः ये हीनाः खर्वाः निकृष्टा इत्यर्थः, तेषां भावः तद्धीनता तस्या उज्जीवनात् तन्निकृष्टानां प्रबलीकरणाच्च इत्यर्थः, शत्रुभेदनं शत्रौ भेद उच्यते ॥ ३४ ॥

**दस्युभिः पीडनं शत्रोः कर्षणं धनधान्यतः।**
**तच्छिद्रदर्शनादुग्रबलैर्नीत्या प्रभीषणम्।**
**प्राप्तयुद्धानिवृत्तित्वैस्त्रासनं दण्ड उच्यते ॥ ३५ ॥**

**अन्वयः**—दस्युभिः शत्रोः पीडनं धनधान्यतः कर्षणं तत् छिद्रदर्शनात् उग्रबलैः नीत्या प्रभीषणं प्राप्तयुद्धानिवृत्तित्वैः त्रासनं दण्डः उच्यते ॥ ३५ ॥

**व्याख्या**—दस्युभिः = तस्करैः, शत्रोः = रिपोः, पीडनम् = अर्दनम्, धनधान्यतः = अर्थान्नतः, कर्षणम् = आकर्षः, तत् = तस्य शत्रोः, छिद्रदर्शनात् = दोषावलोकनात्, उग्रबलैः = प्रचण्ड-शक्तिभिः, नीत्या = युक्त्या, प्रभीषणम् = त्रासनम्, प्राप्तयुद्धानिवृत्त्वैः—प्राप्तम् = अधिगतम्, युद्धात् = सङ्गरात्, अनिवृत्तित्वम् = अपराङ्मुखत्वम्, यैः = तादृशैः, त्रासनम् = भयोत्पादनम्, शत्रौ दण्डः इति, उच्यते = कथ्यते ॥ ३५ ॥

**हिन्दी**—तस्करों से लुटवा कर शत्रु को पीड़ा पहुँचाना, उनके अन्न एवं धन को क्षति पहुँचाना, उनमें खोट निकालना, अपनी प्रचण्ड सेना एवं सफल नीति से डराना तथा युद्धकाल में जम कर मुकाबला करते हुए उसे डराना शत्रु के लिए 'दण्ड' कहलाता है ॥ ३५ ॥

**दस्युभिरिति**। दस्युभिः शत्रोः पीडनं धनधान्यतः कर्षणं खर्वीकरणञ्च तथा तस्य छिद्रदर्शनात् दोषादर्शनात् उग्रबलैः समधिकबलशालिभिः नीत्या प्रभीषणं किञ्च प्राप्तं युद्धात् अनिवृत्तित्वं यैः तादृशैः युद्धादपराङ्मुखैरित्यर्थः, त्रासनं भयजननं दण्डः शत्रौ इति शेषः उच्यते ॥ ३५ ॥

**क्रियाभेदादुपाया हि भिद्यन्ते च यथार्हतः ॥ ३६ ॥**

**अन्वयः**—उपायाः यथार्हतः क्रियाभेदात् हि भिद्यन्ते ॥ ३६ ॥

**व्याख्या**—उपायाः = सामदामादयः, यथार्हतः = यथोचितः, क्रियाभेदात् = व्यापारविशेषात्, हीति निश्चयेन, उपायाः भिद्यन्ते = भेदाः भवन्ति ॥ ३६ ॥

**हिन्दी**—योग्यता के अनुसार क्रिया में भिन्नता होने से सामादिक उपायों में भी भिन्नता होती हैं ॥ ३६ ॥

**क्रियाभेदादिति**। उपायाः सामादयः, यथार्हतः यथायोग्यतः क्रियाभेदात् अनुष्ठानतारतम्येनेत्यर्थः, उपायाः भिद्यन्ते हिशब्दश्चावधारणार्थः॥ ३६ ॥

**सर्वोपायैस्तथा कुर्य्यान्नीतिज्ञः पृथिवीपतिः।**
**यथा स्वाभ्यधिका न स्युर्मित्रोदासीनशत्रवः ॥ ३७ ॥**

**अन्वयः**—यथा मित्रोदासीनशत्रवः स्वाभ्यधिकाः न स्युः तथा नीतिज्ञः पृथिवीपतिः सर्वोपायैः, कुर्यात् ॥ ३६ ॥

**व्याख्या**—यथा = येन प्रकारेण, मित्राणि = सुहृदः, उदासीनाः = मध्यस्थाः, च = पुनः, शत्रवः = रिपवः, स्वस्मात् = आत्मनः, अभ्यधिकाः = अतिप्रबलाः, न = नहि, स्युः = भवेयुः, तथा = तेन प्रकारेण, नीतिज्ञः = नीतिवेत्ता, पृथिवीपतिः, सर्वैः = सकलैः, उपायैः = युक्तिभिः, तथा = तद्वत्, कुर्यात् = सम्पादयेत् ॥ ३७ ॥

**हिन्दी**—मित्र राजे, मध्यस्थ राजे तथा शत्रु राजे कहीं अपने से अधिक बलशाली न हो जाँय इसके लिए नीतिज्ञ राजे को सभी तरह के उपायों का सहारा लेना चाहिए॥ ३७ ॥

**सर्वोपायैरिति**। यथा मित्राणि उदासीनाः शत्रवश्च न स्वस्मात् अभ्यधिका अतिप्रबलाः न स्युः नीतिज्ञः पृथिवीपतिः सर्वैः उपायैः तथा कुर्य्यात् ॥ ३७ ॥

**सामैव प्रथमं श्रेष्ठं दानं तु तदनन्तरम्।**
**सर्वथा भेदनं शत्रोर्दण्डनं प्राणसंशये॥ ३८ ॥**

**अन्वयः**—प्रथमं सामैव श्रेष्ठम्। तदनन्तरं तु दानं, सर्वथा शत्रोः भेदनं, प्राणसंशये शत्रोः दण्डनं कुर्यात् ॥ ३८ ॥

**व्याख्या**—प्रथमम् = आदौ, सामैव = सान्त्वनमेव, श्रेष्ठम् = वरम्, तदनन्तरम् = तदशक्ते, दानम् = प्रदानम्, श्रेष्ठम्। सर्वथा = तत्कृतेऽप्यशक्तो चेत्तदा सर्वैः प्रकारैः, भेदनम् = शत्रोः मनोभङ्गकरणम्, तत्कृतोऽप्यक्षमे प्राणसंशये = जीवनसङ्कटसमुपस्थिते, शत्रोः दण्डनम् = दमनम्, कुर्यादिति शेषः॥ ३८ ॥

**हिन्दी**—शत्रु के लिए सर्वप्रथम सामनीति का प्रयोग श्रेष्ठ है। इसमें असफल होने पर दाननीति का प्रयोग, इसके बाद भेदनीति का प्रयोग, सर्वथा हारने पर यदि प्राणसंकट उपस्थित हो जाय तब शत्रुओं का दमन करना चाहिए॥ ३८ ॥

**सामैवेति**। प्रथमं साम सान्त्वमेव श्रेष्ठं, तदनन्तरं तदशक्तावित्यर्थः दानं, तथाप्यशक्तौ सर्वथा सर्वैः प्रकारैः भेदनं मनोभङ्गकरणं, तथाप्यशक्तौ प्राणसंशये जीवनसङ्कटे उपस्थिते इत्यर्थः, शत्रोः दण्डनं क़र्त्तव्यमिति शेषः॥ ३८ ॥

**प्रबलेऽरौ सामदानौ सामभेदोऽधिके स्मृतौ।**
**भेददण्डौ समे कार्य्यौ दण्डः पूज्यः प्रहीनके॥ ३९ ॥**

**अन्वयः**—अरौ प्रबले सामदानौ स्मृतौ। अधिके सामभेदश्च, समे भेददण्डौ कार्य़ौ, प्रहीनके दण्डः पूज्यः॥ ३९ ॥

**व्याख्या**—अरौ = रिपौ, प्रबले = प्रचण्डबलशालिनि, सामदानौ = राजनीतिकोपायभेदौ, दानशब्दस्य पुल्लिङ्गप्रयोगोऽत्रार्षः। स्मृतौ = कथितौ, अधिके = स्वबलाधिके शत्रौ,

सामभेदश्च = समनं मनोभङ्गरणञ्च ज्ञेयौ, समे = स्वबलतुल्यशत्रौ, भेददण्डौ = भेदनं दमनञ्च, कार्यौ = विधेयौ, प्रहीनके = आत्मनः हीनबले शत्रौ, दण्डः = दमनः, पूज्यः = माननीयः॥३९॥

**हिन्दी**—अपने से अत्यधिक शक्तिशाली शत्रुओं के लिए साम और दान का, अपने से अधिक बलवान् शत्रु के लिए साम और भेद का, अपने से बराबर शत्रु के लिए भेद तथा दण्ड का और अपने से हीन शत्रु के लिए दण्ड का प्रयोग करना ही प्रशंसनीय होता है॥३९॥

**प्रबले इति**। अरौ शत्रौ प्रबले सामदानौ उपायौ दानशब्दः पुंलिङ्गोऽत्रार्षः, स्मृतौ। अधिके बलाधिके रिपौ सामभेदश्च स्मृत इति शेषः। समे समाने रिपौ भेददण्डौ उपायौ कार्य्यौ, प्रहीनके दुर्बले शत्रौ दण्डः पूज्यः प्रशंसनीयः॥३९॥

**मित्रे च सामदानौ स्तो न कदा भेददण्डने॥४०॥**

**अन्वयः**—मित्रे सामदानौ स्तः, कदापि भेददण्डने न॥४०॥

**व्याख्या**—मित्रे = सुहृदि, सामदानौ = उपायौ, स्तः = भवतः, कदापि = कस्यापि स्थितौ, भेददण्डने, न = नहि, प्रयोज्ये॥४०॥

**हिन्दी**—मित्र के लिए साम और दान का ही प्रयोग उचित है। कभी भी मित्रों के लिए भेद और दण्ड का प्रयोग नहीं करना चाहिए॥४०॥

**मित्रे इति**। मित्रे सुहृदि सामदानौ स्तः, कदापि भेददण्डने न प्रयोज्ये इति शेषः॥४०॥

**रिपोः प्रजानां सम्भेदपीडनं स्वजयाय वै।**
**रिपुप्रपीडितानां च साम्ना दानेन सङ्ग्रहः।**
**गुणवतां च दुष्टानां हितं निर्वासनं सदा॥४१॥**

**अन्वयः**—प्रजानां सम्भेदेन रिपोः पीडनं वै स्वजयाय। च रिपुप्रपीडितानां साम्ना दानेन सङ्ग्रहः। च गुणवतां दुष्टानां सदा निर्वासनं हितम्॥४१॥

**व्याख्या**—प्रजानाम् = जनानाम्, सम्भेदेन = सहयोगेन, रिपोः = शत्रोः, पीडनम् = बाधनम्, वै = इति निश्चयेन, स्वजयाय—स्वस्य = आत्मनः, जयाय = विजयाय, भवतीति भावः। रिपुप्रपीडितानाम्—रिपुभिः = शत्रुभिः, प्रपीडितानाम् = अतिशयेन व्यथितानां जनानाम्, साम्ना = सामोपायेन, दानेन = उत्सर्जनेन, च = पुनः, सङ्ग्रहः = एकत्रीकरणम्। च = पुनः, गुणवताम् = गुणशालिनाम्, दुष्टानाम् = दुर्वृत्तानाम्, सदा = सर्वदा, निर्वासनम् = स्वदेशान्निष्कासनम्, हितम् = कल्याणाय भवतीति भावः॥४१॥

**हिन्दी**—दुश्मन राजा की प्रजा से मेलकर उसे सताना अपनी विजय का कारण बन जाता है। शत्रु राजा से पीडित लोगों को सान्त्वना एवं कुछ देकर अपना पक्षधर बनाना चाहिए। गुणवान् होने के बावजूद यदि व्यक्ति दुष्ट हो तो उसे सदा के लिए देश से निकाल देना हितकर होता है॥४१॥

**रिपोरिति**। प्रजानां सम्भेदेन योगेन रिपोः पीडनं स्वस्य जयाय भवतीति शेषः, रिपुभिः प्रपीडितानां जनानां साम्ना दानेन च सङ्ग्रहः कार्य्य इति शेषः। किञ्च गुणवतां दुष्टानां सदा निर्वासनं देशात् बहिष्करणं हितं तेषां देशस्थितौ महानिष्टकरणसम्भवादिति भावः॥४१॥

**स्वप्रजानां न भेदेन नैव दण्डेन पालनम्।**
**कुर्वीत सामदानाभ्यां सर्वदा यत्नमास्थितः ॥ ४२ ॥**

**अन्वयः**—सर्वदा यत्नमास्थितः सामदानाभ्यां स्वप्रजानां पालनं कुर्वीत, भेदेन दण्डेन नैवेति ॥ ४२ ॥

**व्याख्या**—सर्वदा = सततम्, यत्नमास्थितः—यत्नम् = प्रयत्नं चेष्टितं वा, आस्थितः = उषितः, आश्रितः सन्, सामदानाभ्याम्—सामेन = सामोपायेन, दानेन = दानोपायेन, च, स्वप्रजानाम्—स्वस्य = आत्मनः, प्रजानाम् = जनानाम्, पालनम् = रक्षणम्, कुर्वीत = विधेयात् शिष्याद्वा, भेदेन = भेदनीत्या, न = नहि, दण्डेन = दण्डनीत्या, न = नहि, पालनीयेति शेषः ॥ ४२ ॥

**हिन्दी**—हमेशा प्रयासपूर्वक साम तथा दान नीति से प्रजा का पालन करना चाहिए, न कि भेद और दण्डनीति से ॥ ४२ ॥

**स्वप्रजानामिति।** सर्वदा यत्नमास्थितः यत्नवान् सन् सामदानाभ्यां स्वस्य प्रजानां पालनं कुर्वीत, भेदेन मनोभङ्गापादनेन न दण्डेन च न ॥ ४२ ॥

**स्वप्रजादण्डभेदैश्च भवेद्राज्यविनाशनम्।**
**हीनाधिका यथा न स्युः सदा रक्ष्यास्तथा प्रजाः ॥ ४३ ॥**

**अन्वयः**—स्वप्रजादण्डभेदैश्च राज्यविनाशनं भवेत्। यथा प्रजाः हीनाः वा अधिकाः न स्युः तथा सदा रक्ष्याः ॥ ४३ ॥

**व्याख्या**—स्वप्रजानाम् = आत्मजनानाम्, दण्डैः भेदैश्च = दण्डोपायैः भेदोपायैश्च, राज्यविनाशनम् = राष्ट्रस्य विनाशम्, भवेत = स्यात्। तस्मात्, यथा = येन प्रकारेण, प्रजाः = जनाः, हीनाः = अधमाः निकृष्टाः, वा = अथवा, अधिकाः = प्रबलाः, न = नहि, स्युः = भवेयुः, तथा = तेन प्रकारेण, सदा = सर्वदा, रक्ष्याः = पालनीयेति यावत् ॥ ४३ ॥

**हिन्दी**—दण्ड या भेद नीति से अपनी प्रजा का पालन करने से राज्य विनष्ट हो जाता है। अतः जिससे प्रजा न तो हीनबल या प्रबल न हो, प्रत्युत समबल रहे; वैसे उसका पालन करना चाहिए ॥ ४३ ॥

**स्वप्रजेति।** स्वप्रजानां दण्डैः भेदैश्च राज्यविनाशनं भवेत् तस्मात् यथा प्रजाः हीनाः वा अधिकाः प्रबलाः न स्युः, तथा सदा सर्वस्मिन् काले रक्ष्याः पालनीयाः ॥ ४३ ॥

**निवृत्तिरसदाचाराद् दमनं दण्डतश्च तत्।**
**येन सन्दम्यते जन्तुरुपायो दण्ड एव सः ॥ ४४ ॥**

**अन्वयः**—दण्डतः असदाचारात् निवृत्तिः दमनञ्च। तत् येन उपायेन जन्तु सन्दम्यते स एव दण्डः ॥ ४४ ॥

**व्याख्या**—दण्डतः = दण्डविधानात्, असदाचारात् = सच्चर्याविहीनात्, निवृत्तिः = विरतिः, दमनम् = विराधनञ्च। तत् = तस्मात्, येनोपायेन = येन विधिना, जन्तुः = जीवः, सन्दम्यते = सम्यग्रूपेण वशवर्त्तिनो भवेत्, सः = असौ, उपायः = साधनम्, दण्डः एवेति भावः ॥ ४४ ॥

**हिन्दी**—दण्ड से या बुरे आचरण से मनुष्य का दमन होता है। अतः जिस साधन से जीव का अच्छी तरह दमन होता है, उसे ही दण्ड कहते हैं ॥ ४४ ॥

**निवृत्तिरिति।** दण्डतः दण्डात् असदाचारात् निवृत्तिः दमनञ्च तत् तस्मात् येन उपायेन जन्तुः जीवः सन्दम्यते सम्यक् शास्यते सः उपायः दण्डः एव ॥४४॥

**स उपायो नृपाधीनः स सर्वस्य प्रभुर्यतः ॥४५॥**

**अन्वयः**—स उपायः नृपाधीनः यतः सः सर्वस्य प्रभुः ॥४५॥

**व्याख्या**—सः = तत्, उपायः = साधनम्, नृपाधीनम् = नृपायत्तः, यतः = यस्मात् कारणात्, सः = राजा, सर्वस्य = जनस्य, प्रभुः = स्वामी वर्त्तते ॥४५॥

**हिन्दी**—राजा सभी का स्वामी होता है, अतः वह दण्ड नामक उपाय उसी के अधीन होता है ॥४५॥

**स इति।** सः दण्डरूपः उपायः नृपाधीनः राजायत्तः, यतः सः राजा सर्वस्य लोकस्य प्रभुः स्वामी, दण्डकर्तृत्वं स्वामिन एव युज्यते इति भावः ॥४५॥

**निर्भर्त्सनं चापमानोऽनशनं बन्धनं तथा।**
**ताडनं द्रव्यहरणं पुरान्निर्वासनाङ्कने ॥४६॥**
**व्यस्तक्षौरमसद्यानमङ्गच्छेदो वधस्तथा ।**
**युद्धमेते ह्युपायाश्च दण्डस्यैव प्रभेदकाः ॥४७॥**

**अन्वयः**—निर्भर्त्सनम्, अपमानम्, अनशनं तथा बन्धनं, ताडनं, द्रव्यहरणं, पुरात् निर्वासनम्, अङ्कनं, व्यस्तक्षौरम्, असद्यानम्, अङ्गच्छेदः, वधः तथा युद्धम्—एते उपायाः दण्डस्यैव प्रभेदकाः ॥४५-४७॥

**व्याख्या**—निर्भर्त्सनम् = तर्जनम्, अपमानः = अनादरः, अनशनम् = अन्नपानं विनाऽवस्थापनम्, तथा = तेनैव प्रकारेण, बन्धनम् = निगडम्, ताडनम् = प्रहरणम्, द्रव्यहरणम् = धनापहरणम्, पुरात् = नगरात्, निर्वासनम् = निष्कासनम्, अङ्कनम् = तप्तलोहमुद्रया शरीरे चिह्नदानम्, व्यस्तक्षौरम् = अव्यवस्थितकेशछेदनम्, असद्यानम् = गर्दभाद्युपरि स्थाप्य परिचालनम्, अङ्गच्छेदः = अङ्गभङ्गकरणम्, तथा = तेन प्रकारेणैव, वधः = हननम्, युद्धम् = समरम्, एते = निर्भर्त्सनादयः, उपायाः = शत्रुविजययुक्तयः, दण्डस्यैव = दण्डनीतेरेव, प्रभेदकाः = प्रकाराः, सन्तीति शेषः ॥४६-४७॥

**हिन्दी**—झिड़कना, अपमानित करना, भूखे रखना, बाँधना, पीटना, धन छीन लेना, नगर से निकाल देना, देह दगवाना, बुरे ढंग से सिर मुड़वा देना, गदहे पर चढ़ाकर घूमाना, अङ्ग-भङ्ग करवा देना तथा जान से मरवा डालना या युद्ध करना—ये सभी दण्डनीति के ही भेद हैं ॥४६-४७॥

**निर्भर्त्सनमिति। व्यस्तेति।** निर्भर्त्सनं तिरस्कारः, अपमानः मानच्युतिकरणम् अनशनम् अनाहारेण अवस्थापनं, बन्धनं ताडनं प्रहारः, द्रव्यहरणं, पुरात् नगरात् निर्वासनं बहिष्करणम्, अङ्कनं शरीरे चिरस्थायिचिह्नकरणं, व्यस्तक्षौरं मस्तकमुण्डनादिरूपं विपरीतं क्षौरकर्म, असद्यानं गर्दभाद्यारोहणेन गमनम् अङ्गस्य अवयवस्य हस्तपदादेः छेदः, वधः प्राणदण्डः, तथा युद्धम् एते निर्भर्त्सनादयः उपायाः दण्डस्यैव प्रभेदकाः विशेषा इत्यर्थः ॥४६-४७॥

जायते धर्मनिरता प्रजा दण्डभयेन च।
करोत्याधर्षणं नैव तथा चासत्यभाषणम् ॥ ४८ ॥
क्रूराश्च मार्दवं यान्ति दुष्टा दौष्ट्यं त्यजन्ति च।
पशवोऽपि वशं यान्ति विद्रवन्ति च दस्यवः ॥ ४९ ॥
पिशुना मूकतां यान्ति भयं यान्त्याततायिनः।
करदाश्च भवन्त्यन्ये वित्रासं यान्ति चापरे।
अतो दण्डधरो नित्यं स्यात् नृपो धर्मरक्षणे ॥ ५० ॥

**अन्वयः**—दण्डभयेन प्रजा धर्मनिरता जायते, आधर्षणं तथा असत्यभाषणं नैव करोति, क्रूराः मार्दवं यान्ति च दुष्टाः दौष्ट्यं त्यजन्ति, पशवोऽपि वशं यान्ति च दस्यवः विद्रवन्ति, पिशुना मूकतां यान्ति, आततायिनः भयं यान्ति च अन्ये करदाः भवन्ति, अपरे वित्रासं यान्ति। अतः नृपः धर्मरक्षणे नित्यं दण्डधरः स्यात् ॥ २४८-२५० ॥

**व्याख्या**—दण्डभयेन—दण्डस्य = दमस्य, भयेन = भीत्या, प्रजाः = जनाः, धर्मनिरताः = पुरायपरायणाः, जायन्ते = भवन्ति, आधर्षणम् = अबलजनमर्दनम्, तथा = तेनैव प्रकारेण, असत्यभाषणम् = मिथ्यावचनम्, नैव = नास्त्येव, करोति = वदति, क्रूराः = परपीडकाः नृशंसाः, मार्दवम् = कोमलताम्, यान्ति = प्राप्नुवन्ति, च = पुनः, दुष्टाः = दुर्वृत्ताः, दौष्ट्यम् = दौर्जन्यम्, त्यजन्ति = परिहरन्ति, पशवोऽपि = सिंहव्याघ्रगोमहिषादयोऽपि, वशम् = अधीनताम्, यान्ति = प्राप्नुवन्ति, च = पुनः, दस्यवः = तस्कराः, विद्रवन्ति = पलायन्ते, पिशुनाः = परिवादरताः, मूकताम् = निर्गिरः, यान्ति = भवन्ति, आततायिनः = उत्कटपापकारिणो जनाः, भयम् = त्रासम्, यान्ति = प्राप्नुवन्ति, च = पुनः, अन्ये = अकरदाः, करदाः = राजस्वदायिनः, भवन्ति = जायन्ते, अपरे = अन्ये, वित्रासम् = भयाक्रान्तम्, यान्ति = भवन्ति, अतः = अस्मात् कारणात्, नृपः = राजा, धर्मरक्षणे = धर्मपालने, नित्यम् = सततम्, दण्डधरः = दण्डप्रदाता, स्यात् = भवेत् ॥ ४८-५० ॥

**हिन्दी**—जुर्माने के डर से प्रजा अपने कर्त्तव्य में स्थिर रहती है, न कोई किसी दुर्बल को सताता है और न झूठ बोलने की हिम्मत करता है, जालिम भी दूसरों के दुःख से दुःखी होते हैं, बुरे लोग बुराई करना बन्द कर देते हैं, पशु भी वशवर्त्ती बन जाते हैं, चोर-उच्चके भाग जाते हैं, चुगलखोर अपनी जबान बन्द कर लेते हैं, आततायी डरते हैं, टैक्स नहीं देने वाले लोग टैक्स देने लगते हैं तथा निडर डरते हैं। अतः राजा को सदैव दण्डधर होना चाहिए ॥ ४८-५० ॥

**जायते** इत्यादि। दण्डभयेन प्रजा धर्मनिरता धर्मनिष्ठा जायते, आधर्षणं दुर्बलाक्रमणं तथा असत्यभाषणञ्च नैव करोति। क्रूराः दुर्जनाः मार्दवं मृदुत्वं यान्ति प्राप्नुवन्ति, दुष्टाः जनाः दौष्ट्यं दोषं त्यजन्ति च। पशवः अपि वशं यान्ति, दस्यवः विद्रवन्ति पलायन्ते च। पिशुनाः खलाः धूर्त्ता इत्यर्थः, मूकतां मौनभावं यान्ति, आततायिनः, उत्कटपापकारिणः जनाः भयं यान्ति च। अन्ये अकरदा जना इत्यर्थः, करदाः राजस्वदायिनः भवन्ति, अपरे वित्रासं विशेषेण त्रासं यान्ति च। अतः अस्मात् कारणात् नृपः धर्मरक्षणे विषये नित्यं सततं दण्डधरः स्यात् ॥ ४८-५० ॥

**गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः ।**
**उत्पथप्रतिपन्नस्य कार्य्यं भवति शासनम् ॥ ५१ ॥**

**अन्वयः**—अवलिप्तस्य कार्याकार्यम् अजानतः उत्पथं प्रतिपन्नस्य गुरोरपि शासनं कार्यं भवति ॥ ५१ ॥

**व्याख्या**—अवलिप्तस्य = गर्वितस्य, कार्याकार्यम् = कर्त्तव्याऽकर्त्तव्यम्, अजानतः = अपरिचितः, उत्पथम् = कुमार्गम्, प्रतिपन्नस्य = अधिगतस्य, गुरोरपि = आचार्यस्यापि, शासनम् = नियमनम्, कार्यम् = करणीयम्, भवति = जायते ॥ ५१ ॥

**हिन्दी**—'क्या करना चाहिए, क्या नहीं?' इससे अनजान घमंड में चूर, हमेशा खराब रास्ते पर चलने वाले गुरुजनों को भी दण्ड देना राजा का कर्त्तव्य है ॥ ५१ ॥

**गुरोरिति**। अवलिप्तस्य उद्धतस्य कार्य्याकार्य्यं कर्त्तव्याकर्त्तव्यम् अजानतः उत्पथं प्रतिपन्नस्य गतस्य गुरोरपि शासनं दण्डनं कार्य्यं करणीयं भवति ॥ ५१ ॥

**राज्ञां सदण्डनीत्या हि सर्वे सिध्यन्त्युपक्रमाः ।**
**दण्ड एव हि धर्माणां शरणं परमं स्मृतम् ॥ ५२ ॥**

**अन्वयः**—राज्ञां सदण्डनीत्या सर्वे उपक्रमाः हि सिध्यन्ति । हि दण्डः एव धर्माणां परमं शरणं स्मृतम् ॥ ५२ ॥

**व्याख्या**—राज्ञाम् = भूपतीनाम्, सदण्डनीत्या—सदण्डया = दण्डसहितया, नीत्या = नयेन, सर्वे = निखिलाः, उपक्रमाः = उपायज्ञानापूर्वकारम्भाः, हीति निश्चयेन, सिद्ध्यन्ति = निष्पन्नाः भवन्ति । हि = यतः, दण्डः = दमनः, एव, धर्माणाम् = अभ्युदयनिः श्रेयससाधको गुणकर्मसमूहानाम्, परमम् = उत्कृष्टम्, शरणम् = त्राणस्थानम्, स्मृतम् = कथितम् ॥ ५२ ॥

**हिन्दी**—दण्डनीति का प्रयोग करने से राजा के सभी काम स्वतः सधते हैं। क्योंकि राजधर्म का परम रक्षक दण्ड ही माना जाता है ॥ ५२ ॥

**राज्ञामिति**। राज्ञां सदण्डनीत्या सदण्डया दण्डसहितया नीत्या सर्वे उपक्रमाः कार्य्याणि सिध्यन्ति हि। हि यतः दण्डः एव धर्माणां परमं शरणम् आश्रयः स्मृतम् ॥ ५२ ॥

**अहिंसैवासाधुहिंसा पशुवच्छ्रुतिचोदनात् ॥ ५३ ॥**

**अन्वयः**—श्रुतिचोदनात् पशुवत् असाधुनाम् हिंसा अहिंसा एव ॥ ५३ ॥

**व्याख्या**—श्रुतिचोदनात् = वैदिकविचारात्, पशुवत् = छागादि इव, असाधूनाम् = खलानाम्, हिंसा = हननम्, अहिंसा = हिंसात्यागः एव। वैदिकी हिंसा हिंसा न भवति। यथा यज्ञे पशुवधः शास्त्रीयत्वादहिंसैवेति ॥ ५३ ॥

**हिन्दी**—वेद के अनुदेश से जैसे यज्ञ में पशु की हिंसा अहिंसा मानी जाती है, ठीक उसी तरह दुष्टों की हिंसा अहिंसा ही होती है ॥ ५३ ॥

**अहिंसैवेति**। श्रुतिचोदनात् शास्त्रदर्शनात् पशुवत् असाधूनां हिंसा अहिंसा एव यथा यज्ञे पशुवधः शास्त्रीयत्वादहिंसैवेति भावः ॥ ५३ ॥

**दण्ड्यस्यादण्डनान्नित्यमदण्ड्यस्य च दण्डनात् ।**
**अतिदण्डाच्च गुणिभिस्त्यज्यते पातकी भवेत् ॥ ५४ ॥**

**अन्वयः**—दण्ड्यस्य अदण्डनात् अदण्ड्यस्य दण्डनात् नित्यम् अतिदण्डात् गुणिभिः त्यज्यते पातकी भवेत् ॥५४॥

**व्याख्या**—दण्ड्यस्य = दमनीयजनस्य, अदण्डनात् = अदमनात्, अदण्ड्यस्य = अदमनीयजनस्य, दण्डनात् = दमनात्, नित्यम् = निरन्तरम्, अतिदण्डात् = अत्यधिकदमनात्, गुणिभिः = दक्षजनैः, त्यज्यते = परिहरति, राजेति कर्मफलमध्याहार्यम्, च = पुनः, एवंविधो राजा, पातकी = पापकर्मी, भवेत् = स्यात् ॥५४॥

**हिन्दी**—दण्ड पाने योग्य व्यक्ति को दण्ड न देने वाले, निरपराध को सजा देने वाले तथा अपराध से अधिक दण्ड देने वाले राजा को लोग छोड़ देते हैं तथा ऐसा काम करने वाला राजा पातकी कहलाता है ॥५४॥

**दण्ड्यस्येति**। दण्ड्यस्य दण्डार्हस्य अदण्डनात् दण्डाकरणात् अदण्ड्यस्य अदण्डनीयस्य दण्डनात् तथा नित्यं सततम् अतिदण्डात् अधिकदण्डनाच्च गुणिभिः विद्वद्भिः त्यज्यते राजेति कर्मपदमध्याहार्य्यम्। पातकी पापी भवेच्च तत्कातरी राजेति शेषः ॥५४॥

**अल्पदानात् महत् पुण्यं दण्डप्रणयनात् फलम्।**
**शास्त्रेषूक्तं मुनिवरैः प्रवृत्त्यर्थं भयाय च ॥५५॥**

**अन्वयः**—अल्पदानात् महत् पुण्यं, प्रवृत्त्यर्थं दण्डप्रणयनात् महत् फलं च भयाय मुनिवरैः शास्त्रेषु उक्तम् ॥५५॥

**व्याख्या**—अल्पदानात् = क्षुद्रपरिमाणेऽपि प्रदानात्, महत् = श्रेष्ठम्, फलम् = पुण्यम्, भवति, प्रवृत्त्यर्थम् = दानधर्मादिकार्येषु प्रवर्त्तनाय, तथा दण्डप्रणयनात् = शास्त्रविहितदण्डप्रदानात्, महत्फलम् = उत्कृष्टपुण्यम्, तथा भयाय = जनानां भयोत्पादनाय, मुनिवरैः = श्रेष्ठैः मुनिभिः, शास्त्रेषु = धर्मग्रन्थेषु, एवम्, उक्तम् = कथितम् ॥५५॥

**हिन्दी**—तुच्छ दान से भी बड़ा पुण्य होता है तथा शास्त्रानुसार अपराधियों को भी दण्ड देने से श्रेष्ठ फल होता है; ऐसा मुनियों ने लोक में भयोत्पादन के लिए शास्त्रों में कहा है ॥५५॥

**अल्पदानादिति**। अल्पदानात् यत्किञ्चनदानात् महत् पुण्यं प्रवृत्त्यर्थं दानादिधर्मकार्य्ये प्रवर्त्तनाय, तथा दण्डप्रणयनात् यथाशास्त्रदण्डकरणात् महत् फलं भयाय लोकानां भयप्रदर्शनाय मुनिवरैः शास्त्रेषु उक्तं कथितम् ॥५५॥

**अश्वमेधादिभिः पुण्यं तत् किं स्यात् स्तोत्रपाठतः ?।**
**क्षमया यत्तु पुण्यं स्यात्तत् किं दण्डनिपातनात् ? ॥५६॥**

**अन्वयः**—अश्वमेधादिभिः यत् पुण्यं तत् स्तोत्रपाठतः किं स्यात् ? क्षमया यत् पुण्यं स्यात् तत् किं दण्डनिपातनात् स्यात् ? ॥५६॥

**व्याख्या**—अश्वमेधादिभिः = वाजिमेधादियागैः, यत्पुण्यम् = सुकृतम्, भवति, तत् = पुण्यम्, स्तोत्रपाठतः = स्तुतिकरणात्, किं स्यात् = भवेत्, नैवेत्यर्थः। तथा क्षमया = क्षान्त्या, यत्पुण्यम् = धर्मम्, भवति, तत् = धर्मम्, किम्, दण्डनिपातनात् = दमनात्, स्यात् = भवेत् ? नैवेत्यर्थः ॥५६॥

**हिन्दी**—अश्वमेध प्रभृति यागों से जो पुण्यफल मिलता है, वह क्या केवल स्तुति करने से हो सकता है ? कदापि नहीं। ठीक उसी तरह क्षमा करने से जो पुण्य होता है वह क्या

दण्ड देने से होगा? कदापि नहीं ॥५६॥

**अश्वमेधादिभिरिति**। अश्वमेधादिभिः यागैः यत् पुण्यं भवतीति शेषः तत् स्तोत्रपाठतः स्तवपाठात् किं स्यात्? नैवेत्यर्थः। तथा क्षमया यत् पुण्यं स्यात्, दण्डनिपातनात् तत् पुण्यं किं स्यात्? नैवेत्यर्थः॥५६॥

**स्वप्रजादण्डनाच्छ्रेयः कथं राज्ञो भविष्यति?।**
**तद्दण्डाज्जायते कीर्त्तिधनपुण्यविनाशनम्॥५७॥**

**अन्वयः**—स्वस्य प्रजानां दण्डनात् राज्ञः श्रेयः कथं भविष्यति? तत् दण्डात् कीर्त्ति-धनपुण्यविनाशनं जायते॥५७॥

**व्याख्या**—स्वस्यः = आत्मनः, प्रजानाम् = जनानाम्, दण्डनात् = दमनात्, राज्ञः = नृपस्य, श्रेयः = कल्याणम्, कथम् = केन प्रकारेण, भविष्यति = यास्यति? नैवेत्यर्थः, प्रत्युत, तत् = प्रजानाम्, दण्डात् = दमनात्, कीर्त्याः = यशसः, धनस्य = अर्थस्य, पुण्यानाम् = सुकृतानाम्, च, विनाशनम् = विध्वंसनम्, जायते = भवति॥५७॥

**हिन्दी**—अपनी प्रजा को दण्ड देने से राजा का कल्याण कैसे होगा? अर्थात् कभी नहीं। उलटे उसके यश, धन और पुण्य का विनाश ही होगा॥५७॥

**स्वप्रजेति**। स्वस्य प्रजानां दण्डनात् राज्ञः श्रेयः कथं भविष्यति? नैवेत्यर्थः। प्रत्युत तद्दण्डात् तासां दण्डनात् कीर्त्तिधनपुण्यानां विनाशनं भवति॥५७॥

**नृपस्य धर्मपूर्णत्वाद् दण्डः कृतयुगे न हि।**
**त्रेतायुगे पूर्णदण्डः पादाधर्माः प्रजा यतः॥५८॥**
**द्वापरे चार्द्धधर्मत्वात् त्रिपाद्दण्डो विधीयते।**
**प्रजा निःस्वा राजदौष्ट्याद् दण्डार्द्धं तु कलौ तथा॥५९॥**

**अन्वयः**—कृतयुगे नृपस्य धर्मपूर्णत्वात् दण्डः न हि। त्रेतायुगे यतः प्रजा पादाधर्माः अतः पूर्णदण्डः। द्वापरे चार्द्धधर्मत्वात् त्रिपाद्दण्डः विधीयते। कलौ राज्ञः दौष्ट्यात् प्रजाः निःस्वाः अतः दण्डार्द्धं विधीयते॥५८-५९॥

**व्याख्या**—कृतयुगे = सत्ययुगे, नृपस्य = राज्ञः, धर्मपूर्णत्वात् = धर्मनिष्ठत्वात्, दण्डः = दमनः, न = नहि, आसीदिति। त्रेतायुगे = द्वितीययुगे, यतः = यस्मात् कारणात्, प्रजाः = जनाः, पादाधर्माः = अधर्मैकपादनिष्ठाः, अतः पूर्णदण्डः = समग्रदमनः, आसीदिति। द्वापरे = तृतीययुगे, अर्द्धधर्मत्वात् = धर्मार्द्धत्वात्, त्रिपाद्दण्डः = पादत्रयदमनः, विधीयते = अनुष्ठीयते। तथा कलौ = कलियुगे, राज्ञः = नृपस्य, दौष्ट्यात् = दुष्टत्वात्, प्रजाः = जनाः, निःस्वाः = दरिद्राः, भवन्ति = जायन्ते, अतः दण्डार्धम् = अर्द्धदण्डम्, विधीयते = क्रियते, इति॥५८-५९॥

**हिन्दी**—सत्ययुग में धर्म चारों चरणों से मौजूद था, अतः उस युग में दण्ड का कोई विधान नहीं था। त्रेता में प्रजा के बीच तीन चरण धर्म और एक चरण पाप था, अतः उस युग में पूरा दण्ड दिया जाता था। द्वापर में आधा धर्म और आधा अधर्म था, अतः उस युग में तीन चौथाई दण्ड का विधान था। कलियुग में राजा की दुष्टता से प्रजा निर्धन है, अतः इस युग में आधे दण्ड का विधान है॥५८-५९॥

**नृपस्येति**। कृतयुगे नृपस्य धर्मपूर्णत्वात् दण्डः न हि आसीदित्यर्थः, त्रेतायुगे यतः प्रजाः पादाधर्माः अधर्मैकपादनिष्ठा इत्यर्थः, अतः पूर्णदण्डः आसीत्। द्वापरे तु अर्द्धधर्मत्वात् त्रिपादण्डः विधीयते व्यवस्थीयते। तथा कलौ राज्ञः दौष्ट्यात् दोषात् प्रजा निःस्वाः निर्धना भवन्ति, अतः दण्डार्द्धम् अर्द्धदण्डः विधीयते इति शेषः॥५८-५९॥

**युगप्रवर्त्तको राजा धर्माधर्मप्रशिक्षणात्।**
**युगानां न प्रजानां न दोषः किन्तु नृपस्य हि॥६०॥**

**अन्वयः**—राजा धर्मस्य अधर्मस्य च प्रशिक्षणात् युगप्रवर्त्तकः, युगानां न प्रजानां न दोषः किन्तु नृपस्य हि॥६०॥

**व्याख्या**—राजा = भूपतिः, धर्मस्य = सुकृतस्य, अधर्मस्य च = पापस्य च, प्रशिक्षणात् = शिक्षादानात्, युगप्रवर्त्तकः = युगसंस्थापकः, अतः युगानां = कृतादियुगानाम्, न = नहि, प्रजानाम् = जनानाम्, च, न = नहि, दोषः = अपराधः, किन्तु नृपस्य = राज्ञः, एव दोष इति॥६०॥

**हिन्दी**—प्रजा को धर्म या अधर्म का प्रशिक्षण राजा देता है, अतः राजा ही युगनिर्माता होता है। इसमें न युग का दोष है और न राजा का ही॥६०॥

**युगेति**। राजा धर्मस्य अधर्मस्य च प्रशिक्षणात् शिक्षादानात् युगप्रवर्त्तकः सत्यादियुगानां प्रवर्त्तयिता, अतः युगानां न प्रजानाञ्च न दोषः, किन्तु नृपस्य हि राज्ञ एव दोष इत्यर्थः॥६०॥

**प्रसन्नो येन नृपतिस्तदाचरति वै जनः।**
**लोभाद्भयाच्च किं तेन शिक्षितं नाचरेत् कथम्?॥६१॥**

**अन्वयः**—नृपतिः येन प्रसन्नः वै जनः लोभात् भयाच्च तत् आचरति, तेन शिक्षितं किं कथं न आचरेत्॥६१॥

**व्याख्या**—नृपतिः = राजा, येन = कर्मणा, प्रसन्नः = आनन्दो भवति, वै = इति निश्चयेन जनः = प्रजा, लोभात् = लिप्सायाः, भयात् = भीतेश्च, तत् = कर्म, आचरति = करोति, तेन = राज्ञा, शिक्षितम् = उपदिष्टम्, किम्, कथम् = नहि, आचरेत् = कुर्यात्॥६१॥

**हिन्दी**—लोभ से या डर से प्रजा वैसे ही आचरण करती है जिससे राजा प्रसन्न हो, तो फिर राजा की शिक्षा की वह अवहेलना कैसे करेगी?॥६१॥

**प्रसन्न इति**। राजा येन कर्मणा प्रसन्नः प्रीतः भवति, जनः प्रजा लोभात् भयाच्च तत् आचरति वै करोत्येव, तेन राज्ञा शिक्षितम् उपदिष्टं किं किमपीत्यर्थः, कथं न आचरेत्? अपि तु आचरेदेवेत्यर्थः॥६१॥

**सुपुण्यो यत्र नृपतिर्धर्मिष्ठास्तत्र हि प्रजाः।**
**महापापी यत्र राजा तत्राधर्मपरो जनः॥६२॥**

**अन्वयः**—यत्र नृपतिः सुपुण्यः तत्र हि प्रजाः धर्मिष्ठाः। यत्र राजा महापापी तत्र जनः अधर्मपरः॥६२॥

**व्याख्या**—यत्र = यस्मिन् देशे, नृपतिः = राजा, सुपुण्यः = अतिधार्मिकः, तत्र = तस्मिन्राज्ये, हि = इति निश्चयेन, प्रजाः = जनाः, धर्मिष्ठाः = पुण्यकर्मिणो भवन्ति, यत्र = यस्मिन् राष्ट्रे, राजा =

नृपतिः, महापापी = घोर-अधार्मिकः, तत्र = तस्मिन् देशे, जनः = लोकः, अधर्मपरः = पापे रतः, भवति ॥ ६२ ॥

**हिन्दी**—जिस देश का राजा धर्मात्मा होता है, उस देश की प्रजा भी धर्मनिष्ठ होती है। जिस देश का राजा महापापी होता है, उस देश की प्रजा भी घोर पापकर्मी होती है ॥ ६२ ॥

**सुपुण्य इति**। यत्र नृपतिः सुपुण्यः धार्मिकः तत्र प्रजाः धर्मिष्ठाः हि। यत्र तु राजा महापापी तत्र जनः अधर्मपरः अधार्मिकः ॥ ६२ ॥

**न कालवर्षी पर्जन्यस्तत्र भूर्न महाफला।**
**जायते राष्ट्रह्रासश्च शत्रुवृद्धिर्धनक्षयः ॥ ६३ ॥**

**अन्वयः**—तत्र पर्जन्यः कालवर्षी न, भूः महाफला न, च राष्ट्रह्रासः शत्रुवृद्धिः धनक्षयः जायते ॥ ६३ ॥

**व्याख्या**—तत्र = तस्मिन् राष्ट्रे, यत्र राजा अधर्मिको भवति, पर्जन्यः = मेघः, कालवर्षी = यथावसरे जलदः, न = नहि, भूः = धरित्री, महाफला = अतिफलदा, उर्वरा, न = नहि, च = पुनः, राष्ट्रह्रासः—राष्ट्रस्य = जनपदस्य, ह्रासः = क्षयः, शत्रुवृद्धिः—शत्रूणाम् = रिपूणाम्, वृद्धिः = सर्वतोऽभिवर्धनम्, धनक्षयः—धनानाम् = अर्थानाम्, क्षयः = ह्रासः, जायते = भवति ॥ ६३ ॥

**हिन्दी**—अधर्मी राजा के राज्य में समय पर बादल नहीं बरसते, धरती बंजर हो जाती है और राष्ट्र का ह्रास होता है एवं चारों ओर दुश्मन बढ़ जाते हैं तथा धन विनष्ट हो जाता है ॥ ६३ ॥

**नेति**। तत्र अधार्मिके राजनि सतीत्यर्थः, पर्जन्यः मेघः न कालवर्षी यथासमये न वर्षतीत्यर्थः, भूः पृथ्वी न महाफला भवतीति शेषः। राष्ट्रस्य राज्यस्य ह्रासः शत्रुवृद्धिः धनक्षयश्च जायते ॥ ६३ ॥

**सुराप्यपि वरो राजा न स्त्रैणो नातिकोपवान्।**
**लोकांश्चण्डस्तापयति स्त्रैणो वर्णान् विलुम्पति ॥ ६४ ॥**
**मद्यप्येकश्च भ्रष्टः स्याद् बुद्ध्या च व्यवहारतः।**
**कामक्रोधौ मद्यतमौ सर्वमद्याधिकौ यतः ॥ ६५ ॥**

**अन्वयः**—राजा सुरापी अपि वरः; स्त्रैणः न, अतिकोपवान् न। चण्डः लोकान् तापयति, स्त्रैणः वर्णान् विलुम्पति। मद्यपी एकश्च बुद्ध्या व्यवहारतः भ्रष्टः स्यात्। कामक्रोधौ मद्यतमौ, यतः तौ सर्वमद्याधिकौ ॥ ६४-६५ ॥

**व्याख्या**—राजा = भूपतिः, सुरापी = मद्यपायी, अपि = चेत्, वरम् = वरेण्यम्, स्त्रैणः = स्त्रीजितः, न = नहि, अतिकोपवान् = प्रचण्डक्रोधी, न = नोत्तमः। चण्डः = अतिक्रोधी राजा, लोकान् = जनान्, तापयति = अतिपीडयति, स्त्रैणः = रमणीरतः, वर्णान् = ब्राह्मणादीन्, विलुम्पति = दुराचारेण कलुषयति। मद्यपी = सुरासुः, एकश्च = एक एव, आत्मनैव, बुद्ध्या = ज्ञानेन, व्यवहारतः = वर्त्तनेन आचारेण वा, भ्रष्टः = नष्टः, स्यात् = भवेत्। कामक्रोधौ = कामकोपौ, मद्यतमौ = सुरादधिकौ, यतः, तौ = कामक्रोधौ, सर्वेषाम् = सकलानाम्, मद्यानाम् = सुराणाम्, अधिकौ = प्रभूतौ प्रबलतरौ, भवतः इति ॥ ६४-६५ ॥

**हिन्दी**—कामी और अतिक्रोधी राजा के होने की अपेक्षा उसका शराबी होना अच्छा है। क्योंकि कामी राजा संकर उत्पन्न कर वर्णव्यवस्था को लुप्त करता है तथा अति क्रोधी राजा प्रजा को पीड़ित करता है। शराबी राजा केवल अपनी बुद्धि एवं अपने आचरण में ही भ्रष्ट होता है, किन्तु कामी एवं क्रोधी राजा का कुप्रभाव एवं दुश्चरित्र का परिणाम प्रजा को झेलना पड़ता है। अतः राजा का कामी और क्रोधी होने की अपेक्षा शराबी होना उत्तम है ॥६४-६५॥

**सुरापीति। मद्यपीति**। राजा सुरापी सुरापायी अपि वरः प्रशस्यः, स्त्रैणः स्त्रीपरतन्त्रः न, अतिकोपवान् च न वर इति शेषः। तथाहि चण्डः अतिकोपनः लोकान् प्रजाः तापयति नितरां पीडयति, स्त्रैणः स्त्रीकामुकः वर्णान् ब्राह्मणादीन् विलुम्पति व्यभिचारेण सङ्करजात्युत्पादनेन दूषयतीत्यर्थः। मद्यपी सुरापायी एकश्च एक एव बुद्ध्या व्यवहारतश्च भ्रष्टः स्यात् प्रजाः न भ्रंशयेदिति भावः। कामक्रोधौ मद्यतमौ मद्यादधिकौ यतः तौ सर्वेषां मद्यानां मादकानां वस्तूनाम् अधिकौ श्रेष्ठौ ॥६४-६५॥

**धनप्राणहरो राजा प्रजायाश्चातिलोभतः।**
**तस्मादेतत् त्रयं त्यक्त्वा दण्डधारी भवेत् नृपः॥६६॥**

**अन्वयः**—राजा अतिलोभतः प्रजायाः धनप्राणहरः। तस्मात् नृपः एतत्त्रयं त्यक्त्वा दण्डधारी भवेत् ॥६६॥

**व्याख्या**—राजा = नृपः, अतिलोभतः = लिप्सातिशयेन, प्रजायाः = जनानाम्, धनप्राणहरः—धनानाम् = वित्तानाम्, प्राणानाम् = असूनाम्, हरः = हरणकर्त्ता भवति। तस्मात् = तेन कारणेन, नृपः = राजा, एतत्त्रयम् = कामक्रोधादित्रयम्, त्यक्त्वा = परिहृत्य, दण्डधारी = दमनकारी, भवेत् = स्यात् ॥६६॥

**हिन्दी**—राजा अत्यन्त लोभवश प्रजा का धन और प्राण का हरणकर्त्ता होता है। अतः काम, क्रोध और लोभ—इन तीनों को छोड़कर राजा को दमनकारी बनना चाहिए ॥६६॥

**धनेति**। राजा अतिलोभतः लोभातिशयात् प्रजायाः जातावेकवचनम्, प्रजानामित्यर्थः धनप्राणहरः भवति, तस्मात् नृपः एतेषां कामक्रोधलोभानां त्रयं त्यक्त्वा दण्डधारी दमनकारी भवेत् ॥६६॥

**अन्तर्मृदुर्बहिः क्रूरो भूत्वा स्वां दण्डयेत् प्रजाम्।**
**अत्युग्रदण्डकल्पः स्यात् स्वभावा हितकारिणः॥६७॥**

**अन्वयः**—राजा अन्तः मृदुः बहिः क्रूरः भूत्वा स्वां प्रजां दण्डयेत्। अत्युग्रदण्डकल्पः स्यात् स्वभावाः हितकारिणः ॥६७॥

**व्याख्या**—राजा = नृपः, अन्तः = अन्तःकरणे, मृदु = कोमलः, बहिः = बाह्ये, क्रूरः = निष्ठुरः, भूत्वा = सम्भूय, स्वाम् = स्वकीयाम्, प्रजाम् = जनम्, दण्डयेत् = दमयेत्, अत्युग्रदण्डकल्पः = बाह्ये अतितीव्रदण्डसदृशः, स्यात् = भवेत्, किन्तु स्वभावाः = प्रकृत्या, हितकारिणः = लाभकारिणो भवेयुरिति ॥ ६७॥

**हिन्दी**—राजा को भीतर से कोमल और ऊपर से कठोर होकर प्रजा को दण्ड देना चाहिए। ऊपर से अत्यन्त कठोर दीखते हुए स्वभाव से लोकहितैषी होना चाहिए ॥६७॥

**अन्तरिति**। राजा अन्तर्मृदुः कोमलान्तःकरणः किन्तु बहिःक्रूरः बाह्यकर्कशः भूत्वा स्वां प्रजां दण्डयेत् शासयेत्। अत्युग्रदण्डकल्पः बाह्ये अतितीक्ष्णदण्डसदृशः स्यात् किन्तु स्वभावाः हितकारिणः भवेयुरिति शेषः॥६७॥

**राष्ट्रं कर्णेजपैर्नित्यं हन्यते च स्वभावतः।**
**अतो नृपः सूचितोऽपि विमृशेत् कार्य्यमादरात्॥६८॥**

**अन्वयः**—कर्णेजपैः स्वभावतः नित्यं राष्ट्रं हन्यते। अतः नृपः सूचितोऽपि आदरात् कार्यं विमृशेत्॥६८॥

**व्याख्या**—कर्णेजपैः= पिशुनैः वा पृष्ठमांसादैः, स्वभावतः= प्रकृत्या, नित्यम्= निरन्तरम्, राष्ट्रम्= राज्यम्, हन्यते= विनाशयितुं यतते। अतः= अस्मात्कारणात्, नृपः= राजा, सूचितोऽपि = ज्ञापितोऽपि, आदरात्= सम्मानपूर्वकात्, कार्यम्= कृत्यम्, विमृशेत्= विचारयेत्॥६८॥

**हिन्दी**—चुगलखोर अपने स्वभाव से परस्पर द्वेष उत्पन्न कर निरन्तर राष्ट्र की जड़ खोदने में लगे रहते हैं। अतः उनकी बातें सम्मानपूर्वक सुनकर भी विचारपूर्वक ही कोई काम करे॥६८॥

**राष्ट्रमिति**। कर्णेजपैः जनैः स्वभावतः नित्यं राष्ट्रं राज्यं हन्यते परस्परमनोभङ्गजननेन उच्छेत्तुं चेष्ट्यते, अतः नृपः सूचितः तेषां परामर्शेन दूषितोऽपि आदरात् यत्नतः कार्य्यं विमृशेत् विचार्य्य कुर्य्यादित्यर्थः॥६८॥

**आत्मनश्च प्रजायाश्च दोषदर्श्युत्तमो नृपः।**
**विनियच्छति चात्मानमादौ भृत्यांस्ततः प्रजाः॥६९॥**

**अन्वयः**—उत्तमः नृपः आत्मनः प्रजायाश्च दोषदर्शी। आदौ आत्मानं ततः भृत्यान् ततः प्रजाः विनियच्छति॥६९॥

**व्याख्या**—उत्तमः= श्रेष्ठः, नृपः= राजा, आत्मनः= स्वस्य, प्रजायाश्च= जनानाञ्च, दोषदर्शी= न्यूनताप्रेक्षको भवति। आदौ= प्रथमतः, आत्मानम्= स्वम्, ततः, भृत्यान्= राजपुरुषान्, तत्पश्चात्, प्रजाः= जनान्, विनियच्छति= विशेषेण नियन्त्रयति॥६३॥

**हिन्दी**—अपना तथा प्रजा का दोष देखने वाला राजा उत्तम कोटि का होता है। सर्वप्रथम राजा अपने को दोषमुक्त करता है, फिर राजपुरुषों को, बाद में प्रजा को भी दोषमुक्त करता है॥६९॥

**आत्मन इति**। उत्तमः नृपः आत्मनः स्वस्य प्रजायाश्च दोषदर्शी भवति, अतः राजा आदौ अग्रतः आत्मानं ततः भृत्यान् राजपुरुषान् ततश्च प्रजाः विनियच्छति विशेषेण नियमयतीत्यर्थः॥६९॥

**कायिको वाचिको मानसिकः सांसर्गिकस्तथा।**
**चतुर्विधोऽपराधः स बुद्ध्यबुद्धिकृतो द्विधा॥७०॥**

**अन्वयः**—अपराधः कायिकः वाचिकः मानसिकः तथा सांसर्गिकः चतुर्विधः। सः च बुद्ध्यबुद्धिकृतः द्विधा॥७०॥

**व्याख्या**—अपराधः= दोषः, कायिकः= शारीरिकः, वाचिकः= वाग्विषयकः, मानसिकः=

चैत्तः, तथा = तेनैव प्रकारेण, सांसर्गिकः = सम्पर्कजन्यः, चतुर्विधः = चतुर्धा । सः च = असौ पुनः, द्विधा = द्विप्रकारको भवति, तद्यथा—बुद्धिकृतः = विचारपूर्वकं कृतं स्खलितम्, तथा अबुद्धिकृतः = अज्ञातस्खलितम् ॥७० ॥

**हिन्दी**—अपराध चार तरह के होते हैं—शारीरिक, मानसिक, वाचिक और सम्पर्कजन्य। और इनमें से प्रत्येक के पुनः दो-दो भेद हैं—अनजाने अपराध तथा जान-बूझकर किये गये अपराध ॥७० ॥

**कायिक इति**। अपराधः कायिकः शरीरजः वाचिकः वाक्योत्पन्नः मानसिकः मनोजनितः तथा सांसर्गिकः संसर्गज इति चतुर्विधः स च बुद्धिकृतः अबुद्धिकृतश्चेति द्विधा भवतीति शेषः ॥७० ॥

**पुनर्द्विधा कारितश्च तथा ज्ञेयोऽनुमोदितः ।**
**सकृदसकृदभ्यस्तस्वभावैः स चतुर्विधः ॥७१ ॥**

**अन्वयः**—सः पुनर्द्विधा ज्ञेयः—कारितः तथा अनुमोदितः। स च सकृत्-असकृत्-अभ्यस्तस्वभावैः चतुर्विधः ॥७१ ॥

**व्याख्या**—सः = अपराधः, पुनः = भूयः, द्विधा = द्विप्रकारकः, ज्ञेयः = बोध्यः । कारितः = अन्यैः जनैः सम्पादितः, तथा अनुमोदितः = समर्थितः, स चापराधः, सकृत् = वारमेकं कृतः, असकृत् = पौनःपुन्येन कृतः, अभ्यस्तः = निरन्तरकृतः, स्वभावैः = प्रकृत्या सम्पादितैः, चतुर्विधः = चतुर्धा भवतीति भावः ॥७१ ॥

**हिन्दी**—वह अपराध पुनः दो प्रकार का होता है—एक किसी के द्वारा कराया गया तथा दूसरा समर्थन किया गया। फिर ये दोनों चार तरह के होते हैं—एक बार किया गया, अनेक बार किया गया, निरन्तर किया गया तथा स्वाभाविक रूप से किया गया ॥७१ ॥

**पुनरिति**। सः अपराधः पुनर्द्विधा द्विप्रकारः ज्ञेयः, कारितः तथा अनुमोदितश्च । स च सकृत्कृतः, असकृत्कृतः तथा अभ्यस्तकृतः स्वभावकृत इति चतुर्विधः ॥७१ ॥

**नेत्रवक्त्रविकाराद्यैर्भावैर्मानसिकं तथा ।**
**क्रियया कायिकं वीक्ष्य वाचिकं क्रूरशब्दतः ॥७२ ॥**
**सांसर्गिकं साहचर्य्यैर्ज्ञात्वा गौरवलाघवम् ।**
**उत्पन्नोत्पत्स्यमानानां कार्य्याणां दण्डमावहेत् ॥७३ ॥**

**अन्वयः**—नेत्रवक्त्रविकाराद्यैः भावैः मानसिकं क्रियया वीक्ष्य कायिकं क्रूरशब्दतः वाचिकं साहचर्य्यैः सांसर्गिकं गौरवलाघवम् अपराधं ज्ञात्वा उत्पनान्नां तथा उत्पत्स्यमानानाम् कार्याणां दण्डम् आवहेत् ॥७२-७३ ॥

**व्याख्या**—नेत्रवक्त्रविकाराद्यैः = चक्षुराननविकृतिभिः, भावैः = मनोविकारैः, मानसिकम् = हार्दिकम्, क्रियया = कर्मणा, वीक्ष्य = अवलोक्य, कायिकम् = शारीरिकम्, क्रूरशब्दतः = नृशंसवचनात्, वाचिकम् = वाग्विषयकम्, साहचर्यैः = सहवासैः, साांसर्गिकम् = सम्पर्कजन्यम्, गौरवलाघवम् = गुरुत्वं लघुत्वं च, अपराधम् = दोषम्, ज्ञात्वा = विज्ञाय, उत्पन्नानाम् = उद्भूतानाम्, उत्पत्स्यमाानानाम् = सम्भाव्यानाम्, कार्याणाम् = कृत्यानाम्, दण्डम् = दमनम्, आवहेत् = विचारयेत् ॥७२--७३ ॥

**हिन्दी**—आँख और मुँह की विकृति से उनके मनोभावों को समझकर उनके मानसिक अपराध को तथा उनके काम से उनका शारीरिक, निष्ठुर वचन से वाचिक, सहवास से सांसर्गिक अपराध की लघुता और गुरुता को समझ कर उससे हुए या होने वाले अपराधों के सम्बन्ध में दण्ड-विचार करना चाहिए ॥ ७२-७३ ॥

**नेत्रेति। सांसर्गिकमिति।** नेत्रवक्त्राद्यैः नयनमुखभङ्गिप्रभृतिभिर्भावैः धर्मैः मानसिकं, क्रियया कार्य्येण कायिकं क्रूरशब्दतः कर्कशवाक्यात् वाचिकं साहचर्य्यैः सहवासैः सांसर्गिकं गौरवलाघवं गुरुं लघुञ्च अपराधं ज्ञात्वा उत्पन्नानां तथा उत्पत्स्यमानानां कार्य्याणां पापकर्मणां दण्डम् आवहेत् कुर्य्यात् ॥ ७२-७३ ॥

**प्रथमं साहसं कुर्वन्नुत्तमो दण्डमर्हति।**
**न्याय्यं किमिति सम्पृच्छेत् तवैवेयमसत् कृतिः ? ॥ ७४ ॥**

**अन्वयः**—उत्तमः कुर्वन् प्रथमं साहसं दण्डम् अर्हति, किं न्याय्यं तव एव इयम् असत् कृतिः? इति सम्पृच्छेत् ॥ ७४ ॥

**व्याख्या**—उत्तमः = श्रेष्ठः पुरुषः, कुर्वन् = दोषं निष्पादयन्, प्रथमम् = आदौ, साहसम् = धाष्टर्यम्, दण्डम् = दमनम्, अर्हति = योग्योऽस्ति, किञ्च, एतत्कार्यम्, किमिति प्रश्ने, न्याय्यम् = न्याय्यता, तव = भवतः, एव, इयम् = एषा, असत्कृतिः = दुष्कृतिः, इति = एवम्, सम्पृच्छेत् = जिज्ञासां कुर्यात् ॥ ७४ ॥

**हिन्दी**—यदि कोई भला आदमी पहली बार छोटा-मोटा दुष्कर्म करने का दुस्साहस करे तो—'क्या तुम्हारा यह काम न्यायसंगत है? क्या तुमने ही ऐसा अपराध किया है?' इस प्रकार प्रश्न उससे पूछकर छोड़ देना चाहिए ॥ ७४ ॥

**प्रथममिति।** उत्तमः उत्कृष्टो जनः कुर्वन् पापमिति शेषः, प्रथमं साहसं दण्डम् अर्हति, किञ्च एतत्कार्य्यं किं न्याय्यं न्यायादनपेतम्? तव एव इयम् असत्कृतिः अकार्य्यम् इति तं सम्पृच्छेत् ॥ ७४ ॥

**अपराधं यथोक्तं च द्विगुणं त्रिगुणं ततः।**
**मध्यमं साहसं कुर्वन्नुत्तमो दण्डमर्हति ॥ ७५ ॥**

**अन्वयः**—उत्तमः ततः अपराधं कुर्वन् मध्यमं साहसं दण्डं यथोक्तम् अपराधं द्विगुणं त्रिगुणं वा ॥ ७५ ॥

**व्याख्या**—उत्तमः = उत्कृष्टो जनः, ततः = पूर्वापेक्षयाऽधिकमपराधं, कुर्वन् = विदधन्, मध्यमम् = साधारणः, साहसम् = अर्थदण्डम्, यथोक्तम् = पूर्वोक्तमेतत्कार्यं न्याय्यम्? इत्यादि-प्रकारकं दण्डम्, तदधिकम्, द्विगुणम्, वा = अथवा, त्रिगुणं विधेयमिति ॥ ७५ ॥

**हिन्दी**—अच्छा आदमी यदि दूसरी बार फिर अपराध करे तो उसे पूर्वकथित साहस दण्ड का दूना अर्थदण्ड करे। यदि वह पुनः अपराध करे तो उसे तिगुना अर्थदण्ड दे ॥ ७५ ॥

**अपराधमिति।** उत्तमः जनः ततः तदपेक्षया पूर्वापेक्षयेत्यर्थः, अधिकं पापं कुर्वन् मध्यमं साहसं दण्डं, यथोक्तम् एतत् कार्य्यं किं न्याय्यमित्यादिकम् अपराधं द्विगुणं, त्रिगुणं वा पापानुसारेणेति भावः अर्हति ॥ ७५ ॥

**धिग्दण्डं प्रथमं चाद्यसाहसं तदनन्तरम्।**
**यथोक्तं तु तथा सम्यग् यथावृद्धि ह्यनन्तरम्॥ ७६॥**

**अन्वयः**—प्रथमं धिग्दण्डं, तदनन्तरम् आद्यसाहसं तथा यथावृद्धि तु यथोक्तं सम्यक् दण्डम्॥ ७६॥

**व्याख्या**—प्रथमम् = प्रारम्भिकस्वल्पापराधः, धिग्दण्डम् = भर्त्सनां कुर्यात्, तदनन्तरम् = तत्पश्चात् पुनः कृतापराधे, आद्यसाहसम् = प्रथमसाहसिकार्थदण्डं कुर्यात्, तथा = अनन्तरम्, यथावृद्धि = यया रीत्याऽपराधानामुत्कर्षो भवति तदनुरूपम्, यथोक्तम् = पूर्ववर्णितरीत्या, सम्यक् = सर्वथा, दण्डम् = दमनम्, कुर्यात्॥ ७६॥

**हिन्दी**—पहली बार छोटा-मोटा अपराध करने पर धिक्कारना चाहिए। उसके बाद फिर अपराध करने पर प्रथम अर्थदण्ड देना चाहिए। उसके बाद यदि उस व्यक्ति की आपराधिक प्रवृत्ति बढती जाय तो उसे यथोचित पूर्ण दण्ड देना चाहिए॥ ७६॥

**धिग्दण्डमिति**। प्रथमम् अल्पापराधे इति शेषः, धिक् त्वां निन्दामीति दण्डं तदनन्तरं द्वितीयापराधे इत्यर्थः, आद्यसाहसं प्रथमसाहसाख्यं दण्डं, तथा अनन्तरं यथावृद्धि अपराधानामिति शेषः, तदनुरूपं यथोक्तम् उक्तरूपं सम्यक् दण्डं कुर्य्यादिति क्रियापदमध्याहार्य्यम्॥ ७६॥

**उत्तमं साहसं कुर्वन्नुत्तमो दण्डमर्हति॥ ७७॥**

**अन्वयः**—उत्तमः कुर्वन् उत्तमं साहसं दण्डम् अर्हति॥ ७७॥

**व्याख्या**—उत्तमः = उत्कृष्टो जनः, अपराधं, कुर्वन् = निष्पादयन्, उत्तमम् = अधिकम्, साहसदण्डम् = अर्थदण्डम्, अर्हति = योग्यो भवति॥ ७७॥

**हिन्दी**—श्रेष्ठ जन जब गम्भीर अपराध करे तो उसे अच्छा अर्थदण्ड मिलना चाहिए॥ ७७॥

**उत्तममिति**। उत्तमः जनः कुर्वन् अधिकापराधमिति शेषः, उत्तमं साहसं दण्डम् अर्हति॥ ७७॥

**प्रथमं साहसं चादौ मध्यमं तदनन्तरम्।**
**यथोक्तं द्विगुणं पश्चादवरोधं ततःपरम्॥ ७८॥**

**अन्वयः**—आदौ प्रथमं साहसं तदनन्तरं मध्यमं पश्चात् यथोक्तं द्विगुणं ततःपरम् अवरोधम्॥ ७८॥

**व्याख्या**—आदौ = प्रारम्भिकापराधे, प्रथमम् = अग्रिमम्, साहसम् = अर्थदण्डम्, तदनन्तरम् = तत्पश्चात्, मध्यमम् = मध्यस्थितम्, साहसम् = अर्थदण्डम्, कुर्यादिति शेषः, पश्चात् = तदनन्तरम्, कृतेऽपराधे, यथोक्तम् = पूर्वोक्तरीत्या, द्विगुणं दण्डम्, ततःपरम् = इतोऽप्यधिकं, कृतमपराधम्, अवरोधम् = कारागृहे निक्षेपं कुर्यादिति॥ ७८॥

**हिन्दी**—प्रारम्भिक अपराध में प्राथमिक अर्थदण्ड देना चाहिए। पुनः अपराध करने पर मुख्य दण्ड का विधान है। उसके बाद भी अपराध करने पर पूर्वकथित दण्ड का दूना दण्ड देना चाहिए। इसके बाद भी अपराध करने पर जेल में डाल देना चाहिए॥ ७८॥

**प्रथममिति**। आदौ प्रथमापराधे प्रथमं साहसं, तदनन्तरं मध्यमं साहसं पश्चात् तदनन्तरमपि

अपराधे इत्यर्थः, यथोक्तम् उक्तरूपं द्विगुणं दण्डं, ततः परम् अवरोधं कारानिरोधरूपं दण्डम् अर्हतीति शेषः ॥७८ ॥

**बुद्धिपूर्वनृघातेन विनैतद् दण्डकल्पनम् ॥७९ ॥**

**अन्वयः**—बुद्धिपूर्वनृघातेन विना एतत् दण्डकल्पनम् ॥७९ ॥

**व्याख्या**—बुद्धिपूर्वनृघातेन = विचारपूर्वकनरहत्यया, विना = विहाय, एतत् = एतेषां पूर्वोक्तानाम्, दण्डानाम् = दमनानाम्, कल्पनम् = विधानमिति शेषः ॥७९ ॥

**हिन्दी**—विचारपूर्वक नरहत्या को छोड़कर अन्य अपराधों के लिए एक ही पूर्वोक्त दण्ड देना विधान है ॥७९ ॥

**बुद्धीति**। बुद्धिपूर्वनृघातेन ज्ञानपूर्वकनरहत्यया विना तादृशनरहत्याव्यतिरिक्तस्थाने इत्यर्थः, एतेषां पूर्वोक्तानां दण्डानां प्रथमसाहसादीनां प्रकल्पनं व्यवस्थापनं कार्य्यमिति शेषः ॥७९ ॥

**उत्तमत्वं मध्यमत्वं नीचत्वं चात्र कीर्त्त्यते।**
**गुणेनैव तु मुख्यं हि कुलेनापि धनेन च ॥८० ॥**

**अन्वयः**—अत्र उत्तमत्वं मध्यमत्वं नीचत्वं कीर्त्त्यते, तत् गुणेन कुलेन धनेन च मुख्यम् ॥८० ॥

**व्याख्या**—अत्र = अस्मिन् विषये, उत्तमत्वम् = उत्कृष्टता, मध्यमत्वम् = सामान्यत्वम्, नीचत्वम् = अधमत्वम्, यत्कीर्त्त्यते = कथ्यते, तत् सर्वम्, अपराधिनः, गुणेन = धर्मेण, कुलेन = वंशेन, च = पुनः, धनेन = वित्तेन, मुख्यम् = प्रधानम्, बोध्यमिति ॥८० ॥

**हिन्दी**—इस विषय में उत्तम, मध्यम और अधम की व्याख्या मुख्य रूप से अपराधी के गुण, कुल और धन के अनुसार ही जानना चाहिए ॥८० ॥

**उत्तमत्वमिति**। अत्र प्रकरणे यत् उत्तमत्वं मध्यमत्वं नीचत्वम् अधमत्वञ्च कीर्त्त्यते, तत् गुणेन कुलेन धनेन च मुख्यं प्रधानं सम्यक् इत्यर्थः, यथा तथा ज्ञेयमिति शेषः ॥८० ॥

**प्रथमं साहसं कुर्वन् मध्यमो दण्डमर्हति।**
**धिग्दण्डमर्द्धदण्डं च पूर्णदण्डमनुक्रमात् ॥८१ ॥**

**अन्वयः**—मध्यमः कुर्वन् प्रथमं साहसं धिग्दण्डम्, अर्द्धदण्डं पूर्णदण्डं वा अनुक्रमात् दण्डमर्हति ॥८१ ॥

**व्याख्या**—मध्यमः = मध्यमकोटिपुरुषः, कुर्वन् = अपराधं निष्पादयन्, प्रथमम् = प्रारम्भिकम्, साहसम् = अपराधम्, करोति, तर्हि तमपराधिनम्, धिग्दण्डम् = भर्त्सनरूपम्, अर्द्धदण्डम् = आंशिकदमनम्, वा = अथवा, पूर्णदण्डम् = पूर्णरूपेण दमनम्, अनुक्रमात् = अपराधस्यानुपूर्व्येण, गुरुतां लघुताञ्च विचार्य, दण्डम् = दमनं कर्त्तुम्, अर्हति = योग्यो भवति ॥८१ ॥

**हिन्दी**—साधारण व्यक्ति यदि पहली बार अपराध करे तो उसे धिक्कार देकर छोड़ देना चाहिए। किन्तु इसके बाद यदि वह बार-बार अपराध करे तो उसके अपराध की बड़ाई-छोटाई पर विचार कर उसे आधे या पूरे दण्ड का हकदार समझना चाहिए ॥८१ ॥

**प्रथममिति**। मध्यमः कुर्वन् पापमिति शेषः, प्रथमं साहसं धिग्दण्डं त्वां धिगिति निभर्त्सनरूपम्

अर्द्धदण्डं वा पूर्णदण्डम् अनुक्रमात् अपराधस्य पौनःपुन्येन गौरवलाघवाभ्यां वा दण्डम् अर्हति ॥८१ ॥

**द्विगुणं त्रिगुणं पश्चात् संरोधं नीचकर्म च।**
**मध्यमं साहसं कुर्वन् मध्यमो दण्डमर्हति ॥ ८२ ॥**

**अन्वयः**—मध्यमः कुर्वन् मध्यमं साहसं द्विगुणं त्रिगुणं वा संरोधं नीचकर्म दण्डमर्हति ॥८२ ॥

**व्याख्या**—मध्यमः = साधारणो जनः, अपराधं कुर्वन् = निष्पादयन्, मध्यमम् = सामान्यम्, साहसम् = अर्थदण्डम्, विधेयः, वा तस्य द्विगुणं, त्रिगुणं दण्डं कुर्यात्, तत्पश्चात् संरोधम् = कारागृहेऽवरोधम्, तत्र नीचकर्म = अधमकृत्यम्, दण्डम् = दमनं प्राप्तुम्, अर्हति = योग्यो भवति ॥८२ ॥

**हिन्दी**—सामान्य व्यक्ति यदि साधारण अपराध करे तो उसे प्राथमिक अर्थदण्ड या उसका दूना, तिगुना अर्थदण्ड करना चाहिए। इसके बाद भी यदि वह अपराध करे तो उसे जेल में बन्द कर देना चाहिए तथा नीचकर्म करने पर वह व्यक्ति अपराध की लघुता या गुरुता के अनुसार दण्ड पाने योग्य होता है ॥८२ ॥

**द्विगुणमिति**। मध्यमः पापं कुर्वन् मध्यमं साहसं द्विगुणं त्रिगुणं वा पश्चात् संरोधं कारावरोधं तत्र नीचकर्म निकृष्टकार्य्यकरणरूपञ्च दण्डम् अर्हति अपराधतारतम्येनेदमिति ज्ञेयम् ॥८२ ॥

**पूर्वसाहसमादौ तु यथोक्तं द्विगुणं ततः।**
**ताडनं बन्धनं पश्चात् पुरान्निर्वासनाङ्कने।**
**उत्तमं साहसं कुर्वन् मध्यमो दण्डमर्हति ॥ ८३ ॥**

**अन्वयः**—मध्यमः पापं कुर्वन् आदौ पूर्वसाहसम्, ततः यथोक्तं द्विगुणं, पश्चात् ताडनं, ततः बन्धनं पुरात् निर्वासनम् अङ्कनम् उत्तमं साहसदण्डम् अर्हति ॥८३ ॥

**व्याख्या**—मध्यमः = सामान्यापराधः, कुर्वन् = निष्पादयन्, आदौ = प्रारम्भे, पूर्वसाहसम् = प्राथमिक-अर्थदण्डम्, ततः = तत्पश्चात् पुनः कृतेऽपराधे, यथोक्तम् = पूर्ववर्णितमर्थदण्डस्य द्विगुणं दण्डं विधेयम्, ततोऽपि कृतापराधे, ताडनम् = प्रहरणम्, ततः = तदनन्तरम्, बन्धनम् = कारागारे निक्षेपणम्, पुरात् = नगरात्, निर्वासनम् = निष्कासनम्, अङ्कनम् = तप्तलौहमुद्रणम्, उत्तमम् = उत्कृष्टम्, साहसदण्डम् = अर्थदण्डम्, अर्हति = योग्यो भवति ॥८३ ॥

**हिन्दी**—साधारण व्यक्ति यदि सामान्य अपराध करे तो उसे पहली बार अपराध के लिए प्राथमिक अर्थदण्ड का विधान है। पुनः अपराध करने पर दुगुना अर्थदण्ड देना चाहिए। इसके बाद अपराध करने पर पिटाई करनी चाहिए। फिर अपराध करे तो जेल में बंद कर देना चाहिए। पुनः देश से निष्कासन तथा दाग कर अपराध के अनुसार दण्ड का विधान करना चाहिए ॥८२ ॥

**पूर्वेति**। मध्यमः पापं कुर्वन् आदौ पूर्वसाहसं प्रथमं साहसं ततः तदनन्तरं यथोक्तं द्विगुणं पश्चात् ताडनं प्रहारं ततः बन्धनं पुरात् नगरात् निर्वासनं बहिष्करणम् अङ्कनं गात्रे चिरचिह्नकरणम् उत्तमं साहसञ्च दण्डम् अर्हति ॥८३ ॥

**मध्यमं साहसं चादौ यथोक्तं तदनन्तरम्।**
**द्विगुणं त्रिगुणं पश्चाद् यावज्जीवं तु बन्धनम्।**
**प्रथमं साहसं कुर्वन्नधमो दण्डमर्हति॥ ८४॥**

**अन्वयः**—अधमः पापं कुर्वन् आदौ प्रथमं साहसं, तदनन्तरं मध्यमं साहसं, ततः यथोक्तं द्विगुणं त्रिगुणं पश्चात् यावज्जीवं बन्धनम् अर्हति॥ ८४॥

**व्याख्या**—अधमः=नीचः, पापं कुर्वन्=निष्पादयन्, आदौ=प्रारम्भिकापराधे, प्रथमं साहसम्=प्राथमिक-अर्थदण्डम्, तदनन्तरम्=तत्पश्चात्, मध्यमं साहसम्=मध्यस्तरीयार्थ-दण्डम्, ततः=तत्पश्चात्, द्विगुणं त्रिगुणम् अर्थदण्डं कुर्यात्, ततोऽपि कृतापराधे, यावज्जीवम्=जीवनपर्यन्तम्, बन्धनम्=कारागारे निक्षेपणम्, अर्हति=योग्यो भवति॥ ८६॥

**हिन्दी**—नीच व्यक्ति यदि प्रथम अपराध करे तो उसे प्राथमिक अर्थदण्ड, दुबारा अपराध के लिए मध्यमस्तरीय अर्थदण्ड, पुनः अपराध करने पर पूर्वोक्त रीति से दूना, तिगुना, फिर सारी जिन्दगी कैदखाने में डाल देना चाहिए॥ ८४॥

**मध्यममिति**। अधमः पापं कुर्वन् आदौ प्रथमं साहसं ततः मध्यमं साहसं तदनन्तरं यथोक्तम् उक्तरूपं द्विगुणं त्रिगुणं पश्चात् यावज्जीवं बन्धनं कारावासरूपं दण्डम् अर्हति॥ ८४॥

**अर्द्धं यथोक्तं द्विगुणं त्रिगुणं बन्धनं ततः।**
**मध्यमं साहसं कुर्वन्नधमो दण्डमर्हति॥ ८५॥**

**अन्वयः**—अधमः पापं कुर्वन् यथोक्तम् अर्द्धं द्विगुणं त्रिगुणं ततः बन्धनं मध्यमं साहसदण्डं अर्हति॥ ८५॥

**व्याख्या**—अधमः=नीचः, पापम्, कुर्वन्=निष्पादयन्, यथोक्तम्=पूर्वोक्तरूपम्, अर्द्धम्=अर्द्धार्थदण्डम्, द्विगुणम्, त्रिगुणम्, ततः=तत्पश्चात्, बन्धनम्=कारागृहे निक्षेपणम्, मध्यमम्=मध्यस्तरीयम्, साहसम्=अर्थदण्डम्, अर्हति=योग्यो भवति॥ ८५॥

**हिन्दी**—नीच व्यक्ति पाप करते हुए पहले प्राथमिक अर्थदण्ड, तत्पश्चात् पूर्ववर्णित अर्थदण्ड का आधा, दुगुना, तिगुना; पुनः आजीवन कारावास अपराध के अनुसार दण्ड देना चाहिए॥ ८५॥

**अर्द्धमिति**। अधमः पापं कुर्वन् यथोक्तम् अर्द्धद्विगुणं त्रिगुणं ततः बन्धनं मध्यमं साहसं दण्डम् अर्हति। एतच्च पापविशेषेणेति ज्ञेयम्॥ ८५॥

**पूर्वसाहसमादौ तु यथोक्तं द्विगुणं ततः।**
**ततः संरोधनं नित्यं मार्गसंस्करणार्थकम्।**
**उत्तमं साहसं कुर्वन् अधमो दण्डमर्हति॥ ८६॥**
**मध्यमं साहसं चादौ यथोक्तं द्विगुणं ततः।**
**यावज्जीवं बन्धनं च नीचकर्मैव केवलम्॥ ८७॥**

**अन्वयः**—अधमः पापं कुर्वन् आदौ पूर्वसाहसं, ततः यथोक्तं द्विगुणं, ततः नित्यं मार्गसंस्करणार्थकं संरोधनम् उत्तमसाहसञ्च अथवा आदौ मध्यमं साहसं, ततः द्विगुणं यावज्जीवं बन्धनं केवलं नीचकर्म च दण्डम् अर्हति॥ ८६-८७॥

**व्याख्या**—अधमः = नीचः, पापं कुर्वन् = विदधन्, आदौ = प्राथमिकापराधे, पूर्वसाहसम् = प्रथमार्थिदण्डम्, कुर्यात्, ततः = तत्पश्चात्, यथोक्तम् = येन प्रकारेण पूर्वनिगदितं तथैव, द्विगुणम् = द्विगुणितम्, ततः = तत्पश्चाद्विहितापराधे, नित्यम् = अनवरतम्, मार्गसंस्करणार्थकम्—मार्गस्य = पथः, संस्करणार्थकम् = संशोधनार्थकम्, संरोधनम् = सम्यगवरोधम्, च = पुनः, उत्तमसाहसम् = सर्वाधिकदण्डम्, अथवा आदौ = प्रारम्भे, मध्यमम् = मध्यमस्तरीयम्, साहसम् = अर्थदण्डम् ततः = ततोऽपि, द्विगुणम् = द्विगुणितम्, यावज्जीवम् = आजीवनम्, बन्धनम् = अवरोधनम्, केवलम् = सामस्त्येन, नीचकर्म च = अधमकृत्यरूपञ्च, दण्डम् = दमनम्, अर्हति = योग्यो भवति ॥ ८६-८७ ॥

**हिन्दी**—नीच व्यक्ति यदि सामान्य अपराध करे तो उसे प्राथमिक अर्थदण्ड देना चाहिए, इसके बाद दूना अर्थदण्ड देना चाहिए; इसके बाद कैदखाने तथा फिर अपराध करने पर नित्य सड़क पर झाड़ू लगवाना चाहिए। अथवा—अधम पुरुष यदि लगातार अपराध करे तो उसे कठोर दण्ड दे। इससे भी अगर न माने तो दूना अर्थदण्ड। उसके बाद आजीवन कारावास तथा मल-मूत्रादि की सफाई का काम सौंपना चाहिए ॥ ८६-८७ ॥

**पूर्वसाहसमिति। मध्यममिति।** अधमः पापं कुर्वन् आदौ पूर्वसाहसं प्रथमसाहसं ततः यथोक्तं द्विगुणं ततः नित्यं मार्गस्य पथः संस्करणार्थकम परिष्कारकरणार्थमित्यर्थः, संरोधनम् अवरोधम् उत्तमसाहसञ्च अथवा आदौ मध्यमं साहसं ततः तथोक्तं द्विगुणं यावज्जीवं बन्धनं केवलं नीचकर्म च निकृष्टकार्य्यकरणरूपञ्च दण्डम् अर्हति ॥ ८६-८७ ॥

**हरेत् पादं धनात् तस्य यः कुर्य्याद्धनगर्वतः।**
**पूर्वं ततोऽर्द्धमखिलं यावज्जीवं तु बन्धनम् ॥ ८८ ॥**

**अन्वयः**—यः धनगर्वात् पापं कुर्यात् पूर्वं तस्य धनात् पादं, ततः अर्द्धं, ततः अखिलं धनं हरेत्। ततः यावज्जीवं बन्धनम् ॥ ८८ ॥

**व्याख्या**—यः = पुरुषः, धनगर्वतः—धनस्य = वित्तस्य, गर्वतः = दर्पात्, पापम्, कुर्यात् = विधेयात्, पूर्वम् = प्रथमापराधे, तस्य = जनस्य, धनात् = अर्जितसम्पदः, पादम् = चतुर्थांशः, ततः = ततोऽपि द्वितीयापराधे, अर्द्धम् = धनस्यार्द्धभागम्, ततः = तदनन्तरं, तृतीयापराधे कृते सति, अखिलम् = सकलं धनम्, हरेत्। ततोऽपि कृतापराधे, यावज्जीवम् = आजीवनम्, बन्धनम् = कारागृहे वासरूपं दण्डं कुर्यात् ॥ ८८ ॥

**हिन्दी**—अपने धन के गर्व से जो अपराध करे, पहली बार उसके धन का चौथा हिस्सा दण्ड के रूप में ले ले, दूसरी बार अपराध करने पर आधा तथा तीसरे अपराध में सम्पूर्ण धन छीन ले। इसके बाद भी यदि वह अपराध करे तो उसे आजीवन कारावास की सजा देनी चाहिए ॥ ८८ ॥

**हरेदिति।** यः धनगर्वतः पापं कुर्य्यात् पूर्वं प्रथमापराधे इत्यर्थः, तस्य धनात् पादं, ततः द्वितीयापराधे इत्यर्थः, अर्द्धं ततः तृतीयापराधे अखिलं समस्तं धनमित्यर्थः, हरेत्। तदनन्तरापराधे यावज्जीवं बन्धनं कारावरोधरूपं दण्डनं कर्त्तव्यमिति शेषः ॥ ८८ ॥

**सहायगौरवाद् विद्यामदाच्च बलदर्पतः।**
**पापं करोति यस्तं तु बन्धयेत् ताडयेत् सदा ॥ ८९ ॥**

**अन्वयः**—यः सहायगौरवात् विद्यामदात् च बलदर्पतः पापं करोति, तं तु सदा बन्धयेत् च ताडयेत् ॥ ८९ ॥

**व्याख्या**—यः = जनः, सहायस्य = सहायकस्य, गौरवात् = अहङ्कारात्, विद्यामदात्—विद्यायाः = ज्ञानस्य, मदात् = दर्पात्, च = पुनः, बलदर्पतः—बलस्य = पराक्रमस्य, दर्पतः = अभिमानात्, पापम् = अपराधम्, करोति = निष्पादयति, तम् = जनम्, तु, सदा = सर्वदा, बन्धयेत् = कारागारेऽवरुन्ध्यात्, च = पुनः, ताडयेत् = प्रहरणं कुर्यादिति ॥ ८९ ॥

**हिन्दी**—जो व्यक्ति अपने सहायक, अपनी विद्या या अपने बल के दर्प से पाप या अपराध करता है, उसे सदा के लिए जेल में डाल देना चाहिए या मार-पीटकर ठीक करना चाहिए ॥ ८९ ॥

**सहायेति**। यः सहायस्य गौरवात् विद्यामदात् विद्याजनिताहङ्कारात् तथा बलदर्पतः सामर्थ्याहङ्कारात् पापं करोति तं तु सदा बन्धयेत् कारायाम् अवरुन्ध्यात् ताडयेच्च ॥ ८९ ॥

**भार्य्या पुत्रश्च भगिनी शिष्यो दासः स्नुषानुजः।**
**कृतापराधास्ताड्यास्ते तनुरज्जुसुवेणुभिः ॥ ९० ॥**
**पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथञ्चन।**
**अतोऽन्यथा तु प्रहरंश्चोरवद्दण्डमर्हति ॥ ९१ ॥**

**अन्वयः**—भार्य्या पुत्रः भगिनी शिष्यः दासः स्नुषा अनुजः ते कृतापराधाः तनुभिः रज्जुभिः सुवेणुभिः शरीरस्य पृष्ठतस्तु ताड्याः। कदाचन उत्तमाङ्गे न, अन्यथा तु प्रहरन् चोरवत् दण्डम् अर्हति ॥ ९०-९१ ॥

**व्याख्या**—भार्य्या = पत्नी, पुत्रः = सुतः, भगिनी = सोदरा, शिष्यः = छात्रः, दासः = सेवकः, स्नुषा = पुत्रवधूः, अनुजः = कनिष्ठभ्राता, ते = सर्वे, कृतापराधाः = अपराधिनः, तनुभिः = प्रतनुभिः, रज्जुभिः = दामभिः, सुवेणुभिः = कोमलवंशखण्डैः, शरीरस्य = देहस्य, पृष्ठतः = पृष्ठभागे, ताड्याः = प्रहरणीयाः। कदाचन = कथमपि, उत्तमाङ्गे = शिरसि, न = नहि, ताड्याः, अन्यथा तु इत्यव्यये, प्रहरन् = प्रहारं कुर्वन्, चोरवत् = तस्कर इव, दण्डम् = दमनम्, अर्हति = योग्यो भवति ॥ ९०-९१ ॥

**हिन्दी**—अपनी पत्नी, पुत्र, छोटी बहन, छात्र, नौकर, पतोहू और छोटा भाई यदि अपराध करे तो चाबुक या पतली छड़ी से पीटना चाहिए। पिटाई पीठ की हो, शिर की नहीं। जो व्यक्ति इनकी पीठ छोड़कर शरीर के अन्य अङ्ग पर प्रहार करता है, उसे चोर की तरह दण्ड देना चाहिए ॥ ९०-९१ ॥

**भार्य्येति। पृष्ठत इति**। भार्य्या पुत्रः भगिनी शिष्यः दासः, स्नुषा पुत्रवधूः अनुजः कनिष्ठभ्राता, ते कृतापराधाः तनुभिः रज्जुभिः सुवेणुभिः शरीरस्य पृष्ठतस्तु पृष्ठभागे एव ताड्याः प्रहार्य्याः कदाचन उत्तमाङ्गे शिरसि न ताड्या इत्यर्थः, अतः अस्मात् उक्तात् अन्यथा अन्यप्रकारेण तु प्रहरन् चोरवत् तस्कर इव दण्डम् अर्हति ॥ ९०-९१ ॥

**नीचकर्मकरं कुर्य्याद् बन्धयित्वा तु पापिनम्।**
**मासमात्रं त्रिमासं वा षण्मासं वापि वत्सरम्।**
**यावज्जीवं तु वा कश्चित् न कश्चिद् वधमर्हति ॥ ९२ ॥**

**अन्वयः**—कश्चित् पापिनं मासमात्रं त्रिमासं वा षण्मासं वापि वत्सरं वा यावज्जीवं बन्धयित्वा नीचकर्मकरं कुर्यात्, किन्तु कश्चित् वधं न अर्हति ॥ ९२ ॥

**व्याख्या**—कश्चित् = कोऽपि, पापिनम् = अपराधिनम्, मासमात्रम् = मासमेकावधिम्, त्रिमासम् = मासत्रयावधिम्, वा = अथवा, षण्मासम् = षण्मासावधिम्, वा, वत्सरम् = वर्षमेकम्, वा = अथवा, अपराधानुसारम्, यावज्जीवनम् = आजीवनम्, बन्धयित्वा = कारागारे निक्षिप्य, नीचकर्मकरम् = मलवाहादिनीचकर्मकारिणम्, कुर्यात् = विदध्यात्, किन्तु कश्चित् = कोऽपि, वधम् = मृत्युदण्डम्, न = नहि, अर्हति = योग्यो भवति ॥ ९२ ॥

**हिन्दी**—किसी भी अपराधी को एक महीना, तीन महीना, छः महीना, पूरा साल अथवा जीवनभर कैद की सजा देकर मल-मूत्रादि फेंकवाने जैसे नीच कर्म कराये; किन्तु किसी को भी मृत्युदण्ड नहीं देना चाहिए ॥ ९२ ॥

**नीचकर्मेति**। कञ्चित् पापिनं मासमात्रं त्रिमासं वा षण्मासं वा वत्सरं वा यावज्जीवं व्याप्य बन्धयित्वा कारायां निरुध्य नीचकर्मकरं निकृष्टकर्मकारिणं कुर्यात्, किन्तु कश्चित् कोऽपि वधं वधदण्डं न अर्हति ॥ ९२ ॥

**न निहन्याच्च भूतानि त्विति जागर्त्ति वै श्रुतिः ।**
**तस्मात् सर्वप्रयत्नेन वधदण्डं त्यजेत् नृपः ॥ ९३ ॥**

**अन्वयः**—भूतानि न निहन्यात्, इति श्रुतिः जागर्त्ति वै । तस्मात् नृपः सर्वप्रयत्नेन वधदण्डं त्यजेत् ॥ ९३ ॥

**व्याख्या**—भूतानि = प्राणिनः, न = नहि, निहन्यात् = हननं कुर्यात्, इति = इत्थम्, श्रुतिः = वेदवचनम्, जागर्त्ति = बोधयति, वै = इति निश्चयेन । तस्मात् = तेन हेतुना, नृपः = राजा, सर्वप्रयत्नेन = सर्वतोभावेन, वधदण्डम् = मृत्युदण्डम्, त्यजेत् = परिहरेत् ॥ ९३ ॥

**हिन्दी**—वेद का वचन है–किसी की हत्या नहीं करनी चाहिए। अतः राजा को प्रयास-पूर्वक किसी को मृत्युदण्ड नहीं देना चाहिए ॥ ९३ ॥

**नेति**। भूतानि प्राणिनः न निहन्यात् इति श्रुतिः जागर्त्ति, वैशब्दोऽवधारणार्थः। तस्मात् नृपः सर्वप्रयत्नेन वधदण्डं त्यजेत् ॥ ९३ ॥

**अवरोधाद् बन्धनेन ताडनेन च कर्षयेत् ।**
**लोभान्न कर्षयेद्राजा धनदण्डेन वै प्रजाम् ॥ ९४ ॥**

**अन्वयः**—राजा अवरोधात् बन्धनेन ताडनेन च प्रजां कर्षयेत्, लोभात् धनदण्डेन वै न कर्षयेत् ॥ ९४ ॥

**व्याख्या**—राजा = नृपतिः, अवरोधात् = निरोधात्, बन्धनेन = कारायां स्थापनेन, ताडनेन = प्रहरणेन, च, प्रजाम् = जनान्, कर्षयेत् = पीडयेत्, लोभात् = परद्रव्याभिलाषात्, धनदण्डेन = अर्थदण्डेन, प्रजाम्, न = नहि, कर्षयेत् = पीडयेत् ॥ ९४ ॥

**हिन्दी**—हाथो में कड़ी, पैरों में बेड़ी देकर जेल में डाल देना, मारना-पीटना, पीड़ा पहुँचाना उचित है; किन्तु लोभवश प्रजा को अर्थदण्ड से पीड़ित करना उचित नहीं है ॥ ९४ ॥

**अवरोधादिति**। राजा अवरोधात् बन्धनेन ताडनेन प्रहारेण च प्रजां कर्षयेत् पीडयेत्, लोभात् धनदण्डेन न कर्षयेत् ॥ ९४ ॥

**नासहायास्तु पित्राद्या दण्ड्याः स्युरपराधिनः।**
**क्षमाशीलस्य वै राज्ञो दण्डग्रहणमीदृशम्॥९५॥**

**अन्वयः**—अपराधिनः असहायाः पित्राद्याः न दण्ड्याः स्युः वै। क्षमाशीलस्य राज्ञः ईदृशं दण्डग्रहणम्॥९५॥

**व्याख्या**—अपराधिनः= पापिनो जनस्य, असहायाः= निराश्रयाः, पित्राद्याः= परिजनाः, न= नहि, दण्ड्याः= दमनीयाः, स्युः= भवेयुः। वै= इति निश्चयेन। क्षमाशीलस्य= गुणिनः, राज्ञः= नृपस्य, ईदृशम्= पूर्वोक्तरूपम्, दण्डग्रहणम्= दमनम् इति॥९५॥

**हिन्दी**—अपराधी के असहाय माता-पिता या आश्रितजनों को दण्ड नहीं देना चाहिए। क्षमावान् राजा को इस प्रकार ही अपराधी को दण्डित करना चाहिए॥९५॥

**नेति।** अपराधिनः जनस्य असहायाः पित्राद्याः परिजनाः न दण्ड्याः दण्डनीयाः स्युः। क्षमाशीलस्य राज्ञः ईदृशम् उक्तरूपं दण्डग्रहणं शासनमित्यर्थः॥९५॥

**नापराधं तु क्षमते प्रदण्डो धनहारकः।**
**नृपो यदा तदा लोकः क्षुभ्यते भिद्यते परैः॥९६॥**

**अन्वयः**—यदा नृपः प्रदण्डः तु धनहारकः सन् अपराधं न क्षमते तदा लोकः क्षुभ्यते, परैः भिद्यते॥९६॥

**व्याख्या**—यदा= यस्मिन् काले, नृपः= राजा, प्रदण्डः= प्रचण्डदण्डः, तु= तथा, धनहारकः= धनापहर्त्ता, सन्, अपराधम्= दोषः, न= नहि, क्षमते= मर्षते, तदा= तस्मिन् काले, लोकः= जनः, क्षुभ्यते= क्रुद्ध्यते, वा, अशान्तो भवति, परैः= शत्रुभिः, भिद्यते= संसृज्यते॥९६॥

**हिन्दी**—राजा जब अपराधी को तीक्ष्ण दण्ड देता है या अपराध क्षमा न कर उसका धन हरण करता है, तब उसकी प्रजा क्रुद्ध हो उठती है तथा दुश्मन उसे फोड़कर अपने पक्ष में मिला लेते हैं॥९६॥

**नापराधमिति।** यदा नृपः प्रदण्डः तीक्ष्णदण्डः तथा धनहारकः सन् न क्षमते, तदा लोकः क्षुभ्यते विरज्यते परैः राजशत्रुभिः भिद्यते संसृज्यते इति यावत्॥९६॥

**अतः सुभागदण्डी स्यात् क्षमावान् रञ्जको नृपः॥९७॥**

**अन्वयः**—अतः नृपः सुभागदण्डी क्षमावान् तथा रञ्जकः स्यात्॥९७॥

**व्याख्या**—अतः= अस्माद्धेतोः, नृपः= राजा, सुभागदण्डी= अपराधं सम्यग् विभज्य दण्डकर्त्ता, क्षमावान्= सहिष्णुः, तथा, रञ्जकः= प्रजानामानन्ददायकः, स्यात्= भवेत्॥९७॥

**हिन्दी**—अतः राजा को अपराध के अनुसार अपराधी को दण्ड देना चाहिए तथा क्षमाशील एवं प्रजारंजक होना चाहिए॥९७॥

**अत इति।** अतः अस्मात् करणात् नृपः सुभागदण्डी सुष्ठु विभज्य दण्डयतीति तथोक्तः, क्षमावान् तथा रञ्जकः प्रजानामिति शेषः, स्यात् भवेत्॥९७॥

**मद्यपः कितवः स्तेनो जारश्चण्डश्च हिंसकः।**
**त्यक्तवर्णाश्रमाचारो नास्तिकः शठ एव हि॥९८॥**

मिथ्याभिशापकः कर्णेजपार्य्यदेवदूषकौ ।
असत्यवाङ्न्यासहारी तथा वृत्तिविघातकः ॥ ९९ ॥
अन्योदयासहिष्णुश्च ह्युत्कोचग्रहणे रतः ।
अकार्य्यकर्त्ता मन्त्राणां कार्य्याणां भेदकस्तथा ।
अनिष्टवाक् परुषवाग्जलारामप्रबाधकः ।
नक्षत्रसूची राजद्विट् कुमन्त्री कूटकार्य्यवित् ॥ १०० ॥
कुवैद्यामङ्गलाशौचशीलो मार्गनिरोधकः ।
कुसाक्ष्युद्धतवेशश्च स्वामिद्रोही व्ययाधिकः ॥ १०१ ॥
अग्निदो गरदो वेश्यासक्तः प्रबलदण्डकृत् ।
तथा पाक्षिकसभ्यश्च बलाल्लिखितग्राहकः ॥ १०२ ॥
अन्यायकारी कलहशीलो युद्धे पराङ्मुखः ।
साक्ष्यलोपी पितृमातृसतीस्त्रीमित्रद्रोहकः ॥ १०३ ॥
असूयकः शत्रुसेवी मर्मभेदी च वञ्चकः ।
स्वकीयद्विड्गुप्तवृत्तिर्वृषलो ग्रामकण्टकः ॥ १०४ ॥
विना कुटुम्बभरणात् तपोविद्यार्थिनः सदा ।
तृणकाष्ठादिहरणे शक्तः सन् भैक्ष्यभोजकः ॥ १०५ ॥
कन्याया अपि विक्रेता कुटुम्बवृत्तिह्रासकः ।
अधर्मासूचकश्चापि राजानिष्टमुपेक्षकः ॥ १०६ ॥
कुलटा पतिपुत्रघ्नी स्वतन्त्रा वृद्धनिन्दिता ।
गृहकृत्योज्झिता नित्यं दुष्टाचाराप्रियस्नुषा ।
स्वभावदुष्टानेतान् हि ज्ञात्वा राष्ट्राद् विवासयेत् ॥ १०७ ॥

**अन्वयः**—मद्यपः कितवः स्तेनः जारः चण्डः हिंसकः त्यक्तवर्णाश्रमाचारः नास्तिकः शठः मिथ्याभिशापकः कर्णेजपार्यदेवदूषकौ असत्यवाक् न्यासहारी तथा वृत्तिविघातकः च अन्योदयासहिष्णुः उत्कोचग्रहणे रतः अकार्यकर्त्ता तथा मन्त्राणां कार्याणां भेदकः अनिष्टवाक् परुषवाक् जलारामप्रबाधकः नक्षत्रसूची राजद्विट् कुमन्त्री कूटकार्यवित् कुवैद्यामङ्गलाशौचशीलः मार्गनिरोधकः कुसाक्षी उद्धतवेशः स्वामिद्रोही व्ययाधिकः अग्निदः गरदः वेश्यासक्तः प्रबलदण्डकृत् पाक्षिकसभ्यः बलाल्लिखितग्राहकः अन्यायकारी कलहशीलः युद्धे पराङ्मुखः साक्ष्यलोपी पितृमातृसतीस्त्रीमित्रद्रोहकः असूयकः शत्रुसेवी मर्मभेदी वञ्चकः स्वकीयद्विड्गुप्तवृत्तिः वृषलः ग्रामकण्टकः कुटुम्बभरणात् विना सदा तपोविद्यार्थिनः तृणकाष्ठादिहरणे शक्तः सन् भैक्ष्यभोजकः कन्यायाः अपि विक्रेता कुटुम्बानां वृत्तिह्रासकः अधर्मासूचकः अपि राजानिष्टम् उपेक्षकः कुलटा पतिपुत्रघ्नी स्वतन्त्रा वृद्धनिन्दिता गृहकृत्योज्झिता नित्यं दुष्टाचारा अप्रियस्नुषा—एतान् स्वभावदुष्टान् ज्ञात्वा राष्ट्रात् विवासयेत् ॥ ९८-१०७ ॥

**व्याख्या**—मद्यपः = सुरासुः, कितवः = वञ्चकः, स्तेनः = चौरः, जारः = परदारलम्पटः, चण्डः = प्रचण्डक्रोधी, हिंसकः = घातकः, त्यक्तवर्णाश्रमाचारः—वर्णानाम् = विप्रादीनाम्, आश्रमाणाम् = ब्रह्मचर्यादीनाम्, त्यक्ताचारः = आचारत्यागी, नास्तिकः = अनीश्वरवादी, शठः = मायावी, मिथ्याभिशापकः = असत्यदोषारोपकः, कर्णेजपः = पिशुनः, आर्यान् = भद्रपुरुषान्, देवान् = सुरान्, दूषयति = कलङ्कयतीति तौ, असत्यवाक् = अनृतभाषी, न्यासहारी = स्थाप्यापहारी, वा निक्षेपितधनापहर्त्ता, तथा = तेनैव रूपेण, वृत्तिविघातकः = जीविकापहर्त्ता, अन्योदयाऽसहिष्णुः—अन्येषाम् = अपराणाम्, उदयानाम् = उत्थानानाम्, असहिष्णुः = असहनशीलः, च = पुनः, उत्कोचग्रहणे = उपायनस्वीकरणे, रतः = तत्परः, अकार्यकर्त्ता = कुत्सितकर्मी, मन्त्राणाम् = रहस्यानाम्, तथा कार्याणाम् = कृत्यानाम्, भेदकः = भेत्ता, अनिष्टवाक् = अनभिलषितवादी, परुषवाक् = कटुभाषी, जलारामप्रबाधकः—जलस्य = सलिलस्य, आरामस्य = गृहोद्यानस्य च, प्रबाधकः = विघातकः, नक्षत्रसूची = वृथादैवज्ञः, राजद्विट् = राजद्रोही, कुमन्त्री = कुत्सितसचिवः, कूटकार्यवित्—कूटानाम् = छलानाम्, कार्याणां वेत्ता, कुवैद्यः = कुत्सितचिकित्सकः, अमङ्गलाशौच-शीलः—अमङ्गलशीलः = अकल्याणकरी, अशुचिः = अपवित्रः, मार्गनिरोधकः = पथप्रविबाधकः, कुसाक्षी = कुत्सितनिदर्शकः, उद्धतवेशः = अविनीतपरिधानम्, स्वामीद्रोही = प्रभुद्वेष्टा, व्ययाधिकः = अपरिमितव्ययकर्त्ता, अग्निदः = गृहादिज्वालकः, गरदः = विषप्रयोक्ता, गरलप्रयोगेन जीवहन्ता, वेश्यासक्तः = वेश्यागामी, प्रबलदण्डकृत् = प्रचण्डदमनकारी, तथा पाक्षिकः = पक्षधराः, चः = पुनः, सभ्यः = सभासद्, बलाल्लिखितग्राहकः—बलात् = बलपूर्वकात्, लिखितस्य = लेखस्य, ग्राहकः = ग्रहणकर्त्ता, अन्यायकारी = अनीतिकर्मी, कलहशीलः = विसंवादी, युद्धे = समरे, पराङ्मुखः = विमुखः सैनिकः, साक्ष्यलोपी = प्रामाण्यविलोपकः, पितृमातृसतीस्त्री-मित्रद्रोहकः—पितृद्रोही = जनकाहितचिकीर्षकः, मातृद्रोही = जनन्यानिष्टकारी, सतीस्त्रीद्रोही = पतिव्रतावैरी, मित्रद्रोही = सुहृद्विरोधी, असूयकः = परगुणेषु दोषारोपकः शत्रुसेवी = रिपुराराधकः, मर्मभेदी = रहस्यप्रकाशकः, च = पुनः, वञ्चकः = प्रतारकः, स्वकीयद्विड्—स्वकीयानाम् = आत्मीयानाम्, द्वेष्टा = द्रोहकर्त्ता, गुप्तवृत्तिः = गूढजीविकः, वृषलः = धर्माघातकः, ग्रामकण्टकः = ग्राम्यजनपीडकः, कुटुम्बभरणात्—कुटुम्बानाम् = पुत्रकलत्रादीनाम्, भरणाद्विना = पालनं विहाय, सदा = सर्वदा, तपोविद्यार्थिनः—तपसि = तपस्यायां विद्यायां वा, आसक्तो जनः, तृणकाष्ठादिहरणे—तृणकाष्ठादीनाम् = पलालेन्धनादीनाम्, हरणे = आहरणे, शक्तोऽपि = समर्थोऽपि, भैक्ष्यभोजकः = भिक्षावृत्तिः, कन्यायाः = सुतायाः, अपि = चेत्, विक्रेता = विक्रयी, कुटुम्बवृत्तिह्रासकः—कुटुम्बानाम् = आश्रितजनानाम्, वृत्तिह्रासकः = जीविकाविघातकः, अधर्मा = पापी, सूचकः = विश्वासघातकः, राजानिष्टमुपेक्षकः—राज्ञः = नृपस्य, अनिष्टस्य = अनभिलषितस्य, उपेक्षकः = निःस्पृहः, तथा कुलटा = पुंश्चली, पतिपुत्रघ्नी = पतिपुत्रहन्त्री, स्वतन्त्रा = स्वैरिणी, वृद्धनिन्दिता = वृद्धजनेभ्यः गर्हिता, गृहकृत्योज्झिता = परित्यक्तगृहकृत्या, नित्यम् = सततम्, दुष्टाचारा = आचारभ्रष्टा, अप्रिया = अरुचिकरा, स्नुषा = पुत्रवधूः, एतान् = पूर्ववर्णितान्, स्वभावदुष्टान् = प्रकृतितः दुर्वृत्तान्, ज्ञात्वा = विज्ञाय, राष्ट्रात् = राज्यात्, विवासयेत् = निर्वासयेत्, राजा इति कर्त्तृपदमध्याहार्यम् ॥ ९८-१०७ ॥

**हिन्दी**—शराबी, धूर्त्त, चोर, परस्त्रीगामी, अत्यधिक क्रोधी, खूनी, वर्णाश्रम धर्म के विरुद्ध आचरण करने वाला, परलोक को नहीं मानने वाला, धोखेबाज, झूठा दोषारोपण करने वाला,

चुगलखोर, मान्य जनों पर दोषारोपण करने वाला तथा देवमूर्त्तियों को दूषित करने वाला, झूठे, धरोहर पचाने वाला, किसी की जीविका हरनेवाला, असहन, घूसखोर, कुकर्मी, किसी का भेद खोलने वाला या काम बिगाड़ने वाला, बुराई बोलने वाला, कटुभाषी, जलाशय दूषित करने वाला, बगीचे विनष्ट करने वाला, ढोंगी भविष्यवक्ता, राजद्रोही, दुष्टमन्त्री, जालसाज, अनाड़ी वैद्य, अभद्र आचरण वाला, उद्धत वेशभूषा वाला, राह रोकने वाला, अनुचित गवाही देने वाला, अपवित्र रहने वाला, अपने पालक या संरक्षक का विरोध करने वाला, अनाप-शनाप खर्च करने वाला, आग लगाने वाला, जहर देकर किसी को मारने वाला, रंडीबाज, कठोर दण्ड देने वाला पदाधिकारी, पक्षपाती सभासद्, जबरदस्ती दस्तावेज लिखवाने वाला, अन्यायी, झगडालू, लड़ाई का मैदान छोड़कर भागने वाले सिपाही, साक्ष्य मिटानेवाला, माँ-बाप, मित्र तथा सती नारी की बुराई करने वाला, ईर्ष्यालु, शत्रु की सेवा करनेवाला, किसी के दिल पर चोट पहुँचाने वाला, ठगने वाला, अपने लोगों के साथ विरोध करने वाला, चोरबाजारी करने वाला, पापी और दुष्कर्मी, सीधे-सादे ग्रामीणों को सताने वाला, गृहस्थ होकर भी परिवार का पालन-पोषण किये बिना तप या विद्याध्ययन करने वाला, घास-फूस और लकड़ी लाकर जीविका चलाने में समर्थ होकर भी भीख माँगकर पेट पालने वाला, बेटी बेचने वाला, परिजनों की आजीवका घटाने वाला, दुराचारी, अनर्गल सूचना देने वाला, राजा के अहित की चिन्ता न करने वाला, व्यभिचारिणी औरत, पति और पुत्र की हत्या करने वाली, स्वेच्छाचारिणी, बड़े-बूढों से निन्दित, घरेलू काम-काज से मुँह मोड़ने वाली, हमेशा दुष्ट आचरण करने वाली, गुरुजनों के साथ अप्रिय व्यवहार करने वाली पतोहू जिसे अच्छी न लगे—ऐसे पुरुषों और औरतों को स्वभाव से दुष्ट जानकर राजा अपने राज्य से निकाल दे ॥ ९८-१०७ ॥

**मद्यप इत्यादि**। मद्यपः सुरापायी, कितवः धूर्त्तः, स्तेनः तस्करः, जारः उपपतिः, चण्डः अतिकोपनः, हिंसकः, त्यक्तवर्णाश्रमाचारः वर्णानां ब्राह्मणादीनाम् आश्रमाणां ब्रह्मचर्य्यादीनाञ्च आचारत्यागी, नास्तिकः, शठः, खलः, मिथ्याभिशापकः मिथ्यादोषारोपकः, कर्णेजपः अन्यं प्रति अन्यस्य विरागोत्पादकः, आर्य्यान् साधून् देवांश्च दूषयतीति तथोक्तः, असत्यवाक् मिथ्यावादी, न्यासापहारी गच्छितधनापहारकः, वृत्तिविघातकः जीविकाव्याघातकारी, अन्यस्य उदयासहिष्णुः अभ्युदयासहनः उत्कोचग्रहणे रतः, अकार्य्यकर्त्ता दुष्कर्मी, मन्त्राणां तथा कार्य्याणां भेदकः भङ्गकृत्, अनिष्टवाक्, अप्रियवादी, परुषवाक् निष्ठुरभाषी, जलस्य आरामस्य उद्यानस्य च प्रबाधकः बाधाकारी, नक्षत्रसूची वृथादैवज्ञः, राजद्विट् राजद्रोही, कुमन्त्री, कूटकार्य्यवित् कूटानां कपटानां कार्य्याणां वेत्ता, कुवैद्यः कुचिकित्सकः, अमङ्गलशीलः अशुचिः, मार्गनिरोधकः अध्वप्रतिबन्धकः, कुसाक्षी, उद्धतवेशः, स्वामीद्रोही प्रभुद्वेष्टा, व्ययाधिकः अपरिमितव्ययशीलः, अग्निदः अग्निदानेन गृहादिदाहकः, गरदः विषप्रयोगेण प्राणहन्ता, वेश्यासक्तः, प्रबलदण्डकृत् तीक्ष्णदण्डकारी राजपुरुषः, पाक्षिकः पक्षपाती, सभ्यः विचारदर्शी पुरुषः, बलात् लिखितस्य लेख्यस्य ग्राहकः ग्रहणकारी, अन्यायकारी अविचारकः, कलहशीलः विवादप्रियः, युद्धपराङ्मुखः सैनिकपुरुषः, साक्ष्यलोपी साक्ष्यलोपकारी, पितृद्रोही, मातृद्रोही, सतीस्त्रीद्रोही, मित्रद्रोही, असूयकः परगुणेषु दोषारोपणकृत्, शत्रुसेवी शत्रुपक्षः, मर्मभेदी, असह्यकर्मकारी, वञ्चकः प्रतारकः, स्वकीयानाम् आत्मीयानां द्वेष्टा, गुप्तवृत्तिः गूढजीविकः, वृषलः धर्मघाती ग्रामकण्टकः, कुटुम्बभरणात् कुटुम्बानां परिजनानां भरणात् विना, भरणमकृत्वा इत्यर्थः, सदा तपोविद्यार्थिनः तपसि विद्यायां वा आसक्ताः पुरुषाः, कुटुम्बानाम-

वश्यपोष्यत्वात् तेषां तपोविद्यानुष्ठानमकिञ्चित्करमिति भावः। तृणकाष्ठादीनां हरणे सङ्ग्रहणे शक्तः समर्थोऽपि भैक्ष्यभोजकः भिक्षावृत्तिः, कन्याया विक्रेता कन्याविक्रयी, कुटुम्बानां पोष्यवर्गाणां वृत्तिह्रासकः जीविकाह्रासकारी, अधर्मा अधार्मिकः सूचकः दुर्जनः, राज्ञः अनिष्टम् उपेक्षकः केनचित् क्रियमाणस्य राजानिष्टस्य उपेक्षाकारीत्यर्थः, तथा कुलटा व्यभिचारिणी, पतिपुत्रघ्नी स्वामिसुतनाशिनी, स्वतन्त्रा स्वेच्छाचारिणी, वृद्धनिन्दिता प्राचीनगर्हिता, गृहकृत्योज्झिता त्यक्तगृहकृत्या, नित्यं सततं दुष्टाचारा दुराचारा, अप्रिया स्नुषा पुत्रवधूः, एतान् स्वभावदुष्टान् ज्ञात्वा राष्ट्रात् राज्यात् विवासयेत् निर्वासयेत् राजेति कर्त्तृपदमूह्यम् ॥९८-१०७॥

**द्वीपे निवासितव्यास्ते बद्ध्वा दुर्गोदरेऽथवा।**
**मार्गसंस्करणे योज्याः कदन्नन्यूनभोजनाः ॥ १०८ ॥**

**अन्वयः**—ते द्वीपे निवासितव्याः अथवा दुर्गोदरे बद्ध्वा मार्गसंस्करणे कदन्नन्यूनभोजनाः योज्याः ॥१०८॥

**व्याख्या**—ते = मद्यपादयः पूर्वोक्ताः, द्वीपे = जलवेष्टितभूम्यन्तरे, निवासितव्याः = स्थापितव्याः, अथवा = वा, दुर्गोदरे = कोटाभ्यन्तरे, बद्ध्वा = सन्नियम्य, मार्गसंस्करणे = पथपरिष्करणे, कदन्नम् = कुत्सितान्नम्, तदपि न्यूनम् = अत्यल्पम्, भुञ्जते = खाद्यते, इति तथोक्ताः कृत्वा, योज्याः = देयाः ॥१०८॥

**हिन्दी**—पूर्वोक्त शराबी प्रभृति जनों को किसी टापू में रखना चाहिए। अथवा किसी किले के भीतर बंधन में डाल देना चाहिए। उनसे सड़क की सफाई का काम लेना चाहिए। खाने के लिए उन्हें आधा पेट दो। मरुआ, साँवा जैसे खराब अन्न देना चाहिए ॥१०८॥

**द्वीपे इति**। ते पूर्वोक्ताः मद्यपादयः द्वीपे द्वीपान्तरे निवासितव्याः अथवा दुर्गोदरे दुर्गाभ्यन्तरे बद्ध्वा मार्गसंस्करणे अध्वपरिष्करणे कदन्नन्यूनभोजनाः कुत्सितान्नं तदपि न्यूनं भुञ्जते इति तथोक्ताः कृत्वा योज्याः नियोक्तव्याः ॥१०८॥

**तत् तत् जात्युक्तकर्माणि कारयीत च तैर्नृपः ॥ १०९ ॥**

**अन्वयः**—नृपः तैः तत्तत् जात्युक्तकर्माणि कारयीत ॥१०९॥

**व्याख्या**—नृपः = राजा, तैः = पूर्वोक्तैः, तत् तत् = तैः तैः, जात्युक्तैः = वंशानुकूलैः, कर्माणि = कार्याणि, कारयीत = कारयेत्, आर्षप्रयोगोऽयं कारयीत ॥१०९॥

**हिन्दी**—और उन सबों से उनके जाति के अनुकूल काम राजा को लेना चाहिए ॥१०९॥

**तत्तदिति**। नृपः तैः मद्यपादिभिः तत्तज्जात्युक्तकर्माणि च कारयीत कारयेत्, कारयीत इति आर्षोऽयं प्रयोगः ॥१०९॥

**एवंविधानसाधूंश्च संसर्गेण च दूषितान्।**
**दण्डयित्वा च सन्मार्गे शिक्षयेत् तान् नृपः सदा ॥ ११० ॥**

**अन्वयः**—नृपः एवंविधान् असाधून् च संसर्गेण दूषितान् दण्डयित्वा सदा सन्मार्गे तान् शिक्षयेत् ॥११०॥

**व्याख्या**—नृपः = राजा, एवंविधान् = एतत्तुल्यान्, असाधून् = दुर्वृत्तान्, च = पुनः, संसर्गेण = सम्पर्केन, दूषितान् = कलुषितान्, दण्डयित्वा = दमनं कृत्वा, सदा = सर्वदा,

सन्मार्गे = सुपथि, तान् = पूर्वोक्तान्, शिक्षयेत् = उपदिशेत् ॥ ११० ॥

**हिन्दी**—राजा इसी तरह पूर्वोक्त दुष्टों को तथा उनके सम्पर्क से कलुषित हुए लोगों को दण्ड देकर सन्मार्ग पर चलने की शिक्षा दे ॥ ११० ॥

**एवंविधानिति**। नृपः एवंविधान् उक्तप्रकारान् असाधून् दुर्जनान् तथा संसर्गेण तेषां पापिनां साहचर्य्येण दूषितांश्च जनान् दण्डयित्वा सदा सन्मार्गे सदाचारे तान् शिक्षयेत् । ।११० ॥

**राज्ञो राष्ट्रस्य विकृतिं तथा मन्त्रिगणस्य च।**
**इच्छन्ति शत्रुसम्बन्धाद्ये तान् हन्याद्धि द्राङ्नृपः ॥ १११ ॥**

**अन्वयः**—ये शत्रुसम्बन्धात् राज्ञः राष्ट्रस्य तथा मन्त्रिगणस्य विकृतिम् इच्छन्ति, नृपः द्राक् तान् हन्यात् हि ॥ १११ ॥

**व्याख्या**—ये = पुरुषाः, शत्रुसम्बन्धात् = रिपोः सम्पर्कात्, राज्ञः = नृपस्य, राष्ट्रस्य = राज्यस्य, तथा = तेनैव प्रकारेण, च = पुनः, मन्त्रिगणस्य = सचिवानाम्, विकृतिम् = परिवृत्तिम्, इच्छन्ति = अभिलषन्ति, नृपः = राजा, द्राक् = झटिति, तान् = शत्रोः परामर्शदातृन्, हन्यात् = विनष्टं कुर्यात्, हि = इति निश्चयेन ॥ १११ ॥

**हिन्दी**—जो व्यक्ति राजा राज्य या मन्त्रिमण्डल के विरुद्ध शत्रु से मिलकर इन्हें हानि पहुँचाना चाहते हों, उनका राजा शीघ्र वध कर दे ॥ १११ ॥

**राज्ञ इति**। ये जनाः शत्रुसम्बन्धात् शत्रोरुपजापात् परामर्शादित्यर्थः, राज्ञः राष्ट्रस्य राज्यस्थजनस्य तथा मन्त्रिगणस्य विकृतिं वैपरीत्यम् इच्छन्ति, नृपः द्राक् झटिति तान् हन्यात् हि नाशयेदेव हिशब्दोऽवधारणार्थः ॥ १११ ॥

**नेच्छेच्च युगपद् ह्रासं गणदौष्ट्ये गणस्य च।**
**एकैकं घातयेद्राजा वत्सोऽश्नाति यथा स्तनम् ॥ १२ ॥**

**अन्वयः**—राजा गणदौष्ट्ये गणस्य युगपद् ह्रासं न इच्छेत्। यथा वत्सः स्तनम् एकैकम् अश्नाति तथा घातयेत् ॥ ११२ ॥

**व्याख्या**—राजा = नृपः, गणदौष्ट्ये—गणानाम् = समुदायानाम्, दौष्ट्ये = दौर्जन्ये, गणस्य = वर्गस्य, युगपद् = सहैव, ह्रासम् = विनाशम्, न = नहि, इच्छेत् = अभिलषेत्। यथा = येन प्रकारेण, वत्सः = गोशावकः, स्तनम् = पयोधरम्, एकैकम् = क्रमशः, अश्नाति = पिबति, तथैव दुर्जनमेकैकम्, घातयेत् = मारयेत् ॥ ११२ ॥

**हिन्दी**—यदि कोई एक समुदाय-विरुद्ध हो जाय तो उन सबों को एक साथ विनाश करने की अपेक्षा एक-एक कर मारे। जैसे गाय का बछड़ा क्रमशः एक-एक थन का दूध पीता है, न कि चारों थन का एक साथ ॥ ११२ ॥

**नेच्छेदिति**। राजा गणानां समूहानां दौष्ट्ये दुष्टतायां गणस्य समूहस्य युगपद् समकालमेव ह्रासं विनाशं न इच्छेत्, यथा वत्सः शिशुः स्तनम् एकैकमित्यर्थः, अश्नाति पिबति तथा एकैकं दुर्जनं क्रमशः घातयेत् तद्दर्शनेन अपरे तत्पापात् निवर्तन्तामिति भावः ॥ ११२ ॥

**अधर्मशीलो नृपतिर्यदा तं भीषयेज्जनः।**
**धर्मशीलातिबलवद्रिपोराश्रयतः सदा ॥ ११३ ॥**

**अन्वयः**—यदा नृपतिः अधर्मशीलः तदा जनः धर्मशीलस्य अतिबलवतः रिपोः आश्रयतः तं सदा भीषयेत् ॥ ११३ ॥

**व्याख्या**—यदा = यस्मिन्काले, नृपति = राजा, अधर्मशीलः = अधार्मिको भवति, तदा, जनः = लोकः, प्रजा, धर्मशीलस्य = धर्मात्मनः, अतिबलवतः = अतिशक्तिशालिनः, रिपो = शत्रोः, आश्रयतः = अवलम्बनेन, तम् = नृपम्, सदा = सर्वदा, भीषयेत् = भयमुत्पादयेत् ॥ ११३ ॥

**हिन्दी**—राजा यदि अधर्मी हो तो उसकी प्रजा का यह कर्त्तव्य है कि उसका शत्रु राजा, जो उससे अधिक शक्तिशाली और धर्मात्मा हो, उसका सहारा लेकर उसे डराकर धर्मपथ पर चलने को विवश करे ॥ ११३ ॥

**अधर्मशील इति**। यदा नृपतिः अधर्मशीलः दुराचारः भवेत् तदा जनः धर्मशीलस्य अतिबलवतः रिपोः राजविपक्षस्य आश्रयतः आश्रयेण तं नृपतिं सदा भीषयेत् भयं दर्शयेत् ॥ ११३ ॥

**यावत् तु धर्मशीलः स्यात् स नृपस्तावदेव हि।**
**अन्यथा नश्यते लोको द्राङ्नृपोऽपि विनश्यति॥ ११४॥**

**अन्वयः**—यावत् नृपः धर्मशीलः स्यात् तावदेव सः नृपः हि। अन्यथा लोकः नश्यते, नृपोऽपि सः द्राक् विनश्यति ॥ ११४ ॥

**व्याख्या**—यावत् = यावत्कालपर्यन्तम्, नृपः = राजा, धर्मशीलः = धार्मिकः, स्यात् = भवेत्, तावदेव = तावत्कालमेव, सः = असौ, नृपः = राजा भवति। अन्यथा = इतरथा, लोकः = प्रजा, नश्यते = विनष्टो भवति, नृपोऽपि = राजाऽपि, सः = असावधार्मिकः, द्राक् = शीघ्रमेव, विनश्यति = नष्टो भवति ॥ ११४ ॥

**हिन्दी**—राजा जब तक धर्मात्मा है तभी तक राजा है। अन्यथा प्रजा तो नष्ट होती ही है, वह राजा भी शीघ्र ही विनष्ट हो जाता है ॥ ११४ ॥

**यावदिति**। यावत् नृपः धर्मशीलः स्यात् तावदेव सः नृपः हि राजा सन् तिष्ठतीति भावः। अन्यथा तस्य अधर्मशीलत्वे इत्यर्थः, लोकः नश्यते, नृपोऽपि सः द्राक् झटिति विनश्यति ॥ ११४ ॥

**मातरं पितरं भार्य्यां यः सन्त्यज्य विवर्त्तते।**
**निगडैर्बन्धयित्वा तं योजयेन्मार्गसंस्कृतौ।**
**तद्भृत्यर्द्धं तु सन्दद्यात् तेभ्यो राजा प्रयत्नतः ॥ ११५ ॥**

**अन्वयः**—यः मातरं पितरं भार्य्यां च सन्त्यज्य विवर्त्तते, राजा तं निगडैः बन्धयित्वा मार्गसंस्कृतौ योजयेत्। तथा तद्भृत्यर्द्ध तेभ्यः प्रयत्नतः राजा सन्दद्यात् ॥ ११५ ॥

**व्याख्या**—यः = जनः, मातरम् = जननीम्, पितरम् = जनकम्, भार्याम् = पत्नीम्, च = पुनः, सन्त्यज्य = विहाय, विवर्त्तते = यथाभिलषितं व्यवहरति, राजा = नृपतिः, तम् = जनम्, निगडैः = पादशृङ्खलैः, बन्धयित्वा = निगडयित्वा, मार्गाणाम् = पथाम्, संस्कृतौ = परिष्करणे, योजयेत् = निवेशयेत्। तथा, तत् = तस्य पूर्वोक्तजनस्य, भृत्यर्द्धम् = वेतनस्यार्द्धभागम्, तेभ्यः = मातृपित्रादिभ्यः, प्रयत्नतः = सायासेन, सन्दद्यात् = सम्यग्रूपेण प्रयच्छेत् ॥ ११५ ॥

**हिन्दी**—जो कर्मचारी माँ-बाप और पत्नी को छोड़ मनमाना व्यवहार करे, राजा उसके पैरों में बेड़ी डालकर कैद कर ले तथा उससे सड़क बनवाये या सड़क की सफाई का काम ले

और उसके वेतन का आधा हिस्सा काटकर माँ-बाप तथा पत्नी के भरण-पोषण हेतु प्रयास-पूर्वक उन्हें दे दे ॥ ११५ ॥

**मातरमिति**। यः मातरं पितरं भार्य्याञ्च सन्त्यज्य विवर्त्तते यथेच्छं व्यवहरतीत्यर्थः, राजा तं निगडैः पादशृङ्खलैः बन्धयित्वा मार्गाणां पथां संस्कृतौ बन्धनादिकर्मणि योजयेत्, तथा तस्य भृत्यर्द्धं तेभ्यः तत् पितृमात्रादिभ्यः प्रयत्नतः यत्नेन सन्दद्यात् ॥ ११५ ॥

**विद्यात् पणसहस्रं तु दण्ड उत्तमसाहसः।**
**दशमाषमितं ताम्रं तत् पणो राजमुद्रितम्।**
**वराटिसार्द्धशतकमूल्यः कार्षापणश्च सः ॥ ११६ ॥**

**अन्वयः**—पणसहस्रं उत्तमसाहसः दण्डः पणश्च दशमाषमितं राजमुद्रितं तत् ताम्रं सः वराटिसार्द्धशतकमूल्यः कार्षापणञ्च विद्यते ॥ ११६ ॥

**व्याख्या**—पणानाम् = पणमुद्राणाम्, सहस्रम् = दशशतसंख्यकम्, उत्तमसाहसः = उत्तमसाहसाख्यः, दण्डः = दमनः, पणश्च = पणमुद्रा च, दशभिर्माषैः, मितम् = परिमितम्, राजमुद्रितम् = नृपमुद्राङ्कितम्, तत् = विख्यातम्, ताम्रम् = ताम्रमुद्राम्, सः = असौ पणः, वराटीनाम् = कपर्दिकाणाम्, सार्द्धशतकम् = पञ्चाशदधिकशतम्, मूल्यम् = अर्थः, यस्य तादृशः कार्षापणश्च, विद्यते = कथ्यते, इति ॥ ११६ ॥

**हिन्दी**—एक हजार पैसों का दण्ड उत्तमसाहस कहलाता है। राजमुद्रांकित दश मासा भर ताँबा के सिक्के को पण कहते हैं। १५० कौडियों के मूल्य के उसी सिक्के को कार्षापण भी कहते हैं ॥ ११६ ॥

**विद्यादिति**। पणानां सहस्रम् उत्तमसाहसः उत्तमसाहसाख्यः दण्डः, पणश्च दशभिर्माषैः मितं परिमितं राजमुद्रितं तत् प्रसिद्धं ताम्रं ताम्रमुद्रा इत्यर्थः। स पणः वराटीनां सार्द्धशतकं मूल्यं यस्य तादृशः कार्षापणश्च कथ्यते इति विद्यात् ॥ ११६ ॥

**तदर्द्धश्च तदर्द्धश्च मध्यमः प्रथमः क्रमात्।**
**प्रथमे साहसे दण्डः प्रथमश्च क्रमात् परौ ॥ ११७ ॥**

**अन्वयः**—तदर्द्धः मध्यमः तदर्द्धः प्रथमः क्रमात् प्रथमे साहसे प्रथमः दण्डः क्रमात् परौ ॥ ११७ ॥

**व्याख्या**—तत् = तस्य, अर्द्धः = अर्द्धभागः, अर्थादुत्तमसाहसस्यार्द्धभागं मध्यमसाहसो भवति, तदर्द्धश्च प्रथमः = साहसः, क्रमात् = क्रमशः, बोद्धव्यः, प्रथमे साहसे, प्रथमो दण्डः = दमनः, क्रमात् = क्रमशः, परौ = मध्यमसाहसोत्तमसाहसौ ज्ञेयौ ॥ ११७ ॥

**हिन्दी**—और क्रमशः एक हजार के आधे पाँच सौ पैसे के जुर्माने को प्रथम साहसदण्ड कहते हैं। प्रथम श्रेणी के अपराध में प्रथम साहसदण्ड अर्थात् ढाई सौ पैसे का, मध्यम साहस में पाँच सौ पैसे का विधान है ॥ ११७ ॥

**तदर्द्ध इति**। तदर्द्धः तस्य उत्तमसाहसस्य अर्द्धः मध्यमः साहसः तदर्द्धश्च प्रथमसाहसः क्रमात् बोद्धव्य इति शेषः। प्रथमे साहसे प्रथमो दण्डः, क्रमात् परौ मध्यमसाहसोत्तमसाहसौ वेद्यौ ॥ ११७ ॥

**मध्यमे मध्यमो धार्यश्चोत्तमे तूत्तमो नृपैः।**
**सोपायाः कथिता मिश्रे मित्रोदासीनशत्रवः॥ ११८॥**

**इति शुक्रनीतौ चतुर्थाध्यायस्य सुहृदादिलक्षणं नाम प्रथमं प्रकरणम्।**

---

**अन्वयः**—नृपैः मध्यमे मध्यमः, उत्तमे उत्तमः धार्यः। मिश्रे सोपायाः कथिताः॥ ११८॥

**व्याख्या**—नृपैः = राजभिः, मध्यमे = मध्यमे साहसे, मध्यमो दण्डः, उत्तमे = प्रथमकोटिकापराधे, उत्तमो साहसदण्डः, धार्यः = विधेयः। मिश्रे = मिश्राध्याये, सोपायाः—उपायैः = सामदानादिभिः, सहिताः = संवलिताः, मित्रोदासीनशत्रवः, कथिताः = निगदिताः॥ ११८॥

**हिन्दी**—मध्यम कोटि के अपराध में मध्यम साहसदण्ड तथा उत्तम कोटि के अपराध में उत्तम साहसदण्ड राजा को दण्ड देना चाहिए। इस तरह इस मिश्र अध्याय में सामादिक उपायों के साथ मित्र, उदासीन एवं शत्रुओं के बारे में कहा गया है॥ ११८॥

**इस प्रकार शुक्रनीति में चतुर्थ अध्याय में 'सुहृदादिलक्षण' नामक प्रथम प्रकरण की 'विमला' संस्कृत-हिन्दी व्याख्या समाप्त हुई।**

---

**मध्यमे इति**। नृपैः मध्यमे पापे मध्यमो दण्डः, उत्तमे उत्तमः दण्डः धार्य्यः कार्य्यः। मिश्रे मिश्राध्याये सोपायाः उपायैः सामादिभिः सहिताः मित्रोदासीनशत्रवः कथिताः उक्ताः॥ ११८॥

**इति श्रीजीवानन्दविद्यासागरविरचिता चतुर्थाध्यायस्य प्रथमप्रकरणव्याख्या समाप्ता।**

---

# चतुर्थाध्यायस्य द्वितीयं प्रकरणम्

**अथ कोशप्रकरणं ब्रुवे मिश्रे द्वितीयकम्।**
**एकार्थसमुदायो यः स कोशः स्यात् पृथक् पृथक्॥ १॥**

**अन्वयः**—अथ मिश्रे द्वितीयकं कोशप्रकरणं ब्रुवे। एकार्थसमुदायः यः सः पृथक् पृथक् कोशः स्यात्॥ १॥

**व्याख्या**—अथ = अनन्तरम्, मिश्रे = अस्मिन् संसृष्टाऽध्याये, द्वितीयकम् = अपरम्, कोशप्रकरणम् = अभिधानपरिच्छेदः, ब्रुवे = वदामि। एकार्थसमुदायः—एकेषाम् = कतिपयानाम्, अर्थानाम् = धनानाम्, प्रयोजनानां वा, समुदायः = समूहः, यः = समष्टिः, सः = असौ, कोशः = इत्याख्यः, स्यात् = भवेदिति॥ १॥

**हिन्दी**—अब इस मिश्र अध्याय के भीतर दूसरा 'कोशप्रकरण' का वर्णन करता हूँ। किसी भी एक तरह की वस्तुओं के समूह को 'कोश' कहते हैं। यह अलग-अलग कई तरह के होते हैं॥ १॥

**अथेति**। अथ अनन्तरं मिश्रे अध्याये द्वितीयकं कोशप्रकरणं ब्रुवे कथयामि, एकेषां कतिपयानाम् अर्थानां समुदायः समष्टिः यः, सः पृथक् पृथक् विविधप्रकारः कोशः स्यात्॥ १॥

**येन केन प्रकारेण धनं सञ्चिनुयात् नृपः।**
**तेन संरक्षयेद्राष्ट्रं बलं यज्ञादिकाः क्रियाः॥ २॥**

**अन्वयः**—नृपः येन केन प्रकारेण धनं सञ्चिनुयात्। तेन च राष्ट्रं बलं यज्ञादिकाः क्रियाः संरक्षयेत्॥ २॥

**व्याख्या**—नृपः = राजा, येन केन प्रकारेण = यया कया रीत्या, धनम् = अर्थम्, सञ्चिनुयात् = सङ्गृह्णीयात्, तेन = वित्तेन, राष्ट्रम् = राष्ट्रवासिनः, बलम् = सैन्यम्, यज्ञादिकाः = यागादिकाः, क्रियाः = कर्माणि, संरक्षयेत् = सम्यग्रूपेण रक्षां कुर्यादिति॥ २॥

**हिन्दी**—राजा को जैसे-तैसे धन इकट्ठा करना चाहिए। ताकि उस संचित धन से राष्ट्र, सेना एवं धार्मिक कृत्यों की रक्षा की जा सके॥ २॥

**येनेति**। नृपः येन केन प्रकारेण धनं सञ्चिनुयात् सङ्गृह्णीयात्, तेन च धनेन राष्ट्रं राज्यरक्षार्थपुरुषं बलं सैन्यं यज्ञादिकाः क्रियाश्च संरक्षेत्॥ २॥

**बलप्रजारक्षणार्थं यज्ञार्थं कोशसङ्ग्रहः।**
**परत्रेह च सुखदो नृपस्यान्यश्च दुःखदः॥ ३॥**

**अन्वयः**—बलानां प्रजानां च रक्षणार्थं यज्ञार्थं नृपस्य कोशसङ्ग्रहः परत्र च इह सुखप्रदः, अन्यश्च दुःखदः ॥ ३ ॥

**व्याख्या**—बलानाम् = सैन्यानाम्, प्रजानाम् = जनानाञ्च, रक्षणार्थम् = त्राणाय, यज्ञार्थञ्च = यागाय च, नृपस्य = राज्ञः, कोशसङ्ग्रहः = कोशसञ्चयनम्, परत्र = परलोके, च = पुनः, इह = अस्मिन्संसारे, सुखप्रदः = आनन्ददायकः, अन्यः = एतद्भिन्नः धनसङ्ग्रहः, दुःखदः = कष्टदायको भवति ॥ ३ ॥

**हिन्दी**—प्रजा, सेना एवं धार्मिक कृत्यों के लिए राजा का धनसंग्रह संसार और संसार से परे दोनों लोकों के लिए सुखद होता है। इससे भिन्न कार्यों के लिए कोशसंग्रह दुःखदायी होता है ॥ ३ ॥

**बलेति**। बलानां सैन्यनां प्रजानाञ्च रक्षणार्थं यज्ञार्थञ्च कोशसङ्ग्रहः धनसञ्चयः नृपस्य परत्र परकाले इह च अस्मिन् काले च सुखप्रदः, अन्यः तद्व्यतिरिक्त इत्यर्थः, धनसञ्चयः दुःखदः ॥३ ॥

**स्त्रीपुत्रार्थं कृतो यश्च स्वोपभोगाय केवलम्।**
**नरकायैव स ज्ञेयो न परत्र सुखप्रदः ॥ ४ ॥**

**अन्वयः**—केवलं स्त्रीपुत्रार्थं च स्वोपभोगाय यः कृतः सः नरकाय एव ज्ञेयः, च परत्र न सुखप्रदः ॥ ४ ॥

**व्याख्या**—केवलम् = मात्रं, स्त्रीपुत्रार्थम् = पत्नीपुत्रपालनाय, च = पुनः, स्वोपभोगाय— स्वस्य = आत्मनः, उपभोगाय = आस्वादाय, व्यवहाराय वेति, यः = राजा किं वा जनः, धनसङ्ग्रहः कृतः = सम्पादितः, सः = जनः, नरकाय = निरयाय, एव = केवलम्, ज्ञेयः = अवगन्तव्यः, च = पुनः, परत्र = परलोके, न = नहि, सुखप्रदः = आनन्ददायको भवति ॥ ४ ॥

**हिन्दी**—जो व्यक्ति पत्नी और पुत्र के लिए ही अथवा मात्र अपनी सुख-सुविधा के लिए धन बटोरता है, वह संचय सुखप्रद तो होता ही नहीं प्रत्युत नरक का साधन बन जाता है ॥ ४ ॥

**स्त्रीपुत्रार्थमिति**। केवलं स्त्रीपुत्रार्थं भार्य्यासुतभरणार्थं स्वस्य आत्मनः उपभोगाय च यः सञ्चयः कृतः, स नरकाय एव ज्ञेयः परत्र न सुखप्रदश्च ॥ ४ ॥

**अन्यायेनार्जितो यस्माद् येन तत् पापभाक् च सः।**
**सुपात्रतो गृहीतं यद् दत्तं वा वर्द्धते च तत् ॥ ५ ॥**

**अन्वयः**—येन यः अन्यायेन उपार्जितः सः तत् पापभाक् सुपात्रतः गृहीतं वा दत्तम्, तत् वर्द्धते ॥ ५ ॥

**व्याख्या**—येन = पुरुषेण, यः = धनम्, अन्यायेन = अनीत्या, उपार्जितः = सङ्गृहीतः, सः = जनः, तत् = तस्योपार्जितधनस्य, पापभाक् = अधर्मभागी भवति, च = पुनः, यत् = धनम्, सुपात्रः = योग्यजनात्, गृहीतम् = प्राप्तम् अधिगतम्, वा = अथवा, दत्तम् = प्रदत्तम्, तत् = धनम्, वर्द्धते = एधते ॥ ५ ॥

**हिन्दी**—जो व्यक्ति अनीति से धन उपार्जित करता है उसके पाप का फल भी उसे ही भोगना पड़ता है। सुयोग्य जन से प्राप्त धन या साधु पुरुषों को दिया गया धन बढ़ता ही रहता है ॥ ५ ॥

**अन्यायेनेति**। येन जनेन यः अर्थः अन्यायेन उपार्जितः स्यात्, सः जनः तस्य अन्यायोपार्जनस्य पापभाक् भवति। यत् धनं सुपात्रतः साधोः सकाशात् गृहीतं वा दत्तं सुपात्रे इति शेषः, तत् वर्द्धते वृद्धिं प्राप्नोति॥५॥

**स्वागमी सद्व्ययी पात्रमपात्रं विपरीतकम्।**
**अपात्रस्य हरेत् सर्वं धनं राजा न दोषभाक्॥६॥**

**अन्वयः**—स्वागमी तथा सद्व्ययी पात्रं विपरीतकम् अपात्रम्। राजा अपात्रस्य सर्वं धनं हरेत् न दोषभाक्॥६॥

**व्याख्या**—स्वागमी = सुष्ठु आगमो यस्यासौ, सुनीत्या धनोपार्जकः, तथा सद्व्ययी = सन्मार्गे व्ययशीलः, पात्रम् = सुयोग्यजनो भवति, तद्विपरीतकम् = विरुद्धाचरणशीलो जनः, अपात्रम् = कुपात्रो भवति, राजा = नृपः, अपात्रस्य = कुजनस्य, सर्वम् = सकलम्, धनम् = वित्तम्, हरेत् = गृह्णीयात्, अस्मिन् कार्ये राजा, दोषभाक् = दोषी न भवतीति भावः॥६॥

**हिन्दी**—जो व्यक्ति न्यायपूर्वक धनोपार्जन करता है तथा उपार्जित धन का व्यय सत्कर्म में करता है, वह सुपात्र कहलाता है। इसके विपरीत अन्यायपूर्वक धनोपार्जन करने वाला तथा कुमार्ग में खर्च करने वाला कुपात्र कहलाता है। कुपात्र के धन का राजा को अपहरण कर लेना चाहिए, इसमें उसे कोई दोष नहीं होता है॥६॥

**स्वागमीति**। स्वागमी सुष्ठु आगमवान् न्यायोपार्जक इत्यर्थः, तथा सद्व्ययी सत्कार्य्ये व्ययशीलः जनः पात्रं, तस्य विपरीतकम् अपात्रम्, राजा अपात्रस्य सर्वं धनं हरेत् तत्र न दोषभाक् भवतीति शेषः॥६॥

**अधर्मशीलात् नृपतिः सर्वशः संहरेद्धनम्।**
**छलाद् बलाद् दस्युवृत्त्या परराष्ट्राद्धरेत् तथा॥७॥**

**अन्वयः**—नृपतिः अधर्मशीलात् धनं सर्वशः छलात् बलात् दस्युवृत्त्या हरेत् तथा परराष्ट्रात् हरेत्॥७॥

**व्याख्या**—नृपतिः = राजा, अधर्मशीलात् = पापिनो जनात्, धनम् = वित्तम्, सर्वशः = सर्वैः प्रकारैः, छलात् = कपटात्, बलात् = सामर्थ्यात्, वा = अथवा, दस्युवृत्त्या = लुण्ठनैः, हरेत् = बलादपहरेत्, तथा च = पुनः तेनैव प्रकारेण, परराष्ट्रात् = रिपुराज्यात्, हरेत् = हरणं कुर्यात्॥७॥

**हिन्दी**—राजा को चाहिए कि अधर्मी लोगों की सम्पूर्ण सम्पदा छल, बल या डकैती से भी छीन लेना चाहिए। इसी तरह दुश्मन राजे का भी धन हर लेना चाहिए॥७॥

**अधर्मेति**। नृपः अधर्मशीलात् जनात् धनं सर्वशः सर्वैः प्रकारैः छलात् बलात् दस्युवृत्त्या वा हरेत्, तथा परराष्ट्रात् शत्रुराज्यात् सर्वैः प्रकारैः हरेत् राजेति शेषः॥७॥

**त्यक्त्वा नीतिबलं स्वीयप्रजापीडनतो धनम्।**
**सञ्चितं येन तत्तस्य सराज्यं शत्रुसाद्भवेत्॥८॥**

**अन्वयः**—येन नीतिबलं त्यक्त्वा स्वीयप्रजापीडनतः धनं सञ्चितम्, तस्य तत् धनं सराज्यं शत्रुसात् भवेत्॥८॥

**व्याख्या**—येन = राज्ञा, नीतिबलम् = नयमार्गः, त्यक्त्वा = परित्यज्य, स्वीयप्रजापीडनम्—

स्वीयम् = स्वकीयम्, प्रजानाम् = जनानाम्, पीडनतः = क्लेशनात्, धनम् = अर्थम्, सञ्चितम् = सङ्ग्रहीतम्, तस्य = राज्ञः, तत् = पूर्वोक्तम्, धनम् = सम्पदम्, सराज्यम् = राज्यसहितम्, शत्रुसात् = रिपुकरगतम्, भवेत् = स्यात् ॥ ८ ॥

**हिन्दी**—जिसने नीतिबल छोड़कर अन्यायपूर्वक प्रजा को पीड़ित कर धन इकट्ठा किया है, उसका संचित धन राज्य के साथ शत्रुओं के हाथ में चला जाता है ॥ ८ ॥

**त्यक्त्वेति**। येन नीतिबलं त्यक्त्वा स्वीयप्रजानां पीडनतः पीडनात् धनं सञ्चितं, तस्य तत् धनं सराज्यं राज्यसहितं शत्रुसात् भवेत् शत्रुहस्तगतं भवेत् ॥ ८ ॥

**दण्डभूभागशुल्कानामाधिक्यात् कोशवर्द्धनम्।**
**अनापदि न कुर्वीत तीर्थदेवकरग्रहात् ॥ ९ ॥**

**अन्वयः**—अनापदि दण्डभूभागशुल्कानाम् आधिक्यात् तथा तीर्थदेवकरग्रहात् कोशवर्द्धनं न कुर्यात् ॥ ९ ॥

**व्याख्या**—अनापदि = विपत्कालाभावे, दण्डानाम् = दमनानाम्, भूभागानाम् = भूखण्डानाम्, शुल्कानाम् = कराणाम्, आधिक्यात् = प्राचुर्यात् बाहुल्याद्वा, तथा तीर्थदेवकरग्रहात्—तीर्थानाम् = धर्मस्थानानां काशीप्रयागादीनाम्, देवानाम् = रामेश्वरजगन्नाथादीनाम्, करस्य = देवदर्शनार्थराजस्वरूपधनस्य, ग्रहात् = सङ्ग्रहात्, कोशवर्द्धनम्—कोशस्य = निधेः, वर्द्धनम् = अभिवृद्धिम्, न = नहि, कुर्वीत = सम्पादयेदिति। अनापदीत्यभिधानादापत्काले ह्युपस्थिते तु एवं सङ्ग्रहणं कर्त्तव्यमिति भावः ॥ ९ ॥

**हिन्दी**—देश में आपत्काल नहीं रहने पर प्रजा के ऊपर अधिक जुर्माना, मालगुजारी या चुंगी लगाकर तथा तीर्थस्थान एवं देवोत्तर संपत्ति पर कर लगाकर राजा को अपना खजाना नहीं भरना चाहिए ॥ ९ ॥

**दण्डेति**। अनापदि अविपन्नावस्थायां दण्डानां भूभागानां शुल्कानाञ्च आधिक्यात् वृद्धिकरणात् तथा तीर्थानां पुण्यक्षेत्राणां गयादीनां देवानां जगन्नाथादीनां करस्य दर्शनादिषु देयत्वेन निर्दिष्टस्य धनस्य ग्रहात् ग्रहणात् कोशवर्द्धनं धनवृद्धिं न कुर्वीत राजेति शेषः। अनापदीत्यभिधानात् आपदि ग्रहणे न दोष इति सूचितम् ॥ ९ ॥

**यदा शत्रुविनाशार्थं बलसंरक्षणोद्यतः।**
**विशिष्टदण्डशुल्कादि धनं लोकात् तदा हरेत् ॥ १० ॥**

**अन्वयः**—यदा शत्रुविनाशार्थं च बलंसरक्षणाय उद्यतः तदा लोकात् विशिष्टदण्डशुल्कादि धनं हरेत् ॥ १० ॥

**व्याख्या**—यदा = यस्मिन् काले, शत्रुविनाशार्थम्—शत्रूणाम् = रिपूणाम्, विनाशार्थम् = विघाताय, बलसंरक्षणाय—बलानाम् = सैन्यानाम्, संरक्षणाय = गोपनाय, उद्यतः = तत्परो भवति, तदा, लोकात् = जनात्, विशिष्टम् = असामान्यम्, वर्द्धितम्, दण्डशुल्कादि = दण्डराजस्वादिकम्, धनम् = अर्थम्, हरेत् = आहरेदिति ॥ १० ॥

**हिन्दी**—आपत्काल (Emergency period) में शत्रुसंहार करने के लिए सेना की रक्षा के लिए राजा तत्पर हो, उस समय विशेष ढंग का अधिक जुर्माना या चुंगी लगाकर प्रजा से राजस्व की वसूली उचित है ॥ १० ॥

**यदेति।** यदा शत्रुविनाशार्थं बलानां सैन्यानां संरक्षणाय उद्यतः भवति, तदा लोकात् विशिष्टं वर्द्धितं दण्डशुल्कादि धनम् आहरेत् गृह्णीयात् ॥ १० ॥

**धनिकेभ्यो भृतिं दत्त्वा स्वापत्तौ तद्धनं हरेत्।**
**राजा स्वापत्समुत्तीर्णस्तत् स्वं दद्यात् सवृद्धिकम् ॥ ११ ॥**

**अन्वयः**—राजा स्वापत्तौ भृतिं दत्त्वा धनिकेभ्यः यत् धनं हरेत् स्वापत्समुत्तीर्णः तत् स्वं सवृद्धिकं दद्यात् ॥ ११ ॥

**व्याख्या**—राजा = भूभृत्, स्वापत्तौ—स्वस्य = आत्मनः, आपत्तौ = विपदि, भृतिम् = भरण्यम्, दत्त्वा = आश्वास्य, यत् = यत्किञ्चित्, धनम् = अर्थम्, हरेत् = सङ्गृह्णीयात्, स्वापत्समुत्तीर्णः—स्वस्य = स्वकीयराष्ट्रस्य, आपदः = विपदः, समुत्तीर्णः = पारङ्गतः सन्, तत् = पूर्वं गृहीतं तेभ्यः, स्वम् = धनम्, सवृद्धिकम् = वार्द्धुष्यसहितम्, दद्यात् = प्रत्यर्पयेत् ॥ ११ ॥

**हिन्दी**—'सूद सहित लिया गया धन लौटा दूँगा' ऐसा आश्वासन देकर आपत्काल में लिया गया धन राजा आपत्काल हटते ही सूद सहित धनिकों से लिया गया धन उन्हें लौटा दे ॥ ११ ॥

**धनिकेभ्य इति।** राजा स्वस्य आपत्तौ आपदि भृतिं वृद्धिं दत्त्वा दास्यामीति प्रतिज्ञायेत्यर्थः, धनिकेभ्यः यत् धनं हरेत् ऋणरूपेण गृह्णीयात्, स्वस्य आपदः समुत्तीर्णः सन् तत् स्वं धनं सवृद्धिकं वृद्धिसहितं दद्यात् तेभ्य इति शेषः ॥ ११ ॥

**प्रजान्यथा हीयते च राज्यं कोशो नृपस्तथा।**
**हीनाः प्रबलदण्डेन सुरथाद्या नृपा यतः ॥ १२ ॥**

**अन्वयः**—अन्यथा प्रजा राज्यं कोशः तथा नृपः प्रबलदण्डेन हीयते। यतः सुरथाद्याः नृपाः हीनाः ॥ १२ ॥

**व्याख्या**—अन्यथा = इतरथा, धनाभावात् सैन्यसंरक्षणेऽसमर्थो भूत्वा, प्रजा = जनाः, राज्यम् = राष्ट्रम्, कोशः = निधिः, तथा = तेनैव प्रकारेण, नृपः = राजा, प्रबलदण्डेन = सबलशत्रुणा, हीयते = हीनो भवति। यतः = यस्माद्धेतोः, सुरथाद्याः = सुरथप्रभतयः, नृपाः = राजानः, हीनाः = क्षीणाः, प्रबलदण्डेनाभवन् ॥ १२ ॥

**हिन्दी**—अन्यथा अर्थात् धनाभाव के कारण सेना की रक्षा करने में असमर्थ राजा प्रजा, राष्ट्र और कोश रहित हो जाता है। क्योंकि सबल शत्रु के कारण ही सुरथ प्रभृति राजे हीन अर्थात् राज्यच्युत हो गये ॥ १२ ॥

**टिप्पणी**—प्राचीन काल में स्वारोचिष मन्वन्तर में चैत्र वंश में उत्पन्न सुरथ नाम के एक राजा थे। समस्त भूमण्डल पर उनका अधिकार था। वे अपनी प्रजा का धर्मपूर्वक पालन करते थे। किन्तु सैन्यबल उनका कमजोर था। दक्षिण के 'कोला' नगरी के क्षत्रियों ने इन पर आक्रमण कर दिया। राजा सुरथ की दण्डनीति अतिप्रबल थी। शत्रुओं के साथ उन्होंने जम कर संग्राम किया। यद्यपि कोलाविध्वंसियों की सैन्यसंख्या इनसे कम थी, फिर भी युद्ध में उनसे पराजित होकर सुरथ अपनी राजधानी लौट आये। अब वे केवल अपने देशमात्र के राजा थे। यहाँ भी शत्रुओं ने उनका पीछा किया। राजा का बल क्षीण हो चुका था। मंत्रियों ने उनकी सेना और कोश अपना लिये। उनका प्रभुत्व नष्ट हो गया और वे अरण्यवासी बन गये ॥ १२ ॥

**प्रजेति**। अन्यथा धनाभावात् बलसंरक्षणे अकृते इत्यर्थः, प्रजा राज्यं कोशः धनं तथा नृपः प्रबलदण्डेन शत्रुणा हीयते, यतः सुरथाद्या अपि नृपाः हीनाः प्रबलदण्डेनेत्यपि अत्र योज्यम् ॥ १२ ॥

**दण्डभूभागशुल्कैस्तु विना कोशाद् बलस्य च।**
**संरक्षणं भवेत् सम्यग् यावद्विंशतिवत्सरम्।**
**तथा कोशस्तु सन्धार्य्यः स्वप्रजारक्षणक्षमः ॥ १३ ॥**

**अन्वयः**—दण्डभूभागशुल्कैः विना कोशात् यावद्विंशतिवत्सरं सम्यक् बलस्य संरक्षणं भवेत् तथा स्वप्रजारक्षणक्षमः कोशः सन्धार्यः ॥ १३ ॥

**व्याख्या**—दण्डभूभागशुल्कैः—दण्डैः = दमननीत्योपलब्धैः, भूभागैः = भूमिविभागोपलब्धैः, राजस्वैः, शुल्कैः = वाणिज्यादिलब्धकरैः, विना = विहाय, कोशात् = निधानात्, यावद्विंशतिवत्सरम् = विंशतिवर्षपर्यन्तम्, सम्यक् = सुष्ठुतया, बलस्य = सैन्यस्य, संरक्षणम् = गोपनम्, भवेत् = स्यात्, तथा = तेनैव रूपेण, स्वप्रजारक्षणक्षमः—स्वस्य = आत्मनः, प्रजानाम् = जनानाम्, रक्षणे = गोपने, क्षमः = समर्थः, कोशः = निधिः, सन्धार्यः = सुष्ठुतया सङ्ग्राह्यः ॥ १३ ॥

**हिन्दी**—बिना जुर्माना, मालगुजारी एवं चुंगी से प्राप्त धन के भी केवल राजा के खजाने से ही बीस वर्षों तक सेना की रक्षा ठीक ढंग से जितने से हो सके, मात्र उतने ही खजाने का अपनी प्रजा की रक्षा के लिए उपयुक्त धन का संग्रह राजा को करना चाहिए ॥ १३ ॥

**दण्डेति**। दण्डभूभागशुल्कैः दण्डैः दण्डलब्धैः भूभागैः भूमिविभागलब्धैः करैः तथा शुल्कैः वाणिज्यादिलब्धैः राजकरैः विना एतान् अगृहीत्वेत्यर्थः, कोशात् यादृशादिति शेषः, यावत् विंशतिवत्सरं विंशतिवर्षपर्य्यन्तं सम्यक् बलस्य सैन्यस्य संरक्षणं भवेत्, तथा तादृशः स्वप्रजानां रक्षणे क्षमः कोशः धनराशिः सन्धार्य्यः सञ्चेयः ॥ १३ ॥

**बलमूलो भवेत् कोशः कोशमूलं बलं स्मृतम्।**
**बलसंरक्षणात् कोशराष्ट्रवृद्धिररिक्षयः ॥ १४ ॥**

**अन्वयः**—कोशः बलमूलो भवेत्, बलञ्च कोशमूलं स्मृतम्। बलसंरक्षणात् कोशराष्ट्रवृद्धिः अरिक्षयः भवति ॥ १४ ॥

**व्याख्या**—कोशः = निधिः, बलमूलः—बलम् = सैन्यम्, मूलम् = आदिकारणम्, यस्य तथासौ, सैन्यसामर्थ्यादेव कोशसञ्चयो भवतीति भावः, बलम् = सैन्यञ्च, कोशमूलम्—कोशः = निधिश्च, मूलम् = हेतुभूतम्, यस्य तथाविधम्, स्मृतम् = कथितम्। बलसंरक्षणात्—बलानाम् = सैन्यानाम्, संरक्षणात् = गोपनात्, कोशराष्ट्रवृद्धिः—कोशस्य = निधानस्य, च = पुनः, राष्ट्रस्य = राज्यस्य, वृद्धिः = अभिवर्द्धनम्, अरिक्षयः = शत्रुहानिः, भवतीति भावः ॥ १४ ॥

**हिन्दी**—खजाने का मूल कारण सेना है, क्योंकि सेना के द्वारा ही कोश संचित होता है और सेना का मूलाधार कोश होता है, क्योंकि कोश से ही सेनां का संरक्षण होता है। सेना तथा कोश की रक्षा करने से कोश एवं राज्य की वृद्धि तथा शत्रुओं का नाश होता है ॥ १४ ॥

**बलमूल इति**। कोशः बलं मूलं यस्य तथाभूतः, बलानामेव सामर्थ्यात् कोशसञ्चय इति भावः, बलञ्च कोशमूलं धनमूलं स्मृतं धनेनैव तेषां रक्षणादिति भावः। बलानां संरक्षणात् कोशानां धनानां राष्ट्राणाञ्च वृद्धिः अरीणां शत्रूणां क्षयश्च भवतीति शेषः ॥ १४ ॥

**जायते तत् त्रयं स्वर्गः प्रजासंरक्षणेन वै ॥ १५ ॥**

**अन्वयः**—प्रजासंरक्षणेन तत् त्रयं च स्वर्गः वै जायते ॥ १५ ॥

**व्याख्या**—प्रजासंरक्षणेन—प्रजानाम् = जनानाम्, संरक्षणेन = सम्यग्रूपेण पालनेन, तत् = पूर्वोक्तम्, त्रयम् = कोशानां, राष्ट्राणाञ्च वृद्धिस्तथा शत्रुहानिः; एतत्त्रयम्, तथा स्वर्गः = अन्ते सुरलोकः; वै = इति निश्चयेन, जायते = प्राप्नोतीत्यर्थः ॥ १५ ॥

**हिन्दी**—प्रजा की रक्षा करने से पूर्वोक्त कोश और राज्य की वृद्धि तथा शत्रु का विनाश तो होता ही है, अन्त में स्वर्ग भी मिलता है ॥ १५ ॥

**जायते इति**। प्रजानां संरक्षणेन सम्यक् पालनेन तत् त्रयं कोशानां राष्ट्राणां वृद्धिररिक्षयश्च एतत् त्रयं सर्गश्च जायते वैशब्दोऽवधारणार्थः ॥ १५ ॥

**यज्ञार्थं द्रव्यमुत्पन्नं यज्ञः स्वर्गसुखायुषे।**
**अर्य्यभावो बलं कोशो राष्ट्रवृद्ध्यै त्रयं त्विदम् ॥ १६ ॥**

**अन्वयः**—यज्ञार्थं द्रव्यम् उत्पन्नं, यज्ञः स्वर्गसुखायुषे अर्यभावः बलं कोशः राष्ट्रवृद्ध्यै तु इदं त्रयम् ॥ १६ ॥

**व्याख्या**—यज्ञार्थम् = यागनिमित्ताय, द्रव्यम् = धनम्, उत्पन्नम् = उद्भूतम्, यज्ञः = क्रतुः, स्वर्गाय = देवलोकाय, सुखाय = सुखप्राप्त्यर्थम्, आयुषे = दीर्घजीवनाय च भवति, अर्यभावः—अरीणाम् = शत्रूणाम्, अभावः = अविद्यमानता, बलम् = सैन्यम्, कोशः = निधिः, इदम् = एतत्, त्रयम् = त्रिसंख्यकम्, तु, राज्यसंवर्द्धनाय भवतीति भावः ॥ १६ ॥

**हिन्दी**—यज्ञ के लिए धन उत्पन्न हुआ है और यज्ञ स्वर्गसुख एवं आयुवृद्धि के लिए है तथा शत्रु का अभाव, सेना एवं कोश—ये तीनों राष्ट्र की वृद्धि के लिए हैं ॥ १६ ॥

**यज्ञार्थमिति**। यज्ञार्थं यागानुष्ठानार्थं द्रव्यं धनम् उत्पन्नं यज्ञः स्वर्गाय सुखाय, आयुर्वर्द्धनाय च भवति। अर्य्यभावः शत्रोरभावः बलं सैन्यं कोशः धनम् इदं त्रयन्तु राष्ट्रस्य वृद्ध्यै भवतीति शेषः ॥ १६ ॥

**तद् वृद्धिर्नीतिनैपुण्यात् क्षमाशीलनृपस्य च।**
**जायतेऽतो यतेतैव यावत् बुद्धिबलोदयम् ॥ १७ ॥**

**अन्वयः**—क्षमाशीलस्य नृपस्य नीतिनैपुण्यात् तत् वृद्धिः जायते। अतः यावत् बुद्धिबलोदयं यतेत एव ॥ १७ ॥

**व्याख्या**—क्षमाशीलस्य = क्षमावतः, नृपस्य = राज्ञः, नीतिनैपुण्यात् = नयकौशल्यात्, तत् = पूर्वोक्तानाम् अर्य्यभावादीनाम्, वृद्धिः = अभिवर्द्धनम्, जायते = भवति। अतः = अस्माद्धेतोः, यावत् = यावत्पर्यन्तम्, बुद्धिबलोदयम्—बुद्धेः = प्रज्ञायाः, बलस्य = सैन्यबलस्य, उदयः = ऊर्ध्वगमनम्, तावत्, यतेत = प्रयत्नं कुर्यादेवेति ॥ १७ ॥

**हिन्दी**—क्षमाशील राजा अपनी नीतिकुशलता के कारण ही किसी से वैरभाव मिटाता है, सेना और कोश बढ़ता है। अतः जहाँ तक बुद्धिबल का प्रयोग किया जा सकता है, इन तीनों को बढ़ाते रहना चाहिए ॥ १७ ॥

**तदिति**। क्षमाशीलस्य नृपस्य नीतिनैपुण्यात् तद् वृद्धिः तेषाम् अर्य्यभावादीनां वृद्धिः

जायते, अतः अस्मात् कारणात् यावत् बुद्धिबलोदयं बुद्धिबलोदयानुसारेण यतेत एव तद्वृद्धये इति शेषः॥ १७ ॥

मालाकारस्य वृत्त्यैव स्वप्रजारक्षणेन च।
शत्रुं हि करदीकृत्य तद्धनैः कोशवर्द्धनम्॥ १८॥
करोति स नृपश्रेष्ठो मध्यमो वैश्यवृत्तितः।
अधमः सेवया दण्डतीर्थदेवकरग्रहैः॥ १९॥

**अन्वयः**—यः मालाकारस्य वृत्त्या इव स्वप्रजारक्षणेन शत्रुं हि करदीकृत्य तद्धनैः कोशवर्द्धनं करोति सः नृपश्रेष्ठः। यः वैश्यवृत्तितः मध्यमः, अधमः सेवया दण्डतीर्थदेवकरग्रहैः॥ १८-१९ ॥

**व्याख्या**—यः = नृपः, मालाकारवृत्त्या—मालाकारस्य = उद्यानपालस्य, वृत्त्या = प्रकृत्या, इव = यथा, स्वप्रजारक्षणेन—स्वस्य = आत्मनः, प्रजानाम् = जनानाम्, रक्षणेन = गोपनेन, शत्रुम् = रिपुम्, करदीकृत्य—अकरदान् = राजस्वादातृणि, करदान् = राजस्वदातृणि, कृत्वा = विधाय, अधीनीकृत्य, तत् = तस्य, धनैः = अर्थैः, कोशवर्द्धनं करोति = सम्पादयति, सः = एवंविधः, नृपश्रेष्ठः = राजसूत्तमः। यः वैश्यवृत्तितः = वणिग्वृत्त्या, कोशवर्द्धनं करोति, सः मध्यमः = सामान्यराजा भवति, अधमस्तु = नीचस्तु, सेवया = सेवकत्वेन, दण्डतीर्थदेवकरग्रहैः—दण्डेन = दमनदेयराशिना, तीर्थेण = तीर्थदेयोत्करेण, देवेन = देवदर्शनदेयधनेन, कराणाम् = राजस्वानाम्, ग्रहैः = ग्रहणैः, कोशवर्द्धनं करोतीति॥ १८-१९ ॥

**हिन्दी**—जो राजा माली की तरह व्यवहार रखकर प्रजा की रक्षा करते हुए शत्रु राजा को कर देने वाला बनाकर उसके दिये राजस्व से अपना खजाना बढ़ाता है, वह राजाओं के बीच श्रेष्ठ राजा कहलाता है। जो वणिक् वृत्ति से अपना खजाना भरता है, वह मध्यम कोटि का राजा कहलाता है तथा जो सेवा से, जुर्माना से, तीर्थस्थान एवं देवालय पर टैक्स लगाकर अपना खजाना भरता है, वह अधम कोटि का राजा कहलाता है॥ १८-१९ ॥

**मालाकारस्येति। करोतीति।** यः मालाकारस्य वृत्त्या व्यवहारेण इव स्वप्रजारक्षणेन शत्रुं करदीकृत्य अकरदान् करदान् कृत्वा अधिनीकृत्येत्यर्थः, तस्य धनैः कोशवर्द्धनं करोति, सः नृपश्रेष्ठः। यः वैश्यवृत्तितः व्यवसायादिना इत्यर्थः, कोशवर्द्धनं करोति स मध्यमः, अधमः सेवया भृत्यभावेन दण्डदेयानां तीर्थदेयानां देवदर्शनदेयानां कराणां ग्रहैः ग्रहणैः कोशवर्द्धनं करोतीत्यर्थः॥ १८-१९ ॥

प्रजा हीनधना रक्ष्या भृत्या मध्यधनाः सदा।
यथाधिकृत् प्रतिभुवोऽधिकद्रव्यास्तथोत्तमाः॥ २०॥

**अन्वयः**—हीनधनाः तथा मध्यधनाः प्रजाः भृत्याः सदा रक्ष्याः। अधिकद्रव्याः उत्तमास्तु अधिकृत् यथा प्रतिभुवः॥ २० ॥

**व्याख्या**—हीनधनाः = धनहीनाः, तथा मध्यधनाः = सामान्याः, प्रजाः = जनाः, भृत्याः = कर्मण्याः, दत्वा, सदा = सर्वदा, रक्ष्याः = पालनीयाः। अधिकद्रव्याः = सधनाः, उत्तमाः = श्रेष्ठाः, प्रजाः = जनाः, तु, अधिकृत् यथा = अधिकारीव, प्रतिभुवः = लग्नकः, दत्वा पालनीयेति भावः॥ २० ॥

**हिन्दी**—धनहीन एवं सामान्य प्रजा की रक्षा एक स्वामी की तरह राजा को करनी चाहिए तथा धनी एवं श्रेष्ठ प्रजा का संरक्षण एक जिम्मेदार व्यक्ति की तरह करना चाहिए ॥ २० ॥

**प्रजेति**। हीनधनाः तथा मध्यधनाः प्रजाः भृत्या वेतनादिना सदा रक्ष्याः पालनीयाः, अधिकद्रव्याः महाधनाः उत्तमास्तु प्रजाः अधिकृत् प्रभुर्यथा स्वामीव प्रतिभुवः कृत्वा रक्ष्याः राज्ञेति शेषः ॥ २० ॥

**धनिकाश्चोत्तमधना न हीना नाधिका नृपैः ॥ २१ ॥**

**अन्वयः**—उत्तमधनाः धनिकाः नृपैः न हीनाः न च अधिकाः ॥ २१ ॥

**व्याख्या**—उत्तमधनाः = अतिधनवन्तो जनाः, धनिकाः = धनिनः, नृपैः = राज्ञैः, न = नहि, हीनाः = न्यूनाः, न च अधिकाः = विशिष्टाः, इति ज्ञेयाः ॥ २१ ॥

**हिन्दी**—क्योंकि अत्यन्त वैभवशाली धनी प्रजा न तो राजा से कम या अधिक अर्थात् राजतुल्य होती है ॥ २१ ॥

**धनिका इति**। उत्तमधना धनिकाः धनवन्तश्च नृपैः न हीनाः न च अधिकाः नृपतुल्या इत्यर्थः, भवन्तीति शेषः ॥ २१ ॥

**द्वादशाब्दप्रपूरं यद्धनं तन्नीचसंज्ञकम्।**
**पर्य्याप्तं षोडशाब्दानां मध्यमं तद्धनं स्मृतम्।**
**त्रिंशदब्दप्रपूरं यत् कुटुम्बस्योत्तमं धनम् ॥ २२ ॥**

**अन्वयः**—यत् धनं कुटुम्बस्य द्वादशाब्दप्रपूरं तत् नीचसंज्ञकम्, यत् षोडशाब्दानां पर्याप्तं तत् धनं मध्यमम्, यच्च त्रिंशदब्दप्रपूरं तत् उत्तमं स्मृतम् ॥ २२ ॥

**व्याख्या**—यद्धनम् = या सम्पद्, कुटुम्बस्य = परिजनस्य, द्वादशाब्दप्रपूरम् = द्वादशाब्द-पर्यन्तविनियोगोपयुक्तम्, तत् = धनम्, नीचसंज्ञकम् = अधमाख्यं भवति। यत् = धनम्, षोडशाब्दानाम् = षोडशवर्षपर्यन्तानाम्, पर्याप्तम् = विनियोगार्थमुपपन्नम्, तत् = पूर्वोक्तम्, धनम् = वित्तम्, मध्यमम् = सामान्यस्तरीयं भवति, यच्च = पुनः, यद्धनम् = वित्तम्, त्रिंशदब्दप्रपूरम् = त्रिंशद्वर्षपर्यन्तव्ययोपयुक्तम्, तत् = धनम्, उत्तमम् = श्रेष्ठं धनम्, स्मृतम् = कथितम् ॥ २२ ॥

**हिन्दी**—जो धन परिवार की रक्षा करने में केवल बारह साल तक ही सक्षम है, वह नीच धन है। जो धन सोलह साल तक परिवार की रक्षा कर सकता है और जो कम-से-कम तीस साल तक परिवार का पोषण कर सकता है, उसे उत्तम धन कहते हैं ॥ २२ ॥

**द्वादशेति**। यत् धनं कुटुम्बस्य परिवारस्य द्वादशाब्दप्रपूरं द्वादशवर्षव्ययोपयुक्तं तद् नीचसंज्ञकम् अधममित्यर्थः, यत् षोडशाब्दानां पर्य्याप्तं व्ययोपयुक्तं तत् मध्यमं, यच्च त्रिंशदब्दप्रपूरं त्रिंशद्वत्सरव्ययोपयुक्तं तत् उत्तमं स्मृतम् ॥ २२ ॥

**क्रमादर्थं रक्षयेद् वा स्वापत्तौ नृप एषु वै ॥ २३ ॥**

**अन्वयः**—नृपः स्वापत्तौ एषु वै क्रमात् अर्थं वा रक्षयेत् ॥ २३ ॥

**व्याख्या**—नृपः = राजा, स्वापत्तौ—स्वस्य = आत्मनः, आपत्तौ = विपत्काले, एषु = पूर्वोक्तेषु धनिकेषु, क्रमात् = अनुक्रमेण, अर्थम् = धनम्, वा नाम विकल्पेन, रक्षयेत् = स्थापयेदिति ॥ २३ ॥

**हिन्दी**—अपने ऊपर आपत्ति आने पर राजा ऊपरवर्णित नीचादि क्रम से इन सबों के पास रक्षा के लिए रख दे॥ २३॥

**क्रमादिति**। नृपः स्वस्य आपत्तौ आपदि एषु पूर्वोक्तेषु धनिकेषु क्रमात् अर्थं रक्षयेत् स्थापयेत् वा वाशब्दः विकल्पार्थः॥ २३॥

**मूलैर्व्यवहरन्त्यर्घैर्न वृद्ध्या वणिजः क्वचित्।**
**विक्रीणन्ति महार्घे तु हीनार्घे सञ्चयन्ति हि॥ २४॥**

**अन्वयः**—वणिजः क्वचित् अर्द्धैः मूलैः व्यवहरन्ति, न वृद्ध्या। किञ्च महार्घे विक्रीणन्ति, हीनार्थे हि सञ्चयन्ति॥ २४॥

**व्याख्या**—वणिजः = उद्यमिनः, क्वचित् = कुत्रापि, अर्घैः = मूल्यैः, मूलैः = मूलधनैः, व्यवहरन्ति = व्यवसायं सञ्चारयन्ति। न = नहि, वृद्ध्या = लाभहेतुना, किञ्च महार्घे = महामूल्ये, विक्रीणन्ति = विपणयन्ति, हीनार्थे = अल्पमूल्ये, सञ्चयन्ति = सङ्ग्रहं कुर्वन्ति॥ २४॥

**हिन्दी**—व्यापारी मूल्यभूत मूल धन से व्यापार करते हैं, केवल सूद पर ही अपना सारा धन नहीं लगाते। मंहगी में अपनी वस्तु बेचते हैं और सस्ती आने पर अपनी वस्तु संचित करते हैं॥ २४॥

**मूलैरिति**। वणिजः व्यवसायिनः क्वचित् कदाचित् अर्घैः मूल्यभूतैः मूलैः मूलधनैः व्यवहरन्ति क्रयविक्रयव्यवहारान् कुर्वन्ति, न वृद्ध्या न लाभेनेत्यर्थः। किञ्च महार्घे महामूल्ये विक्रीणन्ति, हीनार्थे अल्पमूल्ये सञ्चयन्ति क्रीणन्तीत्यर्थः, हिशब्दश्चावधारणार्थः॥ २४॥

**व्यवहारे धृतं वैश्यैस्तद्धनेन विना सदा।**
**अन्यथा स्वप्रजातापो नृपं दहति सान्वयम्॥ २५॥**

**अन्वयः**—व्यवहारे वैश्यैः धृतं तत् धनेन विना सदा अन्यथा स्वप्रजातापः सान्वयं नृपं दहति॥ २५॥

**व्याख्या**—व्यवहारे = क्रयविक्रयार्थम्, वैश्यैः = वणिग्भिः, धृतम् = सञ्चितम्, यत् = वस्तु, तत् = विक्रेयम्, धनेन = मूल्येन, विना = अदत्त्वा, सदा = कथमपि, कदापि न नेतव्यम्, अन्यथा = इतरथा, स्वप्रजातापः—स्वस्य = आत्मनः, प्रजानां = जनानाम्, तापः = मानसिकपीडा, सान्वयम् —अन्वयेन = समस्तेन वंशेन, सहितम् = युक्तम्, नृपम् = भूपतिम्, दहति = सन्तापयति॥ २५॥

**हिन्दी**—क्रय-विक्रय के लिए बनिये की वस्तु की कीमत चुकाये बिना राजा को नहीं लेना चाहिए। अगर राजा ऐसा करता है तो प्रजा के मन में राजा के विरुद्ध धधकती आग उसे सम्पूर्ण खानदान के साथ विनष्ट कर देती है॥ २५॥

**व्यवहारे इति**। व्यवहारे वाणिज्यायेत्यर्थः, यत् वैश्यैः वणिग्भिः धृतं वस्तु तद् धनेन मूल्येन विना सदा कदाचिदपीत्यर्थः, न ग्रहणीयं बलात् राज्ञेति पदत्रयमध्याहार्य्यम्। अन्यथा बलात् हरणे इत्यर्थः, स्वस्य प्रजानां वणिजामित्यर्थः, तापः मनःक्षोभः सान्वयं सवंशं नृपं दहति॥ २५॥

**धान्यानां सङ्ग्रहः कार्य्यो वत्सरत्रयपूर्त्तिदः।**
**तत्तत्काले स्वराष्ट्रार्थं नृपेणात्महिताय च।**
**चिरस्थायी समृद्धानामधिको वापि चेष्यते॥ २६॥**

**अन्वयः**—नृपेण आत्महिताय च स्वराष्ट्रार्थं तत्तत्काले वत्सरत्रयपूर्त्तिदः धान्यानां सङ्ग्रहः कार्यः। वापि समृद्धानां चिरस्थायी अधिकः च इष्यते ॥ २६ ॥

**व्याख्या**—नृपेण = राज्ञा, आत्महिताय—आत्मनः = स्वस्य, हिताय = लाभाय, च = पुनः, स्वराष्ट्रार्थम्—स्वस्य = आत्मनः, राष्ट्रार्थम् = राज्याय, तत्तत्काले = यथावसरे, वत्सरत्रयपूर्त्तिदः = वर्षत्रयपर्यन्तव्यवहारोपयुक्तः, धान्यानाम् = अन्नानाम्; सङ्ग्रहः = सञ्चयः, कार्यः = विधेयः, वा = अथवा, अपि = चेत्, समृद्धानाम् = सम्पत्तिशालिनाम्, चिरस्थायी = बहुकालपर्यन्त-स्थितिशीलम्, अधिकः = ततोऽपि बहुलम्, धान्यसङ्ग्रहः, इष्यते = करणीयमिति ॥ २६ ॥

**हिन्दी**—राजा को अपने लाभ के लिए तथा राज्य की रक्षा के लिए यथावसर तीन साल तक खाने योग्य अन्नों का संग्रह करना चाहिए और सम्पन्न लोगों को उससे भी अधिक काल तक काम चलने लायक अधिक अन्न का संग्रह करना चाहिए ॥ २६ ॥

**धान्यानामिति**। नृपेण आत्महिताय स्वस्य राष्ट्ररक्षार्थं तत्तत् काले यथायथसमये वत्सरत्रयपूर्त्तिदः त्रिवर्षव्ययोपयुक्तः धान्यानां सङ्ग्रहः सञ्चयः कार्य्यः। वापि अपि वा अथवा इत्यर्थः, समृद्धानाम् ऐश्वर्य्यशालिनां चिरस्थायी ततोऽपि अधिककालस्थायी अधिकः धान्यसङ्ग्रहः इष्यते ॥ २६ ॥

**सुपुष्टं कान्तिमज्जातिश्रेष्ठं शुष्कं नवीनकम्।**
**ससुगन्धवर्णरसं धान्यं संवीक्ष्य रक्षयेत्।**
**सुसमृद्धं चिरस्थायि महार्घमपि नान्यथा ॥ २७ ॥**

**अन्वयः**—सुपुष्टं कान्तिमत् जातिश्रेष्ठं शुष्कं नवीनकं ससुगन्धवर्णरसं सुसमृद्धं चिरस्थायि संवीक्ष्य महार्घमपि रक्षयेत्, अन्यथा न ॥ २७ ॥

**व्याख्या**—सुपुष्टम् = सम्यक्पोषितम्, कान्तिमत् = दीप्तिमत् उज्ज्वलं वा, जातिश्रेष्ठम् = उत्कृष्टप्रकारः, शुष्कम् = निरुदकम्, नवीनकम् = नूतनम्, ससुगन्धवर्णरसम्—ससुगन्धम् = सौरभयुक्तम्, सवर्णम् = सुकान्तियुतम्, सरसम् = आस्वादयुक्तम्, सुसमृद्धम् = सुसम्पन्नम्, चिरस्थायि = सुदीर्घकालेऽपि स्थितिशीलः, संवीक्ष्य = अवलोक्य परीक्ष्य च, महार्घमपि = बहुमूल्यमपि, रक्षयेत् = सञ्चयेत्, अन्यथा = एतद्भिन्ने, न = नहि, सञ्चयेदिति ॥ २७ ॥

**हिन्दी**—अच्छी तरह पका हुआ, स्वच्छ, अच्छी किस्म का, सूखा हुआ, नया, सुगन्धित, देखने में सुपुष्ट, आस्वादयुक्त, सुन्दर तथा टिकाऊ दानें देखकर किमती होने के बावजूद इनका संग्रह करना उचित है। अगर ऐसे अन्न न मिले तो उनका संग्रह करना उचित नहीं है ॥ २७ ॥

**सुपुष्टमिति**। सुपुष्टं कान्तिमत् उज्ज्वलं जातिश्रेष्ठम् उत्कृष्टजातिकं शुष्कं नवीनकं नूतनं ससुगन्धवर्णरसं सौरभवर्णरसयुक्तं सुसमृद्धं सुचारु चिरस्थायी सुदीर्घकालेऽपि अनश्वरमित्यर्थः, संवीक्ष्य सम्यक् परीक्ष्य महार्घं महामूल्यमपि रक्षयेत्, अन्यथा एतद्वैपरीत्ये न ॥ २७ ॥

**विषवह्निहिमव्याप्तं कीटजुष्टं न धारयेत्।**
**निःसारतां न हि प्राप्तं व्यये तावन्नियोजयेत् ॥ २८ ॥**

**अन्वयः**—विषवह्निहिमव्याप्तं कीटजुष्टं न धारयेत्। निःसारतां प्राप्तं व्यये तावत् न नियोजयेत् ॥ २८ ॥

**व्याख्या**—विषेण = हालाहलेन, वह्निना = अग्निना, हिमेन = तुषारेण, व्याप्तम् = अन्तः प्रसृतम्, स्वत्वहीनं मृतम्, कीटजुष्टम् = कृमिव्याप्तम्, न = नहि, धारयेत् = सञ्चयेत्। किञ्च निःसारताम् = असारत्वं प्राप्ते सति, व्यये = व्यवहारे, तावत्, धान्यम् = एवंविधान्नम्, न = नहि, नियोजयेत = संयोजयेत् ॥ २८ ॥

**हिन्दी**—जहरीले, आग और पाले से प्रदूषित तथा कीड़ाखोरी के शिकार वाले अनाजों का संग्रह नहीं करना चाहिए और जब तक ये अनाज खोखले न हो जाय तभी तक व्यवहार में लाना चाहिए ॥ २८ ॥

**विषेति**। विषेण गरलेन वह्निना अग्निना हिमेन च व्याप्तं प्राप्तं कीटजुष्टं कीटाक्रान्तञ्च न धारयेत्, किञ्च निःसारताम् असारतां प्राप्तम् असारमित्यर्थः, धान्यं व्यये न नियोजयेत् ॥ २८ ॥

**व्ययीभूतं तु यद् दृष्ट्वा तत्तुल्यं तु नवीनकम्।**
**गृह्णीयात् सुप्रयत्नेन वत्सरे वत्सरे नृपः ॥ २९ ॥**

**अन्वयः**—यत् व्ययीकृतं तत् दृष्ट्वा नृपः तत्तुल्यं नवीनकं वत्सरे वत्सरे सुप्रयत्नेन गृह्णीयात् ॥ २९ ॥

**व्याख्या**—यत् = धान्यम्, व्ययीकृतम् = विसर्जितम्, तत् = उत्सर्जनम्, दृष्ट्वा = अवलोक्य, नृपः = राजा, तत्तुल्यम् = तत्सदृशमेव, नवीनकम् = अभिनवमन्नम्, वत्सरे वत्सरे = प्रतिवर्षम्, सुप्रयत्नेन = प्रयासपूर्वकेण, गृह्णीयात् = सङ्ग्रहं कुर्यात् ॥ २९ ॥

**हिन्दी**—राजा जितना अनाज हर साल खर्च करे, उतना नया अनाज पुनः संग्रह कर ले ॥ २९ ॥

**व्ययीभूतमिति**। यत् व्ययीकृतं तत् दृष्ट्वा राजा तत्तुल्यं तत्सदृशं नवीनकं नूतनं वत्सरे वत्सरे प्रतिवर्षं सुप्रयत्नेन गृह्णीयात् ॥ २९ ॥

**ओषधीनां च धातूनां तृणकाष्ठादिकस्य च।**
**यन्त्रशस्त्रास्त्राग्निचूर्णभाण्डादेर्वाससां तथा ॥ ३० ॥**
**यद्यच्च साधकं द्रव्यं यद्यत्कार्य्ये भवेत् सदा।**
**सङ्ग्रहस्तस्य तस्यापि कर्त्तव्यः कार्य्यसिद्धिदः ॥ ३१ ॥**

**अन्वयः**—ओषधीनां च धातूनां तृणकाष्ठादिकस्य च यन्त्रशस्त्रास्त्राग्निचूर्णभाण्डादेः तथा वाससां यत् यत् साधकं द्रव्यं सदा कार्ये भवेत्, तस्य तस्यापि कार्यसिद्धिदः सङ्ग्रहः कर्त्तव्यः ॥ ३०-३१ ॥

**व्याख्या**—ओषधीनाम् = अन्नशाकादीनाम्, च = पुनः, धातूनाम् = गैरिकादिखनिज-भेदानाम्, तृणकाण्ठादिकस्य = नालदारुप्रभृतीनाम्, यन्त्राणाम् = उपकरणानाम्, शस्त्राणाम् = प्रहरणानाम्, अस्त्राणाम् = आयुधानाम्, अग्निचूर्णानाम् = शतघ्नीनाम्, भाण्डादीनाम् = भाजनानाम्, च = पुनः, वाससाम् = परिधानानाम्, यत् यत् साधकम् = सिद्धिकरम्, द्रव्यम् = सामग्री, सदा = सर्वदा, कार्ये = कृत्ये, भवेत् = कार्यसम्पादनार्थं भवति, तस्य तस्य = तत्तत्, अपि = चेत्, कार्यसद्धिदः = कार्यसम्पादकः, सङ्ग्रहः = सञ्चयः, कर्त्तव्यः = विधेयः ॥ ३०-३१ ॥

**हिन्दी**—खाद्य पदार्थ, खनिज पदार्थ, तृण, काष्ठ, मशीन, हथियार, तोप, बारुद, बरतन तथा वस्त्र—इनमें जिन कार्यों के लिए जो उपयोगी हैं, समय पर कार्यसिद्धि हेतु उन आवश्यक वस्तुओं का संग्रह करना राजा के लिए उचित है ॥ ३०-३१ ॥

**ओषधीनामिति। यदिति।** ओषधीनां धान्यादीनां धातूनां तेजसानां खनिजद्रव्याणामित्यर्थः, तृणकाष्ठादिकस्य, यन्त्राणां शस्त्राणाम् अस्त्राणाम् अग्निचूर्णानां भाण्डादेः स्थाल्यादेः तथा वाससां वस्त्राणां मध्ये यत् यत् साधकं कार्य्योपयोगीत्यर्थः, यत् यच्च द्रव्यं सदा कार्य्ये भवेत् कार्य्यसाधनार्थं भवति, तस्य तस्य अपि कार्य्यसिद्धिदः सङ्ग्रहः सञ्चयः कर्त्तव्यः ॥ ३०-३१ ॥

**संरक्षयेत् प्रयत्नेन सङ्गृहीतं धनादिकम्।**
**आर्जने तु महद् दुःखं रक्षणे तच्चतुर्गुणम्॥ ३२॥**

**अन्वयः**—सङ्गृहीतं धनादिकं प्रयत्नेन संरक्षयेत्। आर्जने तु महत् दुःखं, तद्रक्षणे चतुर्गुणम् ॥ ३२ ॥

**व्याख्या**—सङ्गृहीतम् = सञ्चितम्, धनादिकम् = सम्पदम्, प्रयत्नेन = सयत्नेन, संरक्षयेत् = रक्षां कुर्यात्। आर्जने = धनोपार्जने, तु = किन्तु, महत् = अत्यधिकम्, दुःखम् = कष्टं भवति, तस्य = अर्जितधनस्य, रक्षणे = गोपने, चतुर्गुणम्, दुःखं भवतीति भावः ॥ ३२ ॥

**हिन्दी**—संग्रहीत धन की रक्षा प्रयासपूर्वक करनी चाहिए। क्योंकि धन संग्रह करने में घोर कष्ट उठाना पड़ता है और उसकी रक्षा में उससे चार गुना अधिक कष्ट होता है ॥ ३२ ॥

**संरक्षयेदिति।** सङ्गृहीतं धनादिकं प्रयत्नेन संरक्षयेत्, आर्जने उपार्जने तु महत् दुःखम् अस्ति, परं रक्षणे तस्य आर्जनदुःखस्य चतुर्गुणं दुःखं भवतीति शेषः ॥ ३२ ॥

**क्षणं चोपेक्षितं यत्तद्विनाशं द्राक् समाप्नुयात्॥ ३३॥**

**अन्वयः**—यत् क्षणम् उपेक्षितं तत् द्राक् विनाशं समाप्नुयात् ॥ ३३ ॥

**व्याख्या**—यत् = सम्पद्, क्षणम् = क्षणमात्रमपि, उपेक्षितम् = अवधीरितम्, तत् = सम्पद्, द्राक् = झटिति, विनाशम् = निर्मूलनम्, समाप्नुयात् = प्राप्नुयात् ॥ ३३ ॥

**हिन्दी**—एक पल भी जिस धन की रक्षा की उपेक्षा की जाती है, वह धन शीघ्र समाप्त हो जाता है ॥ ३३ ॥

**क्षणमिति।** यत् धनं क्षणम् उपेक्षितं, तत् द्राक् झटिति विनाशं समाप्नुयात् ॥ ३३ ॥

**आर्जकस्यैव दुःखं स्यात् तथार्जितविनाशने।**
**स्त्रीपुत्राणामपि तथा नान्येषां तु कथं भवेत्॥ ३४॥**

**अन्वयः**—आर्जकस्य दुःखं तथा अर्जितविनाशने दुःखं स्यात्। स्त्रीपुत्राणामपि तथा अन्येषां तु कथं न भवेत्? ॥ ३४ ॥

**व्याख्या**—आर्जकस्य = उपार्जनकर्त्तुः जनस्य, उपार्जने, दुःखम् = कष्टम्, भवतीति शेषः, तथा = तेनैव प्रकारेण, अर्जितस्य = उपार्जितधनस्य, विनाशने = विध्वंसेऽपि, दुःखम् = कष्टम्, स्यात् = भवेत्। स्त्रीपुत्राणाम् = पत्नीपुत्राणाम्, अपि = चेत्, यथा दुःखम् = पीडा भवेत्, तथैव, अन्येषाम् = अपराणां वस्तूनाम्, विनाशनेऽपि, कथं न = नहि, दुःखम्, भवेत् = स्यात् ॥ ३४ ॥

**हिन्दी**—धन अर्जित करने में उपार्जित करने वाले को उतना ही या वैसे ही कष्ट होता है जैसे धन के विनष्ट होने पर। पत्नी और पुत्र के विनष्ट होने पर यदि कष्ट होता है तो फिर अन्य वस्तुओं के विनष्ट होने पर क्यों न कष्ट हो? ॥ ३४ ॥

**आर्जकस्येति**। आर्जकस्य उपार्जकस्य अर्जने इति शेषः, दुःखं तथा अर्जितस्य विनाशनेऽपि दुःखं स्यात्। स्त्रीपुत्राणामपि विनाशेन यथा दुःखं भवेत् तथा अन्येषां वस्तूनां विनाशनेऽपि कथं न भवेत् अपि तु भवेदेवेत्यर्थः ॥ ३४ ॥

**स्वकार्य्ये शिथिलो यः स्यात् किमन्ये न भवन्ति हि।**
**जागरूकः स्वकार्य्ये यस्तत् सहायाश्च तत्समाः ॥ ३५ ॥**

**अन्वयः**—यः स्वकार्ये शिथिलः स्यात्, अन्ये किं न भवन्ति? यः स्वकार्ये जागरूकः तत् सहायाः तत्समाः ॥ ३५ ॥

**व्याख्या**—यः = जनः, स्वकार्ये—स्वस्य = आत्मनः, कार्ये = करणीये, शिथिलः = उदासीनः, स्यात् = भवेत्, तस्य अन्ये = सहायकाः, किं = कथम्, न = नहि, श्लथाः, भवन्ति = जायन्ते? यः = पुरुषः, स्वकार्ये = आत्मकृत्ये, जागरूकः = सावधानः, तत् = तस्य, सहायाः = अनुगामिनः, तत् = तस्य, समाः = सदृशाः भवन्ति ॥ ३५ ॥

**हिन्दी**—जो व्यक्ति अपने कार्य में आप उदासीन हो तो फिर उसके काम में उनके सहायक क्यों न उदासीन हो? जो व्यक्ति अपने काम में स्वयं जागरूक होता है, उनके सहायक भी उन्हीं की तरह कार्यतत्पर होते हैं ॥ ३५ ॥

**स्वकार्य्ये इति**। यः स्वस्य कार्य्ये शिथिलः अलसः स्यात् तस्य अन्ये अनुगामिनो लोकाः किं कथं शिथिलाः न भवन्ति? अपितु भवन्त्येव। यः स्वकार्य्ये जागरूकः अशिथिल इत्यर्थः, तस्य सहायाश्च तस्य समाः कार्य्यतत्पराः भवन्तीत्यर्थः ॥ ३५ ॥

**यो जानात्यर्जितुं सम्यगर्जितं न हि रक्षितुम्।**
**नातः परतरो मूर्खो वृथा तस्यार्जनश्रमः ॥ ३६ ॥**

**अन्वयः**—यः अर्जितुं जानाति, अर्जितं सम्यक् रक्षितुं न; अतः परतरः मूर्खो न हि। तस्य अर्जनश्रमः वृथा ॥ ३६ ॥

**व्याख्या**—यः = पुरुषविशेषः, अर्जितुम् = धनोपार्जनं कर्त्तुम्, जानाति = वेत्ति, अर्जितम् = उपार्जितं धनम्, सम्यक् = सुष्ठुतया, रक्षितुम् = रक्षाकर्तुं, न = नहि, जानाति, अतः = अनेन कारणेन, अस्मात् = एवंविधाज्जनात्, परतरः = श्रेष्ठतरः, मूर्खः = अज्ञः नास्ति। यतः, तस्य = एवंविधजनस्य, अर्जनश्रमः = धनोपार्जने कृतः परिश्रमः, वृथा = निष्प्रयोजनमेवेति ॥ ३६ ॥

**हिन्दी**—जो व्यक्ति धन कमाना तो अच्छी तरह जानता है, परन्तु उसकी रक्षा करना बिलकुल नहीं जानता, वह एक मूर्ख से बढ़कर कुछ नहीं है। क्योंकि धन-रक्षण के अभाव में उसका उर्पाजन में किया गया श्रम निरर्थक होता है ॥ ३६ ॥

**य इति**। यः अर्जितुम् उपार्जयितुमित्यर्थः, जानाति, परम् अर्जितं धनं सम्यक् रक्षितुं नहि जानाति, अतः अस्मात् जनात् परतरः श्रेष्ठतरः मूर्खः न अस्तीति शेषः, यतः तस्य अर्जनश्रमः उपार्जनपरिश्रमः वृथा निष्फल इत्यर्थः ॥ ३६ ॥

एकस्मिन्नधिकारे तु यो द्वावधिकरोति सः।
मूर्खो जीवद् द्विभार्य्यश्च ह्यतिविस्रम्भवांस्तथा ॥ ३७ ॥
महाधनाशो ह्यलसः स्त्रीभिर्निर्जित एव हि।
तथा यः साक्षितां पृच्छेच्चोरजाराततायिषु ॥ ३८ ॥

**अन्वयः**—यः एकस्मिन् अधिकारे द्वौ अधिकरोति सः, यः जीवद् द्विभार्यः, यः अतिविश्रब्धवान् यश्च महाधनाशः अथ च अलसः स्त्रीभिः निर्जितः एव तथा यः चोरजाराततायिषु साक्षितां पृच्छेत्; स च मूर्खः ॥ ३७-३८ ॥

**व्याख्या**—यः = पुरुषः, एकस्मिन् = एकमात्रे, अधिकारे = स्वामित्वे, द्वौ = प्रकरणद्वयम्, अधिकरोति = स्वायत्तीकरोति, सः = पुरुषः, एकस्यैव प्रभुत्वस्य संरक्षणं दुःसाध्यम्, पुनरधिकार-द्वयस्य का वार्त्तेति, यः = जनः, जीवन् सन् = जीवितेऽपि, विभार्यः = भार्याविहीनः, अथवा जीवन्त्यौ, द्वे = उभे, भार्ये = पत्न्यौ, यस्य सः, यो जनः, अतिविश्रम्भवान् = अतिविश्वस्तः, यश्च पुरुषः पुनः दुर्वृत्तानां सुवृत्तानां जनानां सत्यासत्यकथने कृतविश्वासः सः, यश्च महाधनाशः = अत्यधिकधनप्राप्तिलिप्सः, अथ च, अलसः = आलस्यशीलः, स्त्रीभिः = नारीभिः, निर्जतः = विजितः, एव = एवेति निश्चयेन, तथा = तेन प्रकारेण, यः = पुरुषः, चोरजाराततायिषु—चोरेषु = पाटच्चरेषु, जारेषु = परदारलम्पटेषु, आततायिषु = घोरपापिषु, साक्षिताम् = साक्ष्यम्, पृच्छेत् = प्रश्नयेत्, सः = असौ, च = पुनः, मूर्खः = ज्ञानहीनोऽस्ति ॥ ३७-३८ ॥

**हिन्दी**—जो एक अधिकार के बावजूद दूसरे अधिकार पर हावी होता है, जो जीवित पत्नी रहने के बावजूद दूसरी शादी रचाता है, जो बिना विचारे हर व्यक्ति पर विश्वास रखता है, जो अतिधनाढ्य बनने की इच्छा के बावजूद आलसी बना रहता है तथा जो स्त्री के अधीन रहता है और जो चोर, लंपट एवं आततायी के विषय में गवाह माँगता है—वह व्यक्ति मूर्ख है ॥ ३७-३८ ॥

**एकस्मिन्निति। महाधनाश इति।** यः एकस्मिन् अधिकारे द्वौ अधिकरोति सः एकाधिकारस्यैव रक्षणस्य दुःसाध्यत्वादिति भावः, यः जीवन् सन् विभार्य्यः भार्य्याशून्यः अथवा जीवन्त्यौ द्वे भार्य्ये यस्य सः, यः अतिविश्रम्भवान् अतिविश्वस्तः सर्वेषां सतामसताञ्च वचसि कृतविश्वासः सः, यश्च महाधनाशः अधिकतः स्पृहः अथ च अलसः स्त्रीभिः निर्जितः अधीनीकृतश्च सः, यः चोरजाराततायिषु तस्करेषु उपपतिषु आततायिषु विषयेषु साक्षितां पृच्छेत् स च मूर्खः ॥ ३७-३८ ॥

संरक्षयेत् कृपणवत् काले दद्याद्विरक्तवत्।
मूर्खत्वमन्यथा याति स्वधनव्ययतोऽपि च ॥ ३९ ॥

**अन्वयः**—कृपणवत् संरक्षयेत्, काले विरक्तवत् दद्यात्। अन्यथा स्वधनव्ययतोऽपि मूर्खत्वं याति ॥ ३९ ॥

**व्याख्या**—कृपणवत् = अमुक्तहस्त इव, धनम्, संरक्षयेत् = रक्षां कुर्यात्, काले = यथावसरे प्राप्ते, विरक्तवत् = निष्प्रयोजनमिव, दद्यात् = प्रयच्छेत्। अन्यथा = इतरथा, स्वधनव्ययतोऽपि—स्वस्य = आत्मनः, धनस्य = अर्थस्य, व्ययतोऽपि = वित्तविनियोगेऽपि, मूर्खत्वम् = निर्बुद्धित्वम्, याति = प्राप्नोति ॥ ३९ ॥

हिन्दी—धन की रक्षा कंजूस की तरह करनी चाहिए और समय आने पर मुक्तहस्त होकर खर्च करना चाहिए। जो ऐसा नहीं करते, वे खर्च करने के बावजूद बेवकूफ समझे जाते हैं ॥ ३९ ॥

संरक्षयेदिति। कृपणवत् धनं संरक्षयेत्, काले यथासमये विरक्तवत् दद्यात्। अन्यथा एतद्वैपरीत्ये स्वधनानां व्ययतः व्ययेन मूर्खत्वं याति प्राप्नोति ॥ ३९ ॥

वस्तुयाथात्म्यविज्ञाने स्वयमेव यतेत् सदा।
परीक्षकैः स्वयं राजा रत्नादीन् वीक्ष्य रक्षयेत् ॥ ४० ॥

अन्वयः—वस्तुयाथात्म्यविज्ञाने सदा स्वयमेव यतेत्। राजा स्वयं परीक्षकैः रत्नादीन् वीक्ष्य रक्षयेत् ॥ ४० ॥

व्याख्या—वस्तूनाम् = पदार्थानाम्, याथात्म्यस्य = यथार्थस्वरूपस्य, विज्ञाने = सूक्ष्मनिरूपणे, सदा = सर्वदा, स्वयमेव = आत्मनैव, यतेत् = प्रयत्नं, कुर्यात्। राजा = नृपः, स्वयम् = स्वत एव, परीक्षकैः = रत्नकारैः, रत्नादीन् = मणिगणादीन्, वीक्ष्य = अवलोक्य परीक्ष्य वा, रक्षयेत् = संरक्षणं कुर्यात् ॥ ४० ॥

हिन्दी—प्रत्येक वस्तु या पदार्थ का सही रूप जानने के लिए स्वयं प्रयास करना चाहिए। अतः राजा खुद एवं जौहरियों से रत्न की परख करवाने के बाद ही उसका संचयन करे ॥ ४० ॥

वस्त्विति। वस्तूनां द्रव्याणां याथात्म्यस्य स्वरूपस्य विज्ञाने विशेषज्ञाने सदा स्वयमेव यतेत्। राजा स्वयं परीक्षकैश्च रत्नादीन् वीक्ष्य परीक्ष्य रक्षयेत् गृह्णीयादित्यर्थः ॥ ४० ॥

वज्रं मुक्ता प्रवालं च गोमेदश्चन्द्रनीलकः।
वैदूर्य्यं पुष्परागश्च पाचिर्माणिक्यमेव च।
महारत्नानि चैतानि नव प्रोक्तानि सूरिभिः ॥ ४१ ॥

अन्वयः—वज्रं, मुक्ता, प्रवालं, गोमेदः, इन्द्रनीलकः, वैदूर्यं, पुष्परागः, पाचिः तथा माणिक्यम् —एतानि नव सूरिभिः महारत्नानि प्रोक्तानि ॥ ४१ ॥

व्याख्या—वज्रम् = हीरः, मुक्ता = शुक्तिजम्, प्रवालम् = विद्रुमः, गोमेदः = राहुरत्नम्, इन्द्रनीलकः = नीलोत्पलः, वैदूर्यम् = केतुरत्नम्, पुष्परागः = पीतस्फटिकः, पाचिः = मरकतम्, तथा = एवम्, माणिक्यम् = पद्मरागः, एतानि = पूर्वोक्तानि, नव = नवसंख्यकानि, सूरिभिः = विद्वद्भिः, महारत्नानि = श्रेष्ठाश्मभेदानि, प्रोक्तानि = कथितानि ॥ ४० ॥

हिन्दी—हीरा, मोती, मूंगा, गोमेद, नीलम, लहसुनिया, पन्ना, मरकतमणि तथा लाल रत्न या चुन्नी—ये नौ महारत्न हैं, ऐसा जानकारों का कहना है ॥ ४१ ॥

वज्रमिति। वज्रं हीरकं, मुक्ता मौक्तिकं, प्रवालं, गोमेदः, इन्द्रनीलः वैदूर्य्यं, पुष्परागः पद्मरागः, पाचिः मरकतं तथा माणिक्यम्, एतानि नव सूरिभिर्विद्वद्भिः महारत्नानि प्रोक्तानि कथितानि ॥ ४१ ॥

रवेः प्रियं रक्तवर्णं माणिक्यं त्विन्द्रगोपरुक्।
रक्तपीतसितश्यामच्छविर्मुक्ता प्रिया विधोः ॥ ४२ ॥

**अन्वयः**—इन्द्रगोपरुक् रक्तवर्णं माणिक्यं रवेः प्रियम्। रक्तपीतसितश्यामच्छविः मुक्ता विधोः प्रिया॥४२॥

**व्याख्या**—इन्द्रगोपरुक्—इन्द्रगोपस्य = वर्षाकालीनकीटविशेषस्य, रुक् = छविरिव छविर्यस्य तादृशम्, रक्ताभम्, माणिक्यम् = मरकतमणिः, रवेः = सूर्यस्य, प्रियम् = रुचिकरं भवति। पीता = हरिद्राभा, सिता = भास्वरा, श्यामा = तप्तकाञ्चनवर्णाभा, च, छविः = कान्तिर्यस्याः तथाभूता, मुक्ता = मौक्तिकः, 'मुक्ता मौक्तिकपुंश्चल्योः' इति हैमः; विधोः = चन्द्रस्य, प्रिया = रुचिकरा भवति॥४२॥

**हिन्दी**—वीरबहूटी बरसाती कीड़े के रंग की तरह लाल रंग का माणिक सूर्य को प्रिय होता है तथा लाल-पीला, श्वेत और श्याम वर्ण के शतरंगी कान्तिवाला मोती चन्द्रमा को प्रिय होता है॥४२॥

**विशेष—इन्द्रगोप**—मखमल के समान चिकने और चमकदार शरीरवाला वह लाल रंग का छोटा कीड़ा, जो वर्षाऋतु के प्रारंभ में उत्पन्न होता है और जो सहस्रों की संख्या में खुले मैदान या कोमल हरी घास पर रेंगते दिखाई देते हैं; इसे लोग वीरबहूटी, वीरवधूटी या इन्द्रवधू भी कहते हैं।

**माणिक्य**—लाल रंग का यह एक कीमती रत्न है। इसे माणिक, लाल पद्मराग या चुन्नी भी कहा जाता है। यह पत्थर सूर्य को प्रिय होता है।

**मुक्ता**—मोती—'करीन्द्रजीमूतवराहशङ्खमत्स्यादिशुक्त्युद्भववेणुजानि। मुक्ताफलानि प्रथितानि लोके तेषां तु शक्त्युद्भवमेव भूरि'॥ (मल्लिनाथ) मुक्ता अर्थात् मोती एक प्रसिद्ध बहुमूल्य रत्न है। ऊपरलिखित अनेक स्रोतों से वे उपलब्ध बताये जाते हैं, किन्तु विशेषकर छिछले समुद्रों में सीपी में से निकलता है॥४२॥

**रवेरिति**। इन्द्रगोपस्य कीटविशेषस्य कीटविशेषस्य रुक् कान्तिरिव कान्तिर्यस्य तादृशं रक्तवर्णं रवेः सूर्यस्य प्रिया रक्ता पीता सिता श्यामा च छविः कान्तिर्यस्याः तथाभूता मुक्ता विधोः चन्द्रस्य प्रिया॥४२॥

**सपीतरक्तरुग्भौमप्रियं विद्रुममुत्तमम्।**
**मयूरचाषपत्राभा पाचिर्बुधहिता हरित्॥४३॥**

**अन्वयः**—सपीतरक्तरुक् उत्तमं विद्रुमं भौमप्रियम्। मयूरचाषपत्राभा हरित् पाचिः बुधस्य हिता भवति॥४३॥

**व्याख्या**—पीतया = हरिद्राभया, रक्तया = लोहितया, च रुचाः = कान्त्या, सहितम्, उत्तमम् = श्रेष्ठम्, विद्रुमम् = प्रवालम्, भौमस्य = धरणीसुतस्य, प्रियम् = रुचिकरम्, भवति। मयूरस्य = कलापिनः, चापस्य = नीलकण्ठस्य, च, पत्रस्य = पक्षस्य, इव आभा = कान्तिः, यस्यास्तथाभूतायाः, हरित् = पलाशवर्णा, पाचिः = मरकतम्, बुधस्य = चन्द्रसुतस्य, हिता = रुचिकरा भवति॥४३॥

**हिन्दी**—थोड़ा पीलापन लिये लाल रंग का उत्तम मूंगा मंगल को प्रिय होता है। मोर तथा नीलकंठ की पाँखों की तरह हरे रंग का चमकीला पन्ना बुध को प्रिय होता है॥४३॥

**विशेष—विद्रुम**—विद्रुम का अर्थ होता है प्रवाल या मूंगा। 'विशिष्टो द्रुमः विद्रुमः' अर्थात् लाल रंग के मूल्यवान् मूंगों को पैदा करने वाला वृक्ष। इससे प्रमाणित होता है कि मूंगों के

वृक्ष होते हैं, किन्तु विशेषज्ञों का कहना है कि समुद्र में रहने वाले एक प्रकार के कृमियों की लाल ठठरी, जिसकी गिनती रत्नों में की जाती है।

**पाचि**—इसे मरकतमणि या पन्ना भी कहते हैं। फिरोजे की जाति का हरे रंग का एक रत्न।

**सपीतेति**। पीतया रक्तया च रुचा कान्त्या सहितम् उत्तमं विद्रुमं प्रवालं भौमस्य मङ्गलस्य प्रियम्। मयूरस्य चाषस्य पक्षिभेदस्य च पत्रस्य पक्षस्येव आ[illegible] यस्याः तथोक्ता हरित् हरितवर्णा पाचिः मरकतं बुधस्य हिता प्रिया ॥ ४३ ॥

**स्वर्णच्छविः पुष्परागः पीतवर्णो गुरुप्रियः।**
**अत्यन्तविशदं वज्रं तारकाभं कवेः प्रियम् ॥ ४४ ॥**

**अन्वयः**—स्वर्णच्छविः पीतवर्णः पुष्परागः गुरुप्रियः। अत्यन्तं विशदं तारकाभं वज्रं कवेः प्रियम् ॥ ४४ ॥

**व्याख्या**—स्वर्णच्छविः—स्वर्णस्य = कनकस्य, छविः = कान्तिरिव, कान्तिर्यस्यासौ, पीतवर्णः = हरिद्राभः, पुष्परागः = पीतस्फटिकः, गुरोः = बृहस्पतेः, प्रियः = रुचिकरो भवति। अत्यन्तम् = अत्यधिकम्, विशदम् = निर्मलम्, स्वच्छम् = तारातुल्यकान्तियुक्तम्, वज्रम् = हीरकम्, कवेः = शुक्रस्य, प्रियम् = रुचिकरम्, भवति ॥ ४४ ॥

**हिन्दी**—सोने की तरह पीताभ पुखराज गुरु अर्थात् बृहस्पति को प्रिय है तथा अत्यन्त स्वच्छ तारे की तरह चमकने वाला हीरा शुक्र को प्रिय होता है ॥ ४४ ॥

**विशेष—पुष्पराग**—इसे लोग पुखराज भी कहते हैं। एक प्रकार का हलका नीलापन या हरापन लिये पीले रंग का रत्न। इसकी कान्ति सोने की तरह चमकती है।

**वज्रमणी**—यह लोक में 'हीरा' के नाम से विख्यात है। यह एक बहुमूल्य कीमती पत्थर या रत्न है। यह अपनी शुभ्र चमक और कड़ाई के लिए प्रसिद्ध है।

**स्वर्णेति**। स्वर्णस्येव छविः कान्तिर्यस्य तथोक्तः पीतवर्णः पुष्परागः गुरोः बृहस्पतेः प्रियः। अत्यन्तविशदम् अतिस्वच्छं तारकाभं तारासदृशं वज्रं हीरकं कवेः शक्रस्य प्रियम् ॥ ४४ ॥

**हितः शनेरिन्द्रनीलो ह्यसितो घनमेघरुक्।**
**गोमेदः प्रियकृद्राहोरीषत्पीतारुणप्रभः ॥ ४५ ॥**

**अन्वयः**—घनमेघरुक् असितः इन्द्रनीलः शनेः हितः। ईषत्पीता अरुणप्रभः राहोः प्रियकृत् ॥ ४५ ॥

**व्याख्या**—घनस्य = अतिसान्द्रस्य, मेघस्य = जलदस्य, रुक् = छविर्यस्य तादृशः, असितः = कृष्णवर्णः, इन्द्रनीलः = मरकतः वा हरिन्मणिः, शनेः = रवेः सुतस्य, हितः = प्रियो भवति। ईषत् = स्तोकम्, पीता = हरिद्राभा, अरुणप्रभः—अरुणा = मञ्जिष्ठा, प्रभा = कान्तिर्यस्य तथाभूतः, गोमेदः = राहुरत्नः, राहोः = सिंहिकापुत्रस्य, प्रियकृत् = रुचिकरो भवति ॥ ४५ ॥

**हिन्दी**—सघन बादल की तरह कान्ति वाला नीले रंग का नीलम होता है, जो शनि ग्रह को प्रिय है। कुछ पीली एवं रक्ताभ कान्ति युक्त लहसुनिया रंग का गोमेद राहु को प्रिय होता है ॥ ४५ ॥

**हित इति।** घनस्य निविडस्य मेघस्येव रुक् कान्तिर्यस्य तादृशः असितः श्यामलः इन्द्रनीलः शनेः हितः प्रियः। ईषत् पीता अरुणा रक्ता प्रभा यस्य तथाभूतः गोमेदः राहोः प्रियकृत् ॥४५॥

**ओत्वक्ष्याभश्चलत्तन्तुर्वैदूर्य्यः केतुप्रीतिकृत् ॥ ४६ ॥**

**अन्वयः**—ओत्वक्ष्याभः चलत् तन्तुः वैदूर्यः केतुप्रीतिकृत् ॥४६॥

**व्याख्या**—ओतोः = मार्जारस्य, अक्ष्णः = नेत्रस्य, आभा = कान्तिः इव कान्तिर्यस्य तथाभूतः, चलन् = सञ्चरन्, तन्तुः = शिखा, यस्य तथोक्तः, वैदूर्यः = केतुरत्नम्, केतोः = ग्रहविशेषस्य, प्रीतिकृत् = रुचिकरो भवति ॥४६॥

**हिन्दी**—बिलार की आँखों के समान जिसकी कान्ति हों तथा जो किरणों से युक्त हो, उसे वैदुर्य या लहसुनियाँ कहते हैं, जो केतु को प्रिय होता है ॥४६॥

**ओत्विति।** ओतोर्विडालस्य अक्ष्ण इव आभा यस्य तथाभूतः चलन् तन्तुः शिखा यस्य तथोक्तः वैदूर्य्यः केतोः ग्रहस्य प्रीतिकृत् ॥४६॥

**रत्नश्रेष्ठतरं वज्रं नीचे गोमेदविद्रुमे।**
**गारुत्मतं तु माणिक्यं मौक्तिकं श्रेष्ठमेव हि।**
**इन्द्रनीलं पुष्परागो वैदूर्य्यं मध्यमं स्मृतम् ॥ ४७ ॥**

**अन्वयः**—वज्रं रत्नश्रेष्ठतरं, गोमेदविद्रुमे नीचे, गारुत्मतं माणिक्यं मौक्तिकं हि श्रेष्ठम् एव। इन्द्रनीलं पुष्परागः वैदूर्यं मध्यमं स्मृतम् ॥४७॥

**व्याख्या**—वज्रम् = हीरकम्, रत्नश्रेष्ठतरम्—रत्नेषु = मणिषु, श्रेष्ठतरम् = सर्वश्रेष्ठम्, गोमेदविद्रुमे = राहुरत्नप्रवाले, नीचे = सकलरत्नेष्वधमे, गारुत्मतम् = पाचिः, माणिक्यम् = पद्मरागः, मौक्तिकम् = मुक्ता, एव = इति निश्चयेन, श्रेष्ठम् = रत्नेषूत्तमम्, इन्द्रनीलम् = नीलोपलः, पुष्परागः = पुखराजः, इति नाम्ना प्रसिद्धः, तथा वैदूर्यम् = केतुरत्नम्, मध्यमम् = सामान्यस्तरीयम्, स्मृतम् = कथितम् ॥४७॥

**हिन्दी**—रत्नों में सर्वश्रेष्ठ हीरा होता है। गोमेद और मूंगा रत्नों में निकृष्ट रत्न होते हैं। पन्ना, पुखराज और मोती सर्वश्रेष्ठ रत्न कहलाते हैं। नीलम, पुखराज और लहसुनियाँ सामान्य रत्न कहलाते हैं ॥४७॥

**रत्नश्रेष्ठतरमिति।** वज्रं रत्नेषु सर्वश्रेष्ठतरं सर्वश्रेष्ठं, गोमेदविद्रुमे नीचे सर्वरत्नाधमे, गारुत्मतं पाचिः माणिक्यं तथा मौक्तिकं श्रेष्ठम्। इन्द्रनीलं पुष्परागः तथा वैदूर्य्यं मध्यमं स्मृतं कथितम् ॥४७॥

**रत्नश्रेष्ठो दुर्लभश्च महाद्युतिरहेर्मणिः ॥ ४८ ॥**

**अन्वयः**—अहेः मणिः महाद्युतिः रत्नश्रेष्ठः च दुर्लभः ॥४८॥

**व्याख्या**—अहेः = विषधरस्य, मणिः = रत्नम्, महाद्युतिः = अत्यधिककान्तियुक्तम्, रत्नश्रेष्ठः—रत्नेषु = मणिषु, श्रेष्ठः = उत्कृष्टतमः, च = पुनः, दुर्लभः = दुष्प्राप्यो भवति ॥४८॥

**हिन्दी**—रत्नों में सर्वश्रेष्ठ सर्वाधिक कान्तिसम्पन्न तथा अति दुर्लभ सर्पमणि होता है ॥४८॥

**रत्नश्रेष्ठ इति।** अहेः सर्पस्य मणिः महाद्युतिः अत्युज्ज्वलः रत्नश्रेष्ठः दुर्लभश्च ॥४८॥

**अजालगर्भं सद्वर्णं रेखाविन्दुविवर्जितम्।**
**सत्कोणं सुप्रभं रत्नं श्रेष्ठं रत्नविदो जगुः ॥ ४९ ॥**

**अन्वयः**—अजालगर्भं सद्वर्णं रेखाविन्दुविवर्जितं सत्कोणं सुप्रभं रत्नं रत्नविदः श्रेष्ठं जगुः ॥ ४९ ॥

**व्याख्या**—अजालगर्भम् = अन्तर्जालरहितम्, सद्वर्णम् = सुकान्तिसम्पन्नम्, रेखाविन्दु-विवर्जितम् = रेखादिहीरकदोषरहितम्, सत्कोणम् = सुष्ठुकोणयुक्तम्, सुप्रभम् = सुकान्तिमयम्, रत्नम् = मणिः, रत्नविदः = रत्नविशेषज्ञः, श्रेष्ठम् = उत्कृष्टम्, जगुः = कथितवन्तः ॥ ४९ ॥

**हिन्दी**—जिसके भीतर किसी तरह की जाली न हो, अच्छे रंग का, रेखा एवं विन्दु जैसे रत्नदोषों से रहित, आकर्षक कोणों वाला, अति कान्तियुक्त रत्नों को जौहरियों ने श्रेष्ठ रत्न कहा है ॥ ४९ ॥

**अजेति।** अजालगर्भं सद्वर्णं रेखेति विन्दुभिश्च विवर्जितं सत्कोणम् उत्तमकोणविशिष्टं सुप्रभं समुज्ज्वलं रत्नं, रत्नविदः रत्नतत्त्वज्ञाः जनाः श्रेष्ठं जगुः गीतवन्तः ॥ ४९ ॥

**शर्कराभं दलाभञ्च चिपिटं वर्त्तुलं हि तत्।**
**वर्णाः प्रभाः सिता रक्ताः पीतकृष्णास्तु रत्नजाः ॥ ५० ॥**

**अन्वयः**—तत् शर्कराभं च दलाभं चिपिटं तथा वर्त्तुलं रत्नजाः वर्णाः प्रभाः सिताः रक्ताः पीतकृष्णाश्च ॥ ५० ॥

**व्याख्या**—तत् = रत्नम्, शर्कराभम् = शर्कराच्छविः, च = पुनः, दलाभम् = किसलयकान्तिः, चिपिटम् = समरेखः, तथा = तेनैव प्रकारेण, वर्त्तुलम् = चक्राकारम्, रत्नजाः = मणिजाः, वर्णाः = रङ्गाः, प्रभाः = कान्तय, सिताः = शुक्लवर्णाः, रक्ताः = लोहिताः, पीताः = हरिद्राभाः, च = पुनः, कृष्णाः = कृष्णवर्णाः ॥ ५० ॥

**हिन्दी**—वह रत्न शक्कर एवं किसलय वर्ण का तथा कोई गोल या कोई चपटा होता है। इन रत्नों के वर्ण की कान्ति श्वेत, श्याम, रक्त और पीत होती हैं ॥ ५० ॥

**शर्कराभमिति।** तत् रत्नं शर्कराभं शर्कराच्छवि, दलाभं पत्रकान्तिः, चिपिटं चिपिटाकारं तथा वर्त्तुलञ्च। रत्नजा मणिजा वर्णाः प्रभाश्च सिताः श्वेताः रक्ताः पीताः कृष्णाश्च ॥ ५० ॥

**यथावर्णं यथाच्छायं रत्नं यद् दोषवर्जितम्।**
**श्रीपुष्टिकीर्त्तिशौर्य्यायुः करमन्यदसत् स्मृतम् ॥ ५१ ॥**

**अन्वयः**—यत् रत्नं यथावर्णं यथाच्छायं दोषवर्जितं तत् श्रीपुष्टिकीर्त्तिशौर्यायुःकरम् अन्यद् असत् स्मृतम् ॥ ५१ ॥

**व्याख्या**—यद्रत्नम् = यन्मणिः, यथावर्णम् = वर्णानुरूपम्, यथाच्छायम् = कान्तियुक्तम्, दोषवर्जितम् = दोषरहितम्, निर्दुष्टम्, तद्रत्नम्, श्रीकीर्तिशौर्य्यायुःकरम्—श्रीकरम् = लक्ष्मीवृद्धिकरम्, पुष्टिकरम् = संवर्द्धनार्थम्, कीर्त्तिकरम् = यशोवर्द्धनार्थम्, शौर्यकरम् = वीरत्वाय, आयुःकरम् = जीवनदायकञ्च, भवति, अन्यत् = एतद्भिन्नम्, असत् = दुष्टः, स्मृतम् = कथितम् ॥ ५१ ॥

**हिन्दी**—अपने-अपने रंग तथा कान्ति से युक्त तथा दोषमुक्त जो रत्न होता है, वही लक्ष्मी,

पुष्टि, कीर्त्ति, वीरता या आयु बढ़ाने वाला होता है। इससे भिन्न रत्न दुष्ट होता है तथा बुरा फल देने वाला कहा गया है ॥५१॥

**यथेति**। यत् रत्नं यथावर्णं वर्णेषु यथाच्छायं कान्तिषु दोषवर्जितं निर्दोषं तत् श्रीपुष्टिकीर्त्तिशौर्य्यायुःकरं श्रीवृद्धिकरं पुष्टिवर्द्धनं कीर्त्तिकरं शौर्य्यस्य आयुषश्च वर्द्धकम्। अन्यत् तद्भिन्नम् असत् स्मृतम् ॥५१॥

**वर्णमाक्रमते छाया प्रभा वर्णप्रकाशिनी ॥५२॥**

**अन्वयः**—छाया वर्णम् आक्रमते, प्रभा वर्णप्रकाशिनी ॥५२॥

**व्याख्या**—छाया = छविः, वर्णम् = रत्नस्वरूपम्, आक्रमते = परिवेष्टयति, प्रभा = तस्य च कान्तिः, वर्णप्रकाशिनी = स्वरूपद्योतिनी भवति ॥५२॥

**हिन्दी**—छाया रत्न की कान्ति को चमकाती है तथा प्रभा उसे प्रकाशित करती है ॥ ५२ ॥

**वर्णमिति**। छाया कान्तिः वर्णम् आक्रमते उज्ज्वलयति, प्रभा च कान्तिश्च वर्णप्रकाशिनी भवति ॥५२॥

**पद्मरागस्तु माणिक्यभेदः कोकनदच्छविः।**
**न धारयेत् पुत्रकामा नारी वज्रं कदाचन ॥५३॥**

**अन्वयः**—पद्मरागस्तु मणिक्यभेदः कोकनदच्छविः। पुत्रकामा नारी कदाचन वज्रं न धारयेत्।

**व्याख्या**—पद्मरागस्तु = शोणरत्नन्तु, माणिक्यभेदः—मणिक्यस्य = शोणरत्नस्य एव, भेदः = प्रकारः, स च रत्नः, कोकनदच्छविः—कोकनदस्य = रक्तोत्पलस्य, छविः = कान्तिः, यस्यासौ, पुत्रकामा = पुत्रार्थिनी नारी, कदाचन = कथमपि, वज्रम् = हीरकम्, न = नहि, धारयेत् = धारणं कुर्यात् ॥५३॥

**हिन्दी**—पद्मराग तो माणिक का ही भेद होता है, इसका रंग लाल कमल की तरह होता है। पुत्र की कामना रखने वाली नारी कभी भी हीरा न धारण करे ॥५३॥

**पद्मराग इति**। पद्मरागस्तु माणिक्यस्य भेदः विशेषः, स च कोकनदच्छविः रक्तोत्पलकान्तिः 'रक्तोत्पलं कोकनदमि'त्यमरः। पुत्रकामा पुत्रार्थिनी नारी कदाचन वज्रं हीरकं न धारयेत् ॥५३॥

**कालेन हीनं भवति मौक्तिकं विद्रुमं धृतम्।**
**गुरुत्वात् प्रभया वर्णाद् विस्तारादाश्रयादपि ॥५४॥**

**अन्वयः**—मौक्तिकं विद्रुमं धृतं कालेन गुरुत्वात् प्रभया वर्णात् विस्तारात् आश्रयात् हीनं भवति।

**व्याख्या**—मौक्तिकम् = शौक्तिकम्, विद्रुमम् = प्रवालः, धृतम् = परिधारितम्, कालेन = कालक्रमेण, गुरुत्वात् = तोलात्, प्रभया = कान्त्या, वर्णात् = स्वरूपात्, विस्तारात् = आयामात्, आश्रयात् = आलम्बात्, हीनम् = निकृष्टम्, भवति = जायते ॥५४॥

**हिन्दी**—मूंगा और मोती बहुत दिन तक धारण करने पर वजन, कान्ति, रंग, विस्तार और अवलम्बन के कारण खराब हो जाते हैं ॥५४॥

**कालेनेति**। मौक्तिकं विद्रुमञ्च धृतं परिहितं कालेन समयक्रमेण गुरुत्वात्, प्रभया वर्णात्, विस्तारात् तथा आश्रयात् उत्कृष्टाधारात् हीनं भवति ॥५४॥

**आकृत्या चाधिमूल्यं स्याद्रत्नं यद्दोषवर्जितम्।**
**नायसोल्लिख्यते रत्नं विना मौक्तिकविद्रुमात्।**
**पाषाणेनापि च प्राय इति रत्नविदो जगुः ॥ ५५ ॥**

**अन्वयः**—यद्रत्नम् आकृत्या दोषवर्जितं तत् अधिमूल्यं स्यात्। मौक्तिकविद्रुमात् विना रत्नं अयसा पाषाणेन च प्रायः न उल्लिख्यते इति रत्नविदः जगुः ॥ ५५ ॥

**व्याख्या**—यद्रत्नम् = यन्मणिः, आकृत्या = स्वरूपेण, दोषवर्जितम् = निर्दुष्टम्, तत् = रत्नम्, अधिमूल्यम् = अधिकमूल्यम्, स्यात् = भवति। किञ्च विद्रुमात् = प्रवालात्, मौक्तिकात् = शौक्तिकात्, विना = विहाय, रत्नम् = मणिः, अयसा = लौहेन, पाषाणेन = उपलेन, च = पुनः, प्रायः = बहुशः, न = नहि, उल्लिख्यते = उद्धृष्यते, इति = एवम्, रत्नविदः = मणिविशेषज्ञाः, जगुः = निगदन्ति स्म ॥ ५५ ॥

**हिन्दी**—दोष रहित रत्न की कीमत वजन के आधार पर अधिक होती है। मूंगे और मोती को छोड़कर अन्य रत्नों पर लोहे और पत्थर से घिसने पर प्रायः लकीर नहीं पड़ती है, ऐसा रत्न के पारखी जौहरियों का कहना है ॥ ५५ ॥

**आकृत्येति**। यत् रत्नम् आकृत्या आकारेण दोषवर्जितं तत् अधिमूल्यम् अधिकमूल्यं स्यात् भवति। किञ्च विद्रुमात् मौक्तिकाच्च विना विद्रुममौक्तिकभिन्नमित्यर्थः, रत्नम् अयसा लौहेन पाषाणेन च प्रायः न उल्लिख्यते उद्धृष्यते इति रत्नविदः जनाः जगुः गायन्ति स्म ॥ ५५ ॥

**मूल्याधिक्याय भवति यद्रत्नं लघुविस्तृतम्।**
**गुर्वल्पं हीनमौल्याय स्याद्रत्नं त्वपि सद्गुणम् ॥ ५६ ॥**

**अन्वयः**—यद्रत्नं लघुविस्तृतं मूल्याधिक्याय भवति, यच्च गुर्वल्पं तत् सद्गुणम् अपि हीनमौल्याय स्यात् ॥ ५६ ॥

**व्याख्या**—यद्रत्नम् = यन्मणिः, लघु = अल्पभारः, अथ च विस्तृतम् = आकृत्या आयतः, तत् = रत्नम्, मूल्याधिक्याय = महार्घाय, भवति, यच्च गुरु = तौले भाराधिक्यम्, किञ्च आकारे, अल्पम् = क्षुद्रं भवति, तद्रत्नं सद्गुणमपि = उत्कृष्टगुणशालिनमपि, हीनमौल्याय = सुखक्रेयाय, स्यात् = भवेत् ॥ ५६ ॥

**हिन्दी**—उत्कृष्ट गुण वाला रत्न भी तौल में हलका और आकार में बड़ा हो तो वह कीमती होता है और जो तोल में वजनी और आकार में छोटा होता है, वह कम कीमत का होता है ॥ ५६ ॥

**मूल्याधिक्यायेति**। यत् रत्नं लघु अथ च विस्तृतं विशालं तत् मूल्याधिक्याय अधिकमूल्याय भवति। यच्च गुरुभारवत् अथ च अल्पं क्षुद्र तत् सद्गुणम् उत्कृष्टगुणमपि हीनमौल्याय अल्पमूल्यत्वाय स्यात् ॥ ५६ ॥

**शर्कराभं हीनमौल्यं चिपिटं मध्यमं स्मृतम्।**
**दलाभं श्रेष्ठमूल्यं स्याद् यथाकामात्तु वर्त्तुलम् ॥ ५७ ॥**

**अन्वयः**—शर्कराभं हीनमूल्यं चिपिटं मध्यमं स्मृतम्। दलाभं श्रेष्ठमूल्यं वर्त्तुलं यथाकामात् स्यात् ॥ ५० ॥

**व्याख्या**—शर्कराभम् = शार्ककान्तिरत्नम्, हीनमूल्यम् = अल्पमूल्यकं भवति, चिपिटम् = सपाटरत्नम्, मध्यमम् = सामान्यमूल्यकं रत्नम्, स्मृतम् = कथितम्, दलाभम् = किसलय-कान्तिरत्नम्, श्रेष्ठमूल्यम् = बहुमूल्यम्, तथा वर्त्तुलम् = गोलाकारं रत्नम्, यथाकामात् = क्रेतुर्विक्रेतुरिच्छावशात्, रत्नस्य मूल्यं स्यात् ॥५७ ॥

**हिन्दी**—शक्कर की तरह रंग वाला रत्न कम कीमत का होता है। चिपटा रत्न मध्यम दर्जे का होता है, इसकी कीमत सामान्य होती है, किसलय वर्णी रत्न कीमती होता है तथा गोलाकार रत्न खरीद-बिक्री करने वाले की इच्छा के अनुसार कम या ज्यादा कीमत का होता है ॥५७ ॥

**शर्कराभमिति**। शर्कराभं रत्नं हीनमूल्यं चिपिटं रत्नं मध्यमं मध्यममूल्यं स्मृतम्। दलाभं पत्रकान्ति रत्नं श्रेष्ठमूल्यं महामूल्यं तथा वर्त्तुलं यथाकामात् क्रेतुर्विक्रेतुश्च इच्छावशात् मूल्यवत् स्यात् ॥५७ ॥

**न जरां यान्ति रत्नानि विद्रुमं मौक्तिकं विना।**
**राजदौष्ट्याच्च रत्नानां मूल्यं हीनाधिकं भवेत् ॥५८ ॥**

**अन्वयः**—विद्रुमं मौक्तिकं विना रत्नानि जरां न यान्ति। राजदौष्ट्यात् रत्नानां मूल्यं हीनाधिकं भवेत् ॥५८ ॥

**व्याख्या**—विद्रुमम् = प्रवालम्, मौक्तिकञ्च = शौक्तिकञ्च, विना = विहाय, रत्नानि = मणयः, जराम् = पुरातनत्वम्, न = नहि, यान्ति = अवाप्नुवन्ति। राज्ञः = नृपस्य, दौष्ट्यात् = दोषात्, रत्नानाम् = मणीनाम्, मूल्यम् = अर्घः, हीनम् = अल्पम्, अधिकम् = बहुत्वञ्च, भवेत् = स्यात् ॥५८ ॥

**हिन्दी**—मूंगा और मोती को छोड़कर शेष रत्नों पर पुराना होने का दोष नहीं होता है। राजा की गलती के कारण रत्नों की कीमत घट या बढ़ जाती है ॥५८ ॥

**नेति**। विद्रुमं प्रवालं मौक्तिकञ्च विना विद्रुममौक्तिकभिन्नानीत्यर्थः, रत्नानि जरां वार्द्धक्यं हीनावस्थामित्यर्थः, न यान्ति न प्राप्नुवन्ति। राज्ञः दौष्ट्यात् दोषात् रत्नानां मूल्यं हीनम् अधिकञ्च भवेत् ॥५८ ॥

**मत्स्याहिशङ्खवाराहवेणुजीमूतशुक्तितः**
**जायते मौक्तिकं तेषु भूरि शुक्त्युद्भवं स्मृतम् ॥५९ ॥**

**अन्वयः**—मौक्तिकं मत्स्याहिशङ्खवाराहवेणुजीमूतशुक्तितः जायते। तेषु शुक्त्युद्भवं भूरि स्मृतम् ॥५९ ॥

**व्याख्या**—मौक्तिकम् = शौक्तिकम्, मत्स्यात् = मीनात्, अहेः = सर्पात्, शङ्खात् = कम्बोजात्, वाराहात् = शूकरात्, वेणुतः = कीचकात्, जीमूतात् = मेघात्, शुक्तितः = मुक्तामातुः, जायते = उत्पन्नो भवति। तेषु = रत्नेषु मध्ये, शुक्त्युद्भवम् = शुक्तिजम्, भूरि = अधिकञ्च, स्मृतम् = कथितम् ॥५९ ॥

**हिन्दी**—मछली, साँप, शंख, सूअर, बाँस, मेघ तथा सीप से मोती निकलता है। इसमें अधिकतर सीप से ही मोती निकलता है ॥५९ ॥

**मत्स्येति**। मौक्तिकं मत्स्यात्, अहेः सर्पात्, शङ्खात्, वराहात्, वेणुतः वंशात्, जीमूतात् मेघात्, शक्तितश्च जायते, तेषु मध्ये शुक्त्युद्भवं शुक्तिजं भूरि प्रचुरं स्मृतम् ॥५९ ॥

कृष्णं सितं पीतरक्तं द्विचतुःसप्तकञ्चुकम्।
त्रिपञ्चसप्तावरणमुत्तरोत्तरमुत्तमम् ॥ ६० ॥

**अन्वयः**—मौक्तिकं कृष्णं सितं पीतरक्तं द्विचतुःसप्तकञ्चुकं त्रिपञ्चसप्तावरणम् उत्तरोत्तरम् उत्तमम् ॥ ६० ॥

**व्याख्या**—शुक्तिसम्भवं मौक्तिकम्, कृष्णम् = नीलाभम्, सितम् = भास्वरम्, पीतरक्तम्—पीतम् = हरिद्राभम्, रक्तम् = रक्तवर्णम्, द्विचतुःसप्तकञ्चुकम्—द्विकञ्चुकम् = निर्मोकद्वय-युक्तम्, चतुःकञ्चुकम् = चतुःस्तरः, सप्तकञ्चुकम् = सप्तावरणम्, त्रिपञ्चसप्तावरणम्—त्रिकञ्चुकम् = कञ्चुकत्रययुक्तम्, पञ्चकञ्चुकम् = पञ्चस्तरयुक्तम्, सप्तकञ्चुकम् = सप्तस्तरीयम्, उत्तरोत्तरम् = अनुपूर्वशः, उत्तमम् = उत्कृष्टम् ॥ ६० ॥

**हिन्दी**—मोती काला, सफेद, पीला एवं लाल रंग वाला; दो, चार या सात परत वाला या तीन, पाँच या सात स्तर वाला क्रमशः एक-दूसरे की अपेक्षा श्रेष्ठ होता है ॥ ६० ॥

**कृष्णमिति**। शुक्त्युद्भवं मौक्तिकं कृष्णं श्यामलं, सितं शुभ्रं, पीतरक्तं पीताभया युक्तलोहितवर्णं द्विचतुःसप्तकञ्चुकं कञ्चुकमावरणविशेषः, द्विकञ्चुकं चतुःकञ्चुकं सप्तकञ्चुकं त्रिपञ्चसप्तावरणं त्रिकञ्चुकं पञ्चकञ्चुकं सप्तकञ्चुकं वा भवति एतेषामुत्तरोत्तरम् उत्तमम् ॥ ६० ॥

कृष्णं सितं क्रमाद्रक्तं पीतन्तु जरठं विदुः।
कनिष्ठं मध्यमं श्रेष्ठं क्रमाच्छुक्त्युद्भवं विदुः ॥ ६१ ॥

**अन्वयः**—शुक्त्युद्भवं क्रमात् कृष्णं कनिष्ठं सितं मध्यं रक्तं श्रेष्ठं पीतं जरठं विदुः ॥ ६१ ॥

**व्याख्या**—शुक्त्युद्भवम् = शौक्तिकम्मुक्ता, क्रमात् = क्रमशः, कृष्णम् = श्यामलम्, कनिष्ठम् = हीनम्, सितम् = श्वेताभम्, मध्यमम् = मध्यस्तरीयम्, रक्तम् = रक्तवर्णम्, श्रेष्ठम् = उत्कृष्टम्, पीतम् = हरिद्राभम्, जरठम् = वृद्धम्, रत्नविशेषज्ञाः, विदुः = जानन्ति ॥ ६१ ॥

**हिन्दी**—जौहरियों की जानकारी के अनुसार काले रंग का मोती निचले दर्जे का, सफेद रंग वाला सामान्य, लाल रंग वाला उत्तम तथा पीले रंग वाला पुराना माना गया है ॥ ६१ ॥

**कृष्णमिति**। शुक्त्युद्भवं शुक्तिजं मौक्तिकं क्रमात् कृष्णं सितं रक्तं पीतं तथा जरठं विदुः जानन्ति मौक्तिकज्ञा इति शेषः। तच्च कनिष्ठं मध्यमं श्रेष्ठञ्च क्रमात् विदुः ॥ ६१ ॥

तदेव हि भवेद् वेध्यमवेध्यानीतराणि च।
कुर्वन्ति कृत्रिमं तद्वत् सिंहलद्वीपवासिनः ॥ ६२ ॥

**अन्वयः**—तत् एव वेध्यम् इतराणि अवेध्यानि भवेत्। तद्वत् कृत्रिमं सिंहलद्वीपवासिनं कुर्वन्ति ॥ ६२ ॥

**व्याख्या**—तदेव = शुक्तिजं मौक्तिकमेव, वेध्यम् = वेधनीयम्, इतराणि = तद्भिन्नानि, अवेध्यानि = अच्छेदनानि, भवेत् = स्यात्। तद्वत् = शौक्तिकसदृशम्, कृत्रिमम् = अनैसर्गिकम्, सिंहलद्वीपवासिनः = सैंहलाः, कुर्वन्ति = रचयन्ति ॥ ६२ ॥

**हिन्दी**—सीप के मोती में ही छेद किया जा सकता है, अन्य मोती में छेद नहीं हो सकता है। सिंहल देशवासी असली मोती के समान नकली मोती बनाते हैं ॥ ६२ ॥

**तदेवेति**। तदेव मौक्तिकमेव वेध्यं वेधनीयम् इतराणि अन्यानि अवेध्यानि। सिंहलद्वीपवासिनः जनाः तद्वत् यथार्थसदृशं कृत्रिमं मौक्तिकं कुर्वन्ति ॥ ६२ ॥

**तत्सन्देहविनाशार्थं मौक्तिकं सुपरीक्षयेत्।**
**उष्णे सलवणस्नेहे जले निश्युषितं हि तत् ॥ ६३ ॥**
**व्रीहिभिर्मर्दितं नेयाद् वैवर्ण्यं तदकृत्रिमम्।**
**श्रेष्ठाभं शुक्तिजं विद्यान्मध्याभं त्वितरद् विदुः ॥ ६४ ॥**

**अन्वयः**—तत्सन्देहविनाशार्थं मौक्तिकं सुपरीक्षयेत्। तत् उष्णे सलवणस्नेहे जले निशि उषितं व्रीहिभिः मर्दितं तत् वैवर्ण्यं न इयात्। तत् श्रेष्ठाभम् अकृत्रिमं शुक्तिजं विद्यात्, मध्याभम् इतरत् विदुः ॥ ६३-६४ ॥

**व्याख्या**—तत् = तेषु मौक्तिकेषु, सन्देहविनाशार्थम्—सन्देहस्य = संशयस्य, विनाशार्थम् = विघाताय, मौक्तिकम् = मुक्ताम्, सुपरीक्षयेत् = सुष्ठुतया विचारयेत्, तत् = शौक्तिकम्, उष्णे = तप्ते, सलवणस्नेहे = लवणतैलयुक्ते जले, निशि = रात्रौ, उषितम् = निक्षिप्तम्, तत्पश्चात्, व्रीहिभिः = धान्यैः, मर्दितम् = घर्षितम्, तत्, वैवर्ण्यम् = वैरूप्यम्, न = नहि, इयात् = जायेत। तत् = रत्नम्, श्रेष्ठाभम् = उत्कृष्टकान्तिम्, अकृत्रिमम् = नैसर्गिकम्, शुक्तिजम् = शुक्तिसम्भवम्, विद्यात् = ज्ञेयम्, मध्याभम् = सामान्यकान्तिसम्पन्नम्, इतरत् = अन्यत्, विदुः = जानन्ति ॥ ६३-६४ ॥

**हिन्दी**—संदेह दूर करने के लिए मोती की जाँच ठीक से करनी चाहिए। गर्म पानी में नमक और तेल मिलकार रातभर उसमें छोड़ दे, अगली सुबह उसे उस पानी से निकालकर धान मिलाकर खूब रगड़े। रगड़ने के बाद यदि रंग बदल जाय तो मोती नकली, नहीं तो असली समझना चाहिए। उत्तम कान्ति वाला मोती असली और मध्यम कान्ति वाला नकली मोती होता है ॥ ६३-६४ ॥

**तदिति। व्रीहिभिरिति**। तेषु सन्देहविनाशार्थं मौक्तिकं सुपरीक्षयेत्। यत् मौक्तिकम् उष्णे उत्तप्ते सलवणस्नेहे लवणतैलसमन्विते जले निशि रात्रौ उषितं निक्षिप्तं पश्चात् व्रीहिभिः धान्यैः मर्दितं सत् वैवर्ण्यं वर्णविकृतिं न इयात् तत् श्रेष्ठाभम् उज्ज्वलप्रभम् अकृत्रिमं शुक्तिजं विद्यात्। मध्याभं मध्यविधप्रभायुक्तम् इतरत् कृत्रिमं विदुः जानन्ति ॥ ६३-६४ ॥

**तुलाकल्पितमूल्यं स्याद्रत्नं गोमेदकं विना ॥ ६५ ॥**

**अन्वयः**—गोमेदकं रत्नं विना तुलाकल्पितमूल्यं स्यात् ॥ ६५ ॥

**व्याख्या**—गोमेदकं रत्नम् = राहुंरत्नम्, विना = विहाय, अन्यदखिलं रत्नम्, तुलया = भारानुसारेण, कल्पितम् = उद्भावितम्, मूल्यम् = पण्यः, स्यात् = भवेत् ॥ ६५ ॥

**हिन्दी**—गोमेद को छोड़कर शेष रत्नों का मूल्य तौल के अनुसार होता है ॥ ६५ ॥

**तुलेति**। गोमेदकं रत्नं विना अन्यत् रत्नं तुलया तुलादण्डेन कल्पितं मूल्यं यस्य तथाभूतं स्यात् तुलया अन्येषां मूल्यं कल्पनीयमित्यर्थः ॥ ६५ ॥

**क्षुमाविंशतिभी रक्ती रत्नानां मौक्तिकं विना।**
**रक्तित्रयं तु मुक्तायाश्चतुःकृष्णलकैर्भवेत् ॥ ६६ ॥**

**अन्वयः**—मौक्तिकं विना रत्नानां क्षुमाविंशतिभिः रक्तिः स्यात्। कृष्णलकैः तु चतुः मुक्तायाः रक्तित्रयं भवेत् ॥६६॥

**व्याख्या**—मौक्तिकम् = शौक्तिकम्, विना = विहाय, रत्नानाम् = अन्येषाम्मणीनाम्, क्षुमाविंशतिभिः = विंशतिक्षुमाभिः, रक्तिः = रक्तिका, स्यात् = भवेत्, चतुःकृष्णलकैः = चतुर्भिः परिमाणविशेषैः, मुक्तायाः = मौक्तिकस्य, रक्तित्रयम्, भवेत् = स्यात् ॥६६॥

**हिन्दी**—मोती को छोड़कर शेष रत्नों के लिए एक रत्ती बीस जौ की मानी जाती है तथा चार कृष्णलों की तीन रत्ती मोती होता है ॥६६॥

**क्षुमेति**। मौक्तिकं विना अन्येषां रत्नानां क्षुमाविंशतिभिः विंशतिक्षुमाभिरित्यर्थः, रक्तिः स्यात्। चतुःकृष्णलकैः चतुर्भिः कृष्णलकैः परिमाणविशेषैः मुक्तायाः रक्तित्रयं भवेत् ॥६६॥

**चतुर्विंशतिभिस्ताभी रत्नटङ्कस्तु रक्तिभिः।**
**टङ्कैश्चतुर्भिस्तोलः स्यात् स्वर्णविद्रुमयोः सदा ॥६७॥**

**अन्वयः**—चतुर्विंशतिभिः ताभिः रक्तिभिः रत्नटङ्कः चतुर्भिः टङ्कैः सदा स्वर्णविद्रुमयोः तोलः स्यात् ॥६७॥

**व्याख्या**—चतुर्विंशतिभिः = विंशत्यधिकचतसृभिः, ताभिः = पूर्वोक्ताभिः, रक्तिकाभिः = रक्तिकापरिमाणेभ्यः, रत्नटङ्कः = चतुर्माषकात्मकः, चतुर्विंशतिरक्तिकात्मको वा रत्नतोलभेदः, चतुर्भिः = चतुःसंख्यकैः = माषात्मकतोलभेदैः, सदा = सर्वदा, स्वर्णस्य = कनकस्य, विद्रुमस्य = प्रवालस्य च, तोल = भारः, स्यात् = भवेत् ॥६७॥

**हिन्दी**—रत्नों को तौलने के लिए चौबीस रत्तियों का एक रत्न होता है। सोने और मूंगे तौलने के लिए चार टङ्कों का एक तोला होता है ॥६७॥

**चतुरिति**। चतुर्विंशतिभिः ताभिः रक्तिभिः रत्नटङ्कः भवेदिति शेषः। चतुर्भिः टङ्कैः सदा स्वर्णस्य विद्रुमस्य च तोलः स्यात् ॥६७॥

**एकस्यैव हि वज्रस्य त्वेकरक्तिमितस्य च।**
**सुविस्तृतदलस्यैव मूल्यं पञ्चसुवर्णकम् ॥६८॥**

**अन्वयः**—एकरक्तिमितस्य एकस्यैव सुविस्तृतदलस्य वज्रस्य हि मूल्यं पञ्चसुवर्णकम् ॥६८॥

**व्याख्या**—एकरक्तिमितस्य = एकरक्तिकापरिमाणस्य, एकस्यैव = एकरक्तिकामात्रपरिमाणस्यैव, सुविस्तृतदलस्य = आयतदलस्य, वज्रस्य = हीरकस्य, मूल्यम् = पणः, पञ्चसुवर्णकम्—सुवर्णानाम् = काञ्चनानाम्, अशीतिरक्तिकस्वर्णानाम् पञ्चकम् = पञ्चसंख्यकम्, भवति ॥६८॥

**हिन्दी**—मोटे दल वाले एक रत्ती के हीरे की कीमत पाँच सोने की अशर्फी होती है। दस माशे वजन की एक अशर्फी होती है ॥६८॥

**एकस्येति**। एकरक्तिमितस्य सुविस्तृतदलस्य एकस्यैव वज्रस्य हीरकस्य मूल्यं पञ्चसुवर्णकं सुवर्णानाम् अशीतिरत्तिकस्वर्णानां पञ्चकम् ॥६८॥

**रक्तिकादलविस्ताराच्छ्रेष्ठं पञ्चगुणं यदि।**
**यथा यथा भवेन्न्यूनं हीनमौल्यं तथा तथा ॥६९॥**

**अन्वयः**—यदि रक्तिकादलविस्तारात् श्रेष्ठं तदा पञ्चगुणम्। किञ्च यथा यथा न्यूनं तथा तथा हीनमूल्यं भवेत्॥६९॥

**व्याख्या**—यदि रक्तिकादलविस्तारात्—रक्तिकायाः= गुञ्जायाः, दलात् = छदनात्, विस्तारात् = विशालात्, च, श्रेष्ठम् = उत्कृष्टम्, हीरकं भवति, तदा तस्य पूर्वोक्तात् पञ्चगुणं मूल्याधिक्यं भवति। किञ्च यथा यथा = येन प्रकारेण क्रमशः, न्यूनम् = गुञ्जापटलविस्तारादल्पं भवति, तथा = तेनैव क्रमेण, हीनमूल्यम् = अल्पमूल्यं भवेत्॥६९॥

**हिन्दी**—जैसे-जैसे वजन और दल का विस्तार बढ़ता जायेगा, उसी अनुपात में हीरे की कीमत पहले से पाँच गुणा अधिक बढ जायेगी। फिर जैसे-जैसे दल का विस्तार और रत्ती का वजन कम हो जायेगा, हीरे की कीमत भी उसी अनुपात में कम होगी॥६९॥

**रक्तिकेति**। यदि रक्तिकादलविस्तारात् रक्तिकायाः दलात् विस्ताराच्च श्रेष्ठं वज्रं भवति तदा पञ्चगुणं पूर्वोक्तात् पञ्चगुणं मूल्यं भवति। किञ्च यथा यथा न्यूनं रक्तिकादलविस्तारादिति भावः, तथा हीनमौल्यं मूल्यहानिर्भवेदित्यर्थः॥६९॥

**अत्राष्टरक्तिको माषो दशमाषैः सुवर्णकः।**
**स्वर्णस्य तत् पञ्चमूल्यं राजताशीतिकर्षकम्॥७०॥**

**अन्वयः**—अत्र अष्टरक्तिकः माषः, दशमाषः सुवर्णकः, राजताशीतिकर्षकं तत् स्वर्णस्य पञ्चमूल्यम्॥७०॥

**व्याख्या**—अत्र = अस्मिन् रत्नतोलनविषये, अष्टरक्तिकः = अष्टरक्तिकापरिमाणम्, माषः = धानकः, भवेत्, दशमाषः—दशभिः = दशसंख्याभिः, माषैः = हेमैः, एकः सुवर्णको भवति, राजताशीतिकर्षकम् = अशीतिराजरौप्यम्, स्वर्णस्य = सुवर्णमुद्रायाः, तत् = पूर्वोक्तम्, पञ्चमूल्यम् = पञ्चानां सुवर्णमुद्रानाम्, मूल्यम् = पण्यो भवति॥७०॥

**हिन्दी**—रत्न के तौल में आठ रत्ती का एक माशा होता है, दस माशा की एक सोने की अशरफी होती है और पाँच अशरफी की कीमत अस्सी चाँदी के रुपये भर होती है॥७०॥

**अत्रेति**। अत्र रत्नतोलनविषये अष्टरक्तिकः माषः भवेत्, दशभिः माषैः सुवर्णकः। राजताशीतिकर्षकम् अशीतिकर्षपरिमितरजतं स्वर्णस्य सुवर्णस्य तत् प्रसिद्धं पञ्चमूल्यं पञ्चानां सुवर्णानां मूल्यमित्यर्थः॥७०॥

**यथा गुरुतरं वज्रं तन्मूल्यं रक्तिवर्गतः।**
**तृतीयांशविहीनन्तु चिपिटस्य प्रकीर्त्तितम्॥७१॥**

**अन्वयः**—वज्रं यथा गुरुतरं तन्मूल्यं रक्तिवर्गतः, चिपिटस्य तृतीयांशविहीनं प्रकीर्त्तितम्॥७१॥

**व्याख्या**—वज्रम् = हीरकम्, यथा = यादृशम्, गुरुतरम् = महत्तरम्, तत् = तस्य हीरकस्य, मूल्यम् = अर्घः, रक्तिवर्गतः = रक्तिकापरिमाणतः, भवतीति बोध्यम्, चिपिटस्य = सपाटहीरकस्य, तृतीयांशविहीनम्—तृतीयांशेन = भागत्रयेण, हीनम् = रहितम्, रत्नस्य मूल्यम्, प्रकीर्त्तितम् = कथितम्॥७१॥

**हिन्दी**—हीरा चाहे जितना भारी हो, उसकी कीमत उसके रत्ती-समूह के अनुसार होगी। चिपटे हीरे की कीमत एक तिहाई कम हो जाती है॥७१॥

**यथेति।** वज्रं यथा यादृशं गुरुतरं तन्मूल्यं तस्य मूल्यं रक्तिवर्गतः रक्तिगणनया वेदितव्यमिति शेषः, चिपिटस्य चिपिटाकारस्य वज्रस्य मूल्यं तृतीयांशेन विहीनं प्रकीर्त्तितम् ॥७१॥

**अर्द्धन्तु शर्कराभस्य चोत्तमं मूल्यमीरितम्।**
**रक्तिकायाश्च द्वे वज्रे तदर्द्धं मूल्यमर्हतः ॥७२॥**

**अन्वयः**—शर्कराभस्य उत्तमं मूल्यम् अर्द्धम् ईरितम्। द्वे वज्रे रक्तिकायाः तत् अर्द्धं मूल्यम् अर्हतः ॥७२॥

**व्याख्या**—शर्कराभस्य = सिकताकणकान्त्याः, हीरकस्य, उत्तमं मूल्यम् = उत्कृष्टहीरक-मूल्यात्, अर्द्धम् = अर्द्धांशमेव, ईरितम् = प्रोक्तम्। द्वे = उभे, वज्रे = हीरके, रक्तिकायाः = गुञ्जायाः, हेतुना, गुञ्जैकपरिमिते, तत् = तस्य उत्कृष्टहीरकस्य, अर्द्धम् = अर्द्धांशमेव, मूल्यम् = पण्यः, अर्हतः = योग्यः ॥७२॥

**हिन्दी**—उत्तम हीरे के मूल्य से आधा मूल्य चीनी की तरह आकार वाले हीरे का होता है। दो हीरे यदि एक रत्ती के हों तो दोनों की कीमत उत्कृष्ट हीरे की कीमत की आधी होती है ॥७२॥

**अर्द्धमिति।** शर्कराभस्य वज्रस्य उत्तमं मूल्यम् अर्द्धम् उत्कृष्टवज्रमूल्यादिति भावः, ईरितं कथितम्। द्वे वज्रे रक्तिकायाः हेतुना एकरक्तिपरिमिते इत्यर्थः, तस्य उत्कृष्टस्य वज्रस्य अर्द्धं मूल्यम् अर्हतः ॥७२॥

**तदर्द्धं बहवोऽर्हन्ति मध्या हीना यथा गुणैः।**
**उत्तमार्घं तदर्द्धं वा हीरका गुणहानतः ॥७३॥**

**अन्वयः**—यथागुणैः मध्याः हीनाः बहवः हीरकाः तदर्द्धम् अर्हन्ति। हीरकाः गुणहानतः उत्तमार्घं तदर्द्धम् वा अर्हन्ति ॥७३॥

**व्याख्या**—यथागुणैः = गुणानुरूपैः, मध्याः = मध्यमाः, हीनाः = न्यूनाश्च, बहवः = अनेकाः, हीरकाः = वज्रमणयः, तत् = तस्य मूल्यस्य, अर्द्धम् = अर्द्धभागम्, अर्हन्ति = प्राप्तुं योग्याः भवन्ति। हीरकाः = वज्रमणयः, गुणहानतः = विशिष्टगुणह्रासात्, उत्तमार्घम् = उत्कृष्टमूल्यम्, तत् = तस्योत्कृष्टमूल्यस्य, अर्द्धम् = अर्द्धभागमेव, अर्हन्ति = प्राप्तुं योग्याः भवन्ति ॥७३॥

**हिन्दी**—यदि गुणों के अनुसार साधारण या निकृष्ट बहुत से हीरे एकरत्ती के बराबर हों तो उसकी कीमत उससे भी आधी हो जायेगी। इसी प्रकार गुणहीनता के अनुसार हीरे की कीमत आधी या उससे भी आधी होती है ॥७३॥

**तदर्द्धमिति।** यथागुणैः उपयुक्तगुणैरित्यर्थः, मध्याः मध्यमाः, हीनाश्च बहवः हीरकाः तदर्द्धं तस्य मूल्यस्य अर्द्धम् अर्हन्ति। हीरकाः गुणहानतः गुणह्रासात् उत्तमार्घम् उत्तममूल्यं तदर्द्धं तस्य उत्तमस्य अर्द्धं वा अर्हन्तीति शेषः ॥७३॥

**वर्गरक्तिषु सन्धार्य्यं कलानां नवकं पृथक्।**
**तथांशपञ्चकं पूर्वं त्रिंशद्भिस्तद्भजेत् ततः ॥७४॥**
**लब्धं कलासु संयोज्यं कलानां षोडशांशकैः।**
**मुक्तानां कल्पयेन्मूल्यं हीनमध्योत्तमं यथा ॥७५॥**

**अन्वयः**—वर्गरक्तिषु पृथक् कलानां नवकं तथा अंशपञ्चकं सन्धार्यम्। तत्र पूर्वं त्रिंशद्भिः भजेत्, ततः लब्धं कलासु संयोज्यम्। कलानां षोडशांशकैः मुक्तानां यथा हीनमध्योत्तमं मूल्यं कल्पयेत् ॥७४-७५॥

**व्याख्या**—वर्गरक्तिषु = समद्विहतासु, रक्तिषु = गुञ्जासु, पृथक् = भिन्नम्, कलानां नवकम् = नवकलेत्यर्थः, तथा अंशपञ्चकम् = पञ्चभागम्, सन्धार्यम् = संरक्ष्यम्। तत्र = वर्गरक्तिषु, पूर्वम् = कलानवकम्, त्रिंशद्भिः, भजेत् = विभक्तं कुर्यात्, ततः = तत्पश्चात्, लब्धम् = भागेन प्राप्तम्, कलासु संयोज्यम्। कलानां षोडशांशकैः = षोडशभिः, अंशैः = भागैः, मुक्तानाम् = शौक्तिकानाम्, हीनमध्योत्तमम् = निकृष्टसामान्योत्कृष्टानुसारेण, मूल्यम् = पणः, कल्पयेत् = चिन्तयेत् ॥७४-७५॥

**हिन्दी**—मोती की रत्तियों के वर्ग में प्रत्येक रत्ती की नौ-नौ कला समझनी चाहिए। फिर उन रत्तियों को पाँच गुना करके तीस से भाग दे और जो लब्धि हो, उसे कलाओं में जोड़ दे। फिर उसमें सोलह का भाग दे और जो लब्धि हो, उससे मोती का मूल्य निर्धारित करना चाहिए। अथवा—निकृष्ट, सामान्य या उत्कृष्ट गुणों के अनुसार मोती की कीमत जाननी चाहिए ॥७४-७५॥

**वर्गेति। लब्धमिति।** वर्गरक्तिषु समद्विहतासु रक्तिषु पृथक् पृथक् कलानां नवकं नवकला इत्यर्थः, तथा अंशपञ्चकं सन्धार्य्यं रक्ष्यं, तत्र पूर्वं कलानवकमित्यर्थः, त्रिंशद्भिः भजेत् विभक्तं कुर्य्यात्। ततः लब्धं विभागलब्धं कलासु संयोज्यम्। कलानां षोडशांशकैः षोडशभिः अंशैः मुक्तानां हीनमध्यमोत्तमानुसारेणेत्यर्थः, मूल्यं कल्पयेत् ॥७४-७५॥

**सहस्रादधिके मुक्तारक्तिवर्गशते शते।**
**कलात्रिंशतकं त्यक्त्वा शेषान्मूल्यं प्रकल्पयेत् ॥७६॥**

**अन्वयः**—मुक्तारक्तिवर्गशते सहस्रादधिके शते कलात्रिंशतकं त्यक्त्वा शेषात् मूल्यं प्रकल्पयेत् ॥७६॥

**व्याख्या**—मुक्तायाः = मौक्तिकस्य, रक्तीनाम् = गुञ्जानाम्, यो वर्गः = समद्विघातः, तस्य, शते = शतगुणिते, तस्मिन्, सहस्रात् = दशशतात्, अधिके = प्रभूते, शते = शतसंख्यके सति, कलानाम् = षोडशचन्द्रांशानाम्, त्रिंशतकम् = त्रिंशदङ्कम्, त्यक्त्वा = विहाय, तस्मात्, शेषात् = अवशिष्टात्, मूल्यम् = पणः, प्रकल्पयेत् = निर्धारयेत् ॥७६॥

**हिन्दी**—मोती तौल में जितनी रत्तियों का हो, उनकी संख्या का परस्पर गुणा करके वर्ग निकाल ले। अर्थात् चार रत्ती होने पर चार से ही गुणा कर सोलह रत्ती का वर्ग हुआ। उसे सौ से गुणा करने पर यदि संख्या हजार से अधिक हो तो उसमें तीस कला घटाकर जो शेष बच जाय, उसी पर उसका मूल्य निर्धारित करे ॥७६॥

**सहस्रादिति।** मुक्तारक्तीनां यो वर्गः समद्विघातः तस्य शते शतगुणिते तस्मिन्नित्यर्थः। सहस्रादधिके शते सति कलानां त्रिंशतकं त्यक्त्वा तस्मादिति भावः, शेषात् अवशिष्टात् मूल्यं प्रकल्पयेत् ॥७६॥

**शतादूर्ध्वं रक्तिवर्गादध्रसो विंशतिरक्तिकाः।**
**प्रतिशतात् तु वज्रस्य सुविस्तृतदलस्य च।**

**तथैव चिपिटस्यापि विस्तृतस्य च ह्रासयेत्॥७७॥**
**शर्कराभस्य पञ्चाशच्चत्वारिंशच्च वैकतः॥७८॥**

**अन्वयः**—ह्रसः सुविस्तृतदलस्य वज्रस्य शतात् रक्तिवर्गात् विंशतिरक्तिकाः विस्तृतस्य चिपिटस्यापि वज्रस्य प्रतिशतात् ऊर्ध्वं पञ्चाशत् रक्तिकाः शर्कराभस्य एकतः पञ्चाशत् वा चत्वारिंशत् रक्तिका ह्रासयेत्॥७७-७८॥

**व्याख्या**—ह्रसः = ह्रासपटुः, सुविस्तृतदलस्य = आयतछदनस्य, वज्रस्य = हीरकस्य, शतात् = शतसंख्यकात्, रक्तिवर्गात्—रक्तीनाम् = गुञ्जानाम्, वर्गात् = समद्विघातात्, विंशतिरक्तिकाः = विंशतिरक्तयः, विस्तृतस्य = विशालस्य, चिपिटस्यापि = सपाटस्यापि, वज्रस्य, प्रतिशतात्, ऊद्ध्र्वम् = उपरिष्टात्, पञ्चाशत् रक्तिकाः = गुञ्जाः, तथा शर्कराभस्य = शर्करातुल्यस्य, वज्रस्य प्रतिशतात्, एकतः = एकस्मात्, चत्वारिंशत् रक्तिका, ह्रासयेत् = ह्रासं कुर्यात्॥७७-७८॥

**हिन्दी**—जो हीरा विशाल दल वाला या चिपटा होते हुए भी आयत दल वाला हो और सौ रत्ती से ऊपर वजन का हो तो प्रति सैकड़ा बीस रत्ती की कीमत घटाकर उसकी कीमत होगी; और शक्कर वाले रंग के हीरे के लिए प्रति सैकड़ा चालीस या पच्चास रत्ती की कीमत घटाकर कीमत होती है॥७७-७८॥

**शतादिति। शर्कराभस्येति।** ह्रसः ह्रासपटुः जनः सुविस्तृतदलस्य वज्रस्य शतात् रक्तिवर्गात् रक्तीनां वर्गात् समभिघातात् ऊद्ध्र्वं विंशतिरक्तिकाः, विस्तृतस्य चिपिटस्य चिपिटाकारस्य वज्रस्य प्रतिशतात् ऊद्ध्र्वं पञ्चाशत् रक्तिकाः तथा शर्कराभस्य शर्करासदृशस्य वज्रस्य प्रतिशतात् एकतः चत्वारिंशत् रक्तिका ह्रासयेत् न्यूनयेत्॥७७-७८॥

**रत्नं न धारयेत् कृष्णरक्तविन्दुयुतं सदा॥७९॥**

**अन्वयः**—कृष्णैः रक्तैश्च विन्दुभिर्युतं रत्नं सदा न धारयेत्॥७९॥

**व्याख्या**—कृष्णैः = श्यामलैः, रक्तैश्च = लोहितैश्च, विन्दुभिः, युक्तम् = विन्दुसमन्वितम्, रत्नम् = मणिः, सदा = सर्वदा, न = नहि, धार्यम् = धारणं कुर्यात्॥७९॥

**हिन्दी**—काले या लाल धब्बे वाले रत्न हमेशा धारण नहीं करना चाहिए॥७९॥

**रत्नमिति।** कृष्णैः श्यामलैः रक्तैश्च विन्दुभिर्युतं रत्नं सदा न धारयेत्॥७९॥

**गारुत्मतं तूत्तमं चेन्माणिक्यं मूल्यमर्हतः।**
**सुवर्णं रक्तिमात्रं चेद् यथा रक्तिस्तथा गुरु॥८०॥**

**अन्वयः**—रक्तिमात्रं गारुत्मतं माणिक्यञ्च रत्नम् उत्तमं चेत् तदा सुवर्णं मूल्यम् अर्हतः। यथा रक्तिः तथा गुरुः मूल्यं भवेत्॥८०॥

**व्याख्या**—रक्तिमात्रम् = गुञ्जापरिमितम्, गारुत्मतम् = हरिन्मणिः, माणिक्यञ्च = शोणरत्नम्, पद्मरागो वा, रत्नम् = मणिः, उत्तमम् = श्रेष्ठम्, चेत् = यदि, तदा सुवर्णम् = सुवर्णमुद्रैकम्, मूल्यम् = पणः, अर्हतः = भवतः, यथा = यावती, रक्तिः = गुञ्जा, तथा = तादृश एव, गुरुः = अधिकमूल्यो भवति॥८०॥

**हिन्दी**—यदि पन्ना और पद्मराग दोनों उत्तम कोटि के हों तो दोनों की कीमत एक जैसी

होती है। एक रत्ती पन्ना या पद्मराग की कीमत एक अशरफी। रत्ती के तौल के अनुसार ही इनकी कीमत निर्धारित की जाती है ॥ ८० ॥

**गारुत्मतमिति**। रक्तिमात्रं रक्तिपरिमितं गारुत्मतं माणिक्यञ्च रत्नम् उत्तमं चेत् तदा सुवर्णं मूल्यम् अर्हतः। यथा यावती रक्तिः तथा गुरु मूल्यं भवेदित्यर्थः॥ ८० ॥

**रक्तिमात्रः पुष्परागो नीलः स्वर्णार्धमर्हतः।**
**चलत्त्रिसूत्रो वैदूर्य्यश्चोत्तमं मूल्यमर्हति॥ ८१ ॥**

**अन्वयः**—रक्तिमात्रः पुष्परागः नीलः स्वर्णार्द्धमर्हतः चलत्त्रिसूत्री वैदूर्यः उत्तमं वैदूर्यः उत्तमं मूल्यम् अर्हति॥ ८१ ॥

**व्याख्या**—रक्तिमात्रः = गुञ्जापरिमितः, पुष्परागः = पीतस्फटिकः, नीलः = नीलमणिः, स्वर्णार्द्धमर्हतः—स्वर्णस्य = सुवर्णमुद्रायाः, अर्द्धम् = अर्द्धभागमेकम्, मूल्यम् = अर्थः, अर्हतः = भवतः, चलत्त्रिसूत्रः—चलन्ति = गच्छन्ति, त्रीणि = त्रिसंख्यकानि, सूत्राणि = रेखानि, यस्य तादृशः, वैदूर्यः = केतुरत्नम्, उत्तमम् = श्रेष्ठम्, मूल्यम् = अर्घः, अर्हति = योग्यो भवति॥ ८१ ॥

**हिन्दी**—एक रत्ती का पुखराज या नीलम की कीमत आधा अशरफी अर्थात् पाँच मासा सोना होती है और जिसमें चलते हुए तीन धागे दिखलाई पड़े, ऐसे वैदूर्यमणि की कीमत ऊँचे दर्जे की होती है॥ ८१ ॥

**रक्तिमात्र इति**। रक्तिमात्रः रक्तिपरिमितः पुष्परागः नीलश्च स्वर्णस्य अर्घं मूल्यम् अर्हतः। चलन्ति त्रीणि सूत्राणि यस्य तादृशः वैदूर्य्यः उत्तमं मूल्यम् अर्हति॥ ८१ ॥

**प्रवालं तोलकमितं स्वर्णार्द्धं मूल्यमर्हति।**
**अत्यल्पमूल्यो गोमेदो नोन्मानन्तु यतोऽर्हति॥ ८२ ॥**

**अन्वयः**—तोलकमितं प्रवालं स्वर्णस्य अर्द्धं मूल्यम् अर्हति। गोमेदः अत्यल्पमूल्यः, यतः उन्मानं मूल्यं न अर्हति॥ ८७ ॥

**व्याख्या**—तोलकमितम् = षण्णवतिरक्तिपरिमाणम्, प्रवालम् = विद्रुमः, स्वर्णस्य = स्वर्णमुद्रायाः, अर्द्धम् = अर्द्धभागम्, मूल्यम् = पण्यः, अर्हति = योग्यो भवति। गोमेदः = राहुरत्नः, अत्यल्पमूल्यः = अत्यन्तस्वल्पमूल्यो भवति, यतः = यस्मात् कारणात्, अस्य गोमेदस्य, उन्मानम् = तोलनम्, न = नहि, अर्हति = योग्यो भवति॥ ८२ ॥

**हिन्दी**—एक तोला मूंगे के वजन की कीमत आधी अशरफी अर्थात् पाँच माशा सोना होती है। गोमेद की कीमत बहुत कम होती है, अतः उसे तौलकर बेचा नहीं जाता॥ ८२ ॥

**प्रवालमिति**। तोलकमितं तोलकपरिमितं प्रवालं स्वर्णस्य अर्द्धं मूल्यम् अर्हति। गोमेदः अत्यल्पमूल्यः, यतः उन्मानं तोलनं न अर्हति॥ ८२ ॥

**संख्यातः स्वल्परत्नानां मूल्यं स्याद्धीरकाद्विना।**
**अत्यन्तरमणीयानां दुर्लभानां च कामतः।**
**भवेन्मूल्यं न मानेन तथातिगुणशालिनाम्॥ ८३ ॥**

**अन्वयः**—हीरकात् विना स्वल्परत्नानां संख्यातः मूल्यं स्यात्। अत्यन्तरमणीयानां दुर्लभानां च कामतः तथा अतिगुणशालिनां मानेन मूल्यं न भवेत्॥ ८३ ॥

**व्याख्या**—हीरकात् = वज्रमणेः, विना = विहाय, स्वल्परत्नानाम्—स्वल्पानाम् = तुच्छानाम्, रत्नानाम् = मणीनाम्, संख्यातः = गणनां कृत्वा, मूल्यम् = अर्घः, स्यात् = निर्धारितं भवेत्। अत्यन्तरमणीयानाम् = अतिसुरूपाणाम्, च = पुनः, दुर्लभानाम् = दुरधिगमानाम्, कामतः = इच्छानुसारेण, मूल्यं निर्धारितं भवेत्, तथा अतिगुणशालिनाम् = अत्यन्तगुणसम्पन्नानाम्, मानेन = तौलनेन, मूल्यम् = अर्घः, न = नहि, स्यात् = भवेत् ॥ ८३ ॥

**हिन्दी**—हीरे को छोड़कर क्षुद्र रत्नों की कीमत गणना के आधार पर निर्धारित की जाती है। अत्यन्त सुन्दर और दुर्लभ रत्नों की कीमत इच्छानुसार कम या ज्यादे होती है। लेकिन अत्यन्त गुणशाली रत्नों की कीमत वजन के आधार पर निर्भर नहीं करती ॥ ८३ ॥

**संख्यात इति**। हीरकात् विना स्वल्पानां क्षुद्राणां रत्नानां संख्यातः गणनया मूल्यं स्यात्। अत्यन्तरमणीयानां दुर्लभानाञ्च रत्नानां कामतः इच्छानुसारेण मूल्यं स्यात्। किञ्च अतिगुणशालिनां रत्नानां मानेन परिमाणेन मूल्यं न भवेत् ॥ ८३ ॥

**व्यङ्घ्रिचतुर्दशहतो वर्गो मौक्तिकरक्तिजः।**
**चतुर्विंशतिभिर्भक्तो लब्धान्मूल्यं प्रकल्पयेत् ॥ ८४ ॥**

**अन्वयः**—मौक्तिकरक्तिजः वर्गः व्यङ्घ्रिः चतुर्दशहतः चतुर्विंशतिभिः भक्तः लब्धात् मूल्यं प्रकल्पयेत् ॥ ८४ ॥

**व्याख्या**—मौक्तिकरक्तिजः = शौक्तिकगुञ्जासम्भवः, वर्गः = समद्विघातः, व्यङ्घ्रिः = पादहीनः, चतुर्दशभिर्हतः—चतुर्दशभिः, हतः = गुणितः, तथा चतुर्विंशतिभिः, भक्तः = विभाजितः सन्, यो लब्धात् = लब्धो भवेत्, तस्मात् लब्धात् = लब्धाङ्कात्, मूल्यम् = अर्घः, प्रकल्पयेत् = चिन्तयेत् ॥ ८४ ॥

**हिन्दी**—मोती तौल में जितनी रत्तियों का हो, उनकी संख्या को परस्पर गुणा करके वर्ग निकाल ले, चौथाई घटा दे, फिर चौदह से गुणा कर दे। उसे चौबीस से भाग देने पर जो लब्धाङ्क हो, उसी पर मोती का मूल्य निर्धारित करना चाहिए ॥ ८४ ॥

**व्यङ्घ्रीति**। मौक्तिकरञ्जितः वर्गः व्यङ्घ्रिः पादहीनः चतुर्दशभिर्हतः गुणितः तथा चतुर्विंशतिभिः भक्तः सन् यो लब्धो भवेत् तस्मात् लब्धात् मूल्यं प्रकल्पयेत् ॥ ८४ ॥

**उत्तमन्तु सुवर्णार्घमूनमूनं यथागुणम् ॥ ८५ ॥**

**अन्वयः**—उत्तमं तु सुवर्णार्घमूनमूनं यथागुणम् ॥ ८५ ॥

**व्याख्या**—उत्तमम् = श्रेष्ठशौक्तिकम्, तु, सुवर्णार्घम् = सुवर्णमुद्रायाः अर्द्धपरिमितम्, मूल्यम् = अर्घः, ऊनम् = ततो न्यूनम्, सामान्यम्, पुनश्च ऊनम् = ततोऽपि अपकृष्टम्, अधमकोटिकम्, यथागुणम् = गुणानुरूपम् ॥ ८५ ॥

**हिन्दी**—उत्तम मोती की कीमत आधी अशरफी अर्थात् पाँच माशा सोना होती है। उसके बाद गुणानुसार मध्यम तथा अधम होने के कारण उत्तरोत्तर कीमत कम होती है ॥ ८५ ॥

**उत्तममिति**। उत्तमं मौक्तिकं सुवर्णार्घं स्वर्णमूल्यम्, ऊनं ततः अपकृष्टं मध्यममित्यर्थः, पुनश्च ऊनं ततोऽप्यपकृष्टम् अधममित्यर्थः, यथागुणं गुणानुसारेण मूल्यवदित्यर्थः ॥ ८५ ॥

**रक्तं पीतं वर्त्तुलं चेन्मौक्तिकं चोत्तमं सितम्।**
**अधमं चिपिटं शर्कराभमन्यत् तु मध्यमम्॥८६॥**

**अन्वयः**—रक्तं पीतं तथा सितं मौक्तिकं वर्त्तुलं चेत् उत्तमम्, चिपिटं च शर्कराभम् अधमम्, अन्यत् तु मध्यमम्॥८६॥

**व्याख्या**—रक्तम् = लोहितम्, पीतम् = हरिद्राभम्, तथा सितम् = श्वेतवर्णम्, मौक्तिकम् = शौक्तिकम्, वर्त्तुलम् = गोलाकारम्, चेत् = यदि, तदा उत्तमम् = उत्कृष्टम्, चिपिटम् = चिपिटाकारम्, च = पुनः, शर्कराभम् = शार्कककान्तिः, मध्यमम् = निकृष्टम्, अन्यत् = एतद्भिन्नम्, मध्यमम् = सामान्यम्॥८६॥

**हिन्दी**—लाल, पीला तथा सफेद गोलाकार मोती उत्कृष्ट होता है। चिपटा एवं शक्कर रंग का निकृष्ट तथा इससे भिन्न मोती औसत दर्जे का होता है॥८६॥

**रक्तमिति**। रक्तं पीतं तथा सितं श्वेतवर्णं मौक्तिकं वर्त्तुलं चेत् उत्तमम्। चिपिटं चिपिटाकारं तथा शर्कराभं मौक्तिकम् अधमम्। अन्यत् एतद्व्यतिरिक्तन्तु मध्यमम्॥८६॥

**रत्ने स्वाभाविका दोषाः सन्ति धातुषु कृत्रिमाः।**
**अतो धातून् सम्परीक्ष्य तन्मूल्यं कल्पयेद् बुधः॥८७॥**

**अन्वयः**—रत्ने स्वाभाविकाः दोषाः सन्ति, धातुषु कृत्रिमाः। अतः धातून् सम्परीक्ष्य बुधः तन्मूल्यं कल्पयेत्॥८७॥

**व्याख्या**—रत्ने = मणौ, स्वाभाविकाः = नैसर्गिकाः, दोषाः = दुर्गुणाः, सन्ति = भवन्ति, धातुषु = खनिजेषु द्रव्येषु, तु = किन्तु, कृत्रिमाः = कृतकाः, दोषाः भवन्ति। अतः = अस्मात् कारणात्, बुधः = प्राज्ञः, धातून् = खनिजान्, सम्परीक्ष्य = सम्यग्रूपेण परीक्षणं कृत्वा, तत् = तस्य, मूल्यम् = अर्घः, कल्पयेत् = निश्चयं कुर्यात्॥८७॥

**हिन्दी**—रत्नों में स्वाभाविक दोष होते हैं, किन्तु धातुओं में मिलावट के कारण बनावटी दोष पाये जाते हैं। अतः बुद्धिमान् व्यक्ति इसे ठीक से जाँच कर ही इसकी कीमत निर्धारित करे॥८७॥

**रत्ने इति**। रत्ने स्वाभाविकाः अकृत्रिमाः दोषाः सन्ति, किन्तु धातुषु खनिजेषु द्रव्येषु तु कृत्रिमाः सन्तीति शेषः। अतः अस्मात् कारणात् बुधः धातून् सम्परीक्ष्य तेषां मूल्यं कल्पयेत्॥८७॥

**सुवर्णं रजतं ताम्रं वङ्गं सीसञ्च रङ्गकम्।**
**लोहं च धातवः सप्त ह्येषामन्ये तु सङ्कराः॥८८॥**

**अन्वयः**—धातवः सप्त; यथा—सुवर्णं, रजतं, ताम्रं, वङ्गं, सीसं, रङ्गकं लोहं च। एषाम् अन्ये तु सङ्कराः॥८८॥

**व्याख्या**—धातवः = खनिजाः द्रव्याः, सप्त = सप्तविधम्, यथा सुवर्णम् = कनकम्, रजतम् = रूप्यम्, ताम्रम् = रविप्रियम्, वङ्गम् = पित्तलकम्, सीसम् = सुवर्णारिः, रङ्गकम् = त्रपुः, लोहम् = अयस्कम्। एषाम् = एतेषाम्, अन्ये = भिन्ने, सङ्कराः = मिश्राः भवन्ति॥८८॥

**हिन्दी**—सोना, चाँदी, ताँबा, पीतल, सीसा, राँगा और लोहा—ये सात शुद्ध धातु हैं। इनसे भिन्न इनकी मिलावट से बनी संकर जाति की धातु कहलाती है॥८८॥

धातूनाह—**सुवर्णमिति**। धातवः सप्त; यथा सुवर्णं, रजतं, ताम्रं, वङ्गं, सीसं, रङ्कं लोहञ्च। अन्ये एतद्व्यतिरक्तास्तु सङ्कराः मिश्राः॥८८॥

**यथापूर्वं तु श्रेष्ठं स्यात् स्वर्णं श्रेष्ठतरं मतम्।**
**वङ्गताम्रभवं कांस्यं पित्तलं ताम्ररङ्गजम्॥८९॥**

**अन्वयः**—यथापूर्वं तु श्रेष्ठं स्यात्, स्वर्णं तु श्रेष्ठतरं मतम्। कांस्यं वङ्गताम्रभवं पित्तलं ताम्ररङ्गकम्॥८९॥

**व्याख्या**—यथापूर्वम् = पूर्वानुक्रमेण, तु = किन्तु, श्रेष्ठम् = उत्कृष्टम्, स्यात् = भवेत्, स्वर्णम् = कनकम्, तु, श्रेष्ठतरम् = उत्कृष्टतरम्, मतम् = मान्यम्। कांस्यम् = ताम्रार्द्धम्, वङ्गताम्रभवम् = वङ्गताम्राभ्यां मिश्राभ्यां समुत्पन्नम्, पित्तलम् = पीतलकम्, ताम्ररङ्गाभ्यां मिश्राभ्यां जातमिति॥८९॥

**हिन्दी**—पूर्ववर्णित सात धातुएँ अन्तिम लोहा से पूर्वानुक्रम में एक-दूसरे से श्रेष्ठ हैं। इनमें सोना सर्वश्रेष्ठ धातु मानी जाती है। वंग एवं कांसे के मिश्रण से ताँबा तथा ताँबा एवं राँगा के मेल से पित्तल बनता है॥८९॥

**यथापूर्वमिति**। यथापूर्वम् एषां पूर्वं पूर्वं श्रेष्ठं स्यात्, स्वर्णन्तु श्रेष्ठतरं मतम्। कांस्यं वङ्गताम्रभवं वङ्गताभ्राभ्यां मिश्राभ्यां जातम्। किञ्च पित्तलं ताम्ररङ्गजं ताम्ररङ्गाभ्यां मिश्राभ्याम् उत्पन्नमित्यर्थः॥८९॥

**मानसममपि स्वर्णं तनु स्यात् पृथुलाः परे॥९०॥**

**अन्वयः**—स्वर्णं मानसमं तनु स्यात्, परे पृथुलाः स्युः॥९०॥

**व्याख्या**—स्वर्णम् = कनकम्, मानेन = परिमाणेन, समम् = समानमपि, तनु = अत्यल्पम्, स्यात् = भवेत्, परे = अपरे धातवः, कनकतुल्यपरिमाणा अपि, पृथुलाः = स्थूलाः, स्युः = भवेयुरिति॥९०॥

**हिन्दी**—तौल में बराबर होने के बावजूद अन्य धातूओं की अपेक्षा सोना पतला होता है और सोने की अपेक्षा तौल में बराबर होने पर भी अन्य धातुएँ मोटी होती हैं॥९०॥

**मानसममिति**। स्वर्णं मानेन परिमाणेन समं तुल्यमपि तनु स्वल्पं स्यात् अन्यापेक्षयेति शेषः, परे अन्ये धातवः स्वर्णसमपरिमाणा अपि पृथुलाः स्थूलाः स्युः स्वर्णापेक्षयेति भावः॥९०॥

**एकच्छिद्रसमाकृष्टे समखण्डे द्वयोर्यदा।**
**धातोः सूत्रं मानसमं निर्दुष्टस्य भवेत् तदा॥९१॥**

**अन्वयः**—यदा द्वयोः समे खण्डे एकेन छिद्रेण समाकृष्टो भवतः, तदा निर्दुष्टस्य धातोः सूत्रं मानसमं भवेत्॥९१॥

**व्याख्या**—यदा = यस्मिन् काले, द्वयोः = उभयोः, धात्वोः, समे = समाने, खण्डे = शकले, एकेन = अद्वितीयेन, छिद्रेण = विवरेण, समाकृष्टे = समानभावेन, आकृष्टे = बलाद्बहिर्निष्कासने, भवतः = संयातः, तदा = तस्मिन् काले, निर्दुष्टस्य = दोषरहितस्य, धातोः = खनिजस्य द्रव्यस्य, सूत्रम् = तारः तन्तुर्वा, मानसमम्—मानेन = परिमाणेन, समम् = समानम्, भवेत् = स्यात्॥९१॥

**हिन्दी**—जब दो धातुओं के दो समान टुकड़ों को एक छिद्र में डालकर तार खींचा जाय तो यदि शुद्ध धातु होगी तो उसके तार भी मान में बराबर ही होंगे ॥९१ ॥

**एकेति**। यदा द्वयोः धात्वोः समे तुल्ये खण्डे एकेन छिद्रेण समाकृष्टे भवतः, तदा निर्दुष्टस्य दोषरहितस्य धातोः सूत्रं मानसमं परिमाणेन तुल्यं भवेत् ॥९१ ॥

**यन्त्रशस्त्रास्त्ररूपं यन्महामूल्यं भवेदयः।**
**रजतं षोडशगुणं भवेत् स्वर्णस्य मूल्यकम्॥ ९२ ॥**

**अन्वयः**—-यन्त्रशस्त्रास्त्ररूपं यत् अयः महामूल्यं भवेत्। किञ्च स्वर्णस्य मूल्यकं षोडशगुणं रजतं भवेत् ॥९३ ॥

**व्याख्या**—यन्त्ररूपम् = उपकरणस्वरूपम्, शस्त्रास्त्ररूपम् = आयुधस्वरूपम्, यद्, अयः= लौहः, तत्, महामूल्यम् = महार्घम्, भवेत् = स्यात्। किञ्च, स्वर्णस्य = कनकस्य, मूल्यकम् = पणः, षोडशगुणमधिकम्, रजतम् = रूप्यम्, भवेत् = स्यात् ॥९२ ॥

**हिन्दी**—यंत्र तथा आयुध निर्माण में लगे लोहे की कीमत बहुत अधिक बढ जाती है। चाँदी से सोलह गुने अधिक सोने की कीमत होती है ॥९२ ॥

**यन्त्रेति**। यन्त्ररूपं शस्त्ररूपञ्च अयः लोहं महामूल्यं महार्घं भवेत्। किञ्च स्वर्णस्य मूल्यकं षोडशगुणं रजतं भवेत् ॥९२ ॥

**ताम्रं रजतमूल्यं स्यात् प्रायोऽशीतिगुणं तथा।**
**ताम्राधिकं सार्द्धगुणं वङ्गं वङ्गात् तथा परे॥ ९३ ॥**
**रङ्गसीसे द्वित्रिगुणे ताम्राल्लोहन्तु षड्गुणम्।**
**मूल्यमेतद्विशिष्टन्तु ह्युक्तं प्राङ्मूल्यकल्पनम्॥ ९४ ॥**

**अन्वयः**—प्रायः अशीतिगुणं ताम्रं रजतमूल्यं स्यात्। सार्द्धगुणं वङ्गं ताम्राधिकं तथा परे वङ्गात् रङ्गसीसे ताम्रात् द्वित्रिगुणे लोहं तु ताम्रात् षड्गुणम्। एतत् मूल्यं विशिष्टं, हि प्राक् मूल्यकल्पनं उक्तम् ॥९३-९४ ॥

**व्याख्या**—प्रायः = अनेकशः, अशीतिगुणम् = रजतापेक्षयाऽशीतिगुणान्वितम्, ताम्रम् = मुनिपित्तलम्, रजतस्य = रूप्यस्य, मूल्यम् = अर्घः, स्यात् = भवेत्। सार्द्धगुणम् = अर्द्ध-सहितैकगुणितम्, वङ्गम् = त्रपुः ताम्राधिकम्—ताम्रस्य = मुनिपित्तलस्य, अधिकम् = प्रचुरम्, मूल्यमिति। तथा = तेनैव प्रकारेण, परे = अन्ये, वङ्गात् = त्रपोः, सार्द्धैकगुणितात् मूल्यवन्त इति शेषः, रङ्गसीसे—रङ्गम् = वङ्गम्, सीसञ्च = सीसकञ्च, ताम्रात् = मुनिपित्तलात्, द्वित्रिगुणे, क्रमेण = क्रमशः, तद्यथा—रङ्गं ताम्रस्य द्विगुणम्, सीसं ताम्रस्य त्रिगुणमिति। लौहम् = अयस्कम्, तु, ताम्रात् षड्गुणम् = षड्गुणाधिक्यम्, एतत् मूल्यम्, विशिष्टम् = प्रसिद्धम्, उक्तम्। हि = यतः, प्राक् = पूर्वम्, मूल्यस्य = अर्घस्य, कल्पनम् = चिन्तनम्, उक्तम् = कथितम् ॥९३-९४ ॥

**हिन्दी**—ताँबे से चाँदी की कीमत अस्सी गुणा अधिक होती है। राँगे से डेढ़ गुणा अधिक ताँबे की क़ीमत होती है और वंग से अन्य राँगा तथा सीसा क्रमशः ताँबे से दुगुना एवं तिगुना मिलते हैं और लोहा छः गुना मिलते हैं। यह कीमत प्रसिद्ध है, क्योंकि पहले से ही इनकी कीमतों का वर्णन किया जा चुका है ॥८३-८४ ॥

**ताम्रमिति। रङ्गेति।** प्रायः बाहुल्येन अशीतिगुणं रजतापेक्षयेति शेषः, ताम्रं रजतस्य मूल्यं स्यात्। सार्द्धगुणम् अर्द्धसहितैकगुणितं वङ्गं ताम्राधिकं ताम्रस्य अधिकं मूल्यमित्यर्थः। तथा परे अन्ये धातवः वङ्गात् सार्द्धैकगुणितात् मूल्यवन्त इति शेषः। रङ्गसीसे रङ्गं सीसञ्चेत्यर्थः, ताम्रात् द्वित्रिगुणे क्रमेण रङ्गं ताम्रस्य द्विगुणं सीसं ताम्रस्य त्रिगुणं ताम्रेण सममिति भावः। लौहन्तु षड्गुणं ताम्रादिति शेषः, षड्गुणं लौहम् एकगुणेन ताम्रेण सममिति भावः। एतत् मूल्यं विशिष्टं विशेषेण उक्तं हि यतः प्राक् पूर्वं मूल्यकल्पनम् उक्तम् ॥९३-९४॥

**सुशृङ्गवर्णा सुदुघा बहुदुग्धा सुवत्सका।**
**तरुण्यल्पा वा महती मूल्याधिक्याय गौर्भवेत्॥ ९५॥**

**अन्वयः**—सुशृङ्गवर्णा सुदुघा बहुदुग्धा सुवत्सका तरुणी अल्पा वा महती गौः मूल्याधिक्याय भवेत् ॥९५॥

**व्याख्या**—सुशृङ्गवर्णा—सुष्ठुविषाणा, सुवर्णा = रुचिरवर्णका, सुदुघा = सहजदोहना, बहुदुग्धा = बहुक्षीरा, सुवत्सका = सुवत्सा, तरुणी = युवा, अल्पा = अल्पशरीरा, वा = अथवा, महती = विशिष्टा, गौः = धेनुः, मूल्याधिक्याय = अधिकमूल्याय, भवेत् = स्यात् ॥९५॥

**हिन्दी**—सुन्दर सींग, रुचिकर रंग, दूहने में आसान, अधिक दूध देने वाली, सुन्दर बछड़े वाली, छोटी या बड़ी गाय की कीमत अधिक होती है ॥९५॥

**सुशृङ्गेति।** सुशृङ्गवर्णा शोभनशृङ्गा सुवर्णा सुदुघा अक्लेशदोहना बहुदुग्धा समधिकदुग्धवती सुवत्सका तरुणी अल्पा वा महती गौः मूल्याधिक्याय अधिकमूल्याय भवेत् ॥९५॥

**पीतवत्सा प्रष्ठदुग्धा तन्मूल्यं राजतं पलम्।**
**अजायाश्च गवार्द्धं स्यान्मेष्या मूल्यमजार्द्धकम्॥ ९६॥**

**अन्वयः**—पीतवत्सा प्रष्ठदुग्धा तत् मूल्यं पलं राजतम्, अजायाः च मूल्यं गवार्द्धं, मेष्याः मूल्यम् अजार्द्धकं स्यात् ॥९६॥

**व्याख्या**—पीतवत्सा = हरिद्राभवत्सवती, प्रष्ठः = प्रशंसनीयः, दुग्धा = क्षीरदा, गौः, चेत् = यदि, तदा तत् = तस्याः, मूल्यम् = अर्घः, पलम् = चतुस्तोलकम्, राजतम् = रूप्यम्, भवति, अजायाः = छाग्याः, मूल्यम् = पणः, गवार्द्धम् = धेनुमूल्यार्द्धं भवति, तथा मेष्याः मूल्यम् = अर्घः, अजार्द्धकम् = अजामूल्यस्य अर्द्धकं भवति ॥९६॥

**हिन्दी**—पीले रंग के बछड़े वाली गौ यदि अच्छा दूध देने वाली हो तो उसकी कीमत चार तोला चाँदी होती है और बकरी की कीमत गाय की कीमत की आधी होती है तथा भेड़ी की कीमत बकरी की आधी होती है ॥९६॥

**पीतेति।** पीतवत्सा पीतवर्णवत्सवती गौः प्रष्ठदुग्धा प्रशंसनीयदुग्धा चेत् तदा तस्या मूल्यं राजतं पलं पलपरिमितरजतम्। अजायाः छाग्याः मूल्यं गवार्द्धं गोमूल्यार्द्धं तथा मेष्या मूल्यम् अजाया मूल्यार्द्धकम् ॥९६॥

**दृढस्य युद्धशीलस्य पलं मेषस्य राजतम्।**
**दश वाष्टौ पलं मूल्यं राजतं तूत्तमं गवाम्॥ ९७॥**

**अन्वयः**—दृढस्य युद्धशीलस्य मेषस्य मूल्यं पलं राजतं, गवां तु उत्तमं मूल्यं दश वा अष्टौ राजतं पलम् ॥९७॥

**व्याख्या**—दृढस्य = सबलाङ्गस्य, युद्धशीलस्य = युयुत्सोः, मेषस्य = एडकस्य, मूल्यम् = अर्घः, पलम् = चतुस्तोलकम्, राजतम् = रूप्यम्, गवाम् = धेनूनाम्, तु = किन्तु, उत्तमम् = श्रेष्ठम्, मूल्यम् = अर्घः, दश, वा = अथवा, अष्टौ, राजतं = रौप्यम्, पलं भवेत् ॥९७॥

**हिन्दी**—मजबूत कद-काठी के लड़ाकू भेड़े की कीमत चार तोला चाँदी होती है और गाय का उत्तम मूल्य दस या आठ पल चाँदी हैं ॥९७॥

**दृढस्येति**। दृढस्य समर्थस्य पुष्टदेहस्येत्यर्थः, युद्धशीलस्य मेषस्य मूल्यं राजतं पलम्। गवान्तु उत्तमं मूल्यं दश वा अष्टौ राजतं पलम् ॥९७॥

**पलं मेष्या अवेश्चापि राजतं मूल्यमुत्तमम्।**
**गवां समं सार्द्धगुणं महिष्या मूल्यमुत्तमम् ॥ ९८॥**

**अन्वयः**—मेष्याः अवेश्चापि उत्तमं मूल्यं राजतं पलम्। महिष्याः उत्तमं मूल्यं सार्द्धगुणं गवां समम् ॥९८॥

**व्याख्या**—मेष्याः = एडकायाः, अवेश्चापि = मेषस्यापि, उत्तमम् = उत्कृष्टम्, मूल्यम् = अर्घः, राजतम् = रजतसम्भवम्, पलम्, महिष्याः = मन्दगमनायाः, उत्तमं मूल्यम्, सार्द्धगुणम् = अर्द्धैकगुणितम्, गवाम् = धेनूनाम्, समम् = तुल्यम्, भवति ॥९८॥

**हिन्दी**—भेंड या भेड़ी का उत्तम मूल्य एक पल चाँदी है। भैंस का उत्तम मूल्य गाय के समान या उससे डेढ़ गुना अधिक होता है ॥९८॥

**पलमिति**। मेष्याः अवेः मेषस्य च उत्तमं मूल्यं राजतं पलम्। महिष्याः उत्तमं मूल्यं सार्द्धगुणं सार्द्धैकुगुणितं गवां समं मूल्यसममित्यर्थः ॥९८॥

**सुश्रृङ्गवर्णबलिनो वोढुः शीघ्रगमस्य च।**
**अष्टतालवृषस्यैव मूल्यं षष्टिपलं स्मृतम् ॥ ९९॥**

**अन्वयः**—सुश्रृङ्गवर्णबलिनः वोढुः शीघ्रगमस्य अष्टतालवृषस्य मूल्यं षष्टिपलं स्मृतम् ॥९९॥

**व्याख्या**—सुश्रृङ्गवर्णबलिनः—सुश्रृङ्गस्य = सुष्ठुविषाणस्य, सुवर्णस्य = रुचिकरस्वरूपस्य, बलिनः = शक्तिशालिनः, वोढुः = वहनशीलस्य, शीघ्रगमस्य = त्वरितगामिनः, अष्टतालस्य = एतत्परिमितस्य, वृषस्य = वृषभस्य, मूल्यम् = अर्घः, षष्टिपलम् = पलषष्टिपरिमितम्, स्मृतम् = कथितम् ॥९९॥

**हिन्दी**—सुन्दर सींग वाला, अच्छे रंग का, शक्तिशाली, बोझा ढोने में समर्थ, जल्द चलने वाला तथा आठ ताल अर्थात् चार हाथ लम्बे बैल की कीमत ६० पल चाँदी होती है ॥९९॥

**सुश्रृङ्गेति**। सुश्रृङ्गस्य सुवर्णस्य बलिनः वोढुः वहनक्षमस्य शीघ्रगमस्य शीघ्रगामिनः अष्टतालवृषस्य मूल्यं षष्टिपलं स्मृतं कथितम् ॥९९॥

**महिषस्योत्तमं मूल्यं सप्त चाष्टौ पलानि च।**
**द्वित्रिचतुःसहस्रं वा मूल्यं श्रेष्ठं गजाश्वयोः ॥ १००॥**

**अन्वयः**—महिषस्य उत्तमं मूल्यं सप्त च अष्टौ पलानि। गजाश्वयोः द्वित्रिचतुःसहस्रं वा श्रेष्ठं मूल्यम् ॥ १०० ॥

**व्याख्या**—महिषस्य = सैरिभस्य, उत्तमम् = श्रेष्ठम्, मूल्यम् = अर्घः, सप्त, च = अथवा, अष्टौ पलानि भवन्ति, गजाश्वयोः—गजस्य = हस्तिनः, अश्वस्य = घोटकस्य, च, द्विसहस्रम् = विंशतिशतम्, त्रिसहस्रम् = त्रिंशच्छतम्, चतुःसहस्रम् = चत्वारिंशच्छतम्, वा = अथवा, श्रेष्ठम् = उत्कृष्टम्, मूल्यं भवति ॥ १०० ॥

**हिन्दी**—भैंस का उत्कृष्ट मूल्य सात या आठ पल चाँदी होता है। हाथी और घोड़े का श्रेष्ठ मूल्य दो, तीन या चार हजार चाँदी के सिक्के हैं ॥ १०० ॥

**महिषस्येति**। महिषस्य उत्तमं मूल्यं सप्त अष्टौ च पलानि, चशब्दो विकल्पार्थः। गजाश्वयोः गजस्य अश्वस्य च द्विसहस्रं त्रिसहस्रं चतुःसहस्रं वा श्रेष्ठं मूल्यं गुणानुसारेण वेदितव्यमिति शेषः ॥ १०० ॥

**उष्ट्रस्य माहिषसमं मूल्यमुत्तममीरितम् ॥ १०१ ॥**

**अन्वयः**—उष्ट्रस्य उत्तमं मूल्यं माहिषसमम् ईरितम् ॥ १०१ ॥

**व्याख्या**—उष्ट्रस्य = दासेरकस्य, उत्तमम् = श्रेष्ठम्, मूल्यम् = पण्यः, माहिषेण = महाक्षीरेण, समम् = तुल्यम्, ईरितम् = निगदितम् ॥ १०१ ॥

**हिन्दी**—ऊँट का उत्तम मूल्य भैंस के उत्तम मूल्य के बराबर होता है ॥ १०१ ॥

**उष्ट्रस्येति**। उष्ट्रस्य उत्तमं मूल्यं माहिषेण महिषमूल्येन समम् ईरितं कथितम् ॥ १०१ ॥

**योजनानां शतं गन्ता चैकेनाह्नाश्व उत्तमः।**
**मूल्यं तस्य सुवर्णानां श्रेष्ठं पञ्चशतानि हि ॥ १०२ ॥**

**अन्वयः**—एकेन अह्ना योजनानां शतं गन्ता अश्वः उत्तमः। तस्य उत्तमं मूल्यम् सुवर्णानां पञ्चशतानि हि ॥ १०२ ॥

**व्याख्या**—एकेन = एकमात्रेण, अह्ना = दिनेन, योजनानाम् = चतुःक्रोशात्मकानाम्, शतम् = शतसङ्ख्यकं, गन्ता = गमनशक्ता, अश्वः = घोटकः, उत्तमः = उत्कृष्टो भवति, तस्य उत्तमम् = श्रेष्ठम्, मूल्यम् = अर्घः, सुवर्णानाम् = स्वर्णमुद्राणाम्, पञ्चशतानि, हि = इति निश्चयेन भवति ॥ १०२ ॥

**हिन्दी**—एक दिन में चार सौ कोस की दूरी तय करने वाला घोड़ा उत्तम होता है। उसका श्रेष्ठ मूल्य पाँच सौ अशरफी होता है ॥ १०२ ॥

**योजनानामिति**। एकेन अह्ना दिवसेन योजनानां शतं गन्ता गन्तुं समर्थः अश्वः उत्तमः, सुवर्णानां पञ्चशतानि तस्य श्रेष्ठं मूल्यं हि, हिशब्दोऽवधारणार्थः ॥ १०२ ॥

**त्रिंशद्योजनगन्ता वै उष्ट्रः श्रेष्ठस्तु तस्य वै।**
**पलानां तु शतं मूल्यं राजतं परिकीर्त्तितम् ॥ १०३ ॥**

**अन्वयः**—यः उष्ट्रः त्रिंशद्योजनगन्ता सः श्रेष्ठः। तस्य मूल्यं पलानां राजतं शतं परिकीर्तितम् ॥ १०३ ॥

**व्याख्या**—यः उष्ट्रः = कमेलकः, त्रिंशद्योजनगन्ता = एकस्मिन् दिने त्रिंशद्योजनपर्यन्तं गन्तुं समर्थः, सः = असौ, श्रेष्ठः = उत्कृष्टः। तस्य = उष्ट्रस्य, मूल्यम् = पण्यः, पलानाम् =

तोलकानाम्, राजतम् = रूप्यकम्, शतम् = शतसंख्यकम्, पलम्, परिकीर्त्तितम् = कथितम् ॥ १०३ ॥

**हिन्दी**—एक दिन में तीस योजन अर्थात् (१ योजन = ४कोश) १२० कोस चलने वाला ऊँट श्रेष्ठ होता है। इसकी कीमत एक सौ पल चाँदी हैं। (एक पल = चार तोला चाँदी) ॥ १०३ ॥

**त्रिंशदिति।** यः उष्ट्रः त्रिंशद्योजनगन्ता स श्रेष्ठः, तस्य मूल्यं पलानां राजतं शतं शतपलपरिमितराजतमित्यर्थः परिकीर्त्तितम् ॥ १०३ ॥

**बलेनोच्चेन युद्धेन मदेनाप्रतिमो गजः।**
**यस्तस्य मूल्यं निष्काणां द्विसहस्रं प्रकीर्त्तितम् ॥ १०४ ॥**

**अन्वयः**—यः गजः उच्चेन बलेन युद्धेन मदेन अप्रतिमः। तस्य मूल्यं निष्काणां द्विसहस्रं प्रकीर्त्तितम् ॥ १०४ ॥

**व्याख्या**—यः गजः = हस्ती, उच्चेन = महता, बलेन = शक्त्या, युद्धेन = समरेण, मदेन = दर्पेण, अप्रतिमः = अतुल्यः। तस्य = गजस्य, मूल्यम् = अर्घः, निष्काणाम् = स्वर्णमुद्राणाम्, वा कर्षाणाम्, द्विसहस्रम् = विंशतिशतम्, भवति ॥ १०४ ॥

**हिन्दी**—जो हाथी अति शक्तिशाली, जुझारु, मदमस्त एवं अप्रतिम (अतुलनीय) होता है। उसकी कीमत दो हजार स्वर्णमुद्रा होती है ॥ १०४ ॥

**बलेनेति।** यः गजः उच्चेन महता बलेन युद्धेन मदेन च अप्रतिमः असदृशः, तस्य निष्काणां द्विसहस्रं प्रकीर्त्तितम् ॥ १०४ ॥

**चतुर्माषमितं स्वर्णं निष्क इत्यभिधीयते।**
**पञ्चरक्तिमितो माषो गजमौल्ये प्रकीर्त्तितः ॥ १०५ ॥**

**अन्वयः**—चतुर्माषमितं स्वर्णं निष्क इति अभिधीयते। गजमौल्ये पञ्चरक्तिमितः माषः प्रकीर्तितः ॥ १०५ ॥

**व्याख्या**—चतुर्भिः = तुरीयैः, माषैः = अष्टगुञ्जामाशैः, मितम् = परिमितम्, स्वर्णम् = सुवर्णम्, निष्कः = स्वर्णमुद्रैका, इति = इत्थम्, अभिधीयते = कथ्यते। गजमौल्ये—गजस्य = हस्तिनः, मौल्यै = पण्यविषये, पञ्चरक्तिमितः—पञ्चानाम् = पञ्चसंख्यकानाम्, रक्तीनाम् = गुञ्जानाम्, मितः = परिमितः, वस्तुविशेषः, माषः = माषकः धानको वेति, प्रकीर्त्तितः = ख्यातः ॥ १०५ ॥

**हिन्दी**—चार माशा सोने का एक सिक्का होता है। हाथी की कीमत निर्धारित करने में पाँच रत्ती का एक माशा होता है ॥ १०५ ॥

**चतुरिति।** चतुर्भिः माषैः मितं परिमितं स्वर्णं निष्क इति अभिधीयते कथ्यते, गजमौल्ये हस्तिमूल्यविषये पञ्चरक्तिमितः पञ्चरक्तिपरिमाणः वस्तुविशेषः माषः प्रकीर्त्तितः कथितः ॥ १०५ ॥

**रत्नभूतन्तु तत्तत् स्याद् यद्यदप्रतिमं भुवि।**
**यथादेशं यथाकालं मूल्यं सर्वस्य कल्पयेत् ॥ १०६ ॥**

**अन्वयः**—भुवि यद्यद् अप्रतिमं स्यात्, तत्तद्रत्नभूतम्। अतः यथादेशं यथाकालं सर्वस्य मूल्यं कल्पयेत् ॥ १०६ ॥

**व्याख्या**—भुवि = संसारे, यत् यत् = यत्किञ्चिद्वस्तु, अप्रतिमम् = अतुल्यम्, स्यात् = भवेत्, तत्तद् = तद्वस्तु, रत्नभूतम् = रत्नस्वरूपं भवति। अतः यथादेशम् = देशानुसारेण, यथाकालम् = कालानुसारेण, सर्वस्य = सकलस्य, वस्तुनः, मूल्यम् = अर्घः, कल्पयेत् = निर्धारयेत् ॥ १०६ ॥

**हिन्दी**—संसार में जो भी वस्तु अतुलनीय है, वह रत्नस्वरूप है। अतः उनकी कीमत देश और काल के अनुसार ही निर्धारित करनी चाहिए ॥ १०६ ॥

**रत्नभूतमिति**। भुवि पृथिव्यां यत् यत् वस्तु अप्रतिमम् असदृशम् असाधारणमित्यर्थः, तत् तत् रत्नभूतं रत्नस्वरूपम्। अतः यथादेशं देशानुसारेण यथाकालं कालानुसारेण सर्वस्य रत्नभूतस्य वस्तुनः मूल्यं कल्पयेत् ॥ १०६ ॥

**न मूल्यं गुणहीनस्य व्यवहाराक्षमस्य च।**
**नीचमध्योत्तमत्वन्तु सर्वस्मिन् मूल्यकल्पने।**
**चिन्तनीयं बुधैर्लोकाद् वस्तुजातस्य सर्वदा ॥ १०७ ॥**

**अन्वयः**—गुणहीनस्य च व्यवहाराक्षमस्य मूल्यं न। किञ्च बुधैः सर्वस्मिन् मूल्यकल्पने लोकात् वस्तुजातस्य नीचमध्योत्तमत्वं सर्वदा चिन्तनीयम् ॥ १०७ ॥

**व्याख्या**– गुणहीनस्य = निर्गुणस्य, च = पुनः, व्यवहाराक्षमस्य– व्यवहारे = लोकाचारे, अक्षमस्य = असमर्थस्य, वस्तुनः = वस्तुजातस्य, मूल्यम् = अर्घः, न = न किमपि भवति। किञ्च बुधैः = विज्ञैः, सर्वस्मिन् = अखिलवस्तुनि, मूल्यकल्पने = मूल्यनिर्धारणे, लोकात् = लोकव्यवहारात्, वस्तुजातस्य = विभिन्नपदार्थस्य, नीचमध्योत्तमत्वम्—नीचत्वम् = अधमत्वम्, मध्यमत्वम् = सामान्यत्वम्, उत्तमत्वम् = उत्कृष्टत्वम्, सर्वदा = सदा, चिन्तनीयम् = विचारणीयम् ॥ १०७ ॥

**हिन्दी**—गुणहीन एवं व्यवहार में अयोग्य वस्तु की कीमत कुछ भी नहीं होती है। बुद्धिमान् व्यक्ति लोक-परम्परा के अनुसार समस्त वस्तुओं की अधमता, सामान्यता एवं उत्कृष्टता समझ कर ही उसका मूल्य निर्धारित करते हैं ॥ १०७ ॥

**नेति**। गुणहीनस्य व्यवहाराक्षमस्य कार्य्यायोग्यस्य वस्तुनः मूल्यं नास्ति, किञ्च बुधैः विद्वद्भिः सर्वस्मिन् मूल्यकल्पने लोकात् लोकपरम्परातः वस्तुजातस्य समस्तस्य वस्तुनः नीचमध्योत्तमत्वम् अधमत्वं मध्यमत्वम् उत्तमत्वञ्च सर्वदा चिन्तनीयम् ॥ १०७ ॥

**विक्रेतृक्रेतृतो राजभागः शुल्कमुदाहृतम्।**
**शुल्कदेशा हट्टमार्गाः करसीमाः प्रकीर्त्तिताः ॥ १०८ ॥**

**अन्वयः**—विक्रेतृक्रेतृतः राजभागः शुल्कम् उदाहृतम्। शुल्कदेशाः हट्टमार्गाः करसीमाः प्रकीर्त्तिताः ॥ १०८ ॥

**व्याख्या**—विक्रेतुः = विक्रयिकस्य, क्रेतुः = क्रयिकस्य, समीपात्, राजभागः—राज्ञः = नृपस्य, भागः = अंशः, शुल्कम् = घट्टपथादीनां करः, उदाहृतम् = कथितम्। शुल्कदेशाः = करग्रहण-स्थलानि, हट्टमार्गाः = आपणपन्थाः, करसीमाः—करस्य = शुल्कस्य, सीमा = प्रान्तः पर्यन्तो वेति। शुल्कशब्दोऽत्रोभयलिङ्गी वर्तते, तथाप्यत्र नपुंसकत्वं विधेयप्राधान्यानुरोधादेव ॥ १०८ ॥

**हिन्दी**—खरीद-बिक्री करने वाले से राजा जो अपना कर वसूल करता है, उसे 'शुल्क' कहते हैं। बाजार की राह में चुंगी या टैक्स वसूले जाते हैं तथा जहाँ चुंगी वसूली जाती है, उन्हें करसीमा या चुंगीघर कहते हैं ॥ १०८ ॥

**विक्रेत्रिति**। विक्रेतुः क्रेतुश्च सकाशात् राजभागः राजप्राप्यांशः शुल्कम् उदाहृतं कथितं विधेयप्राधान्यात् नपुंसकत्वं ज्ञेयम्। शुल्कदेशाः शुल्कग्रहणस्थानानि हट्टमार्गाः व्यवसायस्थानानि करसीमाः करस्य शुल्कस्य सीमाः निर्दिष्टा अवधयश्च प्रकीर्त्तिताः॥ १०८॥

**वस्तुजातस्यैकवारं शुल्कं ग्राह्यं प्रयत्नतः।**
**क्वच्चिन्नैवासकृच्छुल्कं राष्ट्रे ग्राह्यं नृपैश्छलात्॥ १०९॥**

**अन्वयः**—नृपैः वस्तुजातस्य प्रयत्नतः च एकवारं शुल्कं ग्राह्यम्। क्वचित् राष्ट्रे छलात् असकृत् शुल्कं नैव ग्राह्यम्॥ १०९॥

**व्याख्या**—नृपैः = राजभिः, वस्तुजातस्य = पदार्थसमूहस्य, प्रयत्नतः = प्रयासपूर्वकेण च, एकवारम् = सकृदेव, शुल्कम् = करम्, ग्राह्यम् = ग्रहीतव्यम्। क्वचित् = कुत्रापि, राष्ट्रे = जनपदे, छलात् = कपटमाश्रित्य, असकृत् = वारं वारम्, शुल्कम् = करम्, नैव = नास्त्येव, ग्राह्यम् = नेयमिति॥ १०९॥

**हिन्दी**—राजा को चाहिए कि हर वस्तु पर प्रयत्नपूर्वक एक बार ही चुंगी लगाये। अपने राज्य में राजा कभी भी छल से एक ही वस्तु पर दुहरी चुंगी न लगाये॥ १०९॥

**वस्तुजातस्येति**। नृपैः वस्तुजातस्य वस्तुसमूहस्य प्रयत्नतः प्रयत्नेन च एकवारं शुल्कं ग्राह्यं, क्वचित् राष्ट्रे छलात् छलमाश्रित्येति यावत्, असकृत् वारं वारं शुल्कं नैव ग्राह्यम्॥ १०९॥

**द्वात्रिंशांशं हरेद्राजा विक्रेतुः क्रेतुरेव वा।**
**विंशांशं वा षोडशांशं शुल्कं मूल्याविरोधकम्॥ ११०॥**

**अन्वयः**—राजा विक्रेतुः क्रेतुः वा मूल्याविरोधकं यथा तथा द्वात्रिंशांशं विंशांशं वा षोडशांशं शुल्कं हरेत्॥ ११०॥

**व्याख्या**—राजा = नृपः, विक्रेतुः = विपणितुः, वा = अथवा, क्रेतुः = ग्राहकस्य, समीपात्, मूल्याविरोधकम्—मूल्यस्य = अर्घस्य, अविरोधकम् = अप्रतिकूलम्, यथा तथा, द्वात्रिंशांशम् = द्वयाधिकत्रिंशत्, अंशम् = भागम्, विंशांशम् = विंशतिभागम्, वा = अथवा, षोडशांशम् = षोडशभागम्, शुल्कम् = करम्, हरेत् = स्वीकुर्यात्॥ ११०॥

**हिन्दी**—राजा बेचने या खरीदने वालों से किसी वस्तु की कीमत का बत्तीसवाँ भाग कर के रूप में स्वीकार करे अथवा मूलधन को छोड़कर लाभ का बीसवाँ या सोलहवाँ भाग कर स्वीकार करे॥ ११०॥

**द्वात्रिंशांशमिति**। राजा विक्रेतुः क्रेतुः वा सकाशात् मूल्याविरोधकं मूल्याविरुद्धं यथा तथा द्वात्रिंशांशं विंशांशं षोडशांशं वा शुल्कं हरेत् गृह्णीयात्। विकल्पश्चैषः द्रव्यस्य मूल्यस्य च तारतम्यानुसारेण वेदितव्यः॥ ११०॥

**न हीनसममूल्याद्धि शुल्कं विक्रेतृतो हरेत्।**
**लाभं दृष्ट्वा हरेच्छुल्कं क्रेतृतश्च सदा नृपः॥ १११॥**

**अन्वयः**—विक्रेतृतः हीनसममूल्यात् शुल्कं न हरेत्। नृपः लाभं दृष्ट्वा क्रेतृतश्च सदा शुल्कं हरेत्॥ १११॥

**व्याख्या**—विक्रेतृतः = विपणितुः सकाशात्, हीनसममूल्यात्—हीनात् = क्रयमूल्यतः अल्पतरात्, समात् = क्रयमूल्यतुल्यात्, हि = इति निश्चयेन, शुल्कम् = करम्, न = नहि, हरेत् = नयेत्, गृह्णीयादित्यर्थः। नृपः = राजा, लाभम् = अधिगमनम्, दृष्ट्वा = अवलोक्य, क्रेतृतश्च = ग्राहकसकाशात्, सदा = सर्वदा, शुल्कम् = करम्, हरेत् = गृह्णीयात् ॥ १११ ॥

**हिन्दी**—किसी बेचने वाले को यदि किसी वस्तु की कीमत मूल धन से कम या उतना ही लेना पड़े तो उस वस्तु पर चुंगी नहीं वसूले। कम पैसे लगाकर अधिक लाभ कमाने वाले से राजा सदा चुंगी वसूल करे ॥ १११ ॥

**नेति**। विक्रेतृतः विक्रेतुः सकाशात् हीनात् क्रयमूल्यतः न्यूनात् समात् तुल्याच्च शुल्कं न हरेत् हि नैव गृह्णीयादित्यर्थः। नृपः लाभम् अल्पमूल्येन अधिकद्रव्यलाभं दृष्ट्वा क्रेतृतश्च क्रेतुः सकाशाच्च सदा शुल्कं हरेत् ॥ १११ ॥

**बहुमध्याल्पफलितां भुवं मानमितां सदा।**
**ज्ञात्वा पूर्वं भागमिच्छुः पश्चाद्भागं विकल्पयेत् ॥ ११२ ॥**

**अन्वयः**—सदा भागमिच्छुः पूर्वं बहुमध्याल्पफलितां मानमितां भुवं ज्ञात्वा पश्चात् भागं विकल्पयेत् ॥ ११२ ॥

**व्याख्या**—सदा = सर्वदा, भागमिच्छुः = करांशग्रहणाभिलाषी नृपः, पूर्वम् = प्रथमम्, बहुमध्याल्पफलिताम्—बहुफलाम् = अधिकपरिणामप्रदाम्, मध्यफलाम् = सामान्यलाभदाम्, अल्पफलाम् = न्यूनपरिणामप्रदाम्, मानमिताम् = फलेन कृतमानाम्, भुवम् = स्थानम्, ज्ञात्वा = अवबुध्य, पश्चात् = तत्पश्चात्, भागम् = करांशम्, विकल्पयेत् = विचिन्तयेत् ॥ ११२ ॥

**हिन्दी**—मालगुजारी चाहने वाला राजा सदा धरती का पैमाइश करवा कर पहले उसकी अधिक, साधारण या कम उपज की जानकारी लेकर पीछे उसकी मालगुजारी तय करे ॥ ११२ ॥

**बह्विति**। सदा भागमिच्छुः शुल्कभागाकाङ्क्षी राजा पूर्वं प्रथमं बहुफलां मध्यफलां वा अल्पफलां मानमितां परिमाणेन कृतमानां भुवं भूमिं ज्ञात्वा पश्चात् भागं शुल्कस्येति शेषः, विकल्पयेत् विशेषेण निर्दिशेत् ॥ ११२ ॥

**हरेच्च कर्षकाद्भागं यथा नष्टो भवेन्न सः।**
**मालाकार इव ग्राह्यो भागो नाङ्गारकारवत् ॥ ११३ ॥**

**अन्वयः**—यथा सः नष्टः न भवेत् कर्षकात् (तथा) भागं हरेत्। मालाकार इव अङ्गारकारवत् भागः न ग्राह्यः ॥ ११३ ॥

**व्याख्या**—यथा = येन प्रकारेण, सः = करदाता, नष्टः = विनष्टः, न = नहि, भवेत् = स्यात्, कर्षकात् = कृषकात्, तथा, भागम् = करम्, हरेत् = ग्रहणं कुर्यात्। मालाकारः = उद्यानपालः, इव = यथा, अङ्गारकारवत् = दग्धकाष्ठखण्डनिर्मातेव, भागः = करांशः, न = नहि, ग्राह्यः = स्वीकर्त्तव्यम् ॥ ११३ ॥

**हिन्दी**—किसानों से मालगुजारी उतनी ही वसूल की जाय जितने से वह क्षतिग्रस्त न हो सके। माली की तरह संग्रह करना चाहिए, न कि कोयला बनाने वाले की तरह ॥ ११३ ॥

**हरेदिति**। यथा सः भूशुल्कदाता नष्टः क्षतिग्रस्तः न भवेत् कर्षकात् कृषीबलात् तथा भागं

हरेत्। मालाकार इव माली यथा तरुलताभ्यः अल्पम् अल्पं पुष्पं चिनोति तथेति भावः। अङ्गारकारवत् अङ्गारकारेण तुल्यं यथा तथा भागः शुल्करूपांशः न ग्राह्यः॥११३॥

**बहुमध्याल्पफलतस्तारतम्यं विमृश्य च।**
**राजभागादिव्ययतो द्विगुणं लभ्यते यतः।**
**कृषिकृत्यन्तु तच्छ्रेष्ठं तन्न्यूनं दुःखदं नृणाम्॥११४॥**

**अन्वयः**—बहुमध्याल्पफलतः तारतम्यं विमृश्य यतः राजभागादिव्ययतः द्विगुणं लभ्यते, तत्तु कृषिकृत्यं श्रेष्ठम्, तत् न्यूनं नृणां दुःखदम्॥११४॥

**व्याख्या**—बहुमध्याल्पफलतः—बहुफलतः= अत्यधिकोत्पादनानुसारेण, मध्यफलतः= सामान्यकृषिफलानुसारेण, अल्पफलतः= न्यूनशस्योत्पादनानुसारेण, तारतम्यम् = न्यूनाधिकत्वम्, विमृश्य = विचार्य, यतः= यस्मात्कारणात् कृषिकर्मणः, राजभागादिव्ययतः—राजभागादीनाम् = नृपदेयभूमिकरादीनाम्, व्ययतः= विनियोगात्, द्विगुणम् = द्विगुणितम्, कृषिफलम्, लभ्यते = प्राप्यते, तत्तु = तदेव, कृषिकृत्यम् = कृषिफलम्, श्रेष्ठम् = उत्कृष्टम्, तत् = तस्मात्, न्यूनम् = अल्पतरम्, नृणाम् = नराणाम्, दुःखदम् = कष्टकरम्, भवतीति भावः॥११४॥

**हिन्दी**—अधिक, सामान्य और कम पैदावार की कमी-बेशी के हिसाब से तरतीब सोचकर तदनुसार मालगुजारी लेनी चाहिए। खेत पर दी गई मालगुजारी एवं उत्पादन पर लागत खर्च काट कर जिस खेती में लागत से दूना लाभ हो, वह उत्तम होती है तथा लागत से कम आमदनी वाली खेती किसानों के लिए दुःखद होती है॥११४॥

**बह्वित**। बहुमध्याल्पफलतः बहुफलानुसारेण मध्यफलानुसारेण अल्पफलानुसारेण च तारतम्यं भूमेर्गुणागुणमित्यर्थः, विमृश्य विविच्य यतः कृषिकृत्यात् कृषिकार्य्यात् राजभागादिव्ययतः राजदेयशुल्कादीनां व्ययात् द्विगुणं लभ्यते तत् तु तदेव कृषिकृत्यं श्रेष्ठं, तस्मात् न्यूनं यत्किञ्चिल्लाभकरमित्यर्थः, कृषिकृत्यं नृणां दुःखदं दुःखदायकम्॥११४॥

**तडागवापिकाकूपमातृकाद्देवमातृकात्।**
**देशान्नदीमातृकात् तु राजानुक्रमतः सदा॥११५॥**
**तृतीयांशं चतुर्थांशमर्द्धांशन्तु हरेत् फलम्।**
**षष्ठांशमूषरात् तद्वत् पाषाणादिसमाकुलात्॥११६॥**

**अन्वयः**—राजा सदा तडागवापिकाकूपमातृकात् देवमातृकात् नदीमातृकात् देशात् तृतीयांशं, चतुर्थांशं तथा अर्द्धांशम् अनुक्रमतः तद्वत् ऊषरात् वा पाषाणादिसमाकुलात् देशाच्च षष्ठांशं फलं हरेत्॥११५-११६॥

**व्याख्या**—राजा = नृपः, सदा = सर्वदा, तडागवापिकाकूपमातृकात् = कासारदीर्घिकाकूप-सलिलैः, सिञ्चितकृषेः, देवमातृकात् = मेघजलसिञ्चितकृषेः, नदीमातृकात् = शैवलिनीसिञ्चित-कृषेश्च, देशात् = क्षेत्रात्, तृतीयांशम् = तृतीयभागम्, चतुर्थांशम् = तुरीयभागम्, अर्द्धांशम् = अर्द्धभागम्, वा, अनुक्रमतः= यथाक्रमेण, तद्वत् = तथैव, ऊषरात् = अनुर्वरात्, वा, पाषाणादिसमा-कुलात् = पाषाणशकलाच्छादितात्, देशाच्च = क्षेत्राच्च, षष्ठांशम् = षष्ठभागम्, फलम् = शस्यम्, हरेत् = गृह्णीयात्॥११५-११६॥

**हिन्दी**—राजा क्रमानुसार हमेशा तालाब, बावड़ी या कुँए से सींचे जाने वाले खेतों की उपज का तीसरा हिस्सा, वर्षा के द्वारा सिंचाई होने वाले खेतों की उपज का चौथा भाग तथा नदी से सिंचाई होने वाले खेतों की उपज का आधा हिस्सा और बंजर या पथरीली धरती की उपज का छठा हिस्सा मालगुजारी के रूप में ग्रहण करे॥ ११५-११६ ॥

**तडागेति। तृतीयांशमिति।** राजा सदा तडागवापिकाकूपमातृकात् सरोवरदीर्घिकाकूपजलैः सम्पाद्यकृषेः देवमातृकात् वृष्टिजलसम्पाद्यकृषेरित्यर्थः, नदीमातृकात् नदीजलैः सम्पाद्यकृषेश्च देशात् तृतीयांशं चतुर्थांशं तथा अर्द्धांशम् अनुक्रमतः यथाक्रमेण तद्वत् तथा ऊषरात् अनुर्वरात् वा पाषाणादिसमाकुलात् प्रस्तरप्रधानात् देशाच्च षष्ठांशं फलं हरेत् ॥ ११५-११६ ॥

**राजभागस्तु रजतशतकर्षमितो यतः।**
**कर्षकाल्लभ्यते तस्मै विंशांशमुत्सृजेन्नृपः ॥ ११७ ॥**

**अन्वयः**—यतः कर्षकात् रजतशतकर्षमितः राजभागः लभ्यते, नृपः तस्मै विंशांशम् उत्सृजेत् ॥ ११७ ॥

**व्याख्या**—यतः= यस्माद्धेतोः, कर्षकात् = कृषकात्, रजतशतकर्षमितः—रजतानाम् = रुप्याणाम्, शतकर्षमितः= शतरजतमुद्रापरिमितः, राजभागः= राजस्वः, लभ्यते = प्राप्यते, नृपः= राजा, तस्मै = क्षेत्रिणे, विंशांशम् = विंशतितमम्भागम्, तम्, उत्सृजेत् = दद्यात् ॥ ११७ ॥

**हिन्दी**—जिस किसान से राजा को मालगुजारी के रूप में चाँदी के सौ सिक्के मिलते हों, उनमें से उसे उसका बीसवाँ भाग दे देना चाहिए॥ ११७ ॥

**राजभाग इति।** यतः कर्षकात् कृषीबलात् रजतानां शतकर्षमितः शतरजतकर्षपरिमितः राजभागः लभ्यते, नृपः तस्मै कर्षकाय विंशांशं स्वप्राप्यात् विंशतिभागैकभागम् उत्सृजेत् त्यजेत् ॥ ११७ ॥

**स्वर्णादर्द्धं च रजतात् तृतीयांशञ्च ताम्रतः।**
**चतुर्थांशन्तु षष्ठांशं लोहाद् वङ्गाच्च सीसकात्॥ ११८ ॥**
**रत्नार्द्धं चैव क्षारार्द्धं खनिजाद् व्ययशेषतः।**
**लाभाधिक्यं कर्षकादेर्यथा दृष्ट्वा हरेत् फलम्।**
**त्रिधा वा पञ्चधा कृत्वा सप्तधा दशधापि वा॥ ११९ ॥**

**अन्वयः**—खनिजात् व्ययशेषतः स्वर्णात् अर्द्धं रजतात् तृतीयांशं ताम्रतः चतुर्थांशं लोहात् वङ्गात् सीसकात् च षष्ठांशं रत्नानाम् अर्द्धं क्षाराणाम् अर्द्धं कर्षकादेः लाभाधिक्यं दृष्ट्वा त्रिधा पञ्चधा सप्तधा वा दशधा कृत्वा यथा फलं हरेत्॥ ११८-११९ ॥

**व्याख्या**—खनिजात् = आकरजपदार्थात्, व्ययशेपतः= विनियोगावशिष्टात्, स्वर्णात् = कनकात्, अर्द्धम् = अर्द्धांशम्, रजतात् = रौप्यात्, तृतीयांशम् = तृतीयभागम्, ताम्रतः= मुनिपित्तलात्, चतुर्थांशम् = तुरीयभागः, लोहात् = अयस्कात्, वङ्गात् = त्रपुषात्, सीसकात् = सीसपत्रकात्, च = पुनः, षष्ठांशम् = षष्ठभागम्, रत्नानाम् = मणीनाम्, अर्द्धम् = अर्द्धभागम्, क्षाराणाम् = लवणानाम्, अर्द्धम् = अर्द्धभागम्, कर्षकादेः= क्षेत्राजीवादेः, लाभाधिक्यम् = प्राप्तिबाहुल्यम्, दृष्ट्वा = विचार्य, त्रिधा = त्रिभागम्, पञ्चधा = पञ्चमांशम्, सप्तधा =

सप्तमांशम्, वा = अथवा, दशधा = दशभागम्, कृत्वा = सम्पाद्य, यथा = तदनुरूपम्, फलम् = शुल्कम्, हरेत् = गृह्णीयात् ॥ ११८-१९ ॥

**हिन्दी**—खर्च काटकर खान से निकलने वाले सोने का आधा हिस्सा, चाँदी की एक तिहाई, ताँबा से एक चौथाई, लोहे, राँगे और सीसे से छठा भाग, रत्नों एवं क्षारीय द्रव्यों से आधा भाग तथा किसानों के लाभ की अधिकता को देखते हुए तदनुसार उनका तीसरा, पाँचवाँ, सातवा या दसवाँ भाग राजस्व के रूप में ग्रहण करना चाहिए ॥ ११८-११९ ॥

**स्वर्णादिति**। **रत्नार्द्धमिति**। व्ययशेषत इति सर्वत्र सम्बध्यते। खनिजात् व्ययशेषतः व्ययावशिष्टात् स्वर्णात् अर्द्धं रजतात् तृतीयांशं, ताम्रतः ताम्रात् चतुर्थांशं, लोहात् वङ्गात् सीसकाच्च षष्ठांशं, रत्नानां हीरकादीनाम् अर्द्धं क्षाराणां लवणानाञ्च अर्द्धं तथा कर्षकादेः लाभाधिक्यं दृष्ट्वा विविच्येत्यर्थः, त्रिधा पञ्चधा सप्तधा वा दशधा कृत्वा यथा यथोपयुक्तं फलं हरेत् राजेति शेषः ॥ १८-१९ ॥

**तृणकाष्ठादिहरकाद् विंशत्यंशं हरेत् फलम्।**
**अजाविगोमहिष्याश्ववृद्धितोऽष्टांशमाहरेत् ।**
**महिष्यजाविगोदुग्धात् षोडशांशं हरेन्नृपः ॥ १२० ॥**

**अन्वयः**—नृपः तृणकाष्ठादिहरकात् विंशत्यंशं फलं हरेत्। अजाविगोमहिष्याश्ववृद्धितः अष्टमांशं हरेत्। तथा महिष्यजाविगोदुग्धात् षोडशांशं हरेत् ॥ १२० ॥

**व्याख्या**—नृपः = राजा, तृणकाष्ठादिहरकात् = तृणदारु-आहरणकर्त्तुः जनात्, विंशत्यंशम् = विंशांशम्, फलम् = करम्, हरेत् = ग्रहणं कुर्यात। अजानाम् = छागानाम्, अवीनाम् = मेषाणाम्, गवाम् = धेनूनाम्, महिषीणाम् = बहुक्षीराणाम्, अश्वानाम् = घोटकानाम्, वृद्धितः = वृद्धेः, अष्टांशम् = अष्टमभागम्, हरेत् = आहरेत्। तथा महिषीणाम् = बहुक्षीराणाम्, अजानाम् = छागीनाम्, अवीनाम् = मेषीणाम्, गवाञ्च = धेनूनाञ्च, दुग्धात् = पयसः, षोडशांशम् = षोडशं भागम्, हरेत् = राजस्वरूपेण गृह्णीयात् ॥ १२० ॥

**हिन्दी**—घसियारे तथा लकड़हारों की आमदनी का बीसवाँ भाग कर के रूप में वसूल करना चाहिए। भेंड, बकरी, गायें, भैंसें और घोड़ों की वृद्धि पर उनका आठवाँ भाग कर के रूप में राजा ग्रहण करे। भैंस, बकरी और गाय के दूध में से सोलहवाँ भाग कर ग्रहण करे ॥ १२० ॥

**तृणेति**। नृपः तृणकाष्ठादिहरकात् तृणकाष्ठानाम् आहरणकारिणः जनात् विंशत्यंशं फलं हरेत्। अजानां छागानाम् अवीनां मेषाणां गवां महिषीणाम् अश्वानाञ्च वृद्धितः वृद्धेः अष्टांशम् अष्टमं भागं हरेत्। तथा महिषीणाम् अजानां छागीनाम् अवीनां मेषीणां गवाञ्च दुग्धात् षोडशांशं हरेत् ॥ १२० ॥

**कारुशिल्पिगणात् पक्षे दैनिकं कर्म कारयेत्।**
**तस्य वृद्ध्यै तडागं वा वापिकां कृत्रिमां नदीम् ॥ १२१ ॥**
**कुर्वन्त्यन्यत् तद्विधं वा कर्षन्त्यभिनवां भुवम्।**
**तद्व्ययद्विगुणं यावन्न तेभ्यो भागमाहरेत् ॥ १२२ ॥**

**अन्वयः**—कारुशिल्पिगणात् पक्षे दैनिकं कर्म कारयेत्। ये च तस्य वृद्ध्यै तडागं वापिकां वा कृत्रिमां नदीम् अथवा अन्यत् तद्विधं कुर्वन्ति, अभिनवां भुवं कर्षन्ति, यावत् तद्व्ययात् द्विगुणं तावत् तेभ्यः भागं न आहरेत्॥१२१-१२२॥

**व्याख्या**—कारुगणान् = कर्मकारसमूहान्, शिल्पिगणांश्च = शिल्पकुशलांश्च, पक्षे = मासार्द्धे, दैनिकम् = एकाह्निकसाध्यम्, कर्म = तस्य कृत्यम्, कारयेत् = साधयेत्, तदेव तेषां राजस्वमिति भावः। ये = जनाः, तस्य = नृपस्य, वृद्ध्यै = अभ्युदयाय, तडागम् = सरोवरम्, वापिकाम् = दीर्घिकाम्, वा = अथवा, कृत्रिमाम् = अनैसर्गिकाम्, नदीम् = तटिनीम्, कुल्याम् इति भावः, अथवा अन्यत् = अपरम्, तद्विधम् = तत्प्रकारकम्, कर्म = कृत्यम्, कुर्वन्ति = सम्पादयन्ति, तथा ये च अभिनवाम् = प्रत्यग्राम्, भुवम् = पृथिवीम्, कर्षन्ति = कृषिकर्म कुर्वन्ति, यावत् = यावत्कालपर्यन्तम्, तत् = तस्य कर्मणः, व्ययात् = विनियोगात्, द्विगुणम् = द्विगुणितम्, लाभं न प्राप्यते, तावत् तेभ्यः = शिल्पिगणेभ्यः, भागम् = राजदेयशुल्कम्, न = नहि, आहरेत् = आहरणं कुर्यात्॥१२१-१२२॥

**हिन्दी**—बढई एवं शिल्पियों से कर के रूप में पन्द्रह दिनों में एक दिन मुफ्त काम लेना चाहिए। राज्य की उन्नति के लिए जो तालाब, बावड़ी, नहर या ऐसे ही कुछ और काम करते हैं, उनसे तथा जो नई धरती जोत कर आबाद करते हैं; उनसे जब तक लागत-खर्च काट कर दूना लाभ न हो तब तक राजस्व वसूल नहीं करना चाहिए॥१२१-१२२॥

**कार्विति। कुर्वन्तीति॥** कारुगणान् शिल्पिगणांश्च पक्षे पञ्चदशदिनाभ्यन्तरे दैनिकम् एकदिनसाध्यं कर्म्म कारयेत्, एतदेव तेषां राजभागदानमिति भावः। ये च तस्य राज्ञः वृद्ध्यै राज्योन्नत्यै तडागं वापिकां दीर्घिकां वा कृत्रिमां नदीम् अथवा अन्यत् तद्विधं तद्रूपं कर्म्म कुर्वन्ति, ये च अभिनवां नवोत्थितां भुवं कर्षन्ति कर्षणेन उर्वरां कुर्वन्तीत्यर्थः, यावत् तद्व्ययात् तस्य कर्मणः व्ययात् द्विगुणं लभ्यते इति शेषः, तावत् तेभ्यः कर्म्मकरेभ्यः भागं राजांशं न आहरेत्, द्विगुणातिरिक्ते तु आहरेदेवेत्यर्थः॥१२१-१२२॥

**भुवि भागं भृतिं शुल्कं वृद्धिमुत्कोचकं करम्।**
**सद्य एव हरेत् सर्वं न तु कालविलम्बनैः॥१२३॥**

**अन्वयः**—भुवि भागं भृतिं शुल्कं वृद्धिम् उत्कोचकं करं सर्वं सद्यः एव हरेत्, कालविल्म्बनैः न तु॥१२३॥

**व्याख्या**—भुवि = संसारे, भागम् = अंशम्, भृतिम् = वेतनम्, शुल्कम् = करम्, वृद्धिम् = कुसीदम्, उत्कोचकम् = उपायनम्, करम् = राजस्वम्, एतत् सर्वम् = सकलम्, सद्यः एव = तत्काल एव, हरेत् = स्वीकुर्यात्, कालविलम्बनैः = अत्यधिकविलम्बनैः, न = नहि, कुर्यादिति॥१२३॥

**हिन्दी**—अपनी जमीन का हिस्सा, वेतन, चुंगी, व्याज, घूस और मालगुजारी—इन्हें शीघ्र ले लेना चाहिए, इनमें देर करना उचित नहीं है॥१२३॥

**भुवीति।** भुवि पृथिव्यां भागं भृतिं वेतनं शुल्कं वृद्धिं कुसीदम् उत्कोचकं भागविहित-कार्य्यकरणोत्साहदानार्थं देयं धनं तथा करं राजस्वम् एतत् सर्वं सद्य एव हरेत् कालविलम्बनैः न तु नैव॥१२३॥

दद्यात् प्रतिकर्षकाय भागपत्रं स्वचिह्नितम्।
नियम्य ग्रामभूभागमेकस्माद् धनिकाद्धरेत्॥ १२४॥
गृहीत्वा तत्प्रतिभुवं धनं प्राक् तत्समं तु वा।
विभागशो गृहीत्वापि मासि मासि ऋतौ ऋतौ॥ १२५॥

**अन्वयः**—प्रतिकर्षकाय स्वचिह्नितं भागपत्रं दद्यात्। वा ग्रामभूभागं नियम्य एकस्मात् धनिकात् हरेत्। तत्प्रतिभुवं गृहीत्वा वा तत्समं धनं प्राक् मासि मासि ऋतौ ऋतौ विभागशः हरेत्॥ १२४-१२५॥

**व्याख्या**—प्रतिकर्षकाय = प्रत्येकं क्षेत्राजीवाय, स्वचिह्नितम्—स्वस्य = आत्मनः, चिह्नितम् = मुद्रयाऽङ्कितम्, भागपत्रम् = शुल्कप्राप्तिपत्रम्, दद्यात् = देयात्, वा = अथवा, ग्रामभूभागम्—ग्रामस्य = निवसथस्य, भूभागम् = क्षेत्रखण्डम्, नियम्य = निर्धार्य, एकस्मात् धनिकात् = धनवतो जनात्, तत् = तस्य धनिनः, प्रतिभुवम् = लग्नकम्, गृहीत्वा = नीत्वा, वा = अथवा, तत्समम् = तत्तुल्येन, धनम् = अर्थम्, प्राक् = पूर्वम्, गृहीत्वाऽपि, मासि मासि = प्रतिमासम्, ऋतौ ऋतौ = प्रतिद्विमासात्मकं कालम्, विभागशः = विभागक्रमेण राजस्वम्, हरेत् = स्वीकुर्यात्॥१२४-१२५॥

**हिन्दी**—राजा हर किसान को मालगुजारी पाने की रसीद लिखकर उस पर अपनी मुहर लगाकर उसे दे दे। अथवा गाँव की पूरी जमीन की मालगुजारी नियत कर उसी गाँव के किसी धनी व्यक्ति से सारी मालगुजारी एक साथ वसूल करे और उस धनी व्यक्ति को वहाँ के किसानों का जामिनदार बना दे। वह जामिनदार हर महीने या हर ऋतु में सबसे अलग-अलग मालगुजारी वसूल कर राजा को एक साथ दे॥ १२४-१२५॥

**दद्यादिति। गृहीत्वेति।** प्रतिकर्षकाय प्रत्येकं कृषिकारिणे इत्यर्थः; स्वचिह्नितं स्वाक्षरितं भागस्य राजांशस्य पत्रं लेख्यं दद्यात्। वा अथवा ग्रामभूभागं नियम्य निरूप्य निर्धार्य्य इत्यर्थः, एकस्मात् धनिकात् धनवतः जनात् तस्य धनिकस्य प्रतिभुवं प्रतिरूपं गृहीत्वा वा तत्समं राजदेयधनसमानं धनं प्राक् लेख्यदानात् पूर्वं गृहीत्वा किंवा मासि मासि प्रतिमासम् ऋतौ ऋतौ प्रतिद्विमासं विभागशः विभागक्रमेण उक्तं ग्रामभुवो भागं राजस्वमित्यर्थः, हरेत् गृह्णीयात्॥ १२४-१२५॥

षोडशद्वादशदशाष्टांशतो वाधिकारिणः।
स्वांशात् षष्ठांशभागेन ग्रामपान् सन्नियोजयेत्॥ १२६॥

**अन्वयः**—षोडशद्वादशदशाष्टांशतः स्वांशात् षष्ठांशभागेन ग्रामपान् अधिकारिणः वा सन्नियोजयेत्॥ १२६॥

**व्याख्या**—ग्रामात् राजस्वरूपेण प्राप्तधनस्य, षोडशांशात् = दशाधिकषड्भागात्, द्वादशांशात् = द्वयाधिकदशभागात्, दशांशात् = दशभागात्, अष्टांशात् = अष्टमभागात्, स्वांशात्—स्वस्य = आत्मनः राज्ञः, अंशात् = भागात्, षष्ठांशभागेन, यथायथषष्ठभागरूपेण वेतनेन, ग्रामपान् = ग्रामपालकान्, अधिकारिणः = समाहर्त्तारः, योजयेत्॥ १२६॥

**हिन्दी**—योग्यतानुसार सोलहवाँ, बारहवाँ, दसवाँ या आठवाँ भाग, जो राजा को मिलने वाला कर या मालगुजारी हो; उसका छठा भाग वेतन के रूप में देकर राजा ग्रामपाल या समाहर्त्ता की नियुक्ति करे॥ १२६॥

**षोडशेति।** षोडशांशात् द्वादशांशात् दशांशात् अष्टांशाच्च स्वांशात् राजप्राप्यांशात् षष्ठांशभागेन यथायथषष्ठभागरूपेण वेतनेन ग्रामपान् ग्रामपालकान् अधिकारिणः भृत्यान् वा सन्नियोजयेत् ॥ १२६ ॥

**गवादिदुग्धान्नफलं कुटुम्बार्थाद्धरेन्नृपः।**
**उपभोगे धान्यवस्त्रं क्रेतृतो नाहरेत् फलम् ॥ १२७ ॥**

**अन्वयः**—नृपः कुटुम्बार्थात् गवादिदुग्धात् फलं न हरेत्। उपभोगे धान्यवस्त्रं क्रेतृतः फलं न आहरेत् ॥ १२७ ॥

**व्याख्या**—नृपः = राजा, कुटुम्बार्थात् = परिवारपालनार्थात्, गवादीनाम् = धेनुप्रभृतीनाम्, दुग्धात् = पयसः, फलम् = राजस्वम्, न = नहि, हरेत् = गृह्णीयात्। उपभोगे = आत्मव्यवहारे, धान्यन् = अन्नम्, वस्त्रञ्च = वसनञ्च, क्रेतृतः = क्रेतुः ग्राहकात् वा, फलम् = करम्, न = नहि, आहरेत् = गृह्णीयात् ॥ १२६ ॥

**हिन्दी**—अपने पारिवाररिक उपभोग के लिए संचित गाय, भैंस आदि के दूध पर राजा कर न लगाये और न तो अपने उपभोग के लिए खरीदे गये अन्न-वस्त्र पर कर लगाये ॥ १२७ ॥

**गवादीति।** नृपः कुटुम्बार्थात् परिवारभरणार्थात् गवादीनां दुग्धात् फलं करं न हरेत्। तथा उपभोगे स्वव्यवहारार्थं न तु व्यवसायार्थमित्यर्थः। धान्यं व्रस्त्रञ्च क्रेतृतः क्रेतुः सकाशात् फलं शुल्कं न आहरेत् ॥ १२७ ॥

**वार्द्धुषिकाच्च कौसीदाद् द्वात्रिंशांशं हरेन्नृपः।**
**गृहाद्याधारभूशुल्कं कृष्टभूमेरिवाहरेत् ॥ १२८ ॥**

**अन्वयः**—नृपः वार्द्धुषिकात् कौसीदात् द्वात्रिंशांशं हरेत्। कृष्टभूमेरिव गृहाद्याधारभूशुल्कम् आहरेत् ॥ १२८ ॥

**व्याख्या**—नृपः = राजा, वार्द्धुषिकात् = वृद्ध्याजीवात्, कौसीदात् = वृद्ध्या ऋणदातुः सकाशात्, द्वात्रिंशांशम् = द्वयाधिकत्रिंशद्‌भागम्, हरेत् = गृह्णीयात्। कृष्टभूमेः = कर्षणभूमेः, इव = तुल्यम्, गृहादीनाम् = भवनादीनाम्, आधारभुवः = निवासभूम्याः, शुल्कम् = करम्, आहरेत् = ग्रहणं कुर्यात् ॥ १२८ ॥

**हिन्दी**—व्यापारियों और सूदखोरों से लाभांश का बत्तीसवाँ भाग कर के रूप में राजा को लेना चाहिए। इसी तरह जोतने की जमीन की तरह ही वासभूमि की भी मालगुजारी लेनी चाहिए ॥ १२८ ॥

**वार्द्धुषिकादिति।** नृपः वार्द्धुषिकात् वृद्धिजीविनः कौसीदात् ऋणदातुः सकाशात् त्रिंशांशं करं हरेत्। तथा कृष्टभूमेरिव गृहादीनाम् आधारभुवः वासभूम्याः शुल्कं हरेत् ॥ १२८ ॥

**तथा चापणिकेभ्यस्तु पण्यभूशुल्कमाहरेत्।**
**मार्गसंस्काररक्षार्थं मार्गगेभ्यो हरेत् फलम् ॥ १२९ ॥**

**अन्वयः**—राजा आपणिकेभ्यः पण्यभूशुल्कम् आहरेत् तथा मार्गगेभ्यः मार्गसंस्काररक्षार्थं फलं हरेत् ॥ १२९ ॥

**व्याख्या**—राजा, आपणिकेभ्यः = वणिग्भिः, पण्यभूशुल्कम् = विक्रयभूमिकरम्, आहरेत् = गृह्णीयात्, तथा मार्गगेभ्यः = पथिकेभ्यः, मार्गसंस्काररक्षार्थम् = पथपरिष्कारार्थं संरक्षणार्थञ्च, फलम् = शुल्कम्, हरेत् = स्वीकुर्यात् ॥ १२९ ॥

**हिन्दी**—दूकानदारों से दूकान की भूमि सहित कर लेना चाहिए तथा पथ की सफाई और संरक्षण के लिए यात्रियों से भी कर वसूल करना चाहिए ॥ १२९ ॥

**तथेति**। राजा अपिणिकेभ्यः विपणिजीविभ्यः पण्यभूशुल्कं विक्रयस्थानशुल्कम् आहरेत्। तथा मार्गगेभ्यः पथिकेभ्यः मार्गसंस्काररक्षार्थं फलं शुल्कं हरेत् ॥ १२९ ॥

**सर्वतः फलभुग्भूत्वा दासवत् स्यात्तु रक्षणे।**
**इति कोशप्रकरणं समासात् कथितं किल ॥ १३० ॥**

**इति शुक्रनीतौ चतुर्थाध्यायस्य कोशनिरूपणं नाम द्वितीयं प्रकरणम्।**

---

**अन्वयः**—राजा सर्वतः रक्षणे दासवत् फलभुक् स्यात्। इति समासात् कोशप्रकरणं किल कथितम् ॥ १३० ॥

**व्याख्या**—राजा सर्वतः = सकलजनसमूहात्, रक्षणे = संरक्षणार्थम्, दासवत् = सेवक इव, फलभुक् = राजस्वरूपवेतनभोगी, स्यात् = भवेत्। इति = इत्थम्, समासात् = सङ्क्षेपात्, कोशप्रकरणम्, किल = निश्चितम्, कथितम् = अस्मिन् प्रकरणे वर्णितम् ॥ १३० ॥

**हिन्दी**—राजा सबसे कर लेकर दास की तरह उस धन की रक्षा करे। इस तरह संक्षेप में कोश-प्रकरण का वर्णन किया गया ॥ १३० ॥

**इस प्रकार शुक्रनीति में चतुर्थ अध्याय में 'कोशनिरूपण' नामक द्वितीय प्रकरण की 'विमला' संस्कृत-हिन्दी व्याख्या समाप्त हुई।**

---

**सर्वत इति**। राजा सर्वतः सर्वस्मात् जनात् रक्षणे रक्षणार्थं दासवत् भृत्यवत् फलभुक् राजस्वरूपवेतनभोगी स्यात्। इति अनेन प्रकारेण समासात् सङ्क्षेपात् कोशप्रकरणं किल निश्चितं कथितम् ॥ १३० ॥

**इति श्रीजीवानन्दविद्यासागरविरचिता चतुर्थाध्यायस्य द्वितीयप्रकरणव्याख्या समाप्ता।**

---

# चतुर्थाध्यायस्य तृतीयं प्रकरणम्

**अथ मिश्रे तृतीयन्तु राष्ट्रं वक्ष्ये समासतः।**
**स्थावरं जङ्गमञ्चापि राष्ट्रशब्देन गीयते॥ १॥**

**अन्वयः**—अथ मिश्रे तृतीयं राष्ट्रं समासतः वक्ष्ये। राष्ट्रशब्देन स्थावरं जङ्गमञ्चापि गीयते॥ १॥

**व्याख्या**—अथ = अनन्तरम्, मिश्रे = अस्मिन्प्रकरणे, तृतीयम् = तृतीयाध्याये, राष्ट्रम् = जनपदम्, समासतः = सङ्क्षेपतः, वक्ष्ये = कथयिष्यामि। अत्र राष्ट्रशब्देन = राष्ट्रपदेन, स्थावरम् = निश्चतद्रुमलतादिकम्, जङ्गमम् = गमनशीलं गोमानुषादिकम्, च, गीयते = वर्ण्यते॥ १॥

**हिन्दी**—इसके बाद इस मिले-जुले तृतीय प्रकरण में राष्ट्र का वर्णन करेंगे। राष्ट्र शब्द से यहाँ तात्पर्य जड़-चेतन दोनों से हैं॥ १॥

**अथेति**। अथ अनन्तरं मिश्रे अध्याये तृतीयं राष्ट्रं राज्यप्रकरणं समासतः सङ्क्षेपेण वक्ष्ये कथयिष्यामि। राष्ट्रशब्देन स्थावरं स्थितिशीलं वृक्षपर्वतादि जङ्गमं गोमनुष्यादिकञ्च गीयते कथ्यते॥ १॥

**यस्याधीनं भवेद् यावत् तद्राष्ट्रं तस्य वै भवेत्॥ २॥**

**अन्वयः**—यस्य यावत् राज्यम् अधीनं भवेत् तस्य तत् राष्ट्रं भवेत्॥ २॥

**व्याख्या**—यस्य = नृपस्य, यावत् = यत्परिमितम्, राज्यम् = भूभागम्, अधीनम् = आज्ञानुवर्त्तिनम्, भवेत् = स्यात्, तत् = भूभागम्, राष्ट्रम् = जनपदम्, भवेत् = स्यात्॥ २॥

**हिन्दी**—जिस राजा के अधीन जहाँ तक का जनपद होता है, उस सीमा तक उसका वह राष्ट्र कहलाता है॥ २॥

**यस्येति**। यस्य राज्ञः यावत् यत्परिमितं राज्यम् अधीनं तस्य तत् राष्ट्रं भवेत्॥ २॥

**कुवेरता शतगुणाधिका सर्वगुणात् ततः।**
**ईशता चाधिकतरा सा नाल्पतपसः फलम्॥ ३॥**

**अन्वयः**—कुवेरता शतगुणेभ्यः अधिका, ईशता ततः सर्वगुणात् अधिकतरा, सा च अल्पतपसः फलं न॥ ३॥

**व्याख्या**—कुवेरता = राजराजत्वम्, शतगुणेभ्यः = गुणशतेभ्योऽपि, अधिका = विशिष्टतरा, भवति, ईशता = सर्वस्वामित्वम्, तु, ततः = ततोऽपि, सर्वगुणात् = सकलगुणसमूहात्, अधिकतरा = श्रेष्ठतरा भवति, सा = कुवेरता ईशता च, अल्पतपसः = तुच्छतपस्यायाः, फलम् = परिणामम्, न = नहि, भवत्येवेति निश्चितमिति॥ ३॥

**हिन्दी**—सर्वगुणसम्पन्न होने की अपेक्षा सौ गुना अधिक श्रेष्ठ धनकुबेर होना है। उसके

बाद प्रभुत्वसम्पन्न राजा होना सबसे अधिक श्रेष्ठ है, जो सामान्य तप का फल नहीं है ॥३ ॥

**कुवेरतेति**। कुवेरता धनपतित्वं शतगुणेभ्यः अधिका श्रेष्ठा ईशता स्वामित्वन्तु ततः सर्वगुणात् अधिकतरा श्रेष्ठतरा। सा कुवेरता ईशता च अल्पतपसः फलं न, बहुतपस्यायाः फलमित्यर्थः॥ ३ ॥

**स दीव्यति पृथिव्यां तु नान्यो देवो यतः स्मृतः ॥ ४ ॥**

**अन्वयः**—सः पृथिव्यां दीव्यति, यतः अन्यः देवः न स्मृतः ॥ ४ ॥

**व्याख्या**—सः = असौ, धनपतिरीशश्च, पृथिव्याम् = भुवि, दीव्यति = विलसति, यतः = यस्मात्कारणात्, अन्य = अपरः, देवः = प्रभुत्वसम्पन्नो जनः, तथा, न = नहि, स्मृतः = कथितः ॥ ४ ॥

**हिन्दी**—क्योंकि वह पुरुष संसार में देवता की तरह विलास करता है, अतः उसकी तरह कोई अन्य व्यक्ति नहीं माना जाता है ॥ ४ ॥

**स इति**। सः धनस्वामी प्रभुश्च पृथिव्यां दीव्यति क्रीडति विराजते इत्यर्थः। अतः अन्यः जनः देवः न स्मृतः न कथितः, धनवान् प्रभुरेव देवशब्देनाभिधीयते इति भावः ॥ ४ ॥

**यस्याश्रितो भवेल्लोकस्तद्वदाचरति प्रजा।**
**भुङ्क्ते राष्ट्रफलं सम्यगतो राष्ट्रकृतं त्वघम् ॥ ५ ॥**

**अन्वयः**—लोकः यस्य आश्रितः भवेत् प्रजा तद्वत् आचरति। अतः राष्ट्रफलं राष्ट्रकृतम् अघं सम्यक् भुङ्क्ते ॥ ५ ॥

**व्याख्या**—लोकः = जनः, यस्य = राज्ञः, आश्रितः = अवलम्बितः, भवेत् = स्यात्, प्रजा = जनाः, तद्वत् = नृपतिरिव, आचरति = व्यवहरति। अतः = अस्मात् कारणात्, राष्ट्रफलम्—राष्ट्रस्य = जनपदस्य, फलम् = परिणामम्, सुखसुविधादिकम्, राष्ट्रकृतम् = जनसम्पादितम्, अघम् = पापम्, तु = पुनः, सम्यक् = सुष्ठुतया, भुङ्क्ते = सुखदुःखादीनामनुभवति ॥ ५ ॥

**हिन्दी**—राजा जैसा आचरण करता है, उसकी आश्रित प्रजा भी वैसा ही आचरण करती है। अतः राजा भी प्रजाकृत पाप-पुण्य का फल दुःख या सुख का भलीभाँति अनुभव करता है ॥ ५ ॥

**तस्येति**। लोकः यस्य प्रभोः आश्रितः भवेत्, प्रजा तद्वत् प्रभुवत् प्रभुमतानुसारेणेत्यर्थः आचरति। अतः कारणात् स्वामी राष्ट्रफलं सुखादिकं राष्ट्रकृतम् अघं पापञ्च, तुशब्दश्चार्थः। सम्यक् भुङ्क्ते ॥ ५ ॥

**स्वस्वधर्मपरो लोको यस्य राष्ट्रे प्रवर्त्तते।**
**धर्मनीतिपरो राजा चिरं कीर्त्तिं स चाश्नुते ॥ ६ ॥**

**अन्वयः**—यस्य राष्ट्रे लोकः स्वस्वधर्मपरः प्रवर्त्तते, स राजा धर्मनीतिपरः चिरं कीर्त्तिं च अश्नुते ॥ ६ ॥

**व्याख्या**—यस्य = नृपस्य, राष्ट्रे = राज्ये, लोकः = प्रजा, स्वस्वधर्मपरः = स्वकीयधर्मतत्परः, प्रवर्त्तते = भवति, सः = असौ, राजा = नृपः, धर्मनीतिपरः = धर्मानुष्ठाने नीतिनिर्वाहे च तत्परो भवति, चिरम् = बहुकालपर्यन्तम्, कीर्त्तिम् = यशः, अश्नुते = उपभुङ्क्ते ॥ ६ ॥

**हिन्दी**—जिस राजा के राज्य में प्रजा अपने-अपने धर्म में तत्पर रहती है, वह राजा स्वयं धर्म और नीति के मार्ग पर चलकर बहुत दिनों तक यश का उपभोग करता है ॥ ६ ॥

**स्वेति**। यस्य राष्ट्रे लोकः स्वस्वधर्मपरः निजनिजानुष्ठानतत्परः प्रवर्त्तते चलति, सः राजा धर्मनीतिपरः भवतीति शेषः, चिरं कीर्त्तिञ्च अश्नुते लभते ॥ ६ ॥

**भूमौ यावद् यस्य कीर्त्तिस्तावत् स्वर्गे स तिष्ठति ॥ ७ ॥**

**अन्वयः**—यस्य भूमौ यावत् कीर्त्तिः तिष्ठति तावत् सः स्वर्गे तिष्ठति ॥ ७ ॥

**व्याख्या**—यस्य = नृपस्य, भूमौ = पृथिव्याम्, यावत् = यावदवधि, कीर्त्तिः = यशः, तिष्ठति = अवतिष्ठति, तावत् = तावत्कालपर्यन्तम्, सः = असौ, स्वर्गे = देवलोके, तिष्ठति = निवसति ॥ ७ ॥

**हिन्दी**—धरती पर जिसकी कीर्त्ति जब तक रहती है तब तक वह स्वर्ग में निवास करता है ॥ ७ ॥

**भूमाविति**। यस्य भूमौ पृथिव्यां यावत् यावत्कालं कीर्त्तिस्तिष्ठतीति शेषः, सः तावत् तावत्कालं स्वर्गे तिष्ठति ॥ ७ ॥

**अकीर्त्तिरिव नरको नान्योऽस्ति नरको दिवि।**
**नरदेहाद् विना त्वन्यो देहो नरक एव सः ॥ ८ ॥**

**अन्वयः**—अकीर्त्तिः एव नरकः, दिवि अन्यः नरकः न, नरदेहात् विना अन्यः देहः सः नरकः एव ॥ ८ ॥

**व्याख्या**—अकीर्त्तिः = अपयशः, एव = इति निश्चयेन, नरकः = दुर्गतिकारणम्, दिवि = स्वर्गे, अन्यः = अपकीर्तिभिन्नः, नरकः = निरयः, न = नास्ति, नरदेहात् = मानवशरीरात्, विना = विहाय, अन्यः = अपरः, यो देहः = या योनिः, सः, तदेव नरकः = निरय एवेति ॥ ८ ॥

**हिन्दी**—अपकीर्त्ति ही नरक है, परलोक में इसके सिवा और कोई दूसरा नरक नहीं है। मानव देह को छोड़कर दूसरी योनि तो नरक ही है ॥ ८ ॥

**अकीर्त्तिरिति**। अकीर्त्तिः अयश एव नरकः दुर्गतिकारणं, दिवि परलोके अन्यः अपरः अकीर्त्तिभिन्न इत्यर्थः, नरकः न अस्ति। नरदेहात् विना अन्यो यो देहः, सः नरक एव ॥ ८ ॥

**महत् पापफलं विद्यादाधिव्याधिस्वरूपकम्।**
**स्वयं धर्मपरो भूत्वा धर्मे संस्थापयेत् प्रजाः।**
**प्रमाणभूतं धर्मिष्ठमुपसर्पन्त्यतः प्रजाः ॥ ९ ॥**

**अन्वयः**—आधिव्याधिस्वरूपकं महत् पापफलं विद्यात्। स्वयं धर्मपरो भूत्वा धर्मे प्रजाः संस्थापयेत्। अतः प्रजाः प्रमाणभूतं धर्मिष्ठम् उपसर्पन्ति ॥ ९ ॥

**व्याख्या**—आधिः = मानसी व्यथा, व्याधिः = दैहिकपीडा, तयोः स्वरूपकम् = तत्तद्रूपम्, महत् = प्रचण्डम्, पापस्य = किल्बिषस्य, फलम् = परिणामम्, विद्यात् = ज्ञेयात्। अतः राजा, स्वयम् = आत्मनः एव, धर्मपरः = धर्मनिष्ठः, भूत्वा = भूय, धर्मे = शुभकृत्ये, प्रजाः = जनाः, संस्थापयेत् = प्रवर्त्तयेत्। अतः = धर्मप्रर्वतनात्, प्रजाः = जनाः, प्रमाणभूतम् = निदर्शनस्वरूपं, धर्मिष्ठम् = धार्मिकं नृपम्, उपसर्पन्ति = अनुसरन्ति ॥ ९ ॥

**हिन्दी**—मानसिक पीड़ा या शारीरिक रोग किसी बड़े पाप का ही परिणाम समझना चाहिए। अतः राजा स्वयं धार्मिक होकर प्रजा को भी धर्म में स्थापित करे। इससे प्रजा भी धर्मनिष्ठ राजा को प्रमाण मानकर उसका अनुसरण करेगी ॥ ९ ॥

**महदिति**। आधिः मानसी व्यथा, व्याधिः शरीरपीडा तयोः स्वरूपकं तत्तद्रूपमित्यर्थः, महत् पापस्य फलं विद्यात्, अतः राजा स्वयं धर्म्मपरः धर्म्मनिष्ठः भूत्वा प्रजाः धर्मे संस्थापयेत्। अतः धर्म्मसंस्थापनात् प्रजाः प्रमाणभूतं निदर्शनस्वरूपं धर्मिष्ठं राजानम् उपसर्पन्ति अनुवर्त्तन्ते ॥ ९ ॥

देशधर्मा जातिधर्माः कुलधर्माः सनातनाः।
मुनिप्रोक्ताश्च ये धर्माः प्राचीना नूतनाश्च ये ॥ १० ॥
ते राष्ट्रगुप्त्यै सन्धार्य्या ज्ञात्वा यत्नेन सन्नृपैः।
धर्मसंस्थापनाद्राजा श्रियं कीर्त्तिं प्रविन्दति ॥ ११ ॥

**अन्वयः**—सनातनाः ये देशधर्माः जातिधर्माः कुलधर्माः तथा मुनिप्रोक्ताः ये प्राचीनाः नूतनाः धर्माः सन्नृपैः ते ज्ञात्वा राष्ट्रगुप्त्यै यत्नेन सन्धार्याः। राजा धर्मसंस्थापनात् श्रियं कीर्त्तिं च प्रविन्दति ॥ १०-११ ॥

**व्याख्या**—सनातनाः = क्रमागतपुरातनाः, ये देशधर्माः = राष्ट्रीयधर्माः, जातिधर्माः = जातीयधर्माः, कुलधर्माः = कुलपरम्परागतधर्माः, तथा = तेनैव प्रकारेण, मुनिप्रोक्ताः = ऋषिगणनिर्दिष्टाः, ये प्राचीनाः = पुरातनाः, नूतनाः = नवीनाः, धर्माः = अभ्युदयनिःश्रेयसगुणकर्मसमूहसाधको नियमाः, सन्नृपैः = साधुभिः राजभिः, ते = धर्माः, ज्ञात्वा = परिज्ञाय, राष्ट्रगुप्त्यै—राष्ट्रस्य = जनपदस्य, गुप्त्यै = रक्षणाय, यत्नेन = प्रयासपूर्वकेण, सन्धार्याः = धारणीयाः पालनीयाश्च। राजा = नृपः, धर्मसंस्थापनात् = धर्मप्रतिपालनात्, श्रियम् = लक्ष्मीम्, कीर्त्तिम् = यशश्च, प्रविन्दति = प्रकर्षेण प्राप्नोति ॥ १०-११ ॥

**हिन्दी**—बहुत दिनों से प्रचलित देशधर्म, जातिधर्म तथा कुलधर्म एवं मुनियों के द्वारा कहे गये धर्म, नये-पुराने धर्म—इन सबों को जानकर अच्छे राजे अपने राष्ट्र की रक्षा के निमित्त प्रयासपूर्वक इनका पालन करते हैं। क्योंकि धर्म की स्थापना से ही कोई राजा लक्ष्मी और कीर्त्ति पाता है ॥ १०-११ ॥

**देशधर्मा इति। ते इति**। सनातनाः चिरं प्रचलिताः ये देशधर्माः जातिधर्माः कुलधर्माः तथा मुनिभिः प्रोक्ताः कथिताः प्राचीनाः नूतनाश्च ये धर्माः नियमाः, सन्नृपैः साधुभिः राजभिः ते धर्माः ज्ञात्वा राष्ट्रस्य गुप्त्यै रक्षायै यत्नेन सन्धार्य्याः पालनीयाः। राजा धर्मसंस्थापनात् तत्तद्धर्म्मप्रतिपालनात् श्रियं लक्ष्मीं कीर्त्तिञ्च प्रविन्दति प्रकर्षेण लभते ॥ १०-११ ॥

चतुर्धा भेदिता जातिर्ब्रह्मणा कर्मभिः पुरा।
तत्तत्साङ्कर्य्यासाङ्कर्य्यात् प्रतिलोमानुलोमतः।
जात्यानन्त्यन्तु सम्प्राप्तं तद्वक्तुं नैव शक्यते ॥ १२ ॥

**अन्वयः**—पुरा ब्रह्मणा कर्मभिः तत्तज्जातिः चतुर्धा भेदिता। तेषां साङ्कर्यासाङ्कर्यात् तथा प्रतिलोमानुलोमतः जात्यानन्त्यम्, तत् वक्तुं नैव शक्यते ॥ १२ ॥

**व्याख्या**—पुरा = प्राचीनकाले, ब्रह्मणा = वेधसा, कर्मभिः = तेषां कार्यैः, तत्तज्जातिः = तेषां तेषां जातिविशेषाणाम्, चतुर्धा = चतुःप्रकारेण, ब्राह्मणक्षत्रियवैश्यशूद्ररूपेण, भेदिता = विभाजिता, तेषाम् = जातिविशेषाणाम्, साङ्कर्यासाङ्कर्यात् = अन्योन्यसम्मिश्रणासम्मिश्रणात्, तथा = तेनैव प्रकारेण, प्रतिलोमानुलोमतः = प्रतिकूलेनावरोहक्रमेण च, जात्यानन्त्यम्—जातीनाम् = वर्णानाम्, आनन्त्यम् = असंख्यत्वम्, तत् = समग्रम्, वक्तुम् = कथितुम्, नैव = नास्त्येव, शक्यते = शक्तुं समर्थो भवति ॥ १२ ॥

**हिन्दी**—पहले ब्रह्मा ने काम के अनुसार मानव की चार जातियाँ बनाईं। उनमें प्रत्येक जाति में मिश्रण होने पर उन मिश्रित जातियों का भी सांकर्य प्रतिलोभ अर्थात् पिता निम्न कुल का एवं माता उच्च कुल की तथा अनुलोम अर्थात् पिता उच्च वर्ग का एवं माता निम्न वर्ग होने से असंख्य जातियाँ हो गईं, जिनकी गिनती संभव नहीं है ॥ १२ ॥

**चतुर्धेति**। पुरा पूर्वकाले ब्रह्मणा कर्म्मणा तत्तज्जातिविशेषनिष्ठकार्य्येण चतुर्धा जातिः भेदिता, ब्राह्मणक्षत्रियवैश्यशूद्ररूपेण विभक्ता। तेषां तेषाञ्च साङ्कर्य्यासाङ्कर्य्यात् परस्परमिश्रणामिश्रणात् तथा प्रतिलोमानुलोमतः प्रातिलोम्येन आनुलोम्येन च जात्यानन्त्यं जातीनाम् आनन्त्यम् असङ्ख्यत्वं सम्प्राप्तं जातं, तत् वक्तुं कथयितुं नैव शक्यते ॥ १२ ॥

**मन्यन्ते जातिभेदं ये मनुष्याणां तु जन्मना।**
**त एव हि विजानन्ति पार्थक्यं नामकर्म्मभिः ॥ १३ ॥**

**अन्वयः**—ये जन्मना मनुष्याणां जातिभेदं मन्यन्ते, ते एव नामकर्मभिः पार्थक्यं विजानन्ति ॥ १३ ॥

**व्याख्या**—ये = जनाः, जन्मना = जननानुसारेण, मनुष्याणाम् = मानवानाम्, जातिभेदम्—जातीनाम् = वर्णानाम्, भेदम् = भिन्नता, मन्यन्ते = स्वीकुर्वन्ति, ते = पूर्वोक्ताः जनाः, एव = इति निश्चयेन, नामकर्मभिः—नामभिः = अभिधानैः, कर्मभिः = कार्यैः, पार्थक्यम् = मानवानां भिन्नत्वम्, विजानन्ति = विन्दन्ते ॥ १३ ॥

**हिन्दी**—जो व्यक्ति जन्म से मनुष्य की जाति मानते हैं, वे ही नाम से या कर्म से जातिगत भेद भी मानते हैं ॥ १३ ॥

**मन्यन्त इति**। ये जन्मना जननानुसारेण मनुष्याणां जातिभेदं मन्यन्ते, ते एव नामकर्म्मभिः नामभिः कर्मभिश्च मनुष्याणामिति शेषः, पार्थक्यं विभिन्नतां विजानन्ति हि ॥ १३ ॥

**जरायुजाण्डजा स्वेदोद्भिज्जा जातिः सुसङ्ग्रहात्।**
**उत्तमो नीचसंसर्गाद् भवेन्नीचस्तु जन्मना ॥ १४ ॥**

**अन्वयः**—जातिः सुसङ्ग्रहात् जरायुजाण्डजा स्वेदोद्भिज्जा। उत्तमः नीचसंसर्गात् जन्मना नीचः भवेत् ॥ १४ ॥

**व्याख्या**—जातिः = वर्णः, सुसङ्ग्रहात् = सुसङ्क्षेपात्, जरायुजाः = गर्भाशयजाताः, अण्डजाः = खगसर्पमीनादयो जीवाः, स्वेदजाः = घर्मजाताः, तथा उद्भिज्जाः = तरुगुल्मादयः, चतुर्धा, उत्तमः = श्रेष्ठजातिः, नीचसंसर्गात् = अधमसम्पर्कात्, जन्मना = जननेन, नीचः = अधमः, एव भवेत् = जायेत ॥ १४ ॥

**हिन्दी**—प्राणियों के चार भेद हैं—जरायुज मानवादि, अण्डज पक्षी, स्वेदज जूँ, खटमल

आदि तथा उद्भिज वृक्षादि। श्रेष्ठ जाति के लोग नीच के सम्पर्क से नीच हो जाते हैं, किन्तु नीच कुल में उत्पन्न नीच ही होते हैं ॥ १४ ॥

**जरायुजेति**। जातिः सुसङ्ग्रहात् सुसङ्क्षेपात् जरायुजा, अण्डजा, स्वेदजा तथा उद्भिज्जा इति चतुर्धा भवतीति शेषः। उत्तमः उत्कृष्टजातिः नीचसंसर्गात् जन्मना उत्पत्त्या नीचस्तु नीच एव भवेत् ॥ १४ ॥

**नीचो भवेन्नोत्तमस्तु संसर्गाद् वापि जन्मना।**
**कर्म्मणोत्तमनीचत्वं कालतस्तु भवेद् गुणैः।**
**विद्याकलाश्रयेणैव तन्नाम्ना जातिरुच्यते ॥ १५ ॥**

**अन्वयः**—नीचः तु संसर्गात् जन्मना वा उत्तमः न भवेत्, कर्मणा उत्तमनीचत्वं गुणैः कालतः उत्तमनीचत्वं भवेत्। किञ्च विद्याकलाश्रयेणैव तन्नाम्ना जातिः उच्यते ॥ १५ ॥

**व्याख्या**—नीचस्तु = अधमस्तु, संसर्गात् = सम्पर्कात्, जन्मना = उत्पत्त्या, वा = अथवा, उत्तमः = उत्कृष्टः, न = नहि, भवेत् = स्यात्, कर्मणा = कार्येण, उत्तमनीचत्वम् = उत्कर्षापकर्षभावः, तथा गुणैः = धर्मैः, कालतः = समयानुसारेण, उत्तमः = उत्कृष्टः, नीचत्वम् = अधमत्वम्, भवेत् = जायेत। किञ्च, विद्यानाम् = बोधानाम्, कलानाम् = नृत्यसङ्गीतादीनाम्, च आश्रयेण = अवलम्बनेन, एव, तत् = विद्याकलानाम्, नाम्ना = अभिधानेन, जातिः = वर्णः, उच्यते = कथ्यते ॥ १५ ॥

**हिन्दी**—जन्म से नीच वर्ण का व्यक्ति संसर्ग से उत्तम नहीं हो सकता, किन्तु कर्म से व्यक्ति तत्काल उत्तम या नीच कहलाने लगता है। विद्या और कला के अवलम्बन से भी उसके नामानुसार अनेक जातियों की कल्पना की जाती है ॥ १५ ॥

**नीच इति**। नीचस्तु संसर्गात् जन्मना वा उत्तमः न भवेत्। कर्म्मणा कार्य्येण उत्तमनीचत्वम् उत्कर्षापकर्षभावः क्षिप्रमिति शेषः, तथा गुणैः विद्याविद्यादिभिस्तु कालतः कालक्रमेण उत्तमनीचत्वं भवेत्। किञ्च विद्यानां कलानां सङ्गीतादीनाञ्च आश्रयेण एव तन्नाम्ना तत्तद्विद्याकलानां नाम्ना जातिः उच्यते कथ्यते; यथा अयं दार्शनिकः, अयं नैयायिकः, अयं गायक इत्यादि ॥ १५ ॥

**इज्याध्ययनदानानि कर्माणि तु द्विजन्मनाम्।**
**प्रतिग्रहोऽध्यापनञ्च याजनं ब्राह्मणेऽधिकम् ॥ १६ ॥**

**अन्वयः**—द्विजन्मनाम् इज्याध्ययनदानानि कर्माणि। प्रतिग्रहः अध्यापनं याजनं च ब्राह्मणे अधिकम् ॥ १६ ॥

**व्याख्या**—द्विजन्मनाम् = ब्राह्मणक्षत्रियवैश्यानाम्, द्वाभ्यां जन्मसंस्काराभ्यां जायतेति द्विजः; "ब्राह्मणक्षत्रियवैश्यानां संस्काराद्द्विज उच्यते" इति प्रामाण्येन ब्राह्मणादिवर्णत्रयस्य द्विजत्वेनाभिधानात्; इज्याध्ययनदानानि—इज्या = यागाद्यनुष्ठानम्, अध्ययनम् = पठनम्, दानम् = उत्सर्जनम् , एतानि त्रीणि कर्माणि = कृत्यानि, ब्राह्मणे = विप्रे तु, प्रतिग्रहः = आदानम्, अध्यापनम् = पाठनम्, तथा याजनम् = यजमानाय पौरोहित्यम्, एतत् त्रयम्, अन्यवर्णादधिकम् = विशिष्टम्, तेन हि ब्राह्मणः षट्कर्मी भवतीति भावः ॥ १६ ॥

**हिन्दी**—यज्ञ करना, अध्ययन करना तथा दान दैना—ये तीन कर्म द्विजन्मा अर्थात् ब्राह्मण, क्षत्रिय एवं वैश्य के लिए समानरूप से कर्त्तव्य हैं। किन्तु ब्राह्मणों के लिए तीन और अधिक कर्म हैं—यज्ञ करना, अध्यापन और दान लेना ॥ १६ ॥

**इज्येति।** द्विजन्मनां द्विजानां ब्राह्मणक्षत्रियवैश्यानां संस्कारात् द्विज उच्यते इति वचनेन ब्राह्मणादिवर्णत्रयस्य द्विजत्वेनाभिधानात्। इज्याध्ययनदानानि इज्या यज्ञानुष्ठानम् अध्ययनं दानञ्च एतानि त्रीणि कर्माणि। ब्राह्मणे तु प्रतिग्रहः ग्रहणम् अध्यापनं तथा याजनं परार्थे यज्ञकरणम् एतत् त्रयम् अधिकम् ॥ १६ ॥

**सद्रक्षणं दुष्टनाशः स्वांशादानन्तु क्षत्रिये।**
**कृषिगोगुप्तिवाणिज्यमधिकन्तु विशां स्मृतम् ॥ १७ ॥**

**अन्वयः**—क्षत्रिये तु सद्रक्षणं दुष्टनाशः स्वांशादानम् अधिकम्। विशां कृषिगोगुप्तिवाणिज्यम् अधिकं स्मृतम् ॥ १७ ॥

**व्याख्या**—क्षत्रिये = राजन्ये तु, सद्रक्षणम्—सताम् = साधूनाम्, रक्षणम् = गोपनम्, दुष्टनाशः—दुष्टानाम् = दुर्वृत्तानाम्, नाशः = विनाशनम्, स्वांशादानम्—स्वस्य = आत्मनः, अंशस्य = लभ्यशुल्कस्य, आदानम् = स्वीकरणम्, एतत्त्रयमधिकम्, विशाम् = वैश्यानाम्, कृषिः = भूकर्षणम्, गोगुप्तिः—गवाम् = पशूनाम्, गुप्तिः = पालनम्, तथा वाणिज्यम् = व्यापारम्, चैतत्त्रयम्, अधिकम् = विशिष्टम्, स्मृतम् = कथितम् ॥ १७ ॥

**हिन्दी**—सज्जनों की रक्षा, दुष्टों का विनाश करना तथा जीविका के लिए कर ग्रहण करना—ये तीन कर्म क्षत्रियों के अधिक हैं। इसी तरह कृषि, गोपालन एवं वाणिज्य ये तीन वैश्यों के अधिक कर्म हैं ॥ १७ ॥

**सद्रक्षणमिति।** क्षत्रिये तु सद्रक्षणं सतां साधूनां रक्षणं, दुष्टनाशः दुष्टानां दमनं तथा स्वांशस्य राजलभ्यांशस्य आदानं ग्रहणञ्च एतत्त्रयम् अधिकम्। विशां वैश्यानान्तु कृषिः गोगुप्तिः गवां पशूनां गुप्तिः पालनं तथा वाणिज्यम् एतत्त्रयम् अधिकं स्मृतम् ॥ १७ ॥

**दानं सेवैव शूद्रादेर्नीचकर्म्म प्रकीर्त्तितम् ॥ १८ ॥**

**अन्वयः**—शूद्रादेः दानं सेवा तथा नीचकर्म प्रकीर्त्तितम् ॥ १८ ॥

**व्याख्या**—शूद्रादेः—शूद्रस्य = वृषलस्य, आदिपदेन तत्समानजातेश्च, दानम् = उत्सर्जनम्, सेवा = परिचर्या, तथा नीचकर्म = समाजसंरक्षणार्थं परिमार्जनादिकञ्च निकृष्टकर्म, प्रकीर्त्तितम् = कथितम् ॥ १८ ॥

**हिन्दी**—दान देना, जीविका के लिए नौकरी करना एवं पथ-परिमार्जनादि निकृष्ट कर्म शूद्रों के लिए विहित कर्म कहे गये हैं ॥ १८ ॥

**दानमिति।** शूद्रादेः शूद्रस्य तत्समानजातेश्च दानं सेवा दासवृत्तिः तथा नीचकर्म निकृष्टकार्य्यं पदसेवागृहमार्जनादिकञ्च प्रकीर्त्तितम् ॥ १८ ॥

**क्रियाभेदैस्तु सर्वेषां भृतिवृत्तिरनिन्दिता।**
**सीरभेदैः कृषिः प्रोक्ता मन्वाद्यैर्ब्राह्मणादिषु ॥ १९ ॥**

**अन्वयः**—क्रियाभेदैः तु सर्वेषां भृतिवृत्तिः अनिन्दिता। यथा मन्वाद्यैः सीरभेदैः ब्राह्मणादिषु कृषिः प्रोक्ता ॥ १९ ॥

**व्याख्या**—क्रियाभेदैः—क्रियाणाम् = व्यापाराणाम्, भेदैः = प्रकारैः, सर्वेषाम् = सकलानां ब्राह्मणादीनाम्, भृतिवृत्तिः = जीवनयापनार्थं या निर्दिष्टा वृत्तिः = आजीविका, सा

अनिन्दिता = अनिन्दनीया। यथा मन्वाद्यैः = मनुप्रभृतिभिः मुनिभिः, सीरभेदैः—सीराणाम् = हलानाम्, भेदैः = प्रभेदैः, ब्राह्मणादिषु = विप्रादिषु, कृषिः = हलभृतिः, प्रोक्ता = कथिता ॥ १९ ॥

**हिन्दी**—जीवन-यापन के लिए काम करने के ढंग अलग-अलग बतलाये गये हैं, जो निन्दा करने योग्य नहीं है। जैसे मनु प्रभृति स्मृतिकारों ने हल के भेद से ब्राह्मणों के लिए भी कृषिकर्म को विहित माना है ॥ १९ ॥

**क्रियेति**। क्रियाणां कार्य्याणां भेदैः प्रभेदैः सर्वेषां ब्राह्मणादीनां भृतिवृत्तिः भरणार्थं निर्दिष्टा वृत्तिः जीवनोपायः अनिन्दिता। यथा मन्वाद्यैः मुनिभिः सीराणां लाङ्गलानां भेदैः विशेषैः ब्राह्मणादिषु कृषिः प्रोक्ता कथिता ॥ १९ ॥

**ब्राह्मणैः षोडशगवं चतुरूनं यथा परैः।**
**द्विगवं वान्त्यजैः सीरं दृष्ट्वा भूमार्दवं तथा ॥ २० ॥**

**अन्वयः**—ब्राह्मणैः षोडशगवं सीरं तथा परैः चतुरूनम्। तथा अन्त्यजैः भूमार्दवं दृष्ट्वा द्विगवं सीरम् ॥ २० ॥

**व्याख्या**—ब्राह्मणैः = क्षेत्राजीवैः विप्रैः, षोडशगवम् = षोडशभिः वृषभैः वाह्यम्, सीरम् = हलम्, तथा परैः = अन्यैः क्षत्रियवैश्यशूद्रैः, क्रमशः चतुः, ऊनम् = हीनम्, यथा क्षत्रियैः द्वादशगवम्, वणिग्भिः अष्टगवम्, वृषलैश्चतुर्गवं वहनीयम्। सीरम् = हलम्, तथा अन्त्यजैः = रजकादिभिः; तद्यथा—

"रजकश्चर्मकारश्च नटो वरुड एव च।
कैवर्त्तभेदभिल्लश्च सप्तैते अन्त्यजाः स्मृताः ॥" (यमवचनम्)

भूमार्दवम्—भुवः = पृथिव्याः, मार्दवम् = कोमलत्वम्, दृष्ट्वा = अवलोक्य, द्विगवम् = द्वाभ्यां वृषभाभ्यां वाह्यं हलं कर्त्तव्यमिति ॥ २० ॥

**हिन्दी**—ब्राह्मणों को एक हल पर सोलह बैल रखकर खेत जुतवाना चाहिए और क्रमशः उत्तरोत्तर चार-चार कम बैलों से अर्थात् क्षत्रियों को बारह बैल, वैश्यों को आठ बैल तथा शूद्रों को चार बैल एक हल पर रख कर खेत जुतवाना चाहिए। इसी तरह एक हल पर दो बैल अंत्यजों को रखना चाहिए। यह विभाजन धरती की कोमलता पर ध्यान में रखकर किया गया है ॥ २० ॥

**ब्राह्मणैरिति**। ब्राह्मणैः कृषिजीविभिरिति भावः, षोडशगवं षोडशभिः गोभिः वाह्यं सीरं तथा परैः अन्यैः क्षत्रियादिभिरित्यर्थः, क्रमशः चतुरूनं क्षत्रियैः द्वादशगवं, वैश्यैः अष्टगवं, शूद्रैः चतुर्गवमित्यर्थः, सीरं तथा अन्त्यजैः चाण्डालादिभिः भूमार्दवं भुवः भूमेर्मार्दवं मृदुत्वं दृष्ट्वा द्विगवं सीरं कर्त्तव्यमिति शेषः ॥ २० ॥

**ब्राह्मणेन विनान्येषां भिक्षावृत्तिर्विगर्हिता ॥ २१ ॥**

**अन्वयः**—ब्राह्मणेन विना अन्येषां भिक्षावृत्तिः विगर्हिता ॥ २१ ॥

**व्याख्या**—ब्राह्मणेन = विप्रेण, विना = विहाय, अन्येषाम् = क्षत्रियादीनाम्, भिक्षावृत्तिः = याच्ञाजीविका, विगर्हिता = विशेषरूपेण निन्दितेति ॥ २१ ॥

**हिन्दी**—ब्राह्मणों को छोड़कर अन्य जातियों के लिए भिक्षावृत्ति विशेष रूप से निन्दित है ॥ २१ ॥

**ब्राह्मणेनेति।** ब्राह्मणेन विना अन्येषां क्षत्रियादीनां भिक्षावृत्तिः विगर्हिता विशेषेण निन्दिता ॥ २१ ॥

**तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः।**
**वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥ २२ ॥**

**अन्वयः**—द्विजन्मना विविधैः विधिचोदितैः तपोविशेषैः च व्रतैः सरहस्यः वेदः कृत्स्नः अधिगन्तव्यः ॥ २२ ॥

**व्याख्या**—द्विजन्मना = ब्राह्मणादिना, विविधैः = अनेकविधैः, विधिचोदितैः = नियमपूर्वकैः, तपोविशेषैः = नियमस्थितिभिः, च = पुनः, व्रतैः = उपोषणैः, सरहस्यः = उपनिषत्सहितः, कृत्स्नम् = समग्रम्, वेदः = श्रुतिः, अधिगन्तव्यः = ज्ञातव्यः ॥ २२ ॥

**हिन्दी**—ब्राह्मण, क्षत्रिय एवं वैश्यों को नियमपूर्वक अनेक तप एवं व्रतों का सम्पादन करते हुए उपनिषदों के साथ समग्र वेदों को जानना चाहिए ॥ २२ ॥

**तपोविशेषैरिति।** द्विजन्मना द्विजेन विविधैः विधिचोदितैः विहितैः तपोविशेषैः व्रतैश्च सरहस्यः उपनिषत्सहितः समग्रः वेदः अधिगन्तव्यः वेदितव्यः ॥ २२ ॥

**योऽधीतविद्यः सकलः स सर्वेषां गुरुर्भवेत्।**
**न च जात्यानधीतो यो गुरुर्भवितुमर्हति ॥ २३ ॥**

**अन्वयः**—यः अधीतविद्यः सकलः सः सर्वेषां गुरुः भवेत्। अनधीतः जात्या गुरुः भवितुं न अर्हति ॥ २३ ॥

**व्याख्या**—यः = पुरुषः, अधीतविद्यः सकलः = सकलासु लौकिककलासु विद्यासु च कृतपरिश्रमः, सः = एवंविधो द्विजः, गुरुः = उपदेष्टा, भवेत् = जायेत। अनधीतः = शास्त्राध्ययनरहितः, जात्या = मात्रद्विजकुलोत्पन्नेन, गुरुः = उपदेष्टा, भवितुं, न = नहि, अर्हति = शक्नोति ॥ २३ ॥

**हिन्दी**—जिस द्विज ने समस्त विद्या का अध्ययन किया है, वही गुरु हो सकता है। बिना अध्ययन किये केवल जातिमात्र से कोई गुरु नहीं बन सकता है ॥ २३ ॥

**य इति।** यः अधीतविद्यः तथा सकलः कलाभिः लौकिकविद्यादिभिः सहितः, स. सर्वेषां गुरुः भवेत्। यस्तु अनधीतः अकृतविद्यः सः जात्या केवलयेति शेषः, गुरुः भवितुं न अर्हति ॥ २३ ॥

**विद्या ह्यनन्ताश्च कलाः संख्यातुं नैव शक्यते।**
**विद्या मुख्याश्च द्वात्रिंशच्चतुःषष्टिः कलाः स्मृताः ॥ २४ ॥**

**अन्वयः**—विद्याः कलाश्च अनन्ताः हि, ताः संख्यातुं नैव शक्यते। मुख्याः विद्याः द्वात्रिंशत् कलाश्च चतुःषष्टिः स्मृताः ॥ २४ ॥

**व्याख्या**—विद्याः = बोधाः, कलाश्च = नृत्यगीतादिशिल्पविद्याः, अनन्ताः = अन्तहीनाः, हि = यतः, ताः = विद्याः कलाश्च, संख्यातुम् = गणनाकर्त्तुम्, नैव = नास्त्येव, शक्यते = अर्हति। 'शक्यते' इति आर्षप्रयोगः। तत्र मुख्याः = प्रमुखाः, विद्याः = ज्ञानानि, द्वात्रिंशत्, तथा कलाः = शिल्पविद्याः, चतुःषष्टिः, स्मृताः = कथिताः ॥ २४ ॥

**हिन्दी**—विद्या एवं कलाओं का कोई अन्त नहीं हैं, इनकी गिनती कोई नहीं कर सकता है। फिर भी बत्तीस मुख्य विद्याएँ एवं चौसठ कलाएँ मानी जाती हैं ॥ २४ ॥

**विद्या इति**। विद्या कलाश्च अनन्ता हि ताः संख्यातुम् इयत्तया परिच्छेतुं नैव शक्यते शक्यन्ते आर्षोऽयं प्रयोगः। तत्र मुख्याः विद्याः द्वात्रिंशत्, तथा कलाश्च चतुःषष्टिः स्मृताः ॥ २४ ॥

**यद् यत् स्याद् वाचिकं सम्यक् कर्म विद्याभिसंज्ञकम्।**
**शक्तो मूकोऽपि यत् कर्त्तुं कलासंज्ञन्तु तत् स्मृतम् ॥ २५ ॥**

**अन्वयः**—यत् यत् कर्म सम्यक् वाचिकं तत्तत् विद्याभिसंज्ञकम्। यत् मूकोऽपि कर्त्तुं शक्तः तत्तु कलासंज्ञं स्मृतम् ॥ २५ ॥

**व्याख्या**—यत् यत् कर्म = यानि यानि कार्याणि, सम्यक् = सुष्ठुतया, वाचिकम् = वाचा पूर्णतया निष्पाद्यम्, तत्तत् = कर्म, विद्या = बोधः, अभिसंज्ञकः = नाम्नाख्यातम्, यत्तु, मूकोऽपि = वाणिहीनोऽपि, कर्त्तुम् = निष्पादितुम्, शक्तः = समर्थः, तत्तु, कला = नृत्यादिकं शिल्पविद्यानाम्ना, स्मृतम् = ख्यातम् ॥ २५ ॥

**हिन्दी**—जो-जो काम बोल कर ठीक ढंग से पूरा किया जा सकता है, वह विद्या है और जिन्हें गूंगा व्यक्ति भी हाथ-पैरों की सहायता से कर सकता है, वह कला कहलाती है ॥ २५ ॥

**यदिति**। यत् यत् कर्म सम्यक् सम्पूर्णरूपेण वाचिकं वाचा निष्पाद्यं, ततत् विद्याभिसंज्ञकं विद्येति नाम्ना कथितम्। यत्तु मूकोऽपि वर्णोच्चारणासमर्थोऽपि कर्त्तुं शक्तः ( यथा नृत्यादिकमिति भावः ), तत्तु कलासंज्ञं कलेति नाम्ना कथितम् ॥ २५ ॥

**उक्तं सङ्क्षेपतो लक्ष्म विशिष्टं पृथगुच्यते।**
**विद्यानाञ्च कलानाञ्च नामानि तु पृथक् पृथक् ॥ २६ ॥**

**अन्वयः**—विद्यानाञ्च कलानाञ्च लक्ष्म सङ्क्षेपतः उक्तम्, विशिष्टं तु पृथक् उच्यते; नामानि पृथक् पृथक् सन्ति ॥ २६ ॥

**व्याख्या**—विद्यानाम् = ज्ञानविज्ञानानाम्, कलानाञ्च = शिल्पविद्यानाञ्च, लक्ष्म = लक्षणम्, सङ्क्षेपतः = समासेन, उक्तम् = कथितम्, विशिष्टम् = विलक्षणम्, तु पृथक् = भिन्नम्, उच्यते = कथ्यते, नामानि = अभिधानानि, पृथक् पृथक् = भिन्नं भिन्नम्, सन्तीति ॥ २६ ॥

**हिन्दी**—विद्या और कला के सामान्य लक्षण संक्षेप में कह दिया, अब इनके विशिष्ट लक्षण अलग बतलाते हैं; इनके अलग-अलग नाम हैं ॥ २६ ॥

**उक्तमिति**। विद्यानाञ्च कलानाञ्च लक्ष्म लक्षणं सङ्क्षेपतः उक्तं विशिष्टन्तु पृथक् उच्यते कथ्यते, आसां नामानि पृथक् पृथक् सन्तीति शेषः ॥ २६ ॥

**ऋग्यजुः साम चाथर्वा वेदा आयुर्धनुः क्रमात्।**
**गान्धर्वश्चैव तन्त्राणि उपवेदाः प्रकीर्त्तिताः ॥ २७ ॥**

**अन्वयः**—ऋक् यजुः साम अथर्वा—एते वेदाः, आयुः धनुः गान्धर्वः तन्त्राणि च क्रमेण उपवेदाः प्रकीर्त्तिताः ॥ २७ ॥

**व्याख्या**—ऋक् = ऋग्वेदः, यजुः = यजुर्वेदः, साम = सामवेदः, अथर्वा = अथर्ववेदः, एते = चत्वारः, क्रमेण = क्रमशः, उपवेदाः = प्रधानवेदातिरिक्ताः, एते चत्वारः गौणा वेदाः,

प्रकीर्त्तिताः = कथिताः, तन्त्राणि तु स्थापत्यवेदनाम्ना ख्यातेति ॥ २७ ॥

**हिन्दी**—ये विद्याएँ—ऋग्वेद, यजुर्वेद, सामवेद तथा अथर्ववेद—ये चार वेद हैं तथा क्रमशः आयुर्वेद, धनुर्वेद, गान्धर्ववेद तथा तन्त्र अर्थात् स्थापत्यवेद—ये चार उपवेद हैं ॥ २७ ॥

**ऋगिति**। ऋक्, यजुः, साम तथा अथर्वा एते चत्वारः वेदाः। आयुर्वेदः, धनुर्वेदः, गान्धर्वः तन्त्राणि च एते उपवेदाः प्रकीर्त्तिताः ॥ २७ ॥

**शिक्षा व्याकरणं कल्पो निरुक्तं ज्योतिषं तथा।**
**छन्दः षडङ्गानीमानि वेदानां कीर्त्तितानि हि ॥ २८ ॥**

**अन्वयः**—शिक्षा, व्याकरणं, कल्पः, निरुक्तं, ज्योतिषं तथा छन्दः—इमानि षट् वेदानाम् अङ्गानि कीर्त्तितानि ॥ २८ ॥

**व्याख्या**—शिक्षा = अध्ययनाध्यापनसम्बन्धिवेदाङ्गविशेषः, व्याकरणम् = व्याक्रियन्ते व्युत्पाद्यन्ते शब्दाः अनेनेति शब्दशास्त्रस्वरूपवेदाङ्गः, कल्पः = धर्मकृत्यविधायको वेदाङ्गभेदः, निरुक्तम् = यास्कमुनिप्रणीतः ग्रन्थविशेषः, ज्योतिषम् = ज्योतिर्विद्या, तथा छन्दः = वृत्तशास्त्रम्, इमानि षट्, वेदानाम् = श्रुतीनाम्, अङ्गानि, हि = अवधारणार्थोऽयं शब्दः, कीर्त्तितानि = कथितानि ॥२८ ॥

**हिन्दी**—शिक्षा, व्याकरण, कल्प, निरुक्त, ज्योतिष तथा छन्द—ये छः वेदाङ्ग कहलाते हैं ॥ २८ ॥

**शिक्षेति**। शिक्षा व्याकरणं कल्पः निरुक्तं ज्योतिषः तथा छन्दः इमानि षट् वेदानाम् अङ्गानि कीत्तितानि, हिशब्दोऽवधारणार्थः ॥ २८ ॥

**मीमांसातर्कसांख्यानि वेदान्तो योग एव च।**
**इतिहासाः पुराणानि स्मृतयो नास्तिकं मतम् ॥ २९ ॥**
**अर्थशास्त्रं कामशास्त्रं तथा शिल्पमलङ्कृतिः।**
**काव्यानि देशभाषावसरोक्तिर्यावनं मतम्।**
**देशादिधर्मा द्वात्रिंशदेता विद्याभिसंज्ञिताः ॥ ३० ॥**

**अन्वयः**—मीमांसा तर्कः सांख्यं वेदान्तः योगः इतिहासाः पुराणानि स्मृतयः नास्तिकं मतम् अर्थशास्त्रं कामशास्त्रं शिल्पम् अलङ्कृतिः काव्यानि देशभाषा अवसरोक्तिः यावनं मतं देशादिधर्माः—एताः द्वात्रिंशत् विद्याभिसंज्ञिताः ॥ २९-३० ॥

**व्याख्या**—मीमांसा = दर्शनशास्त्रविशेषः, तर्कः = न्यायशास्त्रम्, सांख्यम् = महर्षिकपिल-प्रणीतो दर्शनग्रन्थविशेषः, वेदान्तः = अध्यात्मविद्या ज्ञानकाण्डं वा, योगः = चित्तवृत्तिनिरोधात्मक-दर्शनशास्त्रविशेषः, इतिहासाः = पूर्ववृत्तानि, पुरागानि = हिन्दूनामष्टादश आख्यानग्रन्थाः, ब्रह्म-विष्णु-शिवपुराणादिः, स्मृतयः = मन्वाद्यार्यधर्मशास्त्राणि, नास्तिकं मतम् = अनीश्वरवादिनः सिद्धान्तः, अर्थशास्त्रम् = धनप्राप्तिरक्षावृद्ध्याद्युपायदर्शकं शास्त्रम्, कामशास्त्रम् = प्रेमविज्ञानम्, रतिशास्त्रं वा, शिल्पम् = हस्तव्यवसायशास्त्रम्, अलङ्कृतिः = अलङ्कारशास्त्रम्, काव्यानि = कविकृतयः, देशभाषा = राष्ट्रभाषा, अवसरोक्तिः = सूक्तिशास्त्रम्, यावनं मतम् = यूनानवासीनां धार्मिकसिद्धान्तः, देशादिधर्माः = वैदेशिकधर्मसिद्धान्ताः, एताः द्वात्रिंशत् = द्वयाधिकत्रिंशत्, विद्याभिसंज्ञिताः = विद्या इति नाम्ना विख्यातेति ॥ २९-३० ॥

**हिन्दी**—मीमांसा, न्याय, सांख्य, वेदान्त, योग, इतिहास, पुराण, स्मृति, नास्तिकमत, अर्थशास्त्र, कामशास्त्र, शिल्पशास्त्र, अलङ्कारशास्त्र, काव्य, राष्ट्रभाषा, सूक्तिशास्त्र, यवनों का मत तथा वैदेशिक धर्मग्रन्थ—ये बत्तीस विद्या नाम से जाने जाते हैं ॥ २९-३० ॥

**मीमांसेति । अर्थेति ।** मीमांसा, तर्कः, साङ्ख्यं, वेदान्तः, योगः, इतिहासाः, पुराणानि, स्मृतयः, नास्तिकमतम्, अर्थशास्त्रं, कामशास्त्रं, शिल्पम्, अलङ्कृतिः, काव्यानि, देशभाषा, अवसरोक्तिः, यावनं मतं तथा देशादिप्रचलितधर्माः एताः द्वात्रिंशत् विद्याभिसंज्ञिता विद्यानाम्ना ख्याता इत्यर्थः ॥ २९-३० ॥

**मन्त्रब्राह्मणयोर्वेदनाम प्रोक्तमृगादिषु ॥ ३१ ॥**

**अन्वयः**—ऋगादिषु मन्त्रब्राह्मणयोः वेदनाम प्रोक्तम् ॥ ३१ ॥

**व्याख्या**—ऋगादिषु = ऋग्यजुःसामाथर्वसु, मन्त्रात्मकः, ब्राह्मणश्चेति तयोः, वेद इति नाम = अभिधानम्, इति प्रोक्तम् = कथितम् ॥ ३१ ॥

**हिन्दी**—चारों वेद दो खण्डों में विभक्त हैं—एक मन्त्रात्मक और दूसरा ब्राह्मण ॥ ३१ ॥

**मन्त्रेति ।** ऋगादिषु ऋक्यजुःसामाथर्वसु मन्त्रब्राह्मणयोः वेदनाम वेद इति नाम प्रोक्तं कथितं तथा च वेदः द्विविधः—मन्त्रात्मकः ब्राह्मणश्चेति भावः ॥ ३१ ॥

**जपहोमार्चनं यस्य देवताप्रीतिदं भवेत् ।**
**उच्चारान्मन्त्रसंज्ञं तद्विनियोगि च ब्राह्मणम् ॥ ३२ ॥**

**अन्वयः**—यस्य उच्चारात् जपहोमार्चनं देवताप्रीतिदं भवेत्, तत् मन्त्रसंज्ञं च तद्विनियोगि ब्राह्मणम् ॥ ३२ ॥

**व्याख्या**—यस्य = वेदभागस्य, उच्चारात् = उच्चारणात्, जपः = मुहुर्मुहुर्मन्त्रोच्चारणम्, होमः = देवयज्ञः, अर्चनम् = देवाराधनम्, देवतानाम् = सुराणाम्, प्रीतिदं = हर्षदायकम्, भवेत् = स्यात्, तत् = वेदभागः, मन्त्रसंज्ञम् = मन्त्रनाम्ना विख्यातम्, च = पुनः, तद्विनियोगि = तद्व्यतिरिक्तम्, अथवा तत्प्रमाणस्वरूपम्, ब्राह्मणम् = ब्राह्मणसंज्ञकम् ॥ ३२ ॥

**हिन्दी**—वेदों के जिस भाग का उच्चारण करके जप, होम और देवार्चन से देवताओं को प्रसन्न किया जाता है, उसे मंत्रखण्ड कहते हैं तथा उन भागों के विनियोग जिसमें हो, उस वेदभाग को ब्राह्मण कहते हैं ॥ ३२ ॥

**जपेति ।** यस्य वेदभागस्य उच्चारात् उच्चारणात् जपः होमः अर्चनं देवपूजनं देवतानां प्रीतिदं भवेत् तत् मन्त्रसंज्ञं मन्त्रनाम्ना ख्यातम् । तद्विनियोगि तद्व्यतिरक्तं वा तत्प्रमाणस्वरूपं ब्राह्मणं स्मृतमिति शेषः ॥ ३२ ॥

**ऋग्रूपा यत्र ये मन्त्राः पादशोऽर्द्धर्चशोऽपि वा ।**
**येषां हौत्रं स ऋग्भागः समाख्यानं च यत्र वा ॥ ३३ ॥**

**अन्वयः**—यत्र ऋग्रूपाः ये मन्त्राः पादशः अर्द्धर्चशः वा येषां होत्रं न, यत्र वा समाख्यानं, सः ऋग्भागः ॥ ३३ ॥

**व्याख्या**—यत्र = यस्मिन्, ऋग्रूपाः = ऋचास्वरूपाः स्तुतिपरकाः, ये मन्त्राः = वेदानां संहिताभागः, पादशः = चतुर्थचरणेन, अर्द्धर्चशः = ऋचायाः अर्द्धांशेन, वा = अथवा, येषाम्,

होत्रम् = हवननिष्पादकत्वम्, च = पुनः, यत्र = यस्मिन् स्थाने, समाख्यानम् = सम्यग्रूपेण आख्यानम् = कथनम्, सः = ऋग्भागः, ऋग्वेद इति नाम्ना प्रसिद्धः ॥ ३३ ॥

**हिन्दी**—जिसमें ऋचास्वरूप स्तुतिपरक मन्त्र हों अथवा जो एक चरण या आधी ऋचा के रूप में पढ़ा जाता हों तथा जिन मंत्रों के द्वारा होम किया जाता हो या जिनमें अच्छी तरह आख्यान कहा गया हो, वह ऋग्वेद कहलाता है ॥ ३३ ॥

**ऋगिति**। यत्र ऋग्रूपाः ये मन्त्राः पादशः अर्द्धर्चशः वा पठिता इति शेषः, येषां मन्त्राणां होत्रं होमसम्पादकत्वं, यत्र वा समाख्यानं सम्यक् अख्यानं कथनं, सः ऋग्भागः ऋग्वेदः ॥ ३३ ॥

**प्रश्लिष्टपठिता मन्त्रा वृत्तगीतिविवर्जिताः।**
**आध्वर्य्यवं यत्र कर्म्म त्रिगुणं यत्र पाठनम्।**
**मन्त्रब्राह्मणयोरेव यजुर्वेदः स उच्यते ॥ ३४ ॥**

**अन्वयः**—यत्र मन्त्राः प्रश्लिष्टं पठिताः तथा वृत्तगीतिविवर्जिताः, यत्र च आध्वर्यवं कर्म, यत्र च मन्त्रब्राह्मणयोरेव त्रिगुणं पठितं, सः यजुर्वेदः उच्यते ॥ ३४ ॥

**व्याख्या**—यत्र = यस्मिन्, मन्त्राः = संहिताभागाः, प्रश्लिष्टम् = युक्तियुक्ताः, यथा तथा पठिताः = उद्घोषिताः, तथा = तेनैव प्रकारेण, वृत्तेन = छन्दसा, गीत्या = गायनेन, च = पुनः, विवर्जिताः = रहिताः, यत्र च आध्वर्यवम् = ऋत्विग्विहितं कर्म प्रोक्तम्, यत्र च मन्त्रब्राह्मणयोः = उभयोरेव, त्रिगुणम् = त्रिरावृत्तम्, पठितम् = उच्चारितम्, सः = असौ, यजुर्वेदः, इति नाम्ना, उच्यते = कथ्यते ॥ ३४ ॥

**हिन्दी**—जिसमें अलग-अलग मंत्र पढ़े जाते हों, ये मंत्र छन्द और गान से रहित हों, ऋत्विग् के कर्म विहित हों तथा जिसमें मंत्र और ब्राह्मण भाग का तीन आवृत्ति के साथ पाठ होता हो, उसे युजुर्वेद कहते हैं ॥ ३४ ॥

**प्रश्लिष्टेति**। यत्र मन्त्राः प्रश्लिष्टं यथा तथा पठिताः तथा वृत्तेन छन्दसा गीत्या च विवर्जिताः विरहिताः, यत्र च आध्वर्य्यवम् अध्वर्युविहितं कर्म्म प्रोक्तमिति शेषः, यत्र च मन्त्रब्राह्मणयोरुभयोरेव त्रिगुणं त्रिरावृत्तं पठितं सः यजुर्वेदः उच्यते ॥ ३४ ॥

**उद्गीथं यस्य शस्त्रादेर्यज्ञे तत् सामसंज्ञकम् ॥ ३५ ॥**

**अन्वयः**—शस्त्रादेः यज्ञे यस्य उद्गीथं तत् सामसंज्ञकम् ॥ ३५ ॥

**व्याख्या**—शस्त्रादेः = आयुधादेः, यज्ञे = यागे, यस्य = आयुधस्य, उद्गीथम् = उच्चैः गायनं भवति, तत् सामसंज्ञकं = सामवेद इति नाम्ना कथितम् ॥ ३५ ॥

**हिन्दी**—यज्ञ में हथियारों की स्तुति ऊँची आवाज में गाकर जिस संहिता में की जाती हो, उसे सामवेद कहा जाता है ॥ ३५ ॥

**उद्गीथमिति**। शस्त्रादेः यज्ञे यस्य उद्गीथम् उच्चैर्गीतं विहितमिति शेषः, तत् सामसंज्ञकं सामनाम्ना कथितम् ॥ ३५ ॥

**अथर्वाङ्गिरसो नाम ह्युपास्योपासनात्मकः।**
**इति वेदचतुष्कन्तु ह्युद्दिष्टञ्च समासतः ॥ ३६ ॥**

**अन्वयः**—उपास्योपासनात्मकः अथर्वाङ्गिरसः नाम। इति वेदचतुष्कं समासतः हि उद्दिष्टम् ॥ ३६ ॥

**व्याख्या**—उपास्यानाम् = उपासनीयानां देवानाम्, उपासनात्मकः = आराधनात्मको वेद-भागः, अथर्वाङ्गिरसः = अथर्ववेदः इति नाम्ना ख्यातः। इति = अनेन प्रकारेण, वेदचतुष्कम् = चत्वारो वेदाः, समासतः = सङ्क्षेपेण, उद्दिष्टम् = कथितम् ॥ ३६ ॥

**हिन्दी**—वेद के जिस भाग में उपासनीय देवताओं का तथा उनकी उपासना का वर्णन हो, उसे अथर्वाङ्गिरस अर्थात् अथर्ववेद कहते हैं। इस प्रकार संक्षेप में चारों वेदों का रूप बतलाया गया है ॥ ३६ ॥

**अथर्वेति**। उपास्यानाम् आराध्यानां देवानाम् उपासनात्मकः वेदभागः अथर्वाङ्गिरसः नाम। इति उक्तप्रकारं वेदचतुष्कं समासतः सङ्क्षेपेण उद्दिष्टं कथितं हि, हिशब्दोऽव-धारणार्थः ॥ ३६ ॥

**विन्दत्यायुर्वेत्ति सम्यगाकृत्यौषधिहेतुतः।**
**यस्मिन्नृग्वेदोपवेदः स चायुर्वेदसंज्ञकः ॥ ३७ ॥**

**अन्वयः**—यस्मिन् आयुः विन्दति आकृत्या औषधिहेतुतः सम्यक् वेत्ति, सः ऋग्वेदोपवेदः आयुर्वेदसंज्ञकः ॥ ३७ ॥

**व्याख्या**—यस्मिन् = विदिते भागे, तदनुष्ठानात् आयुः = दीर्घजीवनम्, विन्दति = प्राप्नुवति, यस्मिंश्च, आकृत्या = रोगाणां स्वरूपज्ञानेन, औषधिहेतुतः = चिकित्साविज्ञानेन, हेतुतः = कारणेन, आयुः = जीवनम्, वेत्ति = जानाति, रोगाणामिति भावः, सः = संहिताभागः, ऋग्वेदस्योपवेदः, आयुर्वेदसंज्ञकः = आयुर्वेदाख्य इति ॥ ३७ ॥

**हिन्दी**—जिसमें बतलाई गई विधि का पालन करने से मनुष्य दीर्घजीवी होता है और जिसके द्वारा रोगों के लक्षण, उपयुक्त औषधि एवं चिकित्सा का ज्ञान प्राप्त होता है; उसकी आयु का पता चलता है, वह ऋग्वेद का उपवेद आयुर्वेद कहलाता है ॥ ३७ ॥

**विन्दतीति**। यस्मिन् विदिते इति भावः, आयुः विन्दति लभते जन इति शेषः, तद्विहितस्य अनुष्ठानात् दीर्घायुर्लाभ इति भावः, यस्मिंश्च आकृत्या रोगाणामाकारज्ञानेन ओषधिहेतुतः ओषधिविज्ञानेन च हेतुना इत्यर्थः, आयुः वेत्ति जानाति रोगिणामिति शेषः, सः ऋग्वेदस्य उपवेदः आयुर्वेदसंज्ञक आयुर्वेद इति नाम्ना प्रसिद्धः ॥ ३७ ॥

**युद्धशस्त्रास्त्रव्यूहादिरचनाकुशलो भवेत्।**
**यजुर्वेदोपवेदोऽयं धनुर्वेदस्तु येन सः ॥ ३८ ॥**

**अन्वयः**—येन युद्धशस्त्रास्त्रव्यूहादिरचनाकुशलो भवेत्, सः अयं यजुर्वेदोपवेदः धनुर्वेदो भवति ॥ ३८ ॥

**व्याख्या**—येन = ज्ञानेन, युद्धेषु = समरेषु, शस्त्रेषु = प्रहरणेषु, अस्त्रेषु = आयुधेषु, व्यूहादि = सैन्यादि, रचनासु = विन्यासेषु, च, कुशलः = दक्षः, भवेत् = स्यात्, यजुर्वेदस्य = यजुःश्रुतेः, उपवेदः = प्रधानवेदातिरिक्तगौणवेदः, धनुर्वेदः = धनुर्विद्यानिरूपकशास्त्रम्, इति ख्यातः ॥ ३८ ॥

**हिन्दी**—जिस वेद के ज्ञान से मानव युद्ध में आयुध-प्रहार एवं सैन्यसंस्थापन रचना में कुशल होता है, वह वेद यजुर्वेद का उपवेद धनुर्वेद कहलाता है ॥ ३८ ॥

**युद्धेति**। येन ज्ञातेन इत्यर्थः, युद्धेषु शस्त्रेषु अस्त्रेषु व्यूहादिरचनासु च कुशलः निपुणः भवेत् यजुर्वेदस्य उपवेदः, स च धनुर्वेद इति ख्यातः ॥ ३८ ॥

**स्वरैरुदात्तादिधर्मैस्तन्त्रीकण्ठोत्थितैः सदा।**
**सतालैर्गानविज्ञानं गान्धर्वो वेद एव सः ॥ ३९ ॥**

**अन्वयः**—येन उदात्तादिधर्मैः तथा तन्त्रीकण्ठोत्थितैः सतालैः सदा गानविज्ञानं, स एव गान्धर्वो वेद इति ॥ ३९ ॥

**व्याख्या**—येन = वेदेन, उदात्तादिधर्मैः = उदात्तानुदात्तस्वरितस्वरूपैः, तथा तन्त्रीकण्ठोत्थितैः = वीणागलोत्पन्नैः निषादादिभिः सप्तभिः स्वरैः, सतालैः = सङ्गीते कालक्रियासहितैः गानविज्ञानम् = गीतविज्ञानम्, भवति, सः = असौ, सदा = सर्वदा, गान्धर्ववेदः सामवेदस्योपवेदः इति ज्ञातव्यः ॥ ३९ ॥

**हिन्दी**—जिस वेद के ज्ञान से उदात्त, अनुदात्त, स्वरित, स्वर तथा वीणा और कंठ से निकले निषादादि स, रे, ग, म, प, ध, नि—इन सात स्वरों में ताल के साथ गाने का ज्ञान होता है, वह सामवेद का उपवेद 'गान्धर्ववेद' कहलाता है ॥ ३९ ॥

**स्वरैरिति**। येनं उदात्तादिधर्मैः उदात्तानुदात्तस्वरितैः तथा तन्त्रीकण्ठोत्थितैः निषादादिभिः सप्तभिः स्वरैः सतालैः तालसहितैः गानविज्ञानं भवति स गान्धर्वो वेदः स तु सामवेदस्य उपवेद इति बोद्धव्यः ॥ ३९ ॥

**विविधोपास्यमन्त्राणां प्रयोगाः सुविभेदतः।**
**कथिताः सोपसंहारास्तद्धर्मनियमैश्च षट्।**
**अथर्वणां चोपवेदस्तन्त्ररूपः स एव हि ॥ ४० ॥**

**अन्वयः**—यत्र विविधोपास्यमन्त्राणां सोपसंहाराः षट् प्रयोगाः धर्मनियमैः सह सुविभेदतः कथिताः, स एव अथर्वणाम् उपवेदः तन्त्रस्वरूपः एव हि ॥ ४० ॥

**व्याख्या**—यत्र, विविधानाम् = अनेकानाम्, उपास्यानाम् = आराध्यानाम्, मन्त्राणाम् = वेदवाक्यानाम्, सोपसंहाराः—उपसंहारेण = पर्यवसानेन सहिताः, षट् प्रयोगाः = षट् तान्त्रिकोपचाराः, तेषां धर्मनियमैः सह = धर्मनियोगैः सह, सुविभेदतः = सुष्ठुतया भेदप्रभेदानुसारेण, कथिताः, स एव = तदेव, अथर्वणामुपवेदः = गौणवेदः, तन्त्ररूपः = तन्त्रस्वरूपः एव, हि इत्यवधारणे ॥ ४० ॥

**हिन्दी**—जिसमें अनेक प्रकार के उपास्य देवों के मंत्रों के प्रयोग तथा मारण, मोहन, उच्चाटन, विद्वेषण, आकर्षण और स्तम्भन—इन छः प्रयोगों के भेद, प्रयोग तथा उपसंहार धर्म तथा नियम के साथ वर्णित हों, उसे अथर्ववेद का उपवेद तंत्र या आगम कहते हैं ॥ ४० ॥

**विविधेति**। यत्र विविधानाम् उपास्यानां मन्त्राणां सोपसंहाराः उपसंहारसहिताः षट् प्रयोगाः तेषां धर्म्मनियमैश्च सह सुविभेदतः विशिष्टप्रभेदानुसारेण कथिताः सः अथर्वणाम् उपवेदः तन्त्ररूपः हि तन्त्रस्वरूप एव ॥ ४० ॥

**स्वरतः कालतः स्थानात् प्रयत्नानुप्रदानतः।**
**सवनाद्यैश्च सा शिक्षा वर्णानां पाठशिक्षणात् ॥ ४१ ॥**

**अन्वयः**—यच्च स्वरतः कालतः स्थानात् प्रयत्नानुप्रदानतः सवनाद्यैः वर्णानां पाठशिक्षणात् सा शिक्षा ॥ ४१ ॥

**व्याख्या**—यच्च, स्वरतः = उदात्तानुदात्तादिभेदेन, कालतः = समयानुसारेण, स्थानात् = कण्ठ्यताल्वादिप्रदेशात्, प्रयत्नानुप्रदानतः = प्रयत्नसहकारेण, सवनाद्यैः = यज्ञस्नानोत्पत्यादिभिः, वर्णानाम् = अक्षराणाम्, पाठस्य = वाचनस्य, शिक्षणम् = पाठनम्, सा = उक्ता, शिक्षा = पूर्ववर्णितसन्दर्भः शिक्षाग्रथः इति ॥ ४२ ॥

**हिन्दी**—जिसमें उदात्त, अनुदात्त तथा स्वारित स्वरों से समयानुसार स्थान और प्रयत्न के साथ वर्णों के पढने की शिक्षा हो, उसे शिक्षा कहते हैं ॥ ४१ ॥

**स्वरत इति**। यच्च स्वरतः उदात्तादिभेदेन कालतः कालक्रमेण स्थानात् कण्ठताल्वादिप्रदेशात् प्रयत्नानुप्रदानतः प्रयत्नसहकारेण सवनाद्यैः उत्पत्त्यादिभिः उच्चारणादिभिरित्यर्थः, पाठस्य शिक्षणं सा शिक्षा तादृशशिक्षासमन्वितः सन्दर्भः शिक्षाग्रन्थः इति भावः ॥ ४१ ॥

**प्रयोगो यत्र यज्ञानामुक्तो ब्राह्मणशेषतः।**
**श्रौतकल्पः स विज्ञेयः स्मार्त्तकल्पस्तथेतरः ॥ ४२ ॥**

**अन्वयः**—यत्र ब्राह्मणशेषतः यज्ञानां प्रयोगः उक्तः, सः श्रौतकल्पः विज्ञेयः, तथा इतरः स्मार्तकल्पः ॥ ४२ ॥

**व्याख्या**—यत्र = यस्मिन् ग्रन्थे, ब्राह्मणशेषतः—ब्राह्मणस्य = मन्त्रेतरवेदभागस्य, शेषतः = अवशिष्टभागात्, यज्ञानाम् = यागानाम्, प्रयोगः = व्यवहारः, उक्तः = कथितः, सः = एतत् ग्रन्थः, श्रौतकल्पः = यज्ञविधायकग्रन्थविशेषः, विज्ञेयः = ज्ञातव्यः, तथा इतरः = एतद्भिन्नः ग्रन्थः, स्मार्त्तकल्पः = स्मृतिसम्मतधर्मग्रन्थः उक्तः ॥ ४२ ॥

**हिन्दी**—जिसमें ब्राह्मणभाग के शेष अंश से यज्ञों का प्रयोग कहा गया है, उसे श्रौतकल्प कहते हैं, इससे भिन्न को स्मार्तकल्प कहते हैं ॥ ४२ ॥

**प्रयोग इति**। यत्र ब्राह्मणशेषतः ब्राह्मणस्य मन्त्रेतरवेदभागस्य शेषतः शेषांशात् यज्ञानां प्रयोगः उक्तः सः श्रौतकल्पः विज्ञेयः, तथा इतरः अन्यः स्मार्त्तकल्पः ॥ ४२ ॥

**व्याकृताः प्रत्ययाद्यैश्च धातुसन्धिसमासतः।**
**शब्दा यत्र व्याकरणमेतद्धि बहुलिङ्गतः ॥ ४३ ॥**

**अन्वयः**—यत्र शब्दाः प्रत्ययाद्यैः धातुसन्धिसमासतः बहुलिङ्गतः व्याकृतः, एतद्धि व्याकरणम् ॥ ४३ ॥

**व्याख्या**—यत्र = यस्मिन् ग्रन्थे, शब्दाः = पदानि, प्रत्ययाद्यैः = प्रकृत्युत्तरं जायमानैः शब्दांशैः, धातुभिः = क्रियाभिः, सन्धिभिः = संयोगादिभिः, समासैः = तत्पुरुषादिसमासैः, बहुभिः = पुंस्त्रीक्लीबभेदैः लिङ्गैश्च, व्याकृताः = साधिताः, एतत् हि = एतदेव हि, व्याकरणम् = व्याक्रियन्ते व्युत्पाद्यन्ते शब्दाः अनेनेति बोध्यः ॥ ४३ ॥

**हिन्दी**—जिसमें प्रत्यय, उपसर्ग, धातु, संधि, समास और लिङ्गों के द्वारा शब्द सिद्ध किये जाते हैं, उसे व्याकरण कहते हैं ॥ ४३ ॥

**व्याकृता इति**। यत्र शब्दाः प्रत्ययाद्यैः धातुभिः सन्धिभिः समासैः बहुभिः पुंस्त्रीक्लीबभेदैः लिङ्गैश्च व्याकृताः साधिताः एतत् हि एतदेव व्याकरगम् ॥ ४३ ॥

शब्दनिर्वचनं यत्र वाक्यार्थैकार्थसङ्ग्रहः।
निरुक्तं तत् समाख्यानाद् वेदाङ्गं श्रोत्रसंज्ञकम्॥ ४४॥

**अन्वयः**—यत्र शब्दनिर्वचनं वाक्यार्थैकार्थसङ्ग्रहः तत् निरुक्तं वेदाङ्गं समाख्यानात् श्रोत्रसंज्ञकम्॥ ४४॥

**व्याख्या**—यत्र = यस्मिन् ग्रन्थे, शब्दानाम् = पदानाम्, निर्वचनम् = निष्कर्षेण कथनम्, तथा वाक्यार्थानाम् = वाक्याभिप्रायाणाम्, एकार्थसङ्ग्रहः = समुच्चयः, तत् = असौ, निरुक्तं नाम, वेदाङ्गम् = वेदस्य अङ्गम्, तच्च समाख्यानात् = सुष्ठुतया शब्दार्थप्रतिपादनात्, श्रोत्रसंज्ञकम् = श्रोत्राख्यया ख्यातमिति॥ ४४॥

**हिन्दी**—जिस ग्रंथ में शब्दों का निष्कर्ष के साथ कथन तथा वाक्यार्थों का एक अर्थ में संग्रह किया गया हो, उसे निरुक्त कहते हैं। शब्दों का अर्थ भलीभाँति कहने के कारण वह वेद का श्रोत्र अंग माना जाता है॥ ४४॥

**शब्दनिर्वचनमिति**। यत्र शब्दानां निर्वचनं निष्कर्षेण कथनं तथा वाक्यर्थानाम् एकार्थसङ्ग्रहः, तत् निरुक्तं नाम वेदाङ्गं, तच्च समाख्यानात् सम्यक् शब्दार्थकथनात् श्रोत्रसंज्ञकं श्रोत्राख्यया कथितम्॥ ४४॥

नक्षत्रग्रहगमनैः कालो येन विधीयते।
संहिताभिश्च होराभिर्गणितैर्ज्योतिषं हि तत्॥ ४५॥

**अन्वयः**—येन नक्षत्रग्रहगमनैः संहिताभिः होराभिः गणितैः कालः विधीयते, तत् हि ज्योतिषम्॥ ४५॥

**व्याख्या**—येन = ग्रन्थेन, नक्षत्राणाम् = तारासमूहाणाम्, ग्रहाणाम् = मङ्गलादिग्रहाणाम्, गमनैः = चलनैः, संहिताभिः = धर्मसंहिताभिः, होराभिः = राश्यार्द्धैः, गणितैश्च, कालः = समयः, विधीयते = निर्णीयते, तत् हि = तदेव हि, ज्योतिषम् = वेदाङ्गस्वरूपं ज्योतिषशास्त्रम्, कथ्यते॥ ४५॥

**हिन्दी**—जिससे नक्षत्रों और ग्रहों की गति द्वारा समय निर्धारित किया जाता है और जिसके संहिता, होरा तथा गणित—ये तीन स्कन्द है, उसे ज्योतिष कहते हैं॥ ४५॥

**नक्षत्रेति**। येन नक्षत्राणां ग्रहाणाञ्च गमनैः संहिताभिः होराभिः गणितैश्च कालः विधीयते पृथक् पृथक् निर्दिश्यते, तत् हि तदेव ज्योतिषम्॥ ४५॥

म्यरस्तजभ्रगैर्लान्तैः पद्यं यत्र प्रमाणतः।
कल्प्यते छन्दःशास्त्रं तद् वेदानां पादरूपधृक्॥ ४६॥

**अन्वयः**—म्यरस्तजभ्रगैर्लान्तैः पद्यं यत्र प्रमाणतः यत्र पद्यं कल्प्यते, तत् छन्दःशास्त्रं, तच्च वेदानां पादरूपधृक्॥ ४६॥

**व्याख्या**—मः = त्रिगुरुः, यः = आदिगुरुः, रः = लघुमध्यः, सः = अन्तगुरुः, तः = अन्तलघुः, जः = गुरुमध्यः, मः = आदिगुरुः, नः = त्रिलघुः, गः = गुरुः, लः = लघुः, एभिः प्रमाणतः = परिमाणैः, यत्र = यस्मिन्, पद्यम् = श्लोकः, काव्यं वा, कल्प्यते = कल्पनां क्रियते, तत् छन्दःशास्त्रम् = वृत्तव्यवस्थापकशास्त्रम्, तच्च, वेदानाम् = श्रुतीनाम्, पादरूपधृक् = चरणव्यवस्थापकमिति॥४६॥

**हिन्दी**—जिसमें मगण (तीन गुरु ऽऽऽ), यगण (आदिलघु ।ऽऽ), रगण (मध्यलघु ऽ।ऽ), सगण (अन्तगुरु ॥ऽ), तगण (अन्तलघु ऽऽ।), जगण (गुरुमध्य ।ऽ।), भगण (आदिगुरु ऽ॥), नगण (तीनों लघु ।॥), गुरु (ऽ) तथा (।)—इनके प्रमाण से पद्यों की कल्पना की गई हो, उसे वेदों के चरण की व्यवस्था करने वाला 'छन्दःशास्त्र' कहते हैं।

**म्यरस्तजभ्नगैरिति**। मस्त्रिगुरुः, यः आदिगुरुः, रः लघुमध्यः, सः अन्तगुरु, तः अन्तलघुः, जः गुरुमध्यः भः आदिगुरुः, नः त्रिलघुः, गः गुरुः, लः लघुः एभिः प्रमाणतः परिमाणैः यत्र पद्यं कल्प्यते, तत् छन्दःशास्त्रं तच्च वेदानां पादरूपधृक् चरणव्यवस्थापकमित्यर्थः॥४६॥

**यत्र व्यवस्थिता चार्थकल्पना विधिभेदतः।**
**मीमांसा वेदवाक्यानां सैव न्यायश्च कीर्त्तितः॥४७॥**
**भावाभावपदार्थानां प्रत्यक्षादिप्रमाणतः।**
**स विवेको यत्र तर्कः कणादादिमतं च यत्॥४८॥**

**अन्वयः**—यत्र दवाक्यानां विधिभेदतः अर्थकल्पना व्यवस्थिता, सा एव मीमांसा। यत्र भावा- भावपदार्थानां प्रत्यक्षादिप्रमाणतः सविवेकः तर्कः यच्च कणादादिमतं सैव न्यायः कीर्त्तितः॥४७-४८॥

**व्याख्या**—यत्र = यस्मिन्ग्रन्थे, वेदवाक्यानाम् = मन्त्राणाम्, विधिभेदतः = नियोगभेदात्, अर्थकल्पना = अर्थोद्भावना, व्यवस्थिता = शास्त्रनिरूपिता, सा एव मीमांसा = दर्शनशास्त्रविशेषः, यत्र च भावानाम् = सत्तानाम्, अभावानाम् = अविद्यमानानाम्, पदार्थानाम् = द्रव्यगुणकर्मादि- प्रमेयविषयाणाम्, प्रत्यक्षादिप्रमाणतः = इन्द्रियग्राह्यानुमानादिभिः प्रमाणैः, सविवेकः = मिथो व्यावृत्त्या वस्तुस्वरूपनिश्चयात्मकज्ञानसहितः, तर्को भवति, यच्च कणादादीनाम् = मुनिकणादादि- प्रभृतीनाम्, वैशेषिकदार्शनिकानाम्, मतम् = विचारम्, सः = असौ, न्यायः = युक्तिवादः, कीर्त्तितः = कथितः॥४७-४८॥

**हिन्दी**—जिसमें वेदवाक्यों की अनुष्ठान-भेद से अर्थकल्पना व्यवस्थित की गई है, उसे मीमांसा कहा जाता है। जिसमें द्रव्य, गुण, कर्म, सामान्य, विशेष, समवाय तथा अभाव—इन सप्त पदार्थों का प्रत्यक्ष, अनुमान, उपमान तथा शब्द प्रमाणों के द्वारा विचारपूर्वक तर्क किया जाता है तथा जो मुनि कणाद प्रभृति वैशेषिक दार्शनिकों का मत है, उसे तर्क या न्यायशास्त्र कहते हैं॥४७-४८॥

**यत्रेति**। **भावेति**। यत्र वेदवाक्यानां विधिभेदतः अनुष्ठानभेदात् अर्थकल्पना व्यवस्थिता, सा एव मीमांसा। यत्र च भावानाम् अभावानाञ्च पदार्थानां प्रत्यक्षादिप्रमाणतः प्रत्यक्षानुमानादिभिः प्रमाणैः सविवेकः सविचारः तर्कः भवति, यच्च कणादादीनां वैशेषिकदार्शनिकानां मतं, सः न्यायः कीर्त्तितः। एतेन न्यायदर्शनं वैशेषिकदर्शनञ्च प्रायशः समरूपत्वात् एकमेवेति अभिहितमिति बोध्यम्॥४७-४८॥

**पुरुषोऽष्टौ प्रकृतयो विकाराः षोडशेति च।**
**तत्त्वादिसंख्यावैशिष्ट्यात् सांख्यमित्यभिधीयते॥४९॥**

**अन्वयः**—पुरुषः अष्टौ प्रकृतयः षोडश विकाराः तत्त्वादिसंख्यावैशिष्ट्यात् सांख्यम् इति अभिधीयते॥४९॥

**व्याख्या**—पुरुषः = कूटस्थः एकः, अष्ट प्रकृतयस्तद्यथा—प्रकृतिः, महत्तत्त्वम्, अहङ्कारः, पञ्च तन्मात्रास्तद्यथा—शब्द-स्पर्श-रूप-रस-गन्धाः इति नव, ततः पञ्च महाभूतानि; तद्यथा—पृथिव्याकाशवाय्वग्निजलानि इति चतुर्दशानि, पञ्चकर्मेन्द्रियाणि—हस्त-पाद-रसना-लिङ्गपानानि, पञ्च ज्ञानेन्द्रियाणि—श्रवण-त्वक्-चक्षु-रसना-घ्राणानि इति चतुर्विंशतिः, मनश्च इति पञ्चविंशति-तत्त्वानि। इत्येवं पञ्चविंशतितत्त्वादीनां संख्यायाः गणनावैशिष्ट्यात् सांख्य इत्यभिधीयते। सांख्यदर्शने 'प्रकृतिपुरुषान्यताख्यातिः' इत्येषः सिद्धान्तो निरूपितस्तस्मात् सांख्यम् इत्येतां ख्यातिं भजते दर्शनमिदम्। प्रकृतिपुरुषान्यताख्यातिरेव संख्या इति प्रोच्यते। संख्यापदस्यार्थोऽस्ति—'सम्यग् ज्ञानम्'। उक्तञ्च शाङ्करविष्णुसहस्रनामभाष्ये—"शुद्धात्मतत्त्व-विज्ञानं सांख्यमित्यभिधीयते।" तत्त्वानां संख्यायाः निर्धारणीकृतत्वादस्य दर्शनस्य नाम सांख्यमिति प्रथते स्म इति च विद्वन्मतम्। महाभारते प्रोक्तम्—

"संख्यां प्रकुर्वते चैव प्रकृतिञ्च प्रचक्षते'
तत्त्वानि च चतुर्विंशत् तेन सांख्याः प्रकृतिताः॥"

सांख्यदर्शनम् पञ्चविंशतितत्त्वानि मन्यते, तानि सन्तीमानि—पुरुषः, प्रकृतिः, महत्, अहङ्कारः, पञ्चतन्मात्राः, पञ्चभूतानि, पञ्च कर्मेन्द्रियाणि, पञ्च ज्ञानेन्द्रियाणि, मनः। आह च सांख्यकारिका—

"मूलप्रकृतिविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः॥"

एतेषां तत्त्वानां ज्ञानेन मानवः कामं स संन्यासी स्यात् वा ब्रह्मचारी वा गृहस्थः दुःखेभ्यो मुक्तो भवति। उक्तञ्च सांख्यसङ्ग्रहे—

"पञ्चविंशतितत्त्वज्ञो यन्न कुत्राश्रमे रतः।
मुण्डी जटी शिखी वापि मुच्यते नात्र संशयः॥" इति।

**हिन्दी**—जिसमें एक पुरुष, आठ प्रकृति, सोलह विकार अर्थात् १. कूटस्थ पुरुष, २. प्रकृति, ३. महत्तत्त्व, ४. अहङ्कार, ५. तन्मात्राएँ, शब्द, स्पर्श, रूप, रस तथा गन्ध—ये आठ प्रकृतियाँ तथा १. आकाश, २. वायु, ३. अग्नि, ४. जल, ५. पृथ्वी—ये पाँच महाभूत हैं। हाथ, पैर, जिह्वा, लिङ्ग और गुदा—ये पाँच कर्मेन्द्रियाँ हैं। श्रवण, त्वक्, चक्षु, रसना और प्राण—ये पाँच ज्ञानेन्द्रियाँ हैं। मन उभयेन्द्रिय है। कुल मिलाकर सोलह विकार हैं। इस तरह पचीस तत्त्वादि की संख्या की विशेषता है। अतः इसे सांख्यशास्त्र कहते हैं॥४९॥

**पुरुष इति**। पुरुषः एकः, अष्टौ प्रकृतयः, विकाराः षोडश, तथाहि एकः कूटस्थः पुरुषः, प्रकृतिः, महान्, अहङ्कारः, पञ्चतन्मात्राणि इति नव, ततः महाभूतानि पञ्चीकृतानि पञ्च पञ्च, कर्मेन्द्रियाणि हस्तपदादीनि, पञ्च ज्ञानेन्द्रियाणि चक्षुरादीनि, मनश्च इति षोडश। इत्येवं पञ्चविंशतितत्त्वादीनां संख्यायाः गणनाया वैशिष्ट्यात् सांख्यम् इति अभिधीयते॥४९॥

**ब्रह्मैकमद्वितीयं स्यान्नाना नेहास्ति किञ्चन।**
**मायिकं सर्वमज्ञानाद् भाति वेदान्तिनां मतम्॥५०॥**

**अन्वयः**—एकं किञ्चन ब्रह्म स्यात्, इह नाना नास्ति सर्वं मायिकम् अज्ञानात् भाति, इति वेदान्तिनं मतम्॥५०॥

**व्याख्या**—एकम् = अतुलनीयम्, किञ्चन = किमपि वस्तु, ब्रह्म = परमेश्वरः, स्यात् = भवेत्, इह = अस्मिन् संसारे, नाना = बहुविधम्, ब्रह्म, न = नहि, अस्ति = भवति, अन्यत् सर्वम् = सकलम्, मायिकम् = मायामयम्, मिथ्यास्वरूपम्, अज्ञानात् सत्यवत्प्रतीयते, इति = एवम्, वेदान्तिनम्, मतम् = सिद्धान्तम्। वेदान्तदर्शनं सर्वदर्शनमूर्धन्यमस्ति। शारीरकमीमांसेत्येतयापि समाख्ययेदं शास्त्रं सर्वविदितमेव। सन्त्यस्योपजीव्या उपनिषद एव। वेदस्यान्तिमसिद्धान्तस्य निरूपकत्वादुपनिषदामिवास्यापि वेदान्त इत्येषा संज्ञाऽन्वर्था ॥५०॥

**हिन्दी**—इस संसार में 'ब्रह्म' अतुलनीय और अनिर्वचनीय है, ब्रह्म अनेक नहीं होते। इनसे भिन्न जो कुछ दृश्य हैं, वे सभी 'माया' हैं। माया से उत्पन्न अज्ञानवश ही लोगों को असत्य में सत्य की प्रतीति होती है; यह वेदान्तियों का मत है ॥५०॥

**ब्रह्मेति**। एकम् अद्वितीयं किञ्चन किमपि वस्तु ब्रह्म स्यात्, इह जगति नाना विविधं ब्रह्म न अस्ति। अन्यत् सर्वं मायिकं मायामयं मिथ्यास्वरूपम् अज्ञानात् भाति विराजते, इति वेदान्तिनां मतम् ॥५०॥

**चित्तवृत्तिनिरोधस्तु प्राणसंयमनादिभिः।**
**तद् योगशास्त्रं विज्ञेयं यस्मिन् ध्यानसमाधितः ॥ ५१ ॥**

**अन्वयः**—यस्मिन् ध्यानसमाधितः प्राणसंयमनादिभिः चित्तवृत्तिनिरोधस्तु तत् योगशास्त्रं विज्ञेयम् ॥५१॥

**व्याख्या**—यस्मिन् = विषये, ध्यानसमाधितः = एकाग्रचित्तेन ब्रह्मणि मनोनिवेशनेन, प्राणसंयमनादिभिः—प्राणानाम् = अन्तश्चराणां वायूनाम्, संयमनादिभिः = नियन्त्रणादिभिः, चित्तवृत्तिनिरोधः—चित्तवृत्तेः = मनोवृत्तेः, निरोधः = अवरोधः, कथितः, तत् योगशास्त्रम् = मोक्षोपायकदर्शनशास्त्रविशेषः, विज्ञेयम् = ज्ञातव्यम्।

यावच्चित्ते विकारा जायन्ते तावत्तस्मिन्नात्मनः प्रकाशोऽवतरति, विवेकज्ञानाभावात् पुरुषस्तेष्वेव विकारेषु स्वसत्ताया अनुभूतिं कर्त्तुमारभते। सांसारिकेषु च विषयेषु सुखदुःखरागद्वेषाधिक्यं निबध्नाति। आत्मनः पुरुषस्य एवंविधतैव बन्धनमिति कथ्यते। एतस्माद्बन्धनान्मुक्तिअवाप्तिनिमित्तेन शरीरेन्द्रियमनश्चित्तवृत्तीनां निरोधोऽपेक्ष्यते। यदाहि कार्यभूतचित्तस्य धाराप्रवाहश्छिद्यते, भवति च तत् कारणभूतचित्तेः शान्तावस्थायामवस्थितिं तदात्मा स्वकीयस्य यथार्थस्य स्वरूपस्य ज्ञानमश्नुते। अवगच्छति च तत् आत्मानं शरीरमन आदितो भिन्नम् अवेति च स्वं नित्यं मुक्तं शुद्धं चैतन्यरूपञ्च। चित्तवृत्तिनिरोधेनात्मनः स्वरूपेऽवस्थापनमेवास्य योगशास्त्रस्योद्देश्यम् ॥५१॥

**हिन्दी**—जिसमें एकग्रता के साथ ध्यान एवं कुम्भकादि प्राणायाम द्वारा चित्त की वृत्तियों का निरोध करना बतलाया गया हो, उसे योगशास्त्र कहते हैं ॥५१॥

**चित्तेति**। यस्मिन् ध्यानसमाधितः ऐकाग्र्येण चिन्तनेन प्राणानाम् अन्तश्चराणां मरुतां संयमनादिभिः कुम्भकादिभिरिति भावः, चित्तवृत्तेः मनोवृत्तेः निरोधः विषयान्तरेभ्यः व्यावृत्तिः कथित इति शेषः, तत् योगशास्त्रं विज्ञेयम् ॥५१॥

**प्राग्वृत्तकथनं चैकराजकृत्यमिषादितः।**
**यस्मिन् स इतिहासः स्यात् पुरावृत्तः स एव हि ॥ ५२ ॥**

**अन्वयः**—यस्मिन् एकराजकृत्यमिषादितः यत् प्राग्वृत्तस्य कथनं, सः इतिहासः स्यात्; स एव हि पुरावृत्तः ॥५२॥

**व्याख्या**—यस्मिन् = गन्थे, एकराजस्य = एकस्य राज्ञः, कृत्यस्य = कर्मणः, मिषात् = व्यपदेशात् , इतः यत्प्राग्वृत्तस्य = पूर्ववृत्तान्तस्य, कथनम् = ख्यापनम्, सः इतिहासः, स्यात् = भवेत्, स एव = तदेव, पुरावृत्तः, हिशब्दोऽत्र पादपूर्त्यर्थमिति ॥५२॥

**हिन्दी**—जिसमें किसी एक राजा के चरित्र-वर्णन के व्याज से प्राचीन व्यवहारों का वर्णन हो, उसे इतिहास कहते हैं; इसे ही पुरावृत्त भी कहा गया है ॥५२॥

**प्रागिति**। यस्मिन् एकराजस्य एकस्य नृपस्य कृत्यस्य चरितस्य मिषादितः वर्णनाच्छलादिभिः यत् प्राग्वृत्तस्य पुरावृत्तस्य कथनं सः इतिहासः स्यात्, स एव पुरावृत्तः हिशब्दः पादपूरणार्थः ॥५२॥

**सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।**
**वंशानुचरितं यस्मिन् पुराणं तद् विकीर्त्तितम् ॥५३॥**

**अन्वयः**—यस्मिन् सर्गः प्रतिसर्गः वंशः मन्वन्तराणि च तथा वंशानुचरितं तत् पुराणं विकीर्त्तितम् ॥५३॥

**व्याख्या**—यस्मिन् = ग्रन्थे, सर्गः = जगदुत्पत्तिः, प्रतिसर्गः = प्रलयः, वंशः = श्रीमतां कुलम्, मन्वन्तराणि = ब्रह्मादिनस्य चतुर्दशो भागः, वा, एकसप्ततिचतुर्युग्यात्मकः कालः, च = पुनः, तथा = तेनैव रूपेण, वंशानुचरितम् = एकस्य परिवारस्य कुलस्य वा, परिचयः, प्रकीर्त्तितमिति शेषः, तत् = शास्त्रम्, पुराणम्, विकीर्त्तितम् = कथितम् ॥५३॥

पुरातनत्वादत्यन्तपुरातनत्वाच्च सम्भवतः पुराणमित्येतेन नाम्ना इमानि सन्ति सुप्रथितानि। पुराणानां गणना क्वाऽपि क्वापीतिहासेऽपि क्रियते परं वस्तुतः पुराणानि न सन्तीतीहासान्तर्गतानि। इतिहासः अतीतघटनावर्णनपरत्वान्नापुराणम्। पुराणमितिहासाङ्गीकृतं विषयं सीमितपरिधेराकृष्य तं विस्तृतं स्वरं व्यापकतरं च कुरुते। तस्मादितिहासपुराणे स्व-स्ववैशिष्ट्यवत्वाच्छुक्राचार्येण पृथक् पृथगेव लक्षणं प्रोक्तम्। किञ्च पुराणमाश्रित्य तेन यदुक्तं—

"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितं यस्मिन् पुराणं तद् विकीर्त्तितम् ॥"

तन्न युक्तितरं प्रतिभाति। यतो ह्येतस्मिंल्लक्षणे येषां विषयाणां निर्देशः कृतस्तेभ्योऽप्यधिकाः विषया वर्णिताः प्राप्यन्ते। पुष्कलविविधविषयनिधित्वादग्निपुराणन्तु भारतीयज्ञानकोष इति नाम्ना सुविदितमेव। अनेकानि पुराणानि तु एतादृश्यान्यपि दृश्यन्ते येषूपर्युक्तं लक्षणनिर्दिष्टाः पञ्चापि विषयाः न प्राप्यन्ते ॥५३॥

**हिन्दी**—जिस ग्रन्थ में संसार की उत्पत्ति एवं विनष्टि, महापुरुषों के वंश, मन्वन्तर तथा वंशानुचरित का वर्णन हो, उसे पुराण कहते हैं ॥५३॥

**सर्ग इति**। यस्मिन् सर्गः सृष्टिः, प्रतिसर्गः, प्रलयः, वंशः महापुरुषाणां कुलं, मन्वन्तराणि तथा वंशानुचरितं कथितमिति शेषः, तत् पुराणं विकीर्त्तितम् ॥५३॥

वर्णादिधर्म्मस्मरणं यत्र वेदाविरोधकम्।
कीर्त्तनं चार्थशास्त्राणां स्मृतिः सा च प्रकीर्त्तिता ॥ ५४ ॥

**अन्वयः**—यत्र वेदाविरोधकं वर्णादिधर्मस्मरणं च अर्थशास्त्राणां कीर्त्तनं, सा स्मृतिः प्रकीर्त्तिताः ॥ ५४ ॥

**व्याख्या**—यत्र = यस्मिन् ग्रन्थे, वेदाविरोधकम्—वेदानाम् = श्रुतीनाम्, अविरोधकम् = अविसंवादः, वर्णादिधर्मस्मरणम्—वर्णादीनाम् = ब्राह्मणादीनाम्, आदिपदेनाश्रमादीनाञ्च, धर्मस्य = कर्त्तव्यस्य, स्मरणम् = अनुचिन्तनम्, च = पुनः, अर्थशास्त्राणाम् = धनप्राप्तिरक्षावृद्ध्युपाय-दर्शकं शास्त्रम्, तेषां कीर्त्तनम् = कथनम्, सा, स्मृतिः = आर्यधर्मशास्त्रम्, प्रकीर्त्तितः = कथितः ॥५४॥

**हिन्दी**—जिसमें वेदसम्मत चारों वर्णों एवं आश्रमों का वर्णन तथा अर्थशास्त्र का भलीभाँति प्रतिपादन किया गया हो, उसे 'स्मृति' कहते हैं ॥ ५४ ॥

**वर्णादीति**। यत्र वेदाविरोधकं श्रुत्यविरुद्धं वर्णादीनां ब्राह्मणादीनाम् आदिपदेन आश्रमादीनाञ्च धर्म्मस्य स्मरणं तथा अर्थशास्त्राणां कीर्त्तनञ्च, सा स्मृतिः प्रकीर्त्तिता ॥ ५४ ॥

युक्तिर्बलीयसी यत्र सर्वं स्वाभाविकं मतम्।
कस्यापि नेश्वरः कर्त्ता न वेदो नास्तिकं हि तत्॥ ५५ ॥

**अन्वयः**—यत्र युक्तिर्बलीयसी, सर्वं स्वाभाविकं मतं कस्यापि कर्त्ता ईश्वरः न वेदश्च न, तत् नास्तिकाम् ॥ ५५ ॥

**व्याख्या**—यत्र = यस्मिन्सिद्धान्ते, युक्तिः = ऊहा, बलीयसी = अतिबलवती, सर्वम् = निखिलं वस्तु, स्वाभाविकम् = नैसर्गिकम्, मतम् = निष्पादितम्, कस्यापि = वस्तुनः, कर्त्ता = निर्माता, ईश्वरः = परमात्मा, न = नहि, अस्तीति भावः, तथा = तेनैव प्रकारेण, वेदः = श्रुतिश्च, न = नास्त्येव, इत्येवं व्यवस्थेति, तत् = एवंविधः, हि = इति निश्चयेन, नाास्तिकम् = नास्तिकग्रन्थविशेष इति ॥ ५५ ॥

नास्तिकदर्शनं प्रत्यक्षमेव प्रमाणं स्वीकुरुते। तद्वादोऽयं यदीन्द्रियैरेव विष्वासार्हं ज्ञानमवाप्तुं शक्यम्। इन्द्रियजनितज्ञानमेव यथार्थज्ञानमस्ति। प्रत्यक्षं विहाय नेदं दर्शनं दर्शनान्तरमता-न्यनुमानशब्दानि प्रमाणानि प्रमाणत्वेन मन्यन्ते।

**हिन्दी**—जिसमें तर्क को सर्वश्रेष्ठ प्रमाण माना गया हो एवं प्रत्येक वस्तु की उत्पत्ति स्वभावसिद्ध मानी गई हो तथा ईश्वर को जगत् का कर्त्ता न माना गया हो, वेद को अमान्य करता हो, उसे नास्तिक दर्शन कहते हैं ॥ ५५ ॥

**युक्तिरिति**। यत्र युक्तिः तर्कः बलीयसी अतिप्रबला, सर्वं वस्तु स्वाभाविकं स्वभावसिद्ध मतं कथितं, कस्यापि कर्त्ता कारकः ईश्वरः न अस्तीति शेषः, तथा वेदश्च न। अकिञ्चित्कर इत्यर्थः, इत्येवं व्यवस्था इति शेषः, तत् हि नास्तिकं नास्तिकग्रन्थ इत्यर्थः ॥ ५५ ॥

श्रुतिस्मृत्यविरोधेन राजवृत्तादिशासनम्।
सुयुक्त्यार्थार्जनं यत्र ह्यर्थशास्त्रं तदुच्यते ॥ ५६ ॥

**अन्वयः**—यत्र श्रुतिस्मृत्यविरोधेन राजवृत्तादिशासनं सुयुक्त्यार्थार्जनं, तद् अर्थशास्त्रम् उच्यते ॥ ५६ ॥

**व्याख्या**—यत्र = यस्मिन् शास्त्रे, श्रुतिस्मृत्यविरोधेन—श्रुतीनाम् = वेदानाम्, स्मृतीनाम् = मन्वादिस्मृतीनाम्, अविरोधेन = अविरुद्धेन, राजवृत्तादिशासनम् = राज्ञः = नृपस्य, वृत्तादीनाम् = आचारादीनाम्, शासनम् = उपदेशः, तथा सुयुक्त्या = सुचातुर्येण, अर्थार्जनम्—अर्थानाम् = धनानाम्, अर्जनम् = उपार्जनम्, कथितम्, तत् हि अर्थशास्त्रम्, उच्यते = प्रचक्षते ॥ ५६ ॥

**हिन्दी**—जिसमें वेद और स्मृतिसम्मत राजाओं के लिए आचरण के विषय में उपदेश दिया गया हो तथा चतुराई से धनार्जन करने की विधि बतलाई गई हो, उसे अर्थशास्त्र कहते हैं ॥ ५६ ॥

**श्रुतीति**। यत्र श्रुतीनां स्मृतीनाञ्च अविरोधेन राज्ञः वृत्तादीनाम् आचरितादीनां शासनम् उपदेशः तथा सुयुक्त्या सुकौशलेन अर्थानां धनानाम् अर्जनम् उपार्जनं वर्णितमिति शेषः, तत् अर्थशास्त्रम् उच्यते ॥ ५६ ॥

**शशादिभेदतः पुंसामनुकूलादिभेदतः।**
**पद्मिन्यादिप्रभेदेन स्त्रीणां स्वीयादिभेदतः।**
**तत् कामशास्त्रं सत्त्वादेर्लक्ष्म यत्रास्ति चोभयोः ॥ ५७ ॥**

**अन्वयः**—पुंसां शशादिभेदतः तथा अनुकूलादिभेदतः स्त्रीणां पद्मिन्यादिप्रभेदेन तथा स्वीयादिभेदतः यत्र उभयोः सत्त्वादेः लक्ष्म तत् कामशास्त्रम् ॥ ५७ ॥

**व्याख्या**—यत्र = यस्मिन् शास्त्रे, पुंसाम् = नराणाम्, शशादिभेदतः = शशकमृगाश्वगज-जातिभेदात्, तथा = तेनैव प्रकारेण, अनुकूलादिभेदतः = अनुकूलशठधृष्टादिभेदात्, तथा स्त्रीणाम् = नारीणाम्, पद्मिन्यादिभेदतः = पद्मिनीशङ्खिनीचित्रिणिहस्तिन्यादिजातिभेदात्, तथा स्वीयादिभेदतः = स्वकीयापरकीयादिप्रभेदात्, उभयोः = स्त्रीपुरुषयोः, सत्त्वादेः = सात्त्विकभावादेः, लक्ष्म = लक्षणम्, यत्रास्ति, तत् = असौ, कामशास्त्रं, प्रचक्षते ॥ ५७ ॥

**हिन्दी**—जिस शास्त्र में पुरुषों के शश, मृग, अश्व और हस्ती रूप जातिगत भेद से; अनुकूल, शठ एवं धृष्ट नायक के भेद से; स्त्रियों के पद्मिनी, चित्रिणी शङ्खिनी तथा हस्तिनी रूप जातिगत भेद से; स्वीया, परकीया एवं सामान्या आदि नायिका-भेद से तथा दोनों स्त्री-पुरुषों के अनुरागादि भेद के लक्षण का विशेष रूप से वर्णन हो, उसे कामशास्त्र कहा जाता है ॥ ५७ ॥

**शशादीति**। यत्रेत्यध्याहार्य्यम्। यत्र पुंसां शशादिभेदतः शशकमृगाश्वहस्तिजातिभेदात् तथा अनुकूलादिभेदतः अनुकूलधृष्टशठादिविशेषात् किञ्च स्त्रीणां पद्मिन्यादिभेदेन पद्मिनी-शङ्खिनीचित्रिणीहस्तिनीरूपजातिभेदेन तथा स्वीयादिभेदतः स्वीयापरकीयासाधारणीरूपविशेषेण उभयोः स्त्रीपुंसयोः सत्त्वादेः अनुरागादेः लक्ष्म लक्षणम् अस्ति, तत् कामशास्त्रम् ॥ ५७ ॥

**प्रासादप्रतिमारामगृहवाप्यादिसत्कृतिः।**
**कथिता यत्र तच्छिल्पशास्त्रमुक्तं महर्षिभिः ॥ ५८ ॥**

**अन्वयः**—यत्र प्रासादप्रतिमारामगृहवाप्यादिसत्कृतिः कथिताः महर्षिभिः, तत् शिल्पशास्त्रम् उक्तम् ॥ ५८ ॥

**व्याख्या**—यत्र = यस्मिन् शास्त्रे, प्रासादानाम् = सौधानां, नृपसदनानां वा, प्रतिमानाम् = आलेख्यानाम्, मूर्त्तीनाञ्च, आरामगृहाणाम् = उपवनसदनानाम्, वाप्यादीनाम् = पुष्करादीनाम्,

सत्कृतिः = सुनिर्माणम्, कथिताः = उक्ताः, महर्षिभिः = मुनिभिः, तत् शिल्पशास्त्रम्, उक्तम् = कथितम् ॥ ५८ ॥

**हिन्दी**—जिस शास्त्र में राजभवन या देवमन्दिर, प्रतिमा, उद्यानगृह, बावड़ी प्रभृति का सुन्दर ढंग से निर्माण का तरीका वर्णित हो, उसे महर्षियों ने शिल्पशास्त्र कहा है ॥५८ ॥

**प्रासादेति**। यत्र प्रासादानां राजभवनानां देवालयानां वा प्रतिमानाम् अरामगृहाणाम् उद्यानगृहाणां वाप्यादीनां सरोवरादीनाञ्च सत्कृतिः सुनिर्माणं संस्कारश्च कथिता, महर्षिभिः तत् शिल्पशास्त्रम् उक्तम् ॥ ५८ ॥

**समन्यूनाधिकत्वेन सारूप्यादिप्रभेदतः ।**
**अन्योऽन्यगुणभूषा तु वर्ण्यतेऽलङ्कृतिश्च सा ॥ ५९ ॥**

**अन्वयः**—समन्यूनाधिकत्वेन सारूप्यादिप्रभेदतः अन्योऽन्यगुणभूषा सा अलङ्कृतिः वर्ण्यते ॥ ५९ ॥

**व्याख्या**—समत्वेन = तुल्यत्वेन, न्यूनत्वेन = ऊनत्वेन, आधिक्येन = बहुत्वेन, वा = अथवा, सारूप्यादिप्रभेदतः = सादृश्यादिभेदेन, अन्योन्यस्य = परस्परस्य, गुणानाम् = धर्माणाम्, यत् वर्ण्यते = वर्णनं क्रियते, सा = तद्ग्रन्थः, अलङ्कृतिः = अलङ्कारशास्त्रम् इति कथ्यते ॥ ५९ ॥

**हिन्दी**—जिसमें समानता, न्यूनता एवं अधिकता और सादृश्य आदि भेद से परस्पर शब्द और अर्थ के गुणों के वैचित्र्य का वर्णन हो, उसे अलङ्कारशास्त्र कहते हैं ॥ ५९ ॥

**समेति**। समत्वेन न्यूनत्वेन आधिक्येन वा सारूप्यादिप्रभेदतः सादृश्यादिभेदेन अन्योऽन्यस्य परस्परस्य गुणानां भूषा वैचित्र्यमित्यर्थः, यत् वर्ण्यते सा अलङ्कृतिः तद्ग्रन्थश्च अलङ्कार इति व्यपदिश्यते ॥ ५९ ॥

**सरसालङ्कृतादुष्टशब्दार्थं काव्यमेव तत् ।**
**विलक्षणचमत्कारबीजं पद्यादिभेदतः ॥ ६० ॥**

**अन्वयः**—सरसालङ्कृतादुष्टशब्दार्थं तत् काव्यमेव पद्यादीनां भेदतः विलक्षणचमत्कार-बीजम् ॥ ६० ॥

**व्याख्या**—सरसौ = रसान्वितौ, अलङ्कृतौ = अलङ्कारसहितौ, अदुष्टौ = दोषरहितौ, शब्दार्थौ —शब्दश्च = सार्थकपदश्च, अर्थश्च = शब्दार्थौ, यत् तत् काव्यमेव, तच्च पद्यादीनाम् = श्लोकादीनाम्, भेदतः = भेदेन, विलक्षणस्य = अलौकिकस्य चमत्कारस्य, साश्चर्यानन्दस्य, बीजम् = कारणमिति बोध्यम् ॥ ६० ॥

**हिन्दी**—दोष रहित रस और अलंकारों से युक्त शब्द और अर्थ युक्त कविकर्म को काव्य कहते हैं। पद्य और गद्य के भेद से विलक्षण और चमत्कारजनक काव्य होता है ॥६० ॥

**सरसेति**। सरसौ रसयुक्तौ अलङ्कृतौ अलङ्कारयुक्तौ अदुष्टौ दोषरहितौ शब्दार्थौ यत्र तत् काव्यमेव, तच्च पद्यादीनां भेदतः वैशिष्ट्यात्, विलक्षणस्य अलौकिकस्य चमत्कारस्य साश्चर्य्यानन्दस्य बीजं कारणम् ॥ ६० ॥

**लोकसङ्केततोऽर्थानां सुग्रहा वाक् तु दैशिकी ॥ ६१ ॥**

**अन्वयः**—लोकसङ्केततः अर्थानां सुग्रहा वाक् तु दैशिकी भवति ॥ ६१ ॥

**व्याख्या**—लोकसङ्केततः—लोकानाम् = जनानाम्, सङ्केततः = अभिप्रायव्यञ्जकचेष्टया, अर्थानाम् = शब्दाशयानाम् सुग्रहाः = सुष्ठुतया ग्राह्याः, वाक् = वाणी, तु, दैशिकी = देशभाषा भवति ॥ ६१ ॥

**हिन्दी**—लोगों के अभिप्रायव्यञ्जक चेष्टा से शब्दों के आशय को सुग्राह्य बनाने वाली वाणी को देशभाषा कहते हैं ॥ ६१ ॥

**लोकेति**। लोकानां सङ्केततः सङ्केतेन अर्थानां सुग्रहा सुखग्राह्यार्था इत्यर्थः, वाक् तु दैशिकी देशभाषारूपा ॥ ६१ ॥

**विना कौशिकशास्त्रीयसङ्केतैः कार्य्यसाधिका।**
**यथाकालोचिता वाग् वावसरोक्तिश्च सा स्मृता ॥ ६२ ॥**

**अन्वयः**—कौशिकशास्त्रीयसङ्केतैः विना कार्यसाधिका यथाकालोचिता या वाक् सा अवसरोक्तिः स्मृता ॥ ६२ ॥

**व्याख्या**—कौशिकैः = शब्दसङ्ग्राहकग्रन्थैः, शास्त्रीयसङ्केतैः = शास्त्रविषयकाभिप्राय-व्यञ्जकचेष्टाभिः, विना = अन्तरेण, कार्यसाधिका = अभिप्रायव्यञ्जिका, यथाकालोचिता = समयानुसारिणी, या वाक् = वाणी, सा अवसरोक्तिः, स्मृता = कथिता ॥ ६२ ॥

**हिन्दी**—शब्दकोश एवं शास्त्रसम्मत अभिप्रायव्यञ्जक अर्थों के बिना ही अभिप्राय समझाने वाली समय के अनुसार उचित बोली गई वाणी को 'अवसरोक्ति' कहते हैं ॥ ६२ ॥

**विनेति**। कौशिकैः वृत्तिभेदैः शास्त्रीयसङ्केतैश्च विना कार्य्यसाधिका अर्थबोधिका यथाकालोचिता कालानुसारिणी या वाक्, सा अवसरोक्तिः स्मृता ॥ ६२ ॥

**ईश्वरः कारणं यत्रादृश्योऽस्ति जगतः सदा।**
**श्रुतिस्मृती विना धर्माधर्मौ स्तस्तच्च यावनम्।**
**श्रुत्यादिभिन्नधर्मोऽस्ति यत्र तद् यावनं मतम् ॥ ६३ ॥**

**अन्वयः**—यत्र सदा अदृश्यः ईश्वरः जगतः कारणम् अस्ति तथा श्रुतिस्मृती विना धर्माधर्मौ स्तः, तत् यावनम्। यत्र च श्रुत्यादिभिन्नः धर्मः अस्ति तत् यावनं मतम् ॥ ६३ ॥

**व्याख्या**—यत्र = यस्मिन् विचारे, सदा = सर्वदा, अदृश्यः = अगोचरः, ईश्वरः = परमात्मा, जगतः = संसारस्य, कारणम् = हेतुः, अस्ति = भवति, तथा = तेनैव प्रकारेण, श्रुतिस्मृती—श्रुतिश्च = वेदश्च, स्मृतिश्च = आर्याणां धर्मग्रन्थश्च, तौ विना = विहाय, धर्माधर्मौ = पापापापौ, स्तः = विद्येते, तत् यावनम् = यवनसम्बन्धिनम्, यत्र च श्रुत्यादिभिन्नः = वेदस्मृत्यादिपृथक्, धर्मः = पुण्यकर्म, तत्यावनम्, मतम् = सिद्धान्तम् ॥ ६३ ॥

**हिन्दी**—जिसमें सदा अदृश्य रहने वाले परमात्मा को सृष्टि का मूल कारण माना गया हो तथा वेद और स्मृति के बिना ही पाप-पुण्य की व्यवस्था की गई हो, उसे यवनों का धर्म-ग्रन्थ कहते हैं। जिसमें वेदादि के विचारों के बिना धर्म का प्रतिपादन किया जाता हो, उसे यवनों का मत कहते हैं ॥ ६३ ॥

**ईश्वर इति**। यत्र सदा अदृश्यः ईश्वरः जगतः कारणम् अस्ति, तथा श्रुतिस्मृती विना धर्माधर्मौ स्तः विद्येते, तत् यावनं यवनग्रन्थ इत्यर्थः। यत्र च श्रुत्यादिभिन्नः वेदादिविरुद्धः धर्मः अस्ति तत् यावनं मतम् ॥ ६३ ॥

कल्पितश्रुतिमूलो वामूलो लोकैर्धृतः सदा।
देशादिधर्म्मः स ज्ञेयो देशे देशे कुले कुले॥ ६४॥

**अन्वयः**—यः देशे देशे कुले कुले लोकैः कल्पिता श्रुतिमूलः वा अमूलः सदा धृतः सः देशादिधर्मः ज्ञेयः॥ ६४॥

**व्याख्या**—यः = धर्मः, देशे देशे = प्रतिदेशम्, कुले कुले = प्रतिकुलम्, लोकैः = जनैः, कल्पिता = स्थापिता, श्रुतिमूलः—श्रुतिः = वेदः, मूलम् = बीजम्, यस्य तथाभूतः, वा = अथवा, अमूलः = मूलरहितः, आचारः, सदा = सर्वदा, धृतः = स्वीकृतः, सः = असौ, देशादिधर्मः = देशविशेषस्य धर्मः, ज्ञेयः = विज्ञेयः॥ ६४॥

**हिन्दी**—हर देश तथा हर कुल में जो लोगों के द्वारा विचारित वैदिक या अवैदिक आचार हमेशा मान्य रहा हो, उसे देशादिधर्म कहते हैं॥ ६४॥

**कल्पितेति**। यः देशे देशे प्रतिदेशं कुले कुले प्रतिकुलं लोकैः कल्पिता रचिता श्रुतिः मूलं यस्य तथाभूतः वा अमूलः मूलरहितः आचार इति शेषः, सदा धृतः, सः देशादिधर्मः विज्ञेयः॥ ६४॥

पृथक् पृथक् तु विद्यानां लक्षणं सम्प्रकाशितम्।
कलानां न पृथङ्नाम लक्ष्म चास्तीह केवलम्॥ ६५॥

**अन्वयः**—विद्यानां पृथक् पृथक् लक्षणं सम्प्रकाशितम्, केवलं कलानां पृथक् नाम लक्ष्म इह न अस्ति॥ ६५॥

**व्याख्या**—विद्यानाम् = विज्ञानानाम्, पृथक् पृथक् = भिन्नं भिन्नम्, लक्षणम् = परिभाषा, सम्प्रकाशितम्—सम्यग्रूपेण प्रकाशितम् = कथितम्, केवलम् = मात्रम्, कलानाम् = शिल्पविद्यानाम्, पृथक् = भिन्नम्, नाम = अभिधानम्, लक्ष्म = लक्षणञ्च, इह = अत्र, न = नहि, अस्ति = विद्यते॥ ६५॥

**हिन्दी**—इस तरह अलग-अलग विद्या की परिभाषा तो की जा चुकी है, किन्तु केवल कलाओं के नाम तथा लक्षण भिन्न-भिन्न रूप में यहाँ नहीं कहा जा सका है॥ ६५॥

**पृथगिति**। विद्यानाम् उक्तानां पृथक् पृथक् लक्षणं सम्प्रकाशितम्, केवलं कालानां पृथक् नाम लक्ष्म लक्षणञ्च इह न अस्ति॥ ६५॥

पृथक् पृथक् क्रियाभिर्हि कलाभेदस्तु जायते।
यां यां कलां समाश्रित्य तन्नाम्ना जातिरुच्यते॥ ६६॥

**अन्वयः**—पृथक् पृथक् क्रियाभिः कलाभेदस्तु जायते। यां यां कलां समाश्रित्य तन्नाम्ना जातिः उच्यते॥ ६६॥

**व्याख्या**—पृथक् पृथक् = विविधाभिः, क्रियाभिः = व्यापारैः, कलाभेदस्तु—कलानाम् = शिल्पानाम्, भेदः = भिन्नता, तु, जायते = भवति, यां यां कलाम् = शिल्पविद्याम्, समाश्रित्य = अवलम्ब्य, तन्नाम्ना = तत्तदाख्यया, जातिः = कलानां भेदः, उच्यते = कथ्यते॥ ६६॥

**हिन्दी**—किसी भी कला का भेद अलग-अलग व्यापार से ही बोध होता है और जिन

कलाओं का आश्रय लेकर लोग जीविका चलाते हैं, उस कला के नाम से उसकी जाति का बोध होता है ॥ ६६ ॥

**पृथगिति।** पृथक् पृथक् विभिन्नाभिरित्यर्थः, क्रियाभिः अनुष्ठानैः कलाभेदस्तु जायते, यां यां क्रियां समाश्रित्य तन्नाम्ना तत्तदाख्ययेत्यर्थः, जातिः कलानामिति शेषः उच्यते ॥ ६६ ॥

**हावभावादिसंयुक्तं नर्त्तनं तु कला स्मृता।**
**अनेकवाद्यकरणे ज्ञानं तद्वादने कला ॥ ६७ ॥**

**अन्वयः**—हावभावादिभिः संयुक्तं नर्तनं कला स्मृता। अनेकवाद्यकरणे ज्ञानं तत् वादने कला ॥ ६७ ॥

**व्याख्या**—हावभावादिभिः = पुरुषमनोहारीस्त्रीचेष्टाभेदादिभिः, संयुक्तम् = समन्वितम्, नर्त्तनम् = नृत्यम्, कला = शिल्पविद्या, स्मृता = कथिता। अनेकेषाम् = विविधानाम्, वाद्यानाम् = वादित्राणाम्, करणे = सम्पादने, ज्ञानम् = बोधः, तेषां कला = शिल्पविद्या, स्मृतेति भावः ॥ ६७ ॥

**हिन्दी**—विलास-विभ्रम के साथ नाचने की कला को नृत्यकला कहते हैं। अनेक तरह के बाजे बजाने के ज्ञान को वाद्य अथवा वादन कला कहते हैं ॥ ६७ ॥

**हावेति।** हावभावादिभिः संयुक्तं नर्त्तनं नृत्यं कला स्मृता। तथा अनेकेषां वाद्यानां करणे निर्माणे, तेषां वाद्यानां वादने च ज्ञानं कला स्मृतेति शेषः ॥ ६७ ॥

**वस्त्रालङ्कारसन्धानं स्त्रीपुंसोश्च कला स्मृता।**
**अनेकरूपाविर्भावकृतिज्ञानं कला स्मृता ॥ ६८ ॥**

**अन्वयः**—स्त्रीपुंसोः वस्त्रालङ्कारसन्धानं कलाः स्मृता। अनेकरूपाविर्भावकृतिज्ञानं कला स्मृता ॥ ६८ ॥

**व्याख्या**—स्त्रीपुंसोः = नरनार्योः, वस्त्राणाम् = परिधानानाम्, अलङ्काराणाञ्च = आभूषणानाञ्च, सन्धानम् = संयोजनम्, कला = परिधानकलेति, स्मृता = ख्याता। तथा च, अनेकरूपाणाम् = विविधानां स्वरूपाणाम्, आविर्भावाणाम् = प्राकट्यानाम् , कृतौ = निष्पादने, ज्ञानम् = बोधः, कला = कथिता ॥ ६८ ॥

**हिन्दी**—नर-नारी को वस्त्राभूषणों से सजाने की कला को 'वस्त्रालङ्कारसंधान' कला कहते हैं। अनेक तरह के रूप प्रकट करने की कला को 'रूपप्रकाशन कला' (बहुरूपिया) कहते हैं ॥ ६८ ॥

**वस्त्रेति।** स्त्रीपुंसोः स्त्रीपुरुषयोः वस्त्राणाम् अलङ्काराणाञ्च सन्धानं सम्यक् सुचारुतयेत्यर्थः, धानं परिधानं कला स्मृता। तथा अनेकरूपाणां विविधानाम् आविर्भावाणां प्रकाशानां कृतौ अनुष्ठाने ज्ञानं कला स्मृता ॥ ६८ ॥

**शय्यास्तरणसंयोगपुष्पादिग्रथनं कला।**
**द्यूताद्यनेकक्रीडाभी रञ्जनं तु कला स्मृता ॥ ६९ ॥**

**अन्वयः**—शय्यास्तरणसंयोगपुष्पादिग्रथनं कला स्मृता। तथा द्यूताद्यनेकक्रीडाभिः रञ्जनं कला स्मृता ॥ ६९ ॥

**व्याख्या**—शय्यानाम् = पर्यङ्कानाम्, आस्तरणानाम् = कुथानाम्, संयोगः = सम्यक्सम्पादनम्,

पुष्पादीनाम् = प्रसूनादीनाम्, ग्रथनम् = सङ्ग्रन्थनम्, कला = शिल्पविद्या, स्मृता = कथिता। तथा—द्यूतादिभिः = कैतवादिभिः, अनेकाभिः = विविधाभिः, क्रीडाभिः = खेलनैः, रञ्जनम् = लोकानां मनोरञ्जनम्, कला स्मृता ॥ ६९ ॥

**हिन्दी**—पलंग पर बिछावन बिछाकर पुरुषों को सुलाने की विधि को भी कला कहते हैं। जुआ प्रभृति अनेक खेलों द्वारा मनोरंजन करना भी कला है ॥ ६९ ॥

**शय्येति**। शय्यानाम् आस्तरणानाञ्च संयोगः सम्यक् योगः अनुष्ठानं पुष्पादीनाञ्च ग्रथनं कला स्मृता। तथा द्यूतादिभिः अनेकाभिः क्रीडाभिः रञ्जनं लोकानामिति शेषः कला स्मृता ॥ ६९ ॥

**अनेकासनसन्धानै रतेर्ज्ञानं कला स्मृता।**
**कलासप्तकमेतद्धि गान्धर्वे समुदाहृतम् ॥ ७० ॥**

**अन्वयः**—अनेकासनसन्धानैः रतेः ज्ञानं कला स्मृता। एतद्धि कलासप्तकं गान्धर्वे समुदाहृतम् ॥ ७० ॥

**व्याख्या**—अनेकैः = बहुविधैः, आसनैः = उपवेशनप्रकारैः, रतेः = मैथुनक्रियायाः, ज्ञानम् = बोधः, कला, स्मृता = कथिता। तथा एतत् = पूर्वोक्तम्, कलानाम् = रतिकलानाम्, सप्तकम् = सप्तविधम्, गान्धर्वे = गन्धर्ववेदे, समुदाहृतम् = सम्यक्प्रकारेणोदाहृतम् ॥ ७० ॥

**हिन्दी**—आसन बदल कर संभोग करने की क्रिया को भी कला कहते हैं। इन सात प्रकार की रतिक्रिया का वर्णन उदाहरण के साथ गान्धर्ववेद में किया गया है ॥ ७० ॥

**अनेकेति**। अनेकैः विविधैः आसनैः सन्धानैश्च रतेः सुरतस्य ज्ञानं कला स्मृता। एतत् उक्तरूपं कलानां सप्तकं गान्धर्वे गान्धर्ववेदे समुदाहृतं हि, हिशब्दोऽवधारणार्थः ॥ ७० ॥

**मकरन्दासवादीनां मद्यादीनां कृतिः कला।**
**शल्यगूढाहृतौ ज्ञानं शिराव्रणव्यधे कला ॥ ७१ ॥**

**अन्वयः**—मकरन्दासवादीनां मद्यादीनां कृतिः कला। शल्यगूढाहृतौ ज्ञानं शिराव्रणव्यधे कला ॥ ७१ ॥

**व्याख्या**—मकरन्दः = प्रसूनरसः, तेन आसवादीनाम् = मदिरादीनाम्, मद्यादीनाम् = सुराप्रभृतीनाम्, कृतिः = निष्पादनम्, कला भवति। तथा शक्यस्य = कण्टकविद्धस्य, गूढम् = क्लेशरहितं मन्दम्, यथा तथा आहृतौ = निष्कासने, शिरासु व्रणानाम् = स्फोटकादीनाम्, व्यधे = विद्धकरणे च, ज्ञानम् = बोधः, कला भवति ॥ ७१ ॥

**हिन्दी**—फूलों के रस से आसव तथा सुरा प्रभृति बनाने की विधि को कला कहते हैं। शरीर में चुभे काँटें आसानी से निकालने की क्रिया तथा सिर के घावों को चीरकर बहाने की क्रिया को भी कला कहते हैं ॥ ७१ ॥

**मकरन्देति**। मकरन्दः पुष्परसः तेन आसवादीनां मादकद्रव्याणां तथा मद्यादीनां सुराप्रभृतीनां कृतिः अनुष्ठानं कला। तथा शल्यस्य पादादिविद्धस्य गूढं मन्दम् अक्लेशकरमित्यर्थः, यथा तथा आहृतौ बहिष्करणे शिरासु व्रणानां स्फोटकादीनां व्यधे विद्धकरणे च ज्ञानं कला ॥ ७१ ॥

**हिङ्ग्वादिरससंयोगादन्नादिपचनं कला।**
**वृक्षादिप्रसवारोपपालनादिकृतिः कला ॥ ७२ ॥**

**अन्वयः**—हिङ्ग्वादिरससंयोगात् अन्नादिपचनं कला। वृक्षादिप्रसवारोपपालनादिकृतिः कला ॥७२ ॥

**व्याख्या**—हिङ्ग्वादीनाम् = बाह्लीकादीनाम्, रससंयोगात्—रसानाम् = साराणाम्, संयोगात् = सम्मिश्रणात्, अन्नादीनाम् = भोज्यपदार्थादीनाम्, पचनम् = पाककरणम्, कला। तथा = तेनैव प्रकारेण, वृक्षादीनाम् = तरुगुल्मप्रभृतीनाम्, प्रसवस्य = फलस्य, आरोपः = रोपणम्, तत्पालनादिश्च = संरक्षणादिकञ्च कलेति कथिता ॥७२ ॥

**हिन्दी**—हिंग आदि द्रव्य के रसों को मिलाकर सुन्दर ढंग से भोजन बनाने की क्रिया को भी कला कहते हैं। पेड़-पौधे को फलने, उन्हें रोपने और उनकी रक्षा करने की क्रिया भी एक कला है ॥७२ ॥

**हिङ्ग्वादीति**। हिङ्ग्वादीनां हिङ् इति नाम्ना प्रसिद्धद्रव्यविशेषाणां रससंयोगात् अन्नादीनां पचनं पाककरणं कला, तथा वृक्षादीनां प्रसवस्य फलस्य यः आरोपः रोपणं तत्पालनादिश्च तत्कृतिः तदनुष्ठानं कला ॥७२ ॥

**पाषाणधात्वादिदृतिस्तद्भस्मीकरणं कला।**
**यावदिक्षुविकाराणां कृतिज्ञानं कला स्मृता ॥७३ ॥**

**अन्वयः**—पाषाणधात्वादिदृतिस्तद्भस्मीकरणं कला। यावदिक्षुविकाराणां कृतिज्ञानं कला स्मृता ॥७३ ॥

**व्याख्या**—पाषाणानाम् = प्रस्तराणाम्, धात्वादीनाम् = स्वर्णरौप्यादीनाम्, दृतिः = विदारणम्, तेषां भस्मीकरणम् = तापनम्, कला, तथा यावत् = यथायथम्, इक्षुविकाराणाम् = गुडाणाञ्च, कृतेः = पाककरणस्य, ज्ञानम् = बोधोऽपि, कला एवेति, स्मृता = कथिता ॥७३ ॥

**हिन्दी**—पत्थर तोड़कर तथा सोना-चाँदी को गलाकर भस्म बनाना भी एक कला है। गुड़पाक बनाने की क्रिया भी एक कला ही है ॥७३ ॥

**पाषाणेति**। पाषाणानां प्रस्तराणां धात्वादीनां स्वर्णादीनाञ्च दृतिः विदारणं तेषां भस्मीकरणञ्च कला, तथा यावत् यथायथम् इक्षुविकाराणां गुडाणाञ्च कृतौ अनुष्ठाने ज्ञानं कला स्मृता ॥७३ ॥

**धात्वौषधीनां संयोगक्रियाज्ञानं कला स्मृता।**
**धातुसाङ्कर्य्यपार्थक्यकरणन्तु कला स्मृता ॥७४ ॥**

**अन्वयः**—धात्वौषधीनां संयोगक्रियाज्ञानं कला स्मृता। धातुसाङ्कर्यपार्थक्यकरणं तु कला स्मृता ॥ ७४ ॥

**व्याख्या**—धातूनाम् = खनिजानाम्, औषधीनाम् = भैषज्यानाम्, संयोगस्य = सम्मिश्रणस्य, क्रियायाः = निष्पादनस्य, च, ज्ञानम् = बोधः, कला स्मृता। तथा धातूनाम् = अश्मभेदानाम्, साङ्कर्यात् = सम्मिश्रणात्, पार्थक्यकरणम् = भिन्नकरणम्, कला, स्मृता = कथिता ॥७४ ॥

**हिन्दी**—खनिजों के साथ औषधियों के सम्मिश्रण एवं प्रयोग करने के ज्ञान को भी कला कहते हैं। स्वर्णादि धातुओं के संमिश्रण को अलग-अलग करने की क्रिया को भी कला कहते हैं ॥७४ ॥

**धात्विति**। धातूनां स्वर्णरजतादीनाम् औषधीनाञ्च संयोगस्य क्रियायाः अनुष्ठानस्य च ज्ञानं कला स्मृता। तथा धातूनां साङ्कर्य्यात् मिश्रणात् पार्थक्यकरणं पृथक्करणं कला स्मृता ॥७४ ॥

संयोगापूर्वविज्ञानं धात्वादीनां कला स्मृता।
क्षारनिष्कासनज्ञानं कलासंज्ञन्तु तत् स्मृतम्।
कलादशकमेतद्धि ह्यायुर्वेदागमेषु च॥ ७५॥

**अन्वयः**—धात्वादीनां संयोगापूर्वविज्ञानं कला स्मृता। क्षारनिष्कासनं ज्ञानं कलासंज्ञं तु तत् स्मृतम्। एतत् हि कलादशकम् आयुर्वेदागमेषु च॥७५॥

**व्याख्या**—धात्वादीनाम् = खनिजप्रभृतीनाम्, संयोगस्य = सम्मिश्रणस्य, अपूर्वम् = अभूत-पूर्वम्, विज्ञानम् = विशिष्टज्ञानम्, कला, स्मृता = कथिता। तथा क्षाराणाम् = लवणादीनाम्, निष्कासने = प्रकाशने, वा द्रव्यान्तराद् बहिष्करणे, यत्ज्ञानम् = कौशलम्, तदपि कलेति नाम्ना ख्याता। एतत् = पूर्वोक्तम्, दशकम् = दशसंख्यकम्, आयुर्वेदागमे = आयुर्वेदशास्त्रे वर्णितम्।

**हिन्दी**—खनिज द्रव्यों को अभूतपूर्व ढंग से मिलाने के ज्ञान को भी कला कहते हैं। नमक निकालने की प्रक्रिया को भी कला कहते हैं। ऊपर वर्णित दस कलाओं का उल्लेख आयुर्वेदशास्त्र में हैं॥७५॥

**संयोगेति**। धात्वादीनां धातुप्रभृतीनां संयोगस्य मिश्रीभावस्य अपूर्वं प्रथमं विज्ञानं कला स्मृता। तथा क्षाराणां लवणादीनां निष्कासने आविष्करणे वा द्रव्यान्तराद् बहिष्करणे यत् ज्ञानं तत् कलासंज्ञं कलेति नाम्ना स्मृतम्। एतत् कलानां दशकम् आयुर्वेदशास्त्रे अन्तर्भूतमिति शेषः, हिशब्दोऽवधारणार्थः॥७५॥

शस्त्रसन्धानविक्षेपः पदादिन्यासतः कला।
सन्ध्याघाताकृष्टिभेदैर्मल्लयुद्धं कला स्मृता॥ ७६॥

**अन्वयः**—पदादिन्यासतः शस्त्रसन्धानविक्षेपः कला तथा सन्ध्याघाताकृष्टिभेदैः मल्लयुद्धं कला॥७६॥

**व्याख्या**—पदादीनाम् = चरणादीनाम्, न्यासतः = स्थापनक्रमेण, शस्त्राणाम् = आयुधानाम्, सन्धानम् = संयोजनम्, कला, तथा सन्धिषु = सन्धिस्थलेषु, ये आघाताः = आक्रमणम्, प्रक्षेपो वा, आकृष्टयः = आकर्षणानि, च, तेषां भेदैः = प्रकारैः, यत् मल्लयुद्धम् = नियुद्धमपि, कला, स्मृता = ख्याता॥७६॥

**हिन्दी**—पैंतरे बदलते हुए निशाने साध कर हथियार चलाने की क्रिया को कला कहते हैं तथा अनेक दाव-पेंचों के साथ सन्धिस्थल पर चोट कर और खींच कर कुश्ती लड़ना भी कला है॥७६॥

**शस्त्रेति**। पदादीनां न्यासतः विन्यासक्रमेण शस्त्राणां सन्धानं सम्यक् लक्ष्यीकरणं विक्षेपश्च कला। तथा सन्धिषु स्थानविशेषेषु ये आघाताः प्रहाराः आकृष्टयः आकर्षणानि च तेषां भेदैः यत् मल्लयुद्धं मल्लयोः वीरयोः युद्धं परस्परसङ्ग्रामः तत् कला स्मृता॥७६॥

बाहुयुद्धन्तु मल्लानामशस्त्रं मुष्टिभिः स्मृतम्।
मृतस्य तस्य न स्वर्गो यशो नेहापि विद्यते॥ ७७॥

**अन्वयः**—मल्लानाम् अशस्त्रं यत् बाहुयुद्धं तत् मुष्टिभिः स्मृतम्। तस्य मृतस्य स्वर्गः तथा यशश्च इह न विद्यते॥७७॥

**व्याख्या**—मल्लानाम् = बाहुयोद्धृणाम्, अशस्त्रम् = आयुधरहितम्, यत् बाहुयुद्धम् = मल्लयुद्धम्, तत = तस्मिन् युद्धे, मुष्टिभिः = मुष्टिप्रहारैः, स्मृतम् = कथितम्। तत्र = तस्मिन् युद्धे, मृतस्य = हतस्य, तस्य = वीरस्य, स्वर्गः = अपरलोकः, यशश्च = कीर्त्तिश्चापि, इह = संसारे, न = नहि, विद्यते = भवतीति ॥७७॥

**हिन्दी**—बिना हथियार चलाये मुक्के से जहाँ युद्ध होता है, उसे मल्लयुद्ध कहते हैं। इस युद्ध में मरने वालों को न तो स्वर्ग मिलता है और न संसार में यश ही मिलता है ॥७७॥

**बाहुयुद्धमिति**। मल्लानां वीराणाम् अशस्त्रं शस्त्राघातरहितं यत् बाहुयुद्धं तत् मुष्टिभिः मुष्टिप्रहारैः स्मृतं कथितं, तत्र मृतस्य तस्य वीरस्य स्वर्गः तथा यशश्च इह न विद्यते ॥७७॥

**बलदर्पविनाशान्तं नियुद्धं यशसे रिपोः।**
**न कस्यासीद्धि कुर्य्याद् वै प्राणान्तं बाहुयुद्धकम् ॥७८॥**

**अन्वयः**—रिपोः बलदर्पविनाशान्तं नियुद्धं कस्य यशसे न आसीत् हि। अपितु प्राणान्तं बाहुयुद्धकं हि कुर्यात् ॥७८॥

**व्याख्या**—रिपोः = अरेः, बलदर्पयोः = सामर्थ्यगवयोः, विनाशान्तम् = विनाशपर्यन्तम्, नियुद्धम् = बाहुयुद्धम्, कस्य = कस्यापि जनस्य, यशसे = कीर्त्तये, न = नहि, आसीत्, हीति निश्चयेन, अपितु सकलसमाजहेतवे भवति, अतः प्राणान्तम् = प्राणान्तपर्यन्तम्, बाहुयुद्धम् = मुष्टिप्रहारम्, वै = इति निश्चयेन, कुर्यात् = विदध्यात् ॥७८॥

**हिन्दी**—शत्रु की शक्ति और दर्प नाश के लिए प्राणनाश तक युद्ध चलना चाहिए। यह बाहुयुद्ध किसी व्यक्ति-विशेष के यश हेतु नहीं है। अतः जब तक दुश्मन की जान न निकल जाय तब तक इस युद्ध को चलते रहना चाहिए ॥७८॥

**बलेति**। रिपोः शत्रोः बलदर्पयोः विनाशान्तं विनाशावधिकं नियुद्धं कस्य यशसे न आसीत्? हि निश्चितम्। अपितु सर्वस्यैव यशसे इत्यर्थः, अतः प्राणान्तं बाहुयुद्धकं कुर्य्यात् वै कुर्य्यादेव वैशब्दोऽवधारणार्थः ॥७८॥

**कृतप्रतिकृतैश्चित्रैर्बाहुभिश्च सुसङ्कटैः।**
**सन्निपातावघातैश्च प्रमादोन्मथनैस्तथा।**
**कृतं निपीडनं ज्ञेयं तन्मुक्तिस्तु प्रतिक्रिया ॥७९॥**
**कलाभिलक्षिते देशे यन्त्राद्यस्त्रनिपातनम्।**
**वाद्यसङ्केततो व्यूहरचनादि कला स्मृता ॥८०॥**

**अन्वयः**—कृतप्रतिकृतैः चित्रैः सुसङ्कटैः बाहुभिः सन्निपातावघातैश्च तथा प्रमादोन्मथनैः यत्कृतं तन्निपीडनं ज्ञेयम्। तन्मुक्तिस्तु प्रतिक्रिया सा कला। अभिलक्षिते देशे यन्त्राद्यस्त्रनिपातनं तथा वाद्यसङ्केततः व्यूहरचनादि कला स्मृता ॥७९-८०॥

**व्याख्या**—कृतैः = बाहुभ्यां प्रहरणैः, प्रतिकृतैः = शत्रुकृतप्रहारावरोधनैः, चित्रैश्च = विविधैश्च, सुसङ्कटैः = अतिभीषणप्रहरणैः, बाहुभिः = बाहुप्रहारैः, सन्निपातैः = शत्रोरुपरि सम्यक्पातनैः, अवघातैः = प्रहारैः, तथा प्रमादे = स्तोकमपि सावधानताऽभावे, उन्मथनैः = पेषणैः,

यत्कृतम् = यदनुष्ठितम्, तत् = कर्म, निपीडनम् = सन्तापनं वा अर्दनम्, ज्ञेयम् = बोध्यम्। तत् = तस्मात्, मुक्तिस्तु = अतिक्रमस्तु, प्रतिक्रिया = प्रतिकारः, सा = एवंविधा क्रिया, कला ज्ञेया। किञ्च अभिलक्षिते = अभीप्सिते, देशे = स्थानविशेषे, यन्त्रादीनाम् = प्रहारकयुद्धयन्त्रादीनाम्, तथा अस्त्राणाम् = प्रहरणानाम्, निपातनम् = प्रहरणम्, तथा वाद्यानाम् = वादनयन्त्राणाम्, सङ्केततः = सङ्केतेन, व्यूहरचनादि = सैन्यसंरचनादि, कला, स्मृता = कथिता ॥७९-८०॥

**हिन्दी**—बाँहों से वार करना, अपने पर किये गये वारों से बचना, पैंतरे बदल कर बाँहों से वार करना, बाँहों से भीषण प्रहार करना, शत्रु पर लगातार टूट पड़ना, हाथों से ही उसे चोट पहुँचाना तथा थोड़ा भी असावधान होने पर दुश्मन को हाथों से मसल डालना—ऐसे बाहुयुद्ध को 'निपीड़न' कहा जाता है। ऐसे आक्रमणों से अपने को बचा लेना 'प्रतिक्रिया' कहलाती है। इसे मल्लयुद्ध कहते हैं, यह भी एक कला है। लक्ष्यस्थान पर निशाना साधकर युद्धयंत्र या हथियार चलाना भी एक कला है। जुझाऊ बाजे के इशारे पर सैन्य-संरचना भी एक कला है ॥७९-८०॥

**कृतेति। कलेति।** कृतैः प्रतिकृतैः चित्रैः विविधैः सुसङ्कटैः अतिभीषणैः बाहुभिः बाहुप्रहारैरित्यर्थः, सन्निपातैः सम्यक् पातनैः शत्रोरुपरीति शेषः, अवघातैः आघातैः तथा प्रमादे अनवधानतायां शत्रोरिति शेषः, उन्मथनैः मर्दनैः यत् कृतं तत् निपीडनं निःशेषेण पीडनं ज्ञेयं, तस्मात् मुक्तिस्तु अतिक्रमस्तु प्रतिक्रिया प्रतिकारः सा कला। किञ्च अभिलक्षिते लक्ष्यीकृते देशे यन्त्रादीनां युद्धयन्त्रादीनाम् अस्त्राणाञ्च निपातनं तथा वाद्यानां सङ्केततः इङ्गितेन व्यूहरचनादि सैन्यरचनादि कला स्मृता ॥७९-८०॥

**गजाश्वरथगत्या तु युद्धसंयोजनं कला।**
**कलापञ्चकमेतद्धि धनुर्वेदागमे स्थितम् ॥८१॥**

**अन्वयः**—गजाश्वरथगत्या युद्धसंयोजनं कला। एतत् कलापञ्चकं हि धनुर्वेदागमे स्थितम् ॥८१॥

**व्याख्या**—गजानाम् = हस्तिनाम्, अश्वानाम् = घोटकानाम्, रथानाञ्च = स्यन्दनानाञ्च, गत्या = गतिविशेषेण, युद्धसंयोजनम् = रणनीतिनिर्धारणम्, कला = कलाख्येति। एतत् = पूर्वोक्तं सकलम्, कलापञ्चकम् = एषा पञ्चविधा कला, हि = यतः, धनुर्वेदागमे = धनुर्वेदशास्त्रे, स्थितम् = वर्णितमस्ति ॥८१॥

**हिन्दी**—हाथी, घोड़े और रथ की चाल पर ध्यान रखते हुए रणनीति का निर्धारण करना भी एक कला है। ये पाँच कलाएँ धनुर्वेदशास्त्र में वर्णित हैं ॥८१॥

**गजेति।** गजानाम् अश्वानां रथानाञ्च गत्या गमनवैशिष्ट्येन युद्धसंयोजनं सङ्ग्रामायोजनं कला। एतत् कलापञ्चकं धनुर्वेदागमे धनुर्वेदशास्त्रे स्थितं हि, हिशब्दोऽवधारणार्थः ॥८१॥

**विविधासनमुद्राभिर्देवतातोषणं कला।**
**सारथ्यं च गजाश्वादेर्गतिशिक्षा कला स्मृता ॥८२॥**

**अन्वयः**—विविधासनमुद्राभिः देवतातोषणं कला। सारथ्यं गजाश्वादेः च गतिशिक्षा कला स्मृता ॥८२॥

**व्याख्या**—विविधेन = अनेकप्रकारकेण, आसनेन = उपवेशनाधारेण, मुद्राभिः = शरीरावयवविन्यासैः, देवतानाम् = सुराणाम्, तोषणम् = प्रीणनम्, कला। तथा सारथ्यम् = रथसञ्चालनम्, गजानाम् = करिणाम्, अश्वानाञ्च = हयानाञ्च, गतिशिक्षा = सञ्चालनबोधः, च, कला स्मृता = कथिता ॥ ८२ ॥

**हिन्दी**—अनेक प्रकार के आसनों और मुद्राओं से देवताओं को प्रसन्न करना भी एक कला है तथा रथ हाँकना और हाथी-घोड़े को चाल सिखाना भी कला है ॥ ८२ ॥

**विविधेति**। विविधेन आसनेन उपवेशनेन मुद्राभिः हस्तादीनां रचनाविशेषैश्च देवतानां सन्तोषणं प्रीणनं कला। तथा सारथ्यं सूतकार्य्यं गजानाम् अश्वानाञ्च गतिशिक्षा च कला स्मृता ॥ ८२ ॥

**मृत्तिकाकाष्ठपाषाणधातुभाण्डादिसत्क्रिया ।**
**पृथक् कलाचतुष्कं तु चित्राद्यालेखनं कला ॥ ८३ ॥**

**अन्वयः**—मृत्तिकाकाष्ठपाषाणधातुभाण्डादिसत्क्रिया कला, चित्राद्यालेखनं कला। एतत् कलाचतुष्कं तु पृथक् उक्तम् ॥ ८३ ॥

**व्याख्या**—मृत्तिकानां = मृदानाम्, काष्ठानाम् = दारूणाम्, पाषाणानाम् = प्रस्तराणाम्, धातूनाञ्च = खनिजानाञ्च, ये भाण्डादयः = पात्रादयः, सत्क्रिया = सुष्ठुरूपेण तेषां रचना, तत् कलेति, तथा चित्रादीनाम् = आलेख्यादीनाम्, आलेखनम् = चित्राङ्कनम्, कला। एतत् = पूर्वोक्तम्, चतुष्कम् = चतुप्रकारकम्, कला, पृथक् = अन्यत्, उक्तम् ॥ ८३ ॥

**हिन्दी**—मिट्टी, काठ, पत्थर और धातु के बर्त्तन आदि को सुन्दर ढंग से बनाना भी कला है तथा चित्र बनाना भी कला ही है। ये अलग से चार कलाएँ हैं ॥ ८३ ॥

**मृत्तिकेति**। मृत्तिकानां काष्ठानां पाषाणानां धातूनाञ्च ये भाण्डादयः तेषां सत्क्रिया सुनिर्माणं कला। तथा चित्रादीनाम् आलेखनं सम्यक् लेखनं कला। एतत् कलाचतुष्कं पृथक् उक्तमिति शेषः ॥ ८३ ॥

**तडागवापीप्रासादसमभूमिक्रिया कला।**
**घट्याद्यनेकयन्त्राणां वाद्यानान्तु कृतिः कला ॥ ८४ ॥**

**अन्वयः**—तडागवापीप्रासादसमभूमिक्रिया कला। तथा घट्याद्यनेकयन्त्राणां वाद्यानां तु कृतिः कला ॥ ८४ ॥

**व्याख्या**—तडागानाम् = सरोवराणाम्, वापीनाम् = वापिकानाम्, प्रासादानाम् = राजभवनानाम्, समभूमीनाञ्च—भूम्याः = पृथिव्याः, समानीकरणस्य क्रिया कलेति, तथा घट्यादीनाम् = समयनिरूपकादीनाम्, अनेकेषाम् = विविधानाम्, यन्त्राणाम्, वाद्यानाम् = वादनयन्त्राणाञ्च, कृतिः = क्रिया, कलेति ॥ ८४ ॥

**हिन्दी**—तालाब, बावड़ी, राजभवन तथा धरती को समतल बनाने की क्रिया भी एक कला है। घड़ी बनाने की क्रिया भी एक कला ही है और विविध बाजे बनाना भी कला ही है ॥ ८४ ॥

**तडागेति**। तडागानां सरसां वापीनां दीर्घिकाणां प्रासादानां हर्म्याणां समभूमीनाञ्च क्रिया करणं कला। तथा घट्यादीनां समयनिरूपकादीनाम् अनेकेषां विविधानां यन्त्राणां वाद्यानाञ्च कृतिः निर्माणं कला ॥ ८४ ॥

**हीनमध्यादिसंयोगवर्णाद्यै रञ्जनं कला।**
**जलवाय्वग्निसंयोगनिरोधैश्च क्रिया कला॥ ८५॥**

**अन्वयः**—हीनमध्यादिसंयोगवर्णाद्यैः रञ्जनं कला। जलवाय्वग्निसंयोगनिरोधैः क्रिया कला॥ ८५॥

**व्याख्या**—हीनमध्यादयः = मन्दमध्यादिकाः, संयोगाः = संश्लेषाः, येषाम्, तैः वर्णाद्यैः = रागाद्यैः, रञ्जनम् = चित्राङ्कनमपि, कला। तथा जलानाम् = सलिलानाम्, वायूनाम् = पवनानाम्, अग्नीनाञ्च = वह्नीनाञ्च, संयोगैः = सम्मिश्रणैः, निरोधैश्च = अवरोधैश्च, या क्रिया = वाष्पीययन्त्रेण कृत्यसम्पादनमपि कला एवेति॥ ८५॥

**हिन्दी**—हलका, गाढ़ा या सामान्य रंग मिला कर कपड़े रंगने का काम भी कला है तथा आग, पानी और हवा के संयोग और निरोध से वाष्पयंत्र द्वारा काम करना भी कला है॥ ८५॥

**हीनेति**। हीनमध्यादयः अल्पमध्योत्तमाः संयोगाः येषां तैः वर्णाद्यैः रञ्जनं वस्त्रादीनामिति शेषः कला। तथा जलानां वायूनाम् अग्नीनाञ्च संयोगैः निरोधैश्च या क्रिया वाष्पीयन्त्रेण कार्य्यकरणं सा कला॥ ८५॥

**नौकारथादियानानां कृतिज्ञानं कला स्मृता।**
**सूत्रादिरज्जुकरणविज्ञानन्तु कला स्मृता॥ ८६॥**

**अन्वयः**—नौकारथादियानानां कृतिज्ञानं कला स्मृता। सूत्रादिरज्जुकरणविज्ञानं तु कला स्मृता॥ ८६॥

**व्याख्या**—नौकानाम् = तरणीनाम्, रथानाम् = स्यन्दनानाम्, यानादीनाम् = शकटादीनाम्, कृतौ = रचनायाम्, ज्ञानम् = बोधः, कला, स्मृता = कथिता। तथा सूत्रादीनाम् = तन्त्वादीनाम्, रज्जूनाञ्च = दाम्नाञ्च, करणे = निर्माणे, ज्ञानम् = बोधः, कला, स्मृता = कथिता॥ ८६॥

**हिन्दी**—नाव, रथ और सवारी गाड़ी बनाने के ज्ञान को भी कला कहते हैं तथा धागे या वस्तुओं से रस्सी बनाने के ज्ञान को भी कला कहते हैं॥ ८६॥

**नौकेति**। नौकानां रथानां यानादीनां शकटादीनाञ्च कृतौ निर्माणे ज्ञानं कला स्मृता। तथा सूत्रादीनां रज्जूनाञ्च करणे विज्ञानं विशेषेण ज्ञानं कला स्मृता॥ ८६॥

**अनेकतन्तुसंयोगैः पटबन्धः कला स्मृता।**
**वेधादिसदसज्ज्ञानं रत्नानाञ्च कला स्मृता॥ ८७॥**

**अन्वयः**—अनेकतन्तुसंयोगैः पटबन्धः कला स्मृता। रत्नानाञ्च वेधादिसदसज्ज्ञानं कला स्मृता॥ ८७॥

**व्याख्या**—अनेकेषाम् = विविधानाम्, तन्तूनाम् = सूत्राणाम्, संयोगैः = सम्मिश्रणैः, पटबन्धः —पटानाम् = वस्त्राणाम्, बन्धः = वयनमपि, कला, स्मृता = ख्यातेति। रत्नानाम् = मणीनाम्, वेधादिषु = छिद्रादिषु, सदसज्ज्ञानम् = उत्कृष्टापकृष्टत्वबोधः, कला, स्मृता = कथिता॥ ८७॥

**हिन्दी**—अनेक रंग के धागों को मिलाकर कपड़ा बुनना भी एक कला है। रत्नों में छेद करना तथा उसके अच्छे और बुरे की जानकारी भी कला ही है॥ ८७॥

**अनेकेति**। अनेकेषां तन्तूनां सूत्राणां संयोगैः पटबन्धः वस्त्रवयनं कला स्मृता। तथा रत्नानां वेधादिषु छिद्रादिषु सदसज्ज्ञानम् उत्कर्षापकर्षज्ञानं कला स्मृता॥८७॥

**स्वर्णादीनान्तु याथात्म्यविज्ञानञ्च कला स्मृता।**
**कृत्रिमस्वर्णरत्नादिक्रियाज्ञानं कला स्मृता॥८८॥**

**अन्वयः**—स्वर्णादीनां याथात्म्यविज्ञानं कला स्मृता। कृत्रिमस्वर्णरत्नादिक्रियाज्ञानं कला स्मृता॥८८॥

**व्याख्या**—स्वर्णादीनाम् = कनकप्रभृतीनाम्, याथात्म्यस्य = यथार्थस्वरूपस्य, विज्ञानम् = विशिष्टज्ञानम्, कला, स्मृता = कथिता। तथा कृत्रिमाणाम् = अनैसर्गिकानाम्, स्वर्णरत्नादीनाम् = सुवर्णमाणिक्यादीनाम्, क्रियाज्ञानम् = रचनाकौशलम्, कला, स्मृता = कथिता॥८८॥

**हिन्दी**—सुवर्णादि धातुओं की परख भी कला है। नकली सोना और रत्न भी बनाना एक कला है॥८८॥

**स्वर्णादीनामिति**। स्वर्णादीनां याथात्म्यस्य यथास्वरूपस्य विज्ञानं विशेषेण ज्ञानं कला स्मृता। तथा कृत्रिमाणां स्वर्णरत्नादीनां क्रियाज्ञानं करणविज्ञानं कला स्मृता॥८८॥

**स्वर्णाद्यलङ्कारकृतिः कला लेपादिसत्कृतिः।**
**मार्दवादिक्रियाज्ञानं चर्मणान्तु कला स्मृता॥८९॥**

**अन्वयः**—स्वर्णाद्यलङ्कारकृतिः लेपादिसत्कृतिः कला। चर्मणां मार्दवादिक्रियाज्ञानं कला स्मृता॥८९॥

**व्याख्या**—स्वर्णादीनाम् = सुवर्णप्रभृतीनां धातूनाम्, अलङ्कारकृतिः = आभूषणनिर्माणम्, लेपादिसत्कृतिः = तदुपरिप्रलेपनकृत्यम्, कला। चर्मणाम् = अजिनानाम्, मार्दवादीनाम् = कोमलीकरणादीनाम्, क्रिया = कृतिः (The art of converting row ride in to Leather or weather tannig), ज्ञानम् = बोधः, कला, स्मृता = कथिता॥८९॥

**हिन्दी**—सोने-चाँदी के जेवर बनाना उन पर सोने का पानी चढ़ाना भी कला है। चमड़े को सिझाकर कोमल बनाना (Leather Tanning) भी एक कला है॥८९॥

**स्वर्णेति**। स्वर्णादीनाम् अलङ्कारकृतिः अलङ्कारनिर्माणं लेपादिसत्कृतिः प्रलेपाद्यनुष्ठानञ्च कला। चर्मणां मार्दवादीनां क्रियायां ज्ञानं कला स्मृता॥८९॥

**पशुचर्माङ्गनिर्हारक्रियाज्ञानं कला स्मृता।**
**दुग्धदोहादिविज्ञानं घृतान्तन्तु कला स्मृता॥९०॥**

**अन्वयः**—पशुचर्मणाम् अङ्गेभ्यः निर्हारस्य क्रियायां ज्ञानं कला। दुग्धदोहादीनां घृतान्तं विज्ञानं कला स्मृता॥९०॥

**व्याख्या**—पशुचर्मणाम् = अजिनानाम्, अङ्गेभ्यः = पशुशरीरावयवेभ्यः, निर्हारस्य = निष्कासनस्य, क्रियायाम् = कृतौ, ज्ञानम् = बोधः, कला, स्मृता = कथिता। दुग्धदोहादीनाम् = गवादिदुग्धदोहनादीनाम्, घृतान्तम् = दुग्धात् घृतनिष्कासनपर्यन्तम्, विज्ञानम् = विशिष्टज्ञानम्, कला, स्मृता = कथितेति॥९०॥

**हिन्दी**—पशु की देह से चमड़ी उतारने की रीति को भी कला कहते हैं। दूध दुहने से घी निकालने तक की क्रिया भी एक कला ही है ॥९० ॥

**पश्विति**। पशुचर्मणाम् अङ्गेभ्यः पशूनामिति भावः, निर्हारस्य निष्कासनस्य क्रियायां ज्ञानं कला स्मृता। दुग्धदोहादीनां पशुदोहनादीनां घृतान्तं घृतसम्पादनपर्य्यन्तं विज्ञानं कला स्मृता ॥९० ॥

**सीवने कञ्चुकादीनां विज्ञानन्तु कलात्मकम्।**
**बाह्वादिभिश्च तरणं कलासंज्ञं जले स्मृतम् ॥ ९१ ॥**

**अन्वयः**—कञ्चुकादीनां सीवने विज्ञानं कलात्मकं जले बाह्वादिभिः तरणं कलासंज्ञं स्मृतम् ॥ ९१ ॥

**व्याख्या**—कञ्चुकादीनाम् = लम्बाङ्गिकादीनाम्, सीवने = सूचीकर्मणि, विज्ञानम् = विशिष्ट-ज्ञानम्, कलात्मकम् = कलासंज्ञकम्, तथा, जने = सलिले, बाह्वादिभिः = दोर्दण्डादिभिः, तरणम् = सन्तरणम्, कलासंज्ञम् = कलानाम, इति, स्मृतम् = कथितम् ॥९१ ॥

**हिन्दी**—पहनावे के वस्त्र सीना भी कला है और पानी में बाँहों के सहारे तैरना भी कला है ॥९१ ॥

**सीवने इति**। कञ्चुकादीनां गात्राच्छादनीभूतानां सीवने स्यूतीकरणे विज्ञानं कलात्मकं कलेति प्रसिद्धम्। बाह्वादिभिश्च जले बाहुप्रभृतिभिः तरणं सन्तरणं कलासंज्ञं स्मृतम् ॥ ९१ ॥

**मार्जने गृहभाण्डादेर्विज्ञानन्तु कला स्मृता।**
**वस्त्रसम्मार्जनञ्चैव क्षुरकर्म कले ह्युभे ॥ ९२ ॥**

**अन्वयः**—गृहभाण्डादेः मार्जने विज्ञानं तु कला स्मृता। वस्त्रसम्मार्जनं क्षुरकर्म च उभे हि कले ॥९२ ॥

**व्याख्या**—गृहाणाम् = सदनानाम्, भाण्डादेः = प्रयुक्तपात्रादेः, मार्जने = परिष्करणे, यद्विज्ञानम् = विशिष्टज्ञानम् तु, कला, स्मृता = कथिता। वस्त्रसम्मार्जनम् = वसनादिप्रक्षालनम्, तथा, क्षुरकर्म = केशकर्त्तनादिकम्, च एते, उभे = द्वे, हीति निश्चयेन, कलेति बोध्यम् ॥९२ ॥

**हिन्दी**—धातु-निर्मित घरेलू बरतन-बासन की सफाई कला है। वस्त्रों की सफाई और बाल बनाने की क्रिया—ये दोनों कला हैं ॥९२ ॥

**मार्जने इति**। गृहभाण्डादेः गृहतैजसपात्रादेः मार्जने शोधने विज्ञानं कला स्मृता। वस्त्राणां सम्मार्जनं सम्यक् शोधनं तथा क्षुरकर्म्म एते उभे कले ॥९२ ॥

**तिलमांसादिस्नेहानां कला निष्कासने कृतिः।**
**सीराद्याकर्षणे ज्ञानं वृक्षाद्यारोहणे कला ॥ ९३ ॥**

**अन्वयः**—तिलमांसादिस्नेहानां निष्कासने कृतिः सीराद्याकर्षणे ज्ञानं वृक्षाद्यारोहणे कला ॥९३ ॥

**व्याख्या**—तिलानाम् = जटुलानाम्, मांसादीनाम् = पिशितादीनाम्, च ये स्नेहाः = तैलानि, तेषाम्, निष्कासने = बहिष्करणे, या कृतिः = क्रिया, सापि कला। किञ्च सीरादीनाम् = गोदारणादीनाम्, आकर्षणे = आलेखने, वृक्षादीनाम् = तरूणाम्, आरोहणे = उपरिगमने, यत् ज्ञानम् = बोधः, सा कलेति ॥९३ ॥

**हिन्दी**—तिल और मांस से तेल निकालने की क्रिया भी कला है। हल चलाना और पेड़ पर चढना भी एक कला है ॥९३ ॥

**तिलेति**। तिलानां मांसादीनाञ्च ये स्नेहाः तैलानि, तेषां निष्कासने बहिष्करणे कृतिः कला। किञ्च सीरादीनां लाङ्गलादीनाम् आकर्षणे तथा वृक्षादीनाम् आरोहणे ज्ञानं कला ॥९३ ॥

**मनोऽनुकूलसेवायाः कृतिज्ञानं कला स्मृता।**
**वेणुतृणादिपात्राणां कृतिज्ञानं कला स्मृता ॥ ९४ ॥**

**अन्वयः**—मनोऽनुकूलसेवायाः कृतौ ज्ञानं कला स्मृता। तथा वेणुतृणादिपात्राणां कृतिज्ञानं कला स्मृता ॥९४ ॥

**व्याख्या**—मनोऽनुकूलायाः = चित्तानुसारिण्याः, सेवायाः = परिचर्यायाः, कृतौ = निष्पादने, ज्ञानम् = बोधः, कलेति। तथा वेणूनाम् = वंशानाम्, तृणादीनाञ्च = घासादीनाञ्च, यानि पात्राणि तेषां कृतौ = करणे, ज्ञानम्, कला स्मृता = कथिता ॥९४ ॥

**हिन्दी**—मनोनुकूल सेवा करने की क्रिया जानना भी कला है। बाँस एवं घास की टोकरी बनाना भी कला ही है ॥९४ ॥

**मन इति**। मनोऽनुकूलायाः चित्तानुसारिण्याः सेवायाः परिचर्य्यायाः कृतौ अनुष्ठाने ज्ञानं कला स्मृता। तथा वेणूनां वंशानां तृणादीनाञ्च यानि पात्राणि तेषां कृतौ करणे ज्ञानं कला स्मृता ॥९४ ॥

**काचपात्रादिकरणविज्ञानन्तु कला स्मृता।**
**संसेचनं संहरणं जलानां तु कला स्मृता ॥ ९५ ॥**

**अन्वयः**—काचपात्रादीनां करणे विज्ञानं कला स्मृता। तथा जलानां संसेचनं संहरणं कला स्मृता ॥९५ ॥

**व्याख्या**—काचपात्रादीनां = स्फटिकभाजनादीनां, करणे = निर्माणे, विज्ञानम् = विशिष्ट-ज्ञानम्, कला स्मृता = कथिता। तथा जलानाम् = सलिलानाम्, संसेचनम् = सम्यगभ्युक्षणम्, संहरणम् = सङ्कोचनम्, 'कला' स्मृता = कथिता ॥९५ ॥

**हिन्दी**—सीसे के बरतन बनाने की क्रिया भी कला है। पानी से सिंचाई करना, उसे रोकना या निकालना भी कला ही है ॥९५ ॥

**काचेति**। काचपात्रादीनां करणे विज्ञानं कला स्मृता। तथा जलानां संसेचनं सम्यक् सेचनं संहरणञ्च कला स्मृता ॥९५ ॥

**लोहाभिसारशस्त्रास्त्रकृतिज्ञानं कला स्मृता।**
**गजाश्ववृषभोष्ट्राणां पल्याणादिक्रिया कला ॥ ९६ ॥**

**अन्वयः**—लोहाभिसारशस्त्रास्त्रकृतिज्ञानं कला। गजाश्ववृषभोष्ट्राणां पल्याणादिक्रिया कला ॥९६ ॥

**व्याख्या**—लोहाः = अयस्काः, अभिसाराः = उपादानानि, येषां तादृशानाम्, शस्त्राणाम् = आयुधानाम्, अस्त्राणाम् = प्रहरणानाम्, कृतौ = करणे, ज्ञानम् = बोधः, कला, स्मृता = कथिता। तथा गजानाम् = हस्तिनाम्, अश्वानाम् = हयानाम्, वृषभानाम् = बलीवर्दाणाम्, उष्ट्राणाम् = दीर्घ-वक्रग्रीवानाम्, पल्याणादीनाम् = पृष्ठास्तरणविशेषाणाम्, क्रिया = कृतिः, च कलेति ॥९६ ॥

**हिन्दी**—लोहे के हथियार बनाने की क्रिया भी कला है। हाथी, घोड़े, बैल और ऊँटों के पीठ पर रखने की गद्दी बनाना भी कला ही है॥९६॥

**लोहेति**। लोहाः अभिसाराः उपादानानि येषां तादृशानां शस्त्राणाम् अस्त्राणाञ्च कृतौ ज्ञानं कला स्मृता। तथा गजानाम् अश्वानां वृषभाणाम् उष्ट्राणाञ्च पल्याणादीनां पृष्ठास्तरणविशेषाणां क्रिया अनुष्ठानं कला॥९६॥

**शिशोः संरक्षणे ज्ञानं धारणे क्रीडने कला।**
**सुयुक्तताडनज्ञानमपराधिजने कला॥९७॥**

**अन्वयः**—शिशोः संरक्षणे क्रीडने च ज्ञानं कला। तथा अपराधिजने सुयुक्तताडनज्ञानं कला॥९७॥

**व्याख्या**—शिशोः = बालकस्य, संरक्षणे = रक्षाकरणे, क्रीडने = खेलने च, यत् ज्ञानम् = बोधः, सोऽपि कला, तथा अपराधिजने = दोषीजने, सुयुक्तम् = यथोपयुक्तम्, ताडनम् = हननं, तस्योचितं ज्ञानम् = बोधः, अपि कला भवति॥९७॥

**हिन्दी**—बच्चों का पालन, गोद लेना या खेलाना भी एक कला है। अपराधियों की सही ढंग से पीटाई की जानकारी भी कला है॥९७॥

**शिशोरिति**। शिशोः बालकस्य संरक्षणे क्रीडने च ज्ञानं कला। तथा अपराधिजने सुयुक्तं यथोपयुक्तं यत् ताडनं दण्डनं तस्य ज्ञानं कला॥९७॥

**नानादेशीयवर्णानां सुसम्यग् लेखने कला।**
**ताम्बूलरक्षादिकृतिविज्ञानन्तु कला स्मृता॥९८॥**

**अन्वयः**—नानादेशीयवर्णानां सुसम्यग् लेखने कला। तथा ताम्बूलरक्षादिकृतिविज्ञानं कला स्मृता॥९८॥

**व्याख्या**—नानादेशीयानाम् = विविधजनपदीयानाम्, वर्णानाम् = अक्षराणाम्, सुसम्यक् = सुष्ठुतया, लेखनम् = अङ्कनम्, कला भवति। तथा ताम्बूलानाम् = नागवल्लीदलानाम्, रक्षादौ = संरक्षणे, या कृतिः = क्रिया, तस्य विज्ञानम् = विशिष्टज्ञानम्, कला स्मृता = कथितेति॥९८॥

**हिन्दी**—अनेक देश की लिपि को सुन्दर ढंग से लिख लेना भी कला है। पान फेरने की क्रिया का ज्ञान भी कला है॥९८॥

**नानेति**। नानादेशीयानां वर्णानाम् अक्षराणां सुसम्यक् लेखनं कला। तथा ताम्बूलानां रक्षादौ या कृतिः तस्या विज्ञानं कला स्मृता॥९८॥

**आदानमाशुकारित्वं प्रतिदानं चिरक्रिया।**
**कलासु द्वौ गुणौ ज्ञेयौ द्वे कले परिकीर्त्तिते॥९९॥**

**अन्वयः**—कलासु आशुकारित्वम् आदानं, चिरक्रिया प्रतिदानं द्वौ गुणौ ज्ञेयौ, द्वे कले परिकीर्त्तिते॥९९॥

**व्याख्या**—कलासु = पूर्वोक्तासु विविधासु कलासु, आशुकारित्वं = शीघ्रकारित्वम्, आदानम् = स्वीकरणम्, चिरक्रिया = विलम्बेन कार्यकारित्वम्, प्रतिदानम् = प्रत्यर्पणम्, कलासु एतौ द्वौ, गुणौ = धर्मौ, ज्ञेयौ = ज्ञातव्यौ, तस्मात् द्वे = उभे, कले, परिकीर्त्तिते = कथिते॥९९॥

**हिन्दी**—कला-सम्पादन में शीघ्रता 'आदान' कहलाता है और 'विलम्ब' प्रतिदान कहलाता है। अथवा किसी के ग्रहण करने में शीघ्रता तथा देने में विलम्ब करना यद्यपि ये दोनों गुण हैं तथापि भिन्न-भिन्न दो कलाएँ मानी जाती हैं॥९९॥

**आदानमिति**। कलासु आशुकारित्वम् आदानं, चिरक्रिया प्रतिदानम्। कलासु एतौ द्वौ गुणौ ज्ञेयौ, तस्मात् द्वे कले परिकीर्त्तिते॥९९॥

> चतुःषष्टिकला ह्येताः सङ्क्षेपेण निदर्शिताः।
> यां यां कलां समाश्रित्य निपुणो यो हि मानवः।
> नैपुण्यकरणे सम्यक् तां तां कुर्य्यात् स एव हि॥१००॥

**इति शुक्रनीतौ चतुर्थाध्यायस्य राष्ट्रे आद्यं विद्याकलानिरूपणं नाम तृतीयं प्रकरणम्।**

---

**अन्वयः**—एताः चतुःषष्टिकलाः सङ्क्षेपेण निदर्शिताः। यः मानवः यां यां कलां समाश्रित्य निपुणः हि स एव हि सम्यक् नैपुण्यकरणे तां तां कुर्यात्॥१००॥

**व्याख्या**—एताः = पूर्वोक्ताः, चतुःषष्टिः = चतुरधिकषष्टिः, कलाः = शिल्पविद्याः, सङ्क्षेपेण = समासेन, निदर्शिताः = कथिताः। यो मानवः = यो हि पुरुषः, यां यां कलाम् = यां यां शिल्पविद्याम्, आश्रित्य = अवलम्ब्य, निपुणः = कुशलः, हि = निश्चितम्, सः = असौ, एव हि सम्यक् = सुष्ठुतया, नैपुण्यकरणे = कुशलताप्राप्त्यर्थम्, तां तां कलाम् = शिल्पविद्याम्, कुर्यात् = सर्वथा अभ्यसेत्॥१००॥

**हिन्दी**—संक्षेप में चौसठ कलाएँ कही गई हैं। इनमें जिन कलाओं का आश्रय लेकर मनुष्य निपुणता प्राप्त करता है, उसे उन्हीं कलाओं का सदा अभ्यास कर उनमें दक्षता प्राप्त करनी चाहिए॥१००॥

**इस प्रकार शुक्रनीति में चतुर्थ अध्याय में 'विद्याकलानिरूपण' नामक तृतीय प्रकरण की 'विमला' संस्कृत-हिन्दी व्याख्या समाप्त हुई।**

---

**चतुरिति**। एताः चतुःषष्टिः कलाः सङ्क्षेपेण निदर्शिताः। यः मानवः यां यां कलां समाश्रित्य निपुणः हि निश्चितं स एव हि सम्यक् सर्वथा नैपुण्यकरणे सुष्ठुकरणे तां तां कलां कुर्य्यात्॥१००॥

**इति श्रीजीवानन्दविद्यासागरविरचिता चतुर्थाध्यायस्य तृतीयप्रकरणव्याख्या समाप्ता।**

---

# चतुर्थाध्यायस्य चतुर्थं प्रकरणम्

**ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिः क्रमात्।**
**चत्वार आश्रमश्चैते ब्राह्मणस्य सदैव हि।**
**अन्येषामन्त्यहीनाश्च क्षत्रविट्शूद्रकर्मणाम्॥ १॥**

**अन्वयः**—ब्रह्मचारी, गृहस्थः, वानप्रस्थः तथा यतिः एते चत्वारः आश्रमाः ब्राह्मणस्य सदैव हि। अन्येषां क्षत्रविट्शूद्रकर्मणाञ्च अन्त्येन हीनाः वेदितव्याः॥ १॥

**व्याख्या**—ब्रह्मचारी = प्रथमाश्रमिन् व्रतिंश्च, गृहस्थः = ज्येष्ठाश्रमिन् गृहमेधिश्च, वानप्रस्थः = तृतीयाश्रमः, तथा यतिः = चतुर्थाश्रमी वा संन्यासिन्, एते = पूर्वोक्ताः चत्वारः आश्रमाः, मनुष्यायुषः चत्वारो विभागास्तद्यथा- ब्रह्मचर्यगृहस्थवानप्रस्थसंन्यासाश्रमाः, ब्राह्मणस्य = विप्रस्य, सदैव = सर्वदैव, हिशब्दोऽत्र पादपूर्त्यर्थमेव। अन्येषाम् = ब्राह्मणेतराणाम्, क्षत्रियाणाम् = राजन्यानाम्, विशाम् = वणिजाम्, शूद्राणाञ्च = वृषलाणाञ्च, अन्त्येन = संन्यासाश्रमेण, हीनाः = रहिताः, आश्रमाः वेदितव्या इति॥ १॥

**हिन्दी**—बह्मचर्य, गृहस्थ, वानप्रस्थ एवं संन्यास—ये चारों आश्रम सदैव क्रमशः ब्राह्मणों के लिए होते हैं। इनमें अन्तिम संन्यास को छोड़कर शेष तीन आश्रम ब्राह्मणेतर क्षत्रिय, वैश्य एवं शूद्रों के लिए भी होते हैं॥ १॥

**ब्रह्मचारीति**। ब्रह्मचारी, गृहस्थः, वानप्रस्थः तथा यतिः, एते चत्वारः आश्रमाः ब्राह्मणस्य सदैव, हिशब्दः पादपूरणार्थः। अन्येषां क्षत्रियाणां विशां शूद्राणाञ्च अन्त्येन यत्याश्रमेण हीनाः त्रयः ब्रह्मचर्य्यादयः आश्रमाः वेदितव्या इति शेषः॥ १॥

**विद्यार्थं ब्रह्मचारी स्यात् सर्वेषां पालने गृही।**
**वानप्रस्थः सन्दमने संन्यासी मोक्षसाधने॥ २॥**

**अन्वयः**—विद्यार्थं ब्रह्मचारी, सर्वेषां पालने गृही, सन्दमने वानप्रस्थः, मोक्षसाधने संन्यासी स्यात्॥ २॥

**व्याख्या**—विद्यार्थम् = ज्ञानोपार्जनाय, ब्रह्मचारी = व्रती, सर्वेषाम् = सकलानां जनानाम्, पालने = भरणपोषणार्थम्, गृही = गृहस्थः, सन्दमने = इन्द्रियनिग्रहार्थम्, वानप्रस्थः = वैखानसः, मोक्षसाधने = मुक्तिलाभाय, संन्यासी = परिव्राजकः, स्यात् = भवेत्॥ २॥

**हिन्दी**—विद्याध्ययन के लिए ब्रह्मचारी, सबों के भरण-पोषण हेतु गृहस्थ, आत्मसंयम एवं इन्द्रियदमन के लिए वानप्रस्थ तथा मुक्ति के लिए संन्यासी बनना चाहिए॥ २॥

**विद्यार्थमिति**। विद्यार्थं विद्योपार्जनार्थं ब्रह्मचारी, सर्वेषां पालने पालनार्थमित्यर्थः गृही, सन्दमने सम्यक् इन्द्रियदमनार्थं वानप्रस्थः, तथा मोक्षसाधने मुक्तिलाभार्थं संन्यासी स्यात्॥ २॥

**वर्त्तयन्त्यन्यथा दण्ड्या या वर्णाश्रमजातयः ॥ ३ ॥**

**अन्वयः**—याः वर्णाश्रमजातयः अन्यथा वर्त्तयन्ति ताः दण्ड्याः ॥ ३ ॥

**व्याख्या**—याः = ये जनाः, वर्णानाम् = ब्राह्मणादीनाम्, आश्रमाणाम् = ब्रह्मचर्याद्याश्रमाणाम्, जातयः = जनसमूहाः, अन्यथा = इतरथा, वर्त्तयन्ति = व्यवहरन्ति, ताः = जातयः, दण्ड्याः = दण्डनीया नृपेणेति शेषः ॥ ३ ॥

**हिन्दी**—जो लोग जिस वर्ण या आश्रम के हैं, यदि उस वर्ण या आश्रमीय धर्म के विरुद्ध आचरण करते हैं तो वे दण्डनीय होते हैं ॥ ३ ॥

**वर्त्तयन्तीति**। याः वर्णानां ब्राह्मणादीनाम् आश्रमाणाञ्च जातयः अन्यथा अन्येन प्रकारेण शास्त्रबाह्यमार्गेणेत्यर्थः, वर्त्तयन्ति ताः दण्ड्याः राज्ञेति शेषः ॥ ३ ॥

**कुलान्यकुलतां यान्ति ह्यकुलानि कुलीनताम्।**
**यदि राज्ञोपेक्षितानि दण्डतोऽशिक्षितानि च ॥ ४ ॥**

**अन्वयः**—यदि राज्ञा उपेक्षितानि च दण्डतः अशिक्षितानि कुलानि अकुलताम् अकुलानि कुलीनतां यान्ति ॥ ४ ॥

**व्याख्या**—यदि = चेत्, राज्ञा = नृपेण, उपेक्षितानि = अवहेलितानि, च = पुनः, दण्डतः = दण्डेन, अशिक्षितानि = शिक्षारहितानि, तदा कुलानि = समुन्नतवंशाः, अकुलताम् = अकुलीनत्वम्, अकुलानि = कुलहीनानि, कुलीनताम् = उच्चकुलत्वम्, यान्ति = प्राप्नुवन्ति। एवं सति सर्वे नैजं कौलाचारं विहाय स्वेच्छाचारिणो भवन्ति ॥ ४ ॥

**हिन्दी**—यदि राजा उपेक्षा करे, दण्डस्वरूप अशिक्षित रखे तो अभिजात अनभिजात एवं अकुलीन कुलीन बन जायेंगे; समाज उच्छृंखल एवं स्वेच्छाचारी बन जायेगा ॥ ४ ॥

**कुलानीति**। यदि राज्ञा उपेक्षितानि तथा दण्डतः दण्डेन अशिक्षितानि, तदा कुलानि अकुलतां तथा अकुलानि कुलीनतां यान्ति प्राप्नुवन्ति सर्वे यथेच्छचारिणो भवन्तीत्यर्थः ॥ ४ ॥

**जपं तपस्तीर्थसेवां प्रव्रज्यां मन्त्रसाधनम्।**
**देवपूजां नैव कुर्य्यात् स्त्रीशूद्रस्तु पतिं विना।**
**न विद्यते पृथक् स्त्रीणां त्रिवर्गविधिसाधनम् ॥ ५ ॥**

**अन्वयः**—स्त्रीशूद्रस्तु जपं तपः तीर्थसेवां प्रव्रज्यां मन्त्रसाधनं देवपूजां नैव कुर्यात्। स्त्रीणां पतिं विना पृथक् त्रिवर्गाणां साधनं न विद्यते ॥ ५ ॥

**व्याख्या**—स्त्री = नारी, च = पुनः, शूद्रः = वृषलः, जपम् = मुहुर्मुहुर्मन्त्रजपनम्, तपः = नियमस्थितिः, तीर्थसेवाम् = पुण्यक्षेत्रे भ्रमणम्, प्रव्रज्याम् = वैराग्यम्, मन्त्रसाधनम् = अभिचारानुष्ठानम्, देवपूजां = देवताऽऽराधनम्, नैव = नास्त्येव, कुर्यात् = विधेयात्। स्त्रीणाम् = नारीणाम्, पतिम् = पतिसेवाम्, विना = विहाय, पृथक् = अन्यत्, त्रिवर्गाणाम् = धर्मार्थकामानाम्, साधनम् = अनुष्ठानम्, न = नहि, विद्यते = अस्ति ॥ ५ ॥

**हिन्दी**—स्त्री तथा शूद्र को स्वामी की सेवा छोड़कर जप, तप, तीर्थाटन, मंत्रसाधन, संन्यास एवं देवपूजा नहीं करनी चाहिए। स्त्रियों के लिए पति की सेवा छोड़कर अन्य कोई धर्म, अर्थ और काम की सिद्धि के लिए साधन नहीं है ॥ ५ ॥

**जपमिति।** तुशब्दश्चार्थः। स्त्री शूद्रस्तु शूद्रश्च जपं तपः तपस्यां तीर्थसेवां प्रव्रज्यां संन्यासं मन्त्रसाधनं तथा देवपूजां नैव कुर्य्यात्। किञ्च स्त्रीणां पतिं पतिसेवां विना पृथक् अन्यत् त्रिवर्गाणां धर्मार्थकामानां साधनं न विद्यते ॥ ५ ॥

**पत्युः पूर्वं समुत्थाय देहशुद्धिं विधाय च।**
**उत्थाप्य शयनीयानि कृत्वा वेश्मविशोधनम् ॥ ६ ॥**
**मार्जनैर्लेपनैः प्राप्य सानलं यवसाङ्गणम्।**
**शोधयेद् यज्ञपात्राणि स्निग्धान्युष्णेन वारिणा ॥ ७ ॥**
**प्रोक्षणीयानि तान्येव यथास्थाने प्रकल्पयेत्।**
**शोषयित्वा तु पात्राणि पूरयित्वा तु धारयेत् ॥ ८ ॥**

**अन्वयः**—स्त्री पत्युः पूर्वं समुत्थाय देहशुद्धिं विधाय शयनीयानि उत्थाप्य मार्जनैः लेपनैश्च वेश्मविशोधनं कृत्वा सानलं यवसाङ्गणं प्राप्य यज्ञपात्राणि शोधयेत्। तानि च स्निग्धानि उष्णेन वारिणा प्रोक्षणीयानि यथास्थाने प्रकल्पयेत्। तानि शोषयित्वा पात्राणि पूरयित्वा तु धारयेत् ॥ ६-८ ॥

**व्याख्या**—स्त्री = पत्नी, पत्युः = भर्त्तुः, पूर्वम् = प्रथमम्, समुत्थाय = सुसज्जीभूत्वा, देहशुद्धिम् = मूत्रपुरीषोत्सर्गं मुखप्रक्षालनादिकञ्च, विधाय = कृत्वा, शयनीयानि = शय्योपकरणानि, उत्थाप्य = उन्नयनं कृत्वा, मार्जनैः = प्रक्षालनैः, लेपनैः = उपनाहनैश्च, वेश्मनः = गेहस्य, विशोधनम् = परिष्करणम्, कृत्वा = सम्पाद्य, तथा सानलम् = वह्निसमायुक्तम्, यवसाङ्गणम् = तृणाच्छादितचत्वरम्, प्राप्य = गत्वा, यज्ञपात्राणि = यागभाजनानि, शोधयेत् = परिष्कुर्यात्। तानि च = यज्ञपात्राणि च, स्निग्धानि = घृततैलयुक्तानि, पुनः, उष्णेन = तप्तेन, वारिणा = जलेन, प्रोक्षणीयानि कृत्वा = निर्धर्षणं विधाय, यथास्थाने = यथोचितस्थले, प्रकल्पयेत् = स्थापयेत्। किञ्च तानि = यज्ञपात्राणि, शोषयित्वा = शुष्कतां विधाय, पुनः, पूरयित्वा = घृतादीनां पूर्णं कृत्वा, धारयेत् = विहितस्थाने स्थापयेत् ॥ ६-८ ॥

**हिन्दी**—पत्नी को पति से पहले बिछावन छोड़ देना चाहिए। नित्यक्रिया से निवृत्त होकर बिस्तर उठा देना चाहिए। फिर जिस घर में रहे उसकी सफाई करनी चाहिए। फिर उस आँगन की सफाई करनी चाहिए, जिसमें आग जल रही हो और घास-फूस बिखरे हों। फिर घी से चिकने बने यज्ञपात्रों को गर्म पानी से धो-पोंछ कर, सुखाकर उन्हें यथास्थान रख दे। रखने के पूर्व उन पात्रों को घी तथा यज्ञ के अन्य उपकरणों से भर दे ॥ ६-८ ॥

**पत्युरिति। मार्जनैरिति। प्रोक्षणीयानीति।** स्त्रीति प्रकरणादध्याहार्य्यम्। स्त्री पत्युः स्वामिनः पूर्वं समुत्थाय शय्याया इति शेषः, देहशुद्धिं मुखप्रक्षालनादिकं विधाय कृत्वा, शयनीयानि शय्याः उत्थाप्य, मार्जनैः लेपनैश्च वेश्मनः गृहस्य विशोधनं कृत्वा तथा सानलम् अग्नियुक्तं यवसाङ्गणं घाससहितचत्वरभूमिं प्राप्य यज्ञपात्राणि शोधयेत्। तानि च स्निग्धानि तैलयुक्तानि पुनः उष्णेन वारिणा प्रोक्षणीयानि कृत्वा यथास्थाने प्रकल्पयेत् स्थापयेत्। किञ्च तानि पात्राणि शोषयित्वा शुष्कीकृत्य पुनः पूरयित्वा धारयेत् यथास्थानं रक्षेत् ॥ ६-८ ॥

**महानसस्य पात्राणि बहिः प्रक्ष्याल्य सर्वशः ।**
**मृद्भिस्तु शोधयेच्चुल्ली तत्राग्निं सेन्धनं न्यसेत् ॥ ९ ॥**

**अन्वयः**—महानसस्य सर्वशः पात्राणि बहिः प्रक्षाल्य मृद्भिः चुल्लीं शोधयेत्। तत्र सेन्धनम् अग्निं न्यसेत् ॥ ९ ॥

**व्याख्या**—महानसस्य = पाकशालायाः, सर्वशः = सकलानि, पात्राणि = भाजनानि, बहिः = बाह्यप्रदेशे, प्रक्षाल्य = परिमार्ज्य, मृद्भिः = मृत्तिकाभिः, चुल्लीम् = अदिकाम्, शोधयेत् = संशुद्धिं कुर्यात्। तत्र = तस्मिन् गृहे, सेन्धनम् = ईन्धनसहितम्, अग्निम् = वह्निम्, न्यसेत् = स्थापयेत् ॥ ९ ॥

**हिन्दी**—इसके बाद रसोईघर के बरतनों को बाहर निकाल कर चारों तरफ से माँज-धोकर तथा मिट्टी से चुल्हा एवं रसोईघर लीप-पोतकर वहाँ पर आग और जलावन रख दे।।९ ॥

**महानसस्येति**। महानसस्य रन्धनागारस्य सर्वशः सर्वाणि पात्राणि बहिः बाह्यदेशे प्रक्षाल्य मृद्भिः मृत्तिकाभिः चुल्लीं शोधयेत्। ततः तत्र चुल्ल्या सेन्धनं काष्ठसहितम् अग्निं न्यसेत् ॥ ९ ॥

**स्मृत्वा नियोगपात्राणि रसान्नद्रविणानि च।**
**कृतपूर्वाह्णकृत्येयं श्वशुरावभिवादयेत् ॥ १० ॥**

**अन्वयः**—कृतपूर्वाह्णकृत्या इयं नियोगपात्राणि रसान्नद्रविणानि च स्मृत्वा श्वशुरौ अभिवादयेत् ॥ १० ॥

**व्याख्या**—अनया रीत्या, कृतपूर्वाह्णकृत्या = त्रिधाविभक्तदिवसस्य प्रथमभागस्य निष्पादितकृत्या, इयम् = एषा नारी, नियोगपात्राणि = व्यावहारिकभाण्डानि, रसान् = आस्वाद्यवस्तूनि, अन्नानि = भक्ष्यपदार्थाः, द्रविणानि = धनानि च, स्मृत्वा = एतेषामनुचिन्तनं कृत्वा, श्वशुरौ = श्वश्रूं श्वशुरश्च, अभिवादयेत् = प्रणमेत् ॥ १० ॥

**हिन्दी**—उस दिन काम में आने वाले बरतनों, रसों, अन्न तथा धन का ख्याल करके ही उसकी व्यवस्था करे। इस तरह दिन के पहले भाग के काम समाप्त कर स्त्री अपने सास-श्वशुर के पास पहुँच कर उन्हें प्रणाम करे ॥ १० ॥

**स्मृत्वेति**। इत्थं कृतपूर्वाह्णकृत्या सम्पादितप्रातःकृत्या इयं स्त्रीनियोगपात्राणि व्यावहारिकभाजनानि, रसान् पेयद्रव्याणि अन्नानि द्रविणानि धनानि च स्मृत्वा यथायथं कार्य्योपयोगित्वेन चिन्तयित्वा श्वशुरौ श्वश्रूं श्वशुरञ्च अभिवादयेत् प्रणमेत् ॥ १० ॥

**ताभ्यां भर्त्रा पितृभ्यां वा भ्रातृमातुलबान्धवैः।**
**वस्त्रालङ्काररत्नानि प्रदत्तान्येव धारयेत् ॥ ११ ॥**

**अन्वयः**—ताभ्यां भर्त्रा पितृभ्यां वा भ्रातृमातुलबान्धवैः प्रदत्तानि वस्त्रालङ्काररत्नानि धारयेत् ॥ ११ ॥

**व्याख्या**—ताभ्याम् = श्वश्रु-श्वशुराभ्याम्, भर्त्रा = पत्या, पितृभ्याम् = मात्रा च पित्रा च, वा = अथवा, भ्रातृमातुलबान्धवैः—भ्रातृभिः = सोदरैः, मातुलैः = पितृश्यालैः, बान्धवैश्च = ज्ञातिभिश्च, प्रदत्तानि = अर्पितानि, वस्त्रालङ्काररत्नानि—वस्त्राणि = वासांसि, अलङ्काराणि = आभूषणानि, रत्नानि = माणिक्यानि, च, धारयेत् = धारणङ्कुर्यात् ॥ ११ ॥

**हिन्दी**—वह नारी अपने सास-ससुर, पति, माँ, बाप, भाई, मामा या सगे-सम्बन्धियों द्वारा प्रदत्त कपड़े, जेवर या कीमती रत्न पहनें ॥ ११ ॥

**ताभ्यामिति**। ताभ्यां श्वश्रूश्वशुराभ्यां भर्त्रा स्वामिना पितृभ्यां मातापितृभ्यां भ्रातृमातुलबान्धवैश्च प्रदत्तानि वस्त्राणि अलङ्कारान् रत्नानि च धारयेत् ॥ ११ ॥

**मनोवाक्कर्मभिः शुद्धा पतिदेशानुवर्त्तिनी।**
**छायेवानुगता स्वच्छा सखीव हितकर्मसु।**
**दासीव दिष्टकार्य्येषु भार्य्या भर्त्तुः सदा भवेत्॥ १२॥**

**अन्वयः**—भार्या मनोवाक्कर्मभिः शुद्धा स्वच्छा पतिदेशानुवर्तिनी, भर्तुः छाया इव अनुगता, हितकर्मसु सखी इव सदा दिष्टकार्येषु दासी इव भवेत् ॥ १२ ॥

**व्याख्या**—भार्या = पत्नी, मनसा = चित्तेन, वाचा = कथनेन, कर्मणा = कार्येण, च, शुद्धा = पवित्रा, स्वच्छा = निर्मला, पत्युः = भर्त्तुः, देशानुवर्त्तिनी = आज्ञाकारिणी, भर्त्तुः = पत्युः, छाया = प्रतिकृतिः, इव = यथा, अनुगता = अनुसारिणी, हितकर्मसु = लाभप्रदकृत्येषु, सखी = सहचरी, इव = यथा, सदा = सर्वदा, दिष्टकार्येषु = निर्दिष्टकर्मसु, दासी = किङ्करी, इव = यथा, भवेत् = स्यात् ॥ १२ ॥

**हिन्दी**—मन, वचन और कर्म से पवित्र रहकर पति की आज्ञा के अनुसार चलने वाली, छाया की भाँति अनुगमन करने वाली, लाभप्रद कार्यों में मित्र की तरह सहयोगी बनकर तथा बतलाये गये काम में दासी की तरह सदा स्त्री को पति के निकट रहना चाहिए ॥ १२ ॥

**मन इति**। भार्य्या मनसा वाचा कर्मणा च शुद्धा पवित्रा स्वच्छा निर्मला, पत्युः देशानुवर्त्तिनी आज्ञापरा, भर्त्तुः छाया इव अनुगता सङ्गिनी हितकर्मसु सखी इव सदा दिष्टकार्येषु निर्दिष्टकर्मसु दासी इव भवेत् ॥ १२ ॥

**ततोऽन्नसाधनं कृत्वा पतये विनिवेद्य सा।**
**वैश्वदेवोद्धृतैरन्नैर्भोजनीयांश्च भोजयेत्॥ १३॥**

**अन्वयः**—ततः सा अन्नसाधनं कृत्वा पतये विनिवेद्य वैश्वदेवोद्धृतैः अन्नैः भोजनीयान् भोजयेत् ॥ १३ ॥

**व्याख्या**—ततः = पाकसम्पादनानन्तरम्, सा = नारी, अन्नसाधनम् = रन्धनम्, कृत्वा = सम्पाद्य, पतये = भर्त्रे, विनिवेद्य = विशेषरूपेण भोजयित्वा, वैश्वदेवोद्धृतैः = बलिवैश्वदेवेभ्यः, उद्धृतैः = अवशिष्टैः, अन्नैः = पक्वान्नैः, भोजनीयान् = श्वशुरादीनन्यजनान्, भोजयेत् = भोजनं दद्यात् ॥ १३ ॥

**हिन्दी**—इसके बाद वह नारी भोजन बनाकर पति के सामने रखकर बलिवैश्वदेव से बचे अन्न से भोजन करने योग्य व्यक्ति को भोजन कराये ॥ १३ ॥

**तत इति**। ततः अभिवादनानन्तरं सा अन्नसाधनं रन्धनमित्यर्थः, कृत्वा पतये विनिवेद्य दत्त्वा वैश्वदेवोद्धृतैः वैश्वदेवबलिप्रदानानन्तरम् उद्धृतैः अन्नैः भोजनीयान् श्वशुरादीन् भोजयेत् ॥ १३ ॥

पतिं च तदनुज्ञाता शिष्टमन्नाद्यमात्मना।
भुक्त्वा नयेदहःशेषं सदायव्ययचिन्तया॥ १४॥

**अन्वयः**—पतिश्च तदनुज्ञाता आत्मना शिष्टम् अन्नाद्यं भुक्त्वा सदा आयव्ययचिन्तया अहःशेषं नयेत्॥ १४॥

**व्याख्या**—पतिश्च = निजस्वामिनं भोजयित्वा ततस्तेन, अनुज्ञाता = अनुमतिप्राप्ता, आत्मना = स्वयम्, शिष्टम् = अवशिष्टम्, अन्नाद्यम् = भक्ष्यपदार्थम्, भुक्त्वा = भोजनं कृत्वा, सदा = सततम्, आयव्ययानाम् = धनागमनिर्गमानाम्, चिन्तया = अनुचिन्तनेन, अहःशेषम् = अवशिष्टदिनम् नयेत् = यापयेत्॥ १४॥

**हिन्दी**—और स्वामी को भोजन कराने के बाद उसकी अनुमति से बचा हुआ भोजन स्वयं ग्रहण करे। भोजनोपरान्त दिन के बचे समय में अनुपल अपनी आमदनी और अपने खर्च पर विचार करे॥ १४॥

**पतिमिति**। पतिञ्च भोजयेदिति पूर्वेण सम्बन्धः। ततः तेन पत्या अनुज्ञाता आत्मना स्वयं शेषम् अवशिष्टम् अन्नाद्यं भुक्त्वा सदा आयव्ययानां चिन्तया अहःशेषम् अपराह्णभागं नयेत्॥ १४॥

पुनः सायं पुनः प्रातर्गृहशुद्धिं विधाय च।
कृतान्नसाधना साध्वी सभृत्यं भोजयेत् पतिम्॥ १५॥

**अन्वयः**—साध्वी पुनः सायं पुनः प्रातः गृहशुद्धिं विधाय कृतान्नसाधना सभृत्यं पतिं भोजयेत्॥ १५॥

**व्याख्या**—साध्वी = सच्चरित्रा सा नारी, पुनः = भूयः, सायं = सन्ध्याकाले, पुनः = पौनःपुन्येन, प्रातः = पूर्वाह्णकृत्यमिव, गृहशुद्धिम्—गृहस्य = सदनस्य, शुद्धिम् = परिमार्जनम्, विधाय = सम्पाद्य, कृतान्नसाधना—कृता = निष्पादिता, अन्नस्य = भोज्यपदार्थस्य, साधना = रन्धना, यया तया, सभृत्यम् = सेवकैः सहितम्, पतिम् = स्वामिनम्, भोजयेत् = भोजनं प्रयच्छेत्॥ १५॥

**हिन्दी**—फिर शाम को सुबह की तरह दुबारा घर की सफाई कर, भोजन तैयार कर वह साध्वी नारी अपने पति को अन्य घरेलू सेवकों के साथ भोजन कराये॥ १५॥

**पुनरिति**। साध्वी स्त्री पुनः सायं, पुनः प्रातः गृहशुद्धिं विधाय कृतान्नसाधना कृतरन्धना सती सभृत्यं भरणीयवर्गसहितं पतिं भोजयेत्॥ १५॥

नातितृप्ता स्वयं भुक्त्वा गृहनीतिं विधाय च।
आस्तृत्य साधु शयनं ततः परिचरेत् पतिम्॥ १६॥

**अन्वयः**—ततः स्वयं भुक्त्वा नातितृप्ता गृहनीतिं विधाय शयनम् आस्तृत्य पतिं साधु परिचरेत्॥ १६॥

**व्याख्या**—ततः = तत्पश्चात्, स्वयम् = आत्मना, भुक्त्वा = भोजनं कृत्वा, नातितृप्ता—न = नहि, अतितृप्ता = गरिष्ठभोजना, भवेत्, गृहनीतिम्—गृहस्य = सदनस्य, नीतिम् = अवशिष्टकार्यम्, विधाय = कृत्वा, शयनम् = संवेशनम्, आस्तृत्य = विस्तरणं विधाय, पतिम् = स्वामिनम्, साधु = सुष्ठुरूपेण, परिचरेत् = परिचर्यां कुर्यात्॥ १६॥

**हिन्दी**—इसके बाद वह नारी स्वयं हलका भोजन कर पहले घर के बचे-खुचे कामों को समाप्त कर बिछावन बिछाकर पति को सुलाकर उसकी परिचर्या प्रारम्भ करे॥ १६ ॥

**नेति**। ततः स्वयं भुक्त्वा नातितृप्ता नातिप्रचुरभोजना इत्यर्थः, सती गृहनीतिं गृहस्य शेषकार्य्यं विधाय, शयनं शय्याम् आस्तृत्य पातयित्वा पतिं साधु सम्यक् परिचरेत् सेवेत॥ १६ ॥

**सुप्ते पत्यौ तदध्यास्य स्वयं तद्‌गतमानसा।**
**अनग्ना चाप्रमत्ता च निष्कामा च जितेन्द्रिया॥ १७॥**

**अन्वयः**—पत्यौ सुप्ते तद्‌गतमानसा तत् अध्यास्य अनग्ना अप्रमत्ता निष्कामा जितेन्द्रिया च शयीत॥ १७ ॥

**व्याख्या**—पत्यौ = भर्तरि, सुप्ते = निद्रिते सति, तद्‌गतमानसा = स्वामिगतहृदया, तत् = शयनम्, अध्यास्य = विस्तृर्य, अनग्ना = अविवसना, अप्रमत्ता = अमदोन्मत्ता, निष्कामा = कामनारहिता, जितेन्द्रिया = शान्ता च, शयीत = शयनं कुर्यादिति शेषः॥ १७ ॥

**हिन्दी**—पति के सो जाने पर उसमें अपने मन को लगाते हुए, नंगी न होते हुए, बिना मन्दोन्मत्त बने, निष्काम भाव से अपनी इन्द्रियों को वश में रखते हुए स्वयं भी सो जाय॥ १७ ॥

**सुप्ते इति**। पत्यौ सुप्ते निद्रिते सति तद्‌गतमानसा भर्त्तृगतचित्ता सती तत् शयनम् अध्यास्य अनग्ना अविवसना अप्रमत्ता अवहिता निष्कामा निराकाङ्क्षा जितेन्द्रिया च शयीत इति शेषः॥ १७ ॥

**नोच्चैर्वदेन्न परुषं न बह्वाहूतिमप्रियम्।**
**न केनचिच्च विवदेदप्रलापविवादिनी॥ १८॥**

**अन्वयः**—उच्चैः न, परुषं न, बह्वाहूतम् अप्रियं केनचित् न विवदेत्। अप्रलापविवादिनी न॥ १८ ॥

**व्याख्या**—उच्चैः = तारस्वरैः, न = न वदेत्, परुषम् = कठोरवचनम्, न = न वदेत्, बहवः = अनेकशः, कस्यचिज्जनस्य, आहूतयः = आह्वानानि, यत्र तादृशीं वाचं न, तथा अप्रियम् = अरुचिकरम्, न = नहि, वदेत्, केनचिदपि, न = नहि, विवदेत् = विवादं कुर्यात्, कृतेऽपि विवादे, अप्रलापम्—नास्ति प्रलापः = निरर्थकवचः, यस्मिन् तत् यथा तथा, विवादिनी = कलहकारिणी, न भवेदिति॥ १८ ॥

**हिन्दी**—ऊँची आवाज में बात न करे, कड़वी बोली न बोले, किसी को लगातार जोर-जोर से न बुलावे, किसी को अप्रिय बात न कहे तथा किसी के साथ कलह न करे। अगर झगड़ा हो ही जाय तो उस झगड़े में निरर्थक बकवास न करे॥ १८ ॥

**नेति**। उच्चैः न, परुषं कर्कशं न, बहवः आहूतयः आह्वानानि यत्र तादृशीं वाचं न, तथा अप्रियं न वदेत्। किञ्चेति चार्थः। किञ्च केनचित् न विवदेत् विवादे कर्त्तव्ये च नास्ति प्रलापः अनर्थकं वचः यस्मिन् तद् यथा तथा विवादिनी न भवेदिति शेषः॥ १८ ॥

**न चास्य व्ययशीला स्यान्न धर्मार्थविरोधिनी।**
**प्रमादोन्मादरोषेर्ष्यावचनान्यतिनिन्दिताम् ॥ १९ ॥**

**पैशुन्यहिंसाविषयमोहाहङ्कारदर्पताम् ।**
**नास्तिक्यसाहसस्तेयदम्भान् साध्वी विवर्जयेत्॥ २० ॥**

**अन्वयः**—अस्य व्ययशीला न धर्मार्थविरोधिनी च न स्यात्। साध्वी प्रमादोन्मादरोषेर्ष्या-वचनानि अतिनिन्दितां पैशुन्यहिंसाविषयमोहाहङ्कारदर्पतां नास्तिक्यसाहसस्तेयदम्भान् विवर्जयेत् ॥ १९-२० ॥

**व्याख्या**—अस्य = भर्तुः, व्ययशीला = अमितव्ययशालिनी, न = नहि, भवेत्, धर्मस्य = पुण्यस्य, अर्थस्य = धनस्य च, तयोः विरोधिनी = विसंवादिनी च, न = नहि, स्यात् = भवेत्। किञ्च साध्वी = सच्चरित्रा नारी, प्रमादस्य = अनवधानस्य, उन्मादस्य = चित्तविभ्रमस्य, रोषस्य = क्रोधस्य, ईर्ष्यायाः = असूयायाः, वचनानि = कथनानि, अतिनिन्दिताम् = अतिगर्हिताम्, पैशुन्यम् = परोक्षपरीवादत्वम्, हिंसाम् = घातनम्, विषयमोहम् = कामलोलुपता अर्थोन्मादं वा, अहङ्कारम् = गर्वम्, दर्पताम् = उद्धतताम्, नास्तिक्यम् = नास्तिकता, साहसम् = धौर्ष्ट्यम्, स्तेयम् = चौर्यम्, दम्भम् = कापट्यञ्च, विवर्जयेत् = परित्यजेत् ॥ १९-२० ॥

**हिन्दी**—पति की कमाई पर अधिक खर्चीली न हो, पति के धर्म-धनार्जन सम्बन्धी कामों का कभी विरोध न करे। सच्चरित्रा नारी कभी असावधान न रहे। क्रोध और ईर्ष्या प्रकट करने वाली बातें मुँह से कभी न निकालें। अतिनिन्दित, चुगलखोरी, हिंसा, विषयों के प्रति मोह, अहङ्कार, अपनी श्रेष्ठता, नास्तिकता, धृष्टता, चोरी और दम्भ—इन्हें छोड़ देना चाहिए ॥ १९-२० ॥

**न चेति। पैशुन्येति।** अस्य स्वामिनः व्ययशीला अतिव्ययकारिणीत्यर्थः न, धर्मार्थयोः विरोधिनी विरुद्धचारिणी च न स्यात्। किञ्च साध्वी स्त्री प्रमादस्य अनवधानतायाः उन्मादस्य रोषस्य ईर्ष्यायाश्च वचनानि, अतिनिन्दितां पैशुन्यहिंसाविषयमोहाहङ्कारदर्पतां पैशुन्यं कापट्यं, हिंसां विद्वेषं, विषयमोहं धनमदम्, अहङ्कारं दर्पताम् आत्मगौरवञ्चेत्यर्थः, तथा नास्तिक्यं, साहसं, स्तेयं चौर्य्यं दम्भञ्च विवर्जयेत् त्यजेत् ॥ १९-२० ॥

**एवं परिचरन्ती सा पतिं परमदैवतम्।**
**यशस्यमिह यात्येव परत्रैषा सलोकताम्॥ २१ ॥**

**अन्वयः**—एवं परमदैवतं पतिं परिचरन्ती सा यशस्यं परत्र सलोकताम् एषा याति एव ॥ २१ ॥

**व्याख्या**—एवम् = अनया रीत्या सेवमाना, सा = नारी, परमदैवतम् = उत्कृष्टाराध्यरूपं, पतिम् = स्वामिनम्, परिचरन्ती = सेवमाना, इह = संसारे, यशस्यम् = कीर्तिम्, परत्र = परलोके, सलोकताम् = पत्या सह परलोकम्, प्राप्नोति = लभते, एव ॥ २१ ॥

**हिन्दी**—इस तरह अपने पति को ही परम देवता मानकर उसकी सेवा-सुश्रूषा करने वाली साध्वी नारी संसार में तो यश पाती ही है, मरणोपरान्त पति के साथ परलोक भी पाती है ॥ २१ ॥

**एवमिति**। सा एषा नारी एवम्प्रकारेण परमदैवतं परमदेवतास्वरूपं पतिं परिचरन्ती शुश्रूषमाणा इह अस्मिन् लोके यशस्यं यश एव यशस्यं सुख्यातिमित्यर्थः, स्वार्थे ष्यप्रत्ययः। परत्र च परलोके सलोकतां पत्युरिति शेषः, पतिलोकमित्यर्थः, प्राप्नोति एव ॥ २१ ॥

**योषितो नित्यकर्मोक्तं नैमित्तिकमथोच्यते।**
**रजसो दर्शनादेषा सर्वमेव परित्यजेत्॥ २२॥**

**अन्वयः**—योषितः नित्यकर्म उक्तम्, अथ नैमित्तिकम् उच्यते। एषा रजसः दर्शनात् सर्वमेव परित्यजेत्॥ २२॥

**व्याख्या**—योषितः = साध्वीस्त्रियाः, नित्यकर्म = दैनन्दिनकार्यम्, उक्तम् = कथितम्, अथ = तदनन्तरम्, नैमित्तिकं कर्म = निमित्तजन्यकृत्यम्, उच्यते = कथ्यते। एषा = नारी, रजसः दर्शनात् = आत्मनः रजस्वलात्वमवलोक्य, सर्वमेव = पूर्वनिर्दिष्टं सकलमेव कार्यम्, परित्यजेत् = विवर्जयेत्॥ २२॥

**हिन्दी**—साध्वी नारियों के नित्यकर्म का निर्देश कर अब उनके नैमित्तिक कर्मों का वर्णन करते हैं। यह नारी रजोदर्शन के दिन से पूर्वनिर्दिष्ट सभी कार्यों का परित्याग कर दे॥ २२॥

**योषित इति।** योषितः नार्य्याः नित्यकर्म उक्तम्, अथ अनन्तरं नैमित्तिकं कर्म उच्यते। एषा नारी रजसः दर्शनात् आत्मनः रजस्वलात्वं दृष्ट्वेत्यर्थः, सर्वमेव कार्य्यं पूर्वोक्तं परित्यजेत्॥ २२॥

**सर्वैरलक्षिता शीघ्रं लज्जितान्तर्गृहे वसेत्।**
**एकाम्बरा कृशा दीना स्नानालङ्कारवर्जिता॥ २३॥**

**अन्वयः**—सर्वैः अलक्षिता एकाम्बरा कृशा दीना स्नानालङ्कारवर्जिता लज्जिता शीघ्रम् अन्तर्गृहे वसेत्॥ २३॥

**व्याख्या**—सर्वैः = सकलैः जनैः, अलक्षिता = अनवलोकिता, एकाम्बरा = एकमात्रवस्त्र-धारिणी, कृशा = क्षामा, दीना = खिन्ना, स्नानालङ्कारवर्जिता—स्नानेन = अवगाहनेन, अलङ्कारेण = आभूषणेन, वर्जिता = रहिता, लज्जिता = त्रपिता, शीघ्रम् = त्वरितम्, अन्तर्गृहे = गृहमध्य-वर्त्तिकक्षे, वसेत् = निवसेत्॥ २३॥

**हिन्दी**—सबकी नजर बचाकर शर्मीली, घर के भीतरी भाग के किसी कमरे में रहे। इस स्थिति में वह एकवस्त्रा, क्षामा तथा खिन्न रहते हुए स्नान और साज-शृंगार रहित होकर रहे॥२३॥

**सर्वैरिति।** सर्वैः जनैः अलक्षिता अदृष्टा, एकाम्बरा एकवसना कृशा दीना कातरा स्नानेन अलङ्कारेण च वर्जिता अस्नाता अनलङ्कारा चेत्यर्थः, तथा लज्जिता सती शीघ्रम् अन्तर्गृहे गृहमध्ये वसेत्॥ २३॥

**स्वपेद्भूमावप्रमत्ता क्षपेदेवमहस्त्रयम्।**
**स्नायीत सा त्रिरात्र्यन्ते सचेलाभ्युदिते रवौ॥ २४॥**

**अन्वयः**—अप्रमत्ता भूमौ स्वपेत्, एवम् अहस्त्रयं क्षपेत्। सा त्रिरात्र्यन्ते रवौ अभ्युदिते सचेला स्नायीत॥ २४॥

**व्याख्या**—अप्रमत्ता = अमदोन्मत्ता, भूमौ = पृथिव्याम्, स्वपेत् = शयनं कुर्यात्, एवम् = अनेन प्रकारेण, अहस्त्रयम् = दिनत्रयम्, क्षपेत् = यापयेत्। सा = रजस्वला, त्रिरात्र्यन्ते = त्रिरात्रिं व्यतीत्य, रवौ = सूर्ये, अभ्युदिते = समुदिते सति, सचेला = सवस्त्रा, स्नायीत = स्नानं कुर्यात्॥ २४॥

**हिन्दी**—इस तरह सावधानी से धरती पर सोकर तीन रात बिताकर चौथे दिन सूर्योदय के बाद अपने सभी वस्त्रों के साथ स्नान करे॥ २४॥

**स्वपेदिति**। किञ्च अप्रमत्ता प्रमादरहिता सती भूमौ स्वपेत्। एवम्प्रकारेण अहस्त्रयं दिनत्रयं क्षपेत् यापयेत्। अथ सा त्रिरात्र्यन्ते रात्रित्रयावसाने रवौ सूर्य्ये अभ्युदिते सति सचेला वस्त्रसहिता स्नायीत स्नानं कुर्य्यात्॥ २४॥

**विलोक्य भर्तृवदनं शुद्धा भवति धर्म्मतः।**
**कृतशौचा पुनः कर्म्म पूर्ववच्च समाचरेत्॥ २५॥**

**अन्वयः**—भर्तृवदनं विलोक्य धर्मतः शुद्धा भवति। पुनः कृतशौचा पूर्ववत् कर्म समाचरेत्॥ २५॥

**व्याख्या**—तत्पश्चात्, भर्तृवदनम् = पत्याननम्, विलोक्य = दृष्ट्वा, धर्मतः = पुण्येन, शुद्धा = पवित्रा, भवति = जायते। पुनश्च = भूयश्च, कृतशौचा = सम्पादितशुचिकर्म, पूर्ववत् = यथापूर्वम्, कर्म = नित्यकृत्यम्, समाचरेत् = अनुष्ठानं कुर्यात्॥ २५॥

**हिन्दी**—इसके बाद पति का मुख देखकर वह पुण्यकर्म करने योग्य हो जाती है। फिर पवित्र होने के बाद वह अपना नित्यकर्म पहले जैसे ही प्रारंभ कर दे॥ २५॥

**विलोक्येति**। ततः भर्त्तुः वदनं विलोक्य दृष्ट्वा धर्मेण शुद्धा पवित्रा भवति। पुनश्च कृतशौचा शुद्धिमती सती पूर्ववत् कर्म समाचरेत्॥ २५॥

**द्विजस्त्रीणामयं धर्म्मः प्रायोऽन्यासामपीष्यते।**
**कृषिपण्यादिपुङ्कृत्ये भवेयुस्ताः प्रसाधिकाः॥ २६॥**

**अन्वयः**—द्विजस्त्रीणाम् अयं धर्मः अन्यासाम् अपि प्रायः इष्यते। ताः कृषिपण्यादिपुंकृत्येषु प्रसाधिकाः भवेयुः॥ २६॥

**व्याख्या**—द्विजस्त्रीणाम्—द्विजातानाम् = ब्राह्मणादीनाम्, स्त्रीणाम् = नारीणाम्, अयम् = एषः, धर्मः = पुण्यकर्म, अन्यासाम् = द्विजन्मेतराणामपरजातिस्त्रीणाम्, अपि = चेत्, प्रायः = बाहुल्येन, इष्यते = उचितमस्ति, ताः = शूद्रादीनां स्त्रियः, कृषिपण्यादिषु = हलभृत्यापणिकादिषु, पुंकृत्येषु = पुरुषकृत्येषु, प्रसाधिकाः = सहयोगिनी, भवेयुः = स्युरिति॥ २६॥

**हिन्दी**—ये कर्म ब्राह्मण, क्षत्रिय एवं वैश्यों की पत्नियों के लिए विहित हैं। इनसे भिन्न औरतों के लिए भी प्रायः यही कर्म विहित हैं। एतदतिरिक्त वे औरतें कृषि और बाजारी जैसे पुरुषकर्म में भी सहयोगिनी होना चाहिए॥ २६॥

**द्विजस्त्रीणामिति**। द्विजस्त्रीणां ब्राह्मणक्षत्रियवैश्यस्त्रीणाम् अयं धर्मः अपरजातिस्त्रीणाम् अपि प्रायः बाहुल्येन इष्यते। ताः शूद्रादीनां स्त्रियम् इत्यर्थः, कृषिपण्यादिषु पुंकृत्येषु पुरुषकार्य्येषु प्रसाधिकाः सहकारिण्यः भवेयुः॥ २६॥

**सङ्गीतैर्मधुरालापैः स्वायत्तस्तु पतिर्यथा।**
**भवेत् तथाऽऽचरेयुर्वै मायाभिः कामकेलिभिः॥ २७॥**

**अन्वयः**—पतिः यथा स्वायत्तः भवेत् तथा सङ्गीतैः मधुरालापैः मायाभिः कामकेलिभिः वै आचरेयुः॥ २७॥

**व्याख्या**—पतिः = स्वामी, यथा = येन प्रकारेण, स्वायत्तः = स्वाधीनः, भवेत् = स्यात्, तथा = तेन रूपेण, सङ्गीतैः = गायनैः, मधुरैः = मनोहरैः, आलापैः = वार्त्तालापैः, मायाभिः = मोहकस्वरूपाभिः, कामकेलिभिश्च = सुरतप्रसङ्गैश्च, वै = इति निश्चयेन, आचरेयुः = आचरणं कुर्युः ॥ २७ ॥

**हिन्दी**—पति जिस तरह अपने अधीन हो, इसके लिए नारी को प्रयत्नशील होना चाहिए। गीत गाकर, मीठी बातें बोलकर, आकर्षक भावभङ्गिमा या कामक्रीड़ा से उसे वश में लाना चाहिए ॥ २७ ॥

**सङ्गीतैरिति**। पतिः यथा येन प्रकारेण स्वायत्तः स्वाधीनः भवेत्, सङ्गीतैः मधुरैः आलापैः मायाभिः स्नेहरूपाभिः मोहनप्रकाराभिरित्यर्थः, कामकेलिभिः सुरतप्रसङ्गैश्च तथा आचरेयुः ॥ २७ ॥

**मृते भर्तरि सङ्गच्छेद् भर्त्तुर्वा पालयेद् व्रतम्।**
**परवेश्मरुचिर्न स्याद् ब्रह्मचर्य्ये स्थिता सती ॥ २८ ॥**

**अन्वयः**—भर्तरि मृते सति सङ्गच्छेत् वा भर्त्तुः व्रतं पालयेत्। ब्रह्मचर्ये स्थिता सती परवेश्मरुचिः न स्यात् ॥ २८ ॥

**व्याख्या**—भर्त्तरि = पत्यौ, मृते सती = उपरते सती, सङ्गच्छेत् = सहैव गमनं कुर्यात्, वा = अथवा, भर्त्तुः = पत्युः, व्रतम् = नियमम्, गार्हस्थ्यं संरक्षेत्, किञ्च ब्रह्मचर्ये = नियमपालने स्थिता सती, परवेश्मरुचिः—परेषाम् = अन्येषाम्, वेश्मनि = गृहे, रुचिः = निवासाभिरुचिः, न = नहि, स्यात् = भवेत् ॥ २८ ॥

**हिन्दी**—पति के मरने पर उसे सती हो जाना चाहिए अथवा वैधव्यावस्था में गार्हस्थ्य धर्म का पालन करते हुए ब्रह्मचारिणी बनी रहे तथा कभी दूसरों के घर में निवास न करे ॥ २८ ॥

**मृते इति**। भर्त्तरि मृते सति सङ्गच्छेत् सहगमनं कुर्य्यात् पत्या सहेति शेषः, वा अथवा भर्त्तुः व्रतं गार्हस्थ्यं नियमं पालयेत्। किञ्च ब्रह्मचर्य्ये स्थिता सती परवेश्मरुचिः परगृहवासिनी न स्यात् ॥ २८ ॥

**मण्डनं वर्जयेन्नित्यं तथा प्रोषितभर्तृका।**
**देवताराधनपरा तिष्ठेद् भर्तृहिते रता।**
**धारयेन्मङ्गलार्थानि किञ्चिदाभरणानि च ॥ २९ ॥**

**अन्वयः**—प्रोषितभर्त्तृका नित्यं मण्डनं वर्जयेत् तथा देवताराधनपरा भर्त्तृहिते रता च तिष्ठेत्। किञ्च मङ्गलार्थानि किञ्चित् आभरणानि धारयेत् ॥ २९ ॥

**व्याख्या**—प्रोषितभर्तृका = प्रवासितपतिका, नित्यम् = प्रतिदिनम्, मण्डनम् = अलङ्करणम्, वर्जयेत् = त्यजेत्, तथा देवतानाम् = देवानाम्, आराधने = पूजने, रता = तत्परा, भर्त्तुः = पत्युः, हिते = लाभे, रता = निरता च, तिष्ठेत् = स्थिता भवेत्। किञ्च मङ्गलार्थानि = अभीष्टसिद्ध्यर्थानि, किञ्चित् = स्वल्पानि, आभरणानि = आभूषणानि, धारयेत् = धारणं कुर्यात् ॥ २९ ॥

**हिन्दी**—जिसका पति परदेश चला गया हो, वह नारी आभूषण प्रभृति शृंगार करना बन्द कर दे। पति की मंगलकामना से देवाराधन में तत्पर रहे और सधवासूचक मंगलार्थ कुछ आभूषण ग्रहण करे ॥ २९ ॥

**मण्डनमिति**। प्रोषितभर्तृका प्रवासस्थपतिका नारी मण्डनं भूषणं वर्जयेत् तथा देवतानाम् आराधने रता भर्तुः हिते रता च तिष्ठेत्। किञ्च मङ्गलार्थानि न तु विलासार्थानीत्यर्थः, किञ्चित् अल्पानि किञ्चिदित्यव्ययम् आभरणानि कङ्कणादीनि धारयेच्च ॥ २९ ॥

**नास्ति भर्तृसमो नाथो नास्ति भर्तृसमं सुखम्।**
**विसृज्य धनसर्वस्वं भर्त्ता वै शरणं स्त्रियाः ॥ ३० ॥**

**अन्वयः**—भर्तृसमः नाथः नास्ति, भर्तृसमं सुखं नास्ति। विसृज्य धनसर्वस्वं वै स्त्रियाः शरणं भर्त्ता ॥ ३० ॥

**व्याख्या**—भर्तृसमः = स्वामिना सदृशः, नाथः = अधिपतिः, नास्ति = न विद्यते, भर्तृसमम् = पत्युः तुल्यम्, सुखम् = आनन्दम्, नास्ति = न विद्यते। विसृज्य = विसर्जनं कृत्वा, धनसर्वस्वम्—धनम् = वित्तम्, सर्वस्वम् = अखिलं वस्तु च, वै = इति निश्चयेन, स्त्रियाः = नार्यः, शरणम् = आश्रयः, भर्त्ताः = पतिरेवास्ति ॥ ३० ॥

**हिन्दी**—पति के समान कोई दूसरा स्वामी नहीं है और पति की सेवा की तरह कोई दूसरा सुख नहीं है। अपनी सारी वस्तु एवं धन का परित्याग कर रहने वाली औरत का आश्रय केवल पति ही होता है ॥ ३० ॥

**नास्तीति**। भर्तृसमः पत्या तुल्यः नाथः आश्रयः न अस्ति, तथा भर्त्तृसमं पत्युः सदृशं सुखं न अस्ति। किञ्च विसृज्य अन्यत् सर्वं त्यक्त्वा स्थितताया इति शेषः, स्त्रियाः भर्त्ता वै पतिरेव शरणम् आश्रय इत्यर्थः, धनसर्वस्वं धनं सर्वस्वं सर्वं वस्तु च ॥ ३० ॥

**मितं ददाति हि पिता मितं भ्राता मितं सुतः।**
**अमितस्य प्रदातारं भर्त्तारं का न पूजयेत्? ॥ ३१ ॥**

**अन्वयः**—पिता मितं भ्राता मितं सुतश्च मितं ददाति। अतः का नारी अमितस्य प्रदातारं भर्त्तारं न पूजयेत्? ॥ ३१ ॥

**व्याख्या**—पिता = जनकः, मितम् = सीमितम्, भ्राता = सोदरः, मितम् = स्तोकम्, सुतः = पुत्रः, सीमितं सुखम्, ददाति = प्रयच्छति। अतः = अस्मात्कारणात्, का = नारी, अमितस्य = निःसीमस्य सुखस्य, प्रदातारम् = समर्पकम्, भर्तारम् = स्वामिनम्, न = नहि, पूजयेत् = पूजां कुर्यात् ॥ ३१ ॥

**हिन्दी**—पिता, भाई और बेटा सीमित सुख देने वाले हैं। अतः वह कौन नारी है, जो अमित सुखदाता पति को नहीं पूजती है? ॥ ३१ ॥

**मितमिति**। पिता मितं परिमितं, भ्राता मितं, सुतश्च मितं ददाति हिशब्दः अवधारणार्थः। अतः का नारी अमितस्य अपरिमितस्य प्रदातारं भर्त्तारं न पूजयेत् ॥ ३१ ॥

**शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद् धर्ममर्हति।**
**वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विना ।**
**पुराणाद्युक्तमन्त्रैश्च नमोऽन्तैः कर्म केवलम् ॥ ३२ ॥**

**अन्वयः**—वर्णः चतुर्थोऽपि शूद्रः वर्णत्वात् वेदमन्त्रैः स्वधास्वाहावषट्कारादिभिः विना केवलं नमोऽन्तैः पुराणाद्युक्तमन्त्रैः धर्मं केवलं कर्म अर्हति ॥ ३२ ॥

**व्याख्या**—चतुर्थः = तुरीयः, वर्णः = जातिः, शूद्रोऽपि = वृषलोऽपि, वर्णत्वात् = वर्णविहितधर्माणां अवश्यकर्त्तव्यत्वात्, वेदमन्त्रैः = श्रुतिमन्त्रैः, स्वधास्वाहावषट्कारादिभिः, विना = विहाय, केवलम् = मात्रम्, नमोऽन्तैः = मन्त्रान्ते नमः, पुराणादिषु = शिवमार्कण्डेय-पुराणादिषु, उक्तैः = कथितैः, मन्त्रैः, धर्म्यम् = धर्मान्वितम्, कर्म = कृत्यम्, अर्हति = योग्यो भवति ॥ ३२ ॥

**हिन्दी**—शूद्र भी चौथा वर्ण कहा जाता है। अतः चतुर्थ वर्ण होने के कारण उसे भी धर्म करना उचित है। अतएव वह वेदमंत्र, स्वधा, स्वाहा एवं वषट्कार आदि का उच्चारण किये बिना केवल पुराण में कथित मंत्रों से अन्त में 'नमः' पद जोड़कर कर्म करने योग्य होता है ॥ ३२ ॥

**शूद्र इति**। चतुर्थः वर्णः शूद्रोऽपि वर्णत्वात् वर्णविहितधर्माणामवश्यकर्त्तव्यत्वादिति भावः, वेदमन्त्रैः स्वधास्वाहावषट्कारादिभिः विना केवलं नमोऽन्तैः नममन्त्रावसानैः पुराणादिषु उक्तैः मन्त्रैः धर्म्यं धर्मयुक्तं कर्म अर्हति ॥ ३२ ॥

**विप्रवद् विप्रविन्नासु क्षत्रविन्नासु क्षत्रवत्।**
**प्रजाताः कर्म्म कुर्य्युर्वै वैश्यविन्नासु वैश्यवत् ॥ ३३ ॥**

**अन्वयः**—विप्रविन्नासु प्रजाताः विप्रवत् क्षत्रविन्नासु क्षत्रवत् वैश्यविन्नासु वैश्यवत् कर्म कुर्यात् ॥ ३३ ॥

**व्याख्या**—विप्रविन्नासु = ब्राह्मणविवाहितासु, प्रजाताः = समुत्पन्नाः, विप्रवद् = ब्राह्मण इव, क्षत्रविन्नासु = क्षत्रियपरिणीतासु, प्रजाताः, क्षत्रवत् = क्षत्रियतुल्यम्, तथा वैश्यविन्नासु = वैश्य-विवाहितासु, प्रजाताः = समुत्पन्नाः, वैश्यवत् = वैश्य इव, कर्म = कृत्यम्, कुर्य्युः = विधेयुः ॥ ३३ ॥

**हिन्दी**—ब्राह्मण की विवाहिता पत्नी से उत्पन्न लोगों को ब्राह्मण की तरह, क्षत्रियों की परिणीता पत्नी से उत्पन्न लोगों को क्षत्रिय की तरह, वैश्यों की विवाहिता पत्नी से उत्पन्न लोगों को वैश्यों की तरह कर्म करने चाहिए ॥ ३३ ॥

**विप्रेति**। विप्रविन्नासु ब्राह्मणपरिणीतासु प्रजाताः उत्पन्नाः विप्रवत्, क्षत्रविन्नासु क्षत्रियपरिणीतासु प्रजाताः क्षत्रवत् तथा वैश्यविन्नासु प्रजाताः वैश्यवत् कर्म कुर्य्युः वै, वैशब्दोऽवधारणार्थः ॥ ३३ ॥

**वैश्यासु क्षत्रविप्राभ्यां जातः शूद्रासु शूद्रवत्।**
**अधमादुत्तमायान्तु जातः शूद्राधमः स्मृतः।**
**स शूद्रादनु सत् कुर्य्यान्नाममन्त्रेण सर्वदा ॥ ३४ ॥**

**अन्वयः**—क्षत्रविप्राभ्यां वैश्यासु शूद्रासु जातः शूद्रवत् अधमात् उत्तमायां जातः शूद्रादपि अधमः स्मृतः। सः शूद्रादनु नाममन्त्रेण सर्वदा सत् कार्यं कुर्यात् ॥ ३४ ॥

**व्याख्या**—क्षत्रविप्राभ्याम् = ब्राह्मणक्षत्रियाभ्याम्, वैश्यासु, शूद्रासु = वृषलीषु नारीषु, जातः = उत्पन्नः, पुत्रः, शूद्रवत् कार्यम् = कर्म, कुर्युः, अधमात् = नीचवर्णात्, उत्तमायाम् = उत्कृष्टजात्याम्, जातः, शूद्रादपि अधमः = नीचः, जातः, स च शूद्रात् = वृषलात्, अनु = हीनः, नाममन्त्रेण सर्वदा सत्कार्यं कुर्यात् ॥ ३४ ॥

**हिन्दी**—ब्राह्मण या क्षत्रिय से वैश्य या शूद्र जाति की नारी से उत्पन्न शूद्र की तरह कर्म करे। अधम से उत्तम कुल की स्त्री में उत्पन्न लोग शूद्राधम कहे जाते हैं। अतः वे शूद्र से हीन होने के कारण मंत्र की जगह नाम लेकर सत्कर्म करे ॥ ३४ ॥

**वैश्यास्विति**। क्षत्रविप्राभ्यां ब्राह्मणक्षत्रियाभ्यां वैश्यासु शूद्रासु स्त्रीषु जातः पुत्रः शूद्रवत् कर्म कुर्य्यादिति शेषः। अधमात् निकृष्टजातेरित्यर्थः, उत्तमायाम् उत्कृष्टजात्यामित्यर्थः, जातः शूद्रादपि अधमः नीचः स्मृतः। स च शूद्रात् अनु हीनेन इत्यर्थः, नाममन्त्रेण सर्वदा सत् कार्य्यं कुर्य्यात् ॥ ३४ ॥

**ससङ्करचतुर्वर्णा एकत्रैकत्र यावनाः।**
**वेदभिन्नप्रमाणास्ते प्रत्यगुत्तरवासिनः ॥ ३५ ॥**

**अन्वयः**—एकत्र ससङ्कराः चतुर्वर्णाः एकत्र यावनाः ते वेदभिन्नप्रमाणाः प्रत्यगुत्तर-वासिनः ॥ ३५ ॥

**व्याख्या**—एकत्र = निवसथस्यैकदेशे, ससङ्कराः = मिश्रजजातिसहिताः, चतुर्वर्णाः = ब्राह्मण-क्षत्रियवैश्यशूद्राः, तिष्ठन्ति, एकत्र = अन्यक्षेत्रे, यावनाः = म्लेच्छाः, तिष्ठन्ति, ते = म्लेच्छाः वेदभिन्नप्रमाणाः = यवनधर्मावलम्बिनः, तथा प्रत्यगुत्तरवासिनः = पश्चिमोत्तरे स्थिताः यूनानवासिनः ॥ ३५ ॥

**हिन्दी**—एक ओर संकीर्ण जातियों के साथ ब्राह्मण, क्षत्रिय, वैश्य और शूद्र रहते हैं तथा दूसरी ओर यूनानी वेद-विरुद्ध कुरान-धर्मावलम्बी मुसलमान लोग भी रहते हैं।। ३५ ॥

**ससङ्करेति**। एकत्र एकस्मिन् प्रदेशे ससङ्कराः सङ्कीर्णजातिसहिताः चतुर्वर्णाः चत्वारः वर्णा ब्राह्मणादयः, एकत्र अन्यत्रेत्यर्थः, यावनाः तिष्ठन्तीति शेषः। ते यावनाः वेदभिन्नप्रमाणाः वेदविरुद्धधर्मिणः तथा प्रत्यगुत्तरवासिनः पश्चिमोत्तरप्रदेशस्थिता इत्यर्थः।। ३५ ॥

**तदाचार्य्यैश्च तच्छास्त्रं निर्मितं तद्धितार्थकम्।**
**व्यवहाराय या नीतिरुभयोरविवादिनी ॥ ३६ ॥**

**अन्वयः**—तत् आचार्यैः तत् हितार्थकं शास्त्रञ्च निर्मितम्। तथा व्यवहाराय उभयोः अविवादिनी नीतिः ॥ ३६ ॥

**व्याख्या**—तत् = तेषां यूनानवासिनाम्, आचार्यैः = यवनधर्मोपदेशकैः, तत् = तेषां यवनानाम्, हितार्थकम् = मङ्गलार्थम्, शास्त्रम् = धर्मग्रन्थः, निर्मितम् = विरचितम्, तथा = तेनैव प्रकारेण, व्यवहाराय = आचाराय, उभयोः = द्वयोर्लोकयोः, अविवादिनी = अविरोधिनी, नीतिश्च = नियमश्च, विनिर्मितम् ॥ ३६ ॥

**हिन्दी**—उन यवनों के धर्मगुरुओं ने उनके कल्याण हेतु शास्त्रों का भी निर्माण किया। उन शास्त्रों में उनके व्यवहार के लिए लोक और परलोक के विरुद्ध न पड़ने वाली नीति का वर्णन किया गया है ॥ ३६ ॥

**तदाचार्य्यैरिति**। तेषां यवनानाम् आचार्य्यैः गुरुभिः तद्धितार्थकं तेषां हितार्थं शास्त्रञ्च निर्मितं प्रणीतम्। तथा व्यवहाराय उभयोर्लोकयोरित्यर्थः, अविवादिनी अविरोधिनी नीतिश्च निर्मितेति शेषः ॥ ३६ ॥

**कदाचिद् बीजमाहात्म्यात् क्षेत्रमाहात्म्यतः क्वचित्।**
**नीचोत्तमत्वं भवति श्रेष्ठत्वं क्षेत्रबीजतः ॥ ३७ ॥**

**अन्वयः**—कदाचित् बीजानां माहात्म्यात् क्वचित् क्षेत्राणां माहात्म्यतः नीचोत्तमत्वं कदाचिच्च क्षेत्रबीजतः माहात्म्यात् श्रेष्ठत्वं भवति ॥ ३७ ॥

**व्याख्या**—कदाचित् = स्यात् सम्भवेद्वा, बीजानाम् = पुरुषाणाम्, माहात्म्यात् = महिम्नः, क्वचित् = कुत्रचित्, क्षेत्राणाम् = स्त्रीणाम्, माहात्म्यतः = गरिम्नः, नीचोत्तमत्वम् = अधमोत्कर्षत्वम्, कदाचिच्च = सम्भवेच्च, क्षेत्रबीजतः—क्षेत्रस्य = स्त्रियाः, बीजस्य = पुरुषस्य, चोभयोः माहात्म्यात् = गौरवात्, श्रेष्ठत्वम् = उत्तमत्वम्, भवति ॥ ३६ ॥

**हिन्दी**—कभी पुरुष की गुरुता से और कभी नारी की महत्ता से संतान नीचता या श्रेष्ठता प्राप्त करती है और कभी पुरुष-नारी दोनों की महत्ता से श्रेष्ठता प्राप्त करती है ॥ ३७ ॥

**कदाचिदिति**। कदाचित् बीजानां पुरुषाणामित्यर्थः, माहात्म्यात् गौरवात्, क्वचित् क्षेत्राणां नारीणां माहात्म्यात् गौरवात् नीचोत्तमत्वम् अपकर्षोत्कर्षभावः, कदाचिच्च क्षेत्रबीजतः क्षेत्रस्य बीजस्य च उभयोरित्यर्थः, माहात्म्यात् श्रेष्ठत्वं भवति ॥ ३७ ॥

**विश्वामित्रो वशिष्ठश्च मतङ्गो नारदादयः।**
**तपोविशेषैः सम्प्राप्ता उत्तमत्वं न जातितः ॥ ३८ ॥**

**अन्वयः**—विश्वामित्रः वशिष्ठः मतङ्गः नारदादयश्च तपोविशेषैः उत्तमत्वं सम्प्राप्ताः, जातितः न ॥ ३८ ॥

**व्याख्या**—विश्वामित्रः = गाधिपुत्रः, वशिष्ठः = सूर्यवंशीयक्षत्रियाणां गुरुः, मतङ्गः = प्रसिद्ध ऋषिः, नारदादयश्च अनेके ऋषयः, तपोविशेषैः = विशिष्टतपसा, उत्तमत्वम् = श्रेष्ठत्वम्, सम्प्राप्ताः = अधिगताः, न तु जात्या = जातिमात्रेण, विश्वामित्रो हि क्षत्रियः, वेश्यापुत्रो वशिष्ठः, मतङ्गो हि सामान्ययोनिसमुत्पन्नः, नारदस्य दासीगर्भजत्वाच्चेति ॥ ३८ ॥

**हिन्दी**—क्षत्रिय से उत्पन्न विश्वामित्र, स्वर्ग की वेश्या से उत्पन्न वसिष्ठ, साधारण जाति में उत्पन्न मतङ्ग और दासी के पुत्र नारद प्रभृति विशेष तप से ही महत्त्व को प्राप्त किये, न कि उत्तम जाति के कारण ॥ ३८ ॥

**विश्वामित्र इति**। विश्वामित्रः वशिष्ठः मतङ्गः नारदादयश्च तपोविशेषैः उत्तमत्वं श्रेष्ठत्वं सम्प्राप्ताः जातितः जात्या न, विश्वामित्रस्य क्षत्रजत्वात् वशिष्ठस्य वेश्याजातत्वात् मतङ्गस्य सामान्ययोनिजत्वात् नारदस्य दासीगर्भजत्वाच्चेति भावः ॥ ३८ ॥

**स्वस्वजात्युक्तधर्मो यः पूर्वैराचरितः सदा।**
**तमाचरेच्च सा जातिर्दण्ड्या स्यादन्यथा नृपैः ॥ ३९ ॥**

**अन्वयः**—यः पूर्वैः स्वस्वजात्युक्तधर्मः आचरितः सा जातिः सदा तम् आचरेत्। अन्यथा नृपैः दण्ड्या स्यात् ॥ ३९ ॥

**व्याख्या**—यः = जनः, पूर्वैः = पूर्वपुरुषैः, स्वस्वजात्युक्तधर्मः = निजनिजजातिविहित-धार्मिककृत्यः, आचरितः = अनुष्ठितः, सा जातिः = वर्णः, सदा = सर्वदा, तम् = धर्मम्, आचरेत् = व्यवहरेत्। अन्यथा नृपैः = भूभृद्भिः, दण्ड्याः = दण्डनीयाः, स्यात् = भवेत् ॥ ३९ ॥

**हिन्दी**—जिस व्यक्ति के पूर्वजों ने अपनी जाति के लिए विहित धर्म का सदा व्यवहार किया है, उसी का उसे आचरण करना चाहिए। अन्यथा आचरण करने पर उस जाति के लोग राजा द्वारा दण्डनीय होते हैं ॥ ३९ ॥

**स्वेति**। यः पूर्वैः पूर्वपुरुषैः स्वस्वजातिविहितः धर्मः आचरितः सा जातिः तज्जातीयो नरः सदा तं धर्मम् आचरेत्, अन्यथा नृपैः दण्ड्या दण्डनीया स्यात् ॥ ३९ ॥

**जातिवर्णाश्रमान् सर्वान् पृथक् चिह्नैः सुलक्षयेत्।**
**यन्त्राणि धातुकाराणां संरक्षेद् वीक्ष्य सर्वदा ॥ ४० ॥**

**अन्वयः**—पृथक् चिह्नैः जातिवर्णाश्रमान् सर्वान् सुलक्षयेत्। धातुकाराणां यन्त्राणि वीक्ष्य सदा संरक्षेत् ॥ ४० ॥

**व्याख्या**—पृथक् चिह्नैः = भिन्नलाञ्छनैः, जातीनाम् = ब्राह्मणादीनाम्, वर्णानाम्, आश्रमाणाम् = ब्रह्मचर्यादीनाम्, सर्वान् = सकलान्, धर्मान्, सुलक्षयेत् = चिह्नयेत्। तथा धातुकाराणाम् = स्वर्णादिशिल्पकाराणाम्, यन्त्राणि, वीक्ष्य = अवलोक्य, सर्वदा = सततम्, संरक्षेत् = पालयेत्, नृप इति शेषः ॥ ४० ॥

**हिन्दी**—जाति, वर्ण और आश्रम के सभी लोगों को अलग-अलग चिह्नों द्वारा पहचान लेना चाहिए। सुनार आदि शिल्पकारों के औजारों का परीक्षण कर राजा को उनके पास रहने देना चाहिए ॥ ४० ॥

**जातिवर्णाश्रमानिति**। पृथक् चिह्नैः जातीनां सङ्कीर्णानां वर्णानां ब्राह्मणादीनाम् आश्रमाणां ब्रह्मचारिप्रभृतीनां सर्वान् धर्मान् सुलक्षयेत्। तथा धातुकाराणां स्वर्णादिशिल्पकाराणां यन्त्राणि वीक्ष्य परीक्ष्य सर्वदा संरक्षेत् नृप इति शेषः ॥ ४० ॥

**कारुशिल्पिगणान् राष्ट्रे रक्षेत् कार्य्यानुमानतः।**
**अधिकान् कृषिकृत्ये वा भृत्यवर्गे नियोजयेत् ॥ ४१ ॥**

**अन्वयः**—कार्यानुमानतः राष्ट्रे कारुशिल्पिगणान् रक्षेत्। अधिकान् कृषिकृत्ये वा भृत्यवर्गे नियोजयेत् ॥ ४१ ॥

**व्याख्या**—कार्यानुमानतः—कार्याणाम् = कृत्यानाम्, अनुमानेन = अभ्यूहनेन, राष्ट्रे = जनपदे, कारुशिल्पिगणान् = वर्द्धकिचित्रकारवर्गान्, रक्षेत् = निवासयेत्। तथा कृषिकृत्ये = हलभृत्यादिकार्ये, वा = अथवा, भृत्यवर्गे = सेवकसाध्यकार्ये, अधिकान् = बहुलान् जनान्, नियोजयेत् = नियुक्तं कुर्यात् ॥ ४१ ॥

**हिन्दी**—काम की अधिकता या कमी का विचार कर राज्य में राजा बढ़ई या शिल्पकारों को बसाये। अगर इनकी संख्या अधिक हों तो इन्हें खेती के कामों में या सामान्य सेवकों के काम में राजा लगाये ॥ ४१ ॥

**कारुशिल्पीति**। कार्य्यानुमानतः कार्य्याणाम् अनुमानेन गौरवलाघवविवेचनेन इत्यर्थः, राष्ट्रे राज्ये कारुशिल्पिगणान् रक्षेत् वासयेत्। तथा कृषिकृत्ये भूमिकर्षणादिकार्य्ये वा भृत्यवर्गसाध्ये कर्मणि निमित्ते अधिकान् जनान् नियोजयेत् राजेति शेषः ॥ ४१ ॥

**चौराणां पितृभूतास्ते स्वर्णकारादयस्त्वतः ।**
**गञ्जागृहं पृथग् ग्रामात् तस्मिन् रक्षेत्तु मद्यपान् ॥ ४२ ॥**

**अन्वयः**—स्वर्णकारादयस्तु चौराणां पितृभूताः, अतः ते ग्रामात् पृथक् रक्षेत्। तस्मिन् तु गञ्जागृहं मद्यपान् रक्षेत् ॥ ४२ ॥

**व्याख्या**—स्वर्णकारादयस्तु = धातुकारादयस्तु, चौराणाम् = तस्कराणाम्, पितृभूताः = जनकस्थानीयाः, यतो हि ते चौरान् स्वपुत्रानिव पालयन्ति, अतः = अस्मात् कारणात्, ते = स्वर्णकाराः, ग्रामात् = आवसथात्, पृथक् = दूरमेव, रक्षणीयाः = निवासनीयाः नृपेणेति। यच्च तस्मिन् = ग्रामादभिन्नक्षेत्रे, गञ्जागृहम् = मदिरालयमस्ति, तस्मिन् = तत्र, मद्यपान् = सुरापान्, रक्षेत् = वासयेत् राजेति ॥ ४२ ॥

**हिन्दी**—सुनार चोरों की रक्षा उनके बाप की तरह करते हैं, अतः उन्हें गाँव से बाहर ही रखना चाहिए और मदिरालय भी गाँव से बाहर रखकर उनमें शराबियों को रखना चाहिए ॥ ४२ ॥

**चौराणामिति**। स्वर्णकारादयः चौराणां पितृभूताः पितृस्थानीयाः पितृवत् चौरान् पालयन्तीत्यर्थः, अतः ते ग्रामात् पृथक् रक्षणीया राज्ञा इति शेषः। यच्च तस्मिन् ग्रामात् पृथक् प्रदेशे इत्यर्थः, गञ्जागृहं मदिरागृहम् अस्ति, तस्मिन् मद्यपान् रक्षेत् राजेति शेषः ॥ ४२ ॥

**न दिवा मद्यपानं तु राष्ट्रे कुर्य्याद्धि कश्चन ॥ ४३ ॥**

**अन्वयः**—राष्ट्रे कश्चन दिवा मद्यपानं न तु कुर्यात् हि ॥ ४३ ॥

**व्याख्या**—राष्ट्रे = राज्ये, कश्चन = कोऽपि जनः, दिवा = दिवसे, मद्यपानम् = सुरापानम्, न तु = नैव, कुर्यात् ॥ ४३ ॥

**हिन्दी**—और राज्य में किसी को दिन में शराब पीने की स्वीकृति नहीं देनी चाहिए ॥ ४३ ॥

**नेति**। राष्ट्रे राज्ये कश्चन जनः दिंवा दिवसे मद्यपानं न हि तु कुर्य्यात् ॥ ४३ ॥

**ग्रामे ग्राम्यान् वने वन्यान् वृक्षान् संरक्षयेन्नृपः ।**
**उत्तमान् विंशतिकरैर्मध्यमांस्तिथिहस्ततः ॥ ४४ ॥**
**सामान्यान् दशहस्तैश्च कनिष्ठान् पञ्चभिः करैः ।**
**अजाविगोशकृद्भिर्वा जलैर्मांसैश्च पोषयेत् ॥ ४५ ॥**

**अन्वयः**—नृपः ग्रामे ग्राम्यान् वने वन्यान् वृक्षान् संरक्षयेत्। तेषु उत्तमान् विंशतिकरैः मध्यमान् तिथिहस्ततः सामान्यान् दशहस्तैश्च कनिष्ठान् पञ्चभिः करैः अजाविगोशकृद्भिः वा जलैः मांसैश्च पोषयेत् ॥ ४४-४५ ॥

**व्याख्या**—नृपः = राजा, ग्रामे = निवसथे, ग्राम्यान् = ग्रामे भवितुं योग्यान् वृक्षान्, वने = अरण्ये, वन्यान् = वने भवितुं योग्यान्, वृक्षान् = पादपान्, संरक्षयेत् = संरोपयेत्। तेषु = पादपेषु, उत्तमान् = उत्कृष्टान् बृहद्वृक्षान्, विंशतिहस्तान्तरालैः, मध्यमान् = सामान्यवृक्षान्, तिथिहस्ततः = पञ्चदशकरैः, ततो निकृष्टान् वृक्षान् दशकरैः, तथा कनिष्ठान् = लघुवृक्षान्, पञ्चभिः करैः, विच्छिद्य संरोपयेदिति, तांश्च वृक्षान्, अजानाम् = छागानाम्, अवीनाम् = मेषाणाम्, गवाञ्च,

शकृद्भिः = पुरीषैः, जलैः = सलिलैः, मांसैः = पिशितैश्च, पोषयेत् = संवर्द्धयेदिति ॥४४-४५॥

**हिन्दी**—गाँव में पनपने वाले पेड़ों को गाँव में, जंगल में उगने वाले पौधों को जंगल में राजा रोपण कराये। उनमें बड़े पेड़ों की परस्पर दूरी बीस हाथ, औसत सूक्ष्म दर्जे के पेड़ों की दूरी पन्द्रह हाथ, सामान्य पेड़ों की दूरी दस हाथ और छोटे-छोटे पेड़ों की दूरी पाँच हाथ होनी चाहिए। उन पेड़ों में बकरी, भेड़ और गाय के गोबर की खाद, पानी तथा मांस डाल कर संवर्द्धन करवाना चाहिए॥४४-४५॥

**ग्रामे इति। सामान्यानिति।** नृपः ग्रामे ग्राम्यान्, वने वन्यान् वृक्षान् संरोपयेत्। तेषु उत्तमान् वृक्षान् विंशतिहस्तैः, मध्यमान् वृक्षान् तिथिहस्ततः पञ्चदशकरैरित्यर्थः, सामान्यान् ततो निकृष्टान् दशहस्तैः तथा कनिष्ठान् अधमान् वृक्षान् पञ्चभिः करैः विच्छिद्य वासयेदिति शेषः। तांश्च अजानां छागानाम् अवीनां मेषाणां गवाञ्च शकृद्भिः पुरीषैः जलैः मांसैश्च पोषयेत् पुष्टिं नयेत्॥४४-४५॥

**उदुम्बराश्वत्थवटचिञ्चाचन्दनजम्भलाः ।**
**कदम्बाशोकबकुलबिल्वामृतकपित्थकाः ॥४६॥**
**राजादनाम्रपुन्नागतूदकाष्ठाम्लचम्पकाः ।**
**नीपकोकाम्रसरलदाडिमाक्षोटभिस्मटाः ॥४७॥**
**शिंशपाशिम्भुवदरनिम्बजम्बीरक्षीरिकाः ।**
**खर्जूरदेवकरजफल्गुतापिञ्छसिम्भलाः ॥४८॥**
**कुद्दालो लवली धात्री क्रमुको मातुलुङ्गकः ।**
**लकुचो नारिकेलश्च रम्भाद्याः सत्फला द्रुमाः ।**
**सुपुष्पाश्चैव ये वृक्षा ग्रामाभ्यर्णे नियोजयेत्॥४९॥**

**अन्वयः**—उदुम्बराश्वत्थवटचिञ्चाचन्दनजम्भलाः कदम्बाशोकबकुलबिल्वामृतकपित्थकाः राजादनाम्रपुन्नागतूदकाष्ठाम्लचम्पकाः नीपकोकाम्रसरलदाडिमाक्षोटभिस्मटाः शिंशपाशिम्भुवदर-निम्बजम्बीरक्षीरिकाः खर्जूरदेवकरजफल्गुतापिञ्छसिम्भलाः कुद्दालः लवली धात्री क्रमुकः मातुलुङ्गकः लकुचः नारिकेलः च रम्भाद्याः अन्ये ये सत्फलाः द्रुमाः सुपुष्पाश्चैव वृक्षाः तान् ग्रामाभ्यर्णे नियोजयेत्॥४६-४९॥

**व्याख्या**—उदुम्बराः = क्षीरवृक्षाः, अश्वत्थाः = पिप्पलाः, वटाः = न्यग्रोधाः, चिञ्चाः = आम्लीकाः, चन्दनाः = गन्धसाराः, जम्भलाः = जम्बीराः, कदम्बाः = नीपाः, अशोकाः = रक्तपल्लवाः, बकुलाः = सिंहकेसराः, बिल्वाः = श्रीफलानि, अमृताः = आमलाः, कपित्थकाः = खदिराः, राजादनाः = चारबीजानि, आम्राः = रसालाः, पुन्नागाः, तूदकाष्ठाः = ब्रह्मकाष्ठाः, अम्लाः, चम्पकाः = हेमपुष्पाणि, नीपाः = कदम्बाः, कोकाम्राः = कोकमाः, सरलाः = पुष्पवृक्षाणि, दाडिमाः = शुकवल्लभाः, अक्षोटाः = अक्षोटवृक्षाणि, भिस्मटाः, शिम्भवः = शिंशपाः, वदराः = वदरिकाः, निम्बाः = तिक्तद्रुमाः, जम्बीराः = अम्लनीराः, क्षीरिकाः = पायसवृक्षाः, खर्जूराः = दुरारोहाः, देवकरजाः, शिघ्नु = रुचिराञ्जनाः, फल्गवः = अंजीरः, तापिच्छाः = तमालाः, सिम्भलाः, कुद्दालाः, लवली = हरिपवरयः, धात्री = आमलकी, क्रमुकः = पुगीफलम्, मातुलुङ्गकः = लकुचः रोचनः, दन्ताघातो वा, नारिकेलः रम्भाद्याः = कदलीफलप्रभृतयः, अन्ये = अपरे, ये सत्फलाः =

उत्कृष्टफलशालिनः, सुपुष्पाश्च पादपाः सन्ति, तान् = सर्वान्, ग्रामाभ्यर्णे आवसथसमीपे, नियोजयेत् = रोपणं कुर्यात् ॥४६-४९ ॥

**हिन्दी**—गूलर, पीपल, बरगद, इमली, चन्दन, जभीरीनीबू, कदम्ब, अशोक, बकुल, बिल्व, आमड़ा, कैथ, चिरौंजी, आम, पुंनाम, तूत, अमरा, चम्पा, जलकदम्ब, कोकम, चीड़, अनार, अखरोट, मिस्सट, शीशम, सहिजन, बैर, नीम, जमीरी नींबू, खिरजी, खजूर, देवकरंज, अंजीर, तमाल, शिम्भल, कुद्दाल, हरफारेवडी, आमला, सुपारी, बिजौरानींबू, बड़हर, नारियल, केला प्रभृति तथा अन्य भी अच्छे फलवाले जो पेड़-पौधें हों, उन्हें गाँव के आसपास लगाना चाहिए ॥४६-४७ ॥

**उदुम्बरेत्यादि**। उदुम्बराः, अश्वत्थाः, वटाः, चिञ्चाः, चन्दनाः, जम्भलाः, कदम्बाः, अशोकाः, बकुलाः, बिल्वाः, अमृताः, कपित्थकाः, राजादनाः, आम्राः, पुन्नागाः, तूदकाष्ठाः, अम्लाः, चम्पकाः, नीपाः, कोकाम्राः, सरलाः, दाडिमाः, अक्षोटाः, भिस्मटाः, शिंशपाः, शिम्भवः, वदराः, निम्बाः, जम्बीराः, क्षीरिकाः, खर्जूराः, देवकरजाः, फल्गवः, तापिञ्छाः, सिम्भलाः, कुद्दालः, लवली, धात्री, क्रमुकः, मातुलुङ्गकः, लकुचः, नारिकेलः, रम्भाद्याः, अन्ये ये सत्फलाः, उत्तमफलशालिनः सुपुष्पाश्च वृक्षाः सन्ति, तान् ग्रामाभ्यर्णे ग्रामसमीपे नियोजयेत् रोपयेत् ॥४६-४९ ॥

**वामभागेऽथवोद्यानं कुर्य्याद् वासगृहे शुभम्।**
**सायं प्रातस्तु घर्मान्ते शीतकाले दिनान्तरे।**
**वसन्ते पञ्चमेऽह्नस्तु सेच्या वर्षासु न क्वचित्॥५०॥**

**अन्वयः**—वामभागे अथवा वासगृहे शुभम् उद्यानं कुर्यात्। घर्मान्ते सायं प्रातश्च शीतकाले दिनान्तरे वसन्ते पञ्चमे अह्नस्तु सेच्याः, वर्षासु क्वचिदपि न सेच्येति ॥५० ॥

**व्याख्या**—वामभागे = वासगृहस्य सव्यभागे, अथवा = वा, वासगृहे = निवासभवने, शुभम् = कल्याणप्रदम्, उद्यानम् = वाटिकाम्, कुर्यात् = निर्मातव्यम्। किञ्च घर्मान्ते = निदाघान्ते, सायम् = सन्ध्याकाले, प्रातः = प्रभाते, शीतकाले = शिशिर-ऋतौ, दिनान्तरे = दिवसावसाने, वसन्ते = ऋतुराजसमये, अह्नः = दिनस्य, पञ्चमे मुहूर्ते, सेच्याः = सेचनीयाः, वाटिका-वृक्षाः, वर्षासु = वर्षाऋतौ, क्वचिदपि = कदापि, न = नहि, सेच्याः = सेचनीयाः ॥५० ॥

**हिन्दी**—निवासगृह के बाँयी ओर अथवा घर के अहाते के भीतर ही सुन्दर उद्यान बनाना चाहिए। ग्रीष्म ऋतुओं में प्रातः और सायं काल दोनों समय, जाड़े में एक दिन के बाद, वसन्त ऋतु में दुपहरिया ढलने के बाद अथवा चार दिन के बाद पौधे की सिंचाई करनी चाहिए, किन्तु वर्षा ऋतु में सिंचाई कदापि उचित नहीं है ॥५० ॥

**वामभागे इति**। वामभागे वासगृहस्येति शेषः, अथवा वासगृहे वासभूम्यन्तरे इत्यर्थः, शुभम् उद्यानं कुर्य्यात्। किञ्च घर्मान्ते निदाघावसाने सायं प्रातश्च, शीतकाले दिनान्तरे दिनावसाने वसन्ते अह्नः दिवसस्य पञ्चमे मुहूर्ते इति शेषः, सेच्याः उद्यानवृक्षा इति शेषः, वर्षासु क्वचिदपि न सेच्या इति शेषः ॥५० ॥

**फलनाशे कुलुत्थैश्च माषैर्मुद्गैर्यवैस्तिलैः।**
**शृतशीतपयःसेकः फलपुष्पाय सर्वदा॥५१॥**

**अन्वयः**—फलनाशे कुलुत्थैः माषैः मुद्गैः यवैः तिलैः शृतशीतपयःसेकः सर्वदा फलपुष्पाय भवति ॥५१ ॥

**व्याख्या**—फलानाम् = वृक्षस्य प्रसवाणाम्, नाशे = उच्छेदे सति, कुलुत्थैः = कालवृन्तैः, माषैः = कुरुविन्दैः, मुद्गैः = सूपश्रेष्ठैः, यवैः = प्रवेटैः अश्वप्रियैर्वा, तिलैः = पूतधान्यैः, सह, शृतशीतपयःसेकः—शृतैः = उष्णीकृतैः, पश्चात् शीतैः = शीतलैः, पयोभिः = सलिलैः, सेकः = सिञ्चनम्, सर्वदा = सततम्, फलाय = शस्याय, पुष्पाय = कुसुमाय, भवतीति शेषः ॥ ५१ ॥

**हिन्दी**—यदि पेड़ के फल नष्ट हो तो उसके लिए कुलथी, उडद, जौ, मूंग तथा तिल में से किसी एक को पानी में डालकर उबाल ले। फिर पानी ठंडा कर उससे सिंचाई करने पर फल पेड़ में टिकेंगे ॥ ५१ ॥

**फलनाशे इति**। फलानां नाशे वृक्षस्येति शेषः, कुलुत्थैः, माषैः, मुद्गैः, यवैः, तिलैर्वा सह शृतशीतपयोभिः उष्णीकृतैः पश्चात् शीतलैः पयोभिः जलैः सेकः सर्वदा फलपुष्पाय फलानां पुष्पाणाञ्च अनाशाय भवति ॥ ५१ ॥

**मत्स्याम्भसा तु सेकेन वृद्धिर्भवति शाखिनाम् ॥ ५२ ॥**

**अन्वयः**—मत्स्याम्भसा सेकेन शाखिनां वृद्धिः भवति ॥ ५२ ॥

**व्याख्या**—मत्स्याम्भसा = मीनप्रक्षालनजलेन, सेकेन = सिञ्चनेन, शाखिनाम् = वृक्षाणाम्, वृद्धिः = संवर्द्धनं भवति ॥ ५२ ॥

**हिन्दी**—मछलियों के धोवन से सिंचाई करने पर पौधे बढ़ते हैं ॥ ५२ ॥

**मत्स्याम्भसेति**। मत्स्याम्भसा मत्स्यक्षालनजलेन सेकेन शाखिनां वृक्षाणां वृद्धिः भवति ॥ ५२ ॥

**आविकाजशकृच्चूर्णं यवचूर्णं तिलानि च।**
**गोमांसमुदकञ्चेति सप्तरात्रं निधापयेत्।**
**उत्सेकः सर्ववृक्षाणां फलपुष्पादिवृद्धिदः ॥ ५३ ॥**

**अन्वयः**—आविकाजशकृच्चूर्णं यवचूर्णं तिलानि गोमांसमुदकञ्चेति सप्तरात्रं निधापयेत्। उत्सेकः सर्ववृक्षाणां फलानां पुष्पाणाञ्च वृद्धिदः भवति ॥ ५३ ॥

**व्याख्या**—आविकाजानाम् = एडकानाम् अजानाञ्च, यानि शकृन्ति = पुरीषाणि, तेषां चूर्णे = क्षोदे, यवचूर्णम् = यज्ञान्नपिष्टम्, तिलानि = पूतधान्यानि, गोमांसम्, उदकञ्च = जलञ्च, सम्मेल्य, सप्तरात्रम् = सप्तरात्रिपर्यन्तम्, निधापयेत् = वृक्षमूलेषु स्थायेत्। उत्सेकः = उक्तचूर्णादिमिश्रितजलसिञ्चनम्, सर्वेषाम् = सकलानां वृक्षाणाम्, फलानाम् = शस्यानाम्, पुष्पाणाम् = कुसुमादीनाम्, च, वृद्धिदः = वर्द्धको भवति ॥ ५३ ॥

**हिन्दी**—भेंड और बकरी की विष्ठा का चूर्ण, तिल और जौ के चूर्ण, गोमांस और पानी मिलाकर सात रात तक जिस पेड़ की जड़ में दिया जाय, उसकी वृद्धि निश्चित होगी ॥ ५३ ॥

**आविकेति**। आविकाजानां मेषछागलानां यानि शकृन्ति पुरीषाणि तेषां चूर्णं यवचूर्णं तिलानि गोमांसम् उदकञ्च सप्तरात्रं निधापयेत् वृक्षमूलेषु दद्यादित्यर्थः। उत्सेकः उक्तचूर्णादिदानं सर्वेषां वृक्षाणां फलानां पुष्पाणाञ्च वृद्धिदः वर्द्धकः ॥ ५३ ॥

**ये च कण्टकिनो वृक्षाः खदिराद्यास्तथा परे।**
**आरण्यकास्ते विज्ञेयास्तेषां तत्र नियोजनम् ॥ ५४ ॥**

**अन्वयः**—ये वृक्षाः कण्टकिनः अपरे खदिराद्याः ते आरण्यकाः विज्ञेयाः। तत्र तेषां नियोजयेत् ॥५४॥

**व्याख्या**—ये वृक्षाः = तरवः, कण्टकिनः = कण्टकाकीर्णाः, अपरे = अन्ये, खदिराद्याः = कपित्थप्रभृतयः, ते = वृक्षाः, आरण्यकाः = वन्याः, विज्ञेयाः = ज्ञातव्याः। तेषाम् = वृक्षाणाम्, तत्र = अरण्ये एव, नियोजयेत् = रोपयेदिति ॥५४॥

**हिन्दी**—जो पेड़ कंटीले और कत्था आदि के हैं वे जंगली हैं। उन्हें जंगल में ही लगाना चाहिए॥ ५४॥

**ये चेति**। ये वृक्षाः कण्टकिनः कण्टकावृताः, तथा अपरे खदिराद्याश्च ते आरण्यकाः वन्याः विज्ञेयाः, तेषां वृक्षाणां तत्र अरण्ये नियोजनं रोपणं कार्य्यमिति शेषः॥५४॥

**खदिराश्मन्तशाकाग्निमन्थश्योनाकबब्बुलाः ।**
**तमालशालकुटजधवार्जुनपलाशकाः ॥५५॥**
**सप्तपर्णशमीतुन्नदेवदारुविकङ्कताः ।**
**करमर्देङ्गुदीभूर्जविषमुष्टिकरीरकाः ॥५६॥**
**शल्लकी काश्मरी पाठा तिन्दुको बीजहारकः ।**
**हरीतकी च भल्लातः शम्पाकोऽर्कश्च पुष्करः ॥५७॥**
**अरिमेदश्च पीतद्रुः शाल्मलिश्च विभीतकः ।**
**नरवेलो महावृक्षोऽपरे ये मधुकादयः ॥५८॥**
**प्रतानवत्यः स्तम्बिन्यो गुल्मिन्यश्च तथैव च ।**
**ग्राम्या ग्रामे वने वन्या नियोज्यास्ते प्रयत्नतः ॥५९॥**

**अन्वयः**—खदिराश्मन्तशाकाग्निमन्थश्योनाकबब्बुलाः तमालशालकुटजधवार्जुनपलाशकाः सप्तपर्णशमीतुन्नदेवदारुविकङ्कताः करमर्देङ्गुदीभूर्जविषमुष्टिकरीरकाः शल्लकी काश्मरी पाठा तिन्दुकः बीजहारकः हरीतकी भल्लातः शम्पाकः अर्कः पुष्करः अरिमेदः पीतद्रुः शाल्मलिः विभीतकः नरवेलः महावृक्षः च तथा मधुकादयः अपरे ये वृक्षाः याश्च प्रतानवत्यः स्तम्बिन्यः गुल्मिन्यः ते ग्राम्याः ग्रामे वन्याः वने प्रयत्नतः नियोज्याः॥५५-५९॥

**व्याख्या**—खदिरः = कपित्थः, अश्मन्तशाकः = सागवानः, अग्निमन्थः = अरणी, श्योनाकः = श्येनिकः बब्बुलः = बर्बुरः, कण्टालुश्चेति, तमालः = कालस्कन्धः, शालः = शङ्कुवृक्षः, कुटजः = आवखोटः, धवः = पिशाचवृक्षः, अर्जुनः = अरण्यवृक्षः, पलाशः = किंशुकः, सप्तपर्णः = सप्तच्छदः, शमी = शिवा वा केशमथनी, तुन्नः = नदीवृक्षः, देवदारुः = अमर्त्यतरुः, विकङ्कतः = विकङ्कः, करमर्दः = 'करौंदा' इति भाषायाम्, इङ्गुदी = वृक्षविशेषः, भूर्जः = भोजपत्रवृक्षः, विषमुष्टिः = कुचिला, करीरकः = क्रकरः गूढपत्रो वेति, शल्लकी = 'सलई' इति ख्यातः, काश्मरी = खम्भारः, पाठा = पाडरः, तिन्दुकः = कालस्कन्धः, बीजसारकः = विजयसारः, हरीतकी = अभया वा रसायनफला, भल्लातः = शम्पाकः, अर्कः = मन्दारः, पुष्करः = पोहकरः, अरिमेदः = दुर्गन्धः, पीतद्रुः = खदिरः, शाल्मलिः = तूलवृक्षः, विभीतकः = कलिद्रुमः भूतवासो वा, नरवेलः, महावृक्षः = विशालतरुः, तथा मधुकादयः = मधुद्रुमादयः, अपरे = अन्ये, ये = द्रुमाः, याश्च प्रतानवत्यः = दीर्घशाखिनः, स्तम्बिन्यः = स्तबकशालिन्यः, गुल्मिन्यः = गुल्मवत्यः, मूलवत्यश्च लताः, ते = ताश्च,

ग्राम्याश्चेत् = ग्रामिका भवेत्, ग्रामे = आवसथे, चेत् = यदि, वन्याः = आरण्यकाः, तर्हि वने = अरण्ये, प्रयत्नतः = सायासेन, नियोज्याः = रोपणीयाः इति ॥५५-५९ ॥

**हिन्दी**—खैर, अश्मन्तक (वृक्ष-विशेष, जिसके रेशों से ब्राह्मण की तगड़ी बनाई जाती है), सागवान, अरणी के पेड़, सोनापाठा, बबूल, आबनूस, सखुआ, कुटज (खोरयाँ), अर्जुन, पलाश, धव (एक प्रकार का पेड़), छतवन, शमी, तूत, देवदारु, विकङ्कत, करौंदा, इंगुदी, भोजपत्र, कुचिला, करीर, सलई, खम्भार, पाढर, तेंदू, विजयसार, हरड़, भिलावा, शम्पाक, आक, पोहकर, दुर्गन्ध, खैर, पीतद्रु, सेमल, बहेड़ा नरवेल, महावृक्ष और अन्य जो महुआ आदि एवं लम्बी-पतली डालों वाली, गुच्छों वाली, गुल्मों वाली लताएँ हैं—इनमें जो गाँव में होने वाली हैं, इन्हें गाँव में और जो जंगली हैं, इन्हें जंगल में ही लगाना चाहिए ॥५५-५९ ॥

**खदिरेत्यादि**। खदिरः, अश्मन्तशाकः, अग्निमन्थः, श्योनाकः, बब्बुलः, तमालः, शालः, कुटजः, धवः, अर्जुनः, पलाशः, सप्तपर्णः, शमी, तुन्नः, देवदारुः, विकङ्कतः, करमर्दः, इङ्गुदी, भूर्जः, विषमुष्टिः, करीरकः, शल्लकी, काश्मरी, पाठा, तिन्दुकः, बीजसारकः, हरीतकी, भल्लातः, शम्पाकः, अर्कः, पुष्करः, अरिमेदः, पीतद्रुः शाल्मलिः, विभीतकः, नरवेलः, महावृक्षः तथा मधूकादयः अपरे ये वृक्षाः, याश्च प्रतानवत्यः विस्तारवत्यः स्तम्बिन्यः गुच्छवत्यः गुल्मिन्यः मूलवत्यश्च लताः, ते ताश्च ग्राम्याश्चेत् ग्रामे, वन्याश्चेत् वने प्रयत्नतः नियोज्याः रोपणीयाः ॥५५-५९ ॥

**कूपवापीपुष्करिण्यस्तडागाः सुगमास्तथा।**
**कार्य्याः खाताद् द्वित्रिगुणविस्तारपदधानिकाः।**
**यथा तथा ह्यनेकाः स्युः राष्ट्रे स्याद्विपुलं जलम् ॥ ६० ॥**

**अन्वयः**—कूपवापीपुष्करिण्यः तडागाः तथा कार्याः यथा खातात् द्वित्रिगुणविस्तारपदधानिकाः सुगमाश्च अनेकाः स्युः। राष्ट्रे विपुलं जलं स्यात् ॥६० ॥

**व्याख्या**—कूपाः = जलरन्ध्राः, वाप्यः = दीर्घिकाः, पुष्करिण्यः = कासाराः, तडागाश्च = सरोवराश्च, तथा कार्याः = विधेयाः, यथा = येन, खातात् = परिखातः, द्वित्रिगुणाः = द्विगुणाः वा त्रिगुणाः, विस्ताराः = विस्तृताः, यासां तादृश्यः, पदधानिकाः = पदस्थापनस्थानानि, येषां = यासां, वा तादृशाः तादृश्यश्च, सुगमाश्च = सुकराश्च, अनेकाः = एकाधिकाश्च, स्युः = भवेयुः। तथा कृते सति, राष्ट्रे = जनपदे, विपुलम् = अत्यधिकम्, जलम् = सलिलम्, स्यात् = भवेत् ॥६० ॥

**हिन्दी**—कुआँ, बावड़ी, छोटा या बड़ा तालाब, जलाशय प्रभृति ऐसे बनवाने चाहिए जिसमें लोग आसानी से उतर सकें। जलाशय की गहराई से दुगुना या तीन गुना फैलाव में उसके चारों ओर सीढियाँ बनवानी चाहिए ॥६० ॥

**कूपेति**। कूपाः वाप्यः दीर्घिकाः पुष्करिण्यः तडागाश्च तथा कार्य्याः, यथा खातात् द्वित्रिगुणाः विस्ताराः यासां तादृश्यः पदधानिकाः पादसञ्चारस्थानानि येषां यासां वा तादृशाः तादृश्यश्च सुगमाश्च अनेकाश्च स्युः। तथा सति राष्ट्रे विपुलं प्रचुरं जलं स्यात् ॥६० ॥

**नदीनां सेतवः कार्य्या विविधाः सुमनोहराः।**
**नौकादिजलयानानि पारगाणि नदीषु च ॥ ६१ ॥**

**अन्वयः**—नदीनां विविधाः सुमनोहराः सेतवः कार्याः, च नदीषु पारगाणि नौकादिजलयानानि ॥६१ ॥

**व्याख्या**—नदीनाम् = तटिनीनाम्, विविधाः = अनेकधाः, सुमनोहराः = सुष्ठुतया हृदयहारिणः, सेतवः = वारणाः, कार्याः = निर्मातव्याः, च = पुनः, नदीषु = स्रोतस्विनीषु, पारगाणि = पारगमनसाधनानि, नौकादि = तरण्यादि, जलयानानि = पोताश्च, रक्षणीयानीति ॥ ६१ ॥

**हिन्दी**—नदियों में अनेक मनोहर पुलों का निर्माण करवाना चाहिए। साथ ही नदियों को पार करने के लिए नाव एवं जहाजों की भी व्यवस्था करनी चाहिए ॥ ६१ ॥

**नदीनामिति**। नदीनां विविधाः सुमनोहराः सेतवः कार्य्याः, तथा नदीषु पारगाणि पारगमनसाधनानि नौकादिजलयानानि रक्षणीयानीति शेषः ॥ ६१ ॥

**यज्जातिपूज्यो यो देवस्तद्विद्यायाश्च यो गुरुः।**
**तदालयानि तज्जातिगृहपङ्क्तिमुखे न्यसेत् ॥ ६२ ॥**

**अन्वयः**—यः देवः यज्जातिपूज्यः तद्विद्यायाः च यः गुरुः तज्जातिगृहपङ्क्तिमुखे तत् आलयानि न्यसेत् ॥ ॥ ६२ ॥

**व्याख्या**—यः = यत्, देवः = सुरः, यज्जातिपूज्यः—यत् = यस्याः, जातेः = वर्णस्य, पूज्यः = आराध्यः, तत् = तेषाम्, विद्यायाः = ज्ञानस्य, यः गुरुः = आचार्यः, तत् = तेषाम्, आलयानि = गृहाणि, तत् = तेषाम्, जातीनाम् = वर्णानाम्, गृहपङ्क्तिमुखे = भवनश्रेण्यग्रे, न्यसेत् = स्थापयेत् ॥ ६२ ॥

**हिन्दी**—जिस जाति के जो आराध्य देवता हो तथा उन्हें विद्या सिखलाने वाला जो गुरु हो, उनका मन्दिर या घर उस जाति के लोगों की गृहशृंखला के सामने होना चाहिए ॥ ६२ ॥

**यदिति**। यो देवः यज्जातिपूज्यः यस्याः जातेः पूजनीयः, तद्विद्यायाः तद्देवसम्बन्धिन्याः विद्यायाः यो गुरुः, तदालयानि तस्य गृहाणि तज्जातीनां गृहपङ्क्तिमुखे गृहश्रेणीसम्मुखे न्यसेत् कुर्य्यात् ॥ ६२ ॥

**शृङ्गाटके ग्राममध्ये विष्णोर्वा शङ्करस्य च।**
**गणेशस्य रवेर्देव्याः प्रासादान् क्रमतो न्यसेत् ॥ ६३ ॥**

**अन्वयः**—शृङ्गाटके वा ग्राममध्ये विष्णोः शङ्करस्य गणेशस्य रवेः च देव्याः क्रमतः प्रासादान् न्यसेत् ॥ ६३ ॥

**व्याख्या**—शृङ्गाटके = ग्रामस्य चतुष्पथे वा, ग्राममध्ये = आवसथान्तराले, विष्णोः = हरेः, शङ्करस्य = हरस्य, गणेशस्य = विनायकस्य, रवेः = सूर्यस्य, देव्याः = दुर्गायाः, क्रमतः = क्रमेण, प्रासादान् = देवालयान्, न्यसेत् = स्थापयेत् ॥ ६३ ॥

**हिन्दी**—गाँव के चौराहे या गाँव के बीच में विष्णु, शिव, गणेश, सूर्य और देवी—इन पाँच देवताओं का मन्दिर क्रमशः बनवाना चाहिए ॥ ६३ ॥

**शृङ्गाटके इति**। शृङ्गाटके चतुष्पथे वा ग्राममध्ये विष्णोः शङ्करस्य गणेशस्य रवेः सूर्य्यस्य देव्याश्च प्रासादान् भवनानि क्रमात् न्यसेत् कुर्य्यात् ॥ ६३ ॥

**मेर्वादिषोडशविधलक्षणान् सुमनोहरान्।**
**वर्त्तुलांश्चतुरस्रान् वा यन्त्राकारान् समण्डपान् ॥ ६४ ॥**

**प्राकारगोपुरगणयुतान् द्वित्रिगुणोच्छ्रितान्।**
**यथोक्तान्तःसुप्रतिमान् जलमूलान्विचित्रितान्॥ ६५॥**

**अन्वयः**—मेर्वादिषोडशविधलक्षणान् सुमनोहरान् वर्त्तुलान् चतुरस्रान् वा यन्त्राकारान् समण्डपान् प्राकारगोपुरगणयुतान् द्वित्रिगुणोच्छ्रितान् यथोक्तान्तःसुप्रतिमान् जलमूलान् विचित्रितान्॥ ६४-६५॥

**व्याख्या**—मेरुः = सुरालयः, आदिर्येषां तादृशानि षोडशविधानि = षोडशप्रकाराणि, लक्षणानि = अभिज्ञानानि, येषां तान्, सुमनोहरान् = सुष्ठुहृदयहारिणः, वर्त्तुलान् = गोलाकारान्, चतुरस्रान् = चतुष्कोणान्, यन्त्राकारान् = यन्त्रस्वरूपान्, समण्डपान् = मण्डपयुक्तान्, प्राकारैः = प्राचीरैः, गोपुरैः = पुरद्वारैः, गणैः = सेवकसमूहैः, युतान् = समन्वितान्, द्वित्रिगुणोच्छ्रितान् = द्विगुणितान् त्रिगुणितान् वा, उच्छ्रितान् = दैर्घ्यविस्तारापेक्षयेति, यथोक्तानाम् = पूर्वनिर्दिष्टानाम्, अन्तः = अन्तराले मध्ये वा, सुप्रतिमान् = सुन्दरदेवमूर्तियुक्तान्, जलमूलान् = चतुर्दिग् सलिल-युक्तान्, तथा विचित्रितान् = विशिष्टरूपेण चित्रितान्, प्रासादान् इति पूर्वेणान्वयः॥ ६४-६५॥

**हिन्दी**—जो मन्दिर मेरु आदि सोलह प्रकार के लक्षणों से युक्त, अत्यन्त आकर्षक गोलाकार, चौकोर या यंत्राकार युक्त मण्डप, परकोटा तथा प्रधान विशाल द्वारों से युक्त, सेवक-समूहों से युक्त, लम्बाई चौड़ाई से दूना या तिगुना ऊँचा हो, जिसके बीच में शास्त्रोक्त रीति से बनी सुन्दर देवमूर्तियाँ रखी हों और जिसके चारों ओर खाई में पानी भरा हो तथा जिसमें अनेक तरह के चित्र बने हों॥ ६४-६५॥

प्रासादान् विशिनष्टि—**मेर्वादीति**। **प्राकारेति**। मेरुः आदिर्येषां तादृशानि षोडशविधानि लक्षणानि येषां तान्। सुमनोहरान् वर्त्तुलान् गोलाकृतीन् चतुरस्रान् चतुष्कोणान् यन्त्राकारान् संमण्डपान् सगृहान् प्राकारैः प्राचीरैः, गोपुरैः पुरद्वारैः गणैः परिचारकवर्गैश्च युतान् द्वित्रिगुणोच्छ्रितान् दैर्घ्यविस्तारापेक्षयेति शेषः, यथोक्तानामन्तः मध्ये शोभना प्रतिमा येषां तान् जलमूलान् जलयुक्तान् तथा विचित्रितान् विशेषेण चित्रितान् प्रासादानिति पूर्वेणान्वयः॥ ६४-६५॥

**रम्यः सहस्रशिखरः सपादशतभूमिकः।**
**सहस्रहस्तविस्तारोच्छ्रायः स्यान्मेरुसंज्ञकः॥ ६६॥**

**अन्वयः**—सहस्रशिखरः सपादशतभूमिकः, सहस्रहस्तविस्तारोच्छ्रायः मेरुसंज्ञकः स्यात्॥ ६६॥

**व्याख्या**—सहस्रम् = दशशतम्, शिखरम् = सानुम्, यस्य सः, पादशतैः = शतपादयुक्तैः, सह वर्त्तमाना भूमिः = पृथिवीम्, यस्य तथाभूतः, सहस्रहस्तविस्तारः = दशशतहस्तदीर्घः, तथा सहस्रहस्तोच्छ्रायः = उन्नतः, रम्यः = आकर्षकः, मन्दिरः, मेरुसंज्ञकः = मेरुनाम्ना ख्यातो भवतीति॥ ६६॥

**हिन्दी**—जिस मन्दिर में एक हजार कंगूरे हों, एक सौ पचीस पग धरती में बने हों तथा हजार हाथ जिसका विस्तार एवं ऊँचाई हो, उसे मेरु कहा जाता है॥ ६६॥

मेरुप्रभृतीन् क्रमशः लक्षयति—**रम्य इति**। सहस्रं शिखरं यस्य सः सहस्रशृङ्ग इत्यर्थः, पादशतैः सह वर्त्तमाना भूमिः यस्य तथाभूतः, सहस्रहस्तविस्तारः तथा सहस्रहस्तोन्नतः रम्यः प्रासादः मेरुसंज्ञकः मेरुरिति प्रसिद्धः॥ ६६॥

**ततस्ततोऽष्टांशहीना अपरे मन्दरादयः ॥ ६७ ॥**

**अन्वयः**—अपरे मन्दरादयः ततः अष्टांशहीनाः ॥ ६७ ॥

**व्याख्या**—अपरे = अन्ये, मेरुभिन्नाः मन्दरादयः, ततस्ततः = तत्पश्चात्, अष्टांशहीनाः = भागाष्टन्यूनाः। तद्यथा—मेरोः मन्दराष्टांशहीनः, अक्षमाली मन्दराष्टांशहीनः द्युमणिः ऋक्षमालिनः अष्टांशहीनः ॥ ६७ ॥

**हिन्दी**—इससे उत्तरोत्तर अष्टांशहीन अन्य मन्दर आदि नाम वाले मन्दिर हैं ॥ ६७ ॥

**तत इति**। अपरे मेरुभिन्नाः मन्दरादयः ततः ततः अष्टांशहीनाः, तथा च मन्दरः मेरोः अष्टांशहीनः, ऋक्षमाली मन्दरात् अष्टांशहीनः, द्युमणिः ऋक्षमालिनः अष्टांशहीन इत्यादि ॥ ६७ ॥

**मन्दरो ऋक्षमाली च द्युमणिश्चन्द्रशेखरः।**
**माल्यवान् पारियात्रश्च रत्नशीर्षश्च धातुमान् ॥ ६८ ॥**
**पद्मकोशः पुष्पहासः श्रीकरः स्वस्तिकाभिधः।**
**महापद्मः पद्मकूटः षोडशो विजयाभिधः ॥ ६९ ॥**

अन्वयो व्याख्या च सहैव नाममात्रोच्चारणत्वात्। अन्यान् पञ्चदश मन्दरादीन् निर्वक्ति—मन्दरः, ऋक्षमाली, द्युमणिः, चन्द्रशेखरः, माल्यवान्, पारियात्रः, रत्नशीर्षः, धातुमान्, पद्मकोशः पुष्पहासः श्रीकरः स्वस्तिकाभिधः महापद्मः, पद्मकूटः तथा विजयः इति प्रसिद्धाः षोडशः ॥ ६८-६९ ॥

**हिन्दी**—जिनके नाम क्रमशः मन्दर, ऋक्षमाली, द्युमणि, चन्द्रशेखर, माल्यवान्, पारियात्र, रत्नशीर्ष, धातुमान्, पद्मकोश, पुष्पहास, श्रीकर, स्वस्तिक, महापद्म, पद्मकूट और विजय—ये पन्द्रह ( आकृति के आधार पर मन्दिर के नाम ) हैं ॥ ६८-६९ ॥

अपरान् पञ्चदश मन्दरादीन् निर्वक्ति—**मन्दर** इत्यादि। मन्दरः, ऋक्षमाली, द्युमणिः, चन्द्रशेखरः, माल्यवान्, पारियात्रः, रत्नशीर्षः, धातुमान्, पद्मकोशः, पुष्पहासः, श्रीकरः, स्वस्तिकाभिधः स्वस्तिक इति प्रसिद्धः महापद्मः, पद्मकूटः तथा विजयाभिधः विजय इति प्रसिद्धः षोडशः ॥ ६८-६९ ॥

**तन्मण्डपश्च तत्तुल्यः पादन्यूनोच्छ्रितः पुरः।**
**स्वाराध्यदेवताध्यानैः प्रतिमास्तेषु योजयेत् ॥ ७० ॥**

**अन्वयः**—तत् मण्डपः तत्तुल्यः पादन्यूनोच्छ्रितः पुरः। तेषु स्वाराध्यदेवताध्यानैः प्रतिमाः योजयेत् ॥ ७० ॥

**व्याख्या**—तत् = तेषु मेर्वादयेषु, मण्डपः = देवगृहम्, तत् = तेषाम्, देवानाम्, तुल्यः = सदृशः, पादन्यूनोच्छ्रितः = चतुर्थांशेन हीनोन्नतः, पुरः = अग्रे कार्यः। तेषु = मण्डपेषु, स्वाराध्यायाः—स्वस्य = आत्मनः, आराध्यायाः = पूजनीयस्य, देवताध्यानैः = आराध्यानुचिन्तनैः, प्रतिमाः = तन्मूर्त्तीः, योजयेत् = स्थापयेत् ॥ ७० ॥

**हिन्दी**—उन मन्दिरों के मण्डप उन्हीं के अनुरूप उनकी ऊँचाई से चतुर्थांश कम ऊँचे आगे की ओर बनाना चाहिए। उनमें अपने आराध्य देवताओं के ध्यान के अनुसार देवमूर्त्तियाँ स्थापित करनी चाहिए ॥ ७० ॥

**तदिति**। तेषु मेरुप्रभृतिषु मण्डपः देवताभवनं तत्तुल्यः तदनुरूपः पादन्यूनोच्छ्रितः चतुर्थांशेन

हीनोच्छ्रायः पुरः पुरतः अग्रे कार्य्य इति शेषः, अत्र मण्डप इति पुंलिङ्गनिर्देश आर्षः। तेषु मण्डपेषु स्वाराध्यायाः देवतायाः ध्यानैः चिन्तनैः प्रतिमाः योजयेत् विन्यसेत् ॥७०॥

**ध्यानयोगस्य संसिद्ध्यै प्रतिमालक्षणं स्मृतम्।**
**प्रतिमाकारको मर्त्त्यो यथा ध्यानरतो भवेत्।**
**तथा नान्येन मार्गेण प्रत्यक्षेणापि वा खलु॥७१॥**

**अन्वयः**—ध्यानयोगस्य संसिद्ध्यै प्रतिमाकारकः मर्त्यः यथा ध्यानरतो भवेत् तथा प्रतिमालक्षणं स्मृतम्। तथा अन्येन मार्गेण प्रत्यक्षेणापि न खलु॥७१॥

**व्याख्या**—ध्यानयोगस्य = मोक्षोपायस्य, संसिद्ध्यै = सुष्ठुतया निष्पत्त्यै, प्रतिमाकारकः = मूर्त्तिकारः, मर्त्यः = मानवः, यथा = येन प्रकारेण, ध्यानरतः = अनुचिन्तनतत्परः, भवेत् = स्यात्, तथा = तेन रूपेण, प्रतिमायाः = मूर्त्तेः, लक्षणम् = अभिज्ञानम्, स्मृतम् = कथितम्। अन्येन = एतद्भिन्नेन, मार्गेण = पथा, प्रत्यक्षेणापि = अवलोकितेनापि, न = नहि, खलु = निश्चयेनेति॥७१॥

**हिन्दी**—ध्यानयोग की भलीभाँति सिद्धि के लिए प्रतिमा रूपी साधन मुख्य कहा गया है। क्योंकि मूर्त्तिकार मानव जैसे ध्यान में लीन हो जाता है, वैसे निश्चय ही अन्य मार्ग से या प्रत्यक्ष देवदर्शन से भी ध्यान में लीन नहीं हो सकता है॥७१॥

**ध्यानेति**। ध्यानयोगस्य संसिद्ध्यै सम्यक् सिद्धये प्रतिमाकारकः प्रतिमानिर्माणकर्त्ता मर्त्त्यः यथा ध्यानपरः भवेत् तथा प्रतिमालक्षणं स्मृतं निरूपितम्, अन्येन मार्गेण पथा प्रकारेणेत्यर्थः, प्रत्यक्षेणापि दृष्टेनापि न खलु नैव॥७१॥

**प्रतिमा सैकती पैष्टी लेख्या लेप्या च मृण्मयी।**
**वार्क्षी पाषाणधातूत्था स्थिरा ज्ञेया यथोत्तरा॥७२॥**

**अन्वयः**—प्रतिमा सैकती पैष्टी लेख्या लेप्या मृण्यमयी वार्क्षी पाषाणधातूत्था च यथोत्तरा स्थिरा ज्ञेया॥७२॥

**व्याख्या**—प्रतिमा = अनुकृतिः, सैकती = सिकतानिर्मिता, पैष्टी = चूर्णिततण्डुलादिनिर्मिता, लेख्या = चित्रिता, लेप्या = लेपमयी, मृण्मयी = मृत्तिकानिर्मिता, वार्क्षी = काष्ठनिर्मिता, पाषाण-निर्मिता, धातूत्था = धातुनिर्मिता च, यथोत्तरा = पूर्वापेक्षया चोत्तरा, स्थिरा = स्थायिनी, ज्ञेया = बोध्या॥७२॥

**हिन्दी**—प्रतिमा बालू की, चावल आदि के पिसान की, चित्र की, लेप की, मिट्टी की, काठ की, पत्थर की और धातु की बनती है। ये उत्तरोत्तर अधिक स्थायी होती हैं॥७२॥

सम्प्रति प्रतिमाया उपादानान्याह—**प्रतिमेति**। प्रतिमा सैकती सिकतामयी, पैष्टी पिष्टमयी, लेख्या चित्रिता, लेप्या लेपमयी, मृण्मयी, वार्क्षी, दारुमयी, पाषाणमयी, धातूत्था धातुमयी च यथोत्तरा स्थिरा स्थायिनी ज्ञेया, तथा च सैकतीमपेक्ष्य पैष्टी, पैष्टीमपेक्ष्य लेख्या, लेख्यामपेक्ष्य मृण्मयी, मृण्मयीमपेक्ष्य वार्क्षी, वार्क्षीमपेक्ष्य पाषाणमयी, पाषाणमयीमपेक्ष्य धातूमयी स्थिरेति निष्कर्षः॥७२॥

**यथोक्तावयवैः पूर्णा पुण्यदा सुमनोहरा।**
**अन्यथायुर्धनहरा नित्यं दुःखविवर्द्धिनी॥७३॥**

**अन्वयः**—यथोक्तावयवैः पूर्णा सुमनोहरा च पुण्यदा। अन्यथा आयुर्धनहरा नित्यं दुःखविवर्धिनी ॥७३ ॥

**व्याख्या**—यथोक्तेन = यथाशास्त्रनिर्दिष्टेन, अवयवेन = गात्रेण, पूर्णा = परिपूर्णा, प्रतिमा = मूर्त्तिः, सुमनोहरा = सुष्ठुचेतोहरा, च = पुनः, पुण्यदा = पुण्यप्रदा। अन्यथा = विपरीते सति, आयुः = जीवनम्, धनम् = वित्तञ्च, हरा = हारिणी च, तथा नित्यम् = सततम्, दुःखविवर्द्धिनी = कष्टदायिनी च भवति ॥७३ ॥

**हिन्दी**—शास्त्रवर्णित नियम के अनुसार यदि प्रतिमा सर्वाङ्गपूर्ण हो तो वह पुण्य देने वाली एवं मनोहारिणी होती है। अन्यथा निरन्तर दुःख तो बढ़ाती ही है, आयु और धन भी हर लेती है ॥७३ ॥

**यथोक्तेति**। यथोक्तेन यथाशास्त्रकथितेन अवयवेन पूर्णा प्रतिमा पुण्यदा सुमनोहरा च। अन्यथा आयुर्धनहरा जीवनहारिणी चेत्यर्थः, तथा नित्यं सततं दुःखविवर्द्धिनी भवति ॥७३ ॥

**देवानां प्रतिबिम्बानि कुर्य्याच्छ्रेयस्कराणि च।**
**स्वर्ग्याणि मानवादीनामस्वर्ग्याण्यशुभानि च ॥७४ ॥**

**अन्वयः**—देवानां प्रतिबिम्बानि श्रेयस्कराणि च कुर्यात् स्वर्ग्याणि च। मानवादीनाम् अशुभानि अस्वर्ग्याणि चेति ॥७४ ॥

**व्याख्या**—देवानाम् = देवतानाम्, प्रतिबिम्बानि = प्रतिरूपाणि, श्रेयस्कराणि = कल्याणसाधकानि, कुर्यात् = सम्पादयेत्, च = पुनः, स्वर्ग्याणि = स्वर्गसाधकानि। मानवादीनाम् = मनुष्यप्रभृतीनां, प्रतिमा, अशुभानि = अमङ्गलानि, अस्वर्ग्याणि = नरकाय, च भवति ॥७४ ॥

**हिन्दी**—देवप्रतिमा की स्थापना शुभद एवं स्वर्गसाधक होती है, किन्तु मानवादि की प्रतिमा की स्थापना अमंगलदायक एवं नरक के लिए ही होती है ॥७४ ॥

**देवानामिति**। देवानां प्रतिबिम्बानि प्रतिमाः श्रेयस्कराणि शुभकराणि कुर्य्यात्, तानि मानवादीनां स्वर्ग्याणि स्वर्गसाधनानि, अशुभानि तु अस्वर्ग्याणि भवन्तीति शेषः ॥७४ ॥

**मानतो नाधिकं हीनं तद्बिम्बं रम्यमुच्यते ॥७५ ॥**

**अन्वयः**—तद्बिम्बं मानतः अधिकं हीनं वा रम्यं न उच्यते ॥७५ ॥

**व्याख्या**—तत् = तेषां देवतानाम्, बिम्बम् = प्रतिमूर्त्तिः, मानतः = परिमाणात्, अधिकम् = प्रभूतम्, हीनम् = न्यूनम्, वा रम्यम् = रमणीयम्, न = नहि, उच्यते = कथ्यते ॥७५ ॥

**हिन्दी**—देवप्रतिमा शास्त्रोक्त मान से न अधिक और न कम होने पर ही रमणीय एवं कल्याणकारी होती है ॥७५ ॥

**मानत इति**। तद्बिम्बं तेषां देवानां बिम्बं प्रतिमा मानतः परिमाणात् अधिकं हीनं वा रम्यं श्रेयस्करं न उच्यते, तस्मात् यथोक्तानुरूपमेव कर्त्तव्यमिति भावः ॥७५ ॥

**अपि श्रेयस्करं नृणां देवबिम्बमलक्षणम्।**
**सलक्षणं मर्त्यबिम्बं न हि श्रेयस्करं सदा ॥७६ ॥**

**अन्वयः**—अलक्षणं देवबिम्बं नृणां श्रेयस्करं, किन्तु सलक्षणं मर्त्यबिम्बं सदा नहि श्रेयस्करम् ॥७६ ॥

**व्याख्या**—अलक्षणम् = विपरीतलक्षणमपि, देवबिम्बम् = देवतायाः प्रतिमा, नृणाम् = पुरुषाणाम्, श्रेयस्करम् = कल्याणकरं भवति। किञ्च, सलक्षणम् = शुभलक्षणयुक्तमपि, मर्त्यबिम्बम् = मनुष्यमूर्त्तिः, सदा = सततम्, नहि = नैव, श्रेयस्करम् = शुभावहं भवति ॥७६ ॥

**हिन्दी**—देवप्रतिमा शास्त्रोक्त लक्षणों से रहित होने के बावजूद मनुष्य के लिए कल्याण-कारक होती है। किन्तु मनुष्य की प्रतिमा सुलक्षण युक्त होने पर भी सदा कल्याणकारिणी नहीं ही होती है ॥७६ ॥

**अपीति**। अलक्षणं विरुद्धलक्षणमपि देवबिम्बं देवमूर्त्तिः नृणां श्रेयस्करं, किन्तु सलक्षणं सुष्ठु लक्षणयुक्तमपि मर्त्यबिम्बं मानवप्रतिमूर्त्तिः सदा नहि नैव श्रेयस्करं, तस्मात् मानवप्रतिमूर्त्तिर्नैव रक्षणीयेति भावः ॥७६ ॥

**सात्त्विकी राजसी देवप्रतिमा तामसी त्रिधा।**
**विष्ण्वादीनां च या यत्र योग्या पूज्या तु तादृशी ॥७७॥**

**अन्वयः**—देवप्रतिमा त्रिधा-सात्त्विकी, राजसी तामसी च। यत्र विष्ण्वादीनां या योग्या तादृशी तु पूज्या ॥७७ ॥

**व्याख्या**—देवप्रतिमा = देवानां मूर्त्तयः, त्रिधा = त्रिप्रकारकाः भवन्ति, सात्त्विकी = सतोगुणसम्पन्ना, राजसी = रजोगुणसम्पन्ना, तामसी = तमोगुणसमन्विता, च। यत्र = यस्मिन् स्थाने, विष्ण्वादीनाम् = विष्णुप्रभृतीनाम्, या = प्रतिमा, योग्या = अनुरूपा, तादृशी = तदनुरूपा, पूज्या = पूजनीयेति ॥७७ ॥

**हिन्दी**—विष्णु प्रभृति देवताओं की प्रतिमा तीन तरह की होती हैं—सात्त्विकी, राजसी और तामसी। फिर जहाँ के लिए जो प्रतिमा उपयुक्त हो वहाँ उसी की पूजा करनी चाहिए ॥७७ ॥

**सात्त्विकीति**। देवप्रतिमा त्रिधा, सात्त्विकी राजसी तामसी च। यत्र विष्ण्वादीनां विष्णुप्रभृतीनां या मूर्तिः योग्या यदनुरूपा तादृशी पूज्या तदनुरूपा पूजा कार्य्येत्यर्थः ॥७७ ॥

**योगमुद्रान्विता स्वस्था वराभयकरान्विता।**
**देवेन्द्रादिस्तुतनुता सात्त्विकी सा प्रकीर्त्तिता ॥ ७८ ॥**

**अन्वयः**—या योगमुद्रान्विता स्वस्था वराभयकरान्विता देवेन्द्रादिस्तुतनुता सा सात्त्विकी प्रकीर्त्तिता ॥७८ ॥

**व्याख्या**—या = प्रतिमा, योगमुद्रान्विता—योगस्य = चित्तवृत्तिनिरोधस्य, या मुद्रा = शरीरस्य तदवयवानाञ्च स्थितिविशेषः, तया अन्विता = युक्ता, स्वस्था = स्वभावस्थिता, वराभय-करान्विता = अनुग्रहाभयदानोद्यतभुजा, तथा देवेन्द्रादिभिः = सुरेन्द्रप्रभृतिभिः, स्तुता = ईडिता, नुता = नमस्कृता, सा मूर्त्तिः सात्त्विकी = सतोगुणसम्पन्ना, प्रकीर्त्तिता = कथितेति ॥७८ ॥

**हिन्दी**—जो प्रतिमा योगमुद्रायुक्त, स्वाभाविक अवस्था में स्थित, वरदान और अभयदान देने की मुद्रा से युक्त हाथों वाली है तथा इन्द्र प्रभृति देवगण जिसकी स्तुति और नुति कर रहे हों, वह प्रतिमा सात्त्विकी कहलाती है ॥७८ ॥

**योगमुद्रेति**। या मूर्त्तिः योगमुद्रान्विता योगेन युक्त्या मुद्रया यथोक्तभङ्ग्या च अन्विता, स्वस्था स्वभावस्थिता वराभयकरान्विता वरदानाभयदानोद्यतभुजा, तथा देवेन्द्रादिभिः स्तुता नुता प्रणता, सा सात्त्विकी प्रकीर्त्तिता ॥७८ ॥

**तिष्ठन्ती वाहनस्था वा नानाभरणभूषिता।**
**या शस्त्रास्त्राभयवरकरा सा राजसी स्मृता॥७९॥**

**अन्वयः**—या वाहनस्था तिष्ठन्ती नानाभरणभूषिता तथा शस्त्रास्त्राभयकरा, सा राजसी स्मृता॥७९॥

**व्याख्या**—या = प्रतिमा, वाहने = याने, स्थिता, नानाभरणभूषिता = अनेका- लङ्कारशोभिता, तथा शस्त्रास्त्राभयवरकरा = करैरायुधधारिणी, अभयदायिनी वरदायिनी च, सा = मूर्त्तिः, राजसी = रजोगुणसम्पन्ना, स्मृता = कथितेति॥७९॥

**हिन्दी**—जो प्रतिमा किसी सवारी पर बैठी हो, अनेक आभूषणों से सुशोभित हो, अस्त्र-शस्त्र से सुसज्जित हो तथा वरदान एवं अभयदान की मुद्रा में हो तो उसे राजसी प्रतिमा कहते हैं॥७९॥

**तिष्ठन्तीति**। या मूर्त्तिः वाहने सिंहादौ स्थिता नानाभरणभूषिता तथा शस्त्रास्त्राभयवरकरा करैः शस्त्रधारिणी अस्त्रधारिणी अभयदायिनी वरदायिनी चेत्यर्थः, सा राजसी स्मृता॥७९॥

**शस्त्रास्त्रैर्दैत्यहन्त्री या ह्युग्ररूपधरा सदा।**
**युद्धाभिनन्दिनी सा तु तामसी प्रतिमोच्यते॥८०॥**

**अन्वयः**—या शस्त्रास्त्रैः दैत्यहन्त्री सदा उग्ररूपधरा युद्धाभिनन्दिनी सा तामसी प्रतिमा उच्यते॥८०॥

**व्याख्या**—या = मूर्त्तिः, शस्त्रैः = आयुधैः, अस्त्रैश्च = क्षेपणिभिश्च, दैत्यहन्त्रीम् = दानवविनाशिनीम्, सदा = सततम्, उग्ररूपा = प्रचण्डाकृतिः, युद्धाभिनन्दिनी = समरोत्सुका, सा = मूर्तिः, तामसी = तमोगुणसम्पन्ना, प्रतिमा = मूर्त्तिः, उच्यते = कथ्यते॥८०॥

**हिन्दी**—जो प्रतिमा हथियार लिए दैत्यों को मारने के लिए तैयार हो, प्रचण्ड रूप धारण करने वाली हो, युद्ध के लिए सदैव समुद्यत हो, उसे तामसी प्रतिमा कहते हैं॥८०॥

**शस्त्रास्त्रैरिति**। या प्रतिमा शस्त्रैः अस्त्रैश्च दैत्यहन्त्री दितिजसंहारिणी, सदा उग्ररूपधरा भीषणाकृतिः युद्धाभिनन्दिनी समरोत्सुका, सा तामसी उच्यते॥८०॥

**सङ्क्षेपतस्तु ध्यानादि विष्ण्वादीनां तथोच्यते।**
**प्रमाणं प्रतिमानां च तदङ्गानां सुविस्तरम्॥८१॥**

**अन्वयः**—विष्ण्वादीनां ध्यानादिः प्रतिमानां तदङ्गानां सुविस्तरं प्रमाणं सङ्क्षेपतः उच्यते॥८१॥

**व्याख्या**—विष्ण्वादीनाम् = विष्णुप्रभृतिदेवतानाम्, ध्यानादिः = चित्तस्थैर्यकरणोपायादिः, प्रतिमानाम् = मूर्त्तीनाम्, तदङ्गनाम्—तत = तेषाम्, अङ्गानाम् = शरीरावयवानाम्, सुविस्तृतम् = सुष्ठुतया विस्तारसहितम्, प्रमाणम् = निदर्शनम्, सङ्क्षेपतः = समासेन, उच्यते = कथ्यते॥८१॥

**हिन्दी**—विष्णु प्रभृति देवताओं का ध्यान तथा उनकी प्रतिमाओं के अङ्गों का जैसा प्रमाण मिलता है, उसका अब संक्षेप में हम वर्णन करते हैं॥८१॥

**सङ्क्षेपत इति**। विष्ण्वादीनां ध्यानादि, तथा प्रतिमानां तदङ्गानां सुविस्तरं प्रमाणं सङ्क्षेपतः उच्यते॥८१॥

**स्वस्वमुष्टेश्चतुर्थोंऽशो ह्यङ्गुलं परिकीर्त्तितम्।**
**तदङ्गुलैर्द्वादशभिर्भवेत् तालस्य दीर्घता॥८२॥**

**अन्वयः**—स्वस्वमुष्टेः चतुर्थः अंशः अङ्गुलं परिकीर्त्तितम्। तदङ्गुलैः द्वादशभिः तालस्य दीर्घता भवेत्॥८२॥

**व्याख्या**—स्वस्वमुष्टेः—स्वस्य = आत्मनः, स्वस्य च = आत्मनश्च, मुष्टेः = मुष्टिकायाः, चतुर्थः = तुरीयः, अंशः = भागः, अङ्गुलं, परिकीर्त्तितम् = कथितम्। तदङ्गुलैः—तत् = तैः, अङ्गुलैः = अङ्गुलिभिः, द्वादशभिः = द्वयाधिकदशभिः, दीर्घता = लम्बता, तालस्य = तालाख्यस्य, भवेत् = स्यात्॥८२॥

**हिन्दी**—अपनी-अपनी मुट्ठी की एक चौथाई एक अंगुल कहलाती है और बारह अंगुलियों की लम्बाई एक ताल मानी जाती है॥८२॥

**स्वस्वेति**। स्वस्वमुष्टेः आत्मनः मुष्टेः चतुर्थः अंशः अङ्गुलं परिकीर्त्तितम्। द्वादशभिः तैः अङ्गुलैः तालस्य दीर्घता भवेत् तालाख्यं परिमाणं भवेदित्यर्थः॥८२॥

**वामनी सप्तताला स्यादष्टताला तु मानुषी।**
**नवताला स्मृता दैवी राक्षसी दशतालिका॥८३॥**

**अन्वयः**—सप्तताला वामनी स्यात्, अष्टताला तु मानुषी, नवताला दैवी तथा दशतालिका राक्षसी स्मृता॥८३॥

**व्याख्या**—सप्तताला = सप्तहस्तप्रमाणा मूर्त्तिः, वामनी = खर्वा खट्टनी वा, स्यात् = भवेत्, अष्टताला = अष्टतालमिता, तु मानुषी = मानुषीया, प्रतिमा भवति, नवताला = नवतालमिता मूर्त्तिः, दैवी = देवतासम्बन्धिनी भवति, तथा दशतालिका = दशतालमिता प्रतिमा तु, राक्षसी = दानवी, स्मृता = कथिता॥८३॥

**हिन्दी**—सात ताल ऊँची प्रतिमा वामनी, आठ ताल ऊँची मानुषी, नौ ताल ऊँची दैवी तथा दश ताल ऊँची प्रतिमा दानवी कहलाती है॥८३॥

**वामनीति**। सप्तताला सप्ततालपरिमिता मूर्त्तिः वामनी स्यात्, अष्टताला तु मानुषी, नवताला दैवी तथा दशतालिका राक्षसी स्मृता॥८३॥

**सप्ततालाद्युच्चता वा मूर्त्तीनां देशभेदतः।**
**सदैव स्त्री सप्तताला सप्ततालश्च वामनः॥८४॥**

**अन्वयः**—वा देशभेदतः मूर्त्तीनां सप्ततालाद्युच्चता। स्त्री सदैव सप्तताला, किञ्च वामनः सप्ततालः॥८४॥

**व्याख्या**—वा = अथवा, देशभेदतः = स्थानभेदेन, मूर्त्तीनाम् = प्रतिमानाम्, सप्ततालाद्युच्चता = सप्ततालमितोच्चता। तथा च स्त्री = देवीनां प्रतिमा, सदैव = सर्वस्मिन् काले स्थाने वा, सप्तताला = सप्ततालपरिमिता एव कार्येति। किञ्च वामनः = विष्णोः वामनमूर्त्तिः, सप्ततालः = सप्ततालपरिमितैव कार्यः॥८४॥

**हिन्दी**—अथवा देशभेद के कारण ही प्रतिमा की ऊँचाई सात ताल मानी गई है। अन्यथा देवी की मूर्त्ति एवं भगवान् विष्णु की वामन मूर्त्ति सात ताल ऊँची ही मानी गई है॥८४॥

**सप्तेति।** वा अथवा देशभेदतः देशभेदेन मूर्त्तीनां सप्ततालाद्युच्चता, तथा च कुत्रचित् देशे सप्तताला, कुत्रचित् अष्टताला, क्वचिद्वा नवताला इत्यादि। स्त्री देवमूर्त्तिरित्यर्थः, सदैव सप्तताला सप्ततालपरिमिता कार्य्येति शेषः। किञ्च वामनः वामनमूर्त्तिः विष्णुः सप्ततालः कार्य्य इति शेषः॥८४॥

**नरो नारायणो रामो नृसिंहो दशतालकः।**
**दशतालः स्मृतो बाणो बलीन्द्रो भार्गवोऽर्जुनः॥८५॥**

**अन्वयः**—नरः नारायणः रामः नृसिंहः दशतालकः। बाणः बली इन्द्रः भार्गवः अर्जुनः दशतालः स्मृतः॥८५॥

**व्याख्या**—नरः=नराख्यो मूर्त्तिभेदः, नारायणः=विष्णुः, रामः=दाशरथिः, नृसिंहः= नरसिंहश्च, एतेषां देवतानां प्रतिमा, दशतालकः=दशतालमितोच्चा, भवितव्या। तथा च बाणः=एतदाख्यः, बली=दैत्यराजः, इन्द्रः=सुरपतिः, भार्गवः=परशुरामः, अर्जुनः=पार्थश्च, एतेषां प्रतिमानाम् उच्चता, दशतालः=दशतालपरिमितमेव भवितव्यम्॥८५॥

**हिन्दी**—नर, नारायण, राम और नृसिंह की प्रतिमा दशताल ऊँची होनी चाहिए तथा बाणासुर, बली, इन्द्र, परशुराम तथा अर्जुन की प्रतिमा भी दस ताल ऊँची होनी चाहिए॥८५॥

**नर इति।** नरः नराख्यः मूर्त्तिभेदः, नारायणः रामः नृसिंहश्च दशतालकः दशतालपरिमितः। तथा बाणः बली इन्द्रः भार्गवः अर्जुनश्च तत्तदाख्यमूर्त्तिभेद इत्यर्थः, दशतालः स्मृतः॥८५॥

**चण्डी भैरववेतालनरसिंहवराहकाः।**
**क्रूरा द्वादशतालाः स्युर्हयशीर्षादयस्तथा।**
**ज्ञेया षोडशताला तु पैशाची वासुरी सदा॥८६॥**

**अन्वयः**—चण्डी भैरववैतालनरसिंहवराहकाः तथा हयशीर्षादयः क्रूराः द्वादशतालाः स्युः। पैशाची तथा राक्षसी मूर्त्तिः सदा षोडशताला ज्ञेया॥८६॥

**व्याख्या**—चण्डी=पार्वती, भैरवः=शङ्करः, वैतालः=भूतभेदः, नरसिंहः=विष्णोश्चतुर्थावतारः, वाराहः=शूकरः विष्णोरवतारविशेषः, तथा हयशीर्षादयः=हयग्रीवप्रभृतयः, ये, क्रूराः= भीषणाः, देवमूर्त्तयः, तेषां द्वादशतालाः=द्वादशतालपरिमितोच्चाः, मूर्त्तयः, स्युः=भवेयुरिति। पैशाची=आसुरी, तथा राक्षसी=दानवी प्रतिमा, सदा=सर्वदा, षोडशताला= षडधिकदशतालपरिमिता मूर्त्तिः, ज्ञेया=बोध्या॥८६॥

**हिन्दी**—चण्डी, भैरव, वैताल, नरसिंह, वराह तथा हयग्रीव आदि क्रूर देवताओं की प्रतिमा बारह ताल ऊँची तथा पैशाची और राक्षसी प्रतिमा सोलह ताल ऊँची सदा बनाने को कही गई है॥८६॥

**चण्डीति।** चण्डी, भैरवः, वेतालः, नरसिंहः, वराहः, तथा हयशीर्षादयः क्रूराः भीषणाः मूर्त्तिभेदाः द्वादशतालाः स्युः। पैशाची तथा राक्षसी मूर्त्तिः सदा षोडशताला ज्ञेया॥८६॥

**हिरण्यकशिपुर्वृत्रो हिरण्याक्षश्च रावणः।**
**कुम्भकर्णोऽथ नमुचिर्निशुम्भः शुम्भ एव हि।**
**एते षोडशतालाः स्युर्माहिषो रक्तबीजकः॥८७॥**
**पञ्चतालाः स्मृता बालाः षट्तालाश्च कुमारकाः॥८८॥**

**अन्वयः**—हिरण्यकशिपुः वृत्रः हिरण्याक्षः रावणः कुम्भकर्णः नमुचिः निशुम्भः शुम्भः माहिषः तथा रक्तबीजकः एते षोडशतालाः स्युः। बालाः पञ्चतालाः तथा कुमारकाः षट्तालाः स्मृताः॥८७-८८॥

**व्याख्या**—हिरण्यकशिपुः=हिरण्याक्षभ्राता, प्रह्लादस्य पिता दैत्यविशेषः, वृत्रः=वृत्रासुरः, हिरण्याक्षः=हिरण्यकशिपोः भ्राता, रावणः=लङ्काधिपतिः, कुम्भकर्णः=रावणभ्राता, नमुचिः= दैत्यविशेषः, निशुम्भः=शुम्भस्य भ्राता, शुम्भः=निशुम्भस्य भ्राता, माहिषः=महिषासुरः, तथा रक्तबीजकः=असुरविशेषः, एते=दानवमूर्त्तिभेदाः, षोडशतालाः=षोडशतालमिताः समुन्नताः, स्युः=भवेयुरिति। बालाः=शिशुप्रतिमाः, पञ्चतालाः=पञ्चतालमितोच्चाः, तथा कुमारकाः= शैशवातिक्रान्ताः प्रतिमाः, षट्तालाः=षट्तालमितोच्चाः, स्मृताः=कथिताः॥८७-८८॥

**हिन्दी**—हिरण्यकशिपु, वृत्रासुर, हिरण्याक्ष, रावण, कुम्भकर्ण, नमुचि, निशुम्भ, शुम्भ, महिषासुर तथा रक्तबीज—इन सभी असुरों की प्रतिमाएँ सोलह ताल ऊँची होती हैं। बालभाव की प्रतिमा पाँच ताल ऊँची तथा कुमारभाव की प्रतिमा छः ताल ऊँची बनानी चाहिए॥८७-८८॥

**हिरण्येति**। हिरण्यकशिपुः, वृत्रः, हिरण्याक्षः, रावणः, कुम्भकर्णः, नमुचिः, निशुम्भः, शुम्भः, माहिषः महिषासुरः तथा रक्तबीजकः एते असुरमूर्त्तिभेदाः षोडशतालाः स्युः। किञ्च बालाः शिशुमूर्त्तयः पञ्चतालाः तथा कुमारकाः शैशवातिक्रान्ताः अतरुणाश्च मूर्त्तयः षट्तालाः स्मृताः॥८७-८८॥

**दशताला कृतयुगे त्रेतायां नवतालिका।**
**अष्टताला द्वापरे तु सप्तताला कलौ स्मृता॥८९॥**

**अन्वयः**—कृतयुगे दशताला, त्रेतायां नवतालिका, द्वापरे अष्टताला, कलौ तु सप्तताला स्मृता॥८९॥

**व्याख्या**—कृतयुगे=सत्ययुगे, देवमूर्त्तिः, दशताला=दशतालपरिमितोच्चा, त्रेतायाम्= त्रेतायुगे, देवमूर्त्तिः, नवतालिका=नवतालपरिमितोच्चा, द्वापरे=द्वापरयुगे, अष्टताला= अष्टतालपरिमितोच्चा मूर्त्तिः, कलौ=कलियुगे, सप्तताला=सप्ततालोच्चा मूर्त्तिः स्युरिति॥८९॥

**हिन्दी**—सत्ययुग में दश ताल ऊँची प्रतिमा, त्रेता में नौ ताल, द्वापर में आठ ताल, कलियुग में सात ताल ऊँची प्रतिमा बनाने का विधान है॥८९॥

अथ सामान्येन मूर्त्तिभेदं निरूपयति—**दशेति**। कृतयुगे सत्ये मूर्त्तिः दशताला, त्रेतायां नवतालिका, द्वापरे अष्टताला, कलौ सप्तताला स्मृता॥८९॥

**नवतालप्रमाणे तु मुखं तालिमितं स्मृतम्।**
**चतुरङ्गुलं ललाटं स्यादधो नासा तथैव च॥९०॥**

**अन्वयः**—नवतालप्रमाणे मुखं तालिमितं स्मृतम्। ललाटं चतुरङ्गुलं, तदधः नासा तथैव स्यात्॥९०॥

**व्याख्या**—नवतालप्रमाणे=नवतालपरिमितं, प्रतिमानिर्माणे, मुखम्=आननम्, तालिमितम् =एकतालप्रमाणम्, स्मृतम्=कथितम्। ललाटम्=भालम्, चतुरङ्गुलम्=तुरीयाङ्गुलि- परिमितम्, तत्=तस्य, अधः=अधोभागे, नासा=नासिका, तथैव=पूर्वरूपेणैव चतुरङ्गुलेति यावत्॥९०॥

**हिन्दी**—यदि नौ ताल ऊँची प्रतिमा हो तो उसका मुख एकताल, उसका ललाट चार अंगुल तथा उसके नीचे नाक तक का भाग दो अंगुल का होना चाहिए ॥९० ॥

**नवेति**। नवतालप्रमाणे नवतालपरिमितमूर्त्तिनिर्माणे इत्यर्थः, मुखं तालिमितम् एकतालपरिमितं स्मृतं, ललाटं चतुरङ्गुलं, तदधः नासा तथैव चतुरङ्गुला इत्यर्थः स्यात् ॥९० ॥

**नासिकाधश्च हन्वन्तं चतुरङ्गुलमीरितम्।**
**चतुरङ्गुला भवेद् ग्रीवा तालेन हृदयं पुनः ॥ ९१ ॥**

**अन्वयः**—नासिकाधश्च हन्वन्तं चतुरङ्गुलम् ईरितम्। ग्रीवा च चतुरङ्गुला भवेत्, पुनः हृदयं तालेन ॥९१ ॥

**व्याख्या**—नासिकाधश्च—नासिकायाः = घ्राणस्य, अधः = निम्नभागे, च = पुनः, हन्वन्तम् = कपोलद्वयपरमुखभागपर्यन्तम्, चतुरङ्गुलम् = चतुरङ्गुलिमितम्, ईरितम् = कथितम्। च = पुनः, ग्रीवा = कण्ठः, चतुरङ्गुला = चतुरङ्गुलिप्रमाणमेव, भवेत्, पुनः = भूयः, हृदयम् = वक्षःस्थलम्, तालेन = तालपरिमाणेन स्यादिति ॥९१ ॥

**हिन्दी**—नाक के नीचे ठुड्डी तक का भाग चार अंगुल का बनाना चाहिए। फिर चार अंगुल का कंठ तथा एकताल का हृदय होना चाहिए ॥९१ ॥

**नासिकाध इति**। नासिकाया अधः निम्ने च हन्वन्तं हनुपर्य्यन्तं चतुरङ्गुलम् ईरितम् उक्तम्। ग्रीवा च चतुरङ्गुला भवेत्, हृदयं पुनः वक्षःस्थलन्तु तालेन परिमाणेन भवेदिति शेषः ॥९१ ॥

**नाभिस्तस्मादधः कार्य्या तालेनैकेन शोभिता।**
**नाभ्यधश्च भवेन्मेढ्रं भागेनैकेन वा पुनः ॥ ९२ ॥**

**अन्वयः**—तस्मादधः एकेन तालेन शोभिता नाभिः कार्या। नाभेः अधः एकेन भागेन मेढ्रं भवेत् ॥९२ ॥

**व्याख्या**—तस्मात् = वक्षःस्थलात्, अधः = निम्नभागे, एकेन = मात्रैकेन, तालेन = तालप्रमाणेन, शोभिता = भूषिता, नाभिः = उदरावर्त्तः, कार्या = विधेया। नाभेः = तुन्दिकायाः, अधः = अधोभागे, एकेन भागेन = अनुरूपांशेन, मेढ्रम् = लिङ्गम्, भवेत् = स्यात् ॥९२ ॥

**हिन्दी**—छाती के नीचे एकताल की दूरी पर सुन्दर नाभि का निर्माण करना चाहिए और नाभिकुंड से नीचे लिंग पर्यन्त एक ताल की दूरी होनी चाहिए ॥९२ ॥

**नाभिरिति**। तस्मात् हृदयात् अधः एकेन तालेन शोभिता शोभना नाभिः कार्य्या। नाभेः अधश्च एकेन भागेन केनचित् अनुरूपेण अंशेन इत्यर्थः मेढ्रं लिङ्गं भवेत् ॥९२ ॥

**द्वितालौ ह्यायतावूरू जानुनी चतुरङ्गुले।**
**जङ्घे ऊरुसमे कार्य्ये गुल्फाधश्चतुरङ्गुलम् ॥ ९३ ॥**

**अन्वयः**—ऊरू द्वितालौ आयतौ चतुरङ्गुले जानुनी जङ्घे ऊरुसमे कार्ये, गुल्फाधः चतुरङ्गुलम् ॥९३ ॥

**व्याख्या**—ऊरू = सक्थिनी, जानूपरिभागौ, द्वितालौ = तालद्वयपरिमितौ, आयतौ = दीर्घौ, जानुनी = ऊरुपर्वणी, चतुरङ्गुले = तुरीयाङ्गुलिप्रमाणे, जङ्घे = टक्किके च, ऊरुसमे = ऊरुतुल्ये

कार्ये, गुल्फयोश्च = घुटिकयोश्च, अधः = निम्नभागे, चतुरङ्गुलम् = अङ्गुलिचतुष्टयपरिमितम्, सम्पाद्यमिति ॥ ९३ ॥

**हिन्दी**—दो ताल लम्बी दोनों जाँघें, चार अंगुल परिमित दोनों घुटने, जंघे की तरह ही दोनों घुटने और एडी के ऊपर की गाँठ को चार अंगुल परिमित बनाना चाहिए ॥ ९३ ॥

**द्वितालाविति**। ऊरू द्वितालौ तालद्वयपरिमितौ आयतौ दीर्घौ, जानुनी च चतुरङ्गुले, जङ्घे च ऊरुसमे कार्य्ये। गुल्फयोश्च अधः चतुरङ्गुलम् अङ्गुलचतुष्टयपरिमितं कार्य्यमिति शेषः ॥ ९३ ॥

**नवतालात्मकमिदमूर्ध्वमानं बुधैः स्मृतम् ॥ ९४ ॥**

**अन्वयः**—इदं नवतालात्मकं बुधैः ऊर्ध्वमानं स्मृतम् ॥ ९४ ॥

**व्याख्या**—इदम् = एतत्, नवतालात्मकम् = नवतालपरिमितम्, बुधैः = पण्डितैः, ऊर्ध्वमानम् = प्रतिमायाः उच्चता, स्मृतम् = कथितम् ॥ ९४ ॥

**हिन्दी**—इस तरह शास्त्रज्ञों ने नौ ताल ऊँची प्रतिमा का विभागपूर्वक वर्णन किया है ॥ ९४ ॥

**नवेति**। इदं नवतालात्मकं बुधैः पण्डितैः ऊर्ध्वमानं दैर्घ्यपरिमाणं स्मृतम् ॥ ९४ ॥

**शिखावधि तु केशान्तं त्र्यङ्गुलं सर्वमानतः।**
**दिशानया च विभजेत् सप्ताष्टदशतालिकम् ॥ ९५ ॥**

**अन्वयः**—सर्वमानतः शिखावधि केशान्तं त्र्यङ्गुलम्। अनया दिशा सप्ताष्टदशतालिकं विभजेत् ॥ ९५ ॥

**व्याख्या**—सर्वमानतः—सर्वस्मिन् = समग्रे, मानतः = परिमाणे, शिखावधि = जुटिका-पर्यन्तम्, केशान्तम् = कचपर्यन्तम्, त्र्यङ्गुलम् = अङ्गुलित्रयमानम्। अनया दिशा = अनेन मार्गेण, नवतालप्रमाणोक्तरीत्या, सप्ताष्टदशतालिकम् = सप्ततालपरिमितम्, अष्टतालमितम्, दशताल-प्रमाणञ्च, विभजेत् = त्रैराशिकविधिना विभागं कुर्यात् ॥ ९५ ॥

**हिन्दी**—प्रतिमा चाहे जिस माप की हो, सभी मापों में चोटी तक केशों का मान तीन अंगुल ही होना चाहिए। इस तरह सात, आठ और दस ताल ऊँची प्रतिमा का अंग-विभाजन त्रैराशिक नियम से करना चाहिए ॥ ९५ ॥

**शिखावधीति**। सर्वमानतः सर्वस्मिन् परिमाणे शिखावधि केशान्तं परिमाणं त्र्यङ्गुलम् अङ्गुलत्रयं ज्ञेयमिति शेषः। अनया दिशा नवतालप्रमाणोक्तया रीत्या इत्यर्थः, सप्ताष्टदशतालिकं सप्ततालप्रमाणम् अष्टतालप्रमाणं दशतालप्रमाणञ्च विभजेत् त्रैराशिकक्रमेण विभक्तं कुर्य्यादित्यर्थः ॥ ९५ ॥

**चतुस्तालात्मकौ बाहू ह्यङ्गुल्यन्तावुदाहृतौ।**
**स्कन्धादिकूर्परान्तं च विंशत्यङ्गुलमुत्तमम् ॥ ९६ ॥**

**अन्वयः**—अङ्गुल्यन्तौ बाहू चतुस्तालात्मकौ उदाहृतौ। स्कन्धादिकूर्परान्तं विंशत्यङ्गुलम् उत्तमम् ॥ ९६ ॥

**व्याख्या**—अङ्गुल्यन्तौ = अङ्गुलिपर्यन्तम्, चतुस्तालात्मकौ = तालतुरीयपरिमितौ, उदाहृतौ = कथितौ। स्कन्धादिकूर्परान्तम् = भुजमूलात् कूर्परपर्यन्तम्, विंशत्यङ्गुलम् = विंशतिअङ्गुलि-परिमाणम्, उत्तमम् = उत्कृष्टं भवति ॥ ९६ ॥

**हिन्दी**–कंधे से लेकर अंगुली तक दोनों बाहों की लम्बाई चार ताल कही गई है। कंधे से केहुनी तक की लम्बाई बीस अंगुल बतलाई गई है॥९६॥

**चतुरिति**। अङ्गुल्यन्तौ अङ्गुलिपर्य्यन्तौ बाहू चतुस्तालात्मकौ तालचतुष्टयपरिमितौ उदाहृतौ कथितौ। स्कन्धादि कूर्परान्तं कफोणिपर्य्यतं विंशत्यङ्गुलं विंशत्या अङ्गुलैः परिमितम् उत्तमं ज्ञेयमिति अध्याहार्य्यम्॥९६॥

त्रयोदशाङ्गुलं चाधः कक्षायाः कूर्परान्तकम्।
अष्टाविंशत्यङ्गुलस्तु मध्यमान्तः करः स्मृतः॥९७॥

**अन्वयः**—कक्षायाः अधः कूर्परान्तकं त्रयोदशाङ्गलं मध्यमान्तः अष्टाविंशत्यङ्गुलः करः स्मृतः॥९७॥

**व्याख्या**—कक्षायाः = भुजकोटरात्, अधः = अधोभागे, कूर्परान्तकम् = कूर्परपर्यन्तम्, त्रयोदशाङ्गुलम् = त्रयोदशभिः अङ्गुलैः परिमाणं भवेदिति, तथा मध्यमान्तः = मध्यमाऽङ्गुलिपर्यन्तः, अष्टाविंशात्यङ्गुलैः, मितम्, करः = हस्तः, स्मृतः = कथितः इति॥९७॥

**हिन्दी**—काँख से लेकर केहुनी तक की लम्बाई तेरह अंगुल होनी चाहिए। केहुनी से लेकर मध्यमा अंगुली तक हाथ की लम्बाई अट्ठाईस अंगुल होनी चाहिए॥९७॥

**त्रयोदशेति**। कक्षायाः अधः कूर्परान्तकं कफोणिपर्य्यन्तं त्रयोदशाङ्गुलं त्रयोदशभिरङ्गुलैः परिमितं स्यादित्यर्थः, तथा मध्यमान्तः मध्यामाङ्गुलिपर्य्यन्तः अष्टाविंशत्या अङ्गुलैः परिमितः करः स्मृतः॥९७॥

सप्ताङ्गुलं करतलं मध्या पञ्चाङ्गुला मता।
सार्द्धत्रयाङ्गुलोऽङ्गुष्ठस्तर्जनीमूलपर्वभाक् ॥९८॥
पर्वद्वयात्मकोऽन्यासां पर्वाणि त्रीणि त्रीणि तु।
अर्द्धाङ्गुलेनाङ्गुलेन हीनानामा च तर्जनी।
कनिष्ठिकानामिकातोऽङ्गुलोना च प्रकीर्त्तिता॥९९॥

**अन्वयः**—करतलं सप्ताङ्गुलं मध्या पञ्चाङ्गुला मता। अङ्गुष्ठः सार्द्धत्रयाङ्गुलः तर्जनीमूलपर्वभाक् पर्वद्वयात्मकः अन्यासां त्रीणि त्रीणि पर्वाणि भवन्ति। अनामा अर्द्धाङ्गुलेन च तर्जनी अङ्गुलेन हीना तथा कनिष्ठिका अङ्गुलोना प्रकीर्त्तिता॥९८-९९॥

**व्याख्या**—करतलम् = हस्ततलं प्रहस्तो वा, सप्ताङ्गुलम्—सप्तभिः = ऋषिभिः, अङ्गुलैः = करशाखाभिः, परिमितम्, मध्या = मध्यमा, अङ्गुलिः, पञ्चाङ्गुला = पञ्चभिः अङ्गुलैः मिता, अङ्गुष्ठः = वृद्धाङ्गुलिः, सार्द्धत्रयाङ्गुलः—सार्द्धेन = अर्द्धेन सह अङ्गुलत्रयेण परिमितः, तर्जन्या = अङ्गुष्ठ- समीपाङ्गुल्या, मूलपर्वभाक् = प्रथमपर्वपर्यन्तोन्नतः, पर्वद्वयात्मकः = अङ्गुलिग्रन्थद्वितययुक्तः, भवेत्, अन्यासाम् = तर्जनीप्रभृतीनाम्, त्रीणि त्रीणि, पर्वाणि = ग्रन्थानि, भवन्ति, अनामा = अनामिकाङ्गुलिः, अर्द्धाङ्गुलेन = अर्द्धाङ्गुलपरिमितेन, तर्जनी = प्रदेशिनी, अङ्गुलेन = करशाखया, हीना = न्यूना, मध्यमाया इति। तथा कनिष्ठिका = कनीनी अङ्गुलिस्तु, अनामिकातः = उपकनिष्ठिकाया अङ्गुलोना = एकाङ्गुलेन हीना, प्रकीर्त्तिता = कथिता॥९८-९९॥

**हिन्दी**—उनमें हथेली सात अंगुल की और मध्यमा अंगुली पाँच अंगुल लम्बी मानी गई

है। अंगूठे की लम्बाई साढ़े तीन अंगुल और तर्जनी के मूल भाग तक पहुँचाने वाली एवं दो पोर वाली होनी चाहिए और अन्य सभी अंगुलियों में तीन पोर होने चाहिए। मध्यमा अंगुली से आधी अंगुली छोटी अर्थात् साढ़े तीन अंगुल लम्बी अनामिका अंगुली और एक अंगुल छोटी तर्जनी अंगुली होनी चाहिए॥९८-९९॥

**सप्ताङ्गुलमिति। पर्वद्वयात्मक इति।** करतलं सप्ताङ्गुलं सप्तभिरङ्गुलैः परिमितं, मध्या मध्यमा अङ्गुलिः पञ्चाङ्गुला पञ्चभिः अङ्गुलैः परिमिता, अङ्गुष्ठः सार्द्धत्रयाङ्गुलः सार्द्धेन अङ्गुलत्रयेण परिमितः, तर्जन्या मूलपर्वभाक् प्रथमपर्वपर्य्यन्तोन्नतः पर्वद्वयात्मकः पर्वद्वितययुक्तः भवेदिति शेषः। अन्यासां तर्जनीप्रभृतीनां त्रीणि त्रीणि पर्वाणि भवन्ति। अनामा अनामिका अङ्गुलिः अर्द्धाङ्गुलेन, तर्जनी अङ्गुलेन हीना मध्यमाया इति शेषः। तथा कनिष्ठिका कनिष्ठा अङ्गुलिस्तु अनामिकातः अनामायाः अङ्गुलोना एकाङ्गुलहीना प्रकीर्त्तिता॥९८-९९॥

**चतुर्दशाङ्गुलौ पादौ ह्यङ्गुष्ठो द्व्यङ्गुलो मतः।**
**सार्द्धद्वयाङ्गुलोऽङ्गुष्ठस्तन्मिता वा प्रदेशिनी।**
**प्रदेशिनी द्व्यङ्गुला तु सार्द्धाङ्गुलमथेतराः॥१००॥**

**अन्वयः**—पादौ चतुर्दशाङ्गुलौ। तत्र अङ्गुष्ठः द्व्यङ्गुलः मतः, गुल्फः सार्द्धद्वयाङ्गुलः प्रदेशिनी तन्मिता वा द्व्यङ्गुला, इतराः सार्द्धाङ्गुलम्॥१००॥

**व्याख्या**—पादौ = चरणौ, चतुर्दशाङ्गुलौ = चतुरधिकदशाङ्गुलिपरिमितौ, तत्र, अङ्गुष्ठः = वृद्धाङ्गुलिः, द्व्यङ्गुलः = अङ्गुलिद्वयपरिमितः, मतः = कथितः, अङ्गुष्ठः = गुल्फः, सार्द्धद्वयाङ्गुलः = अर्द्धेण सहितमङ्गुलिद्वयपरिमितः, प्रदेशिनी = तर्जनी, तन्मिता = सार्द्धद्वितयाङ्गुलपरिमिता, वा = अथवा, द्व्यङ्गुला = अङ्गुलिद्वितयपरिमिता, इतराः = मध्यमादयः, सार्द्धाङ्गुलम् = अर्द्धेण सहैकाङ्गुलपरिमितेति॥१००॥

**हिन्दी**—चौदह अंगुल लम्बे दोनों पैर होने चाहिए। उनमें अगुंठा दो अंगुल लम्बा और तर्जनी भी दो अंगुल प्रमाण की अथवा अँगूठा और तर्जनी ढाई अंगुल प्रमाण की तथा अन्य अंगुलियाँ डेढ़-दो अंगुल प्रमाण की होनी चाहिए॥१००॥

**चतुर्दशाङ्गुलाविति।** पादौ चतुर्दशाङ्गुलौ चतुर्दशाङ्गुलपरिमितौ, तत्र अङ्गुष्ठः द्व्यङ्गुलः अङ्गुलद्वयपरिमितः मतः कथितः। गुल्फः सार्द्धद्वयाङ्गुलः सार्द्धद्वितयाङ्गुलपरिमितः। प्रदेशिनी तर्जनी तन्मिता सार्द्धद्वितयाङ्गुलपरिमिता वा द्व्यङ्गुला अङ्गुलद्वयपरिमिता। इतराः मध्यमादयः सार्द्धाङ्गुलं सार्द्धाङ्गुलपरिमिता इत्यर्थः॥१००॥

**शिरोज्झितौ पाणिपादौ गूढगुल्फौ प्रकीर्त्तितौ॥१०१॥**

**अन्वयः**—पाणिपादौ शिरोज्झितौ तथा गुल्फौ गूढौ प्रकीर्त्तितौ॥१०१॥

**व्याख्या**—पाणिपादौ = करचरणौ, शिराभिः = धमनीभिः (Vein), उज्झितौ = रहितौ, तथा गुल्फौ = घुण्टकौ, गूढौ = प्रच्छन्नौ, प्रकीर्त्तितौ = कथितौ॥१०१॥

**हिन्दी**—हाथ और पैरों का निर्माण ऐसा होना चाहिए जिनमें नसें और गाँठें न दीख पड़ें॥१०१॥

**शिरोज्झितौ इति।** पाणिपादौ शिराभिः उज्झितौ विरहितौ तथा गुल्फौ गूढौ अप्रकाशी प्रकीर्त्तितौ कथितौ॥१०१॥

**तद्विज्ञैः प्रस्तुता ये ये मूर्त्तेरवयवाः सदा।**
**न हीना नाधिका मानात् ते ते ज्ञेयाः सुशोभनाः ॥ १०२ ॥**

**अन्वयः**—ये ये मूर्त्तेः अवयवाः सदा तद्विज्ञैः प्रस्तुताः ते ते मानात् न हीनाः नाधिकाः सुशोभनाः ज्ञेयाः ॥ १०२ ॥

**व्याख्या**—ये ये = यानि यानि, मूर्तेः = प्रतिमायाः, अवयवाः = अङ्गानि, सदा = नित्यम्, तत् = तेषाम्, विदैः = विज्ञैः, प्रस्तुताः = निर्मिताः, ते ते मानात् = परिमाणात्, न = नहि, हीनाः = न्यूनाः, न = नहि, अधिकाः = विशेषाः, प्रत्युत अनुरूपाः, अत एव सुशोभनाः = आकर्षकाः, ज्ञेयाः = बोध्याः ॥ १०२ ॥

**हिन्दी**—अच्छे मूर्त्तिकार के द्वारा निर्मित मूर्त्ति के जो-जो अवयव हों वे सब यदि शास्त्रोक्त मान से न कम और न ज्यादे हों, तभी उसे अत्यन्त सुन्दर मानना चाहिए ॥ १०२ ॥

**तद्विज्ञैरिति**। ये ये मूर्त्तेः अवयवाः अङ्गानि सदा तद्विज्ञैः मूर्त्यभिज्ञैः प्रस्तुताः प्रशंसिताः, ते ते मानात् परिमाणात् न हीना अन्यूना इत्यर्थः, तथा नाधिकाः अनधिकाः अनुरूपा इत्यर्थः, अत एव सुशोभनाः ज्ञेयाः ॥ १०२ ॥

**न स्थूला न कृशा वापि सर्वे सर्वमनोरमाः ॥ १०३ ॥**

**अन्वयः**—किञ्च सर्वे न स्थूलाः तथा न कृशाश्चेत् सर्वमनोरमाः भवन्ति ॥ १०३ ॥

**व्याख्या**—किञ्च, सर्वे = सकलाङ्गानि, न = नहि, स्थूलाः = तुन्दिलाः, तथा = तेनैव प्रकारेण, न = नहि, कृशाः = दुर्बलाः, चेत् = भवेत्, तदा सर्वमनोरमाः = सर्वेषां हृदयहारिणी भवन्ति ॥

**हिन्दी**—और प्रतिमा के सभी अवयव यदि न अधिक मोटे हों और न अधिक पतले, तभी हर तरह से उन्हें सुन्दर मानना चाहिए ॥ १०३ ॥

**नेति**। किञ्च सर्वे अवयवाः न स्थूलाः तथा न कृशाश्चेत् तथा सर्वमनोरमाः भवन्तीति शेषः ॥ १०३ ॥

**सर्वाङ्गैः सर्वरम्यो हि कश्चिल्लक्षे प्रजायते।**
**शास्त्रमानेन यो रम्यः स रम्यो नान्य एव हि ॥ १०४ ॥**

**अन्वयः**—कश्चित् लक्षे सर्वाङ्गैः सर्वरम्यः हि प्रजायते, किञ्च शास्त्रमानेन यः रम्यः अन्यः न हि ॥ १०४ ॥

**व्याख्या**—कश्चित् = कोऽपि मूर्त्तिभेदः, लक्षे = लक्षसंख्यकावधिमिते, सर्वाङ्गैः = सर्वतोभावेन, रम्यः = मनोरमः, प्रजायते = भवत्येव, हि = यतः, शास्त्रमानेन, = शास्त्रमितेन, यः = या मूर्त्तिः, रम्यः = आकर्षकः, स एव = तदेव, रम्यः = सुन्दरम्, अन्यः = शास्त्रमानविरहितः, न हि = नैव मनोरमो भवति ॥ १०४ ॥

**हिन्दी**—लाखों में कोई एक प्रतिमा ही सबके लिए सर्वाङ्गसुन्दर बनती है, परन्तु शास्त्र-विधान की दृष्टि से जो सुन्दर है वही सुन्दर है; अन्य नहीं ॥ १०४ ॥

**सर्वाङ्गैरिति**। कश्चित् मूर्त्तिभेदः लक्षे लक्षसंख्यकावधिमिते सर्वाङ्गैः सर्वेषां रम्यः मनोरमः प्रजायते हि भवत्येव, किन्तु शास्त्रमानेन शास्त्रपरिमाणेन यः रम्यः, स एव रम्यः, अन्यः शास्त्राप्रमाणेन न हि नैव रम्य इत्यर्थः ॥ १०४ ॥

**एकेषामेव तद्रम्यं लग्नं यत्र च यस्य हृत्॥१०५॥**

**अन्वयः**—यत्र च यस्य हृत् लग्नं तत् रम्यम् इति एकेषामेव ॥१०५॥

**व्याख्या**—च = पुनः, यत्र = यस्यां प्रतिमायाम्, यस्य = जनस्य, हृत् = चित्तम्, लग्नम् = आसक्तम्, तत् = सैव प्रतिमा, तस्मै मनोहरा, इति एकेषाम् = केषांश्चित् जनानां मते ॥१०५॥

**हिन्दी**—कुछ लोगों के विचार में जिसका मन जिस प्रतिमा में लग गया, वही उसके लिए सुन्दर है ॥१०५॥

**शास्त्रेति**। शास्त्रमानविहीनं शास्त्रीयपरिमाणविरुद्धं यत् प्रतिबिम्बं तत् विपश्चितां विदुषाम् अरम्यं न मनोरममित्यर्थः। यत्र च यस्य हृत् हृदयं लग्नं तत् रम्यम् इति एकेषां केषाञ्चित् मतमिति शेषः ॥१०५॥

**शास्त्रमानविहीनं यदरम्यं तद्विपश्चिताम्।**
**अष्टाङ्गुलं ललाटं स्यात् तावन्मात्रौ भ्रुवौ मतौ॥१०६॥**

**अन्वयः**—शास्त्रमानविहीनं यत् विपश्चितां तत् अरम्यम्। ललाटम् अष्टाङ्गुलं स्यात्, भ्रुवौ तावन्मात्रौ मतौ ॥१०६॥

**व्याख्या**—शास्त्रमानविहीनम्—शास्त्रस्य = धर्मग्रन्थस्य, यन्मानम् = परिमाणम्, तेषां विहीनम् = रहितम्, यत् = या मूर्त्तिः, विपश्चिताम् = विदुषाम्, तत् = प्रतिमा, अरम्यम् = अमनोरमा। ललाटम्, तस्याः प्रमाणितायाः मूर्त्तेः, अष्टाङ्गुलम् = अङ्गुल्याष्टपरिमितम्, स्यात् = भवेत्, भ्रुवौ = चिल्लिके, तावन्मात्रौ = अष्टाङ्गुलिपरिमाणौ, मतौ ॥१०६॥

**हिन्दी**—किन्तु विद्वानों की दृष्टि में जो शास्त्रीय मान के विरुद्ध प्रतिमा बनी है, वही असुन्दर है। वैसे मूर्त्ति का ललाट आठ अंगुल चौड़ा तथा दोनों भौंहें मिलाकर उतनी ही होनी चाहिए ॥१०६॥

**अष्टाङ्गुलमिति**। ललाटम् अष्टाङ्गुलम् अष्टाङ्गुलपरिमितं स्यात्। भ्रुवौ च तावन्मात्रे अष्टाङ्गुलपरिमाणे मते ॥१०६॥

**अर्द्धाङ्गुला भ्रुवोर्लेखा मध्ये धनुरिवायता।**
**नेत्रे च त्र्यङ्गुलायामे द्व्यङ्गुले विस्तृते शुभे॥१०७॥**

**अन्वयः**—भ्रुवोः लेखा अर्द्धाङ्गुलमध्ये धनुरिवायता। नेत्रे च त्र्यङ्गुलायामे द्व्यङ्गुले विस्तृते शुभे ॥१०७॥

**व्याख्या**—भ्रुवोः = भ्रूलतयोः, लेखा = रेखा, मध्ये = मध्यभागे, अर्द्धाङ्गुला = अङ्गुलार्ध-परिमिता, तथा धनुरिव = धनुषाकारमिव, आयता = विस्तृता। नेत्रे = नयने, च, त्र्यङ्गुलायामे = अङ्गुलत्रयपरिमितविस्तारे, तथा विस्तृते = दीर्घे च, द्व्यङ्गुले = अङ्गुलिद्वयपरिमितविस्तारे, शुभे = मङ्गलदे च भवति ॥१०७॥

**हिन्दी**—दोनों भौंहों की चौडाई आधा अंगुल और बीच में धनुष की तरह कुछ ऊपर उठी हुई होनी चाहिए। आँखों की लम्बाई तीन अंगुल और चौड़ाई दो अंगुल तथा देखने में सुन्दर प्रतीत हों ॥१०७॥

**अर्द्धाङ्गुलेति**। भ्रुवोः लेखा रेखा मध्ये अर्द्धाङ्गुला अङ्गुलार्द्धपरिमिता तथा धनुरिव आयता

विस्तृता। नेत्रे च द्व्यङ्गुलायामे अङ्गुलद्वयदीर्घे तथा विस्तृते विस्तारे च द्व्यङ्गुले अङ्गुलद्वयमिते शुभे शोभने च कार्य्ये इति शेषः॥१०७॥

**तारका तत्तृतीयांशा नेत्रयोः कृष्णरूपिणी।**
**द्व्यङ्गुलं तु भ्रुवोर्मध्यं नासामूलमथाङ्गुलम्॥१०८॥**

**अन्वयः**—नेत्रयोः तारका कृष्णरूपिणी तत्तृतीयांशा, भ्रुवोर्मध्यं तु द्व्यङ्गुलं, नासामूलञ्च अथाङ्गुलम्॥१०८॥

**व्याख्या**—नेत्रयोः = नयनयोः, तारका = कनीनिका, कृष्णरूपिणी = असितवर्णा, तत्तृतीयांशः—तत् = तस्य नेत्रस्य, तृतीयांशः = तृतीयभागपरिमिता, कार्या, भ्रुवोः = चिल्लिकयोः, मध्यं तु = मध्यभागं तु, द्व्यङ्गुलम् = अङ्गुलद्वयपरिमितम्, नासामूलञ्च = नासिकायाः मूलभागम्, मूलांशम्, अङ्गुलम् = एकाङ्गुलपरिमितं विधेयमिति भावः॥१०९॥

**हिन्दी**—दोनों आँखों की काली पुतलियाँ आँखों के तीसरे भाग पर होनी चाहिए और दोनों भौंहों के बीच का भाग दो अंगुल चौड़ा तथा नाक का मूल भाग एक अंगुल चौड़ा होना चाहिए॥१०९॥

**तारकेति**। नेत्रयोः तारका कृष्णरूपिणी कृष्णवर्णा तत्तृतीयांशा तस्य नेत्रस्य तृतीयांशपरिमिता कार्य्या इति शेषः। भ्रुवोः मध्यन्तु द्व्यङ्गुलं अङ्गुलद्वयपरिमितम्। नासामूलञ्च अङ्गुलम् एकाङ्गुलमितं कार्य्यमिति शेषः॥१०८॥

**नासाग्रविस्तरं तद्वद् द्व्यङ्गुलं तद्विलद्वयम्।**
**शुकनासाकृतिर्नासा पुष्पवद् द्विविधा शुभा॥१०९॥**

**अन्वयः**—नासाग्रविस्तरं द्व्यङ्गुलं तद्वत् तद्विलद्वयं नासा शुकनासाकृतिः पुष्पवद् द्विविधा शुभा॥१०९॥

**व्याख्या**—नासाग्रविस्तरम् = नासिकायाः प्रसारम्, विस्तारमित्यत्रार्षत्वान्नपुंसकत्वमिति, द्व्यङ्गुलम् = अङ्गुलिद्वयपरिमितम्, तद्वत् = तेनैव प्रकारेण, तत् = तस्य, विलद्वयम् = छिद्रद्वयम्, तथा, नासा = नासिका, शुकनासाकृतिः = कीरनासिकास्वरूपमिव, वा, पुष्पवत् = कुसुमदलमिव, द्विधा = खण्डद्वये विभक्ता, शुभा = मङ्गलप्रदेति॥१०९॥

**हिन्दी**—नाक के अगले हिस्से का फैलाव दो अंगुल तथा उनके छेदों का विस्तार भी उतना ही होना चाहिए। सुग्गे की नाक की तरह थोड़ी टेढ़ी या सीधी दो में से किसी एक तरह की नाक की बनावट होनी चाहिए॥१०९॥

**नासेति**। नासाग्रस्य विस्तरं (क्लीबत्वमार्षं बोध्यं) द्व्यङ्गुलं तद्वत् तथा तस्य विलद्वयञ्च द्व्यङ्गुलमित्यर्थः। नासा नासिका शुकस्य पक्षिणः नासाकृतिः पुष्पवत् पुष्पाकृतिश्च इति द्विविधा शुभा शुभकरी॥१०९॥

**निष्पावसदृशं नासापुटयुग्मं सुशोभनम्॥११०॥**

**अन्वयः**—निष्पावसदृशं नासापुटयुग्मं सुशोभनम्॥११०॥

**व्याख्या**—निष्पावसदृशम्—निष्पावेण = वस्तुविशेषेण, सदृशम् = तुल्यम्, नासापुटयोः = नासिकाछिद्रयोः, युग्मम् = द्वयम्, सुशोभनम् = अतिसुन्दरम्॥११०॥

**हिन्दी**—दोनों नासापुट निष्पाव (द्रव्य-विशेष) की तरह अत्यन्त सुन्दर बनाना चाहिए ॥११० ॥

**निष्पावेति**। निष्पावेण शस्यविशेषेण सदृशं नासापुटयोः युग्मं द्वयं सुशोभनम् अतिसुन्दरम् ॥ ११० ॥

**कर्णौ च भ्रूसमौ ज्ञेयौ दीर्घौ च चतुरङ्गुलौ।**
**कर्णपाली त्र्यङ्गुला स्यात् स्थूला चार्द्धाङ्गुला मता॥ १११ ॥**

**अन्वयः**—कर्णौ भ्रूसमौ दीर्घौ च चतुरङ्गुलौ ज्ञेयौ। कर्णपाली त्र्यङ्गुला स्यात्, स्थूला च अर्द्धाङ्गुला मता ॥ १११ ॥

**व्याख्या**—कर्णौ = श्रवणेन्द्रियौ, भ्रूसमौ = भ्रूतुल्यौ, दीर्घौ = आयतौ, च = पुनः, चतुरङ्गुलौ = अङ्गुलचतुष्टयपरिमितौ, ज्ञेयौ = बोध्यौ। कर्णपाली = श्रवणायतनम्, त्र्यङ्गुला = अङ्गुलत्रयपरिमिता, स्यात् = भवेत्, तथा स्थूला = स्थूलतायाम्, अर्द्धाङ्गुला = अङ्गुल्यार्द्धपरिमिता, मता = कथिता ॥ १११ ॥

**हिन्दी**—दोनों कान भी भौंहों के समान ही चार-चार अंगुल लम्बे होने चाहिए। कर्णपाली तीन अंगुल लम्बी और आधी अंगुल मोटी होनी चाहिए ॥ १११ ॥

**कर्णाविति**। कर्णौ भ्रूसमौ भ्रूभ्यां सदृशौ दीर्घौ चतुरङ्गुलौ च स्याताम्। कर्णपाली कर्णायतनं त्र्यङ्गुला अङ्गुलत्रयपरिमिता स्यात् तथा स्थौल्ये स्थूलतायाम् अर्द्धाङ्गुला मता ॥ १११ ॥

**नासावंशस्त्र्यङ्गुलस्तु श्लक्ष्णः सार्द्धाङ्गुलोन्नतः ॥ ११२ ॥**

**अन्वयः**—नासावंशः त्र्यङ्गुलः सार्द्धाङ्गुलोन्नतः श्लक्ष्णः ॥ ११२ ॥

**व्याख्या**—नासावंशः = नासिकादण्डः, त्र्यङ्गुलः = अङ्गुलित्रयं परिमितम्, सार्द्धाङ्गुलोन्नतः = अर्द्धाङ्गुलपरिमितम्, उन्नतम्, श्लक्ष्णः = चिक्कणः, स्यात् = भवेत् ॥ ११२ ॥

**हिन्दी**—नाक की पोर तीन अंगुल लम्बी, डेढ़ अंगुल ऊँची तथा चिकनी होनी चाहिए ॥ ११२ ॥

**नासेति**। नासावंशः नासिकादण्डः त्र्यङ्गुलः अङ्गुलत्रयपरिमितः सार्द्धाङ्गुलोन्नतः श्लक्ष्णश्चिक्कणश्च स्यात् ॥ ११२ ॥

**ग्रीवामूलाच्च स्कन्धान्तमष्टाङ्गुलमुदाहृतम्।**
**बाह्वन्तरं द्वितालं स्यात् तालमात्रं स्तनान्तरम्॥ ११३ ॥**

**अन्वयः**—ग्रीवामूलात् स्कन्धान्तम् अष्टाङ्गुलम् उदाहृतम्। बाह्वन्तरं द्वितालं स्यात्, स्तनान्तरं तालमात्रम् ॥ ११३ ॥

**व्याख्या**—ग्रीवामूलात् = कन्धरबध्नात्, स्कन्धान्तम् = भुजमूलपर्यन्तम्, अष्टाङ्गुलम् = अङ्गुलाष्टकपरिमितम्, अवकाशमुदाहृतम् = कथितम्। किञ्च बाह्वन्तरम्—बाह्वोः = भुजयोः, अन्तरम् = दूरता, द्वितलम् = तालद्वयपरिमितम्, स्यात् = भवेत्, स्तनान्तरम्—स्तनयोः = कुचयोः, अन्तरम् = पार्थक्यम्, तालमात्रम् = एकतालमेव, स्यात् = भवेत् ॥ ११३ ॥

**हिन्दी**—गर्दन की जड़ से कंधे तक की दूरी आठ अंगुल होनी चाहिए। दोनों बाँहों के बीच अर्थात् छाती की चौड़ाई दो ताल होनी चाहिए। दोनों स्तनों के बीच की दूरी एक ताल होनी चाहिए ॥ ११३ ॥

**ग्रीवेति**। ग्रीवामूलात् स्कन्धान्तं स्कन्धपर्य्यन्तम् अष्टाङ्गुलम् उदाहृतं कथितम्। किञ्च बाह्वोः भुजयोरन्तरं वक्ष इत्यर्थः, द्वितालं तालद्वयपरिमितं तथा स्तनयोरन्तरं मध्यभागः तालमात्रम् एकतालपरिमितं स्यात्॥११३॥

**षोडशाङ्गुलमात्रं तु कर्णयोरन्तरं स्मृतम्।**
**कर्णहन्वग्रान्तरं तु सदैवाष्टाङ्गुलं मतम्॥ ११४॥**

**अन्वयः**—कर्णयोरन्तरं षोडशाङ्गुलमात्रं स्मृतम्। कर्णहन्वग्रान्तरं सदैव अष्टाङ्गुलं मतम्॥११४॥

**व्याख्या**—कर्णयोः = उभयोः श्रवणयोः, अन्तरम् = पार्थक्यम्, षोडशाङ्गुलमात्रं = षोडशाङ्गुलप्रमाणमेव, स्मृतम् = कथितम्। किञ्च कर्णस्य = श्रोत्रेन्द्रियस्य, हनोः = चिबुकयोः, अग्रस्य = अग्रभागस्य च, अन्तरम् = अन्तरालम्, सदैव = सर्वत्र सर्वदैव, अष्टाङ्गुलम् = अङ्गुलाष्टकपरिमितम्, मतम् = प्रोक्तम्॥११४॥

**हिन्दी**—एक कान से दूसरे कान की दूरी सोलह अंगुल होनी चाहिए और कान से ठुड्डी की दूरी सदैव आठ अंगुल होनी चाहिए॥११४॥

**षोडशेति**। कर्णयोरन्तरं मध्यभागः षोडशाङ्गुलमात्रं स्मृतम्। किञ्च कर्णस्य हनोरग्रस्य च अन्तरं सदैव अष्टाङ्गुलम् अङ्गुलाष्टकपरिमितं मतम्॥११४॥

**नासाकर्णान्तरं तद्वत् तदर्द्धं कर्णनेत्रयोः।**
**मुखं तालतृतीयांशमोष्ठावर्द्धाङ्गुलौ मतौ॥ ११५॥**

**अन्वयः**—नासाकर्णान्तरं तद्वत्। कर्णनेत्रयोः तदर्द्धं मुखं तालतृतीयांशम्। ओष्ठौ तु अर्द्धाङ्गुलम्॥११५॥

**व्याख्या**—नासाकर्णयोः = नासिकाश्रवणयोः, अन्तरम् = पार्थक्यम्, तद्वत् = पूर्ववदेवाष्टाङ्गुलम्, कर्णनेत्रयोः = श्रवणनयनयोः, तत् = तस्य, अर्द्धम् = अर्द्धभागमर्थाच्चतुरङ्गुलम्, मुखम् = आननम्, तालस्य = पूर्वोक्तपरिमाणस्य, तृतीयांशम् = तृतीयभागमेव, ओष्ठौ = अधरौ, अर्द्धाङ्गुलौ = अङ्गुलेरर्द्धभागमेव, मतम् = प्रोक्तम्॥११५॥

**हिन्दी**—नाक और कान के बीच की दूरी उसी तरह आठ अंगुल होनी चाहिए। इसी तरह कान से आँख की दूरी उससे आधा चार अंगुल होनी चाहिए। मुँह की चौडाई एक ताल माप का तीसरा भाग होना चाहिए। दोनों ओठों की दूरी आधा अंगुल होनी चाहिए॥११५॥

**नासेति**। नासाकर्णयोरन्तरं तद्वत् अष्टाङ्गुलमित्यर्थः। कर्णनेत्रयोस्तु अन्तरं तदर्द्धं चतुरङ्गुलमित्यर्थः। मुखं तालस्य उक्तस्य परिमाणस्य तृतीयांशम्। ओष्ठौ तु अर्द्धाङ्गुलौ मतौ॥११५॥

**द्वात्रिंशदङ्गुलः प्रोक्तः परिधिर्मस्तकस्य च।**
**दशाङ्गुला विस्तृतिस्तद् द्वादशाङ्गुलदीर्घता॥ ११६॥**

**अन्वयः**—मस्तकस्य परिधिः द्वात्रिंशदङ्गुलः प्रोक्तः। तद्विस्तृतिः दशाङ्गुला, द्वादशाङ्गुलदीर्घता स्यात्॥११६॥

**व्याख्या**—मस्तकस्य = मस्तिष्कस्य, परिधिः = परिवेशः, द्वात्रिंशदङ्गुलः = द्वात्रिशंदङ्गुलपरिमितः, प्रोक्तः = कथितः। तत् = तस्य मस्तकस्य, विस्तृतिः = विस्तारः, दशाङ्गुला = अङ्गुलदशपरिमिता, द्वादशाङ्गुलदीर्घता = तस्य दैर्घ्यं द्वादशाङ्गुलपरिमितम्, स्यादिति॥११६॥

**हिन्दी**—शिर की परिधि बत्तीस अंगुल होनी चाहिए। मस्तक की चौड़ाई दस अंगुल तथा लम्बाई बारह अंगुल होनी चाहिए॥११६॥

**द्वात्रिंशदिति**। मस्तकस्य परिधिः वेष्टनमित्यर्थः, द्वात्रिंशदङ्गुलः प्रोक्तः कथितः। तदित्यव्ययं, तत् तस्य मस्तकस्येत्यर्थः, विस्तृतिः विस्तारः दशाङ्गुला द्वादशाङ्गुलदीर्घता च दीर्घे द्वादशाङ्गुलता इत्यर्थः, स्यादिति शेषः॥११६॥

**ग्रीवामूलस्य परिधिर्द्वाविंशत्यङ्गुलात्मकः।**
**हृन्मध्यपरिधिर्ज्ञेयश्चतुःपञ्चाशदङ्गुलः ॥११७॥**

**अन्वयः**—ग्रीवामूलस्य परिधिः द्वाविंशत्यङ्गुलात्मकः। हृन्मध्यस्य परिधिः चतुःपञ्चाशदङ्गुलः ज्ञेयः॥११७॥

**व्याख्या**—ग्रीवामूलस्य = कण्ठाधारस्य, परिधिः = परिवेशः, द्वाविंशतिः अङ्गुलाः, आत्मानः, यस्यार्थात् द्वाविंशत्यङ्गुलपरिमितः। हृन्मध्यस्य = वक्षोमध्यस्य, परिधिः = परिणाहः, चतुःपञ्चाशदङ्गुलः = चतुःपञ्चाशदङ्गुलपरिमितः, ज्ञेयः = बोध्यः॥११७॥

**हिन्दी**—गर्दन के जड़ की परिधि बाईस अंगुल होनी चाहिए। छाती के मध्य भाग की परिधि चौवन अंगुल होनी चाहिए॥११७॥

**ग्रीवेति**। ग्रीवामूलस्य परिधिः द्वाविंशतिः अङ्गुलाः आत्मानः यस्य तथोक्तः द्वाविंशत्यङ्गुलपरिमित इत्यर्थः। हृन्मध्यस्य वक्षोमध्यस्येत्यर्थः, परिधिः चतुःपञ्चाशदङ्गुलपरिमित इत्यर्थः॥११७॥

**हीनाङ्गुलचतुस्तालपरिधिर्हृदयस्य च।**
**आस्तनात् पृष्ठदेशान्ता पृथुता द्वादशाङ्गुला॥११८॥**

**अन्वयः**—हृदयस्य परिधिः हीनाङ्गुलचतुस्तालः। आस्तनात् पृष्ठदेशान्ता पृथुता द्वादशाङ्गुला॥११८॥

**व्याख्या**—हृदयस्य = चित्तस्य, परिधिः = मण्डलम्, हीनाङ्गुलचतुस्तालः = एकाङ्गुलरहिततालचतुष्टयपरिमितः। किञ्च आस्तनात् = स्तनावधि, पृष्ठदेशान्ता = पृष्ठदेशपर्यन्ता, पृथुता = स्थूलता, द्वादशाङ्गुला = द्वादशाङ्गुलपरिमिता, स्यात् = भवेत्॥११८॥

**हिन्दी**—छाती का घेरा एक अंगुल कम चार तालपरिमित होना चाहिए। छाती से लेकर पीठ तक की मोटाई बारह अंगुल होनी चाहिए॥११८॥

**हीनेति**। हृदयस्य परिधिः हीनाङ्गुलचतुस्तालः एकाङ्गुलहीनतालचतुष्टयपरिमित इत्यर्थः। किञ्च आस्तनात् स्तनावधि पृष्ठदेशान्ता पृष्ठपर्य्यन्ता पृथुता स्थूलता द्वादशाङ्गुला द्वादशाङ्गुलपरिमिता स्यादित्यर्थः॥११८॥

**सार्द्धत्रितालपरिधिः कट्याश्च द्व्यङ्गुलाधिकः।**
**चतुरङ्गुल उत्सेधो विस्तारः स्यात् षडङ्गुलः॥११९॥**

**अन्वयः**—कट्याश्च सार्द्धत्रितालपरिधिः द्व्यङ्गुलाधिकः। उत्सेधः विस्तारः षडङ्गुलः स्यात्॥११९॥

**व्याख्या**—कट्याश्च = काञ्चीपदस्य च, सार्द्धत्रितालपरिधिः = अर्द्धसहिततालत्रयमितः,

परिधिः = वेष्टनम्, द्व्यङ्गुलाधिकः = अङ्गुलद्वयाधिकः, उत्सेधः = उच्चता, चतुरङ्गुलः = अङ्गुलचतुष्टयमितः, तथा विस्तारः = दीर्घता, षडङ्गुलः = अङ्गुलषट्कमितः, स्यात् = भवेत् ॥ ११९ ॥

**हिन्दी**—कमर का घेरा दो अंगुल अधिक तीन ताल माप का होना चाहिए। उसकी ऊँचाई चार अंगुल और फैलाव छः अंगुल होना चाहिए ॥ ११९ ॥

**सार्द्धेति**। कट्यश्च सार्द्धत्रितालपरिधिः अर्द्धसहिततालत्रयमितः परिधिः द्व्यङ्गुलाधिकः अङ्गुलद्वयाधिकः, उत्सेधः उच्छ्रायः चतुरङ्गुलः अङ्गुलचतुष्टयमितः तथा विस्तारः षडङ्गुलः अङ्गुलषट्कमितः स्यात् ॥ ११९ ॥

**पश्चाद्भागे नितम्बस्य स्त्रीणामङ्गुलतोऽधिकः।**
**बाह्वग्रमूलपरिधिः षोडशाष्टादशाङ्गुलः ॥ १२० ॥**

**अन्वयः**—स्त्रीणां नितम्बस्य पश्चाद्भागे परिधिः अङ्गुलतोऽधिकः। बाह्वग्रमूलपरिधिः षोडशाङ्गुलः अष्टादशाङ्गुलः स्यात् ॥ १२० ॥

**व्याख्या**—स्त्रीणाम् = देवीप्रतिमानाम्, नितम्बस्य = कटिप्रोथस्य, पश्चाद्भागे = पृष्ठस्याङ्गे, परिधिः = मण्डलम्, अङ्गुलतः = एकाङ्गुलेन, अधिकः = विशेषः, सार्द्धत्रितालपरिमितः, पुरुषमूर्त्तीनान्तु सार्द्धत्रिताल एवेति। बाह्वोः = भुजयोः, अग्रमूलस्य—अग्रस्य = अग्रभागस्य, मूलस्य = आरम्भिकभागस्य च, परिधिः = आवेष्टनम्, क्रमात्, षोडशाङ्गुलपरिमितः, अष्टादशाङ्गुलपरिमितश्च भवति ॥ १२० ॥

**हिन्दी**—देवीप्रतिमा के नितम्ब के पिछले हिस्से में प्रतिमा की अपेक्षा परिधि एक अंगुल अधिक साढे तीन ताल की होनी चाहिए। देवीप्रतिमा की बाँहों के अगले भाग का घेरा सोलह अंगुल तथा बाँहों के मूल भाग का घेरा अठारह अंगुल होना चाहिए ॥ १२० ॥

**पश्चादिति**। स्त्रीणां देवीमूर्त्तीनां नितम्बस्य पश्चाद्भागे परिधिः अङ्गुलतः एकाङ्गुलेन अधिकः सार्द्धत्रितालपरिमितः पुम्मूर्त्तीनान्तु सार्द्धत्रिताल एव इत्यर्थः। बाहोः अग्रस्य मूलस्य च परिधिः क्रमात् षोडशाङ्गुलः अष्टादशाङ्गुलश्च भवति ॥ १२० ॥

**हस्तमूलाग्रपरिधिश्चतुर्दशदशाङ्गुलः।**
**पञ्चाङ्गुला पादकरतलयोर्विस्तृतिः स्मृता ॥ १२१ ॥**

**अन्वयः**—हस्तमूलाग्रपरिधिः चतुर्दशदशाङ्गुलः। पादकरतलयोः विस्तृतिः पञ्चाङ्गुला स्मृता ॥ १२१ ॥

**व्याख्या**—हस्तस्य = करस्य, मूले = प्रारम्भिकभागे, अग्रे = अग्रिमांशे च, परिधिः = वेष्टनम्, क्रमात् चतुर्दशाङ्गुलः = चतुर्दशाङ्गुलपरिमितः, दशाङ्गुलश्च = दशाङ्गुलपरिमितश्च भवति। पादकरतलयोः = चरणहस्ततलयोः, विस्तृतिः = विततिः, पञ्चाङ्गुला = अङ्गुलिपञ्चात्मिका, स्मृता = कथिता ॥ १२१ ॥

**हिन्दी**—बाँहों की जड़ भाग का घेरा चौदह अंगुल तथा हाथों के आगे का घेरा दस अंगुल का होना चाहिए। तलवा और हथेली का फैलाव पाँच अंगुल होना चाहिए ॥ १२१ ॥

**हस्तेति**। हस्तस्य मूले अग्रे च परिधिः क्रमात् चतुर्दशाङ्गुलः दशाङ्गुलश्च भवति। पादकरतलयोः चरणस्य करतलस्य च विस्तृतिः विस्तारः पञ्चाङ्गुला अङ्गुलपञ्चकपरिमिता स्मृता ॥ १२१ ॥

ऊरुमूलस्य परिधिर्द्वात्रिंशदङ्गुलात्मकः ।
ऊनविंशत्यङ्गुलः स्यादूर्वग्रपरिधिः स्मृतः ॥ १२२ ॥

**अन्वयः**—ऊरुमूलस्य परिधिः द्वात्रिंशदङ्गुलात्मकः। ऊर्वोः अग्रयोः परिधिः ऊनविंशत्यङ्गुलः स्यात् ॥ १२२ ॥

**व्याख्या**—ऊरुमूलस्य = जङ्घामूलस्य, परिधिः = वेष्टनम्, द्वात्रिंशदङ्गुलात्मकः = द्वात्रिंशदङ्गुलिपरिमितः, स्यात्। ऊर्वोः = जङ्घयोः, अग्रयोः = अग्रभागयोः, परिधिः = मण्डलम्, ऊनविंशत्यङ्गुलः = ऊनविंशत्यङ्गुलात्मको भवति ॥ १२२ ॥

**हिन्दी**—ऊरु के मूल भाग का घेरा बत्तीस अंगुल का तथा उसके अगले हिस्से का घेरा उन्नीस अंगुल का होना चाहिए ॥ १२२ ॥

**ऊरुमूलस्येति**। ऊरुमूलस्य परिधिः द्वात्रिंशदङ्गुलात्मकः द्वात्रिंशदङ्गुलपरिमितः। ऊर्वोः अग्रयोः परिधिः ऊनविंशत्यङ्गुलः स्यात् ॥ १२२ ॥

जङ्घामूलाग्रपरिधिः षोडशद्वादशाङ्गुलः ।
मध्यमामूलपरिधिर्विज्ञेयश्चतुरङ्गुलः ॥ १२३ ॥

**अन्वयः**—जङ्घामूलाग्रपरिधिः षोडशद्वादशाङ्गुलः। मध्यमामूलपरिधिः चतुरङ्गुलः विज्ञेयः ॥ १२३ ॥

**व्याख्या**—जङ्घामूलस्य = जानुब्रध्नस्य, अग्रस्य = अग्रभागस्य च, परिधिः = वेष्टनम्, क्रमात् षोडशाङ्गुलः = अङ्गुलिषोडशपरिमितः, तथा द्वादशाङ्गुलः = द्वादशाङ्गुलात्मको भवति। मध्यमायाः = मध्यमाङ्गुल्याः, मूलस्य = ब्रध्नस्य, परिधिः = परिवेशः, चतुरङ्गुलः = चतुरङ्गुलात्मकः, विज्ञेयः = ज्ञातव्य इति ॥ १२३ ॥

**हिन्दी**—जाँघों के मूलभाग का घेरा सोलह अंगुल एवं अगले हिस्से का घेरा बारह अंगुल होना चाहिए। मध्यमा अंगुलि के मूलभाग की परिधि चार अंगुल की होनी चाहिए ॥ १२३ ॥

**जङ्घेति**। जङ्घायाः मूलस्य अग्रस्य च परिधिः क्रमात् षोडशाङ्गुलः द्वादशाङ्गुलश्च भवति। मध्यमायाः अङ्गुल्याः मूलपरिधिः चतुरङ्गुलः विज्ञेयः ॥ १२३ ॥

तर्जन्यनामिकामूलपरिधिः सार्द्धत्र्यङ्गुलः ।
कनिष्ठिकायाः परिधिर्मूले त्र्यङ्गुल एव हि ॥ १२४ ॥

**अन्वयः**—तर्जन्याः अनामिकायाः च मूलपरिधिः सार्द्धत्र्यङ्गुलः। कनिष्ठिकायाः मूले परिधिः त्र्यङ्गुलः एव हि ॥ १२४ ॥

**व्याख्या**—तर्जन्याः = प्रदेशिन्याः, अनामिकायाश्च = उपकनिष्ठिकायाश्च, मूलस्य = मूलभागस्य, परिधिः = परिवेष्टनम्, सार्द्धत्र्यङ्गुलः = अर्द्धेण सहितमङ्गुलित्रयात्मकः, स्यात्, कनिष्ठिकायाः = कनीन्याः, मूले = मूलभागे, परिधिः = वेष्टनम्, त्र्यङ्गुलः = अङ्गुलित्रयपरिमितिः, एव = इति निश्चयेन, हि ॥ १२४ ॥

**हिन्दी**—तर्जनी और अनामिका अंगुली के मूल भाग का घेरा साढ़े तीन अंगुल का होना चाहिए। किन्तु कनिष्ठा अंगुलि के मूल भाग की परिधि तीन ही अंगुल की होनी चाहिए ॥ १२४ ॥

**तर्जनीति।** तर्जन्याः अनामिकायाश्च मूलपरिधिः सार्द्धत्र्यङ्गुलः अर्द्धसहिताङ्गुलत्रयपरिमितः। कनिष्ठिकायाः मूले परिधिः त्र्यङ्गुलः अङ्गुलत्रितयमित एव, हिशब्दः पादपूरणार्थः॥ १२४॥

**स्वमूलपरिधेः पादहीनोऽग्रे परिधिः स्मृतः।**
**हस्तपादाङ्गुष्ठयोश्च चतुःपञ्चाङ्गुलं क्रमात्॥ १२५॥**

**अन्वयः**—स्वमूलपरिधेः पादहीनोऽग्रे परिधिः स्मृतः। हस्तपादाङ्गुष्ठयोः च क्रमात् चतुः-पञ्चाङ्गुलम्॥ १२५॥

**व्याख्या**—स्वमूलपरिधेः—स्वस्य = आत्मनः, मूले = मूलभागे, या परिधिः = परिवेष्टनम्, उक्तः, अग्रे तस्य, पादहीनः = चतुर्थांशन्यूनः, परिधिः = मण्डलम्, स्मृतः = कथितः। हस्त-पादाङ्गुष्ठयोः—हस्ताङ्गुष्ठस्य = कराङ्गुष्ठस्य, च = पुनः, पादाङ्गुष्ठस्य = चरणाङ्गुष्ठस्य च, परिधेः = वेष्टनस्य, मानम्, क्रमात् चतुःपञ्चाङ्गुलम् = चतुरङ्गुलं पञ्चाङ्गुलञ्चेति॥ १२५॥

**हिन्दी**—और प्रत्येक अंगुलियों के अपने-अपने मूलभाग की परिधियों की अपेक्षा अगले हिस्से का घेरा माप में एक चौथाई कम होता है। जैसे मध्यमा के मूल भाग की परिधि चार अंगुल की है तो उसके अग्रभाग की परिधि चतुर्थांशहीन अर्थात् तीन अंगुल की होती है। इसी तरह दूसरी अंगुलियों के लिए भी व्यवस्था है। हाथ तथा पैर के अंगुठे की परिधि क्रमशः चार और पाँच अंगुल की होनी चाहिए॥१२५॥

**स्वेति।** स्वस्य मूले यः परिधिः उक्त इति शेषः, अग्रे तस्येति शेषः, पादहीनः चतुर्थांशन्यूनः परिधिः स्मृतः, एतच्च अनुक्ताग्रपरिधेरिति बोध्यम्। हस्तपादाङ्गुष्ठयोः हस्ताङ्गुष्ठस्य पादाङ्गुष्ठस्य च परिधेर्मानं क्रमात् चतुःपञ्चाङ्गुलं चतुरङ्गुलं पञ्चाङ्गुलञ्चेत्यर्थः॥ १२५॥

**पादाङ्गुलीनां परिधिस्त्र्यङ्गुलः समुदाहृतः।**
**मण्डलं स्तनयोर्नाभेः सार्द्धाङ्गुलमथाङ्गुलम्॥ १२६॥**

**अन्वयः**—पादाङ्गुलीनां परिधिः त्र्यङ्गुलः समुदाहृतः। स्तनयोः नाभेश्च मण्डलं सार्द्धाङ्गुलम् एकाङ्गुलम्॥ १२६॥

**व्याख्या**—पादाङ्गुलीनाम् = अङ्गुष्ठस्य पूर्वमुक्तत्वात् तद्व्यतिरिक्तानां चरणाङ्गुलीनाम्, परिधिः = वेष्टनम्, त्र्यङ्गुलः = अङ्गुलित्रयपरिमितम्, समुदाहृतः = कथितः। स्तनयोः = कुचयोः, नाभेश्च = उदरावर्त्तस्य च, मण्डलम् = वेष्टनम्, सार्द्धाङ्गुलम् = अर्द्धेण सहितमङ्गुल्येकपरिमितम्, विज्ञेयमिति॥ १२६॥

**हिन्दी**—पैरों की अन्य अंगुलियों की परिधि तीन अंगुल की होनी चाहिए। स्तनों का घेरा डेढ़ अंगुल तथा नाभि का घेरा एक अंगुल का होना चाहिए॥ १२६॥

**पादाङ्गुलीनामिति।** पादाङ्गुलीनाम् अङ्गुष्ठव्यतिरिक्तानामित्यर्थः, अङ्गुष्ठस्य पूर्वमुक्तत्वादिति भावः, परिधिः त्र्यङ्गुलः अङ्गुलत्रयमितः समुदाहृतः। स्तनयोः नाभेश्च मण्डलं परिधिः सार्द्धाङ्गुलम् अर्द्धसहितैकाङ्गुलम् अङ्गुलम् एकाङ्गुलपरिमितञ्च क्रमात् विज्ञेयमिति शेषः॥ १२६॥

**सर्वाङ्गानां यथाशोभि पाटवं परिकल्पयेत्।**
**नोर्ध्वदृष्टिमधोदृष्टिं मीलिताक्षीं प्रकल्पयेत्।**
**नोग्रदृष्टिन्तु प्रतिमां प्रसन्नाक्षीं विचिन्तयेत्॥ १२७॥**

**अन्वयः**—यथाशोभि तथा सर्वाङ्गानां पाटवं परिकल्पयेत्। ऊर्ध्वदृष्टिम् अधोदृष्टिं मीलिताक्षीं न प्रकल्पयेत्। उग्रदृष्टिं न प्रसन्नाक्षीं प्रतिमां प्रकल्पयेत्॥१२७॥

**व्याख्या**—यथाशोभि—यथा = येन प्रकारेण, शोभी = शोभते, तथा सर्वाङ्गानाम् = सकलावयवानाम्, पाटवम् = कौशलम्, परिकल्पयेत् = कल्पनां कुर्यात्। तथा ऊर्ध्वदृष्टिम् = उपर्यवलोकनम्, अधोदृष्टिम् = अधस्ताद्दृग्पातः, मीलिताक्षीम् = निमीलितनयनाम्, न = नहि, प्रकल्पयेत् = रचयेत्। उग्रदृष्टिम् = प्रचण्डाक्षीम्, न = नहि, प्रत्युत प्रसन्नाक्षीम् = निर्मलनयनाम्, प्रतिमाम् = मूर्त्तिम्, प्रकल्पयेत् = रचयेत्॥१२७॥

**हिन्दी**—ऊपर या नीचे दृष्टिवाली, मुँदी आँखों वाली, भयानक आँखों वाली प्रतिमा नहीं बनानी चाहिए, प्रत्युत प्रसन्ननयना मूर्त्ति बनानी चाहिए॥१२७॥

**सर्वाङ्गानामिति**। यथाशोभि यथा शोभते इत्यर्थः, तथा सर्वाङ्गानां पाटवं सौष्ठवं परिकल्पयेत्। तथा ऊर्ध्वदृष्टिम् अधोदृष्टिं वा मीलिताक्षीं मुद्रितनयनां मूर्तिमिति शेषः, न प्रकल्पयेत्। किञ्च उग्रदृष्टिं भीषणाक्षीं प्रतिमां प्रसन्नाक्षीं प्रसन्ननयनां न विचिन्तयेत्॥१२७॥

**प्रतिमायास्तृतीयांशमर्द्धांशं तत् सुपीठकम्॥१२८॥**

**अन्वयः**—प्रतिमायाः तत् सुपीठकं तृतीयांशम् अर्द्धांशं वा॥१२८॥

**व्याख्या**—प्रतिमायाः = प्रकल्पितमूर्त्तेः, तत् = प्रख्यातम्, सुपीठकम्—सु = सुष्ठु, पीठकम् = आसनम्, तृतीयांशम् = मूर्त्तेरायामस्य भागत्रयपरिमितम्, वा, अर्द्धांशम् = भागार्द्धम्, रचयेत्॥ १२८॥

**हिन्दी**—प्रतिमा का एक सुन्दर आसन होना चाहिए। आसन का मान प्रतिमा के मान का तृतीयांश या आधा होना चाहिए॥१२८॥

**प्रतिमाया इति**। प्रतिमायाः तत् प्रसिद्धमित्यर्थः, सुपीठकं शोभनं पीठम् आसनमित्यर्थः, तृतीयांशम् अर्द्धांशं वा यादृशी प्रतिमा तत्तृतीयांशं वा इत्यर्थः, कल्पयेदिति पूर्वेणान्वयः॥१२८॥

**द्विगुणं त्रिगुणं द्वारं प्रतिमायाश्चतुर्गुणम्।**
**एकद्वित्रिचतुर्हस्तं पीठं देवालयस्य च॥१२९॥**

**अन्वयः**—देवालयस्य द्वारं प्रतिमायाः द्विगुणं त्रिगुणं वा चतुर्गुणम्। पीठञ्च एकद्वित्रिचतुर्हस्तं कल्पनीयम्॥१२९॥

**व्याख्या**—देवालयस्य = देवमन्दिरस्य, द्वारम् = अररं प्रतिहारं वा, प्रतिमायाः = मूर्त्तेः, द्विगुणम् = द्विगुणितम्, त्रिगुणम् = त्रिगुणितम्, वा चतुर्गुणं = चतुर्गुणितम्, निर्मातव्यम्। पीठञ्च = आसनञ्च, एकद्वित्रिचतुर्हस्तम् = एकहस्तम्, द्विहस्तम्, त्रिहस्तम्, चतुर्हस्तं वा, मूर्तिभेदेनासनभेदमपि कथनीयम्॥१२९॥

**हिन्दी**—देवमन्दिर का द्वार प्रतिमा के मान से दूना, तिगुना या चौगुना बड़ा बनाना चाहिए और तदनुसार प्रतिमा का आसन एक, दो, तीन या चार हाथ का बनाना चाहिए॥१२९॥

**द्विगुणमिति**। देवालयस्य द्वारं प्रतिमायाः द्विगुणं त्रिगुणं वा चतुर्गुणं कर्त्तव्यमिति शेषः। पीठञ्च एकद्वित्रिचतुर्हस्तम् एकहस्तं द्विहस्तं त्रिहस्तं चतुर्हस्तं वा प्रतिमाभेदेन कल्पनीयमिति शेषः॥१२९॥

**पीठतस्तु समुच्छ्रायो भित्तेर्दशकराधिकः।**
**द्वारात् तु द्विगुणोच्छ्रायः प्रसादस्योद्र्ध्वभूमिभाक्।**
**शिखरं चोच्छ्रायसमं द्विगुणं त्रिगुणं तु वा॥ १३०॥**

**अन्वयः**—भित्तेः समुच्छ्रायः पीठतः दशकराधिकः। प्रासादस्य द्वारात् द्विगुणोच्छ्रायः ऊर्ध्वभूमिभाक् शिखरम् उच्छ्रायेण समं द्विगुणं त्रिगुणं वा कल्पयेत्॥ १३०॥

**व्याख्या**—भित्तेः = देवालयस्य कुड्यस्य, समुच्छ्रायः = उच्चता, पीठतः = धरातलात्, दशकराधिकः = दशहस्तविशेषः, कार्यः। प्रासादस्य = देवालयस्य, द्वारात् = प्रतीहारात् द्विगुणोच्छ्रायः = द्विगुणितमौन्नत्यम्, ऊर्ध्वभूमिभाक् = उपरितनगामी स्यात्, किञ्च शिखरम् = प्रासादस्योच्चतमो भागः, उच्छ्रायेण = औन्नत्येन, समम् = तुल्यम् अनुरूपं वा, द्विगुणम् = द्विगुणितम्, त्रिगुणम् = त्रिगुणितम्, वा रचयेत्॥ १३०॥

**हिन्दी**—मन्दिर की दीवारों की ऊँचाई धरातल से दस हाथ अधिक करनी चाहिए। देवालय के ऊपर की भूमि दरवाजे से दूनी ऊँची होनी चाहिए और देवालय का शिखर ऊँचाई के अनुसार दूना या तिगुना होना चाहिए॥ १३०॥

**पीठत इति**। भित्तेः देवगृहस्येति शेषः, समुच्छ्रायः औन्नत्यं पीठतः पीठात् दशकराधिकः दशहस्ताधिकः कार्य्य इति शेषः। प्रासादस्य द्वारात् द्विगुणोच्छ्रायः द्विगुणमौन्नत्यम् ऊद्र्ध्वभूमिभाक् उपरितनगामी स्यात्। किञ्च शिखरं प्रासादस्येति शेषः, उच्छ्रायेण समं सदृशम् अनुरूपमित्यर्थः, द्विगुणं त्रिगुणं वा कल्पयेदिति शेषः॥ १३०॥

**एकभूमिं समारभ्य सपादशतभूमिकम्।**
**प्रसादं कारयेच्छक्त्या ह्यष्टास्त्रं पद्मसन्निभम्।**
**चतुर्दिङ्मण्डपं वापि चतुःशालं समन्ततः॥ १३१॥**

**अन्वयः**—एकभूमिं समारभ्य सपादशतभूमिकम् अष्टास्रम् पद्मसन्निभं चतुर्दिक् मण्डपं समन्ततः चतुःशालं वा प्रासादं शक्त्या कारयेत्॥ १३१॥

**व्याख्या**—एकभूमिम् = कोष्ठैकम्, समारभ्य = प्रारभ्य, सपादशतभूमिकम् = पादाधिक-शतकोष्ठपर्यन्तम्, अष्टास्रम् = अष्टकोणम्, पद्मसन्निभम् = कमलमिव, चतुर्दिक् = समन्ततः, मण्डपम् = लघुगृहसमन्वितम्, समन्ततः = सर्वतः, चतुःशालम् = गृहचतुष्टयसमन्वितम्, वा = अथवा, प्रसादम् = भव्यमन्दिरम्, शक्त्या = सामर्थ्यानुसारेण, कारयेत् = निर्माणं कुर्यात्॥ १३१॥

**हिन्दी**—एक मंजिला से लेकर सवा सौ मंजिले तक का अठपहला, कमलदल के समान चारों ओर मण्डपों या महलों से घिरे भव्य मन्दिर का निर्माण यथाशक्ति करवाना चाहिए॥ १३१॥

**एकभूमिमिति**। एकभूमिम् एकां भूमिं समारभ्य सपादशतभूमिकं पादाधिकशतभूमिपर्य्यन्तम् अष्टास्रम् अष्टकोणं पद्मसन्निभं पद्माकारं चतुर्दिङ्मण्डपं चतुर्दिग्वर्त्तिगृहसमन्वितं समन्ततः चतुःशालं गृहचतुष्टययुक्तं वा प्रासादं शक्त्या शक्त्यनुसारेण कारयेत्॥ १३१॥

**सहस्रस्तम्भसंयुक्तश्चोत्तमोऽन्यः समोऽधमः॥ १३२॥**

**अन्वयः**—सहस्रस्तम्भसंयुक्तः उत्तमः, अन्यः समः, अन्यः अधमः॥ १३२॥

**व्याख्या**—सहस्रेण = दशशतेन, स्तम्भेन = उपस्तम्भेन, संयुक्तः = समन्वितः, प्रासादः, उत्तमः = उत्कृष्टः, अन्यः = ततोऽल्पम्, समम् = सामान्यम्, ततोऽपि न्यूनः, अधमः = निकृष्टो भवति ॥ १३२ ॥

**हिन्दी**—हजार खम्भों वाला मन्दिर उत्कृष्ट तथा उससे कम खंभों वाला सामान्य तथा उससे भी कम खम्भे वाला प्रासाद निकृष्ट कोटि का होता है ॥ १३२ ॥

**सहस्रेति**। सहस्रस्तम्भेन संयुक्तः प्रासादः उत्तमः, ततो न्यूनः समः मध्यमः, ततोऽपि न्यूनः अधमः ॥ १३२ ॥

**प्रासादे मण्डपे वापि शिखरं यदि कल्प्यते।**
**स्तम्भास्तत्र न कर्त्तव्या भित्तिस्तत्र सुखप्रदा ॥ १३३ ॥**

**अन्वयः**—प्रासादे मण्डपे वापि यदि शिखरं कल्प्यते, तदा तत्र स्तम्भाः न कर्त्तव्याः, तत्र भित्तिरेव सुखप्रदा ॥ १३३ ॥

**व्याख्या**—प्रासादे = भव्यमन्दिरे, मण्डपे = भवने, वा = अथवा, यदि = चेत्, शिखरम् = भवनस्योच्चतमो भागः, कल्प्यते, तदा तत्र = तस्मिन् भवने, स्तम्भाः = स्थूलाः, न कर्त्तव्याः, तत्र भित्तिरेव, सुखप्रदा = कल्याणदा भवति ॥ १३३ ॥

**हिन्दी**—जिस मंदिर य मण्डप पर कंगूरे बनवाना हो तो वहाँ पर खम्भें नहीं लगवाना चाहिए, क्योंकि वहाँ तो दीवार ही सुखप्रद होती है ॥ १३३ ॥

**प्रासादे इति**। प्रासादे मण्डपे वापि यदि शिखरं कल्प्यते, तदा तत्र स्तम्भाः न कर्त्तव्याः, तत्र भित्तिरेव सुखप्रदा शोभना इत्यर्थः ॥ १३३ ॥

**प्रासादमध्यविस्तारः प्रतिमायाः समन्ततः।**
**षाड्गुणोऽष्टगुणो वापि पुरतो वा सुविस्तरः ॥ १३४ ॥**

**अन्वयः**—प्रासादमध्यसमन्ततः विस्तारः प्रतिमायाः षड्गुणः अष्टगुणो वा पुरतः सुविस्तरः ॥ १३४ ॥

**व्याख्या**—प्रासादमध्यस्य = मन्दिराभ्यन्तरभागस्य, समन्ततः = सर्वतः, विस्तारः = विस्तृतिः, प्रतिमायाः = देवमूर्त्तेः, षड्गुणः = षड्गुणितः, अष्टगुणः = अष्टगुणितः, वा = अथवा, कल्प्यः, पुरतः = प्रतिमायाः अग्रतः, सुविस्तरः = समधिकप्रसारो विचार्यः ॥ १३४ ॥

**हिन्दी**—मन्दिर के भीतरी भाग का फैलाव चारों ओर प्रतिमा से छः गुना या आठ गुना अधिक होना चाहिए और मूर्त्ति से आगे सर्वाधिक विस्तार होना चाहिए ॥ १३४ ॥

**प्रासादेति**। प्रासादमध्यस्य प्रासादाभ्यन्तरभागस्य समन्ततः विस्तारः प्रतिमायाः षड्गुणः अष्टगुणो वा, पुरतः अग्रतस्तु प्रतिमाया इति शेषः, विस्तारः सुविस्तारः समधिकः कल्प्य इति शेषः ॥ १३४ ॥

**वाहनं मूर्त्तिसदृशं सार्द्धं वा द्विगुणं स्मृतम्।**
**यत्र नोक्तं देवताया रूपं तत्र चतुर्भुजम् ॥ १३५ ॥**

**अन्वयः**—वाहनं मूर्त्तिसदृशं सार्द्धं वा द्विगुणं स्मृतम्। यत्र देवतायाः रूपं न उक्तं तत्र चतुर्भुजं ज्ञेयम् ॥ १३५ ॥

**व्याख्या**—वाहनम् = देवतायाः अध्यारोहणम्, मूर्त्तिसदृशम् = प्रतिमातुल्यम्, सार्द्धम् = अर्द्धेण सहैकम्, वा = अथवा, द्विगुणम् = द्विगुणितम्, त्रिगुणम् = त्रिगुणितम्, वा = अथवा, स्मृतम् = कथितम्। यत्र = यस्मिन् मन्दिरे, देवतायाः = प्रतिष्ठितमूर्त्तेः, रूपम् = आकारम्, न = नहि, उक्तम् = प्रोक्तम्, तत्र = तस्मिन् मन्दिरे, चतुर्भुजम्, ज्ञेयम् = बोध्यम् ॥ १३५ ॥

**हिन्दी**—देवता या देवी का वाहन उनकी मूर्त्ति के अनुरूप डेढ़ गुना या दुगुना बड़ा होना चाहिए। जहाँ देव-विग्रह में बाँहों का उल्लेख न हों, वहाँ चार बाँहों वाली मूर्त्ति स्थापित करनी चाहिए ॥ १३५ ॥

**वाहनमिति**। वाहनं देवताया इति शेषः, मूर्त्तिसदृशं सार्द्धं अर्द्धसहितं वा द्विगुणं मूर्त्तेरिति शेषः, स्मृतं कथितम्। यत्र देवतायाः रूपं न उक्तं तत्र चतुर्भुजं ज्ञेयमिति शेषः ॥ १३५ ॥

**अभयं च वरं दद्याद् यत्र नोक्तं यदायुधम्।**
**अधःकरे तूर्ध्वकरे शङ्खं चक्रं तथाङ्कुशम् ॥ १३६ ॥**
**पाशं वा डमरुं शूलं कमलं कलसं स्रुवम्।**
**लड्डुकं मातुलुङ्गं वीणां मालां च पुस्तकम् ॥ १३७ ॥**

**अन्वयः**—यत्र यत् आयुधं न उक्तं तत्र अधःकरे अभयं वरञ्च, ऊर्ध्वकरे शङ्खं चक्रम् अङ्कुशं पाशं डमरुं शूलं कमलं कलसं स्रुवं लड्डुकं मातुलुङ्गं वीणां मालां वा पुस्तकम् ॥ १३६-१३७ ॥

**व्याख्या**—यत्र = यस्मिन् स्थाने, यत् = यस्य देवस्य, आयुधम् = प्रहरणम्, न = नहि, उक्तम् = कथितम्, तत्र = तस्मिन् स्थाने, अधःकरे = निम्नहस्ते, अभयम् = निर्भयम्, च = पुनः, वरम् = वरदम्, ऊर्ध्वकरे = उपरिहस्ते, शङ्खम् = कम्बुम्, चक्रम् = अस्त्रभेदः, अङ्कुशम् = सृणिः, पाशम् = वागुराख्यशस्त्रभेदः, डमरुम् = गुटिकाद्वययुक्तो वाद्यभेदः, शूलम् = त्रिशूलम्, कमलम् = पद्मम्, कलसम् = घटः, स्रुवम् = यागावयवविशेषः, लड्डुकम् = मोदकः, मातुलुङ्गम्, वीणा = वल्लकी, मालाम् = स्रक्, वा पुस्तकम्, यथामति दद्यात् ॥ १३६-१३७ ॥

**हिन्दी**—जहाँ देवता के अस्त्र-शस्त्र का उल्लेख न हो, वहाँ पर नीचे के हाथों में क्रमशः अभय तथा मुद्रा का अंकन करना चाहिए और ऊपर के हाथों में शंख, चक्र, अंकुश, पाश, डमरु, शूल, कमल, कलश, स्रुवा, लड्डू, मातुलुङ्ग, वीणा, माला और पुस्तक का अंकन करना चाहिए ॥ १३६-१३७ ॥

**अभयमिति**। **पाशमिति**। यत्र यस्य देवस्य आयुधम् अस्त्रं न उक्तं, तत्र अधःकरे अभयं वरञ्च यथाक्रमेण, ऊर्ध्वकरे तु शङ्खं चक्रम् अङ्कुशं पाशं डमरुं शूलं कमलं कलसं स्रुवं यज्ञाङ्गविशेषं, लड्डुकं, मातुलुङ्गं, वीणां, माला वा पुस्तकं यथारुचि दद्यात् ॥ १३६-१३७ ॥

**मुखानां यत्र बाहुल्यं तत्र पङ्क्त्या निवेशनम्।**
**तत् पृथग्ग्रीवमुकुटसुमुखं स्वक्षिकर्णयुक् ॥ १३८ ॥**

**अन्वयः**—यत्र मुखानां बाहुल्यं तत्र पङ्क्त्या निवेशनम्। तत् पृथग्ग्रीवमुकुटसुमुखं स्वक्षिकर्णयुक् ॥ १३८ ॥

**व्याख्या**—यत्र = यस्मिन्मूर्त्तौ, मुखानाम् = आननानाम्, बाहुल्यम् = आधिक्यम्, तत्र = तस्यां प्रतिमायाम्, पङ्क्त्या = श्रेणीक्रमेण, निवेशनम् = स्थापनम्। तत् = तदाननम्, पृथक् =

भिन्नं भिन्नम्, ग्रीवम् = कण्ठम्, मुकुटम् = किरीटम्, सुमुखम् = प्रसन्नवदनम्, स्वक्षिकर्णयुक् = सुलोचनश्रवणान्वितम्, कार्यम् ॥ १३८ ॥

**हिन्दी**—जिस प्रतिमा में बहुत सारे मुख बनाने हों, वहाँ उन्हें श्रेणीबद्ध बनाना चाहिए। उनके कण्ठ, मुकुट, मुख, आँखें और कानों का भिन्न-भिन्न निर्माण सुन्दर ढंग से होना चाहिए ॥ १३८ ॥

**मुखानामिति**। यत्र मुखानां बाहुल्यं बहुमुखमित्यर्थः, तत्र पङ्क्त्या श्रेणीक्रमेण निवेशनं मुखानामिति कार्य्यमिति च शेषः। तत् प्रत्येकं मुखमित्यर्थः, पृथग्ग्रीवमुकुटं पृथग्ग्रीवं पृथङ्मुकुटं सुमुखं सुप्रसन्नवदनं स्वक्षिकर्णयुक् शोभननयनकर्णयुतं कार्य्यमिति शेषः ॥ १३८ ॥

**भुजानां यत्र बाहुल्यं न तत्र स्कन्धभेदनम् ॥ १३९ ॥**

**अन्वयः**—यत्र भुजानां बाहुल्यं तत्र स्कन्धभेदनं न कुर्यात् ॥ १३९ ॥

**व्याख्या**—यत्र = यस्यां प्रतिमायाम्, भुजानाम् = बाहूनाम्, बाहुल्यम् = आधिक्यम्, तत्र = तस्मिन्, स्कन्धस्य = कण्ठस्य, भेदनम् = बाहुल्यम्, नहि, कार्यम् ॥ १३९ ॥

**हिन्दी**—जिस मूर्त्ति में अनेक बाँहें बनानी हों वहाँ कन्धों की अधिकता नहीं होनी चाहिए ॥ १३९ ॥

**भुजानामिति**। यत्र भुजानां बाहुल्यं बहुभुजमूर्त्तिरित्यर्थः, तत्र मूर्त्तौ स्कन्धयोः भेदनं बाहुल्यं न कार्य्यम् ॥ १३९ ॥

**कूर्परोर्ध्वन्तु सूक्ष्माणि चिपिटानि दृढानि च।**
**भुजमूलानि कार्य्याणि पक्षमूलानि वै यथा ॥ १४० ॥**

**अन्वयः**—कूर्परोर्ध्वन्तु भुजमूलानि यथा पक्षमूलानि तथा सूक्ष्माणि चिपिटानि दृढानि कार्याणि ॥ १४० ॥

**व्याख्या**—कूर्परस्य = कफोणेः, ऊर्ध्वन्तु = उपरिभागे तु, भुजमूलानि = बाहुकूपानि, यथा, पक्षयोः = पार्श्वयोः, मूलानि, तथा = तेनैव प्रकारेण, सूक्ष्माणि = गहनानि, चिपिटानि = सपाटानि, दृढानि = सबलानि, कार्याणि = निर्मातव्यानि ॥ १४० ॥

**हिन्दी**—केहुनी के ऊपर बाँहों की जड़ दोनों बगलों के मूल भाग की तरह सूक्ष्म, चिपटे तथा मजबूत बनानी चाहिए ॥ १४० ॥

**कूर्परोर्ध्वमिति**। कूर्परस्य कफोणेः ऊर्ध्वन्तु भुजमूलानि यथा पक्षयोः पार्श्वयोः मूलानि, तथा सूक्ष्माणि चिपिटानि दृढानि च कार्य्याणि ॥ १४० ॥

**ब्रह्मणस्तु चतुर्दिक्षु मुखानां विनियोजनम् ॥ १४१ ॥**

**अन्वयः**—ब्रह्मणस्तु मुखानां चतुर्दिक्षु विनियोजनम् ॥ १४१ ॥

**व्याख्या**—ब्रह्मणस्तु = सृष्टिकर्त्तुस्तु, मुखानाम् = आननानाम्, चतुर्दिक्षु = चतुर्णां दिक्षु, विनियोजनम् = स्थापनम्, कुर्यात् ॥ १४१ ॥

**हिन्दी**—ब्रह्मा की मूर्त्ति में चारों ओर एक-एक मुख का निर्माण करना चाहिए ॥ १४१ ॥

**ब्रह्मण इति**। ब्रह्मणस्तु मुखानां चतुर्णां विनियोजनं विनिवेशनं चतुर्दिक्षु कर्त्तव्यं न तु पङ्क्तिक्रमेणेत्यर्थः ॥ १४१ ॥

**हयग्रीवो वराहश्च नृसिंहश्च गणेश्वरः।**
**मुखैर्विना नराकारो नृसिंहश्च नखैर्विना॥ १४२॥**

**अन्वयः**—हयग्रीवः वराहः नृसिंहः गणेश्वरश्च मुखैः विना नराकारः कार्यः। तथा च नृसिंहः नखैश्च विना नराकारः कार्यः ॥१४२॥

**व्याख्या**—हयग्रीवः = अश्वकण्ठः, वराहः = शूकरमुखम्, नृसिंहः = सिंहमुखम्, गणेश्वरः = गजाननम्, मुखैः = आननैः, विना = विहाय, नराकारः = मनुष्याकृतिः, कार्यः = कर्त्तव्यः। तथा नृसिंहः = नरसिंहस्य मूर्त्तिः, नखैः = नखरैः, विना = विहाय, नराकारः = मानवाकारः, कार्यः = निर्मातव्यः इति॥१४२॥

**हिन्दी**—हयग्रीव, वराह, नृसिंह और गणेश्वर—इन चार देवताओं की मूर्त्तियों में मुँह छोड़कर शेष अंगों का निर्माण मानवाकार होना चाहिए। नरसिंह की मूर्त्ति को भी नखों को छोड़कर मानवाकार बनानी चाहिए॥१४२॥

**हयग्रीव इति**। हयग्रीवः वराहः नृसिंहः गणेश्वरश्च मुखैर्विना नराकारः मानवाकृतिः कार्य्यः, तथा च हयग्रीवस्य मुखम् अश्वस्येव, वराहस्य मुखं शूकरस्येव, नृसिंहस्य मुखं सिंहस्येव, गणेश्वरस्य मुखं हस्तिन इवेति बोध्यम्। नृसिंहः नखैश्च विना नराकारः कार्य्यः नृसिंहस्य नखाः सिंहस्येवेति भावः॥१४२॥

**तिष्ठतीं सूपविष्टां वा स्वासने वाहनस्थिताम्।**
**प्रतिमामिष्टदेवस्य कारयेदुक्तलक्षणाम्॥ १४३॥**
**हीनश्मश्रुनिमेषां च सदा षोडशवार्षिकीम्।**
**दिव्याभरणवस्त्राढ्यां दिव्यवर्णक्रियां सदा।**
**वस्त्रैरापादगूढां च दिव्यालङ्कारभूषिताम्॥ १४४॥**

**अन्वयः**—स्वासने तिष्ठतीं सूपविष्टां वाहनस्थितां हीनश्मश्रुनिमेषां सदा षोडशवार्षिकीं दिव्याभरणवस्त्राढ्यां दिव्यवर्णक्रियां वस्त्रैरापादगूढां दिव्यालङ्कारभूषिताम् उक्तलक्षणाम् इष्टदेवस्य प्रतिमां कारयेत्॥१४३-१४४॥

**व्याख्या**—स्वासने—स्वस्य = आत्मनः, आसने = उपवेशने, तिष्ठतीम् = विराजतीम्, सूपविष्टाम् = सुखेनोपविशन्तीं वा, वाहने = आरोहणे, सिंहादौ, स्थिताम् = आरूढाम्, हीनश्मश्रुनिमेषाम् = श्मश्रुरहितां निर्निमेषाम्, सदा = सर्वदा, षोडशवार्षिकीम् = तरुणीरूपाम्, दिव्याभरणवस्त्राढ्याम्—दिव्यैः = स्वर्गीयैः, आभरणैः = आभूषणैः, वस्त्राढ्यैः = वसनप्रभृतिभिः, समन्विताम् = संयुक्ताम्, दिव्यवर्णक्रियाम्—दिव्या = स्वर्गीया, वर्णाः = आकृतयः, क्रियाश्च यस्याः ताम्, वस्त्रैः = वसनैः, आपादगूढाम् = चरणपर्यन्तप्रच्छन्नाम्, तथा दिव्यालङ्कारशोभिताम् अलौकिकाभरणभूषिताम्, उक्तलक्षणाम्, देवीप्रतिमां कारयेत् = रचयेत्॥१४३॥

**हिन्दी**—अपने आसन पर विराजती अथवा सुखपूर्वक बैठी हुई अथवा वाहन पर स्थित दाढ़ी-मूँछ रहित, पलक न झपकाने वाली, सदा षोडशी, दिव्य आभूषण एवं वस्त्रों वाली, दिव्यवर्ण एवं क्रिया वाली, वस्त्रों से पैर तक ढकी हुई, दिव्य अंलकारों से भूषित, पूर्वोक्त लक्षणों से युक्त अपने इष्टदेव या देवी की प्रतिमा बनवानी चाहिए॥१४३-१४४॥

**तिष्ठतीमिति। हीनेति।** स्वस्य आसने तिष्ठतीं दण्डायमानां सूपविष्टां सुखेन उपविष्टां वा वाहने सिंहादौ स्थितां हीनश्मश्रुनिमेषां श्मश्रुरहितां निर्निमेषाञ्च इत्यर्थः, सदा षोडशवर्षवयस्कां दिव्याभरणवस्त्राढ्यां दिव्यैः आभरणैः वस्त्राद्यैश्च समन्वितां दिव्यवर्णक्रियां दिव्या वर्णाः क्रियाश्च यस्याः तां वस्त्रैः आपादगूढां पादपर्य्यन्तगुप्तां तथा दिव्यालङ्कारशोभिताम् उक्तलक्षणाम् इष्टदेवस्य प्रतिमां कारयेत् ॥ १४३-१४४ ॥

**हीनाङ्ग्यो नाधिकाङ्ग्यश्च कर्त्तव्या देवताः क्वचित्।**
**हीनाङ्गी स्वामिनं हन्ति ह्यधिकाङ्गी च शिल्पिनम् ॥ १४५ ॥**

**अन्वयः**—क्वचित् देवताः हीनाङ्ग्यः अधिकाङ्ग्यश्च न कर्त्तव्याः। हीनाङ्गी स्वामिनं हन्ति, अधिकाङ्गी शिल्पिनं च हन्ति ॥ १४५ ॥

**व्याख्या**—क्वचित् = कदाचित्, देवताः = देवप्रतिमाः, हीनाङ्ग्यः = अङ्गविहीनाः, अधिकाङ्ग्यश्च = विशेषावयवाश्च, न = नहि, कर्त्तव्याः = रचितव्याः। यतः, हीनाङ्गी = अङ्गविहीनः देवता, स्वामिनम् = कर्त्तारम्, हन्ति = विनाशयति, अधिकाङ्गी = विशेषावयवा, शिल्पिनं घातयति ॥ १४५ ॥

**हिन्दी**—किसी भी स्थिति में अङ्गविहीन या अधिक अङ्गवाली देवप्रतिमा नहीं पूजनी चाहिए। क्योंकि हीनाङ्गी प्रतिमा निर्माता को तथा विशेष अङ्गवाली प्रतिमा शिल्पि को विनष्ट करती है ॥ १४५ ॥

**हीनाङ्ग्य इति।** क्वचित् कदाचित् देवताः हीनाङ्ग्यः अङ्गविकलाः अधिकाङ्ग्यश्च न कर्त्तव्याः। हीनाङ्गी देवता स्वामिनं कर्त्तारम्, अधिकाङ्गी च शिल्पिनं हन्ति नाशयति ॥ १४५ ॥

**कृशा दुर्भिक्षदा नित्यं स्थूला रोगप्रदा सदा।**
**गूढसन्ध्यस्थिधमनी सर्वदा सौख्यवर्द्धिनी ॥ १४६ ॥**

**अन्वयः**—कृशा नित्यं दुर्भिक्षदा स्थूला सदा रोगप्रदा गूढसन्ध्यस्थिधमनी सर्वदा सौख्यवर्द्धिनी ॥ १४६ ॥

**व्याख्या**—कृशा = दुर्बला देवप्रतिमा, नित्यम् = सततम्, दुर्भिक्षदा = अकालप्रदा भवति, स्थूला = तुन्दिला प्रतिमा, सदा = सर्वदा, रोगप्रदा = रोगकारिणी भवति, तथा गूढसन्ध्यस्थिधमनी = गुप्तसन्धिस्थाना, गुप्तास्थिका आवृतशिरा च प्रतिमा, सर्वदा = सदा, सौख्यप्रदा = सुखकारिणी च भवति ॥ १४६ ॥

**हिन्दी**—दुबली-पतली प्रतिमा दुर्भिक्ष देने वाली होती है, मोटी प्रतिमा रोग देने वाली होती है तथा जिस प्रतिमा का सन्धिस्थल, धमनी और शिरा ढकी और सुपुष्ट होती है, वह सदैव सुखकारिणी होती है ॥ १४६ ॥

**कृशेति।** कृशा कृशाङ्गी देवता नित्यं दुर्भिक्षदा अभावदायिनी, स्थूला स्थूलाङ्गी सदा रोगप्रदा रोगदायिनी गूढसन्ध्यस्थिधमनी गुप्तसन्धिस्थाना गुप्तास्थिका गुप्तशिरा च सौख्यवर्द्धिनी सुखवृद्धिकरी भवति ॥ १४६ ॥

**वराभयाब्जशङ्खाढ्यहस्ता विष्णोश्च सात्त्विकी।**
**मृगवाद्याभयवरहस्ता सोमस्य सात्त्विकी ॥ १४७ ॥**

**वराभयाब्जलड्डुकहस्तेभास्यस्य सात्त्विकी।**
**पद्ममालाभयवरकरा सत्त्वाधिका रवेः ॥ १४८ ॥**
**वीणालुङ्गाभयवरकरा सत्त्वगुणा श्रियः ॥ १४९ ॥**

**अन्वयः**—विष्णोः वराभयाब्जशङ्खाढ्यहस्ता सात्त्विकी। सोमस्य मृगवाद्याभयवरहस्ता सात्त्विकी। इभास्यस्य वराभयाब्जलड्डुकहस्ता सात्त्विकी। रवेः पद्ममालाभयवरकरा सत्त्वाधिका। श्रियः वीणालुङ्गाभयवरकरा सत्त्वगुणा ॥ १४७-१४९ ॥

**व्याख्या**—विष्णोः = माधवस्य, वराभयाब्जशङ्खाढ्यहस्ता, करैश्चतुर्भिः, वरम् = अनुग्रहम्, अभयम् = अभीतिकरम्, अब्जम् = कमलम्, शङ्खाढ्यः = कम्बुप्रभृतयः, क्रमेण दधती मूर्त्तिः, सात्त्विकी = सतोगुणप्रधाना कीर्त्तिता। सोमस्य = चन्द्रस्य, मृगवाद्याभयवरहस्ता—भुजचतुष्टयेन, मृगम् = हिरणम्, वाद्यम् = वाद्ययन्त्रम्, अभयम् = अभयदानार्थोत्थितकरम्, वरञ्च = मनोरथ-पूर्त्यर्थवरदकरम्, क्रमेण दधतीति मूर्त्तिः, सात्त्विकी = सतोगुणप्रधाना भवति। इभास्यस्य = गणेशस्य, वराभयाब्जलड्डुकहस्ता– चतुर्भुजेन वरम् = आशीषम्, अभयम् = अभीतकराश्वासनम्, अब्जम् = पद्मम्, लड्डुकम् = मोदकम्, धारयन्ती मूर्त्तिः, सात्त्विकी = सत्त्वगुणप्रधाना भवति। रवेः = सूर्यस्य, पद्ममालाभयवरकरा—भुजचतुष्टयेन पद्मम् = कमलम्, मालां = स्रजाम्, अभयं वरञ्च धृता मूर्त्तिः, सत्त्वाधिका = सात्त्विकी भवति। श्रियः = लक्ष्म्याः, वीणालुङ्गाभयवरकरा—भुजचतुष्टयेन, वीणाम् = वल्लकीम्, लुङ्गम्, अभयम् = अभयमुद्राम्, वरम् = वरदमुद्राम्, धारयन्ती मूर्त्तिः, सत्त्वगुणा = सत्त्वगुणप्रधाना भवति ॥ १४७-१४९ ॥

**हिन्दी**—विष्णु की जिस मूर्त्ति में क्रम से वर तथा अभय दान की मुद्रा, कमल तथा शंख से युक्त चारों हाथ होते हैं, वह सात्त्विक प्रतिमा कहलाती है। चन्द्रमा की वह मूर्त्ति, जिसके चारों हाथों में क्रमशः मृग, वाद्य, अभय एवं वरद मुद्रा होती है, वह सात्त्विक प्रतिमा होती है। गणेशजी की सात्त्विक प्रतिमा के चारों हाथों में क्रमशः वरदमुद्रा, अभयदानमुद्रा तथा कमल और लड्डु होते हैं। सूर्य की सात्त्विक मूर्त्ति के चारों हाथों में क्रमशः कमल, माला, वरद एवं अभयदान की मुद्रा होती है। लक्ष्मी की सात्त्विक प्रतिमा के चारों हाथों में क्रमशः वीणा, लुङ्ग तथा वरद एवं अभय दान की मुद्रा होती है ॥ १४७-१४९ ॥

**वरेत्यादि**। विष्णोः वराभयाब्जशङ्खाढ्यहस्ता भुजैश्चतुर्भिर्वरम्, अभयम्, अब्जं पद्मं, शङ्खञ्च क्रमेण दधतीत्यर्थः, मूर्त्तिः सात्त्विकी सत्त्वगुणा। सोमस्य चन्द्रस्य मृगवाद्याभयवरहस्ता भुजचतुष्टयेन मृगं वाद्यम् अभयं वरञ्च क्रमेण दधतीत्यर्थः, मूर्त्तिः सात्त्विकी। इभास्यस्य हस्तिशुण्डस्य गणेशस्य इत्यर्थः, वराभयाब्जलड्डुकहस्ता भुजचतुष्टयेन वरम् अभयम् अब्जं लड्डुकञ्च दधतीत्यर्थः, मूर्त्तिः सात्त्विकी। रवेः सूर्य्यस्य पद्ममालाभयवरकरा भुजचतुष्टयेन पद्मं मालाम् अभयं वरञ्च दधतीत्यर्थः, मूर्त्तिः सत्त्वाधिका सात्त्विकीत्यर्थः। श्रियः लक्ष्म्याः वीणालुङ्गाभयवरकरा भुजचतुष्टयेन वीणां लुङ्गम् अभयं वरञ्च दधतीत्यर्थः, मूर्त्तिः सत्त्वगुणा सात्त्विकीत्यर्थः ॥ १४७-१४९ ॥

**शङ्खचक्रगदापद्मैरायुधैरादितः पृथक्।**
**षट् षड्भेदाश्च मूर्त्तीनां विष्णवादीनां भवन्ति हि ॥ १५० ॥**

**अन्वयः**—विष्ण्वादीनां मूर्त्तीनां शङ्खचक्रगदापद्मैः पृथक् आयुधैः आदितः षट् षट् भेदाश्च भवन्ति हि ॥ १५० ॥

**व्याख्या**—विष्ण्वादीनाम् = लक्ष्मीपतिप्रभृतीनाम्, मूर्त्तीनाम्, शङ्खचक्रगदापद्मैः = कम्बु-चक्रलोहमयशस्त्रकमलैः, पृथक् = भिन्नैः, आयुधैः = प्रहरणैः, आदितः = प्रथमतः, षट् षट्, भेदाः = प्रकाराः, भवन्ति = जायन्ते, हि ॥ १५० ॥

**हिन्दी**—विष्णु प्रभृति देवताओं की मूर्त्ति के पहले से लेकर चौथे हाथ तक में शंख, चक्र, गदा, पद्म और आयुधों के धारण करने में भिन्नता होने के कारण छः-छः भेद होते हैं ॥ १५० ॥

**शङ्खेति**। विष्ण्वादीनां मूर्त्तीनां शङ्खचक्रगदापद्मैः पृथक् विभिन्नैः आयुधैरस्त्रैश्च आदितः प्रथमतः षट् षट् भेदाश्च भवन्ति हिशब्दोऽवधारणार्थः ॥ १५० ॥

**यथोपाधिप्रभेदेन स्वसंयोगविभागतः।**
**समस्तव्यस्तवर्णादिभेदज्ञानं प्रजायते ॥ १५१ ॥**

**अन्वयः**—उपाधिप्रभेदेन यथा स्वसंयोगविभागतः समस्तव्यस्तवर्णादिभेदज्ञानं प्रजायते ॥ १५१ ॥

**व्याख्या**—उपाधीनाम् = स्वधर्मस्यान्यगततयावभासकवस्तूनां वा नाम्नाम्, प्रभेदेन = प्रकारेण, यथा = इव, स्वसंयोगविभागतः—स्वस्य = आत्मनः, संयोगानाम् = अनेकायुधवाह-नादिसंश्लेषाणाम्, विभागेन = पार्थक्येन, समस्तानाम् = सकलानाम्, व्यस्तानाम् = व्यासक्तानाम्, वर्णादीनाम् = जात्यादीनाम्, भेदज्ञानम् = प्रभेदबोधः, प्रजायते = सञ्जायते ॥ १५१ ॥

**हिन्दी**—मूर्त्तियों की जैसी उपाधि है तदनुसार भेद होने से और वाहन तथा आयुधों के संयोग या अलगाव के कारण पूरा या अलग-अलग रूप से वर्णों का भेद जाना जाता है ॥ १५१ ॥

**यथेति**। उपाधीनां नाम्नां प्रभेदेन यथा इव स्वसंयोगविभागतः स्वस्य संयोगानां वाहनास्त्रादियोगानां विभागेन पार्थक्येन समस्तानां समग्राणां व्यस्तानाम् एकैकेषाञ्च वर्णादीनां भेदज्ञानं प्रजायते भवति ॥ १५१ ॥

**लेख्या लेप्या सैकती च मृण्मयी पैष्टिकी तथा।**
**एतासां लक्षणाभावे न कैश्चिद् दोष ईरितः ॥ १५२ ॥**

**अन्वयः**—लेख्या, लेप्या, सैकती, मृण्मयी तथा पैष्टिकी—एतासां लक्षणाभावे कैश्चित् दोषः न ईरितः ॥ १५२ ॥

**व्याख्या**—लेख्या = चित्रिता, लेप्या = उपलेपनमयी, सैकती = सिकतासमुद्भवा, मृण्मयी = मृत्तिकानिर्मिता, तथा, पैष्टिकी = तण्डुलचूर्णनिर्मिता, एतासाम् = प्रतिमानाम्, लक्षणाभावे—लक्षणस्य = निर्दिष्टस्वरूपस्य, अभावे = अनस्तित्वे सति, कैश्चित् = जनैः, दोषः = अपराधः, न = नहि, ईरितः = कथितः ॥ १५२ ॥

**हिन्दी**—चित्र, लेप, बालू, मिट्टी तथा चावल के चूरा से निर्मित मूर्त्ति में कोई-कोई शास्त्र-विहित लक्षणों के अभाव में भी दोष नहीं मानते हैं ॥ १५२ ॥

**लेख्येति**। लेख्या चित्रिता, लेप्या लेपमयी, सैकती सिकतामयी, मृण्मयी मृत्तिकामयी तथा

पैष्टिकी पिष्टमयी च याः प्रतिमाः उक्ताः, एतासां लक्षणाभावे लक्षणस्य अभावे असत्तायां कैश्चित् जनैः दोषः न ईरितः उक्तः, एता यथारुचि कर्त्तव्या इति भावः॥ १५२ ॥

**बाणलिङ्गे स्वयम्भूते चन्द्रकान्तसमुद्भवे।**
**रत्नजे गण्डकोद्भूते मानदोषो न सर्वथा।**
**पाषाणधातुजायां तु मानदोषान् विचिन्तयेत्॥ १५३ ॥**

**अन्वयः**—स्वयम्भूते चन्द्रकान्तसमुद्भवे रत्नजे गण्डकोद्भूते च बाणलिङ्गे सर्वथा मानदोषः न। केवलं पाषाणधातुजायाञ्च मानदोषान् विचिन्तयेत्॥ १५३ ॥

**व्याख्या**—स्वयम्भूते = आत्मनः एव सम्भूते, चन्द्रकान्तसमुद्भवे = चन्द्रकान्तमणिसम्भूते, रत्नजे = मणिना समुत्पन्ने, गण्डकोद्भूते = गण्डकीनद्यः समुत्पन्ने, च = पुनः, बाणलिङ्गे, सर्वथा = सर्वप्रकारेण, मानदोषः = परिमाणदोषः, न भवतीति भावः। किञ्च केवलम्, पाषाणमय्याम् = प्रस्तरनिर्मिताम्, धातुजाम् = धातुनिर्मिताम्, मानदोषान् = परिमाणदोषान्, विचिन्तयेत् = विचारयेत्॥ १५३ ॥

**हिन्दी**—स्वयं समुद्भूत, चन्द्रकान्तमणि से उत्पन्न, रत्न से उत्पन्न तथा गण्डक नदी से उत्पन्न शालिग्राम—ये सभी बाणलिङ्ग हैं। इन मूर्त्तियों में पूर्वोक्त मान सम्बन्धी दोषों का सर्वथा विचार नहीं किया जाता है। ये विचार तो केवल पत्थर या धातु निर्मित प्रतिमा में ही विचारना चाहिए॥ १५३ ॥

**बाणलिङ्ग इति**। स्वयम्भूते, चन्द्रकान्तसमुद्भवे चन्द्रमणिसम्भूते, रत्नजे, गण्डकोद्भूते च बाणलिङ्गे सर्वथा सर्वप्रकारेण मानदोषः परिमाणदोषः न अस्तीति शेषः। केवलं पाषाणधातुजायां पाषाणमय्यां धातुमय्याञ्च प्रतिमायां मानदोषान् विचिन्तयेत्॥ १५३ ॥

**श्वेतपीतारक्तकृष्णपाषाणैर्युगभेदतः।**
**प्रतिमां कल्पयेच्छिल्पी यथारुच्यपरैः स्मृता॥ १५४ ॥**

**अन्वयः**—शिल्पी युगभेदतः श्वेतपीतारक्तकृष्णपाषाणैः प्रतिमां कल्पयेत्। यथारुचि अपरैः स्मृता॥ १५४ ॥

**व्याख्या**—शिल्पी = मूर्त्तिकारः, युगभेदतः = युगभेदानुरूपेण, श्वेतैः = शुक्लवर्णैः, पीतैः = पीतवर्णैः, आरक्तैः = आलोहितैः, कृष्णैः = सितैः, पाषाणैः, प्रतिमाम् = मूर्त्तिम्, कल्पयेत् = रचयेत्। यथारुचि = रुच्यनुरूपेण, अपरैः = काष्ठादिभिः, स्मृता = शास्त्रविहिता प्रतिमेति बोध्या॥ १५४ ॥

**हिन्दी**—मूर्त्तिकार गुणभेद के अनुसार सफेद, पीले, थोड़े लाल तथा काले पत्थरों की मूर्त्ति का निर्माण करे। इनसे भिन्न काठ आदि की प्रतिमा अपनी रुचि के अनुसार बनाये॥ १५४ ॥

**श्वेतेति**। शिल्पी युगभेदतः युगभेदानुसारेण श्वेतैः पीतैः आरक्तैः आलोहितैः कृष्णैश्च पाषाणैः प्रतिमां कल्पयेत्। यथारुचि अपरैः दार्वादिभिश्च स्मृता शास्त्रे कथिता प्रतिमेति शेषः॥ १५४ ॥

**श्वेता स्मृता सात्त्विकी तु पीता रक्ता तु राजसी।**
**तामसी कृष्णवर्णा तु ह्युक्तलक्ष्मयुता यदि॥ १५५ ॥**

**अन्वयः**—यदि उक्तलक्ष्मयुता (तदा) श्वेता सात्त्विकी स्मृता। पीता रक्ता तु राजसी, कृष्णवर्णा तु तामसी ॥ १५५ ॥

**व्याख्या**—यदि, उक्तलक्ष्मयुता—उक्तैः = पूर्वकथितैः, लक्ष्मभिः = लक्षणैः, युता = समन्विता, (तदा) श्वेता = सिता, प्रतिमा, सात्त्विकी = सत्त्वगुणसम्पन्ना, स्मृता = कथिता। पीता = पीतवर्णा, रक्ता = लोहिता, प्रतिमा, राजसी कथिता, कृष्णवर्णा = असितप्रस्तरनिर्मिता तु, तामसी प्रतिमा, स्मृता = कथिता ॥ १५५ ॥

**हिन्दी**—पहले कहे गये लक्षणों से युक्त सफेद प्रतिमा सात्त्विकी होती है। पीत और रक्त वर्ण की प्रतिमा राजसी तथा काले पत्थर की प्रतिमा तामसी होती है ॥ १५५ ॥

**श्वेतेति**। यदि उक्तैः पूर्वकथितैः लक्षणैः युता, तदा श्वेता श्वेतवर्णा प्रतिमा सात्त्विकी स्मृता। पीता पीतवर्णा रक्ता रक्तवर्णा च राजसी। कृष्णवर्णा तु तामसी स्मृता ॥ १५५ ॥

**सौवर्णी राजती ताम्री रैतिकी वा कृतादिषु ॥ १५६ ॥**

**अन्वयः**—कृतादिषु सौवर्णी राजती ताम्री वा रैतिकी ॥ १५६ ॥

**व्याख्या**—कृतादिषु—कृत आदिर्यस्य, तेषु = सत्यत्रेताद्वापरकलिषु चतुर्षु युगेषु, क्रमेण सौवर्णी = सुवर्णनिर्मिता, राजती = रजतमयी, ताम्री = ताम्रमयी, रैतिकी = पित्तलमयी, प्रतिमा निर्मातव्येति ॥ १५६ ॥

**हिन्दी**—सत्ययुग, त्रेता, द्वापर तथा कलियुग में क्रमशः सोने, चाँदी, ताँबा एवं पित्तल की प्रतिमा बनवानी चाहिए ॥ १५६ ॥

**सौवर्णीति**। कृतादिषु सत्यत्रेताद्वापरकलिषु यथाक्रमं सौवर्णी, राजसी, ताम्री रैतिकी पित्तलमयी ॥ १५६ ॥

**शाङ्करी श्वेतवर्णा वा कृष्णवर्णा तु वैष्णवी।**
**सूर्य्यशक्तिगणेशानां ताम्रवर्णा स्मृतापि च।**
**लोहसीसमयी वापि यथोद्दिष्टा स्मृता बुधैः ॥ १५७ ॥**

**अन्वयः**—शाङ्करी श्वेतवर्णा वा वैष्णवी कृष्णवर्णा सूर्यशक्तिगणेशानां च ताम्रवर्णा स्मृता। वापि लोहसीसमयी यथोद्दिष्टा बुधैः स्मृताः ॥ १५७ ॥

**व्याख्या**—शाङ्करी = शङ्करस्य मूर्त्तिः, श्वेतवर्णा = सितवर्णा, वा = अथवा, वैष्णवी = विष्णोः मूर्त्तिः, कृष्णवर्णा = असितवर्णा, सूर्यशक्तिगणेशानाम्—सूर्यस्य = रवेः, शक्तेः = देव्याः, गणेशस्य = विनायकस्य च, मूर्त्तिः, ताम्रवर्णा = लोहितायसवर्णा, स्मृता = कथिता। वाऽपि = अथवा, लोहसीसमयी—लोहमयी = आयसनिर्मिता, सीसमयी = महाबलनिर्मिता, यथा = येन रूपेण, उद्दिष्टा = शास्त्रे निर्देशिता, बुधैः = पण्डितैः, स्मृताः = तथैव कथिताः ॥ १५७ ॥

**हिन्दी**—शंकर की मूर्त्ति सफेद रंग की, विष्णु की प्रतिमा काले रंग की, सूर्य, शक्ति तथा गणेश की मूर्त्ति ताम्र रंग की अथवा लोहा और सीसे की मूर्त्ति शास्त्र में जैसा कहा गया है ज्ञानीजन वैसे ही बतलाते हैं ॥ १५७ ॥

**शाङ्करीति**। शाङ्करी शिवमूर्त्तिः श्वेतवर्णा, वैष्णवी विष्णुमूर्त्तिः कृष्णवर्णा, सूर्य्यशक्तिगणेशानां सूर्य्यस्य शक्तेः गणेशस्य च इत्यर्थः, मूर्त्तिः ताम्रवर्णा स्मृता, वापि अथवा लोहसीसमयी लोहमयी सीसमयी च यथा उद्दिष्टा शास्त्रे कथिता तथा बुधैः स्मृताः ॥ १५७ ॥

**चलार्चायां स्थिरार्चायां प्रासादाद्युक्तलक्षणाम्।**
**प्रतिमां स्थापयेन्नान्यां सर्वसौख्यविनाशिनीम्॥ १५८॥**

**अन्वयः**—चलार्चायां वा स्थिरार्चायां प्रासादादिषु उक्तलक्षणां प्रतिमां स्थापयेत्। अन्यां सर्वसौख्यविनाशिनीं न॥ १५८॥

**व्याख्या**—चलार्चायाम् = चरिष्णुपूजायाम्, वा = अथवा, स्थिरार्चायाम् = स्थायीपूजार्थम्, प्रासादादिषु = भव्यमन्दिरेषु, उक्तलक्षणाम् = पूर्ववर्णितशुभलक्षणसम्पन्नाम्, प्रतिमाम् = देवमूर्त्तिम्, स्थापयेत् = स्थापनां कुर्यात्। अन्याम् = पूर्ववर्णितलक्षणहीनां प्रतिमाम्, अत एव सर्वसौख्यविनाशिनीम् = सकलसुखविघातिनीम्, न = कदाचिदपि न, स्थापयेत्॥ १५८॥

**हिन्दी**—थोड़े दिन के लिए हो या बहुत दिनों के लिए पूजनार्थ मन्दिर आदि में पूर्ववर्णित लक्षणों से युक्त प्रतिमा की ही स्थापना करनी चाहिए। इससे भिन्न तरह की मूर्त्ति की स्थापना नहीं करनी चाहिए, क्योंकि वह सभी सुखों को विनष्ट कर देती है॥ १५८॥

**चलार्चायामिति**। चलार्चायां स्वल्पदिनवृत्तिपूजायां वा स्थिरार्चायां चिरपूजायां प्रासादादिषु उक्तलक्षणां प्रतिमां स्थापयेत् न अन्याम् उक्तविलक्षणामित्यर्थः, अत एव सर्वसौख्यविनाशिनीम् अखिलसुखविध्वंसिनीं प्रतिमामिति शेषः॥ १५८॥

**सेव्यसेवकभावेषु प्रतिमालक्षणं स्मृतम्॥ १५९॥**

**अन्वयः**—सेव्यसेवकभावेषु प्रतिमालक्षणं स्मृतम्॥ १५९॥

**व्याख्या**—सेव्यसेवकभावेषु = उपास्योपासकविषयेष्वेव न तु हास्यविनोदार्थेषु, प्रतिमायाः = मूर्त्तेः, लक्षणम् = स्वरूपम्, स्मृतम् = वर्णितम्॥ १५९॥

**हिन्दी**—जहाँ उपास्य-उपासक भाव से प्रतिमा का निर्माण किया जाता है, वहीं के लिए ये सभी लक्षण बतलाये गये हैं; हास्यविनोदहेतु बनने वाली प्रतिमा के लिए नहीं॥ १५९॥

**सेव्येति**। सेव्यसेवकभावेषु विषयेषु न तु आमादप्रमोदार्थेपु तत्र यथेच्छकल्पनासम्भवादिति भावः, प्रतिमाया लक्षणम् उक्तरूपं स्मृतं कथितम्॥ १५९॥

**प्रतिमायाश्च ये दोषा ह्यर्चकस्य तपोबलात्।**
**सर्वत्रेश्वरचित्तस्य नाशं यान्ति क्षणात् किल॥ १६०॥**

**अन्वयः**—प्रतिमायाश्च ये दोषाः अर्चकस्य तपोबलात् सर्वत्र ईश्वरचित्तस्य किल क्षणात् नाशं यान्ति॥ १६०॥

**व्याख्या**—प्रतिमायाश्च = मूर्त्तेश्च, ये = लक्षणहीनताजन्याः, दोषाः = दुर्गुणाः, ते अर्चकस्य = पूजकस्य भक्तस्य, तपोबलात् = तपस्याशक्तेः, सर्वत्र = सर्वथा, सर्वप्रकारेण, ईश्वरचित्तस्य = जगदीश्वरानुरक्तस्य, पूजकस्य, किल = निश्चयेन, तपोबलात्, क्षणात् = क्षणमात्रमेव, नाशम् = विनाशम्, यान्ति = प्राप्नुवन्ति॥ १६०॥

**हिन्दी—और प्रतिमा के जो पूर्ववर्णित दोष हैं, वे हर तरह से ईश्वर में अनुरक्त चित्तवाले भक्त पूजक के तपोबल से क्षण मात्र में विनष्ट हो जाते हैं॥ १६०॥**

**प्रतिमाया इति**। प्रतिमायाश्च ये दोषाः, ते सर्वथा सर्वप्रकारेण ईश्वरचित्तस्य ईश्वरानुरक्तस्य

अर्चकस्य सेवकस्य तपोबलात् क्षणात् किल निश्चितं नाशं यान्ति विनश्यन्तीत्यर्थः, यदि प्रतिमायां कश्चित् दोषः अस्ति तदा सेवकः तपोबलेन तज्जनितदुरदृष्टं नाशयितुं शक्नोतीति भावः॥१६०॥

**देवतायाश्च पुरतो मण्डपे वाहनं न्यसेत्।**
**द्विबाहुर्गरुडः प्रोक्तः सुचञ्चुः स्वक्षिपक्षयुक्॥१६१॥**
**नराकृतिश्चञ्चुमुखो मुकुटी कवचाङ्गदी।**
**बद्धाञ्जलिर्नम्रशीर्षः सेव्यपादाब्जलोचनः॥१६२॥**

**अन्वयः**—देवतायाः पुरतः मण्डपे वाहनं न्यसेत्। गरुडः द्विबाहुः सुचञ्चुः स्वक्षिपक्षयुक् नराकृतिः चञ्चुमुखः मुकुटी कवचाङ्गदी बद्धाञ्जलिः नम्रशीर्षः सेव्यपादाब्जलोचनः॥१६१-१६२॥

**व्याख्या**—देवतायाः = देवमूर्तेः, पुरतः सम्मुखे, मण्डपे = मन्दिरे, वाहनम् = आरोहणम्, न्यसेत् = स्थापयेत्। गरुडः = वैनतेयः, विष्णुवाहनः, द्विबाहुः = द्विभुजः, सुचञ्चुः = सुन्दरचञ्चुकः, स्वक्षिपक्षयुक् = शोभनपक्षः, सुनयनः, नराकृतिः = मनुष्याकारः, चञ्चुमुखः = चञ्चुयुक्ताननः, मुकुटी = किरीटी, कवचाङ्गदी—कवचः = सन्नाहः, अङ्गदी = अङ्गदवान्, बद्धाञ्जलिः = अञ्जलिबद्धः, नम्रशीर्षः = नताननः, तथा सेव्यस्य = निजाराध्यस्य, पादाब्जे = चरणकमले, लोचने = नयने, यस्य तथाभूतः निर्मातव्यः॥१६१-१६२॥

**हिन्दी**—देवता की मूर्त्ति के सामने मण्डप में उनके वाहन की स्थापना करनी चाहिए। विष्णुवाहन गरुड की मूर्त्ति में दो बाँहें, चोंच और दो आँखें तथा दो पाँखें सुन्दर ढंग से बनानी चाहिए। मुँह में चोंच बनाकर शेष अंगों को मनुष्य की तरह बनाना चाहिए। माथे पर मुकुट, देह में कवच, बाँहों में बाजूबन्द, हाथ जोड़े, नतानन तथा अपने आराध्य के चरणकमलों की ओर देखते जैसी प्रतिमा का निर्माण करना चाहिए॥१६१-१६२॥

**देवतायाश्चेति। नराकृतिरिति।** देवतायाः पुरतः अग्रतः मण्डपे वाहनं न्यसेत् स्थापयेत्। गरुडः विष्णुवाहनं द्विबाहुः द्विभुजः सुचञ्चुः शोभनचञ्चुः, स्वक्षिपक्षयुक् शोभनपक्षः सुनयनः नराकृतिः मानवावयवः चञ्चुमुखः मुकुटी मुकुटधारी कवचाङ्गदी कवची अङ्गदवान्, बद्धाञ्जलिः कृताञ्जलिः नम्रशीर्षः नतशिराः तथा सेव्यस्य स्वप्रभोः पादाब्जे पादपद्मे लोचने नयने यस्य तथाभूतः स्थाप्य इति शेषः॥१६१-१६२॥

**वाहनत्वं गता ये ये देवतानां च पक्षिणः।**
**कामरूपधरास्ते ते तथा सिंहवृषादयः॥१६३॥**
**स्वनामाकृतयश्चैते कार्य्या दिव्या बुधैः सदा।**
**सुभूषिता देवताग्रमण्डपे ध्यानतत्पराः॥१६४॥**

**अन्वयः**—ये ये पक्षिणः तथा सिंहवृषादयः देवतानां वाहनत्वं गताः, ते ते कामरूपधराः। एते च बुधैः स्वनामाकृतयः दिव्याः सुभूषिताः तथा ध्यानतत्पराः देवतानां सदा अग्रे कार्याः॥१६३-१६४॥

**व्याख्या**—ये ये पक्षिणः = खगाः, सिंहवृषादयः = वृषभवनराजादयः, देवतानाम् = देवानाम्, वाहनत्वम् = यानत्वम्, गताः = प्राप्ताः, ते ते = सर्वे, कामरूपधराः = आत्माधीनस्वरूपाः, एते बुधैः = विद्वद्भिः, स्वनामाकृतयः—स्वस्य = आत्मनः, नाम्ना = नामानुसारेण, आकृतयः =

आकाराः, येषां तथाभूताः, दिव्याः = भास्वराः, सुभूषिताः = सुष्ठुतयाऽलङ्कृताः, तथा ध्यान-तत्पराः = एकाग्रचित्तेन तन्निष्ठाः, देवतानाम्, अग्रे = सम्मुखे, कार्य्या = स्थापितव्याः ॥ १६३-१६४ ॥

**हिन्दी**—देवता के वाहनस्वरूप जो पक्षी या बैल हैं, वे सभी अपनी इच्छा के अनुसार रूप धारण करने वाले हैं। विद्वानों को देवता के मण्डप में उनके सामने ध्यानस्थ, दिव्य, ठीक ढंग से आभूषित, अपने नाम के अनुसार आकृति वाले उक्त वाहनों का निर्माण करना चाहिए ॥ १६३-१६४ ॥

**वाहनत्वमिति। स्वनामाकृतय इति।** ये ये पक्षिणः तथा सिंहवृषादयः देवतानां वाहनत्वं गताः, ते ते कामरूपधराः च स्वेच्छाधीनविग्रहाः। एते च बुधैः विद्वद्भिः स्वनामाकृतयः स्वनाम्ना निजनामानुसारेण आकृतयः येषां तथाभूताः दिव्याः सुभूषिताः सुष्ठु अलङ्कृताः तथा ध्यानतत्पराः ध्याननिष्ठाः देवतानाम् अग्रे सदा कार्य्याः ॥ १६३-१६४ ॥

**मार्जाराकृतिकः पीतः कृष्णचिह्नो बृहद्वपुः।**
**असटो व्याघ्र इत्युक्तः सिंहः सूक्ष्मकटिर्महान् ॥ १६५ ॥**
**बृहद्भ्रूगण्डनेत्रस्तु बालवेशो मनोहरः।**
**सटावान् धूसरोऽकृष्णलाञ्छनश्च महाबलः ॥ १६६ ॥**

**अन्वयः**—मार्जाराकृतिकः पीतः कृष्णचिह्नः बृहद्वपुः असटः व्याघ्र इत्युक्तः। सूक्ष्मकटिः महान् बृहद्भ्रूगण्डनेत्रः बालवेशः मनोहरः सटावान् धूसरः अकृष्णलाञ्छनः महाबलः सिंहः इति उक्तः ॥ १६५-१६६ ॥

**व्याख्या**—मार्जारस्य = बिडालस्य, आकृतिः = आकारः, इव आकृतिर्यस्यासौ, पीतः = हरिद्वर्णः, कृष्णचिह्नः = कर्बुरितः, बृहद्वपुः = विशालकायः, असटः = सटारहितः, व्याघ्रः = चुलुकः, इति = इत्थम्, उक्तः = कथितः। तथा सूक्ष्मकटिः = प्रतनुकाञ्चीपदम्, महान् = विशालकायः, वृहद्भ्रूगण्डनेत्रः—बृहद्भ्रू = विशालभ्रू, बृहद्गण्डः = विशालगल्लः, बृहन्नेत्रः = विशालनयनः, बालवेशः = शिशुवेषधरोऽतिसुन्दरः, सटावान् = आबालयुक्तः, धूसरः = धूम्रवर्णः, अकृष्णलाञ्छनः = असितचिह्नम्, महाबलः = अतिशक्तिसम्पन्नः, सिंहः = वनराजः, इति, उक्तः = कथ्यते ॥ १६५-१६६ ॥

**हिन्दी**—जो बिल्ली की आकृतिवाला, पीला, काले धब्बे वाला, विशालकाय तथा जटारहित पशु होता है, उसे बाघ कहते हैं। पतली कमर, भरी देह, भौंहें बड़ी, जबड़ा विशाल, लम्बी गरदन, विशाल आँखें, शिशु-सौन्दर्य से स्नात, अति मनोहर आयालों से भरे कन्धे, काले धब्बे रहित विशाल देह तथा भूरे रंग का पशु सिंह कहलाता है ॥ १६५-१६६ ॥

**मार्जाराकृतिक इति। बृहदिति।** मार्जारस्य आकृतिरिव आकृतिर्यस्य तादृशः पीतः पीतवर्णः कृष्णचिह्नः श्यामलचिह्नविशिष्टः बृहद्वपुः महाकायः असटः जटारहितः जन्तुः व्याघ्र इति उक्तः कथितः। सूक्ष्मकटिः सूक्ष्ममध्यभागः महान् बृहदाकारः बृहद्भ्रूगण्डनेत्रः विशालभ्रूः बृहद्गण्डः दीर्घचक्षुः बालवेशः शिशुवेशधरः मनोहरः सटावान् जटावान् धूसरः धूसरवर्णः अकृष्णलाञ्छनः अश्यामचिह्नः महाबलश्च सिंहः इति उक्तः ॥ १६५-१६६ ॥

**भेदः सटालाञ्छनतो नाकृत्या व्याघ्रसिंहयोः ॥ १६७ ॥**

**अन्वयः**—सटालाञ्छनतः व्याघ्रसिंहयोः भेदः, आकृत्या न ॥ १६७ ॥

**व्याख्या**—सटाभिः = आयालैः, लाञ्छनैः = कर्बुरैः, व्याघ्रसिंहयोः = भेलमृगेन्द्रयोः, भेदः = भिन्नत्वम्, अन्यथा, आकृत्या = आकारेण, भेदो नास्ति ॥ १६७ ॥

**हिन्दी**—बाघ और सिंह दोनों में जटा और काले चिह्नों का ही भेद होता है। दोनों के आकार करीब-करीब एक जैसे ही हैं ॥ १६७ ॥

**भेद इति**। सटाभिः जटाभिः लाञ्छनैः कृष्णचिह्नैश्च व्याघ्रसिंहयोः भेदः आकृत्या अवयवेन न, आकृतिरनयोः प्रायशस्तुल्यैव केवलं जटाचिह्नैः भेद इत्यर्थः ॥ १६७ ॥

**गजाननं नराकारं ध्वस्तकर्णं पृथूदरम्।**
**बृहत्सङ्क्षिप्तगहनपीनस्कन्धाङ्घ्रिपाणिनम् ॥ १६८ ॥**
**बृहच्छुण्डं भग्नवामरदमीप्सितवाहनम्।**
**ईषत्कुटिलदण्डाग्रवामशुण्डमदक्षिणम् ।**
**सन्ध्यस्थिधमनीगूढं कुर्य्यान्मानमितं सदा ॥ १६९ ॥**

**अन्वयः**—नराकारं ध्वस्तकर्णं पृथूदरं बृहत्सङ्क्षिप्तगहनपीनस्कन्धाङ्घ्रिपाणिनं बृहच्छुण्डं भग्नवामरदम् ईप्सितवाहनम् ईषत्कुटिलदण्डाग्रवामशुण्डम् अदक्षिणं सन्ध्यस्थिधमनीगूढं मानमितं गजाननं सदा कुर्यात् ॥ १६८-१६९ ॥

**व्याख्या**—नराकारम् = मनुष्याकृतिः, ध्वस्तकर्णम् = लम्बकर्णम्, पृथूदरम् = तुन्दिलं, बृहन्तः = विशालाः, सङ्क्षिप्ताः = संहताः, गहनाः = गूढाः, पीनाः = स्थूलाः, स्कन्धौ = अंसौ, अङ्घ्री = चरणौ, पाणयः = हस्ताश्च, यस्य तथोक्तम्, बृहच्छुण्डम् = विशालकरम्, भग्नवामरदम् = गुठितवामदन्तम्, ईप्सितवाहनम् = अभीप्सितारोहणम्, ईषत् = किञ्चित्, कुटिलेन = वक्रेण, दण्डाग्रेण = शुण्डादण्डाग्रभागेन, वामा = शोभना, शुण्डा = करः, यस्य तम्, अदक्षिणम्—नास्ति दक्षिणः = अग्रे पूजनीयः, यस्मात् तादृशम्, सन्ध्यस्थिधमनीगूढम्—सन्धिषु = अवयवसंस्थेषु, अस्थिषु = कीकसेषु, धमनीषु = शिरासु च, गूढम् = आवृतम् अव्यक्तं वा, सदा = सर्वदा, मानमितम् = यथाप्रमाणम्, गजाननम् = विनायकम्, कुर्यात् = स्थापयेत् ॥ १६८-१६९ ॥

**हिन्दी**—गणेशजी की मूर्त्ति में मुख हाथी के समान तथा अन्य अंग मनुष्य के समान बनाने चाहिए। कान हाथी के समान लम्बा-चौड़ा, पेट तुंदिल, बृहत्, संक्षिप्त, गूढ और स्थूल कन्धे, पैर तथा हाथ बनाने चाहिए। सूँढ लम्बी, बायाँ दाँत टूटा यथाभिलषित वाहन बनाना चाहिए। सूँढ बाँई ओर झुकी तथा सन्धिस्थल, हड्डियों और धमनी ढकी होनी चाहिए। गणेश की मूर्ति सदा इसी तरह होनी चाहिए ॥ १६८-१६९ ॥

सम्प्रति गणेशाकृतिं निरूपयति—**गजाननमिति**। **वृहदिति**। नराकारं ध्वस्तकर्णं लम्बकर्णं पृथूदरं स्थूलोदरं बृहन्तः, संक्षिप्ताः गहनाः घनाः पीनाः स्थूलाश्च स्कन्धौ अङ्घ्री चरणौ पाणयः कराश्च यस्य तथोक्तं बृहच्छुण्डं विशालशुण्डादण्डं भग्नवामरदं वामदन्तहीनम् ईप्सितवाहनं प्रियवाहनम् ईषत्कुटिलेन दण्डाग्रेण वामा शोभना शुण्डा यस्य तम् अदक्षिणं नास्ति दक्षिणः अग्रवर्त्ती अग्रे पूजनीयः यस्मात् तादृशं सर्वाग्रे पूज्यमित्यर्थः, सन्ध्यस्थिधमनीगूढं सन्धिषु अवयवसंस्थेपु अस्थिषु, धमनीपु शिरासु च गूढम् अव्यक्तसन्धिम् अव्यक्तास्थिम् अव्यक्तधमनीश्चेत्यर्थः, तथा सदा मानमितं यथाप्रमाणं गजाननं गणेशं कुर्य्यात् ॥ १६८-१६९ ॥

सार्द्धचतुस्तालमितः शुण्डादण्डः समन्ततः।
दशाङ्गुलं मस्तकञ्च भ्रूगण्डश्चतुरङ्गुलः ॥ १७० ॥

**अन्वयः**—समन्ततः सार्द्धचतुस्तालमितः शुण्डादण्डः दशाङ्गुलं मस्तकं चतुरङ्गुलः भ्रूमण्डलः कार्यः ॥१७० ॥

**व्याख्या**—समन्ततः = सर्वतः, सार्द्धचतुस्तालमितः—सार्द्धैः = अर्द्धेन सहितैः, चतुर्भिः = तुरीयैः, तालैः = अर्द्धहस्तैः मितः = परिमितः, शुण्डादण्डः = हस्तिहस्तः, दशाङ्गुलम् = अङ्गुलदशकपरिमितम्, मस्तकम् = भालम्, चतुरङ्गुलः = अङ्गुलिचतुःपरिमितम्, भ्रूमण्डलः = नयनोद्र्ध्ववर्त्तिरोमराजिपरिवेशः कार्य इति ॥ १७० ॥

**हिन्दी**—पूरा सूँड साढे चार बित्ते का, माथा दस अंगुल और भौंह चार अंगुल का बनाना चाहिए ॥ १७० ॥

**सार्द्धेति**। समन्ततः सर्वतः सार्द्धैः चतुर्भिः तालैः मितः परिमितः शुण्डादण्डः दशाङ्गुलम् अङ्गुलदशकमितं मस्तकं, चतुरङ्गुलः भ्रूदण्डश्च कार्य्य इति शेषः ॥ १७० ॥

नासोत्तरोष्ठरूपा च शेषा शुण्डा सपुष्करा।
दशाङ्गुलं कर्णदैर्घ्यं तदष्टाङ्गुलविस्तृतम् ॥ १७१ ॥

**अन्वयः**—शुण्डा नासोत्तरोष्ठरूपा शेषा सपुष्करा कर्णदैर्घ्यं दशाङ्गुलं तदष्टाङ्गुलविस्तृतम् ॥ १७१ ॥

**व्याख्या**—शुण्डा = करिकरः, नासायाः = नासिकायाः, उत्तरः = उपरि, यः ओष्ठः = दन्तच्छदः, ऊर्ध्वोष्ठयोः वा, तद्रूपा कियतीति, शेषा = अवशिष्टा, सपुष्करा = गजशुण्डाग्रसहिता, कर्णदैर्घ्यम्—कर्णस्य = श्रवणस्य, दैर्घ्यम् = आयामः, दशाङ्गुलम् = अङ्गुलदशकपरिमितम्, तत् = तस्य कर्णस्य, विस्तृतम् = विस्तारः, अष्टाङ्गुलः = अष्टाङ्गुलपरिमितम्, कार्यः ॥ १७१ ॥

**हिन्दी**—नाक और ओठ के बीच सूँड की जगह होनी चाहिए। ऊपरी ओठ ही सूँड का मूल भाग तथा शेष सूँड के अग्रभाग तक सूँड कहलाता है। इसके कान की लम्बाई दस अंगुल तथा चौड़ाई आठ अंगुल की होनी चाहिए॥ १७१ ॥

**नासेति**। शुण्डा नासाया उत्तरः परवर्त्ती य ओष्ठः तद्रूपा कियतीत्यर्थः, शेषा अवशिष्टा सपुष्करा पुष्करसहिता कार्य्या इति शेषः, कर्णयोः देर्घ्यं दशाङ्गुलं तयोः कर्णयोः अष्टाङ्गुलविस्तृतम् अङ्गुलाष्टकं विस्तार इत्यर्थः ॥ १७१ ॥

कर्णयोरन्तरे व्यासो द्व्यङ्गुलस्तालसम्मितः।
मस्तकेऽस्यैव परिधिर्ज्ञेयः षट्त्रिंशदङ्गुलः ॥ १७२ ॥

**अन्वयः**—कर्णयोरन्तरे व्यासः द्व्यङ्गुलस्तालसम्मितः। अस्यैव मस्तके परिधिः षट्त्रिंशदङ्गुलः ज्ञेयः ॥ १७२ ॥

**व्याख्या**—कर्णयोः = श्रवणयोः, अन्तरे = अन्तराले, व्यासः = विस्तारः, द्व्यङ्गुलस्तालसम्मितः = अङ्गुलिद्वयाधिकः, तालसम्मितः = तालपरिमितः। अस्यैव = गणेशस्यैव, मस्तके = भाले, परिधिः = परिवेशः, षट्त्रिंशदङ्गुलः, ज्ञेयः = बोध्यः॥ १७२ ॥

**हिन्दी**—दोनों कानों के बीच का व्यास एक वित्ता दो अंगुल होना चाहिए। माथे पर इस

कान की परिधि छत्तीस अंगुल की होनी चाहिए॥ १७२ ॥

**कर्णयोरिति।** कर्णयोः अन्तरे मध्ये व्यासः वेधपरिमाणमित्यर्थः, द्व्यङ्गुलः अङ्गुलद्वयाधिकः तालसम्मितः तालप्रमाणः। अस्यैव गणेशस्य मस्तके परिधिः षट्त्रिंशदङ्गुलः ज्ञेयः॥ १७२ ॥

**नेत्रोपान्ते च परिधिः शीर्षतुल्यः सदा मतः।**
**सद्व्यङ्गुलद्वितालः स्यान्नेत्राधः परिधिः करे॥ १७३॥**
**कराग्रे परिधिर्ज्ञेयः पुष्करे च दशाङ्गुलः।**
**त्र्यङ्गुलं कण्ठदैर्घ्यं तत्परिधिस्त्रिंशदङ्गुलः॥ १७४॥**

**अन्वयः**—नेत्रोपान्ते च परिधिः सदा शीर्षतुल्यः मतः। नेत्राधः परिधिः सद्व्यङ्गुलद्वितालः स्यात्। करे कराग्रे पुष्करे च परिधिः दशाङ्गुलः ज्ञेयः। कण्ठदैर्घ्यं त्र्यङ्गुलं, तत्परिधिः त्रिंशदङ्गुल ज्ञेयः॥ १७३-१७४॥

**व्याख्या**—नेत्रयोः= नयनयोः, उपान्ते = अन्तसमीपभागे, च = पुनः, यः परिधिः= परिवेशः, सः तदा, शीर्षतुल्यः= मस्तकसदृशः, मतः= कथितः। नेत्राधः—नेत्रयोः= नयनयोः, अधः= अधोभागे, परिधिश्च = मण्डलञ्च, द्व्यङ्गुलद्वितालः= अङ्गुलिद्वयाधिकद्वितालः, स्यात् = भवेत्। करे = हस्तिहस्ते, कराग्रे = शुण्डादण्डाग्रे, पुष्करे = गजशुण्डाग्रे च, परिधिः= परिणाहः, दशाङ्गुलः= अङ्गुलिदशपरिमितः, ज्ञेयः= बोध्यः। कण्ठस्य = गलप्रदेशस्य, दैर्घ्यम् = आयामः, त्र्यङ्गुलः= अङ्गुलित्रयपरिमितम्, तत् = तस्य, च परिधिः= विस्तारः, त्रिंशदङ्गुलः= त्रयोऽधिकदशाङ्गुलपरिमितः, ज्ञेयः= बोध्यः॥ १७३-१७४॥

**हिन्दी**—दोनों आँखों के पार्श्ववर्ती स्थानों की परिधि सदा माथे के समान ही होनी चाहिए। आँखों के नीचले भाग की परिधि दो अंगुल ज्यादा दो वित्ता होनी चाहिए। सूँड में सूँड की जड़ तथा उसकी अन्तिम छोर की परिधि दस अंगुल होनी चाहिए। कंठ की लम्बाई तीन अंगुल तथा इसका विस्तार तीस अंगुल होना चाहिए॥ १७३-१७४॥

**नेत्रोपान्ते इति। कराग्रे इति।** नेत्रयोः उपान्ते च यः परिधिः सः तदा शीर्षतुल्यः मस्तकसदृशः मतः कथितः। नेत्रयोः अधः निम्नदेशे परिधिश्च सद्व्यङ्गुलद्वितालः अङ्गुलद्वयसहितद्वितालः स्यात्। करे शुण्डादण्डे कराग्रे शुण्डाग्रे पुष्करे च परिधिः दशाङ्गुलः ज्ञेयः। कण्टकस्य दैर्घ्यं त्र्यङ्गुलम् अङ्गुलत्रयपरिमितं तस्य कण्ठस्य परिधिश्च त्रिंशदङ्गुलः ज्ञेय इति शेषः॥ १७३-१७४॥

**परिणाहस्तूदरे च चतुस्तालात्मिकः सदा।**
**षडङ्गुलो नियोक्तव्योऽष्टाङ्गुलो वापि शिल्पिभिः॥ १७५॥**

**अन्वयः**—उदरे परिणाहः सदा चतुस्तालात्मिकः षडङ्गुलः वा अष्टाङ्गुलः वापि शिल्पिभिः सदा नियोक्तव्यः॥ १७५॥

**व्याख्या**—उदरे = तुन्दे, परिणाहः= परिधिः, सदा = सर्वदा, चतुस्तालात्मिकः= तालचतुष्टयपरिमितः, षडङ्गुलः= अङ्गुलषट्काधिकः, वा = अथवा, अष्टाङ्गुलः= अङ्गुलाष्टाधिकः, शिल्पिभिः= मूर्तिकारैः, सदा = सततम्, नियोक्तव्यः= नियोजनीयः॥ १७५॥

**हिन्दी**—मूर्त्तिकार को हमेशा इनके पेट की लम्बाई छः या आठ अंगुल अधिक चार वित्ते की बनानी चाहिए॥ १७५॥

**परिणाह इति**। उदरे च परिणाहः दैर्घ्यं चतुस्तालात्मिकः तालचतुष्टयप्रमाणः षडङ्गुलः अङ्गुलषट्काधिकः वा अष्टाङ्गुलः अङ्गुलाष्टकाधिकः शिल्पिभिः निर्मातृभिः सदा नियोक्तव्यः कार्य इत्यर्थः ॥ १७५ ॥

**दन्तः षडङ्गुलो दीर्घस्तन्मूलपरिधिस्तथा।**
**षडङ्गुलश्चाधरोष्ठः पुष्करं कमलान्वितम् ॥ १७६ ॥**

**अन्वयः**—दन्तः षडङ्गुलः दीर्घः, तत् मूलपरिधिः तथा अधरोष्ठश्च षडङ्गुलः तथा पुष्करं कमलान्वितम् ॥ १७६ ॥

**व्याख्या**—दन्तः = रदः, षडङ्गुलः = अङ्गुलषट्कमितः, दीर्घः = आयतः, तस्य = दशनस्य, मूलपरिधिः = मूलवेष्टनम्, तथा = तथैव, षडङ्गुलः = अङ्गुलषट्कैव, अधरोष्ठश्च—अधरः = अधस्तनः ओष्ठः, ओष्ठश्च = दन्तच्छद च, षडङ्गुलः = अङ्गुलषट्कमेव, तथा पुष्करम् = गजशुण्डाग्रभागश्च, कमलेन = पद्मेन, अन्वितम् = सहितम्, निर्मातव्यमिति शेषः ॥ १७६ ॥

**हिन्दी**—दाँत की लम्बाई छः अंगुल तथा उसकी जड़ की परिधि भी छः अंगुल ही होना चाहिए। अधेराष्ठ भी छः अंगुल का तथा सूँड का अगला भाग कमल की तरह होना चाहिए ॥ १७६ ॥

**दन्त इति**। दन्तः दैर्घ्ये षडङ्गुलः, तस्य दन्तस्य मूलपरिधिः मूलवेष्टनञ्च तथा षडङ्गुल इत्यर्थः, अधरोष्ठश्च षडङ्गुलः तथा पुष्करं कमलेन पद्मेन अन्वितं युक्तं कार्य्यमिति शेषः ॥ १७६ ॥

**ऊरुमूलस्य परिधिः षट्त्रिंशदङ्गुलो मतः।**
**त्रयोविंशत्यङ्गुलः स्यादूर्वग्रपरिधिस्तथा ॥ १७७ ॥**

**अन्वयः**—ऊरुमूलस्य परिधिः षट्त्रिंशदङ्गुलः मतः, तथा ऊर्वग्रपरिधिः त्रयोविंशत्यङ्गुलः स्यात् ॥ १७७ ॥

**व्याख्या**—ऊरुमूलस्य = जङ्घाप्रारम्भिकभागस्य, परिधिः = वेष्टनम्, षट्त्रिंशदङ्गुलः, मतः = कथितः, तथा ऊर्वोः = जङ्घायाः, अग्रस्य = अग्रभागस्य, परिधिः = परिवेशः, त्रयोविंशत्यङ्गुलः, स्यात् = भवेत् ॥ १७७ ॥

जंघा के प्रारंभिक भाग का विस्तार या घेरा छत्तीस अंगुल तथा उसके अग्रभाग का घेरा तेईस अंगुल का होना चाहिए ॥ १७७ ॥

**ऊरुमूलस्येति**। ऊरुमूलस्य परिधिः षट्त्रिंशदङ्गुलः मतः, तथा ऊर्वोः अग्रस्य परिधिः त्रयोविंशत्यङ्गुलः स्यात् ॥ १७७ ॥

**जङ्घामूले तु परिधिर्विंशत्यङ्गुलसम्मितः।**
**परिधिर्बाहुमूलादेरधिको द्व्यङ्गुलोऽङ्गुलः ॥ १७८ ॥**

**अन्वयः**—जङ्घामूले तु परिधिः विंशत्यङ्गुलसम्मितः। बाहुमूलादेः परिधिः द्व्यङ्गुलोऽङ्गुलः अधिकः वा ॥ १७८ ॥

**व्याख्या**—जङ्घामूले—जङ्घयोः = ऊर्व्योः, मूले = आदिभागे, परिधिः = वेष्टनम्, विंशत्यङ्गुलः = विंशत्यङ्गुलपरिमितः, सम्मितः = कथितः। बाहुमूलादेः = भुजयोरग्रभागादेः, परिधिः = विस्तारः, द्व्यङ्गुलः = अङ्गुलिद्वयपरिमितः, अङ्गुलो वा = त्र्यङ्गुलो वेति स्यात् ॥ १७८ ॥

**हिन्दी**—जाँघों के प्रारंभिक भाग का घेरा बीस अंगुल का और बाँहों के आरभिक भाग का घेरा उससे दो अंगुल अधिक अर्थात् बाईस अंगुल का तथा उनका अग्रभाग मात्र एक अंगुल अधिक अर्थात् इक्कीस अंगुल होना चाहिए ॥ १७८ ॥

**जङ्घेति**। जङ्घयोर्मूले परिधिः विंशत्यङ्गुलसम्मितः, तथा बाहुमूलादेः परिधिः अधिकद्व्यङ्गुलः अङ्गुलः अङ्गुलत्रयपरिमित इत्यर्थः ॥ १७८ ॥

**कर्णनेत्रान्तरं नित्यं विज्ञेयं चतुरङ्गुलम्।**
**मूलमध्याग्रान्तरं तु दशसप्तषडङ्गुलम्।**
**नेत्रयोः कथितं तज्ज्ञैर्गणपस्य विशेषतः ॥ १७९ ॥**

**अन्वयः**—कर्णनेत्रान्तरं नित्यं चतुरङ्गुलं विज्ञेयम्। मूलमध्याग्रान्तरं तु दशसप्तषडङ्गुलं तज्ज्ञैः गणपस्य नेत्रयोः विशेषतः कथितम् ॥ १९९ ॥

**व्याख्या**—कर्णनेत्रयोः = श्रवणनयनयोः, अन्तरम् = मध्यभागः, नित्यम् = निरन्तरम्, चतुरङ्गुलम् = अङ्गुलचतुष्टयात्मकं, विज्ञेयम्। तथा अनयोः मूलान्तरम् = मध्यान्तरम्, अग्रान्तरन्तु, दशसप्तषडङ्गुलम् = क्रमशः दशाङ्गुलपरिमितं सप्ताङ्गुलपरिमितं तथा षडङ्गुलपरिमितम्, ज्ञेयम्। तज्ज्ञैः = तद्विशेषज्ञैः, गणपस्य = गजाननस्य, नेत्रयोः = लोचनयोः, इत्थम् = एवम्प्रकारेण, कथितम् = उक्तम् ॥ १७९ ॥

**हिन्दी**—कान और आँखों के बीच का अन्तराल सदैव चार अंगुल होना चाहिए। दोनों आँखों के मूल, मध्य तथा अग्रभाग का अन्तर क्रमशः दस, सात एवं छः अंगुल का विशेषज्ञों ने गणेशमूर्त्ति के सम्बन्ध में बतलाया है ॥ १७९ ॥

**कर्णेति**। कर्णनेत्रयोः अन्तरं मध्यभागः नित्यं सततं चतुरङ्गुलं, तथा अनयोः मूलान्तरं मध्यान्तरम् अग्रान्तरन्तु दशसप्तषडङ्गुलं क्रमेण दशाङ्गुलं सप्ताङ्गुलं षडङ्गुलञ्चेत्यर्थः, विज्ञेयम्। तज्ज्ञैः तद्विज्ञैः पण्डितैः गणपस्य गणेशस्य नेत्रयोः विशेषतः विशेषेण नेत्रयोः इत्थं कथितम् ॥ १७९ ॥

**उत्सेधः पृथुता स्त्रीणां स्तने पञ्चाङ्गुला मता ॥ १८० ॥**

**अन्वयः**—स्त्रीणां स्तने उत्सेधः पृथुता च पञ्चाङ्गुला मता ॥ १८० ॥

**व्याख्या**—स्त्रीणाम् = देवीप्रतिमानाम्, स्तने = कुचे, उत्सेधः = औन्नत्यम्, पृथुता = पीनत्वम्, च, पञ्चाङ्गुला = अङ्गुलिपञ्चकम्, मता = कथिता ॥ १८० ॥

**हिन्दी**—देवी की मूर्त्ति में स्तन की ऊँचाई एवं मोटाई पाँच अंगुल की होनी चाहिए ॥ १८० ॥

**उत्सेध इति**। स्त्रीणां शक्तिमूर्त्तीनां स्तने उत्सेधः उच्छ्रायः पृथुता स्थूलता च पञ्चाङ्गुला अङ्गुलपञ्चकपरिमिता मता ॥ १८० ॥

**स्त्रीकट्यां परिधिः प्रोक्तस्त्रितालो द्व्यङ्गुलाधिकः।**
**स्त्रीणामवयवान् सर्वान् सप्ततालैर्विभावयेत् ॥ १८१ ॥**

**अन्वयः**—स्त्रीणां कट्यां परिधिः द्व्यङ्गुलाधिकः त्रितालः प्रोक्तः। स्त्रीणां सर्वान् अवयवान् सप्ततालैः विभावयेत् ॥ १८१ ॥

**व्याख्या**—स्त्रीणाम् = देवीमूर्त्तीनाम्, कट्याम् = काञ्चीपदम्, परिधिः = वेष्टनम्, द्व्यङ्गु-

लाधिकः = अङ्गुलिद्वयाधिकपरिमितः, त्रितालः = तालत्रयात्मकः, प्रोक्तः = कथितः। स्त्रीणाम् = शक्तिमूर्त्तीनाम्, सर्वान् = सकलान्, अवयवान् = देहाङ्गान्, सप्ततालैः = सप्तभिः तालाख्य-प्रमाणैः, विभावयेत् = अनुचिन्तयेत् ॥ १८१ ॥

**हिन्दी**—नारीमूर्त्ति की कमर का घेरा दो अंगुल अधिक तीन बित्ते का होना चाहिए तथा उनके सभी अंगों का कुल मिलाकर योग सात बित्ता होना चाहिए ॥ १८१ ॥

**स्त्रीकट्यामिति**। स्त्रीणां शक्तिमूर्त्तीणां कट्यां परिधिः द्व्यङ्गुलाधिकः अङ्गुलद्वयाधिकः त्रितालः तालत्रयमितः प्रोक्तः कथितः। स्त्रीणां सर्वान् अवयवान् सप्ततालैः सप्तभिः तालाख्यप्रमाणैः विभावयेत् विचिन्तयेत् सप्ततालपरिमितान् कुर्य्यादित्यर्थः ॥ १८१ ॥

**सप्ततालादिमानेऽपि मुखं स्याद् द्वादशाङ्गुलम्।**
**बालादीनामपि सदा दीर्घता तु पृथक् पृथक् ॥ १८२ ॥**

**अन्वयः**—सप्ततालादिमानेऽपि मुखं द्वादशाङ्गुलं स्यात्। बालादीनामपि दीर्घता सदा पृथक् पृथक् ज्ञेया ॥ १८२ ॥

**व्याख्या**—सप्ततालादिमानेऽपि = तालसप्तकादिपरिमितेऽपि, मुखम् = देवीमूर्त्तीनामाननम्, द्वादशाङ्गुलम् = द्वादशाङ्गुलपरिमितमेव, स्यात् = भवेत्। बालादीनामपि = बालादिमूर्त्तिभेदाना-मपि, सदा = सर्वदा, पृथक् पृथक् = भिन्नं भिन्नम्, दीर्घता = विस्तृतिः, ज्ञेया = बोध्या ॥ १८२ ॥

**हिन्दी**—सात बित्ते अवयवों के संयोग का प्रमाण होने के बावजूद इनके मुखों का मान बारह अंगुल ही होता है। फिर बाला प्रभृति मूर्त्तिभेदों की लम्बाई सदा भिन्न-भिन्न होती है ॥१८२ ॥

**सप्तेति**। सप्ततालादिमाने तालसप्तकादिपरिमाणे सत्यपि मुखं द्वादशाङ्गुलं स्यात् स्त्रीणामिति शेषः। किञ्च बालादीनां देवमूर्त्तिभेदानाम् अपि सदा पृथक् पृथक् दीर्घता ज्ञेया इति शेषः ॥ १८२ ॥

**शिशोस्तु कन्धरा ह्रस्वा पृथु शीर्षं प्रकीर्त्तितम्।**
**कण्ठाधो वर्द्धते यादृक् तादृक् शीर्षं न वर्द्धते ॥ १८३ ॥**

**अन्वयः**—शिशोस्तु कन्धरा ह्रस्वा शीर्षं पृथु प्रकीर्त्तितम्। कण्ठाधः यादृक् वर्द्धते तादृक् शीर्षं न वर्द्धते ॥ १८३ ॥

**व्याख्या**—शिशोः = बालदेवमूर्त्तेः, कन्धरा = शिरोधरा, ह्रस्वा = आयामशून्या, तथा = तेनैव प्रकारेण, शीर्षम् = मस्तकम्, पृथु = स्थूलम्, प्रकीर्त्तितम् = कथितम्। यतः कण्ठाधः— कण्ठस्य = ग्रीवायाः, अधः = निम्नभागः, यादृक् = यत्प्रकारकः, वर्द्धते = एधते, तादृक् = तत्प्रकारकः, शीर्षम् = मस्तकम्, न = नहि, वर्द्धते = एधते ॥ १८३ ॥

**हिन्दी**—शिशुमूर्त्ति की गर्दन छोटी तथा माथा बड़ा बनाना चाहिए। क्योंकि गर्दन के नीचे का हिस्सा जैसा बढ़ता है वैसा माथा नहीं बढ़ता ॥ १८३ ॥

**शिशोरिति**। शिशोः बालकस्य देवमूर्त्तिभेदस्य कन्धरा ग्रीवा ह्रस्वा खर्वा, तथा शीर्षं मस्तकं पृथु विशालं प्रकीर्त्तितं, यतः कण्ठाधः कण्ठस्य अधः निम्नदेशः यादृक् वर्द्धते शीर्षं तादृक् न वर्द्धते ॥ १८३ ॥

**कण्ठाधो मुखमानेन बालः सार्द्धचतुर्गुणः।**
**द्विगुणः शिश्नपर्य्यन्तो ह्यधः शेषन्तु सक्थितः ॥ १८४ ॥**

**अन्वयः**—बालः मुखमानेन कण्ठाधः सार्द्धचतुर्गुणः। सक्थितः शेषन्तु अधः शिश्नपर्यन्तं द्विगुणः कार्यः ॥ १८४ ॥

**व्याख्या**—बालः = शिशुदेवमूर्त्तिभेदः, मुखमानेन = सुखस्य = आननस्य, मानेन = परिमाणेन, कण्ठाधः—कण्ठस्य = ग्रीवायाः, अधः = अधोभागः, सार्द्धचतुर्गुणः = अर्द्धेण सहितं चतुर्गुणितपरिमितम्। सक्थितः = ऊरुप्रदेशात्, शेषम् = अवशिष्टम्, अधः = निम्नभागः, शिश्नपर्यन्तम् = आलिङ्गम्, द्विगुणः = द्विगुणितः कार्यः ॥ १८४ ॥

**हिन्दी**—बालमूर्त्ति में मुख की अपेक्षा गर्दन के नीचे का भाग साढ़े चार गुना बड़ा होता है। उसमें लिंग तक का भाग लम्बाई में मुँह से दूना तो अवश्य ही होता है ॥ १८४ ॥

**कण्ठाध इति**। बालः शिशुः देवमूर्त्तिभेदः मुखमानेन मुखस्य परिमाणापेक्षयेत्यर्थः, कण्ठस्य अधः निम्नदेशे सार्द्धचतुर्गुणः अर्द्धसहितचतुर्गुणप्रमाण इत्यर्थः। सक्थितः ऊरुदेशात् शेषम् अवशिष्टम् अधः निम्नभागः शिश्नपर्य्यन्तं द्विगुणः कार्य्य इति शेषः ॥ १८४ ॥

**सपादद्विगुणौ हस्तौ द्विगुणौ वा मुखेन हि।**
**स्थौल्ये तु नियमो नास्ति यथाशोभि प्रकल्पयेत् ॥ १८५ ॥**

**अन्वयः**—हस्तौ मुखेन हि सपादद्विगुणौ वा द्विगुणौ कार्यौ, स्थौल्ये तु नियमः नास्ति। यथाशोभि प्रकल्पयेत् ॥ १८५ ॥

**व्याख्या**—हस्तौ = करौ, मुखेन = आननेन, हि = इति निश्चयेन, सपादद्विगुणौ = पादैकसहितं द्विगुणितम्, वा = अथवा, द्विगुणौ = मात्रद्विगुणितावेव, कार्यौ, स्थौल्ये = पीनत्वे, तु नियमः = व्यवस्था, नास्ति = न विद्यते। यथाशोभि = सौन्दर्यानुरूपेण, प्रकल्पयेत् = निर्माणं कुर्यात् ॥ १८५ ॥

**हिन्दी**—जंघा से लेकर नीचे का समस्त भाग सवा दो गुना ज्यादे, मुँह की अपेक्षा दोनों हाथ सवा दो गुना अथवा दूना लम्बा होता है, किन्तु मोटाई में कोई नियम नहीं है। देखने में वह जैसे सुन्दर लगे वैसे ही बनाना चाहिए ॥ १८५ ॥

**सपादेति**। हस्तौ मुखेन मुखपरिमाणापेक्षयेत्यर्थः, सपादद्विगुणौ वा द्विगुणौ कार्य्यौ इति शेषः। स्थौल्ये स्थूलतायान्तु नियमः नास्ति, यथाशोभि तथा प्रकल्पयेत् कुर्य्यादित्यर्थः ॥ १८५ ॥

**नित्यं प्रवर्द्धते बालः पञ्चाब्दात् परतो भृशम्।**
**स्यात् षोडशेऽब्दे सर्वाङ्गपूर्णा स्त्री विंशतौ पुमान् ॥ १८६ ॥**

**अन्वयः**—बालः पञ्चाब्दात् परतः नित्यं भृशं प्रवर्द्धते। स्त्री षोडशे अब्दे सर्वाङ्गपूर्णा, पुमान् विंशतौ अब्दे ॥ १८६ ॥

**व्याख्या**—बालः = शिशुमूर्त्तिः, पञ्चाब्दात् = पञ्चवर्षात्, परतः = ऊर्ध्वम्, नित्यम् = सततम्, भृशम् = अतिशयेन, प्रवर्द्धते = वृद्धिं प्राप्नोति। स्त्री = नारी, षोडशे अब्दे = षोडशे वर्षे, सर्वाङ्गपूर्णा = पूर्णावयवा, पुमान् = पुरुषः, विंशतौ = विंशतिवर्षे, सर्वाङ्गपूर्णो भवति ॥ १८६ ॥

**हिन्दी**—बालक पाँच साल तक प्रतिदिन धीरे-धीरे बढ़ता है, किन्तु पाँच वर्ष के बाद खूब तेज बढता है। स्त्री सोलह साल में तथा पुरुष बीस साल में सर्वाङ्गपूर्ण होता है॥१८६॥

**नित्यमिति**। बालः पञ्चाब्दात् पञ्चवत्सरात् परतः ऊर्ध्वं नित्यं भृशम् अतिशयेन प्रवर्द्धते वृद्धिं गच्छति। स्त्री षोडशे अब्दे वत्सरे सर्वाङ्गपूर्णा, पुमान् पुरुषः विंशतौ अब्दे सर्वाङ्गपूर्णः स्यात्॥१८६॥

**ततोऽर्हति प्रमाणन्तु सप्ततालादिकं सदा।**
**कश्चिद्बाल्येऽपि शोभाढ्यस्तारुण्ये वार्द्धके क्वचित्॥१८७॥**

**अन्वयः**—ततः सप्ततालादिकं प्रमाणं सदा अर्हति। कश्चित् बाल्येऽपि शोभाढ्यः तारुण्ये वार्द्धके क्वचित्॥१८७॥

**व्याख्या**—ततः = तत्पश्चात् यौवने, सप्ततालादिकम्, प्रमाणम् = अङ्गपरिमितम्, सदा = सर्वदा, अर्हति = समर्थो भवति। कश्चित् = कोऽपि मूर्त्तिभेदः, बाल्येऽपि = शैशवेऽपि, शोभाढ्यः = शोभासम्पन्नः, तारुण्ये = तरुणावस्थायाम्, वार्द्धके = वृद्धावस्थायाम्, क्वचित्, शोभाढ्यः = शोभासम्पन्नो भवति॥१८७॥

**हिन्दी**—युवावस्था के लिए ही सात बित्ते का प्रमाण मान्य है। कोई बाल्यवस्था में, कोई जवानी में और कोई वृद्धावस्था में शोभासम्पन्न होता है॥१८७॥

**तत इति**। ततः यौवने इत्यर्थः, सप्ततालादिकं प्रमाणम् अवयवपरिमाणं सदा अर्हति। कश्चित् मूर्त्तिभेदः बाल्येऽपि शैशवेऽपि शोभाढ्यः शोभनः, तारुण्ये यौवने, वार्द्धके वृद्धावस्थायाञ्च क्वचित् शोभाढ्य इति शेषः॥१८७॥

**मुखाधस्त्र्यङ्गुला ग्रीवा हृदयं तु नवाङ्गुलम्।**
**तथोदरं च वस्तिश्च सक्थि त्वष्टादशाङ्गुलम्॥१८८॥**
**त्र्यङ्गुलन्तु भवेज्जानु जङ्घा त्वष्टादशाङ्गुला।**
**गुल्फाधस्त्र्यङ्गुलं ज्ञेयं सप्ततालस्य सर्वदा॥१८९॥**

**अन्वयः**—मुखाधः त्र्यङ्गुला, ग्रीवा हृदयं नवाङ्गुलं तथा उदरं वस्तिः च नवाङ्गुलं, सक्थि अष्टादशाङ्गुलम्, जानुः त्र्यङ्गुलं, जङ्घा अष्टादशाङ्गुला तथा गुल्फस्य अधः त्र्यङ्गुलम्। एतत् सप्ततालस्य प्रमाणं सर्वदा ज्ञेयम्॥१८८-१८९॥

**व्याख्या**—मुखस्य = आननस्य, अधः = अधोभागे, ग्रीवा = कण्ठः, हृदयम् = वक्षःस्थलम्, नवाङ्गुलम् = अङ्गुलनवात्मकम्, तथा उदरम् = कुक्षिः, वस्तिः = मूत्राशयः, पेडू इति भाषायाम्, नवाङ्गुलमेव, सक्थि = जानूपरिभागस्तु, अष्टादशाङ्गुलम् = अष्टादशाङ्गुलपरिमितम्, ज्ञेयम्। जानु = ऊरुपर्व, त्र्यङ्गुलम् = अङ्गुलित्रयपरिमितम्, जङ्घा = ऊरुः, अष्टादशाङ्गुला एव, तथा गुल्फस्य = घुण्टकस्य, अधः = निम्नभागः, त्र्यङ्गुलम् = अङ्गुलित्रयमेव ज्ञेयम्। एतत् = सर्वम्, सप्ततालस्य = सप्ततालमितस्य प्रतिमाभेदस्य प्रमाणम्, सदा = सर्वदा, ज्ञेयम्॥१८८-१८९॥

**हिन्दी**—मुँह के नीचे का भाग गला तीन अंगुल का होना चाहिए। छाती, पेट और पेडू नौ अंगुल का होना चाहिए। जंघा अठारह अंगुल का, घुटना तीन अंगुल का तथा एडी पर की गाँठ के नीचे का भाग भी तीन अंगुल का ही होना चाहिए। यह माप सात बित्ते अर्थात्

साढ़े तीन हाथ वाली मूर्त्ति के अङ्ग-निर्माण के लिए सदा मान्य है ॥ १८८-१८९ ॥

सप्ततालस्य मूर्त्तिभेदस्य प्रकारमाह—**मुखाध इति। त्र्यङ्गुलमिति च।** मुखस्य अधः निम्नतः ग्रीवा त्र्यङ्गुला अङ्गुलत्रयमिता, हृदयं वक्षः नवाङ्गुलं नवाङ्गुलप्रमाणं, तथा उदरं वस्तिः नाभ्यधोभागश्च नवाङ्गुलमिति शेषः, सक्थि ऊरुस्तु अष्टादशाङ्गुलं विज्ञेयमिति। जानु त्र्यङ्गुलं, जङ्घा अष्टादशाङ्गुला तथा गुल्फस्य अधः निम्नभागः त्र्यङ्गुलम् एतत् सप्ततालस्य सप्ततालमूर्त्तिभेदस्य प्रमाणं सर्वदा ज्ञेयम् ॥ १८८-१८९ ॥

**वेदाङ्गुला भवेद् ग्रीवा हृदयन्तु दशाङ्गुलम्।**
**दशाङ्गुलं चोदरं स्याद् वस्तिश्चैव दशाङ्गुलः ॥ १९० ॥**
**एकविंशाङ्गुलं सक्थि जानु स्याच्चतुरङ्गुलम्।**
**एकविंशाङ्गुला जङ्घा गुल्फाधश्चतुरङ्गुलम् ॥ १९१ ॥**
**अष्टतालप्रमाणस्य मानमुक्तमिदं सदा ॥ १९२ ॥**

**अन्वयः**—ग्रीवा वेदाङ्गुला हृदयं तु दशाङ्गुलं भवेत्। उदरं दशाङ्गुलं वस्तिश्चैव दशाङ्गुलं स्यात्। सक्थिः एकविंशाङ्गुलं जानु चतुरङ्गुलं स्यात्। जङ्घा एकविंशाङ्गुला तथा गुल्फस्य अधः चतुरङ्गुलं स्यात्। अष्टतालप्रमाणस्य इदं मानं सदा उक्तम् ॥ १९०-१९२ ॥

**व्याख्या**—ग्रीवा = कण्ठः, वेदाङ्गुला = चतुरङ्गुलमिता, तथा हृदयम् = उरस्तु, दशाङ्गुलम् = दशाङ्गुलपरिमितम्, भवेत् = स्यात्। उदरम् = जठरम्, दशाङ्गुलम् = दशाङ्गुलात्मकम्, वस्तिश्च = नाभेरधोभागश्च, दशाङ्गुलम् = दशाङ्गुलपरिमितम्, स्यात् = भवेत्। सक्थि = जानूपरिभागः, एकविंशाङ्गुलम् = एकाधिकविंशत्यङ्गुलपरिमितम्, तथा जानु = अष्ठीवान्, चतुरङ्गुलम् = वेदाङ्गुलम्, स्यात् = भवेत्। जङ्घा = प्रसृता टक्किका वेति, तथा गुल्फस्य = घुण्टकस्य, अधः = निम्नप्रदेशः, चतुरङ्गुलम् = वेदाङ्गुलम्, स्यात् = भवेत्। इदम् = सर्वम्, अष्टतालप्रमाणस्य = चतुर्हस्तपरिमितस्य, मूर्त्तिभेदस्य, मानम् = प्रमाणम्, उक्तम् = कथितम् ॥ १९०-१९२ ॥

**हिन्दी**—दस अंगुल का गला, दस अंगुल की छाती, दस अंगुल का पेट तथा दस अंगुल का पेड़ू, इक्कीस अंगुल की जंघा, बारह अंगुल का घुटना, इक्कीस अंगुल का टखने से लेकर घुटने तक का भाग तथा एडी की गाँठ से नीचे का भाग चार अंगुल का—इस तरह आठ बित्ते अर्थात् चार हाथ की मूर्त्ति के अंगों का प्रमाण सदा होता है ॥ १९०-१९२ ॥

अष्टतालप्रमाणमाह—**वेदेत्यादि।** ग्रीवा वेदाङ्गुला चतुरङ्गुला तथा हृदयं दशाङ्गुलं भवेत्। उदरं दशाङ्गुलं वस्तिश्च दशाङ्गुलः स्यात्। सक्थि एकविंशाङ्गुलं तथा जानु चतुरङ्गुलं स्यात्। जङ्घा एकविंशाङ्गुला तथा गुल्फस्य अधः चतुरङ्गुलं स्यात्। अष्टतालप्रमाणस्य मूर्त्तिभेदस्य इदं मानं सदा उक्तम् ॥ १९०-१९२ ॥

**त्रयोदशाङ्गुलं ज्ञेयं मुखञ्च हृदयं तथा ॥ १९३ ॥**
**उदरञ्च तथा वस्तिर्दशतालेषु सर्वदा।**
**गुल्फाधश्च तथा ग्रीवा जानु पञ्चाङ्गुलं स्मृतम् ॥ १९४ ॥**
**षड्विंशत्यङ्गुलं सक्थि तथा जङ्घा प्रकीर्त्तिता।**
**एकाङ्गुलो मूर्ध्नि मणिर्दशताले प्रकल्पयेत्।**

**पञ्चाशदङ्गुलौ बाहू दशताले स्मृतौ सदा॥ १९५॥**

**अन्वयः**—दशतालेषु मुखं हृदयम् उदरं तथा वस्तिश्च सर्वदा त्रयोदशाङ्गुलं ज्ञेयम्। गुल्फस्य अधः ग्रीवा तथा जानु पञ्चाङ्गुलं स्मृतम्। सक्थि तथा जङ्घा षड्विंशत्यङ्गुलं प्रकीर्त्तिता। दशताले मूर्ध्नि मणिम् एकाङ्गुलं प्रकल्पयेत् तथा दशताले बाहू पञ्चाशदङ्गुलौ स्मृतौ॥१९३-१९५॥

**व्याख्या**—दशतालेषु = पञ्चहस्तप्रमाणेषु मूर्त्तिभेदेषु, मुखम् = आननम्, हृदयम् = वक्षःस्थलम्, उदरम् = कुक्षिः, तथा वस्तिश्च = मूत्राशयश्च, सर्वदा = सततम्, त्रयोदशाङ्गुलम् = त्रयोदशाङ्गुलपरिमितम्, ज्ञेयम् = बोध्यम्। गुल्फस्य = घुण्टकस्य, अधः = निम्नभागः, ग्रीवा = कण्ठः, तथा जानु = चक्रिका, पञ्चाङ्गुलम् = पञ्चाङ्गुलपरिमितम्, स्मृतम् = कथितम्। सक्थि = जानूपरिभागः, तथा जङ्घा = ऊरुः, षड्विंशत्यङ्गुला, प्रकीर्त्तिता = कथिता। दशताले = दशतालात्मके, मूर्ध्नि = मस्तके, स्थितम्, मणिम् = रत्नम्, एकाङ्गुलम् = अङ्गुल्यैकपरिमितम्, प्रकल्पयेत् = चिन्तयेत्, तथा दशताले = दशतालात्मके मूर्त्तौ, बाहू = भुजौ, पञ्चाङ्गुलौ = पञ्चाङ्गुलिपरिमितौ, स्मृतौ = कथितौ॥१९३-१९५॥

**हिन्दी**—पाँच हाथ वाली मूर्त्ति में सदा मुँह, छाती, पेट तथा पेडू प्रत्येक तेरह अंगुल का होना चाहिए। एडी की गाँठ के नीचे का भाग गला तथा घुटना प्रत्येक पाँच अंगुल का कहा गया है। ऊरु और जँघा प्रत्येक छब्बीस अंगुल का होना चाहिए। शिर का मुकुटमणि एक अंगुल तथा दोनों बाहें अलग-अलग पन्द्रह अंगुलियों के होने चाहिए॥१९३-१९५॥

दशतालप्रमाणमाह—**त्रयोदशाङ्गुलमित्यादि**। दशतालेषु मूर्त्तिभेदेषु मुखं हृदयं जठरं तथा वस्तिश्च सर्वदा त्रयोदशाङ्गुलं ज्ञेयम्। गुल्फस्य अधः, ग्रीवा तथा जानु पञ्चाङ्गुलं स्मृतम्। सक्थि षड्विंशत्यङ्गुलं तथा जङ्घा षड्विंशत्यङ्गुला प्रकीर्त्तिता। दशताले मूर्ध्नि शिरसि स्थितं मणिम् एकाङ्गुलं प्रकल्पयेत्। तथा दशताले बाहू पञ्चाशदङ्गुली सदा स्मृतौ॥१९३-१९५॥

**द्व्यङ्गुलौ द्व्यङ्गुलौ चोनौ ततो हीनप्रमाणके।**
**पाटवं तु यथाशोभि सर्वमानेषु कल्पयेत्॥ १९६॥**

**अन्वयः**—ततः हीनप्रमाणके द्व्यङ्गुलौ द्व्यङ्गुलौ ऊनौ च कार्यौ। पाटवं तु सर्वमानेषु यथाशोभि कल्पयेत्॥१९६॥

**व्याख्या**—ततः = तेभ्यः दशतालादिभ्यः, हीनप्रमाणके = निम्ननिदर्शने, द्व्यङ्गुलौ द्व्यङ्गुलौ = देहस्य प्रत्येकावयवं चाङ्गुलिद्वयमितम्, ऊनौ = हीनौ, कार्यौ। पाटवम् = परि-काल्पनिकचातुर्यम्, सर्वमानेषु = सकलविधपरिमाणेषु, यथाशोभि = शोभानुसारम्, कल्पयेत् = निर्मापयेत्॥१९६॥

**हिन्दी**—दस बित्ते से कम माप वाली मूर्त्ति में हरेक बाँह की माप दो-दो अंगुल कम होनी चाहिए और सभी प्रकार की मापों वाली मूर्त्ति के अंगो की सजावट उसकी शोभा के अनुसार होनी चाहिए॥१९६॥

**द्व्यङ्गुलाविति**। ततः तेभ्यः दशतालादिभ्यः हीनप्रमाणके न्यूनपरिमाणे सति द्व्यङ्गुलौ द्व्यङ्गुलौ प्रत्येकाङ्गम् अङ्गुलद्वयमित्यर्थः, ऊनौ कार्य्यौ इति शेषः। पाटवं पारिपाट्यं सज्जादिकमित्यर्थः सर्वमानेषु सर्वप्रकारपरिमाणेषु यथाशोभि कल्पयेत्॥१९६॥

**नवतालप्रमाणे न ह्यूनाधिक्यं प्रकल्पयेत्॥ १९७॥**

**अन्वयः**—नवतालप्रमाणे ऊनाधिक्यं न हि प्रकल्पयेत् ॥ १९७ ॥

**व्याख्या**—नवतालप्रमाणे = नवतालमिते मूर्त्तौ, तु, ऊनाधिक्यम् = अल्पाधिक्यम्, न हि = नैव, प्रकल्पयेत् = रचयेत् ॥ १९७ ॥

**हिन्दी**—और नौ बित्ते मापवाली मूर्त्ति में अङ्गों की माप में कमी-बेशी नहीं ही होनी चाहिए ॥ १९७ ॥

**नवतालेति**। नवतालप्रमाणे तु ऊनाधिक्यं न हि नैव ऊनाधिक्यं प्रकल्पयेत् कुर्य्यादित्यर्थः ॥ १९७ ॥

**दशताले तु विज्ञेयौ पादौ पञ्चदशाङ्गुलौ।**
**एकैकाङ्गुलहीनौ स्तस्ततो न्यूनप्रमाणके।**
**दशतालोदूर्ध्वमाने तु ताले तालेऽधिकाङ्गुलम्।**
**कल्पयेन्मुखतो धीमान् शिल्पवित्सु यथा तथा॥ १९८ ॥**

**अन्वयः**—दशताले तु पादौ पञ्चदशाङ्गुलौ विज्ञेयौ। ततः न्यूनप्रमाणके पादौ एकाङ्गुलहीनौ स्तः। दशतालोद्ध्र्वमाने तु ताले ताले अधिकाङ्गुलं कार्यम्। धीमान् शिल्पवित्सु मुखतः यथा तथा कल्पयेत् ॥ १९८ ॥

**व्याख्या**—दशताले = दशतालमिते मूर्त्तौ, तु = किन्तु, पादौ = चरणौ, पञ्चदशाङ्गुलौ = पञ्चदशाङ्गुलमितौ, विज्ञेयौ = कार्यौ। ततः = दशतालात्, न्यूनप्रमाणके = ऊनपरिमिते पादौ, एकाङ्गुल- हीनौ = एकेनाङ्गुलेन, हीनौ = ऊनौ, स्तः = भवतः। दशतालात् = दशतालपरिमितात्, ऊर्ध्वमाने = उपरिपरिमिते, ताले ताले = प्रतिताले, अधिकाङ्गुलम् = एकाङ्गुलाधिक्यम्, निर्मातव्यम्। धीमान् = बुद्धिमान्, शिल्पवित् = मूर्त्तिकारः, मुखतः = आननादारभ्य, यथा = येन प्रकारेण सुन्दरं भवेत्, तथा = तेनैव रूपेण, कल्पयेत् = रचयेत् ॥ १९८ ॥

**हिन्दी**—दस बित्ते माप की मूर्त्ति में दोनों पैर अलग-अलग पन्द्रह अंगुल माप के बनाने चाहिए। इससे कम माप की मूर्त्ति में दोनों पैर एक-एक अंगुल कम माप का होना चाहिए। दस बित्ते से अधिक माप की मूर्त्ति में प्रत्येक बित्ते पर एक-एक अङ्गुल अधिक माप अङ्गों की करनी चाहिए और बुद्धिमान् मूर्त्तिकार को मुँह से शुरू कर पैर तक के अंगों को जैसे सुन्दर बन सके बनाना चाहिए ॥ १९८ ॥

**दशताले इति**। दशताले तु पादौ पञ्चदशाङ्गुलौ कार्य्यौ इति शेषः। ततः दशतालात् न्यूनप्रमाणके न्यूनपरिमाणे पादौ एकाङ्गुलहीनौ एकेन अङ्गुलेन हीनौ स्तः भवत इत्यर्थः। पतितम् इति। दशतालात् ऊर्ध्वमाने तु ताले ताले प्रतितालम् अधिकाङ्गुलम् एकाङ्गुलाधिकं कार्य्यमिति शेषः। धीमान् शिल्पवित् शिल्पज्ञः मुखतः मुखादारभ्य इत्यर्थः, यथा सुष्ठु भवेत् तथा कल्पयेत् ॥ १९८ ॥

**दीर्घोरुजङ्घा विकटा क्रूरा स्याद्भीषणासुरी।**
**पैशाची प्रतिमा ज्ञेया राक्षसी सुकृशापि वा॥ १९९ ॥**

**अन्वयः**—दीर्घोरुजङ्घा विकटा क्रूरा तथा भीषणा प्रतिमा आसुरी स्यात्। सुकृशापि प्रतिमा पैशाची वा राक्षसी ज्ञेया ॥ १९९ ॥

**व्याख्या**—दीर्घोरुजङ्घा = यस्याः मूर्त्तेः, ऊरुः = सक्थि, जङ्घा = प्रसृता, विकटा = भयप्रदा, तथा भीषणा = भयङ्करा, प्रतिमा = मूर्त्तिः, आसुरी = असुरसम्बन्धिनी प्रतिमा, स्यात् = भवेत्, तादृश्यपि सुकृशा = अतिदुर्बला, प्रतिमा = मूर्त्तिः, पैशाची = बीभत्सा, वा = अथवा, राक्षसी = दानवी, ज्ञेया = बोध्या ॥ १९९ ॥

**हिन्दी**—जिस मूर्त्ति की ऊरू एवं जाँघें लम्बी हों, वह देखने में विकट, क्रूर एवं भीषण आकारवाली हो, उसे आसुरी या उक्तलक्षण से युक्त अति दुबली मूर्त्ति हो, उसे राक्षसी या पैशाची मूर्त्ति समझनी चाहिए ॥ १९९ ॥

**दीर्घेति**। दीर्घोरुजङ्घा विकटा क्रूरा तथा भीषणा प्रतिमा आसुरी स्यात्। तादृशी अपि सुकृशा अतिक्षीणा प्रतिमा पैचाशी वा राक्षसी ज्ञेया ॥ १९९ ॥

**न पञ्चाङ्गुलतो हीना न षडङ्गुलतोऽधिका।**
**करस्य मध्यमा प्रोक्ता सर्वमानेषु तद्विदैः ॥ २०० ॥**

**अन्वयः**—पञ्चाङ्गुलतः हीना न षडङ्गुलतः अधिका न। तद्विदैः सर्वमानेषु करस्य मध्यमा प्रोक्ता ॥ २०० ॥

**व्याख्या**—पञ्चाङ्गुलतः = पञ्चाङ्गुलपरिमितात्, हीना = ऊना, न = नहि, षडङ्गुलतः = षडङ्गुलपरिमितात्, अधिकः = विशेषः, न = नहि। तद्विदैः—तत् = तस्याः मूर्त्तेः, विज्ञैः = भिज्ञैः, सर्वमानेषु = सकलपरिमाणेषु, करस्य = हस्तस्य, मध्यमा = मध्यस्थाङ्गुलिः, प्रोक्ता = कथिता ॥ २०० ॥

**हिन्दी**—सभी माप की मूर्त्ति में हाथ की बीच वाली अंगुली की माप माननी चाहिए। मूर्त्तिकला के विशेषज्ञों के अनुसार पाँच अंगुल से कम और छः अंगुल से ज्यादे नहीं होनी चाहिए ॥ २०० ॥

**नेति**। तद्विदैः तद्विज्ञैः पण्डितैः सर्वमानेषु करस्य मध्यमा पञ्चाङ्गुलतः न हीना, षडङ्गुलतश्च नाधिका प्रोक्ता कथिता ॥ २०० ॥

**क्वचित् तु बालसदृशं सदैव तरुणं वपुः।**
**मूर्त्तीनां कल्पयेच्छिल्पी न वृद्धसदृशं क्वचित् ॥ २०१ ॥**

**अन्वयः**—शिल्पी सदैव बालसदृशं वा तरुणं वपुः कल्पयेत्। क्वचित् वृद्धसदृशं न कल्पयेत् ॥ २०१ ॥

**व्याख्या**—शिल्पी = मूर्त्तिकारः, सदैव = सततम्, बालसदृशम् = बालस्वरूपम्, मूर्त्तीनाम् = देवप्रतिमानाम्, वा = अथवा, तरुणम् = युवारूपम्, वपुः = देवमूर्त्तिदेहम्, कल्पयेत् = रचयेत्। क्वचित् = कदाचित्, वृद्धसदृशम् = वार्द्धक्यरूपम्, न = नहि, प्रकल्पयेत् = रचयेत् ॥ २०१ ॥

**हिन्दी**—मूर्त्तिकार देवप्रतिमा कहीं बालरूप में, कहीं युवा रूप में बनाये। किसी भी परिस्थिति में देवता की मूर्त्ति वृद्धावस्था की नहीं बनानी चाहिए ॥ २०१ ॥

**क्वचिदिति**। शिल्पी शिल्पकुशलः सदैव बालसदृशं वा तरुणं वपुः देवमूर्त्तिशरीरं कल्पयेत्, क्वचित् कदाचित् वृद्धसदृशं न कल्पयेदित्यर्थः ॥ २०१ ॥

एवंविधान् नृपो राष्ट्रे देवान् संस्थापयेत् सदा।
प्रतिसंवत्सरं तेषामुत्सवान् सम्यगाचरेत्॥ २०२॥

**अन्वयः**—नृपः राष्ट्रे सदा एवंविधान् देवान् संस्थापयेत् तथा प्रतिसंवत्सरं तेषाम् उत्सवान् सम्यक् आचरेत्॥ २०२॥

**व्याख्या**—नृपः = राजा, राष्ट्रे = स्वशासितप्रदेशे, एवंविधान् = इत्थम्, देवान् = देवप्रतिमाः, संस्थापयेत् = स्थापनां कुर्यात्, तथा = तेनैव प्रकारेण, प्रतिसंवत्सरम् = वत्सरे वत्सरे, तेषाम् = तत्तद्देवविशेषाणाम्, उत्सवान् = उद्धवान्, सम्यक् = सुष्ठुतया, आचरेत् = अनुतिष्ठेत्॥ २०२॥

**हिन्दी**—राजा अपने राज्य में ऐसी ही देवप्रतिमाओं की स्थापना करे तथा हर वर्ष उनका उत्सव उत्तम रीति से मनाये॥ २०२॥

**एवंविधानिति**। नृपः राष्ट्रे सदा एवंविधान् देवान् संस्थापयेत् तथा प्रतिसंवत्सरं तेषां देवानाम् उत्सवांश्च सम्यक् आचरेत् अनुतिष्ठेत्॥ २०२॥

देवालये मानहीनां मूर्त्तिं भग्नां न धारयेत्।
प्रासादांश्च तथा देवाञ्जीर्णानुद्धृत्य यत्नतः॥ २०३॥
देवतां तु पुरस्कृत्य नृत्यादीन् वीक्ष्य सर्वदा।
न मनः स्वोपभोगार्थं विदध्याद् यत्नतो नृपः॥ २०४॥

**अन्वयः**—नृपः देवालये मानहीनां तथा भग्नां मूर्त्तिं न धारयेत्। तथा जीर्णान् प्रासादान् देवांश्च यत्नतः उद्धृत्य सर्वदा देवतां तु पुरस्कृत्य नृत्यादीन् वीक्ष्य मनः स्वोपभोगार्थं यत्नतः न विदध्यात्॥ २०३-२०४॥

**व्याख्या**—नृपः = राजा, देवालये = मन्दिरे, मानहीनाम् = प्रमाणरहिताम्, तथा = तेनैव प्रकारेण, भग्नाम् = खण्डिताम्, मूर्त्तिम् = देवप्रतिमाम्, न = नहि, धारयेत् = रक्षेत्। तथा जीर्णान् = शीर्णान्, प्रासादान् = मन्दिरान्, देवांश्च = प्रतिमांश्च, यत्नतः = प्रयासपूर्वकेण, उद्धृत्य = उद्धारं कृत्वा, सर्वदा = सततम्, देवताम् = देवम्, पुरस्कृत्य = अग्रे निधाय, नृत्यादीन् = नर्तनादिकान् उत्सवादिव्यापारान्, वीक्ष्य = अवलोक्य, मनः = चित्तम्, स्वोपभोगार्थम्—स्वस्य = आत्मनः, उपभोगार्थम् = आस्वादनाय, यत्नतः = सायासेन, न = नहि, विदध्यात् = नियुञ्ज्यात्॥ २०३-२०४॥

**हिन्दी**—राजा का यह कर्त्तव्य है कि पूर्ववर्णित मापरहित एवं खण्डित देवप्रतिमा की मन्दिर में स्थापना न करे। देवमन्दिर या प्रतिमा जीर्ण होने पर यत्नपूर्वक उसका पुनः संस्कार कर दे। देवता के आगे नृत्य प्रभृति देखते हुए राजा अपने राजोचित भोग भोगने में मन को लिप्त न करे, प्रयासपूर्वक इससे बचे॥ २०३-२०४॥

**देवालये इति। देवतामिति**। नृपः देवालये मानहीनाम् अप्रमाणां तथा भग्नां मूर्त्तिं न धारयेत् रक्षेत् तथा जीर्णान् प्रासादान् देवांश्च यत्नतः उद्धृत्य संस्कृत्य सर्वदा देवतां पुरस्कृत्य सम्पूज्य नृत्यादीन् उत्सवादिव्यापारान् वीक्ष्य दृष्ट्वा मनः चित्तं स्वोपभोगार्थं स्वस्य उपभोगाय यत्नतः यत्नेन न विदध्यात् न नियुञ्ज्यात् भोगासक्तं न कुर्य्यादित्यर्थः॥ २०३-२०४॥

**प्रजाभिर्विधृता ये ये ह्युत्सवास्तांश्च पालयेत्।**
**प्रजानन्देन सन्तुष्येत् तद्दुःखैर्दुःखितो भवेत्॥ २०५॥**

**इति शुक्रनीतौ चतुर्थाध्यायस्य राष्ट्रे मध्यं लोकधर्मनिरूपणं नाम चतुर्थं प्रकरणम्।**

**अन्वयः**—प्रजाभिश्च ये ये उत्सवा विधृताः तांश्च पालयेत्। प्रजानाम् आनन्देन सन्तुष्येत् तथा तद्दुःखैः दुःखितो भवेत्॥ २०५॥

**व्याख्या**—प्रजाभिः = जनैः, ये ये = यत् यत्, उत्सवाः = उल्लासाः, विधृताः = कृताः, तांश्च = उत्सवान्, राजाऽपि, पालयेत् = संरक्षणं कुर्यात्। प्रजानाम् = जनानाम्, आनन्देन = हर्षेण, सन्तुष्येत् = सन्तुष्टो भवेत्, तथा = तेनैव प्रकारेण, तासाम् = प्रजानाम्, दुःखैः = कष्टैः, दुःखितः = पीडितः, भवेत् = स्यात्॥ २०५॥

**हिन्दी**—राज्य में प्रजा के द्वारा संचालित उत्सवों की रक्षा राजा को करनी चाहिए। प्रजा के सुख में संतुष्ट और दुःख में दुःखी होना चाहिए॥ २०५॥

**इस प्रकार शुक्रनीति में चतुर्थ अध्याय में 'लोकधर्मनिरूपण' नामक चतुर्थ प्रकरण की 'विमला' संस्कृत-हिन्दी व्याख्या समाप्त हुई।**

**प्रजाभिरिति**। प्रजाभिश्च ये ये उत्सवाः विधृताः कृताः तांश्च पालयेत् रक्षेत्, प्रजानाम् आनन्देन सन्तुष्येत् सन्तुष्टो भवेत् तथा तासां दुःखैश्च दुःखितः भवेत्॥ २०५॥

**इति श्रीजीवानन्दविद्यासागरविरचिता चतुर्थाध्यायस्य चतुर्थप्रकरणव्याख्या समाप्ता।**

# चतुर्थाध्यायस्य पञ्चमं प्रकरणम्

दुष्टनिग्रहणं कुर्य्याद् व्यवहारानुदर्शनैः।
स्वाज्ञया वर्त्तितुं शक्ता स्वाधीना च सदा प्रजा॥ १॥

**अन्वयः**—व्यवहाराणाम् अनुदर्शनैः दुष्टानां निग्रहणं कुर्यात्। प्रजा स्वाधीना स्वाज्ञया सदा वर्त्तितुं शक्ता भवति॥ १॥

**व्याख्या**—व्यवहाराणाम् = अभियोगानाम्, अनुदर्शनैः = सम्यगवलोकनैः, दुष्टानाम् = दुर्वृत्तानाम्, निग्रहम् = नियन्त्रणम्, कुर्यात् = निष्पादयेत्। प्रजा = जनाः, चेत्, स्वाधीना = स्वच्छन्दा, स्वाज्ञया—स्वस्य = आत्मनः, आज्ञया = आदेशेन, सदा = सततम्, वर्त्तितुम् = व्यवहर्त्तुम्, शक्ता = समर्था भवति॥ १॥

**हिन्दी**—विवाद का विषय उपस्थित होने पर उस पर भलीभाँति विचार कर दुष्टों को नियंत्रित करना चाहिए। ऐसा करने से प्रजा निरंकुश नहीं हो पाती तथा सदैव राजा के आदेशानुसार काम करने में समर्थ होती है॥ १॥

**दुष्टेति**। व्यवहाराणां विवादविषयाणाम् अनुदर्शनैः सम्यक् दर्शनैः दुष्टानां निग्रहं कुर्य्यात्, प्रजा स्वाधीना चेत् स्वाज्ञया निजाज्ञया स्वेच्छया इत्यर्थः, सदा वर्त्तितुं व्यवहर्त्तुं शक्ता भवति, तस्मात् प्रजा यथा स्वेच्छया न व्यवहरेयुः तथा कार्य्यमिति भावः॥ १॥

स्वेष्टहानिकरः शत्रुर्दुष्टः पापप्रचारवान्।
इष्टसम्पादनं न्याय्यं प्रजानां पालनं हि तत्॥ २॥

**अन्वयः**—दुष्टः पापप्रचारवान् शत्रुः स्वेष्टहानिकरः इष्टस्य सम्पादनं न्याय्यम्, तत् हि प्रजानां पालनम्॥ २॥

**व्याख्या**—दुष्टः = दुर्वृत्तः, पापस्य = अधर्मस्य, प्रचारवान् = प्रचलनकर्त्ता, शत्रुः = रिपुः, स्वेष्टहानिकरः—स्वस्य = आत्मनः, इष्टस्य = अभीप्सितस्य, हानिकरः = विनाशकः, इष्टस्य = अभिलषितस्य वस्तुनः, सम्पादनम् = निष्पादनम्, न्याय्यम् = न्यायादनपेतम्, तत् = न्याय्यम्, हि = यतः, प्रजानाम् = जनानाम्, पालनम् = संरक्षणम्, भवति॥ २॥

**हिन्दी**—अपने आचरण से पाप का प्रचार करने वाला व्यक्ति दुष्ट कहलाता है तथा अपनी अभिलषित वस्तु की हानि करने वाला व्यक्ति शत्रु कहलाता है। न्यायपूर्वक प्रजा के अभीष्ट का साधन ही प्रजापालन है॥ २॥

**स्वेष्टेति**। दुष्टः पापप्रचारवान् पापाशयः शत्रुः स्वस्य इष्टहानिकरः इष्टस्य अभिलषितस्य च सम्पादनं सम्यक् साधनं न्याय्यं न्यायादनपेतं राज्ञ इति शेषः, यथा शत्रुभिरिष्टनाशो न क्रियते तथा कार्य्यमिति भावः, तत् हि तदेव इष्टसम्पादनमेव प्रजानां पालनम्॥ २॥

शत्रोरनिष्टकरणान्निवृत्तिः शत्रुनाशनम्।
पापाचारनिवृत्तियैर्दुष्टनिग्रहणं हि तत्॥ ३॥

**अन्वयः**—शत्रोः अनिष्टकरणात् निवृत्तिः शत्रुनाशनम्। यैः पापाचारात् निवृत्तिः तत् हि दुष्टनिग्रहणम्॥ ३॥

**व्याख्या**—शत्रोः = रिपोः, अनिष्टकरणात् = अनभिलषितनिष्पादनात्, निवृत्तिः = उपरमः प्रवृत्त्यभावो वा, शत्रुनाशनम्—शत्रोः = रिपोः, नाशनम् = विध्वंसनम्। यैः = क्रियाभिः, पापाचारात् = अधर्माचरणात्, निवृत्तिः = दुष्टस्योपशमनम्, भवति, तत् हि = तदेव, दुष्टनिग्रहणम्—दुष्टानाम् = दुर्वृत्तानाम्, निग्रहणम् = नियन्त्रणम्, भवति॥ ३॥

**हिन्दी**—अनिष्ट साधन में शत्रुओं को रोक देना ही 'शत्रुविनाश' कहलाता है। दुष्टों को पाप के आचरण से विरत कर देना ही 'दुष्टदमन' कहलाता है॥ ३॥

**शत्रोरिति**। शत्रोः अनिष्टकरणात् निवृत्तिः शत्रुनाशनं पापाचारात् निवृत्तिश्च शत्रोरिति शेषः, तत् हि तदेव दुष्टनिग्रहणम्॥ ३॥

स्वप्रजाधर्म्मसंस्थानं सदसत्प्रविचारतः।
जायते चार्थसंसिद्धिर्व्यवहारस्तु येन सः॥ ४॥

**अन्वयः**—येन सदसत्प्रविचारतः स्वप्रजाधर्मसंस्थानं च अर्थसंसिद्धिः जायते सः व्यवहारः॥ ४॥

**व्याख्या**—येन = कर्मणा, सदसत्प्रविचारतः—सत्सु = साधुषु, असत्सु = असाधुषु, च = पुनः, प्रविचारतः = सुष्ठुविचारेण, स्वप्रजाधर्मसंस्थानम्—स्वस्य = आत्मनः, प्रजानाम् = जनानाम्, धर्मे = पुण्यकर्मणि, संस्थानम् = सुष्ठुस्थितिः, च = पुनः, अर्थसंसिद्धिः—अर्थानाम् = कार्याणाम्, संसिद्धिः = सम्यक्सफलता, जायते = भवति, सः = असौ, व्यवहारः प्रोक्तः॥ ४॥

**हिन्दी**—जिसके द्वारा सही और गलत विषय की जानकारी प्राप्त कर प्रजा की धार्मिक स्थिति तथा उनके कार्य-कलापों की सही जानकारी की सिद्धि हो, उसे व्यवहार मुकदमा कहते हैं॥ ४॥

**स्वेति**। येन सदसत्प्रविचारतः सत्सु असत्सु च प्रविचारतः सम्यक् विचारेण स्वस्य प्रजानां धर्मसंस्थानं धर्मे सम्यक् स्थितिः अर्थानां कार्य्याणां संसिद्धिः समीचीना सिद्धिः जायते सः व्यवहारः॥ ४॥

धर्म्मशास्त्रानुसारेण क्रोधलोभविवर्जितः।
सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः।
समाहितमतिः पश्येद् व्यवहाराननुक्रमात्॥ ५॥

**अन्वयः**—क्रोधलोभविवर्जितः सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः तथा समाहितमतिः सन् धर्मशास्त्रानुसारेण अनुक्रमात् व्यवहारान् पश्येत्॥ ५॥

**व्याख्या**—राजा, क्रोधलोभविवर्जितः = कोपलिप्सारहितः, सप्राड्विवाकः = अधिवक्ता-सहितः, सामात्यः = सचिवैः सह, सब्राह्मणपुरोहितः—ब्राह्मणैः = [illegible], पुरोहितैः = सौवस्तिकैः,

सहितः, तथा = तेनैव प्रकारेण, समाहितमतिः = एकनिष्ठचित्तो भूत्वा, धर्मशास्त्रानुसारेण = धर्मसंहितानुकूलेन, अनुक्रमात् = आनुपूर्व्यात्, व्यवहारान् = अभियोगान्, पश्येत् = अवलोकयेत् ॥५॥

**हिन्दी**—राजा स्वयं क्रोध एवं लोभ को छोड़कर अधिवक्ता, अमात्य, ब्राह्मण एवं पुरोहितों के साथ एकनिष्ठ मन से न्यायार्थ उपस्थित होकर क्रमशः मुकदमों को देखे ॥५॥

**धर्मशास्त्रेति**। राजा क्रोधलोभविवर्जितः सप्राड्विवाकः प्राड्विवाकेन सहितः सामात्यः अमात्यपरिवृतः सब्राह्मणपुरोहितः ब्राह्मणैः पुरोहितैश्च सहितः तथा समाहितमतिः अवहितचित्तः सन् धर्मशास्त्रानुसारेण अनुक्रमात् यथाक्रमं व्यवहारान् पश्येत् ॥५॥

**नैकः पश्येच्च कार्य्याणि वादिनोः शृणुयाद् वचः।**
**रहसि च नृपः प्राज्ञः सभ्याश्चैव कदाचन ॥६॥**

**अन्वयः**—प्राज्ञः नृपः रहसि च वादिनः कार्याणि कदाचन न पश्येत्, वचश्च न शृणुयात्, सभ्याश्च न पश्येयुः ॥६॥

**व्याख्या**—प्राज्ञः = बुद्धिमान्, नृपः = राजा, एकः = एकाकी, च = पुनः, रहसि = एकान्ते, वादिनोः = अभियोगिनोः, कार्याणि = व्यवहाराः, कदाचन = कदापि, न पश्येत् = अवलोकयेत्, वचश्च = कथनञ्च, न = नहि, शृणुयात् = आकर्णयेत्, सभ्याश्च = सभासदश्च, न पश्येयुः = शृणुयुः ॥६॥

**हिन्दी**—बुद्धिमान् राजा और उनके सभासद अकेले एकान्त में वादी-प्रतिवादी के मुकदमों को कभी न देखें और न उनकी बातें ही सुनें ॥६॥

**नैक इति**। प्राज्ञः नृपः एकः एकाकी रहसि निर्जने वादिनोः कार्य्याणि कदाचन न पश्येत् वचश्च वचनञ्च न शृणुयात्, सभ्याश्च न पश्येयुः नापि शृणुयुरित्यर्थः ॥६॥

**पक्षपाताधिरोपस्य कारणानि च पञ्च वै।**
**रागलोभभयद्वेषा वादिनोश्च रहःश्रुतिः ॥७॥**

**अन्वयः**—रागलोभभयद्वेषाः वादिनोः रहःश्रुतिः पक्षपाताधिरोपस्य वै पञ्च कारणानि ॥७॥

**व्याख्या**—रागः = अभिमतविषयाभिलाषः, लोभः = लिप्सा, भयः = भीतिः, द्वेषाः = सापत्न्यभावाश्च, रहः = निर्जने, श्रुतिः = अभियोगश्रवणञ्च, पक्षपाताधिरोपस्य = पक्षपातरूपदोषस्य, वै = इति निश्चयेन, एतानि पञ्च = पूर्वपरिगणितपञ्च, कारणानि = निमित्तानि, वा भवन्ति ॥७॥

**हिन्दी**—राग, द्वेष, लोभ, भय और वादी-प्रतिवादी की एकान्त में बातें सुनना—निश्चित रूप से ये पाँच पक्षपात के कारण माने जाते हैं ॥७॥

**पक्षेति**। रागलोभभयद्वेषाः वादिनोः अर्थिप्रत्यर्थिनोः रहःश्रुतिः विजने वाक्यश्रवणञ्च एतानि पञ्च पक्षपाताधिरोपस्य पक्षपातरूपदोषस्य कारणनि वैशब्दोऽवधारणे ॥७॥

**पौरकार्य्याणि यो राजा न करोति सुखे स्थितः।**
**व्यक्तं स नरके घोरे पच्यते नात्र संशयः ॥८॥**

**अन्वयः**—यः राजा सुखे स्थितः पौरकार्याणि न करोति, सः व्यक्तं नरके पच्यते, न अत्र संशयः ॥८॥

**व्याख्या**—यः = अविवेकी, राजा = नरपतिः, सुखे = आत्मोपभोगे, स्थितः = निरतः सन्, पौरकार्याणि—पौराणाम् = पुरवासिनां, प्रजानाम्, कार्याणि = कृत्यानि, न = नहि, करोति = सम्पादयति, सः = राजा, व्यक्तम् = स्पष्टमेव, घोरे = भयङ्करे, नरके = निरये, पच्यते = पतति, अत्र = अस्मिन् विषये, न = नहि, संशयः = सन्देहः, कार्यः = विधेयः ॥ ८ ॥

**हिन्दी**—जो राजा अपने सुखोपभोग में डूबा रहकर नागरिकों के हितसाधन नहीं करता, निश्चय ही वह घोर नरक में गिरता है; इसमें कतई सन्देह नहीं है ॥ ८ ॥

**पौरेति**। यः राजा सुखे स्थितः सुखासक्तः सन् पौराणां पुरवासिनां प्रजानामित्यर्थः, कार्य्याणि न करोति, स व्यक्तं निश्चितं घोरे नरके पच्यते, अत्र संशयः नास्ति ॥ ८ ॥

**यस्त्वधर्मेण कार्य्याणि मोहात् कुर्य्यान्नराधिपः।**
**अचिरात् तं दुरात्मानं वशे कुर्वन्ति शत्रवः ॥**

**अन्वयः**—यः नराधिपः मोहात् अधर्मेण कार्याणि कुर्यात्, शत्रवः अचिरात् तं दुरात्मानं वशे कुर्वन्ति ॥ ९ ॥

**व्याख्या**—यः = अज्ञानी, नराधिपः = राजा, मोहात् = अज्ञानात्, अधर्मेण = धर्मविरुद्धाचरणेन, कार्याणि = प्रजाकृत्यानि, कुर्यात् = निष्पादयेत्, शत्रवः = अरयः, अचिरात् = शीघ्रमेव, तम् = विवेकशून्यम्, दुरात्मानम् = दुर्वृत्तम्, वशे = आत्माधीने, कुर्वन्ति = निष्पादयन्ति ॥ ९ ॥

**हिन्दी**—जो राजा अज्ञानतावश धर्मविरुद्ध आचरण करता है, उस दुरात्मा को शत्रु शीघ्र ही अपने अधीन कर लेते हैं ॥ ९ ॥

**य इति**। यः नराधिपः मोहात् अज्ञानात् अधर्मेण कार्य्याणि कुर्य्यात्, शत्रवः अचिरात् तं दुरात्मानं वशे कुर्वन्ति ॥ ९ ॥

**अस्वर्ग्या लोकनाशाय परानीकभयावहा।**
**आयुर्वीजहरी राज्ञामस्ति वाक्ये स्वयं कृतिः ॥ १० ॥**

**अन्वयः**—वाक्ये स्वयं कृतिः राज्ञाम् अस्वर्ग्या परानीकभयावहा आयुर्वीजहरी लोकनाशाय भवति ॥ १० ॥

**व्याख्या**—वाक्ये = वादिप्रतिवादिनोः कथने, स्वयम् = सभ्यनिरपेक्षेणात्मनैव, कृतिः = विचारदर्शनम्, राज्ञाम् = भूपतीनाम्, अस्वर्ग्या = नरकपातिनी, तथा परानीकभयावहा—परानीकेभ्यः = शत्रुसैन्येभ्यः, भयम् = भीतिः, आवहति = वहनं करोतीति तथोक्ता, अत एव आयुर्वीजहरी = जीवनविघातिनी सती, लोकानाम् = प्रजानाम्, नाशाय = विघाताय, भवति = अस्तीत्यर्थः ॥ १० ॥

**हिन्दी**—वादी-प्रतिवादी की बातों को सुनकर राजा यदि सभासदों की राय लिये बिना स्वयं कोई निर्णय करता है तो उससे उसे नरक की प्राप्ति, प्रजा का नाश, शत्रुसेना से भय तथा आयु का नाश होता है ॥ १० ॥

**अस्वर्ग्येति**। वाक्ये वादिनोर्वचने स्वयं कृतिः सभ्यनिरपेक्षेण स्वयं विचारदर्शनं राज्ञाम् अस्वर्ग्या अस्वर्गसाधनी तथा परानीकभयावहा परानीकेभ्यः शत्रुसैन्येभ्यः भयम् आवहतीति तथोक्ता शत्रुवृद्धिकरीत्यर्थः, अत एव आयुर्वीजहरी आयुःक्षयकरीत्यर्थः, सती लोकानां प्रजानां नाशाय अस्ति भवतीत्यर्थः ॥ १० ॥

**तस्माच्छास्त्रानुसारेण राजा कार्य्याणि साधयेत्॥ ११॥**

**अन्वयः**—तस्मात् राजा शास्त्रानुसारेण कार्याणि साधयेत्॥ ११॥

**व्याख्या**—तस्मात् = अस्मादेव कारणात्, राजा = भूपतिः, शास्त्रानुसारेण = शास्त्रीय-निर्देशानुकूलेन, कार्याणि = अभियोगानि, साधयेत् = निष्पादयेत्॥ ११॥

**हिन्दी**—अतः राजा को विधिसम्मत मुकदमें की सुनवाई करनी चाहिए॥ ११॥

**तस्मादिति।** तस्मात् राजा शास्त्रानुसारेण कार्य्याणि साधयेत् सम्पश्येत्॥ ११॥

**यदा न कुर्य्यान्नृपतिः स्वयं कार्य्यविनिर्णयम्।**
**तदा तत्र नियुञ्जीत ब्राह्मणं वेदपारगम्॥ १२॥**
**दान्तं कुलीनं मध्यस्थमनुद्वेगकरं स्थिरम्।**
**परत्र भीरुं धर्मिष्ठमुद्युक्तं क्रोधवर्जितम्॥ १३॥**

**अन्वयः**—यदा नृपतिः स्वयं न कुर्यात् तदा तत्र कार्यविनिर्णये वेदपारगं कुलीनं मध्यस्थम् अनुद्वेगकरं स्थिरं परत्र भीरुं धर्मिष्ठम् उद्युक्तं क्रोधवर्जितं ब्राह्मणं नियुञ्जीत॥ १२-१३॥

**व्याख्या**—यदा = यस्यां स्थितौ, नृपतिः = राजा, स्वयम् = आत्मनैव, न = नहि, कुर्यात् = अभियोगं पश्येत्, तदा = तस्यां स्थितौ, तत्र = तस्मिन् व्यवहारे, कार्यविनिर्णये = व्यवहारनिष्पादने, वेदपारगम् = वेदाधीतिनम्, दान्तम् = विनीतम्, कुलीनम् = अभिजातम्, मध्यस्थम् = प्रमाणपुरुषम्, अनुद्वेगकरम् = शान्तप्रकृतिम्, स्थिरम् = अविचलम्, परत्र भीरुम् = परलोकत्रस्नुम्, धर्मिष्ठम् = धर्मनिरतम्, उद्युक्तम् = उद्यमिनम्, क्रोधवर्जितम् = अक्रोधिनम्, ब्राह्मणम् = भूसुरम्, नियुञ्जीत = नियुक्तं कुर्यात्॥ १२-१३॥

**हिन्दी**—राजा यदि किसी कारण से मुकदमे का फैसला खुद न कर सके तो इसके लिए वेद का अच्छा ज्ञान रखने वाला विनम्र, खानदानी, तटस्थ, शान्तचित्त, स्थिर, परलोक से डरने वाला, धर्मात्मा, उद्योगी एवं क्रोधहीन ब्राह्मण को इस काम के लिए नियुक्त करे॥ १२-१३॥

**यदेति। दान्तमिति।** यदा नृपतिः स्वयं न कुर्यात् तदा तत्र कार्य्यविनिर्णये विषये वेदपारगं, दान्तं विनीतं, कुलीनं सत्कुलप्रसूतं मध्यस्थम् उदासीनम् अपक्षपातिनमित्यर्थः, अनुद्वेगकरं शान्तप्रकृतिं स्थिरम् अचञ्चलं परत्र भीरुं परलोकभयशीलं धर्मिष्ठं धार्मिकम् उद्युक्तं यत्नवन्तं तथा क्रोधवर्जितं ब्राह्मणं नियुञ्जीत॥ १२-१३॥

**यदा विप्रो न विद्वान् स्यात् क्षत्रियं तत्र योजयेत्।**
**वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत्॥ १४॥**

**अन्वयः**—यदा विद्वान् विप्रः न स्यात् तदा तत्र धर्मशास्त्रज्ञं क्षत्रियं वा वैश्यं योजयेत्। शूद्रन्तु यत्नेन वर्जयेत्॥ १४॥

**व्याख्या**—यदा = यस्यां स्थितौ, विद्वान् = ज्ञानवान्, विप्रः = ब्राह्मणः, न = नहि, स्यात् = उपलभेत्, तत्र = तस्मिन् व्यवहारे, धर्मशास्त्रज्ञम् = धर्मशास्त्रवेत्तारम्, क्षत्रियम् = राजन्यम्, वा = अथवा, वैश्यम् = वणिजम्, योजयेत् = नियुक्तं कुर्यात्। शूद्रन्तु = वृषलन्तु, यत्नेन = सायासेन, वर्जयेत् = परित्यजेत्॥ १४॥

**हिन्दी**—यदि उक्त निर्णायक पद के लिए तथाकथित विद्वान् ब्राह्मण न मिले तो उसकी

जगह क्षत्रिय अथवा वैश्य को नियुक्त करना चाहिए। शूद्र को इस काम के लिए प्रयासपूर्वक छोड़ देना चाहिए॥१४॥

**यदेति**। यदा विद्वान् विप्रः ब्राह्मणः न स्यात् तदा तत्र कार्य्यनिर्णये धर्मशास्त्रज्ञं क्षत्रियं वा वैश्यं योजयेत् नियुञ्ज्यात्, शूद्रन्तु यत्नेन वर्जयेत् त्यजेत्, शूद्रो विचारदर्शने न नियोक्तव्य इति भावः॥१४॥

**यद्वर्णजो भवेद्राजा योज्यस्तद्वर्णजः सदा।**
**तद्वर्ण एव गुणिनः प्रायशः सम्भवन्ति हि॥१५॥**

**अन्वयः**—राजा यद्वर्णजः भवेत् तद्वर्णजः सदा योज्यः। प्रायशः तद्वर्णजः एव गुणिनः सम्भवन्ति हि॥१५॥

**व्याख्या**—राजा = नृपः, यद्वर्णजः = यस्मिन् वर्णे समुत्पन्नो भवेत्, तद्वर्णजः = तस्मिन्वर्णे समुत्पन्नो जनः, सदा = सर्वदा, तत्र = तस्मिन् व्यवहारे, योज्यः = नियोक्तव्यः, हि = यतः, तस्मिन् वर्णे एव, प्रायशः = आधिक्येन, गुणिनः = गुणवन्तो जनाः, सम्भवन्ति = समुत्पन्नो भवन्ति॥१५॥

**हिन्दी**—जिस जाति का राजा हो, मुकदमे के फैसले हेतु उसी जाति का अपना प्रतिनिधि चुनना चाहिए। क्योंकि बहुधा ऐसा देखा जाता है कि जिस जाति का राजा होता है, उस जाति के लोग अधिक गुणवान् होते हैं॥१५॥

**यदिति**। राजा यद्वर्णजः यस्मिन् वर्णे ब्राह्मणादौ जातः भवेत्, तद्वर्णजः तस्मिन् वर्णे जातः ब्राह्मणादिः सदा तत्र योज्यः नियोक्तव्यः। हि यतः तस्मिन् वर्णे एव प्रायशः बाहुल्येन गुणिनः गुणवन्तः जनाः सम्भवन्ति जायन्ते॥१५॥

**व्यवहारविदः प्राज्ञा वृत्तशीलगुणान्विताः।**
**रिपौ मित्रे समा ये च धर्मज्ञाः सत्यवादिनः॥१६॥**
**निरालसा जितक्रोधकामलोभाः प्रियंवदाः।**
**राज्ञा नियोजितव्यास्ते सभ्याः सर्वासु जातिषु॥१७॥**

**अन्वयः**—सर्वासु जातिषु ये च व्यवहारविदः प्राज्ञाः वृत्तशीलगुणान्विताः रिपौ मित्रे च समाः धर्मज्ञाः सत्यवादिनः निरालसाः जितक्रोधकामलोभाः प्रियंवदाः, ते राज्ञा सभ्याः नियोक्तव्याः॥१६-१७॥

**व्याख्या**—सर्वासु = सकलासु, जातिषु = वर्णेषु मध्ये, ये = जनाः, व्यवहारविदः = विचारदर्शनाभिज्ञाः, प्राज्ञः = ज्ञानवन्तः, वृत्तशीलगुणान्विताः = चरित्रस्वभावप्रभावसम्पन्नाः, रिपौ = शत्रौ, मित्रे = सुहृदि, च = पुनः, समाः = समदर्शिनः, धर्मज्ञाः = धर्मज्ञानवन्तः, सत्यवादिनः = सत्यभाषिणः, निरालसाः = आलस्यरहिताः, जितक्रोधकामलोभाः = क्रोधकामलोभविजेतारः, प्रियंवदाः = प्रियवक्तारः, ते = एवंविधाः जनाः, राज्ञा = नृपेण, सभ्याः = सभासदः, नियोक्तव्याः = नियोजितव्याः॥१६-१७॥

**हिन्दी**—विधिवेत्ता, ज्ञानी, चरित्रवान्, शील और गुण से युक्त, रागद्वेषरहित, धर्मात्मा, आलस्यहीन, काम, क्रोध और लोभ को जीतने वाले तथा प्रियवादी व्यक्ति—चाहे वे जिस-किसी भी जाति के हों, उन्हें जूरी पंच के पद पर नियुक्त करना चाहिए॥१६-१७॥

**व्यवहारविद इति। निरालसा इति।** सर्वासु जातिषु मध्ये ये जनाः व्यवहारविदः विचारदर्शनाभिज्ञाः प्राज्ञाः बुद्धिमन्तः वृत्तशीलगुणान्विताः सुचरित्राः सुस्वभावाश्च इत्यर्थः, रिपौ शत्रौ मित्रे सुहृदि च समाः समदर्शिनः धर्मज्ञाः, सत्यवादिनः निरालसाः आलस्यवर्जिताः जितक्रोधकामलोभाः कामक्रोधलोभविरहिता इत्यर्थः, तथा प्रियंवदाः प्रियभाषिणः, ते राज्ञाः नियोक्तव्याः ॥ १६-१७ ॥

**कीनाशाः कारुकाः शिल्पिकुसीदश्रेणिनर्त्तकाः ।**
**लिङ्गिनस्तस्कराः कुर्य्युः स्वेन धर्मेण निर्णयम् ॥ १८ ॥**

**अन्वयः**—कीनाशाः कारुकाः शिल्पिकुसीदश्रेणिनर्त्तकाः लिङ्गिनः तस्कराः स्वेन धर्मेण निर्णयं कुरु ॥ १८ ॥

**व्याख्या**—कीनाशाः = कृषकाः, कारुकाः = वर्द्धकिनः, कर्मकाराः, शिल्पिनः = चित्रकारादयः, कुसीदिनः = वार्द्धुषिकाः, श्रेणयः = समव्यवसायिसङ्घाः, नर्त्तकाः = लयालम्बाः, लिङ्गिनः = धर्मध्वजिनः, तथा तस्कराः = दस्यवः, स्वेन = आत्मना, धर्मेण = पुण्यकर्मणा, निर्णयम् = स्वजात्युक्तकर्मनिरूपणम्, कुर्यात् = निष्पादयेत् ॥ १८ ॥

**हिन्दी**—किसान, बढई, कारीगर, सूदखोर, समान व्यवसायीसंघ, नचनियाँ, धर्मध्वजी तथा दस्युवर्ग के लोग सभी अपने-अपने धर्म के अनुसार अपने जातिगत विवादों का निर्णय अपनी पंचायत में ही करें ॥ १८ ॥

**कीनाशा इति।** कीनाशाः कृषीबलाः कारुकाः कर्मकारविशेषाः शिल्पिनः कुसीदिनः वृद्धिजीविनः श्रेणयः निकृष्टजातीनां सङ्घाः नर्त्तकाः नटजातयः लिङ्गिनः भण्डयोगिप्रभृतयः तथा तस्कराः जातिविशेषाश्च स्वेन निजेन धर्मेण निर्णयं स्वस्वजात्युक्तकार्य्यनिरूपणं कुर्य्युः ॥ १८ ॥

**अशक्यो निर्णयो ह्यन्यैस्तज्ज्ञैरेव तु कारयेत् ॥ १९ ॥**

**अन्वयः**—अन्यैः निर्णयः अशक्यः, तस्मात् तज्ज्ञैः एव कारयेत् ॥ १९ ॥

**व्याख्या**—अन्यैः = तज्जातिभिन्नैः जनैः, निर्णयः = आधर्षणम्, अशक्यः = अनिष्पाद्यः, एव = इति निश्चयेन, तस्मात् = तेन हेतुना, तज्ज्ञैरेव = तदभिज्ञैरेव, कारयेत् = निर्वाहयेत्, नृपः इति ॥ १९ ॥

**हिन्दी**—क्योंकि उनकी जाति के धर्म को न जानने वाले लोग से उनके विवाद का निर्णय होना असंभव है। अतः जिस जाति के लोगों का विवाद हो, उसका निर्णय उसी जाति के लोगों से कराना चाहिए ॥ १९ ॥

**अशक्य इति।** अन्यैः तत्तज्जात्युक्तधर्मानधिज्ञैः निर्णयः अशक्यः कर्त्तुमिति शेषः, तस्मात् तज्ज्ञैः तदभिज्ञैरेव कारयेत् कार्य्यनिर्णयं राजेति शेषः ॥ १९ ॥

**आश्रमेषु द्विजातीनां कार्य्ये विवदतां मिथः ।**
**न विब्रूयान्नृपो धर्मे चिकीर्षुर्हितमात्मनः ॥ २० ॥**

**अन्वयः**—आत्मनः हितं चिकीर्षुः नृपः आश्रमेषु मिथः कार्ये विवदतां द्विजातीनां धर्मे न विब्रूयात् ॥ २० ॥

**व्याख्या**—आत्मनः = स्वस्य, हितम् = कल्याणम्, चिकीर्षुः = कर्त्तुमिच्छुः, नृपः = राजा,

आश्रमेषु = ब्रह्मचर्यादिषु तिष्ठताम्, मिथः = अन्योन्यम्, कार्ये = कर्मणि, विवदताम् = विवादं कुर्वताम्, धर्मे = विषये, न = नहि, विब्रूयात् = विरुद्धं वदेत् ॥ २० ॥

**हिन्दी**—अपना हित चाहने वाले राजा को ब्रह्मचर्यादि आश्रमों में रहकर परस्पर किसी काम को लेकर विवाद करने वाले द्विजातियों के धर्म के विरुद्ध कुछ नहीं कहना चाहिए ॥२० ॥

**आश्रमेष्विति**। आत्मनः हितं चिकीर्षुः नृपः आश्रमेषु ब्रह्मचर्य्यादिषु तिष्ठतामिति शेषः, मिथः परस्परं कार्य्ये विवदतां द्विजातीनां धर्मे विषये न विब्रूयात् विरुद्धं न ब्रूयादित्यर्थः ॥ २० ॥

**तपस्विनां तु कार्य्याणि त्रैविद्यैरेव कारयेत्।**
**मायायोगविदाञ्चैव न स्वयं कोपकारणात् ॥ २१ ॥**

**अन्वयः**—तपस्विनां मायायोगविदां तु कार्याणि त्रैविद्यैरेव कारयेत्, कोपकारणात् स्वयं न ॥ २१ ॥

**व्याख्या**—तपस्विनाम् = तपोधनानाम्, मायायोगविदाम्—मायिनाम् = ऐन्द्रजालिकादीनाम्, योगविदाम् = योगिनाञ्च, कार्याणि = व्यवहाराणि, त्रैविद्यैरेव = त्रिवेद्यैरेव, कारयेत् = सम्पादयेत्, कोपकारणात् = कदाचिद्विपरीतनिर्णयात् कुपितो भवेदिति विचार्य नान्यैः कारयेत्, स्वयम् = आत्मनः, तेषां व्यवहारे किमपि निर्णयम्, न = नहि कुर्यात् ॥ २१ ॥

**हिन्दी**—तापसों, जादूगरों और योगिनियों के विवाद का निर्णय वेदज्ञ ब्राह्मणों द्वारा ही करवाना चाहिए। क्योंकि विपरीत निर्णय से वे कुपित न हो जायें, अतः उनके विवाद का निर्णय राजा को स्वयं नहीं देना चाहिए ॥ २१ ॥

**तपस्विनामिति**। तपस्विनां मायायोगविदां मायिनां योगिनाञ्चेत्यर्थः, कार्य्याणि त्रैविद्यैः त्रिवेदिभिः त्रयीविद्यापारीणैरित्यर्थः, एव न त्वन्यैरित्यर्थः, कारयेत्, कोपकारणात् यदि तेषां कोपो भवेदिति आलोच्येत्यर्थः, स्वयं न कुर्य्यादिति शेषः ॥ २१ ॥

**सम्यग्विज्ञानसम्पन्नो नोपदेशं प्रकल्पयेत्।**
**उत्कृष्टजातिशीलानां गुर्वाचार्य्यतपस्विनाम् ॥ २२ ॥**

**अन्वयः**—सम्यग्विज्ञानसम्पन्नः उत्कृष्टजातिशीलानां गुर्वाचार्यतपस्विनाम् उपदेशं न प्रकल्पयेत् ॥ २२ ॥

**व्याख्या**—सम्यग् = सुष्ठुतया, विज्ञानसम्पन्नः = विशिष्टज्ञानयुक्तो राजा, उत्कृष्टजातिशीलानाम् = प्रशस्तकुलशीलवताम्, गुरूणाम् = मन्त्रोपदेशकानाम्, आचार्याणाम् = अध्यापकानाम्, तपस्विनाम् = तापसानाम्, उपदेशम् = बोधनं वाऽनुशासनम्, न = नहि, प्रकल्पयेत् = विचारयेत् ॥२२ ॥

**हिन्दी**—स्वयं विशिष्ट ज्ञानसम्पन्न होने के बावजूद राजा को प्रशस्त कुलशील वाले गुरु, आचार्य एवं तापसों को उपदेश देने का विचार भी नहीं करना चाहिए ॥ २२ ॥

**सम्यगिति**। सम्यग् विज्ञानसम्पन्नः राजा उत्कृष्टजातिशीलानाम् अत्युत्कर्षवतामित्यर्थः, गुरूणाम् आचार्य्याणां तपस्विनाञ्च उपदेशं न प्रकल्पयेत् न दद्यादित्यर्थः ॥ २२ ॥

**आरण्यास्तु स्वकैः कुर्य्युः सार्थिकाः सार्थिकैः सह।**
**सैनिकाः सैनिकैरेव ग्रामेऽप्युभयवासिभिः ॥ २३ ॥**

**अभियुक्ताश्च ये यत्र यन्निबन्धनियोजनाः।**
**तत्रत्यगुणदोषाणां त एव हि विचारकाः॥ २४॥**

**अन्वयः**—आरण्याः स्वकैः सार्थिकाः सार्थिकैः सैनिकाः सैनिकैः सह कुर्युः, किञ्च ग्रामेऽपि उभयवासिभिः। यत्र ये अभियुक्ताः यन्निबन्धनियोजनाः, ते एव तत्रत्यगुणदोषाणां विचारकाः॥ २३-२४॥

**व्याख्या**—आरण्याः = वनवासिनः, स्वकैः = वनवासिभिरेव, सार्थिकाः = व्यापारिणः, व्यापारिभिरेव, सैनिकाः = सामरिकाः, सैनिकैः = सामरिकैरेव, सह व्यवहारनिर्णयम्, कुर्युः = विदध्युः, किञ्च ग्रामेऽपि, उभयवासिभिः = ग्रामारण्यनिवासिभिः। यत्र = यस्मिन् विषये, ये = पुरुष-विशेषाः, अभियुक्ताः = प्रत्यर्थिनः, यन्निबन्धनियोजनाः—यत् = यस्मिन्, निबन्धे = नियमने प्रबन्धे वा, नियोजनाः = नियुक्ताः, ते = जनाः, एव, तत्रत्यानाम् = तेषां विषयाणाम्, गुणदोषाणाम् = गुणावगुणानाम्, विचारकाः = चिन्तकाः भवन्ति॥ २३-२४॥

**हिन्दी**—जंगली लोग जंगलियों के द्वारा, व्यापारीसंघ अपने समूहों के द्वारा, सैनिक सैनिकों द्वारा और ग्रामीण जन ग्रामारण्य दोनों के निवासियों द्वारा ही अपने विवाद का निर्णय करायें। राजा के द्वारा जिस कार्य के लिए जो जहाँ नियुक्त किये गये हैं, वस्तुतः वे ही वहाँ के गुण और अवगुणों के वास्तविक विचारक होते हैं॥ २३-२४॥

**आरण्या इति। अभियुक्ता इति।** आरण्याः वन्याः किरातादयः स्वकैः आरण्यैः सार्थिकाः सम्भूयकारिणः सार्थिकैः, सैनिकाः सैनिकैश्च सह कार्य्यनिर्णयं कुर्य्युरित्यर्थः, किञ्च ग्रामेऽपि उभयवासिभिः उभयैः वासिभिः निवासिभिः यत्र विषये ये अभियुक्ताः तथा यन्निबन्धनियोजनाः यदर्थनियुक्ताः ते एव तत्रत्यानां गुणदोषाणां विचारकाः भवन्तीत्यर्थः।।२३-२४॥

**राजा तु धार्मिकान् सभ्यान् नियुञ्ज्यात् सुपरीक्षितान्।**
**व्यवहारधुरं वोढुं ये शक्ताः पुङ्गवा इव॥ २५॥**

**अन्वयः**—ये पुङ्गवाः इव व्यवहारधुरं वोढुं शक्ताः राजा तान् धार्मिकान् सुपरीक्षितान् सभ्यान् नियुञ्ज्यात्॥ २५॥

**व्याख्या**—ये = जनाः, पुङ्गवाः = वृषभाः मानवोत्तमाः वा, इव = यथा, व्यवहारधुरम् = कार्ययुगम्, वोढुम् = वहनकर्त्तुम्, शक्ताः = समर्थाः, तान् = एतादृशान्, पुरुषान्, धार्मिकान् = पुण्यात्मनः, सुपरीक्षितान् = सुष्ठुसमीक्षितान्, सभ्यान् = सांसदः, नियुञ्ज्यात् = नियुक्तं कुर्यात्॥ २५॥

**हिन्दी**—जो व्यक्ति सशक्त बैलों की तरह विवाद-निर्णय के भार को वहन करने में समर्थ हों, पूर्णरूप से समीक्षित हों, धार्मिक हों; वैसे लोगों को राजा जूरीपंच के पद पर नियुक्त करे॥ २५॥

**राजेति।** ये जनाः पुङ्गवाः वृषभा इव व्यवहारधुरं वोढुं शक्ताः समर्थाः भवन्ति, राजा तान् धार्मिकान् सुपरीक्षितान् सभ्यान् नियुञ्ज्यात्॥ २५॥

**लोकवेदज्ञधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा।**
**यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा॥ २६॥**

**अन्वयः**—यत्र सप्त पञ्च त्रयोऽपि वा लोकवेदधर्मज्ञाः विप्राः उपविष्टाः स्युः, सा सभा यज्ञसदृशी ॥ २६ ॥

**व्याख्या**—यत्र = यस्यां सभायाम्, सप्त = सप्तसंख्यकाः, पञ्च = पञ्चसंख्यकाः, वा = अथवा, त्रयोऽपि = त्रिसंख्यकोऽपि, लोकवेदधर्मज्ञाः = लोकाचारविशेषज्ञाः, वेदवेत्तारः, धर्मस्य तत्त्वविदः, विप्राः = ब्राह्मणाः, उपविष्टाः = स्थिताः, सा सभा = परिषद्, यज्ञसदृशी = यज्ञस्थलमिवातिशुचिः स्यात् ॥ २६ ॥

**हिन्दी**—जिस सभा में सात, पाँच या कम-से-कम तीन लौकिक एवं वैदिक कृत्यों के जानकार धर्मज्ञ ब्राह्मण बैठे हों, वह सभा यज्ञभूमि की तरह अतिपवित्र होती है ॥ २६ ॥

**लोकेति**। यत्र सभायां सप्त पञ्च अपि वा अथवा त्रयः लोकवेदज्ञधर्मज्ञाः लोकाचारज्ञाः वेदज्ञाः धर्मज्ञाश्च विप्राः उपविष्टाः सा सभा यज्ञसदृशी यज्ञस्थानसमा अतिपवित्रा इत्यर्थः ॥ २६ ॥

**श्रोतारो वणिजस्तत्र कर्त्तव्याः सुविचक्षणाः ॥ २७ ॥**

**अन्वयः**—तत्र सुविचक्षणाः वणिजः श्रोतारः कर्त्तव्याः ॥ २७ ॥

**व्याख्या**—तत्र = तस्यां सभायाम्, सुविचक्षणाः = सुबुद्धिमन्तः, वणिजः = व्यापारिणः, श्रोतारः = श्रावकाः, कर्त्तव्याः = नियोक्तव्याः ॥ २७ ॥

**हिन्दी**—और उस सभा में श्रोता के रूप में प्रखर बुद्धिमान् वैश्यों को भी नियुक्त करना चाहिए ॥ २७ ॥

**श्रोतार इति**। तत्र विचारदर्शनस्थाने सुविचक्षणाः वणिजः श्रोतारः कर्त्तव्याः नियोक्तव्या इत्यर्थः, ते हि यथा स्वर्णादिपरीक्षकाः तथा कार्य्यनिर्णयस्यापि परीक्षका भवन्तीति भावः ॥ २७ ॥

**अनियुक्तो नियुक्तो वा धर्मज्ञो वक्तुमर्हति।**
**दैवीं वाचं स वदति यः शास्त्रमुपजीवति ॥ २८ ॥**

**अन्वयः**—धर्मज्ञः अनियुक्तः नियुक्तः वा वक्तुम् अर्हति, यः शास्त्रमुपजीवति सः दैवीं वाचं वदति ॥ २८ ॥

**व्याख्या**—धर्मज्ञः = धर्मवेत्ता, अनियुक्तः = अनियोजितः, वा = अथवा, नियुक्तः = नियोजितः जनः, वक्तुम् = कथितुम्, अर्हति = समर्थो भवति, यतः, यः = जनः, शास्त्रम् = धर्मग्रन्थम्, उपजीवति = अनुसृत्य चलति, सः = असौ, दैवीम् = अलौकिकीम्, वाचम् = वचनम्, वदति = कथयति ॥ २८ ॥

**हिन्दी**—धर्मशास्त्र का जानकार व्यक्ति चाहे नियुक्त हो या अनियुक्त, सभा में बोलने का उसे हक है; क्योंकि ऐसे लोग शास्त्रानुसार आचरण भी करते हैं तथा इनकी वाणी अलौकिक होती है ॥ २८ ॥

**अनियुक्त इति**। धर्मज्ञः धर्मशास्त्रज्ञः जनः अनियुक्तः नियुक्तः वा वक्तुमर्हति, यतः यः शास्त्रम् उपजीवति शास्त्रमनुसृत्य चलतीत्यर्थः, सः दैवीं वाचं देववाणीं वदति, तद्वाक्ये असत्यतायाः असम्भवादिति भावः ॥ २८ ॥

**सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम्।**
**अब्रुवन् विब्रुवन् वापि नरो भवति किल्विषी ॥ २९ ॥**

**अन्वयः**—सभा न प्रवेष्टव्या वा समञ्जसं वा वक्तव्यम्। अब्रुवन् वा विब्रुवन् नरः किल्विषी भवति ॥ २९ ॥

**व्याख्या**—सभा = विचारसंसदि, न = नहि, प्रवेष्टव्या = प्रवेशं कर्तव्या, वा = अथवा, समञ्जसम् = न्याय्यम् उचितं वा, वक्तव्यम् = कथितम्, यदि सभायां, प्रवेशस्याऽवसरो मिलति। अब्रुवन् = अवदन्, वा = अथवा, विब्रुवन् = विरुद्धं ब्रुवन्, नरः, किल्विषी = पापी, भवति = अस्ति ॥ २९ ॥

**हिन्दी**—पहले तो विचार कर सभा में जाना ही नहीं चाहिए और यदि चला जाय तो जो उचित हो वह अवश्य कहे। क्योंकि सभा में जाकर भी जो न्यायसंगत नहीं बोलता, वह पापी है ॥ २९ ॥

**सभेति**। सभा विचारसभा न प्रवेष्टव्या वा, समञ्जसं सत्यं वा सत्यमेव वक्तव्यं यदि प्रविशति सभायामिति शेषः। अब्रुवन् ज्ञात्वेति शेषः, वा विब्रुवन् विरुद्धं ब्रुवनित्यर्थः, नरः किल्विषी पापी भवति ॥ २९ ॥

**राज्ञा ये विदिताः सम्यक् कुलश्रेणिगणादयः।**
**साहसस्तेयवर्ज्यानि कुर्य्युः कार्य्याणि ते नृणाम् ॥ ३० ॥**

**अन्वयः**—ये कुलश्रेणिगणादयः राज्ञा सम्यक् विदिताः, ते नृणां साहसस्तेयवर्ज्यानि कार्याणि कुर्युः ॥ ३० ॥

**व्याख्या**—ये = जनाः, कुलानि = वंशाः, श्रेणयः = पङ्क्तयः, गणादयश्च = वर्गादयश्च, राज्ञा = नृपेण, सम्यक् = सामस्त्येन, विदिताः = न्यायशीलत्वेन विज्ञाताः, ते = सर्वे, नृणाम् = मनुष्याणाम्, साहसस्तेयवर्ज्यानि = धाष्टर्यचौर्यव्यतिरिक्तानि, कार्याणि = अभियोगनिर्णयादिकञ्च, कुर्युः = निष्पादयेयुरिति ॥ ३० ॥

**हिन्दी**—राजा जिन्हें भलीभाँति न्यायपरायण समझता हो, ऐसे कुल, श्रेणि और गण के लोगों को चोरी-डकैती के मुकदमों को छोड़कर अन्य मुकदमों का फैसला करने को दे ॥ ३० ॥

**राज्ञेति**। ये कुलानि श्रेणयः गणादयश्च राज्ञा सम्यक् विदिताः, न्यायपरायणत्वेन विज्ञाताः, ते नृणां मानवानां तज्जातीयानामित्यर्थः, साहसस्तेयवर्ज्यानि दस्युताचौर्य्यव्यतिरिक्तानि कार्य्याणि कुर्य्युः ॥ ३० ॥

**विचार्य्यं श्रेणिभिः कार्य्यं कुलैर्यन्न विचारितम्।**
**गणैश्च श्रेण्यविज्ञातं गणाज्ञातं नियुक्तकैः ॥ ३१ ॥**

**अन्वयः**—कुलैः यत् न विचारितं तत् श्रेणिभिः विचार्यम्। श्रेण्यविज्ञातं गणैश्च, गणाज्ञातं नियुक्तकैः विचार्यमिति ॥३२ ॥

**व्याख्या**—कुलैः = व्यापारिसङ्घैः, यत् = व्यवहारम्, न = नहि, विचारितम् = सिद्धान्तितम्, तत् = कार्याणि, श्रेणिभिः = तत्परवर्त्तिभिः, जातिभिः, विचारकैः, विचार्यम् = आलोचनीयम्। यदि श्रेणिभिः, अविज्ञातम् = अविदितम्, तर्हि, गणैश्च = तदुत्तरवर्त्तिसङ्घैश्च, विचार्यम् = अनुचिन्तनीयम्, गणाज्ञातम्—गणैः = सङ्घैः, अज्ञातम् = अनिर्णीतम्, तु, नियुक्तैः = नृपनियोजितैः प्राड्विवाकादिभिः, विचार्यम् = निर्णेतव्यम् ॥ ३१ ॥

**हिन्दी**—यदि उपयुक्त व्यापारी-वर्गों द्वारा मुकदमे का फैसला न हो सके तो उसका निर्णय श्रेणियों (पंचसमूहों) द्वारा करवाना चाहिए। पंचों द्वारा भी उचित निर्णय यदि न हो सके तो गणों अर्थात् जूरीपंचों द्वारा फैसला करवाना चाहिए। यदि यह वर्ग भी असफल रहे तो राजा द्वारा नियुक्त जजों द्वारा फैसला करवाना चाहिए॥ ३१ ॥

**विचार्य्येति**। कुलैः प्रथमविचारनियुक्तैः जातिविशेषैः यत् कार्य्यं न विचारितं सिद्धान्तितं, तत् श्रेणिभिः तत्परवर्त्तिभिः विचारकैः जातिविशेषैः विचार्य्यम्। श्रेणिभिः अविज्ञातम् अविदितं कार्य्यं गणैश्च तदुत्तरविचारदर्शिभिः जातिविशेषैः विचार्य्यं, गणाज्ञातं गणैरज्ञातन्तु नियुक्तकैः राजनियुक्तकैः प्राड्विवाकादिभिः विचार्य्यमित्यर्थः॥ ३१ ॥

**कुलादिभ्योऽधिकाः सभ्यास्तेभ्योऽध्यक्षोऽधिकः कृतः।**
**सर्वेषामधिको राजा धर्माधर्मनियोजकः॥ ३२॥**
**उत्तमाधममध्यानां विवादानां विचारणात्।**
**उपर्य्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः॥ ३३॥**

**अन्वयः**—सभ्याः कुलादिभ्यः अधिकाः, अध्यक्षः तेभ्यः अधिकः कृतः, धर्माधर्मनियोजकः राजा तु उत्तमाधममध्यानां विवादानां विचारणात् सर्वेषाम् अधिकः। यतः ईश्वरबुद्धयः बुद्धीनाम् उपरि उपरि चरन्ति॥ ३२-३३ ॥

**व्याख्या**—सभ्याः = सांसदः, कुलादिभ्यः = जातिभ्यः, अधिकाः = प्रकृष्टाः, अध्यक्षः = विचारार्थनियुक्तप्रधानपुरुषः, तेभ्यः = सांसद्भ्यः, अधिकः = श्रेष्ठः, स्मृतः = विहितः, धर्माधर्म-नियोजकः—धर्मश्च = नयश्च, अधर्मश्च = अनयश्च, धर्माधर्मौ, तयोः नियोजकः = नियन्ता, राजा तु, उत्तमाधममध्यानाम्—उत्तमानाम् = प्रशस्तानाम्, अधमानाम् = निकृष्टकोटीनाम्, मध्या-नाम् = सामान्यानाम्, विवादानाम् = अभियोगानाम्, विचारणात् = आलोचनात्, सर्वेषाम् = सकलानाम्, अधिकः = उत्कृष्टतमः। यतः ईश्वरबुद्धयः—ईश्वरस्य = नृपस्य, बुद्धयः = धियः, बुद्धीनाम् = सामान्यजनमतीनाम्, उपरि उपरि = उपरिष्टात्, चरन्ति = विचरन्ति॥ ३२-३३ ॥

**हिन्दी**—मुकदमों के फैसले में बड़ों की अपेक्षा जूरियों का निर्णय अधिक मान्य होता है, उनसे अधिक जज का निर्णय मान्य होता है और इन सबों से अधिक नीति-अनीति के निर्णय में राजा का फैसला अधिक मान्य होता है। क्योंकि राजा उत्तम, सामान्य एवं निकृष्ट कोटि के सभी मुकदमों का निर्णायक प्रधान रूप से होता है। उसकी बुद्धि साधारण निर्णायकों की बुद्धि की अपेक्षा अधिक ऊँची होती है॥ ३२-३३ ॥

**कुलादिभ्य इति। उत्तमेति**। सभ्याः विचारनियुक्ताः पुरुषाः कुलादिभ्यः अधिकाः श्रेष्ठाः, अध्यक्षः प्रधानविचारपतिः तेभ्यः सभ्येभ्यः अधिकः स्मृतः। धर्माधर्मनियोजकः धर्माधर्मनियन्ता राजा तु उत्तमाधममध्यानाम् उत्तमानाम् अधमानां मध्यमानाञ्च विवादानां विचारणात् सर्वेषाम् अधिकः श्रेष्ठतमः, यतः ईश्वरबुद्धयः प्रभूणां मतयः बुद्धीनां सामान्यजनधियाम् उपरि उपरि चरन्ति॥३२-३३ ॥

**एकं शास्त्रमधीयानो न विन्द्यात् कार्य्यनिर्णयम्।**
**तस्माद् बह्वागमः कार्य्यो विवादेषूत्तमो नृपैः॥ ३४॥**

**अन्वयः**—एकं शास्त्रम् अधीयानः कार्यनिर्णयं न विन्द्यात्। तस्मात् नृपैः विवादेषु बह्वागमः कार्यः॥ ३४॥

**व्याख्या**—एकम् = मात्रैकम्, शास्त्रम् = धर्मग्रन्थः, अधीयानः = अध्ययनं कुर्वतो जनः, कार्यनिर्णयम् = अभियोगनिश्चयः, न = नहि, विन्द्यात् = जानीयात्। तस्मात् = तेन हेतुना, नृपैः = राजभिः, विवादेषु = अभियोगेषु, बह्वागमः = अनेकशास्त्रदर्शनम्, कार्यः = स्थाप्य इति॥३४॥

**हिन्दी**—केवल एक शास्त्र का जानकार व्यक्ति किसी विवाद का सही निर्णय नहीं दे सकता है। अतः अनेक शास्त्रों के ज्ञाता किसी सत्पुरुष को ही राजा अभियोगनिर्णायक के पद पर नियुक्त करे॥ ३४॥

**एकमिति**। एकम् एकमात्रं शास्त्रम् अधीयानः पठन् जनः कार्य्यनिर्णयं न विन्द्यात् न जानीयात्, तस्मात् नृपैः विवादेषु विषयेषु बह्वागमः बहुशास्त्रदर्शनमित्यर्थः कार्य्यः॥ ३४॥

**स ब्रूते यं धर्मः स्यादेको वाध्यात्मचिन्तकः॥ ३५॥**

**अन्वयः**—आत्मतत्त्वचिन्तकः एकं यं ब्रूते स वा धर्मः स्यात्॥ ३५॥

**व्याख्या**—आत्मतत्त्वचिन्तकः = आत्मज्ञानविचारकः, एकम् = एकमात्रमेव, यम् = धर्मम्, ब्रूते = कथ्यते, स वा = तदेव, धर्मः = अभ्युदयनिःश्रेयससाधको गुणकर्मसमूहः, स्यात् = भवेत्॥ ३५॥

**हिन्दी**—और आत्मतत्त्व का जानकार व्यक्ति अकेले ही जो कुछ कहता है, वही धर्म माना जाता है। अर्थात् इसका निर्णय सर्वमान्य होता है॥ ३५॥

**स इति**। यस्तु अध्यात्मचिन्तकः आत्मतत्त्वज्ञानवान्, स एकः एकाकी यं धर्म ब्रूते स वा स एव धर्मः स्यात्॥ ३५॥

**एकद्वित्रिचतुर्वारं व्यवहारानुचिन्तनम्।**
**कार्य्यं पृथक् पृथक् सभ्यै राज्ञा श्रेष्ठोत्तरैः सह॥ ३६॥**

**अन्वयः**—राज्ञा श्रेष्ठोत्तरैः सभ्यैः सह पृथक् पृथक् एकद्वित्रिचतुर्वारं व्यवहारानुचिन्तनं कार्यम्॥ ३॥

**व्याख्या**—राज्ञा = नृपेण, श्रेष्ठोत्तरैः—श्रेष्ठेषु = उत्तमेषु, उत्तरैः = प्रधानपुरुषैः, सभ्यैः = सांसद्भिः, सह = साकम्, पृथक् पृथक् = भिन्नं भिन्नम्, एकद्वित्रिचतुर्वारम् = एकवारम्, द्विवारम्, त्रिवारम्, चतुर्वारम्, व्यवहारानुचिन्तनम्—व्यवहारस्य = अभियोगस्य, अनुचिन्तनम् = विवेचनम्, कार्यम् = विधेयम्॥ ३६॥

**हिन्दी**—राजा उत्कृष्ट सांसदों के साथ मिलकर अलग-अलग जैसा मुकदमा हो वैसा ही एक, दो, तीन या चार बार विचार कर फैसला दे॥ ३६॥

**एकेति**। राज्ञा श्रेष्ठोत्तरैः श्रेष्ठेषु प्रधानैः सभ्यैः सह पृथक् पृथक् एकद्वित्रिचतुर्वारम् एकवारं द्विवारं त्रिवारं चतुर्वारं वा कार्य्यगौरवलाघवापेक्षयेति भावः, व्यवहारस्य अनुचिन्तनं तत्त्वनिर्णय इत्यर्थः कार्य्यम्॥ ३६॥

**अर्थिप्रत्यर्थिनौ सभ्यान् लेखकप्रेक्षकांश्च यः।**
**धर्मवाक्यै रञ्जयति स सभास्तारतामियात्॥ ३७॥**

**अन्वयः**—यः अर्थिप्रत्यर्थिनौ सभ्यान् लेखकान् प्रेक्षकान् धर्मवाक्यैः रञ्जयति, स सभाः तारताम् इयात् ॥ ३७ ॥

**व्याख्या**—यः = विवादविचारकः सांसद्वा, अर्थिप्रत्यर्थिनौ = वादि-प्रतिवादिनौ, सभ्यान् = सांसदः, लेखकान् = पञ्जीकारान्, प्रेक्षकान् = दर्शकान्, च = पुनः, धर्मवाक्यैः = स्वपुण्यवचनैः, रञ्जयति = परितोषयति, सः = निर्णायकः, सभाः = संसदः, तारताम् = तारयति, अलुक् उपपदसमासोऽत्र, तस्य भावस्ताम्, इयात् = आप्नुयादिति ॥ ३७ ॥

**हिन्दी**—जो निर्णायक वादी, प्रतिवादी, सांसदों, लेखकों तथा दर्शकों को अपने धार्मिक वचनों से संतुष्ट करता है, वह सभा में सर्वश्रेष्ठता प्राप्त करता है ॥ ३७ ॥

**अर्थीति**। यः विचारपतिः अन्यो वा सभ्यः अर्थिप्रत्यर्थिनौ वादिप्रतिवादिनौ सभ्यान् लेखकान् प्रेक्षकान् दर्शकांश्च धर्मवाक्यैः रञ्जयति प्रीणयति सः सभास्तारतां सभाः तारयति पापात् मोचयतीति सभास्तारः अलुक् उपपदसमासः। तस्य भावः ताम् इयात् प्राप्नुयात् ॥ ३७ ॥

**नृपोऽधिकृतसभ्याश्च स्मृतिर्गणकलेखकौ।**
**हेमाग्न्यम्बुस्वपुरुषाः साधनाङ्गानि वै दश ॥ ३८ ॥**

**अन्वयः**—नृपः अधिकृतसभ्याः स्मृतिः गणकलेखकौ हेमाग्न्यम्बुस्वपुरुषाः एतानि दश साधनस्य अङ्गानि ॥ ३८ ॥

**व्याख्या**—नृपः = राजा, अधिकृतसभ्याः = अधिकारिणः सांसदः, स्मृतिः = आर्यधर्मशास्त्राणि अनुचिन्तनं वा, गणकः = गणितज्ञः, लेखकः = लिपिकारः, हेम = काञ्चनम्, अग्निः = वह्निः, अम्बुम् = सलिलम्, स्वम् = धनम्, पुरुषः = सेवकः, एतानि = पूर्वोक्तानि, दश = दशसंख्यकानि, साधनस्य = व्यवहारनिर्णयस्य, अङ्गानि = अवयवानि सन्ति ॥ ३८ ॥

**हिन्दी**—राजा, अधिकृत सांसद्, मन्वादि स्मृति, गणितज्ञ, लेखक, सुवर्ण, आग, पानी, धन और कर्मचारी—ये दस मुकदमे के फैसले में साधन के अङ्ग हैं ॥ ३८ ॥

**नृप इति**। नृपः, अधिकृतसभ्याः, स्मृतिः धर्मशास्त्रं, गणकः, लेखकः, हेम काञ्चनम्, अग्निः, अम्बु जलं स्वं धनं, पुरुषः भृत्यरूपः एतानि दश साधनस्य कार्य्यनिर्वाहस्य अङ्गानि साधकानीत्यर्थः ॥ ३८ ॥

**एतद्दशाङ्गकरणं यस्यामध्यास्य पार्थिवः।**
**न्यायान् पश्येत् कृतमतिः सा सभाध्वरसन्निभा ॥ ३९ ॥**

**अन्वयः**—कृतमतिः पार्थिवः यस्याम् एतत् दशाङ्गकरणम् अध्यास्य न्यायान् पश्येत् सा सभा अध्वरसन्निभा भवति ॥ ३९ ॥

**व्याख्या**—कृतमतिः = परिमार्जितबुद्धिः, पार्थिवः = राजा, यस्याम् = विचारगोष्ठ्याम्, एतत् = पूर्ववर्णितम्, दशाङ्गकरणम् = अङ्गदशकरूपं साधनम्, अध्यास्य = समाश्रित्य, न्यायात् = नीतिपूर्वकात्, पश्येत् = विचारयेत्, सा सभा = गोष्ठी, अध्वरसन्निभा = यज्ञतुल्या भवतीति भावः ॥ ३९ ॥

**हिन्दी**—इस तरह परिमार्जित बुद्धिवाला राजा जिस सभा में ऊपर बतलाये गये ये दस साधनों का आश्रय लेकर न्यायपूर्वक मुकदमें को देखता है, वह सभा निश्चय ही यज्ञसभा की तरह पवित्र होती है ॥ ३९ ॥

**एतदिति।** कृतमतिः मार्जितबुद्धिः पार्थिवश्च यस्यां सभायाम् एतत् पूर्वोक्तं दशाङ्गकरणम् अङ्गदशकरूपं साधनम् अध्यास्य आश्रित्य न्यायान् विचारान् पश्येत्, सा सभा अध्वरसन्निभा यज्ञसदृशी ॥ ३९ ॥

**दशानामपि चैतेषां कर्म प्रोक्तं पृथक् पृथक्।**
**वक्ताध्यक्षो नृपः शास्ता सभ्याः कार्य्यपरीक्षकाः ॥ ४० ॥**

**अन्वयः**—एतेषां दशानाञ्च पृथक् पृथक् कर्म प्रोक्तम्। अध्यक्षः वक्ता नृपः शास्ता, सभ्याः कार्यपरीक्षकाः भवन्तीति ॥ ४० ॥

**व्याख्या**—एतेषाम् = पूर्वोक्तानाम्, दशानाञ्च = दशसंख्यकानाम्, पृथक् पृथक् = भिन्नं भिन्नम्, कर्म = कृत्यम्, प्रोक्तम् = कथितम्। अध्यक्षः = विचारपतिः, वक्ता = अभियोगप्रकाशकः, नृपः = राजा, शास्ता = शासनकर्त्ता, सभ्याः = सांसदः, कार्यपरीक्षकाः—कार्यस्य = व्यवहारस्य, परीक्षकाः = निर्णायकाः, भवन्तीति ॥ ४० ॥

**हिन्दी**—पूर्वोक्त दस साधनों के काम भी अलग-अलग है। अध्यक्ष विवाद-निर्णय का प्रकाशक होता है। राजा शासन करने वाला है। सांसद निर्णय के औचित्य का परीक्षण करते हैं ॥ ४० ॥

**दशानामिति।** एतेषां दशानाञ्च पृथक् पृथक् कर्म प्रोक्तम्। अध्यक्षः अधिकृतः पुरुषः वक्ता कार्य्यनिर्णयस्य प्रकाशकः, नृपः शास्ता शासकः, तथा सभ्याः कार्य्यस्य परीक्षकाः ॥ ४० ॥

**स्मृतिर्विनिर्णयं ब्रूते जपं दानं दमं तथा ॥ ४१ ॥**

**अन्वयः**—स्मृतिः विनिर्णयं जपं दानं दमं ब्रूते ॥ ४१ ॥

**व्याख्या**—स्मृतिः = धर्मसंहिता, विनिर्णयम् = अभियोगनिश्चयम्, जपम् = मुहुर्मुहुर्मन्त्रोच्चारणम्, दानम् = उत्सर्जनम्, दमम् = आत्मसंयमः, ब्रूते = निर्दिशति ॥ ४१ ॥

**हिन्दी**—मन्वादि स्मृतियाँ अभियोग का निर्णय मंत्र का जप, दान तथा आत्मसंयम का उपदेश देती है ॥ ४१ ॥

**स्मृतिरिति।** स्मृतिः धर्मसंहिता विनिर्णयं कार्य्यनिश्चयं, जपं मन्त्रजपं, दानं तथा दमम् इन्द्रियादिनिग्रहं ब्रूते उपदिशति ॥ ४१ ॥

**शपथार्थे हिरण्याग्नी अम्बु तृषितक्षुब्धयोः।**
**गणको गणयेदर्थं लिखेन्याय्यं च लेखकः ॥ ४२ ॥**

**अन्वयः**—शपथार्थे हिरण्याग्नी अम्बु तृषितक्षुब्धयोः गणकः अर्थं गणयेत् च लेखकः न्याय्यं लिखेत् ॥ ४२ ॥

**व्याख्या**—शपथार्थे = प्रतिज्ञाप्रयोजनाय, हिरण्यम् अग्निश्च साधनम्, अम्बु = सलिलम्, तृषितक्षुब्धयोः—तृषार्त्तस्य = तृष्णाकुलस्य, क्षुब्धस्य च = भीतस्य च, साधनम्, गणकः = गणितज्ञश्च, अर्थम् = अभियोगनिर्णयस्य शुभाशुभम्, गणयेत् = गणनां कुर्यात्, लेखकश्च = लिपिकारश्च, न्याय्यम् = न्यायोपेतं विषयम्, लिखेत् = लेखनं कुर्यात् ॥ ४२ ॥

**हिन्दी**—कसम खाने के लिए सोना और आग, प्यासे और डरे लोगों के लिए पानी, अभियोग के शुभाशुभ परिणामों की गिनती के लिए गणक तथा न्यायसंगत विषयों को लिखने

के लिए लेखक साधन का अंग बनता है ॥४२ ॥

**शपथार्थे इति ।** शपथार्थे दिव्यकरणार्थं हिरण्यम् अग्निश्च साधनम् अम्बु जलं तृषितक्षुब्धयोः तृष्णार्त्तस्य क्षुब्धस्य वायुरोगग्रस्तस्य साधनम् । गणकः अर्थं कार्य्यस्य शुभाशुभं गणयेत्, लेखकश्च न्याय्यं प्रकृतं विषयं लिखेत् ॥४२ ॥

**शब्दाभिधानतत्त्वज्ञौ गणनाकुशलौ शुची ।**
**नानालिपिज्ञौ कर्त्तव्यौ राज्ञा गणकलेखकौ ॥ ४३ ॥**

**अन्वयः**—शब्दाभिधानतत्त्वज्ञौ गणनाकुशलौ शुची नानालिपिज्ञौ गणकलेखकौ राज्ञा कर्त्तव्यौ ॥४३ ॥

**व्याख्या**—शब्दाभिधानतत्त्वज्ञौ = शब्दार्थतथ्यज्ञानवन्तौ, गणनायाम् = संख्याने, कुशलौ = दक्षौ, शुची = पवित्रौ, नानालिपिज्ञौ = अनेकविधलेखनविशेषज्ञौ, गणकलेखकौ = गणितज्ञ-लिपिकारौ, राज्ञा = नृपेण, कर्त्तव्यौ = नियोक्तव्यौ ॥ ४३ ॥

**हिन्दी**—शब्द और अर्थ के तत्त्वज्ञ, गिनती करने में कुशल, पवित्र तथा बहुविध लिपियों के जानकार व्यक्ति को राजा गणक एवं लिपिकार पद पर नियुक्त करे ॥४३ ॥

**शब्देति ।** शब्दाभिधानतत्त्वज्ञौ शब्दतत्त्वज्ञौ अर्थतत्त्वज्ञौ चेत्यर्थः, गणनायां कुशलौ निपुणौ शुची निर्दोषौ नानालिपिज्ञौ विविधलेखनविज्ञौ गणकलेखकौ कर्त्तव्यौ नियोक्तव्यौ ॥४३ ॥

**धर्मशास्त्रानुसारेण ह्यर्थशास्त्रविवेचनम् ।**
**यत्राधिक्रियते स्थाने धर्माधिकरणं हि तत् ॥ ४४ ॥**

**अन्वयः**—यत्र स्थाने धर्मशास्त्रानुसारेण अर्थशास्त्रविवेचनम् अधिक्रियते तत् हि धर्माधिकरणम् ॥४४ ॥

**व्याख्या**—यत्र = यस्मिन्, स्थाने = देशे, धर्मशास्त्रानुसारेण = धर्मग्रन्थानुकूलेन, अर्थशास्त्राणाम् = धनप्राप्तिरक्षावृद्ध्याद्युपायदर्शकशास्त्राणाम्, विवेचनम् = गुणदोषविचारणम्, अधिक्रियते —अधिकम् = विशिष्टम्, यथा तथा क्रियते = निष्पाद्यते, तद् हि = तदेव, धर्माधिकरणम् = प्राड्विवाकस्थलं कथ्यते ॥४४ ॥

**हिन्दी**—जिस स्थान में धर्मशास्त्र के अनुसार अर्थशास्त्र की विवेचना विशिष्ट रूप से की जाय, उस स्थान को न्यायालय कहते हैं ॥४४ ॥

**धर्मेति ।** यत्र स्थाने धर्मशास्त्रानुसारेण अर्थशास्त्राणां विवेचनम् अधिक्रियते अधिकं यथा तथा क्रियते, तत् हि तदेव धर्माधिकरणम् ॥४४ ॥

**व्यवहारान् दिदृक्षुस्तु ब्राह्मणैः सह पार्थिवः ।**
**मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीतः प्रविशेत् सभाम् ॥ ४५ ॥**

**अन्वयः**—व्यवहारान् दिदृक्षुः पार्थिवः विनीतः सन् मन्त्रज्ञैः ब्राह्मणैः मन्त्रिभिश्च सह सभां प्रविशेत् ॥४५ ॥

**व्याख्या**—व्यवहारान् = अभियोगान्, दिदृक्षुः = द्रष्टुमिच्छुः, पार्थिवः = राजा, विनीतः सन् = विनम्रो भूत्वा, मन्त्रज्ञैः = मन्त्रणाकुशलैः, ब्राह्मणैः = भूदेवैः, मन्त्रिभिश्च = सचिवैश्च, सह = सार्द्धम्, सभाम् = विचारगोष्ठीम्, प्रविशेत् = प्रवेशं कुर्यात् ॥४५ ॥

**हिन्दी**—मुकदमे को देखने की इच्छा रखने वाला राजा विनम्र भाव से सलाह देने में कुशल ब्राह्मणों एवं मन्त्रियों के साथ न्यायालय में प्रवेश करे॥४५॥

**व्यवहारानिति**। व्यवहारान् दिदृक्षुः द्रष्टुमिच्छुः पार्थिवः विनीतः सन् मन्त्रज्ञैः मन्त्रणाकुशलैः ब्राह्मणैः मन्त्रिभिश्च सह सभां प्रविशेत्॥४५॥

**धर्मासनमधिष्ठाय कार्य्यदर्शनमारभेत्।**
**पूर्वोत्तरसमो भूत्वा राजा पृच्छेद् विवादिनौ॥४६॥**

**अन्वयः**—राजा धर्मासनम् अधिष्ठाय कार्यदर्शनम् आरभेत्। पूर्वोत्तरसमः भूत्वा राजा विवादिनौ पृच्छेत्॥४६॥

**व्याख्या**—राजा = पार्थिवः, धर्मासनम् = न्यायासनम्, अधिष्ठाय = स्थितो भूत्वा, कार्यदर्शनम् = व्यवहारावलोकनम्, आरभेत् = प्रारम्भं कुर्यात्। पूर्वोत्तरसमः = वादिप्रतिवादिषु समदर्शी भूत्वा, विवादिनौ = वादिप्रतिवादिनौ, पृच्छेत् = प्रश्नं कुर्यात्॥४६॥

**हिन्दी**—इस तरह राजा न्यायासन पर बैठकर मुकदमा देखना प्रारंभ करे। वादी एवं प्रतिवादी में समदृष्टि रखकर राजा उनसे सवाल करे॥४६॥

**धर्मासनमिति**। राजा धर्मासनं विचारासनम् अधिष्ठाय कार्य्यदर्शनम् आरभेत्। पूर्वोत्तरसमः अर्थिप्रत्यर्थिषु समदर्शी भूत्वा विवादिनौ अर्थिप्रत्यर्थिनौ पृच्छेत्॥४६॥

**प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः।**
**जातिजानपदान् धर्मान् श्रेणिधर्मांस्तथैव च।**
**समीक्ष्य कुलधर्मांश्च स्वधर्मं प्रतिपालयेत्॥४७॥**

**अन्वयः**—प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः जातिजानपदान् धर्मान् श्रेणिधर्मान् तथैव कुलधर्मान् समीक्ष्य स्वधर्मं प्रतिपालयेत्॥४७॥

**व्याख्या**—प्रत्यहम् = प्रतिदिनम्, देशदृष्टैः = लोकाचारेष्ववलोकितैः, शास्त्रदृष्टैश्च = धर्मग्रन्थेषु निरूपितैश्च, हेतुभिः = कारणैः, जातिजानपदान् = जातिगतान् दैशीयांश्च, धर्मान् = सदाचारान्, श्रेणिधर्मान् = वर्गगताचारान्, कुलधर्मान् = कौलिकसुकृतानि च, समीक्ष्य = समीक्षां कृत्वा, स्वधर्मम् = राजकृत्यम्, प्रतिपालयेत् = निर्वाहयेत्॥४७॥

**हिन्दी**—हर रोज लोक और शास्त्रों में देखे गये कारणों से जाति, देश, श्रेणि और आनुवंशिक धर्मों की भलीभाँति समीक्षा कर राजा को राजधर्म का प्रतिपालन करना चाहिए॥४७॥

**प्रत्यहमिति**। प्रत्यहं प्रतिदिनं देशदृष्टैः लौकिकैरित्यर्थः, शास्त्रदृष्टैः शास्त्रीयैश्च हेतुभिः जातिजानपदान् जातीयान् जानपदान् दैशिकांश्चेत्यर्थः धर्मान् श्रेणीनां धर्मान् कुलधर्मांश्च समीक्ष्य सम्यक् दृष्ट्वा स्वधर्मं राजधर्मं विचारदर्शित्वरूपं प्रतिपालयेत्॥४७॥

**देशजातिकुलानां च ये धर्माः प्राक् प्रवर्त्तिताः।**
**तथैव ते पालनीयाः प्रजा प्रक्षुभ्यतेऽन्यथा॥४८॥**

**अन्वयः**—देशजातिकुलानां च ये धर्माः प्राक् प्रवर्त्तिताः ते तथैव पालनीयाः। अन्यथा प्रजा प्रक्षुभ्यते॥४८॥

**व्याख्या**—देशानाम् = स्थानविशेषाणाम्, जातीनाम् = वर्णानाम्, कुलानाम् = वंशानाम्, च,

ये धर्माः = आचाराः, प्राक् = पूर्वम्, प्रवर्त्तिताः = सञ्चालिताः, ते = धर्माः, तथैव = तेनैव रूपेण, पालनीयाः = सञ्चालनीयाः। अन्यथा = इतरथा, प्रजा = जनाः, प्रक्षुभ्यते = प्रकर्षेणोद्वेगं प्राप्नुवन्ति ॥४८ ॥

**हिन्दी**—देश, जाति एवं कुल के जो धर्म जिस तरह पहले से प्रचलित हों, उनका उसी रूप में पालन होना चाहिए। अन्यथा परिवर्त्तन से प्रजा क्षुब्ध हो जाती है ॥४८ ॥

**देशेति**। देशानां जातीनां कुलानाञ्च ये धर्माः प्राक् पूर्वं प्रवर्त्तिताः प्रचलिताः, ते तथैव पूर्ववदेव पालनीयाः रक्षणीयाः, अन्यथा तदपालने इत्यर्थः, प्रजा प्रक्षुभ्यते प्रकर्षेण क्षोभं प्राप्नोति ॥४८ ॥

**उदूह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः।**
**मध्यदेशे कर्मकराः शिल्पिनश्च गवाशिनः ॥ ४९ ॥**

**अन्वयः**—दाक्षिणात्यैः द्विजैः मातुलस्य सुता उदूह्यते। मध्यदेशे कर्मकराः, शिल्पिनश्च गवाशिनः ॥ ४९ ॥

**व्याख्या**—दाक्षिणात्यैः = दक्षिणप्रदेशनिवासिभिः, द्विजैः = ब्राह्मणैः, मातुलस्य = मातृभ्रातुः, सुता = दुहिता, उदूह्यते = परिणीयते, मध्यदेशे = हिमाचलविन्ध्याचलकुरुक्षेत्रप्रयागमध्यस्थदेशे, मध्यप्रदेशे, कर्मकराः = लोहकराः, च = पुनः, शिल्पिनः = गृहसंवेशकाः, गवाशिनः = गोमांसभक्षकाः भवन्ति ॥४९ ॥

**हिन्दी**—जैसे दक्षिण प्रदेश के ब्राह्मण अपनी ममेरी बहिन से शादी करते हैं तथा मध्य-प्रदेश के कुम्हार और शिल्पि गोमांस खाते हैं ॥४९ ॥

**उदूह्यते इति**। दाक्षिणात्यैः दक्षिणदिग्वासिभिः द्विजैः मातुलस्य सुता उदूह्यते परिणीयते, मध्यदेशे च कर्मकराः कर्माराः शिल्पिनश्च सूत्रधारादयः गवाशिनः गोखादकाः ॥४९ ॥

**मत्स्यादाश्च नराः सर्वे व्यभिचाररताः स्त्रियः।**
**उत्तरे मद्यपा नार्य्यः स्पृश्या नृणां रजस्वलाः ॥ ५० ॥**

**अन्वयः**—उत्तरे सर्वे नराः मत्स्यादाः, स्त्रियः व्यभिचाररताः, मद्यपाः तथा रजस्वलाः अपि नार्यः नृणां स्पृश्याः (भवन्ति) ॥५० ॥

**व्याख्या**—उत्तरे = देशस्योत्तराञ्चले, सर्वे = सकलाः, नराः = जनाः, मत्स्यादाः = मत्स्यभक्षकाः भवन्ति, स्त्रियः = नार्यः, व्यभिचाररताः = कुलटाः, पुरुषान्तर्गामिन्यः, मद्यपाः = सुरापायिन्यश्च भवन्ति, तथा रजस्वलाः = ऋतुमत्यः, नार्यः = स्त्रियोऽपि, नृणाम् = नराणाम्, स्पृश्याः = स्पर्शयोग्याः भवन्ति ॥५० ॥

**हिन्दी**—देश के उत्तरी भाग में सभी लोग मछली खाते हैं, औरतें व्यभिचारिणी एवं शराबी होती हैं और निषिद्ध रजस्वला नारी का भी पुरुष स्पर्श करते हैं ॥५० ॥

**मत्स्यादाश्चेति**। उत्तरे देशे सर्वे नराः मत्स्यादाः मत्स्याशिनः, स्त्रियः व्यभिचाररताः यथेच्छं पुरुषान्तरगामिन्य इत्यर्थः, मद्यपाः सुरापायिन्यः, तथा रजस्वलाः ऋतुमत्यः अपि नृणां स्पृश्याः स्पर्शनीयाः ॥५० ॥

**खशजाताः प्रगृह्णन्ति भ्रातृभार्य्यामभर्तृकाम्।**
**अनेन कर्मणा नैते प्रायश्चित्तदमार्हकाः ॥ ५१ ॥**

**अन्वयः**—खशजाताः अभर्त्तृकां भ्रातृभार्यां प्रगृह्णन्ति। अनेन कर्मणा एते प्रायश्चित्तदमार्हकाः न भवन्ति ॥५१॥

**व्याख्या**—खशजाताः = 'खश' जातिविशेषोत्पन्नाः जनाः, अभर्त्तृकाम् = विधवाम्, भ्रातृभार्याम् = सोदरपत्नीम्, प्रगृह्णन्ति = पाणिग्रहणं कुर्वन्ति। अनेन = एतेन पूर्वोक्तेन, कर्मणा = कृत्येन, खशाः, न प्रायश्चित्तम् = पापविशुद्धिकरणम्, नापि, दमम् = दण्डम्, नृपेण अर्हन्ति = प्राप्तुं शक्नुवन्ति ॥५१॥

**हिन्दी**—खश जाति के लोग अपने भाई की विधवा से विवाह करते हैं। ऐसे पूर्वोक्त निषिद्ध कर्म करने के बावजूद ये राजा के द्वारा न तो प्रायश्चित्त करवाये जाते हैं और न दण्डित ही होते हैं ॥५१॥

**खशेति**। खशजाताः खशजातीयाः नरा अभर्त्तृकां विधवां भ्रातृभार्य्यां प्रगृह्णन्ति परिणयन्ति। अनेन कर्मणा भ्रातृभार्य्यापरिणयेन एते खशाः न प्रायश्चित्तदमार्हकाः न प्रायश्चित्तं नापि दमं दण्डम् अर्हन्तीत्यर्थः ॥५१॥

**येषां परम्पराप्राप्ताः पूर्वजैरप्यनुष्ठिताः।**
**त एव तैर्न दुष्येयुराचारान्नेतरस्य तु ॥५२॥**

**अन्वयः**—येषां ये परम्पराप्राप्ताः पूर्वजैरप्यनुष्ठिताः, ते तैः इतरस्य आचारान् न दुष्येयुः ॥५२॥

**व्याख्या**—येषाम् = जनानाम्, कुलानां स्थानविशेषाणाञ्च, ये = धर्माः, परम्पराप्राप्ताः = पूर्वप्रचलिता धर्माः, पूर्वजैः = पूर्वपुरुषैः, अनुष्ठिताः = आचरिताः, ते = धर्माः, तैः = जनैः, तथैवानुष्ठेयाः, अत्र इतरस्य = अन्यजनस्य, आचारान् = सदाचारान्, न = नहि, दुष्येयुः, दूषितान् कुर्युः ॥५२॥

**हिन्दी**—जिस जाति अथवा कुल के लोगों का जो भी परम्परागत धर्म हों, उन्हें उसी का अनुपालन करना चाहिए। अतः राजे एक-दूसरे के धर्म को दूषित न होने दें। यही उनका कर्त्तव्य हैं ॥५२॥

**येषमिति**। येषां जातीयानां देशानाञ्च कुलानाञ्च ये परम्पराप्राप्ताः चिरं प्रचलिताः धर्माः पूर्वजैः पूर्वपुरुषैः अनुष्ठिताः, ते धर्माः तैः तथैव अनुष्ठेया इति पूरयित्वा व्याख्येयम्, अतः इतरस्य अपरस्य आचारान् न दुष्येयुः न दूषितान् कुर्य्युरित्यर्थः, राजान इति शेषः ॥५२॥

**परस्त्रीधनसंलुब्धा मद्यासक्तरताः कलौ।**
**विज्ञानलवदुर्दग्धाः प्रायः श्रीसंयुताश्च ये ॥५३॥**
**तन्त्रकर्मरता वेदविमुखाः स्युः सदैव हि।**
**महादण्डेन चैतेषां कुर्य्यात् संसाधनं नृपः ॥५४॥**

**अन्वयः**—कलौ ये श्रीसंयुताः प्रायः ते सदैव परस्त्रीधनसंलुब्धाः मद्यासक्तरताः विज्ञानलवदुर्दग्धाः तन्त्रकर्मरताः वेदविमुखाः स्युः, नृपः महादण्डेन एतेषां संसाधनं कुर्यात् ॥५३-५४॥

**व्याख्या**—कलौ = कलियुगे, ये = जनाः, श्रीसंयुताः = लक्ष्मीवन्तः, ते = जनाः, प्रायः = बहुधा, सदैव = सर्वदैव, परस्त्रीधनसंलुब्धाः—परस्त्रीषु = परनारीषु, परधनेषु = अन्यजनार्थेषु, च, संलुब्धाः—सम्यक् प्रकारेण लुब्धाः = गृध्नवः, मद्यासक्तरताः = सुरापाने निरताः,

विज्ञानलवदुर्दग्धाः—विज्ञानस्य = ज्ञानस्य, लवेन = लेशेन, दुर्दग्धाः = अतीवगर्विताः, तन्त्रकर्मरताः—तन्त्रकर्मणि = तान्त्रिककृत्येषु, रताः = सदैवासक्ताः, तथा वेदविमुखाः = वैदिकधर्मपराङ्मुखाः, स्युः = भवेयुः, नृपः = राजा, महादण्डेन = महान् चासौ दण्डः महादण्डस्तेन, एतेषाम् = पूर्वोक्तानां जनानाम्, संसाधनम् = सुष्ठुतया दमनं, कुर्यात् = विधेयात् ॥५३ ॥

**हिन्दी**—कलियुग में जो धनवान् हैं वे प्रायः दूसरों के धन और औरत के लोभी होते हैं, शराबी होते हैं, थोड़े ज्ञान में भी अपने को महाज्ञानी समझते हैं, तान्त्रिक अनुष्ठान में संलग्न रहते हैं तथा वैदिक धर्म से विमुख होते हैं। राजा ऐसे लोगों का महादण्ड से दमन करे ॥५३-५४ ॥

**परस्त्रीति। तन्त्रेति।** कलौ ये श्रीसंयुताः श्रीमन्तः, ते प्रायः बाहुल्येन सदा परस्त्रीधनसंलुब्धाः परस्त्रीषु परधनेषु च सम्यक् लुब्धाः, मद्यासक्तरताः सुरापानसक्ताः, विज्ञानलवेन ज्ञानलेशेन दुर्दग्धाः गर्विताः, तन्त्रकर्मणि तन्त्रोक्तकार्य्येषु रताः, तथा वेदविमुखाः वेदबाह्यधर्मावलम्बिनः स्युः भवेयुः। नृपः महादण्डेन एतेषां संसाधनं सम्यक् दण्डं कुर्य्यात् ॥५३-५४ ॥

**न्यायान् पश्येत्तु मध्याह्ने पूर्वाह्णे स्मृतिदर्शनम्।**
**मनुष्यमारणे स्तेये साहसेऽत्ययिके सदा ॥ ५५ ॥**
**न कालनियमस्तत्र सद्य एव विवेचनम् ॥ ५६ ॥**

**अन्वयः**—मध्याह्ने न्यायान् पश्येत्, पूर्वाह्णे स्मृतिदर्शनम्। मनुष्यमारणे स्तेये साहसे अत्ययिके च सदा तत्र कालनियमः न, सद्यः एव विवेचनम् ॥५५-५६ ॥

**व्याख्या**—मध्याह्ने = दिवसस्य मध्यभागे, न्यायान् = अपराधानुरूपविचारान्, पश्येत् = अवलोकयेत्, पूर्वाह्णे = त्रिधाविभक्तस्य दिवसस्य पूर्वभागे, स्मृतिदर्शनम्—स्मृतीनाम् = धर्मसंहितानाम्, दर्शनम् = पर्यालोचनम्, कुर्यात्। मनुष्यमारणे = नरहत्यायाम्, स्तेये = चौर्ये, साहसे = दस्युकर्मणि, अत्ययिके = विनाशजनके व्यापारे च, सदा = सततम्, विचारणीयम्। तत्र = तस्मिन् कर्मणि, कालनियमः = समयप्रतिबन्धः, न = नास्ति, अस्मिन्कर्मणि, सद्यः एव = तत्काल एव, विवेचनम् = पर्यालोचनम्, कर्त्तव्य इति ॥५५-५६ ॥

**हिन्दी**—राजा दोपहर दिन में मुकदमों को देखे, पूर्वाह्ण (दोपहर के पहले) में धर्मसंहिता का अनुचिन्तन करे। किन्तु, खून, चोरी, डकैती या कोई अत्यधिक विनाशजनक मुकदमे को देखने में समय का कोई प्रतिबंध नहीं होना चाहिए; प्रत्युत इसकी सुनवाई तत्क्षण होनी चाहिए ॥५५-५६ ॥

**न्यायानिति। नेति।** मध्याह्ने न्यायान् विचारान्, पश्येत् पूर्वाह्णे स्मृतिदर्शनं स्मृतीनां धर्मशास्त्राणां दर्शनं पर्य्यालोचनं कुर्य्यात्। मनुष्यमारणे नरहत्यायां, स्तेये चौर्य्ये, साहसे दस्युकर्मणि, अत्ययिके नाशजनके अन्यस्मिन् व्यापारे च सदा पूर्वाह्णे सायाह्णे वा रात्रौ इत्यर्थः, न्यायान् पश्येत्। तत्र कालनियमः नास्ति, सद्य एव विवेचनं विचारः कर्त्तव्य इति शेषः ॥५५-५६ ॥

**धर्मासनगतं दृष्ट्वा राजानं मन्त्रिभिः सह।**
**गच्छेन्निवेद्यमानं यत् प्रतिरुद्धमधर्मतः ॥ ५७ ॥**
**यथासत्यं चिन्तयित्वा लिखित्वा च समाहितः।**
**नत्वा च प्राञ्जलिः प्रह्वो ह्यर्थी कार्य्यं निवेदयेत् ॥ ५८ ॥**

**अन्वयः**—धर्मासनगतं मन्त्रिभिः सह राजानं दृष्ट्वा अर्थी गच्छेत्। तत्र प्रतिरुद्धमधर्मतः यत् निवेद्यमानं यथासत्यं चिन्तयित्वा समाहितः, लिखित्वा च नत्वा प्राञ्जलिः प्रह्वः कार्यं निवेदयेत् ॥५७-५८॥

**व्याख्या**—धर्मासनगतम् = न्यायासनासीनम्, मन्त्रिभिः = सचिवैः, सह परिवृतम्, राजानम् = नृपम्, दृष्ट्वा = अवलोक्य, अर्थी = प्रार्थी, वादी वा, गच्छेत् = समीपं व्रजेत्। तत्र सन्निधिं गत्वा च, अधर्मतः = अधर्मात्, प्रतिरुद्धम् = प्रातिकूल्यम्, यत् = वस्तु, निवेद्यमानम् = प्रार्थनीयम्, तत् = अभियोगम्, यथासत्यम् = सत्यानुकूलम्, चिन्तयित्वा = विचारयित्वा, समाहितः = अवहितचित्ताः, लिखित्वा = लिपिबद्धं कृत्वा, च = पुनः, प्राञ्जलिः = कृताञ्जलिः, तथा प्रह्वः = विनम्रो भूत्वा, कार्यम् = अभियोगम्, निवेदयेत् = प्रार्थयेत् ॥५७-५८॥

**हिन्दी**—न्याय के आसन पर मंत्रियों से घिरे राजा को बैठे देखकर प्रार्थी उनके पास जाये। पास जाकर अधर्म रहित जो कुछ निवेदन करना हो, उसे यथार्थ रूप से विचार कर, सावधान मन होकर, लिखित रूप से हाथ जोड़कर विनत भाव से दावा दाखिल करे ॥५७-५८॥

**धर्मासनगतमिति। यथेति**। धर्मासनगतं विचारासनोपविष्टं मन्त्रिभिः सह परिवृतं राजानं दृष्ट्वा अर्थी गच्छेत् तत् सन्निधिमिति शेषः, गत्वा च अधर्मतः अधर्मात् प्रतिरुद्धं निवृत्तम् अधर्मरहितमित्यर्थः, निवेद्यमानं यत् वस्तु, तत् यथासत्यं चिन्तयित्वा समाहितः अवहितमनाः लिखिवा च नत्वा च प्राञ्जलिः कृताञ्जलिः तथा प्रह्वः नम्रः सन् कार्य्यं निवेदयेत् ॥५७-५८॥

**यथार्हमेनमभ्यर्च्य ब्राह्मणैः सह पार्थिवः।**
**सान्त्वेन प्रशमय्यादौ स्वधर्मं प्रतिपादयेत् ॥५९॥**

**अन्वयः**—पार्थिवः ब्राह्मणैः सह एनं यथार्हम् अभ्यर्च्य सान्त्वेन आदौ प्रशमय्य स्वधर्मं प्रतिपादयेत् ॥५९॥

**व्याख्या**—पार्थवः = राजा, ब्राह्मणैः = विप्रैः, सह = साकम्, एनम् = अभ्यर्थिनम्, यथार्हम् = यथायोग्यम्, अभ्यर्च्य = सम्मान्य, सान्त्वेन = सान्त्वनाप्रदानेन, आदौ = प्रथमम्, प्रशमय्य = आश्वासनं दत्वा, स्वधर्मम् = राजधर्मम्, प्रतिपादयेत् = निष्पादयेत् ॥५९॥

**हिन्दी**—ब्राह्मणों के साथ राजा उस प्रार्थी का यथोचित सम्मान कर सर्वप्रथम उसे आश्वासन देकर मुकदमा देखना प्रारंभ करे ॥५९॥

**यथार्हमिति**। पार्थिवः ब्राह्मणैः सभ्यैः सह एनम् अर्थिनं यथार्हं यथायोग्यम् अभ्यर्च्य सम्मान्य सान्त्वेन सान्त्ववादेन आदौ प्रशमय्य प्रबोध्य आश्वास्य इत्यर्थः, स्वधर्मं प्रतिपादयेत् ॥५९॥

**काले कार्य्यार्थिनं पृच्छेत् प्रणतं पुरतः स्थितम्।**
**किं कार्य्यं का च ते पीडा मा भैषीर्ब्रूहि मानव! ॥६०॥**

**अन्वयः**—काले प्रणतं पुरतः स्थितं कार्यार्थिनं पृच्छेत्—हे मानव! किं कार्यं ते पीडा च का? मा भैषीः, वद ॥६०॥

**व्याख्या**—काले = यथावसरे, प्रणतम् = विनतम्, पुरतः = अग्रे, स्थितम् = समुपस्थितम्, कार्यार्थिनम् = अभियोगिनम्, पृच्छेत्—हे मानव! किमिति प्रश्ने, कार्यम् = अभियोगम्, ते = तव, पीडा = कष्टम्, का? मा भैषीः = भयं मा कुरु, ब्रूहि = कथय ॥६०॥

**हिन्दी**—विनम्र भाव से सामने खड़े उस अभियोगी से राजा पूछे—हे भले आदमी ! तुम्हें क्या काम है ? क्या कष्ट है ? डरो मत, मुझसे कहो ॥ ६० ॥

**काले इति**। काले यथासमये प्रणतं पुरतः अग्रतः स्थितं कार्य्यार्थिनं पृच्छेत्, हे मानव ! किं कार्य्यं ते तव पीडा च का, मा भैषीः, ब्रूहि वद ॥ ६० ॥

**केन कस्मिन् कदा कस्मात् पीडितोऽसि दुरात्मना।**
**एवं पृष्ट्वा स्वभावोक्तं तस्य संश्रृणुयाद् वचः ॥ ६१ ॥**

**अन्वयः**—कस्मिन् कदा केन दुरात्मना कस्मात् पीडितोऽसि ? एवं पृष्ट्वा तस्य स्वभावोक्तं वचः संश्रृणुयात् ॥ ६१ ॥

**व्याख्या**—कस्मिन् = स्थाने, कदा = कस्मिन् समये, केन = जनेन, दुरात्मना = दुष्टेन, कस्मात् = कारणात्, पीडितोऽसि = क्लेशितोऽसि, एवम् = अनेन प्रकारेण, पृष्ट्वा = अनुयुज्य, तस्य = अभियोगिनः, स्वभावोक्तम् = सहजोक्तम्, वचः = वचनम्, संश्रृणुयात् = सम्यक् प्रकारेणाकर्णयेत् ॥ ६१ ॥

**हिन्दी**—तुम्हें किस दुष्ट ने कहाँ, किस समय और क्यों पीड़ा पहुँचाई है ? इस तरह पूछकर उसकी सहज बातें सुने ॥ ६१ ॥

**केनेति**। कस्मिन् स्थाने कदा कस्मिन् समये केन दुरात्मना कस्मात् कारणात् पीडितोऽसि, एवं पृष्ट्वा तस्य वादिनः स्वभावोक्तं न तु काल्पनिकमित्यर्थः, वचः वचनं संश्रृणुयात् ॥ ६१ ॥

**प्रसिद्धलिपिभाषाभिस्तदुक्तं लेखको लिखेत् ॥ ६२ ॥**

**अन्वयः**—लेखकः तदुक्तं प्रसिद्धलिपिभाषाभिः लिखेत् ॥ ६२ ॥

**व्याख्या**—लेखकः = लिपिकारः, तत् = अभियोगिनः, उक्तम् = निवेदितम्, प्रसिद्धाभिः = प्रचलिताभिः, लिपिभिः = अक्षरैः, भाषाभिः = गिराभिः, लिखेत् = लेखनं कुर्यात् ॥ ६२ ॥

**हिन्दी**—और लेखक उसकी कही बातों को उस समय की प्रचलित लिपि और भाषा में लिखे ॥ ६२ ॥

**प्रसिद्धेति**। लेखकः तदुक्तं तेन वादिना उक्तं कथितं प्रसिद्धाभिः चलिताभिः लिपिभिः अक्षरैः भाषाभिश्च लिखेत् ॥ ६२ ॥

**अन्यदुक्तं लिखेदन्यद्योऽर्थिप्रत्यर्थिनां वचः।**
**चौरवत् शासयेद्राजा लेखकं द्रागतन्द्रितः ॥ ६३ ॥**

**अन्वयः**—यः अर्थिप्रत्यर्थिनाम् अन्यत् उक्तं वचः अन्यत् लिखेत्, राजा अतन्द्रितः सन् तं द्राक् चौरवत् शासयेत् ॥ ६३ ॥

**व्याख्या**—यः = लिपिकारः, अर्थिनाम् = वादिनाम्, प्रत्यर्थिनाम् = प्रतिवादिनाम्, अन्यत् उक्तम् = कथितम्, वचः = वचनम्, अन्यत् = भिन्नरूपेण, लिखेत् = लिपिबद्धं कुर्यात्, राजा = नृपः, अतन्द्रितः = अनलसो भूत्वा, तम् = लेखकम्, द्राक् = झटिति, चौरवत् = तस्कर इव, शासयेत् = दमयेत् ॥ ६३ ॥

**हिन्दी**—यदि कोई लेखक वादी-प्रतिवादी की कही हुई बातों को जैसा वह कहे, उससे भिन्न लिखे, तो राजा तत्परता के साथ उस लेखक को चोर की तरह दण्ड दे ॥ ६३ ॥

**अन्यदुक्तमिति**। यः लेखकः अर्थिनां प्रत्यर्थिनाञ्च अन्यत् उक्तं वचः वाक्यम् अन्यत् अन्यथेत्यर्थः, लिखेत्, राजा अतन्द्रितः अनलसः क्षिप्रकारीत्यर्थः, सन् तं लेखकं द्राक् झटिति चौरवत् शासयेत् दण्डयेत् ॥ ६३ ॥

**लिखितं तादृशं सभ्या न विब्रूयुः कदाचन।**
**बलाद् गृहणन्ति लिखितं दण्डयेत् तांस्तु चौरवत् ॥ ६४ ॥**

**अन्वयः**—सभ्याश्च तादृशं लिखितं कदाचन न विब्रूयुः। यदि बलात् गृह्णन्ति तांस्तु चौरवत् दण्डयेत् ॥ ६४ ॥

**व्याख्या**—सभ्याश्च = सांसदश्च, तादृशम् = पूर्वोक्तमिव, लिखितम् = अङ्कितम्, कदाचन = कदापि, न = नहि, विब्रूयुः = अनुमोदेरन्। यदि ते तादृशं लिखितम्, बलात् = हठात्, गृह्णन्ति = ग्रहणं कुर्वन्ति, तान् = सभ्यान्, तु चौरवत् = तस्कर इव, दण्डयेत् = दण्डं दद्यात् ॥ ६४ ॥

**हिन्दी**—सांसद भी उक्त रीति से लिखे गये बयान का अनुमोदन न करे। यदि वे अपने अधिकार के बल पर वैसा करे तो राजा उन्हें चोर की तरह दण्ड दे ॥ ६४ ॥

**लिखितमिति**। सभ्याश्च तादृशं लिखितं कदाचन न विब्रूयुः न अनुमोदेरन्नित्यर्थः, यदि ते सभ्याः तादृशं लिखितं बलात् बलमाश्रित्य इत्यर्थः, गृह्णन्ति तांस्तु तांश्च चौरवत् दण्डयेत् ॥ ६४ ॥

**प्राड्विवाको नृपाभावे पृच्छेदेवं सभागतम् ॥ ६५ ॥**

**अन्वयः**—प्राड्विवाकः नृपस्य अभावे सभागतम् एवं पृच्छेत् ॥ ६५ ॥

**व्याख्या**—प्राड्विवाकः = विचारपतिः, नृपस्य = राज्ञः, अभावे = अनुपस्थितौ, सभागतम् = सभायां सभागतमभ्यर्थिनम्, एवम् = पूर्वोक्तमिव, पृच्छेत् = जिज्ञासां कुर्यात् ॥ ६५ ॥

**हिन्दी**—राजा की अनुपस्थिति में विचारपति न्यायालय में उपस्थित अभ्यर्थी से उसी प्रकार पूछे ॥ ६५ ॥

**प्राड्विवाक इति**। प्राड्विवाकः विचारपतिः नृपस्य अभावे सभागतम् अर्थिनम् एवं पूर्ववत् पृच्छेत् ॥ ६५ ॥

**वादिनौ पृच्छति प्राड् वा विवाको विविनक्त्यतः।**
**विचारयति सभ्यैर्वा धर्माधर्मान् विवक्ति वा ॥ ६६ ॥**

**अन्वयः**—वादिनौ पृच्छति प्राड् वा विविनक्ति इति विवाकः। अतः सः वा सभ्यैः सह धर्माधर्मान् विचारयति वा विवक्ति ॥ ६६ ॥

**व्याख्या**—वादिनौ = वादिप्रतिवादिनौ, पृच्छति = जिज्ञासयतीति प्राड्, विविनक्ति = विचारयतीति विवाकः अर्थात् विशिष्टो वाको यस्येति विवाकः = न्यायाधीशः, सः वा = स एव, वा नृपाभावे, सभ्यैः = सांसद्भिः सह, धर्माधर्मान् = कर्त्तव्याकर्त्तव्यान्, विचारयति = चिन्तयति, वा विवक्ति = विशेषरूपेण वदतीति ॥ ६६ ॥

**हिन्दी**—वह वादी-प्रतिवादी से पूछता है, अतः प्राड् कहलाता है और विचार करता है अतः विवाक कहलाता है। अतः दोनों मिलकर प्राड्विवाक कहलाता है और वही न्यायाधीश

सांसदों से मिलकर धर्माधर्म का विचार करते हुए अपना निर्णय देता है ॥ ६६ ॥

**वादिनाविति**। वादिनौ अर्थिप्रत्यर्थिनौ पृच्छतीति प्राड्, विविनक्ति विचारयतीति विवाकः, अतः असौ विचारपतिः प्राड्विवाक इत्यर्थः। सः वा स एव राजाभावे इत्यर्थः, सभ्यैः सह धर्माधर्मान् विचारयति वा विवक्ति विशेषेण वदति ॥ ६६ ॥

**सभायां ये हिता योग्याः सभ्यास्ते चापि साधवः ॥ ६७ ॥**

**अन्वयः**—सभायां ये हिताः योग्याः साधवः सभ्याः ते चापि पश्येयुरिति ॥ ६७ ॥

**व्याख्या**—सभायाम् = न्यायालये, ये = जनाः, हिताः = हितेच्छुकाः, योग्याः = कार्यनिपुणाः, साधवः = सत्पुरुषाः, सभ्याः = सभासदः, ते चापि विवादं पश्येयुरिति ॥ ६७ ॥

**हिन्दी**—न्यायालय में जो व्यक्ति विचारवान् तथा कार्यचतुर एवं सज्जन हों, उन्हें सभासद बनाना चाहिए ॥ ६७ ॥

**सभायामिति**। सभायां ये हिताः योग्याः कर्मदक्षाः साधवः सुजनाः सभ्याः, ते च कार्य्यं पश्येयुरिति शेषः ॥ ६७ ॥

**स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः।**
**आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ॥ ६८ ॥**

**अन्वयः**—स्मृत्याचारव्यपेतेन मार्गेण परैः आधर्षितः चेत् राज्ञे आवेदयति तत् हि व्यवहारपदम् ॥ ६८ ॥

**व्याख्या**—स्मृत्याः = धर्मसंहितायाः, आचारः = सत्पुरुषानुष्ठितव्यवहारः, तत् = तस्य, व्यपेतेन = विपरीतेन, मार्गेण = पथा, परैः = अन्यैः, आधर्षितः = व्यथितो जनः, चेत् = यदि, राज्ञे = नृपाय, आवेदयति = प्रार्थयति, तत् = आवेदनम्, हि = निश्चयेन, व्यवहारपदम् = विवादस्थानम्, भवति ॥ ६८ ॥

**हिन्दी**—धर्मसंहिता में वर्णित आचरण के विपरीत राह पकड़कर यदि कोई किसी को सताता है तो उसके विरुद्ध न्यायालय में राजा के पास जो दावा पेश करता है, उसे 'व्यवहारपद' अर्थात् मुकदमा दायर करना कहते हैं ॥ ६८ ॥

**स्मृतीति**। स्मृतिः धर्मशास्त्रम् आचारः सज्जनानुष्ठितः व्यवहारः तद्व्यपेतेन तद्विरुद्धेन मार्गेण पथा कार्य्येणेत्यर्थः, परैः अन्यैः आधर्षितः पीडितः जनः चेत् यदि राज्ञे आवेदयति तत् आवेदनं व्यवहारपदं विवादस्थानं हि हिशब्दोऽवधारणार्थः ॥ ६८ ॥

**नोत्पादयेत् स्वयं कार्य्यं राजा नाप्यस्य पूरुषः।**
**न रागेण न लोभेन न क्रोधेन ग्रसेन्नृपः।**
**परैरप्रापितानर्थान्न चापि स्वमनीषया ॥ ६९ ॥**

**अन्वयः**—राजा स्वयं न अस्य पूरुषोऽपि न कार्यम् उत्पादयेत्। किञ्च नृपः रागेण न लोभेन न क्रोधेन च न ग्रसेत्, परैः अप्रापितान् अर्थान् स्वमनीषया न उत्पादयेत्।। ६९ ॥

**व्याख्या**—राजा = नृपः, स्वयम् = आत्मनैव, न = नहि, अस्य = एतस्य नृपस्य, पूरुषोऽपि = राजसेवकोऽपि, न = नहि, कार्यम् = विवादम्, उत्पादयेत् = घटयेत्। किञ्च, नृपः = राजा, रागेण = प्रेम्णा, न = नहि, लोभेन = लिप्सया, न = नहि, क्रोधेन = कोपेन च,

न = नहि, ग्रसेत् = कमपि पीडयेत्। अन्यच्च परैः = अन्यैः, अर्थिप्रत्यर्थिभिः, अप्रापितान् = अनावेदितान्, अर्थान् = व्यवहाराणि, स्वमनीषया—स्वस्य = आत्मनः, मनीषया = बुद्ध्या, न = नहि, उत्पादयेत् = घटयेदिति ॥ ६९ ॥

**हिन्दी**—राजा या राजपुरुष स्वयं कोई मुकदमा न्यायालय में दायर न करे। राजा प्रेम, लोभ या क्रोध के वशीभूत होकर किसी को न सताये तथा वादी-प्रतिवादी के बिना ही स्वयं अपनी बुद्धि की उपज के कारण कोई मुकदमा न्यायालय में दायर न करे ॥ ६९ ॥

**नोत्पादयेदिति**। राजा स्वयं न, अस्य राज्ञः पुरुषोऽपि न कार्य्यम् उत्पादयेत् विवादं न घटयेदित्यर्थः। किञ्च नृपः रागेण कस्मिन्नपि अनुरागेण न, लोभेन न, क्रोधेन च न ग्रसेत् पीडयेत् कमपीति शेषः। अपरञ्च परैः अर्थिप्रत्यर्थिप्रभृतिभिः अप्रापितान् अनावेदितान् अर्थान् कार्य्याणि स्वमनीषया निजबुद्ध्या न उत्पादयेदिति शेषः ॥ ६९ ॥

**छलानि चापराधांश्च पदानि नृपतेस्तथा।**
**स्वयमेतानि गृह्णीयान्नृपस्त्वावेदकैर्विना।**
**सूचकस्तोभकाभ्यां वा श्रुत्वा चैतानि तत्त्वतः ॥ ७० ॥**

**अन्वयः**—नृपः आवेदकैः विना स्वयं छलानि अपराधान् तथा नृपतेः स्वस्य पदानि तथा सूचकस्तोभकाभ्यां श्रुत्वा एतानि तत्त्वतः गृह्णीयात् ॥ ७० ॥

**व्याख्या**—नृपः = राजा, आवेदकैः = अभ्यर्थिभिः, विना = अभावे, स्वयम् = आत्मनः एव, छलानि = कपटानि, अपराधान् = दोषान्, तथा नृपतेः = राज्ञः, स्वस्य = आत्मनः, पदानि = विवादस्थानानि, तथा सूचकस्तोभकाभ्याम् = गुप्तचरगूढपुरुषाभ्याम्, श्रुत्वा = आकर्ण्य, एतानि = पूर्वोक्तानि, तत्त्वतः = याथार्थ्येन, गृह्णीयात् = स्वीकुर्यात् ॥ ७० ॥

**हिन्दी**—किसी के द्वारा मुकदमा दायर किये बिना भी राजा खुद आगे कहे जाने वाले छल, अपराध एवं विवादस्थल—इन्हें गुप्तचर एवं मुखबिरों से सुनकर इनके बारे में सही जानकारी लेकर स्वयं मुकदमा दायर करे ॥ ७१ ॥

**छलानीति**। नृपः आवेदकैः निवेदकैः विना निवेदनमन्तरेणेत्यर्थः, स्वयं छलानि अपराधान् तथा नृपतेः स्वस्य पदानि विवादस्थानानि, तथा सूचकस्तोभकाभ्यां श्रुत्वा एतानि तदुक्तानि तत्त्वतः याथार्थ्येन गृह्णीयात् ॥ ७० ॥

**शास्त्रेणानिन्दितस्त्वर्थी नापि राज्ञा प्रचोदितः।**
**आवेदयति यत् पूर्वं स्तोभकः स उदाहृतः ॥ ७१ ॥**

**अन्वयः**—यः शास्त्रेण अनिन्दितः तथा राज्ञा प्रचोदितः न किन्तु पूर्वम् आवेदयति, सः अर्थी स्तोभकः उदाहृतः ॥ ७१ ॥

**व्याख्या**—यः = पुरुषः, शास्त्रेण = धर्मग्रन्थेन, अनिन्दितः = निन्दारहितः, तथा = तेनैव प्रकारेण, राज्ञा = नृपेण, प्रचोदितश्च = प्रेरितश्च, न = नहि, किन्तु, पूर्वम् = प्राक्, आवेदयति = प्रार्थयति, सः = असौ, अर्थी, स्तोभकम्, उदाहृतः = कथितः ॥ ७१ ॥

**हिन्दी**—जो शास्त्र में निन्दित न हो, राजा ने उसे आवेदन प्रस्तुत करने के लिए प्रेरित न किया हो, यदि वह पहले ही आकर राजा से निवेदित करता है, उसे स्तोभ कहते हैं ॥ ७१ ॥

स्तोभकं लक्षयति—**शास्त्रेणेति**। यः शास्त्रेण अनिन्दितः तथा राज्ञा प्रचोदितश्च न, किन्तु पूर्वम् आवेदयति ज्ञापयति सः अर्थी स्तोभक उदाहृतः ख्यातः ॥७१॥

**नृपेण विनियुक्तो यः परदोषानुवीक्षणे।**
**नृपं संसूचयेज्ज्ञात्वा सूचकः स उदाहृतः ॥७२॥**

**अन्वयः**—यः परदोषानुवीक्षणे नृपेण विनियुक्तः सन् नृपं संसूचयेत्, सः सूचकः उदाहृतः ॥७२॥

**व्याख्या**—यः = पुरुषः, परदोषानुवीक्षणे = अन्यापराधनिरीक्षणे, नृपेण = राज्ञा, विनियुक्तः = विशेषरूपेण नियुक्तः, सन्, नृपम् = राजानम्, संसूचयेत् = सम्यक् प्रकारेण निवेदयेत्, सः = असौ, सूचकः = गुप्तचरः, उदाहृतः = ख्यातः ॥७२॥

**हिन्दी**—राजा जिसे दूसरों के अपराध की जानकारी के लिए नियुक्त करता है और वह सारी सूचनाएँ इकट्ठी कर राजा के सामने प्रस्तुत करता है, उसे संसूचक अर्थात् गुप्तचर कहते हैं ॥७२॥

सूचकं लक्षयति—**नृपेणेति**। यः परदोषानुवीक्षणे परदोषदर्शनार्थं नृपेण राज्ञा विनियुक्तः सन् नृपं संसूचयेत् नृपसमीपे परदोषान् प्रकाशयेत् स सूचकः उदाहृतः ॥७२॥

**पथिभङ्गी पराक्षेपी प्राकारोपरि लङ्घकः।**
**निपानस्य विनाशी च तथा चायतनस्य च ॥७३॥**
**परिखापूरकश्चैव राजच्छिद्रप्रकाशकः।**
**अन्तःपुरं वासगृहं भाण्डागारं महानसम् ॥७४॥**
**प्रविशत्यनियुक्तो यो भोजनञ्च निरीक्षते।**
**विण्मूत्रश्लेष्मवातानां क्षेप्ता कामान्नृपाग्रतः ॥७५॥**
**पर्य्यङ्कासनबन्धी चाप्यग्रस्थानविरोधकः।**
**नृपातिरिक्तवेशश्च विधृतः प्रविशेत्तु यः ॥७६॥**
**यश्चापद्वारेण विशेदवेलायां तथैव च।**
**शय्यासने पादुके च शयनासनरोहणे ॥७७॥**
**राजन्यासन्नशयने यस्तिष्ठति समीपतः।**
**राज्ञो विद्विष्टसेवी चाप्यदत्तविहितासनः ॥७८॥**
**अन्यवस्त्राभरणयोः स्वर्णस्य परिधायकः।**
**स्वयंग्राहेण ताम्बूलं गृहीत्वा भक्षयेत्तु यः ॥७९॥**
**अनियुक्तप्रभाषी च नृपाक्रोशक एव च।**
**एकवासास्तथाभ्यक्तो मुक्तकेशोऽवकुण्ठितः ॥८०॥**
**विचित्रिताङ्गः स्रग्वी च परिधानविधूनकः।**
**शिरःप्रच्छादकश्चैव छिद्रान्वेषणतत्परः ॥८१॥**

आसङ्गी मुक्तवेशश्च घ्राणकर्णाक्षिदर्शकः।
दन्तोल्लेखनकश्चैव कर्णनासाविशोधकः।
राज्ञः समीपे पञ्चाशच्छलान्येतानि सन्ति हि॥८२॥

**अन्वयः**—पथिभङ्गी पराक्षेपी प्राकारोपरि लङ्घकः निपानस्य विनाशी च आयतनस्य विनाशी परिखापूरकः राजछिद्रप्रकाशकः यश्च अनियुक्तः अन्तःपुरं वासगृहं भाण्डागारं महानसं प्रविशति; यश्च भोजनं निरीक्षते, विण्मूत्रश्लेष्मवातानां कामात् क्षेप्ता नृपस्य अग्रतः पर्यङ्कासनबन्धी अग्रस्थानविरोधकः नृपातिरिक्तवेशश्च तथा यः विधृतः प्रविशेत्, यश्चापद्वारेण तथा अवेलायां विशेत् शय्यासने तथा पादुके शयनासनरोहणे यश्च आसन्नशयने राजनि समीपतः तिष्ठति, राज्ञः विद्विष्टसेवी अदत्तविहितासनः अन्यवस्त्राभरणयोः स्वर्णस्य च परिधायकः, यश्च स्वयंग्राहेण ताम्बूलं गृहीत्वा भक्षयेत्, अनियुक्तप्रभाषी च नृपाक्रोशकः एकवासाः अभ्यक्तः मुक्तकेशः अवकुण्ठितः विचित्रिताङ्गः स्रग्वी परिधानविधूनकः शिरःप्रच्छादकः छिद्रान्वेषणतत्परः आसङ्गी मुक्तवेशश्च घ्राणकर्णाक्षिदर्शकः दन्तोल्लेखनकः कर्णनासाविशोधकः —राज्ञः समीपे एतानि पञ्चाशत् छलानि सन्ति ॥७३-८२॥

**व्याख्या**—पथिभङ्गी = मार्गावरोधकः, परस्य = अन्यजनस्य, आक्षेपी = दोषारोपणकारी, प्राकारस्य = प्राचीरस्य, उपरि = उपरिष्टात्, लङ्घकः = लङ्घनकारी, निपानस्य = पयः शालायाः, तथा आयतनस्य = निवासस्य, विनाशकः, परिखाणाम् = खातानाम्, नगरवेष्टनीभूतानां जलाधाराणाञ्च, पूरकः = मुक्तिकादिभिः भरणकारी, राज्ञः = नृपस्य, छिद्रस्य = दोषस्य, प्रकाशकः = स्थापकः, यश्च = यो हि नरः, अनियुक्तः = अननुमतः सन्, अन्तःपुरम् = अवरोधः, वासगृहम् = निवाससदनम्, भाण्डागारम् = धान्यकोशः निधानं वेति, महानसम् = पाकशालाम्, प्रविशति = प्रवेशं करोति, यश्च = पुरुषविशेषः, भोजनम् = भक्ष्यम्, निरीक्षते = अवलोक्यते, विण्मूत्रश्लेष्मवातानाम् = मलमूत्रकफानाम् अधोवातानाञ्च, कामात् = स्वेच्छापूर्वकात्, क्षेप्ता = प्रयोक्ता, नृपस्य = राज्ञः, अग्रतः = सम्मुखे, पर्यङ्कासनबन्धी = वीरासनोपविष्टः, अग्रस्थानस्य = नृपसम्मुखावस्थानस्य विरोधकारी, नृपातिरिक्तवेशः = पार्थिवाधिकवेशधरः, तथा च यः = पुरुषः, विधृतः = विशेषेण धारितः, प्रविशेत् = प्रवेशं कुर्यात्, यश्चापद्वारेण = मुख्यद्वारविपरीतमार्गेण, तथा अवेलायाम् = असमये, विशेत् = परगृहं प्रविशेत्, शय्यासने—शय्यायाम् = पर्यङ्के, आसने = उपवेशने च, तथा पादुके = पादुकायाम् = चरणरक्षिकायाम्, पादुके इत्यत्र नपुंसकलिङ्ग-निर्देशः, आर्षत्वात्; शयनासनरोहणे—शयने = शय्याम्, आसने = उपवेशने, चरणस्पर्शे, अननुमत्यैव तत्तत्कारीति, यश्च आसन्नशयने = शय्यायामारोहणे, राज्ञि = राजनि, समीपतः = तस्य सन्निधौ तिष्ठति, राज्ञः = नृपस्य, विद्विष्टसेवी = शत्रुसेवकः, अदत्तविहितासनः—अदत्तम् = अविसृष्टम्, विहितम् = गृहीतम्, आसनम् = उपवेशनम्, येन तथोक्तः, अन्यस्य = अपरजनस्य, वस्त्राभरणयोः = वसनभूषणयोः, स्वर्णस्य = कनकस्य च, परिधायकः = धारणकर्त्ता, यश्च स्वयम् = आत्मनैव, ग्राहेण = बलेन, परकीयताम्बूलम् = नागवल्लीदलम्, गृहीत्वा = नीत्वा, भक्षयेत् = खादयेत्, अनियुक्तः सन् = नियोजनरहितोऽपि, प्रभाषी—प्रकर्षेण, भाषी = वक्ता, नृपाक्रोशकः—नृपस्य = राज्ञः, आक्रोशकः = निन्दकः, एकवासाः = एकमात्रवस्त्रधारकः, अभ्यक्तः = तैलाक्तशरीरम्, मुक्तकेशः = अबद्धशिरः, अवकुण्ठितः = कातरः, भीरुश्च, विचित्रिताङ्गः—विशेषेण चित्रितः = शवलितः, अङ्गम् = शरीरम्, यस्य सः, स्रग्वी = मालाधारी, परिधानस्य =

परिधेयवस्त्रस्य, विधूनकः = कम्पकः, शिरःप्रच्छादकः = अवगुण्ठितः, छिद्रान्वेषणतत्परः = परदोषदर्शने निरतः, आसङ्गी = व्यसनासक्तः, मुक्तवेशः = परित्यक्तपरिच्छदः, घ्राणकर्णाक्षिदर्शकः = नासिकाश्रोत्रनयनप्रदर्शनकारी, तथा दन्तोल्लेखनकः—दन्तानाम् = दशनानाम्, उल्लेखनकः = खनकः, तथा कर्णनासाविशोधकः = श्रवणघ्राणपरिशोधनकारी, राज्ञः = नृपस्य, समीपे = पार्श्वे, एतानि = पूर्वोक्तानि पञ्चाशत्, छलानि = दोषाः, सन्ति ॥७३-८२ ॥

**हिन्दी**–१. राह रोकने वाला, २. दूसरे को अनादर करने वाला, ३. चहारदीवारी फाँदने वाला, ४. प्याऊ को गंदा करने वाला, ५. निवासस्थान को नष्ट करने वाला, ६. खाई को पाटने वाला, ७. राजा के दुर्गुण को बतलाने वाला, ८. बिना पूछे अन्तःपुर में घुस जाना, ९. बिना पूछे ही किसी के निवासगृह में घुसने वाला, १०. भण्डारघर में घूसने वाला, ११. रसोईघर में झाँकने वाला, १२. भोजन करते समय किसी को एकटक निहारने वाला, १३. जानबूझ कर विष्टा, १४. पेशाब, १५. कफ एवं १६. हवा छोड़ने वाला, १७. राजा के सामने वीरासन में अकड़ कर बैठने वाला, १८. राजा के बैठने के आगे की जगह छेकनेवाला, १९. राजा से अधिक भड़कीली पोशाक पहन कर राजा के सामने आने वाला, २०. बिना तैनाती, खाशकर पकड़ा कर राजा के सामने आने वाला, २१. किसी के घर में सामने का दरवाजा छोड़कर पिछली राह घुसने वाला, २२. असमय किसी के घर जाने वाला, २३. अनकहे किसी के बिछावन पर सोने वाला, २४. बिना कहे किसी के आसन पर बैठने वाला, २५. बिना पूछे किसी के खडाऊँ अथवा जूते पहनने वाला, २६. राजा को सोने के लिए पलंग पर पहुँच जाने के बाद भी उनके सामने ठहरने वाला, २७. राजा के दुश्मन की सेवा करने वाला, २८. बिना कहे किसी के घर ठहर जाने वाला, २९. अनकहे किसी के कपड़े, ३०. जेवर या ३१. सोना लेने वाला, ३२. जबरदस्ती दूसरों के पान का बीड़ा चबाने वाला, ३३. बिना कहे भाषण देने वाला, ३४. राजा की निन्दा करने वाला, ३५. केवल एक वस्त्र पहन कर राजा के सामने जाने वाला, ३६. देह में तेल लगा कर जाने वाला, ३७. केश खोलकर सामने आने वाला, ३८. मुँह ढककर या भयभीत होकर सामने आने वाला, ३९. अङ्गों को विचित्र बनाकर सामने आने वाला, ४०. माला पहनकर जाने वाला, ४१. पहने हुए कपड़े को हिलाने वाला, ४२. शिर को ढकने वाला, ४३. दूसरों के दोषों को ढूंढने वाला, ४४. शराब आदि पीने वाला, ४५. वेशभूषा का परित्याग करने वाला, ४६. अपनी नाक, ४७. अपने कान तथा ४८. अपनी आँखों का प्रदर्शन करने वाला, ४९. दाँतों को कुरेदने वाला और ५०. कान का मैल तथा नाक से नकटी निकालने वाला—राजा के सामने ये पचास छल (दोष) माने जाते हैं ॥७३-८२ ॥

सम्प्रति पञ्चाशच्छलान्याह—**पथीत्यादि**। पथिभङ्गी रथ्याभङ्गकरः १, पराक्षेपी परस्य अन्यस्य आक्षेपकारी अवमाननाकरः २, प्राकारस्य उपरि लङ्घकः प्राचीरलङ्घनकारी ३, निपानस्य पानशालायाः तथा आयतनस्य आवासस्य विनाशी नाशकः ४-५, परिखाणां नगरवेष्टनीभूतजलाधारस्य पूरकः मृत्तिकाक्षेपादिति शेषः ६, राज्ञः छिद्रस्य दोषस्य प्रकाशकः ७, यश्च अनियुक्तः अननुमतः सन् अन्तःपुरं वासगृहं भाण्डागारं धनगृहं वा महानसं रन्धनशालां प्रविशति ८-११, यश्च भोजनं निरीक्षते भोजनदर्शनस्य निषिद्धत्वादिति भावः १२, विण्मूत्रश्लेष्मवातानां विष्ठामूत्रश्लेष्मणाम् अधोवातानाञ्च कामात् क्षेप्ता प्रयोप्ता १३-१६, नृपस्य अग्रतः समक्षं पर्य्यङ्कासनबन्धी वीरासनोपविष्टः १७, अग्रस्थानस्य सम्मुखावस्थानस्य विरोधकारी १८, नृपातिरिक्तवेशः

राजाधिकवेशधरः १९, तथा यः विधृतः विशेषेण धृतः न तु नियोगमात्रेणेति भावः, प्रविशेत् प्रभुसन्निधिमिति शेषः २०, यश्च अपद्वारेण द्वारव्यतिरिक्तेन मार्गेणेत्यर्थः, तथा अवेलायाम् अयथासमये इत्यर्थः, विशेत् परगृहमिति शेषः २१-२२, शय्यासने शय्यायाम् आसने च तथा पादुके इति नपुंसकनिर्देश आर्षः; पादुकायामित्यर्थः, शयनासनरोहणे शयने आसने उपवेशने रोहणे पादस्पर्शने च सर्वत्र परकीये इति बोद्धव्यम्, अननुमत्या तत्तत्कारीत्यर्थः २३-२५, यश्च आसन्नशयने शयनारूढे राज्ञि समीपतः सत्सन्निधौ तिष्ठति २६, राज्ञः विद्विष्टसेवी शत्रुसेवकः २७, अदत्तं विहितं गृहीतम् आसनम् अवस्थानं येन तथोक्तः अननुमत्या परगृहस्थायीत्यर्थः २८, अन्यस्य वस्त्राभरणयोः स्वर्णस्य च परिधायकः २९-३१, यश्च स्वयंग्राहेण बलेन ताम्बूलं परकीयमिति भावः, गृहीत्वा भक्षयेत् ३२, अनियुक्तः सन् प्रभाषी वक्ता ३३, नृपाक्रोशकः राजनिन्दकः ३४, एकवासाः एकवस्त्रः ३५, अभ्यक्तः तैलाक्तदेहः ३६, मुक्तकेशः अबद्धशिराः ३७, अवकुण्ठितः ३८, विचित्रिताङ्गः चित्रितशरीरः ३९, स्रग्वी ४०, परिधानस्य परिधेयवसनस्य विधूनकः कम्पकः ४१, शिरःप्रच्छादकः अवगुण्ठितः ४२, छिद्रान्वेषणतत्परः परदोषानुसन्धायी ४३, आसङ्गी व्यसनासक्तः ४४, मुक्तवेशः त्यक्तपरिच्छदः ४५, घ्राणकर्णाक्षिदर्शकः नासाकर्णनेत्राणां प्रदर्शनकारी ४६-४८, दन्तोल्लेखनकः दन्तानाम् उल्लेखनकारी ४९, तथा कर्णनासाविशोधकः ५०, राज्ञः समीपे एतानि पञ्चाशत् छलानि दोषाः सन्ति हिशब्दोऽवधारणार्थः ॥७३-८२॥

**आज्ञोल्लङ्घनकारित्वं स्त्रीवधो वर्णसङ्करः।**
**परस्त्रीगमनं चौर्य्यं गर्भश्चैव पतिं विना॥८३॥**
**वाक्पारुष्यमवाच्याद्यं दण्डपारुष्यमेव च।**
**गर्भस्य पातनं चैवेत्यपराधा दशैव तु॥८४॥**

**अन्वयः**—आज्ञोल्लङ्घनकारित्वं स्त्रीवधः वर्णसङ्करः परस्त्रीगमनं चौर्यं पतिं विना गर्भः वाक्पारुष्यम् अवाच्याद्यं दण्डपारुष्यं गर्भस्य पातनञ्च—एते तु दश अपराधाः॥८३-८४॥

**व्याख्या**—आज्ञायाः = आदेशस्य, उल्लङ्घनकारित्वम् = व्यतिक्रमत्वम्, स्त्रीवधः = नारीहत्या, वर्णसङ्करः = साङ्करिकः, परस्त्रीगमनम् = परदारानुरागी, चौर्य्यम् = तस्करत्वम्, पतिं विना गर्भः = अन्यपुरुषेण गर्भधारणम्, वाक्पारुष्यम् = कठोरवाक्यत्वम्, अवाच्याद्यम् = अकथनीयशब्दानां प्रयोगः, दण्डपारुष्यम् = कठोरप्रहारः, गर्भस्य = भ्रूणस्य, पातनम् = विनाशनम्, एते = पूर्वपरिगणिताः, दश = दशसंख्यकाः, अपराधाः = दोषाः, भवन्तीति॥८३-८४॥

**हिन्दी**—१. आज्ञा का उल्लंघन करना, २. नारी की हत्या करना, ३. विजातीय विवाह से वर्णसंकर पैदा करना, ४. परस्त्रीगामी होना, ५. चोरी करना, ६. पति के अलावा अन्य पुरुष से गर्भ धारण करना, ७. कठोर वचन बोलना, ८. नहीं बोलने योग्य बातें बोलना, ९. कठोर दण्ड देना और १०. गर्भपात करना—ये दस अपराध हैं॥८३-८४॥

**आज्ञेति। वागिति।** आज्ञाया उल्लङ्घनकारित्वम् आज्ञालङ्घनं १, स्त्रीवधः २, वर्णसङ्करः ३, परस्त्रीगमनं ४, चौर्य्यं ५, पतिं विना गर्भः अन्येनेति भावः ६, वाक्पारुष्यं ७, अवाच्याद्यम् अवक्तव्यवाक्यप्रयोगादि ८, दण्डपारुष्यं प्रहारः ९, गर्भस्य पातनञ्च १०, एते दश अपराधाः॥८३-८४॥

उत्कृती शस्यघाती चाप्यग्निदश्च तथैव च।
राज्ञो द्रोहप्रकर्त्ता च तन्मुद्राभेदकस्तथा ॥ ८५ ॥
तन्मन्त्रस्य प्रभेत्ता च बद्धस्य च विमोचकः।
अस्वामिविक्रयं दानं भागं दण्डं विचिन्वति ॥ ८६ ॥
पटहाघोषणाच्छादी द्रव्यमस्वामिकञ्च यत्।
राजावलीढद्रव्यं च यच्चैवाङ्गविनाशनम् ॥ ८७ ॥
द्वाविंशतिपदान्याहुर्नृपज्ञेयानि पण्डिताः ॥ ८८ ॥

**अन्वयः**—उत्कृती शस्यघाती तथैव अग्निदः राज्ञः द्रोहकर्त्ता तन्मुद्राभेदकः तथा तन्मन्त्रस्य प्रभेत्ता च बद्धस्य विमोचकः अस्वामिविक्रयं दानं भागं दण्डञ्च विचिन्वति, पटहाघोषणाच्छादी अस्वामिकं यत् द्रव्यं च राजावलीढद्रव्यं तथा अङ्गविनाशनम्—एतानि द्वाविंशतिपदानि नृपज्ञेयानि पण्डिताः आहुः ॥ ८५-८८ ॥

**व्याख्या**—उत्कृती = उद्वेजकः, शस्यघाती = शस्यनाशकः, अग्निदः = धान्यागारगृहादिषु चाग्निदायी, राज्ञः = नृपस्य, द्रोहकर्त्ता = विद्वेषी, तन्मुद्राभेदकः—तत् = तस्य नृपस्य, मुद्राभेदकः = राजकीयचिह्नविनाशकः, तस्य = नृपस्य, मन्त्रस्य = गुप्तरहस्यस्य, प्रभेत्ता = भेदकः, बद्धस्य = कारानिबद्धस्य, विमोचकः = मुक्तकारी, यः = पुरुषः, अस्वामिकम् = स्वामिविहीनम्, द्रव्यस्य = धनस्य, विक्रयम् = विपणनम्, दानम् = प्रत्यर्पणम्, भागम् = अंशम्, दण्डश्च = दमनश्च, विचिन्वति = अन्विच्छति, सः पटहाघोषणाच्छादी—पटहेन = डिण्डिभेण, यत् आघोषणम् = प्रख्यापणम्, तस्य आच्छादी = प्रच्छादनकारी, किञ्च अस्वामिकम् = अदायिकः, द्रव्यम् = धनम्, राजावलीढद्रव्यम् = नृपाधिकृतं धनम्, तथा अङ्गविनाशनम् = शरीरावयवविनाशकरणम्, एतानि = पूर्ववर्णितदशापराधसहितानि, द्वाविंशतिपदानि = द्वयाधिकविंशतिविवादस्थानानि, नृपेण = राज्ञा, ज्ञेयानि = बोध्यानि, इति, पण्डिताः = बुद्धिमन्तो जनाः, आहुः = कथयन्ति ॥ ८५-८८ ॥

**हिन्दी**—१. बेचैन करने वाला, २. फसल नष्ट करने वाला, ३. घर में आग लगाने वाला, ४. राजद्रोह करने वाला, ५. राजचिह्न को मिटाने वाला, ६. राजा के गुप्त रहस्य को प्रकाशित करने वाला, ७. कैदियों को जेल से भगाने वाला, ८. लावारिस वस्तुओं को बेचने वाला, ९. किसी के दान, हिस्सा या दण्ड को समाप्त कर देने वाला, १०. राजा ने जिसकी डुग्गी पिटवाई हो, उसे छिपाने वाला, ११. लावारिस धन लेने वाला तथा १२. किसी को काटकर अङ्गहीन बनाने वाला—पहले कहे गये दस अपराधों के साथ ये कुल बाईस राजा के द्वारा पद अर्थात् विवाद के स्थान बतलाये गये हैं, जिन्हें बुद्धिमानों को जानना चाहिए ॥ ८५-८८ ॥

**उत्कृतीत्यादि**। उत्कृती उद्वेजकः १, शस्यघाती शस्यनाशकः २, अग्निदः गृहादिषु अग्निदायी ३, राज्ञः द्रोहकर्त्ता अनिष्टकारकः ४, तन्मुद्राभेदकः तस्य राज्ञः मुद्राभेदकः चिह्ननाशकः ५, तस्य मन्त्रस्य प्रभेत्ता प्रकाशकः ६, बद्धस्य कारास्थितस्य विमोचकः विमोचनकारी ७, यः अस्वामिविक्रयं स्वामिशून्यस्य द्रव्यस्य विक्रयं दानं भागं दण्डश्च विचिन्वति अन्विच्छति सः ८, पटहेन वाद्यविशेषेण यत् आघोषणं तस्य आच्छादी गोपनकारकः ९, एतेषां कार्य्याणीति शेषः, किञ्च अस्वामिकं द्रव्यं १०, राजावलीढद्रव्यं राजग्रस्तम् अन्यस्वामिकं द्रव्यमित्यर्थः ११, तथा

अङ्गविनाशनम् अङ्गहानिकरणम् १२, एतानि पूर्वोक्तदशापराधसहितानि द्वाविंशतिपदानि विवादस्थानानि नृपेण ज्ञेयानि इति पण्डिताः आहुः कथयन्ति ॥ ८५-८८ ॥

**उद्धतः क्रूरवाग्वेशो गर्वितश्चण्ड एव हि।**
**सहासनश्चातिमानी वादी दण्डमवाप्नुयात् ॥ ८९ ॥**

**अन्वयः**—वादी उद्धतः क्रूरवाक् क्रूरवेशः गर्वितः चण्डः सहासनः अतिमानी च दण्डम् अवाप्नुयात् ॥ ८९ ॥

**व्याख्या**—वादी = अभियोगी, चेत् = यदि, उद्धतः = उद्दण्डः, क्रूरवाक् = तीक्ष्णभाषी, क्रूरवेशः = निर्दयकर्मकरणोपयोगिवेशः, गर्वितः = अहङ्कारी, चण्डः = प्रचण्डक्रोधी, सहासनः = विचारपतिना सह समानोपवेशने उपविष्टः, अतिमानी = अत्यन्ताभिमानी, भवेत्तदा, दण्डम् = दमनम्, अवाप्नुयात् = प्राप्नुयात् ॥ ८९ ॥

**हिन्दी**—जो अभियोगी उद्दण्ड स्वभाव वाला, कठोर वचन बोलने वाला, निर्दय वेश-भूषा वाला, गर्वीला, अत्यन्त क्रोधी, विचारपति के साथ उसी के आसन पर बैठने वाला तथा अति अभिमानी यदि हो तो उसे दण्ड देना चाहिए ॥ ८९ ॥

**उद्धत इति।** वादी उद्धतः कर्कशः, क्रूरवाक् निष्ठुरभाषी, क्रूरवेशः निष्ठुरकार्य्यकरणोपयोगिवेशः, गर्वितः चण्डः कोपनः सहासनः विचारपतिना सहासनोपविष्टः, अतिमानी च चेत् तदा दण्डम् अवाप्नुयात् ॥ ८९ ॥

**अर्थिना कथितं राज्ञे तदावेदनसंज्ञकम्।**
**कथितं प्राड्विवाकादौ सा भाषाखिलबोधिनी ॥ ९० ॥**
**स पूर्वपक्षः सभ्यादिस्तं विमृश्य यथार्थतः।**
**अर्थितः पूरयेद्धीनं तत्साक्ष्यमधिकं त्यजेत् ॥ ९१ ॥**

**अन्वयः**—अर्थिना राज्ञे यत् कथितं तत् आवेदनसंज्ञकं प्राड्विवाकादौ कथितम्, यत् सा अखिलबोधिनी भाषा सः पूर्वपक्षः उच्यते। सभ्यादिः अर्थितः सन् तं यथार्थतः विमृश्य तत् हीनं चेत् पूरयेत् अधिकञ्च तत् साक्ष्यं त्यजेत् ॥ ९०-९१ ॥

**व्याख्या**—अर्थिना = अभ्यर्थिना, राज्ञे = नृपाय, यत् कथितम् = लिखितम्, तत् = लेखपत्रम्, आवेदनम् = आवेदनसंज्ञकम्, भवति, यत्, प्राड्विवाकादौ = न्यायाधीशप्रभृतौ, कथितम् = वाचा निवेदितम्, सा = वाणी, अखिलबोधिनी = सर्वज्ञापिनी, भाषा इति कथिता, सः = तदेव, पूवपक्ष इत्युच्यते, सभ्यादिः = विचारार्थनियुक्तसांसदादयः, अर्थितः = याचितः सन्, तम् = पूर्वपक्षम्, यथार्थतः = तथ्यतः, विमृश्य = विचार्य, हीनम् = अल्पम्, चेत् = यदि, पूरयेत् = पूर्णं कुर्यात्, अधिकम् = विशेषम्, चेत्, तदा = तस्य पूर्वपक्षस्य, साक्ष्यम् = प्रेक्षकम्, त्यजेत् = परित्यागं कुर्यात् ॥ ९०-९१ ॥

**हिन्दी**—राजा के पास अभियोगी जो प्रार्थनापत्र प्रस्तुत करता है, उसे आवेदन अर्थात् दावा या अर्जी कहते हैं और जज के सामने वादी जो कुछ कहता है, उसे भाषा अर्थात् बयान कहते हैं। यह बयान सभी बातों को समझाने वाला होता है, इसे पूर्वपक्ष कहते हैं। जूरी प्रभृति उसी बयान पर यथार्थ रूप से विचार कर जो कमी हो उसे वादी से पूछकर उसे पूरा

कर ले और यदि अधिक हो तो गवाही के आधार पर उसे छोड़कर विचार करे ॥ ९०-९१ ॥

**अर्थिनेति। स इति।** अर्थिना राज्ञे यत् कथितं तत् आवेदनसंज्ञकम् आवेदनमिति कथितमित्यर्थः, प्राड्विवाकादौ कथितं यत् सा अखिलबोधिनी समग्रप्रबोधिका भाषा। स पूर्वपक्षश्च उच्यते इति शेषः। सभ्यादिः विचारालयनियुक्तः पुरुषादिः अर्थितः प्रार्थितः सन् अर्थिनेति शेषः, तं पूर्वपक्षं यथार्थतः विमृश्य विविच्य हीनं चेत् पूरयेत्, अधिकञ्च तत्साक्ष्यं तस्य पूर्वपक्षस्य साक्ष्यं त्यजेत् ॥ ९०-९१ ॥

**वादिनश्चिह्नितं साक्ष्यं कृत्वा राजा विमुद्रयेत् ॥ ९२ ॥**

**अन्वयः**—राजा साक्ष्यं वादिनः चिह्नितं कृत्वा विमुद्रयेत् ॥ ९२ ॥

**व्याख्या**—राजा = नृपः, साक्ष्यम् = प्रत्यक्षम्, वादिनः = अभ्यर्थिनः, चिह्नितम् = हस्ताक्षरितम्, कृत्वा = विधाय, विमुद्रयेत् = विशेषरूपेण तमावेदनं मुद्राङ्कितं कुर्यात् ॥ ९२ ॥

**हिन्दी**—उस बयान पर उसके अंगूठे का निशान लेकर राजा उस पर अपनी मुहर लगा दे। वादी का यह बयान भी एक तरह का साक्ष्य ही है ॥ ९२ ॥

**वादिन इति।** राजा साक्ष्यं वादिनः चिह्नितं कृत्वा विमुद्रयेत् विशेषेण मुद्राङ्कितं कुर्य्यात् ॥ ९२ ॥

**अशोधयित्वा पक्षं ये ह्युत्तरं दापयन्ति तान्।**
**रागाल्लोभाद् भयाद् वापि स्मृत्यर्थे वाधिकारिणः।**
**सभ्यादीन् दण्डयित्वा तु ह्यधिकारान्निवर्त्तयेत् ॥ ९३ ॥**

**अन्वयः**—ये अधिकारिणः रागात् लोभात् भयात् वा पक्षम् अशोधयित्वा उत्तरं दापयन्ति, तान् स्मृत्यर्थे दण्डयित्वा अधिकारात् निवर्त्तयेत् ॥ ९३ ॥

**व्याख्या**—ये = जनाः, अधिकारिणः = पदाधिकारिवर्गः, लोभात् = लिप्सायाः, रागात् = अनुरागात्, भयात् = भीत्याः, वा = अथवा, पक्षम् = पूर्वपक्षम्, अशोधयित्वा = संशोधनं कृतं विना, उत्तरम् = प्रतिपक्षात्प्रतिवचनम्, दापयन्ति = गृह्णन्ति, तान् = सांसदः, स्मृत्यर्थे = निन्दितं कृतमिदमिति स्मरणार्थम्, दण्डयित्वा = दमनं कृत्वा, अधिकारात् = सांसदपदात्, निवर्त्तयेत् = परावर्त्तयेदिति ॥ ९३ ॥

**हिन्दी**—जो सभासद प्रेम, लोभ या भय से वादीपक्ष का सही ढंग से जाँच किये बिना ही प्रतिवादी पक्ष से उत्तर दिलवाते हैं, उन्हें 'भविष्य में ऐसा न करें' इसकी स्मृति हेतु उन पदाधिकारी जूरी-पंचों को राजा पदच्युत कर दे ॥ ९३ ॥

**अशोधयित्वेति।** ये अधिकारिणः राजपुरुषाः रागात् लोभात् भयाद् वा पक्षं पूर्वपक्षम् अशोधयित्वा उत्तरं दापयन्ति तान् सभ्यादीन् स्मृत्यर्थे एतत् गर्हितं कृतमिति स्मरणार्थमित्यर्थः, दण्डयित्वा अधिकारात् तत्तत्पदान्निवर्त्तयेत् भ्रंशयेत् ॥ ९३ ॥

**ग्राह्याग्राह्यं विवादन्तु सुविमृश्य समाश्रयेत्।**
**सञ्जातपूर्वपक्षं तु वादिनं सन्निरोधयेत् ॥ ९४ ॥**
**राजाज्ञया सत्पुरुषैः सत्यवाग्भिर्मनोहरैः।**
**निरालसेङ्गितज्ञैश्च दृढशस्त्रास्त्रधारिभिः ॥ ९५ ॥**

अन्वयः—राजा विवादं ग्राह्याग्राह्यं सुविमृश्य समाश्रयेत्। सञ्जातपूर्वपक्षं वादिनम् आज्ञया सत्यवाग्भिः मनोहरैः निरालसैः इङ्गितज्ञैः दृढशस्त्रास्त्रधारिभिः सत्पुरुषैः सन्निरोधयेत् ॥ ९४-९५ ॥

**व्याख्या**—राजा = नृपः, विवादम् = कलहम्, ग्राह्याग्राह्यम्—ग्राह्यम् = ग्रहणीयम्, अग्राह्यम् = अस्वीकार्यम्, सुविमृश्य = सुष्ठुतया विचार्य, ग्राह्यं चेत्, समाश्रयेत् = सम्यक्प्रकारेण गृह्णीयात्। किञ्च सञ्जातपूर्वपक्षम् = कृतपूर्वपक्षम्, वादिनम्, आज्ञया = निजादेशेन, सत्यवाग्भिः = सत्यवादिभिः, मनोहरैः = सुदर्शनैः, निरालसैः = आलस्यरहितैः, इङ्गितज्ञैः = सङ्केतज्ञैः, दृढशस्त्रास्त्रधारिभिः = सबलसायुधैः, सत्पुरुषैः = सज्जनैः, सन्निरोधयेत् = आसेधयेत् ॥ ९४-९५ ॥

**हिन्दी**—राजा मुकदमा लेने योग्य है अथवा नहीं—इसका ठीक ढंग से विचार कर यदि योग्य हो तो उसे स्वीकार करे। फिर वादी का बयान जब पूरा हो जाय तब उसे अपनी आज्ञा से सत्यवादी, सुन्दर, तत्पर और इशारे को समझने वाले सबल हथियारबन्द सज्जन सिपाहियों से आगे कुछ कहने से रोकवा दे ॥ ९४-९५ ॥

**ग्राह्येति। राजेति।** राजा विवादं ग्राह्याग्राह्यं ग्राह्यम् अग्राह्यं वा सुविमृश्य सुविविच्य ग्राह्यञ्चेत् समाश्रयेत् गृह्णीयात्। किञ्च सञ्जातपूर्वपक्षं कृतपूर्वपक्षं वादिनम् आज्ञया स्वस्य आदेशेन सत्यवाग्भिः मनोहरैः निरालसैः इङ्गितज्ञैः दृढशस्त्रास्त्रधारिभिः सत्पुरुषैः सन्निरोधयेत् आसेधयेत् ॥ ९४-९५ ॥

**वक्तव्येऽर्थे ह्यतिष्ठन्तमुत्क्रामन्तं च तद्वचः।**
**आसेधयेद् विवादार्थी यावदाह्वानदर्शनम्।**
**प्रत्यर्थिनं तु शपथैराज्ञया वा नृपस्य च ॥ ९६ ॥**

**अन्वयः**—विवादार्थी वक्तव्ये अर्थे अतिष्ठन्तं तद्वचः उत्क्रामन्तं प्रत्यर्थिनं यावदाह्वानदर्शनं शपथैः वा नृपस्य आज्ञया आसेधयेत् ॥ ९६ ॥

**व्याख्या**—विवादार्थी = अभ्यर्थी जनः, वक्तव्ये = कथनीये, अर्थे = प्रयोजने, अतिष्ठन्तम् = न स्थितो भवन्तम्, तत् = तस्य, वचः = वचनम्, उत्क्रामन्तम् = अतिक्रामन्तम्, प्रत्यर्थिनम् = प्रतिवादिनम्, यावदाह्वानदर्शनम्—यावदित्यवधारणे, आह्वानदर्शनम् = आकारितावलोकनमात्रेण, शपथैः = प्रतिज्ञाभिः, वा = अथवा, नृपस्य = राज्ञः, आज्ञया = आदेशेन, आसेधयेत् = अवरोधयेत् ॥ ९६ ॥

**हिन्दी**—वादी यदि अपना वक्तव्य दे रहा हो या उसके वक्तव्य का अतिक्रमण कर बुलाने पर प्रतिवादी आ जाय तो उसे देखते ही 'सौगन्ध' दिलाकर या राजा की आज्ञा से रोक देना चाहिए ॥ ९६ ॥

**ववत्तव्ये इति।** विवादार्थी जनः वक्तव्ये अर्थे अतिष्ठन्तं तद्वचः तस्य वचनम् उत्क्रामन्तम् अतिक्रामन्तं प्रत्यर्थिनं यावदाह्वानदर्शनम् आह्वानानन्तरदर्शनमात्रेणेत्यर्थः, शपथैः वा नृपस्य आज्ञया आसेधयेत् अवरोधयेत् ॥ ९६ ॥

**स्थानसेधः कालकृतः प्रवासात् कर्मणस्तथा।**
**चतुर्विधः स्यादासेधो नासिद्धस्तं विलङ्घयेत् ॥ ९७ ॥**

**अन्वयः**—आसेधः चतुर्विधः स्यात्—स्थानसेधः, कालकृतः, प्रवासात् तथा कर्मणः। आसिद्धः तं न विलङ्घयेत् ॥९७॥

**व्याख्या**—आसेधः = अवरोधः, चतुर्विधः = चतुःप्रकारकः, स्यात् = भवेत्, तद्यथा—स्थानसेधः = **क्षेत्रीयावरोधः**, कालकृतः = समयसापेक्ष्यावरोधः, प्रवासात् = प्रवासजन्यावरोधः, तथा कर्मासेधः—**कर्मणा** = स्वकर्मणा, समुत्पनावरोधः, आसिद्धः = प्रतिरुद्धः। तथा, तम् = आसेधम्, न = नहि, **विलङ्घयेत्** = अतिक्रमेत् ॥९७॥

**हिन्दी**—आसेध अर्थात् 'रोक' चार तरह की होती है—स्थानजन्य रोक, समयसापेक्ष रोक, प्रवासजन्य रोक तथा स्वकर्मकृत रोक। प्रतिरुद्ध व्यक्ति इस रोक का अतिक्रमण न करे ॥९७॥

**स्थानासेध इति**। आसेधः चतुर्विधः—स्थानासेधः, कालकृतः, प्रवासात् प्रवासासेध इत्यर्थः, तथा कर्मणः कर्मासेध इत्यर्थः। आसिद्धः तथा अवरुद्धः जनः तम् आसेधं न विलङ्घयेत् ॥९७॥

**यस्त्विन्द्रियनिरोधेन व्याहारोच्छासनादिभिः।**
**आसेधयदनासेधैः स दण्ड्यो न त्वतिक्रमी ॥९८॥**

**अन्वयः**—यस्तु इन्द्रियनिरोधेन व्याहारेण उच्छासनादिभिः अनासेधैः आसेधयेत् सः दण्ड्यः, न तु अतिक्रमी ॥९८॥

**व्याख्या**—यः = पुरुषः, इन्द्रियनिरोधेन—इन्द्रियाणाम् = मलमूत्रादिद्वाराणाम्, निरोधेन = प्रतिरोधेन, व्याहारेण = निष्ठुरवचनेन, उच्छासनादिभिः = कठोरादेशादिभिः, अनासेधैः = अनर्गलावरोधैः, आसेधयेत् = वादिप्रतिवादिनावरोधयेत्, सः = आसेधकः, दण्ड्यः = दण्डनीयः, न तु, अतिक्रमी = आसेधातिक्रमणकारीति ॥९८॥

**हिन्दी**—यदि कोई मल-मूत्र त्याग कर निरोध से, कठोर वचनों से अथवा अनर्गल प्रशासन जैसे अयोग्य रोक लगाकर वादी या प्रतिवादी को राके तो ऐसे रोक लगाने वाला अधिकारी दण्डनीय होता है, न कि रोक नहीं मानने वाला व्यक्ति ॥९८॥

**य इति**। यस्तु इन्द्रियनिरोधेन इन्द्रियाणां मलमूत्रादिद्वाराणां निरोधेन व्याहारेण कटुवाक्येन उच्छासनादिभिः उत्कटशासनादिभिश्च अनासेधैः अयोग्यासेधप्रकारैरित्यर्थः, आसेधयेत् अवरोधयेत् वादिनं प्रतिवादिनं वा इति शेषः, सः दण्ड्यः दण्डनीयः, न तु अतिक्रमी एतद्वैपरीत्येन आसेधकारी न तु दण्ड्या इति भावः ॥९८॥

**आसेधकाल आसिद्ध आसेधं योऽतिवर्त्तते।**
**स विनेयोऽन्यथा कुर्वन्नासेद्धा दण्डभाग् भवेत् ॥९९॥**

**अन्वयः**—यः आसेधकाले आसिद्धः आसेधम् अतिवर्त्तते सः विनेयः। आसेद्धा च अन्यथा कुर्वन् दण्डभाक् भवति ॥९९॥

**व्याख्या**—यः = जनः, आसेधकाले = अवरोधसमये, आसिद्धः = प्रतिरुद्धः, तत्पश्चात्, आसेधम् = अवरोधम्, अतिवर्त्तते = उल्लङ्घयति, सः = असौ, विनेयः = दण्ड्यः। च = पुनः, आसेद्धा = प्रतिरोधकर्त्ताऽपि, अन्यथा = इतरथा, कुर्वन् = विदधन्, दण्डभाक् = दण्डभागी च, भवेत् = स्यात् ॥९९॥

**हिन्दी**—जो अवरोध के समय अवरुद्ध होकर फिर अवरोध का उल्लङ्घन करता है, वह

दण्डनीय होता है। फिर अनुचित रोक लगाने वाला पदाधिकारी भी दण्डभागी होता है ॥९९॥

**आसेधकाल इति।** यः आसेधकाले अवरोधकाले आसिद्धः अवरुद्धः आसेधम् अतिवर्त्तते लङ्घयतीत्यर्थः, सः विनेयः दण्ड्यः, आसेद्धा च अन्यथा कुर्वन् दण्डभाक् भवेत् ॥९९॥

**यस्याभियोगं कुरुते तत्त्वेनाशङ्कयाथवा।**
**तमेवाह्वानयेद्राजा मुद्रया पुरुषेण वा ॥ १०० ॥**

**अन्वयः**—तत्त्वेन अथवा आशङ्कया यस्य अभियोगं कुरुते, राजा मुद्रया वा पुरुषेण तम् एव आह्वानयेत् ॥१००॥

**व्याख्या**—तत्त्वेन = तथ्येन, अथवा = वा, आशङ्कया = सन्देहेन, यस्य = जनस्य, अभियोगम् = व्यवहारम्, कुरुते, राजा = नृपः, मुद्रया = स्वनामाङ्कितलेख्येन, वा = अथवा, पुरुषेण = राजपुरुषेण, तम् = अभियोगिनम् एव, आह्वानयेत् = आकारयेत् ॥१००॥

**हिन्दी**—वस्तुतः या संदेहवश जिसके ऊपर मुकदमा दायर किया गया हो, उसे ही राजकीय मुहर लगे पत्र द्वारा या सरकारी सेवक भेजकर न्यायालय में बुलाये ॥१००॥

**यस्येति।** तत्त्वेन याथार्थ्येन अथवा आशङ्कया सन्देहेन यस्य अभियोगं कुरुते, राजा मुद्रयां स्वनामाङ्कितलेख्येन वा पुरुषेण राजपुरुषेण तम् एव आह्वानयेत् आह्वयेदित्यर्थः ॥१००॥

**शङ्कासतां तु संसर्गादनुभूतकृतेस्तथा।**
**होढाभिदर्शनात् तत्त्वं विजानाति विचक्षणः ॥ १०१ ॥**

**अन्वयः**—असतां संसर्गात् तथा अनुभूतकृतेः होढाभिदर्शनात् विचक्षणः तत्त्वं विजानाति ॥१०१॥

**व्याख्या**—असताम् = दुर्जनानाम्, संसर्गात् = सम्पर्कात्, तथा अनुभूतकृतेः—अनुभूता = साक्षाज्ज्ञाता, या कृतिः = क्रिया, तथा शङ्का = सन्देहः, तथा होढाभिदर्शनात्—होढा = अपहृतद्रव्यम्, लोप्त्रम्, अभिदर्शनात् = तस्यावलोकनात्, विचक्षणः = विद्वज्जनः, तत्त्वम् = तथ्यम्, विजानाति = विशेषेणावगच्छतीति ॥१०१॥

**हिन्दी**—दुर्जनों के साथ सम्पर्क होने या अपराधी के किसी काम को देखकर अनुमान करके अभियुक्त पर अपराध की आशंका होती है और लुटे गये धन को देखकर बुद्धिमान् लोग अपराध की वास्तविकता को जान लेते हैं ॥१०१॥

**शङ्केति।** असतां दुर्जनानां संसर्गात् तथा अनुभूतकृतेः अनुभूता अनुमिता या कृतिः क्रिया तथा अनुमापककार्य्यादित्यर्थः, शङ्का तथा होढाभिदर्शनात् होढा लोप्त्रम् अपहृतद्रव्यमित्यर्थः, तस्य अभिदर्शनात् विचक्षणः विज्ञो जनः तत्त्वं निश्चयं विजानाति ॥१०१॥

**अकल्यबालस्थविरविषमस्थक्रियाकुलान् ।**
**कार्य्यातिपातिव्यसनिनृपकार्य्योत्सवाकुलान् ।**
**मत्तोन्मत्तप्रमत्तार्त्तभृत्यान् नाह्वानयेन्नृपः ॥ १०२ ॥**

**अन्वयः**—नृपः अकल्यबालस्थविरविषमस्थक्रियाकुलान् कार्यातिपातिव्यसनिनृपकार्योत्सवाकुलान् मत्तोन्मत्तप्रमत्तार्त्तभृत्यान् न आह्वानयेत् ॥१०२॥

**व्याख्या**—नृपः = राजा, अकल्यान् = रोगग्रस्तान्, बालान् = बालकान्, स्थविरान् = वृद्धान्,

विपमस्थान् = विपन्नान्, क्रियाकुलान्—अनेकाभिरनतिक्रमणीयाभिः क्रियाभिः, आकुलान् = व्यस्तान्, कार्यातिपातिनः = अभियोगकालेऽनुपस्थितान्, व्यसनिनः = सुरापानादिव्यसनासक्तान्, नृपकार्यैः = राजकृत्यैः, वा, उत्सवैः = अन्यसमारोहैः, आकुलान् = व्यस्तान्, मत्तान् = प्रमत्तान्, उन्मत्तान् = क्षिप्तान्, प्रमत्तान् = अनवधायिनः, आर्त्तान् = दुःखीजनान्, भृत्यान् = सेवकान्, न = नहि, आह्वानयेत् = आह्वयेत् ॥ १०२ ॥

**हिन्दी**—रोगी, बालक, बूढे, विषम स्थिति में फँसे, अनेक कार्यों में व्यस्त, मुकदमा दायर होने के समय गैरहाजिर, व्यसनी, राजा के या किसी अन्य महोत्सव में संलग्न, शराबी, पागल, असावधान तथा दुःखी—ऐसे सेवकों को अपराधी को बुलाने के लिए राजा कभी भी न भेजे ॥ १०२ ॥

**अकल्येति**। नृपः अकल्यान् रोगिणः बालान् शिशून् स्थविरान् वृद्धान् विषमस्थान् विपन्नान् क्रियाकुलान् बहुभिः क्रियाभिरनतिक्रमणीयाभिः आकुलान् व्यस्तान् कार्य्यातिपातिनः अभियोगकाले अनुपस्थितान् व्यसनिनः कामादिव्यसनासक्तान् नृपकार्य्यैः वा उत्सवैः आकुलान् मत्तान् सुरापानमत्तान् उन्मत्तान् क्षिप्तान् प्रमत्तान् अनवधायिनः आर्त्तान् तथा भृत्यान् न आह्वानयेत् ॥ १०२ ॥

न हीनपक्षां युवतीं कुले जातां प्रसूतिकाम्।
सर्ववर्णोत्तमां कन्यां नाज्ञातप्रभुकाः स्त्रियः ॥ १०३ ॥

**अन्वयः**—हीनपक्षां युवतीं कुले जातां प्रसूतिकां न सर्ववर्णोत्तमां कन्यां न अज्ञातप्रभुकाः स्त्रियः नृपः न आह्वानयेत् ॥ १०३ ॥

**व्याख्या**—हीनपक्षाम् = असहायाम्, युवतीम् = तरुणीम्, न = नहि, कुले = सद्वंशे, जाताम् = समुत्पन्नां कुलीनाम्, प्रसूतिकाम् = प्रसविनीम्, न सर्ववर्णोत्तमाम्—सर्वेषाम् = सकलानाम्, वर्णानाम् = जातीनाम्, उत्तमाम् = श्रेष्ठाम्, ब्राह्मणीम्, कन्याम् = बालिकाम्, न, अज्ञातप्रभुकाः—अज्ञातः = अविदितः, प्रभुः = पतिर्यासां तादृशीः, स्त्रियः = नार्यः, नृपः न आह्वानयेदिति ॥ १०३ ॥

**हिन्दी**—अनाथ युवती, कुलीन, प्रसूता, ब्राह्मण की कन्या या जिनके पतिओं का पता न हों—ऐसी स्त्रियों को राजा न्यायालय में न बुलाये ॥ १०३ ॥

**नेति**। हीनपक्षाम् अनाथां युवतीं, कुले जातां कुलीनां कन्यां, प्रसूतिकां प्रसविनीं सर्ववर्णोत्तमां सर्वजातिश्रेष्ठां कन्यां न, तथा अज्ञातः प्रभुः पतिर्यासां तादृशीः स्त्रियश्च न आह्वानयेदिति पूर्वेण सम्बन्धः ॥ १०३ ॥

निर्वेष्टुकामो रोगार्त्तो यियक्षुर्व्यसने स्थितः।
अभियुक्तस्तथान्येन राजकार्य्योद्यतस्तथा ॥ १०४ ॥
गवां प्रचारे गोपालाः शस्यावापे कृषीवलाः।
शिल्पिनश्चापि तत्कालमायुधीयाश्च विग्रहे ॥ १०५ ॥
अप्राप्तव्यवहारश्च दूतो दानोन्मुखो व्रती।
विषमस्थाश्च नासेध्या न चैतानाह्वयेन्नृपः ॥ १०६ ॥

**अन्वयः**—निर्वेष्टुकामः रोगार्त्तः यियक्षुः व्यसने स्थितः तथा अन्येन अभियुक्तः राजकार्योद्यतः गवां प्रचारे गोपालाः शस्यावापे कृषीवलाः तत्काले शिल्पिनः विग्रहे आयुधीयाः अप्राप्तव्यवहारः दूतः दानोन्मुखः व्रती तथा विषमस्थाः न आसेध्याः। नृपः एतान् न आह्वयेत् ॥ १०४-१०६ ॥

**व्याख्या**—निर्वेष्टुकामः = परिणयेच्छुः, रोगार्त्तः = व्याधिपीडितः, यियक्षुः = यज्ञकर्तुमिच्छुकः, व्यसने = विषये, स्थितः = आसक्तः, तथा अन्येन = भिन्नजनेन, अभियुक्तः = प्रत्यर्थी, राजकार्योद्यतः = नृपकर्मकर्तुमुद्यतः, गवाम् = धेनूनाम्, प्रचारे = चारणसमये, गोपालाः = गोचारकाः, शस्यावापे = धान्यवपनकर्मसमये, कृषीवलाः = कृषकाः, तत्काले = शिल्पकर्मकाले, शिल्पिनः, विग्रहे = युद्धे, आयुधीयाः = सैनिकाः, अप्राप्तव्यवहारः = ऊनषोडशवर्षः, दूतः = दौत्यकर्मणि नियुक्तः, दानोन्मुखः = उत्सर्जने समुद्यतः, व्रती = ब्रह्मचारी, तथा, विषमस्थाः = विपद्ग्रस्ताः जनाः, न = नहि, आसेध्याः = अवरोधनीयाः, नृपः = राजा, एतान् = पूर्वोक्तान् जनान्, न = नहि, आसेध्याः = अवरोधनीयाः ॥ १०४-१०६ ॥

**हिन्दी**—शादी के लिए तैयार, रोग से पीड़ित, यज्ञ करने के लिए उद्यत, विपद्ग्रस्त, दूसरों के द्वारा मुकदमे में फँसाया गया व्यक्ति, राजा के काम में लगे सेवक, गायों को चराते हुए अहीर, खेत में बीज बोते समय किसान, काम करते समय कारीगर, युद्ध में लड़ते समय हथियारबन्द सिपाही, कमसिन दूत, दान करने के लिए तैयार आदमी, ब्रह्मचारी या तापस तथा विपत्ति में फँसे लोग मुकदमे की तारीख के समय पेश करने योग्य नहीं होते हैं। अतः राजा इन्हें न बुलाये ॥ १०४-१०६ ॥

**निर्वेष्टुकाम इत्यादि**। निर्वेष्टुकामः विवाहार्थी, रोगार्त्तः यियक्षुः यागार्थी, व्यसने मृगयादौ स्थितः आसक्तः, अन्येन अभियुक्तः, राजकार्य्योद्यतः, गवां प्रचारे गोचारणकाले गोपालाः, शस्यावापे शस्यवपनकर्मकाले कृषीवलाः कर्षकाः, तत्काले शिल्पकर्मकाले शिल्पिनः, विग्रहे सङ्ग्रामकाले आयुधीयाः सैनिकपुरुषाः, अप्राप्तव्यवहारः ऊनषोडशवर्षः, दूतः दौत्यकार्य्योद्यतः, दानोन्मुखः दानकर्मणि उद्युक्तः, व्रती, वैधकर्मणि नियुक्तः तथा विषमस्थाः विपन्नाश्च जनाः न आसेध्याः न अवरोधनीयाः। नृपः एतान् निर्वेष्टुकामादींश्च न आह्वानयेत्। अत्र च आसेधांशे विधिराह्वानांशे अनुवादो विशेषबोधार्थ इति सुधीभिर्विभाव्यम् ॥ १०४-१०६ ॥

**नदीसन्तारकान्तारदुर्देशोपप्लवादिषु ।**
**आसिद्धस्तं परासेधमुत्क्रामन् नापराध्नुयात् ॥ १०७ ॥**

**अन्वयः**—नदीसन्तरणे कान्तारे दुर्देशे उपप्लवादिषु आसिद्धः तं परासेधम् उत्क्रामन् न अपराध्नुयात् ॥ १०७ ॥

**व्याख्या**—नदीसन्तरणे = तटीनीपारकरणे, कान्तारे = गहनवनमार्गे, दुर्देशे = दुर्गमक्षेत्रे, उपप्लवादिषु = राजोपद्रवादिषु, आसिद्धः = अवरुद्धो जनः, परासेधम्—परस्य = अन्यकृतस्य, आसेधम् = अवरोधम्, उत्क्रामन् = अतिक्रामन्, न = नहि, अपराध्नुयात् = अपराधी भवेदिति ॥ १०७ ॥

**हिन्दी**—नदी एवं दुर्गम जंगल पार करने की कठिनाई से किसी दुर्गम देश या उपद्रव में फँस जाने से यदि कोई मुकदमे की तारीख में उपस्थित न हो सके, तो अन्यकृत अवरोध मानकर उसे अपराधी नहीं मानना चाहिए ॥ १०७ ॥

**नदीति**। नदीसन्तरणे, कान्तारे दुर्गमवनमार्गे, दुर्देशे उपप्लवादिषु राजोपद्रवादिषु आसिद्धः जनः तं परासेधं परस्य आसेधं परकर्तृकमवरोधम् उत्क्रामन् अतिक्रामन् न अपराध्नुयात् न अपराधी भवेदित्यर्थः॥ १०७॥

**कालं देशं च विज्ञाय कार्य्याणां च बलाबलम्।**
**अकल्यादीनपि शनैर्यानैराह्वानयेन्नृपः॥ १०८॥**

**अन्वयः**—नृपः कालं देशं कार्याणाञ्च बलाबलं विज्ञाय अकल्यादीन् अपि यानैः शनैः आह्वानयेत्॥१०८॥

**व्याख्या**—नृपः = राजा, कालम् = समयम्, देशम् = स्थानविशेषम्, कार्याणाञ्च = अनुष्ठेय-कृत्याणाञ्च, बलाबलम् = गौरवलाघवम्, च, विज्ञाय = ज्ञात्वा, अकल्यादीनपि = व्याधिग्रस्तजन-प्रभृतीनपि, यानैः = वाहनैः, शनैः = मन्दं मन्दम्, आह्वानयेत् = आकारयेत्॥१०८॥

**हिन्दी**—समय, स्थान और काम की गुरुता एवं लघुता का विचार कर असमर्थ व्यक्ति को राजा धीरे-धीरे सवारी से बुलवाये॥१०८॥

**कालमिति**। नृपः कालं देशं कार्य्याणां बलाबलं गौरवलाघवञ्च विज्ञाय अकल्यादीन् रोगिप्रभृतीनपि यानैः शिविकादिभिः शनैः मन्दं मन्दम् आह्वानयेत्॥१०८॥

**ज्ञात्वाभियोगं येऽपि स्युर्वने प्रव्रजितादयः।**
**तानप्याह्वानयेद्राजा गुरुकार्य्येष्वकोपयन्॥ १०९॥**

**अन्वयः**—ये अभियोगं ज्ञात्वा प्रव्रजितादयः स्युः, राजा गुरुकार्येषु तानपि अकोपयन् आह्वानयेत्॥१०९॥

**व्याख्या**—ये = जनाः, अभियोगम् = विवादम्, ज्ञात्वा = विज्ञाय, वने = अरण्ये, प्रव्र-जितादयः = सन्यासिप्रभृतयः, आदिपदेनात्र वानप्रस्थब्रह्मचारिणोर्ग्रहणम्, स्युः = भवेयुरिति, राजा गुरुकार्येषु तानपि, अकोपयन् = अक्रोधयन्, सन्, आह्वानयेत् = आकारयेदिति॥१०९॥

**हिन्दी**—और जो लोग संन्यास ग्रहण कर अरण्यवासी बने हैं, उन पर भी यदि अभियोग लगे तो उन्हें भी सम्मानपूर्वक इस तरह बुलाना चाहिए कि उन्हें क्रोध न हों॥१०९॥

**ज्ञात्वेति**। ये जनाः अभियोगं ज्ञात्वा वने प्रव्रजितादयः सन्यासिधर्मावलम्बिप्रभृतयः आदिपदेन वानप्रस्थब्रह्मचारिणोर्ग्रहणम्, स्युः भवेयुः, राजा गुरुकार्य्येषु तान् अपि अकोपयन् सन् आह्वानयेत्॥१०९॥

**व्यवहारानभिज्ञेन ह्यन्यकार्य्याकुलेन च।**
**प्रत्यर्थिनार्थिना तज्ज्ञः कार्य्यः प्रतिनिधिस्तदा॥ ११०॥**

**अन्वयः**—प्रत्यर्थिना अर्थिना च व्यवहारानभिज्ञेन वा अन्यकार्याकुलेन तदा तज्ज्ञः प्रतिनिधिः कार्यः॥११०॥

**व्याख्या**—प्रत्यर्थिना = प्रतिवादिना, च = पुनः, अर्थिना = वादिना, व्यवहारानभिज्ञेन—व्यवहारे = अभियोगव्यापारे, अनभिज्ञेन = अनुभवशून्येन, वा = अथवा, अन्यकार्याकुलेन = कार्यान्तरव्यस्तेन, सता तदा, तज्ज्ञः = कार्यज्ञः, प्रतिनिधिः = प्रतिपुरुषः, कार्यः = विधेयः॥११०॥

**हिन्दी**—मुकदमा लड़ने की जानकारी नहीं रहने के कारण या किसी अन्य कार्य में व्यस्तता के कारण यदि कोई चाहे तो अपना प्रतिनिधि भेज सकता है ॥ ११० ॥

**व्यवहारानभिज्ञेनेति।** प्रत्यर्थिना प्रतिवादिना अर्थिना वादिना च व्यवहारानभिज्ञेन व्यवहारे अभियोगव्यापारे अनभिज्ञेन अविचक्षणेन वा अन्यकार्य्याकुलेन कार्य्यान्तरासक्तेन सता तदा तज्ज्ञः व्यवहारज्ञः प्रतिनिधिः कार्य्यः ॥ ११० ॥

**अप्रगल्भजडोन्मत्तवृद्धस्त्रीबालरोगिणम् ।**
**पूर्वोत्तरं वदेद् बन्धुर्नियुक्तो वाथवा नरः ॥ १११ ॥**

**अन्वयः**—बन्धुः अथवा नियुक्तः नरः अप्रगल्भजडोन्मत्तवृद्धस्त्रीबालरोगिणं पूर्वोत्तरं वदेत् ॥ १११ ॥

**व्याख्या**—बन्धुः = सजातीयः, अथवा = वा, नियुक्तः = नियोजितः, नरः = प्रतिनिधिपुरुषः, अप्रगल्भानाम् = अकुशलानाम्, जडानाम् = मन्दबुद्धीनाम्, उन्मत्तानाम् = विक्षिप्तानाम्, वृद्धानाम् = स्थविराणाम्, स्त्रीणाम् = नारीणाम्, बालानाम् = शिशूनाम्, रोगिणाम् = व्याधिग्रस्तानाम्, पूर्वोत्तरम् = अभियोगं प्रत्यभियोगञ्च, वदेत् = कथयेत् ॥ १११ ॥

**हिन्दी**—बेवकूफ, मन्दबुद्धि, पागल, बूढे, औरत, बच्चे और रोगी—उनका पूर्वपक्ष हो या उत्तर-पक्ष, इनके बन्धु या इनके द्वारा प्रतिनियुक्त प्रतिनिधि उपस्थित करे ॥ १११ ॥

**अप्रगल्भेति।** बन्धुः पितृस्वस्त्रीयादिः अथवा नियुक्तः प्रतिनिधित्वेनेति भावः, नरः अप्रगल्भानाम् अचतुराणां जडानाम् उन्मत्तानां वृद्धानां स्त्रीणां बालानां रोगिणाञ्च पूर्वोत्तरम् अभियोगं प्रत्यभियोगञ्च वदेत् ॥ १११ ॥

**पिता माता सुहृद् बन्धुर्भ्राता सम्बन्धिनोऽपि च।**
**यदि कुर्य्युरुपस्थानं वादं तत्र प्रवर्त्तयेत् ॥ ११२ ॥**

**अन्वयः**—पिता माता सुहृद् बन्धुः भ्राता च सम्बन्धिनोऽपि यदि उपस्थानं कुर्युः, तदा तत्र वादं प्रवर्त्तयेत् ॥ ११२ ॥

**व्याख्या**—पिता = जनकः, माता = जननी, सुहृद् = मित्रम्, बन्धुः = ज्ञातयः, भ्राता = सोदरः, च = पुनः, सम्बन्धिनः = सम्बन्धविशिष्टाः, यदि = चेत्, उपस्थानम् = अभियोगार्थमुपागमनम्, कुर्युः = विधेयुः, तदा = तर्हि, तत्र = तस्मिन् न्यायालये, वादम् = अभियोगम्, प्रवर्त्तयेत् = सञ्चालयेत् ॥ ११२ ॥

**हिन्दी**—मुद्दई के माँ, बाप, भाई, मित्र या सम्बन्धी दावे को सही ढंग से कह सके तो मुकदमे की काररवाई शुरू कर देनी चाहिए ॥ ११२ ॥

**पितेति।** पिता, माता, सुहृत्, बन्धुः, भ्राता अथवा सम्बन्धिनः यदि उपस्थानम् अभियोगादेरुपस्थितिं कुर्य्युः तदा तत्र वादं विचारं प्रवर्त्तयेत् चालयेत् ॥ ११२ ॥

**यः कश्चित् कारयेत् किञ्चिन्नियोगाद् येन केनचित्।**
**तत् तेनैव कृतं ज्ञेयमनिवार्य्यं हि तत् स्मृतम् ॥ ११३ ॥**

**अन्वयः**—येन केनचित् नियोगात् यः कश्चित् किञ्चित् कार्यं कारयेत्, तत् तेनैव कृतं ज्ञेयम्। तत् अनिवार्यं स्मृतम् ॥ ११३ ॥

**व्याख्या**—येन केनचित् = येन केनाऽपि जनेन, नियोगात् = प्रतिनिधित्वात्, यः कश्चित् = यः कोऽपि जनः, किञ्चित् = किमपि, कार्यम् = व्यवहारम्, कारयेत् = निष्पादनं कारयेत्, तत् = कर्म, तेनैव = प्रेरकेनैव, कृतम् = सम्पादितम्, ज्ञेयम् = बोध्यम्। तत् = कृत्यम्, अनिवार्यम् = अपरिहार्यम्, स्मृतम् = कथितम् ॥ ११३ ॥

**हिन्दी**—यदि कोई किसी को अपना प्रतिनिधि बनाकर जो कुछ उससे करवाता है तो वह काम उसी का किया हुआ समझना चाहिए। इसे बदला नहीं जा सकता है ॥ ११३ ॥

**य इति**। येन केनचित् जनेन नियोगात् यः कश्चित् जनः किञ्चित् कार्य्यं कारयेत् तत् तेनैव नियोजकेनेत्यर्थः, कृतं ज्ञेयम्। तत् नियुक्तकृतम् अनिवार्य्यं ग्राह्यमित्यर्थः स्मृतम् ॥ ११३ ॥

**नियोगितस्यापि भृतिं विवादात् षोडशांशिकीम्।**
**विंशत्यंशां तदर्द्धां वा तदर्द्धां च तदर्द्धिकाम् ॥ ११४ ॥**

**अन्वयः**—नियोगितस्य भृतिं विवादात् षोडशांशिकीं विंशत्यंशां तदर्द्धां वा तदर्द्धां च तदर्द्धिकां दद्यात् ॥ ११४ ॥

**व्याख्या**—नियोगितस्य = व्यवहारदर्शकपदेन नियुक्तस्य जनस्य, भृतिम् = पारिश्रमिकम्, विवादात् = विवादीयधनात्, षोडशांशिकीम् = षोडशांशपरिमिताम्, विंशत्यंशाम् = विंशतिभागमिताम्, तदर्द्धाम् = दशभागमिताम्, तदर्द्धाम् = पञ्चमभागपरिमिताम्, तदर्द्धाम् = सार्द्धद्वयभागमिताम्, वा = अथवा, कार्यस्य बलाबलत्वं विचार्येत्यर्थे वैकल्पम् ॥ ११४ ॥

**हिन्दी**—मुकदमे में बहाल किये गये वकील की फीस मुकदमे की हैसियत से सोलहवें हिस्से के बराबर या बीसवें, दशवें पाँचवें या ढाई हिस्से के बराबर देना चाहिए ॥ ११४ ॥

**नियोगितस्येति**। नियोगितस्य नियुक्तस्य भृतिं वेतनं विवादात् विवादीयधनात् षोडशांशिकीं षोडशभागमितां विंशत्यंशां विंशभागैकभागमितां तदर्द्धां दशमभागपरिमितां तदर्द्धां पञ्चमभागमितां तदर्द्धिकां सार्द्धद्वितीयभागसम्मतां वा कार्य्यगौरवलाघवापेक्षो विकल्प इति बोध्यम्। दद्यादिति अध्याहृतेन क्रियापदेन सम्बन्धः ॥ ११४ ॥

**यथा द्रव्याधिकं कार्य्यं हीना हीना भृतिस्तथा।**
**यदि बहुनियोगी स्यादन्यथा तस्य पोषणम् ॥ ११५ ॥**

**अन्वयः**—यदि बहुनियोगी स्यात् तदा कार्यं यथा द्रव्याधिकं तथा हीना हीना भृतिः। अन्यथा तस्य पोषणं कार्यम् ॥ ११५ ॥

**व्याख्या**—यदि = चेत्, बहुनियोगी = अनेकजननियुक्तकारी, स्यात् = भवेत्, तदा कार्यम् = कृत्यम्, यथा = येन रूपेण, द्रव्याधिक्यम् = अधिकधनसमन्वितम्, तदा हीना = अल्पा, हीना = तदपि स्वल्पा, भृतिः = पारिश्रमिकीम्, कार्या। अन्यथा = इतरथा, तस्य = नियुक्तस्य, पोषणम् = प्रतिपालनम्, कार्यम् ॥ ११५ ॥

**हिन्दी**—यदि नियोगियों की संख्या बहुत अधिक हो तो फीस कम-कम कर देना चाहिए। अन्यथा वकील का पालन-पोषण करना चाहिए ॥ ११५ ॥

**यथेति**। यदि बहुनियोगी बहुजननियुक्तकारी स्यात् तदा कार्य्यं यथा द्रव्याधिकम् अधिकद्रव्ययुक्तं, तथा हीना हीना भृतिः कार्य्या इति शेषः, अन्यथा अधिकधनाभियोगे बहुभ्यः

पूर्वोक्तांशरूपभृतिदाने बहुधनक्षयसम्भवादिति भावः। अन्यथा वेतनदानाशक्तौ तस्य नियुक्तस्य पोषणं प्रतिपालनं कार्य्यमिति शेषः॥ ११५ ॥

**धर्मज्ञो व्यवहारज्ञो नियोक्तव्योऽन्यथा न हि।**
**अन्यथा भृतिगृह्णन्तं दण्डयेच्च नियोगिनम्॥ ११६ ॥**

**अन्वयः**—व्यवहारज्ञः धर्मज्ञः नियोक्तव्यः, अन्यथा न हि। अन्यथा भृतिगृह्णन्तं नियोगिनं दण्डयेत्॥ ११६ ॥

**व्याख्या**—व्यवहारज्ञः = अभियोगादिकर्मकुशलो जनः, धर्मज्ञः = धर्मविद्, नियोक्तव्यः = सम्भाषकपदेन नियोजनीयः, अन्यथा = पूर्वोक्तगुणवर्जितो जनः प्रतिनिधिपदेन, न हि = नास्त्येव नियोक्तव्य इति। किञ्च अन्यथा = असङ्गतरूपेण, भृतिगृह्णन्तम् = पारिश्रमिकस्वीकुर्वन्तं सम्भाषकम्, नियोगिनम् = नियुक्तं जनम्, दण्डयेत् = दण्डं दद्यात्॥ ११६ ॥

**हिन्दी**—विधि-विशेषज्ञ धार्मिक व्यक्ति को वकील के पद पर नियुक्त करना चाहिए। वकील यदि अधिक फीस ले तो राजा को उसे दण्ड देना चाहिए॥ ११६ ॥

**धर्मज्ञ इति**। व्यवहारज्ञः अभियोगादिव्यापारकुशलः जनः धर्मज्ञः धार्मिकश्चेत् नियोक्तव्यः प्रतिनिधित्वेनेति भावः। अन्यथा अधार्मिकत्वे इत्यर्थः, न हि नैवं नियोक्तव्य इत्यर्थः। किञ्च अन्यथा अयुक्तरूपेणेत्यर्थः, भृतिगृह्णन्तं वेतनम् आददानम् अत्र समासस्त्वार्षः। नियोगिनं नियुक्तं प्रतिनिधिमित्यर्थः, दण्डयेच्च राजेति शेषः॥ ११६ ॥

**कार्य्यो नित्यो नियोगी न नृपेण स्वमनीषया।**
**लोभेन त्वन्यथा कुर्वन् नियोगी दण्डमर्हति॥ ११७ ॥**

**अन्वयः**—नृपेण स्वमनीषया नित्यं नियोगी न कार्यः। नियोगी लोभेन अन्यथा कुर्वन् दण्डम् अर्हति॥ ११७ ॥

**व्याख्या**—नृपेण = राज्ञा, स्वमनीषया—स्वस्य = आत्मनः, मनीषा = बुद्धिः, तया = आत्म-बुद्ध्या, नित्यम् = सततम्, नियोगी = नियुक्तम्, न = नहि, कार्यः = विधेयः। नियोगी = नियुक्तः, लोभेन = लिप्सया, अन्यथा कुर्वन् = नियुक्तकार्यमतिक्रामन्, दण्डम् = दमनम्, अर्हति = योग्यो भवति॥ ११७ ॥

**हिन्दी**—राजा अपनी ही बुद्धि से विचार कर सदैव मुकदमे में प्रतिनिधि नियुक्त न करे। क्योंकि लोभवश प्रतिनिधि यदि कुछ गलत करे तो वह दण्डनीय होता है॥ ११७ ॥

**कार्य्य इति**। नृपेण स्वमनीषया निजबुद्ध्या नित्यं सततं नियोगी नियुक्तः न कार्य्यः विवादिनैव कार्य्य इत्यर्थः। नियोगी लोभेन अन्यथा कुर्वन् नियुक्तकार्य्यमतिक्रामन् दण्डमर्हति दण्डनीयो भवतीत्यर्थः॥ ११७ ॥

**यो न भ्राता न च पिता न पुत्रो न नियोगकृत्।**
**परार्थवादी दण्ड्यः स्याद् व्यवहारेषु विब्रुवन्॥ ११८ ॥**

**अन्वयः**—यः भ्राता न, पिता न, पुत्रः न, नियोगकृत् च न; सः चेत् परार्थवादी व्यवहारेषु विब्रुवन् दण्ड्यः स्यात्॥ ११८ ॥

**व्याख्या**—यः = जनः, भ्राता = सोदरः, न = नहि, भवति, पिता = जनकः, न = नहि, पुत्रः = जातः, न = नहि, नियोगकृत् = नियोगी, अपि न, विवादिनेति, सः = असौ, यदि, परार्थवादी—परार्थे = अन्यार्थे, वादी = वक्ता सन्, व्यवहारे = अभियोगे, विब्रुवन् = विरुद्धं वदन्, विपरीतवक्ता भवति, तदा सः दण्ड्यः = दण्डनीयः, स्यात् = भवेत् ॥ ११८ ॥

**हिन्दी**—जो भाई, बाप, बेटा या वकील से भिन्न व्यक्ति होकर दूसरों के लिए कुछ कहता है या मुकदमे में विपरीत बातें करता है, वह दण्डनीय होता है ॥ ११८ ॥

**य इति**। यः भ्राता न, पिता न, पुत्रः न, नियोगकृत् नियुक्तश्च न विवादिनां इति शेषः, सः चेत् परार्थवादी परार्थे अन्यार्थे वादी सन् व्यवहारेषु विब्रुवन् विरुद्धं वदन् विरुद्धवादी भवतीत्यर्थः, तदा दण्ड्यः स्यात् ॥ ११८ ॥

**तदधीनकुटुम्बिन्यः स्वैरिण्यो गणिकाश्च याः।**
**निष्कुला याश्च पतितास्तासामाह्वानमिष्यते ॥ ११९ ॥**

**अन्वयः**—याः तदधीनकुटुम्बिन्यः स्वैरिण्यः गणिकाः निष्कुलाः तथा याश्च पतिताः तासाम् आह्वानम् इष्यते ॥ ११९ ॥

**व्याख्या**—याः = नार्यः, तदधीनकुटुम्बिन्यः—तत् = तस्याः, अधीनाः = आश्रिताः, कुटुम्बिनः = परिजनाः, परिजनपरिपालिन्याः याः नार्यः इति भावः, स्वैरिण्यः = स्वेच्छाचारिण्यः, गणिकाः = वेश्याः, निष्कुलाः = कुलहीनाः, तथा याश्च = स्त्रियः, पतिताः = समाजात् बहिष्कृताः अधमाः, नार्यः तासाम् = एवंविधानां नारीणाम्, आह्वानम् = न्यायालये आकारणम्, इष्यते = वाञ्छति ॥ ११९ ॥

**हिन्दी**—जो स्त्रियाँ स्वयं कमाकर परिवार का पालन करती हैं, स्वेच्छाचारिणी या वेश्यावृत्ति करने वाली हैं या समाज से बहिष्कृता या कुलहीन हैं, उन्हें न्यायालय में उपस्थित होने का राजा आदेश दे सकता है ॥ ११९ ॥

**तदधीनेति**। याः स्त्रियः तदधीनकुटुम्बिन्यः स्वाधीनपरिज़नाः, स्वैरिण्यः स्वेच्छावर्त्तिन्यः गणिकाः वेश्या निष्कुलाः अकुलीनाश्च तथा याश्च पतिताः ब्रह्महत्यादिपञ्चविधान्यतमपापकारिण्यः, तासाम् आह्वानं विचारालये इति भावः इष्यते ॥ ११९ ॥

**प्रवर्त्तयित्वा वादन्तु वादिनौ तु मृतौ यदि।**
**तत्पुत्रो विवदेत् तज्ज्ञो ह्यन्यथा तु निवर्त्तयेत् ॥ १२० ॥**

**अन्वयः**—वादं प्रवर्त्तयित्वा वादिनौ यदि मृतौ तदा तज्ज्ञः तत्पुत्रः विवदेत्, अन्यथा तु निवर्त्तयेत् ॥ १२० ॥

**व्याख्या**—वादम् = अभियोगम्, प्रवर्त्तयित्वा = व्यवहारसञ्चालनं कृत्वा, वादिनौ = वादिप्रतिवादिनौ, यदि = चेत्, मृतौ = उपरतौ, तदा, तज्ज्ञः = व्यवहारज्ञः, तत् = तस्य, पुत्रः = सुतः, विवदेत् = अभियोगं सञ्चालयेत्, अन्यथा = इतरथा, निवर्त्तयेत् = विरमेत् ॥ १२० ॥

**हिन्दी**—मुकदमा दायर कर यदि वादी या प्रतिवादी मर जाय तो उसका बेटा मुकदमा लड़ सकता है। यदि वह मुकदमा लड़ना न चाहे तो राजा उस मुकदमे को खारिज कर सकता है ॥ १२० ॥

**प्रवर्त्तयित्वेति**। वादं विवादं प्रवर्त्तयित्वा प्रक्रम्य वादिनौ अर्थिप्रत्यर्थिनौ यदि मृतौ भवतः, तदा तज्ज्ञः विवादज्ञः तत्पुत्रः तस्य वादिनः प्रतिवादिनश्च पुत्रः विवदेत् वादं चालयेत् अन्यथा

अनभिज्ञत्वे तु निवर्त्तयेत् विरमेदित्यर्थः ॥ १२० ॥

**मनुष्यमारणे स्तेये परदाराभिमर्शने।**
**अभक्ष्यभक्षणे चैव कन्याहरणदूषणे ॥ १२१ ॥**
**पारुष्ये कूटकरणे नृपद्रोहे च साहसे।**
**प्रतिनिधिर्न दातव्यः कर्त्ता तु विवदेत् स्वयम् ॥ १२२ ॥**

**अन्वयः**—मनुष्यमारणे स्तेये परदाराभिमर्शने अभक्ष्यभक्षणे कन्याहरणदूषणे पारुष्ये कूटकरणे नृपद्रोहे तथा साहसे प्रतिनिधिः न दातव्यः, कर्त्ता स्वयं विवदेत् ॥ १२१-१२२ ॥

**व्याख्या**—मनुष्यमारणे = नरहत्यायाम्, स्तेये = चौर्ये, परदाराभिमर्शने = अन्यस्त्रीबलात्कारे, अभक्ष्यभक्षणे = निषिद्धभोजनकरणे, कन्याहरणदूषणे—कन्यायाः = अनूढायाः, हरणे = अपहरणे, वा, पारुष्ये = कठोरवचने दण्डे च, कूटकरणे = जालानुष्ठाने, नृपद्रोहे = राजविद्रोहकरणे, तथा साहसे = दुर्वृत्तकरणे, विवादविषये प्रतिनिधिः = प्रतिपुरुषः, न = नहि, दातव्यः = देयः, प्रत्युत कर्त्ता = निष्पादकः, स्वयम् = आत्मनैव, विवदेत् = व्यवहारं कुर्यात् ॥ १२१-१२२ ॥

**हिन्दी**—नरहत्या, चोरी, बलात्कार, अभक्ष्यभक्षण, कन्यापहरण, कठोर वचन का प्रयोग, जालसाजी, राजद्रोह तथा डकैती जैसे मुकदमे में प्रतिनिधि नहीं देना चाहिए; प्रत्युत कर्त्ता स्वयं कचहरी में उपस्थित होकर मुकदमा लड़े ॥ १२१-१२२ ॥

**मनुष्यमारणे इति। पारुष्ये इति।** मनुष्यमारणे नरहत्यायां स्तेये चौर्य्ये, परदाराभिमर्षणे परस्त्रीबलात्कारे, अभक्ष्यभक्षणे, कन्याहरणदूषणे कन्यायाः अनूढायाः हरणे वा, पारुष्ये वाक्पारुष्यदण्डपारुष्योभयरूपे, कूटकरणे जालानुष्ठाने नृपद्रोहे राजानिष्टकरणे तथा साहसे दस्युवृत्त्यादौ विवादविषये प्रतिनिधिः न दातव्यः कर्त्ता तु कर्त्ता एव स्वयं विवदेत् ॥ १२१-१२२ ॥

**आहूतो यत्र नागच्छेद् दर्पाद् बन्धुबलान्वितः।**
**अभियोगानुरूपेण तस्य दण्डं प्रकल्पयेत् ॥ १२३ ॥**

**अन्वयः**—यत्र आहूतः बन्धुबलान्वितः दर्पात् न आगच्छेत्, तस्य अभियोगानुरूपेण दण्डं प्रकल्पयेत् ॥ १२३ ॥

**व्याख्या**—यत्र = यस्मिन् विवादे, आहूतः = आकारितः सन्नपि, बन्धुबलान्वितः = बान्धवशक्तिसम्पन्नो जनः, दर्पात् = गर्वात्, न = नहि, आगच्छेत् = नृपाहूतोऽपि न्यायालये न समागच्छेत्, तस्य = अनागतस्यापराधिनः, अभियोगानुरूपेण—अभियोगस्य = विवादस्य, अनुरूपेण = अनुसारेण, तस्य दण्डम्, प्रकल्पयेत् = प्रयच्छेत् ॥ १२३ ॥

**हिन्दी**—किन्तु उक्त मुकदमे में अपराधी अपने बन्धुबल के घमण्ड से राजा के बुलाने पर भी न्यायालय में न उपस्थित न हो, तो उसके अपराध के मुताबिक राजा उसे दण्ड दे अर्थात् एकतरफा डिग्री दे ॥ १२३ ॥

**आहूत इति।** यत्र विवादे विषये आहूतः राज्ञेति शेषः, बन्धुबलान्वितः बन्धुबलसहायवान् जनः दर्पात् अहङ्कारात् न आगच्छेत् विचारालयमिति शेषः, तस्य अनागतस्य जनस्य अभियोगानुसारेण अभियोगस्य गौरवलाघवापेक्षया इत्यर्थः, दण्डं प्रकल्पयेत् ॥ १२३ ॥

दूतेनाह्वानितं प्राप्ताधर्षकं प्रतिवादिनम्।
दृष्ट्वा राज्ञा तयोश्चिन्त्यो यथार्हप्रतिभूस्त्वतः ॥ १२४ ॥

**अन्वयः**—दूतेन आह्वानितं प्राप्ताधर्षकः प्रतिवादिनं दृष्ट्वा राज्ञा तयोः यथार्हप्रतिभूः चिन्त्यः ॥ १२४ ॥

**व्याख्या**—दूतेन = नृपसन्देशहरेण, आह्वानितम् = आकारितम्, प्राप्ताधर्षकम् = पीडाप्राप्तम् अभ्यर्थिनम्, तथा = तेनैव रूपेण, प्रतिवादिनम् = प्रत्यर्थिनम्, दृष्ट्वा = अवलोक्य, अतः = अस्मात्कारणात्, राज्ञा = नृपेण, तयोः = वादिनोः, यथार्हप्रतिभूः = यथायोग्यप्रतिरूपः, चिन्त्यः = विचारणीयः ॥ १२४ ॥

**हिन्दी**—दूत के द्वारा बुलाने से आये हुए अपराधी या प्रतिवादी को देखकर राजा उन दोनों के लिए योग्य जमानतदार को सोच-समझ कर स्वीकार करे ॥ १२४ ॥

**दूतेनेति**। दूतेन राजवार्त्ताहरेण आह्वानितं कृताह्वानं प्राप्ताधर्षकं प्राप्तपीडं वादिनमित्यर्थः, तथा प्रतिवादिनं दृष्ट्वा अतः अस्मात् परमित्यर्थः, राज्ञा तयोः वादिनोः यथार्हप्रतिभूः यथायोग्यप्रतिरूपः चिन्त्यः ॥ १२४ ॥

दास्याम्यदत्तमेतेन दर्शयामि तवान्तिके।
एनमाधिं दापयिष्ये ह्यस्मात्ते न भयं क्वचित् ॥ १२५ ॥
अकृतञ्च करिष्यामि ह्यनेनायञ्च वृत्तिमान्।
अस्तीति न च मिथ्यैतदङ्गीकुर्य्यादतन्द्रितः ॥ १२६ ॥
प्रगल्भो बहुविश्वस्तानधीनो विश्रुतो धनी।
उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्य्यनिर्णये ॥ १२७ ॥

**अन्वयः**—अहम् एतेन अदत्तं दास्यामि, एनं तव अन्तिके दर्शयामि, एनम् आधिं दापयिष्ये, अस्मात् क्वचित् ते भयं न, अनेन अकृतं कार्यम् अहं करिष्यामि, अयञ्च वृत्तिमान् अतन्द्रितः अस्ति—इति एतत् न च मिथ्या अङ्गीकुर्यात्। प्रगल्भः बहुविश्वस्तः अनधीनः विश्रुतः धनी तथा समर्थः प्रतिभूः उभयोः कार्यनिर्णये ग्राह्यः ॥ १२५-१२७ ॥

**व्याख्या**—अहम् = प्रतिभूकर्त्ता, एतेन = वादिना वा प्रतिवादिना, अदत्तम् = अनर्पितम्, दास्यामि = प्रयच्छिष्यामि, अहम् एनम् = वादिनम्, तव = भवतः, अन्तिके = समीपे, दर्शयामि = प्रदर्शयामि, एनम् = समुपस्थितं जनम्, आधिम् = द्रव्यम्, दापयिष्ये = बन्धकत्वेन स्थापयिष्ये, अस्मात् = जनात्, क्वचित् = कदाचिदपि, ते = तव, भयम् = त्रासम्, न = नहि, अस्ति = भवति, अनेन = जनेन, अकृतम् = अनिष्पादितम्, कार्यम् = कर्म, अहम् = प्रतिभूकर्त्ता, करिष्यामि, अयञ्च = एष जनः, वृत्तिमान् = संस्थानसम्पन्नः, अतन्द्रितः = आलस्यरहितश्च, अस्ति, इति = हेतोः, एतत् न च मिथ्या = अनृतः, अङ्गीकुर्यात् = स्वीकुर्यात्। प्रगल्भः = निपुणः, बहुविश्वस्तः = लोके विश्वसनीयः, अनधीनः—न कस्याऽपि अधीनः = पराश्रयी, विश्रुतः = विख्यातः, धनी = धनवान्, तथा समर्थः = सशक्तः, उक्तरूपः त्रिविधः प्रतिभूः, उभयोः = अर्थिप्रत्यर्थिनोः, कार्यनिर्णये = व्यवहारे, ग्राह्यः = ग्रहणीयो भवति ॥ १२५-१२७ ॥

**हिन्दी**—जमानतदार सावधान होकर स्वीकार करे कि यदि किसी का रुपया यह न दे तो

मैं देने को तैयार हूँ। यदि अपराधी नियत तारीख पर नहीं आयेगा तो उसे आपके सामने हाजिर करा दूँगा और जो कुछ इसके पास धरोहर रूप में रखा होगा उसे मैं दिला दूँगा। इससे आपको कभी डर नहीं होना चाहिए। यह अब तक जो नहीं कर पाया है उसे मैं इसी से पूरा करवा दूँगा। यह स्थिर आजीविका वाला है, कोई दरिद्र नहीं है। यह कभी झूठा व्यवहार नहीं करने वाला है। इस प्रकार बोलने में चतुर लोगों में विश्वस्त, स्वाधीन, विख्यात धनी एवं कार्यनिर्णय में समर्थ व्यक्ति हो—ऐसे जमानतदार को राजा स्वीकार करे॥ १२५-१२७॥

प्रतिभूप्रकारमाह—**दास्यामीत्यादि**। अहम् एतेन अदत्तं दास्यामि एतेन दानप्रतिभूरुक्तः। अहम् एनं तव अन्तिके समीपे दर्शयामि एतेन दर्शनप्रतिभूरुक्तः। एनं जनम् आधिं द्रव्यं दापयिष्ये बन्धकत्वेनेति शेषः, अस्मात् जनात् क्वचित् कदाचिदपीत्यर्थः, ते तव भयं न अस्तीति शेषः, अनेन अकृतं कार्य्यम् अहं करिष्यामि, अयञ्च वृत्तिमान् संस्थानसम्पन्नः अतन्द्रितः अनलसश्च अस्ति इति हेतोः एतत् न च मिथ्या अङ्गीकुर्यात् एतेन प्रत्ययप्रतिभूरुक्तः। प्रगल्भः चतुरः बहुविश्वस्तः बहुजनेषु विश्वासी, अनधीनः स्वाधीनः विश्रुतः विख्यातः धनी तथा समर्थः यथोक्तवचनानुरूपानुष्ठाने सक्षमः उक्तरूपः त्रिविधः प्रतिभूः उभयोः वादिप्रतिवादिनोः कार्य्यनिर्णये कार्य्यनिरूपणार्थं ग्राह्यः॥ १२५-१२७॥

**विदादिनौ सन्निरुध्य ततो वादं प्रवर्त्तयेत्।**
**स्वपुष्टौ परपुष्टौ वा स्वभृत्या पुष्टरक्षकौ।**
**ससाधनौ तत्त्वमिच्छुः कूटसाधनशङ्कया॥ १२८॥**

**अन्वयः**—ससाधनौ स्वपुष्टौ परपुष्टौ स्वभृत्या पुष्टरक्षकौ विवादिनौ सन्निरुध्य ततः कूटसाधन-शङ्कया तत्त्वम् इच्छुः सन् वादं प्रवर्त्तयेत्॥ १२८॥

**व्याख्या**—ससाधनौ = विवादसाधनसहितौ, स्वपुष्टौ = स्वाधीनौ, परपुष्टौ = पराधीनौ, वा, स्वभृत्या—स्वस्य = आत्मनः, भृत्या = वेतनेन, पुष्टरक्षकौ = पोष्यपालकौ, विवादिनौ, सन्निरुद्ध्य = अवरुद्धं कृत्वा, ततः = तत्पश्चात्, कूटसाधनशङ्कया = मिथ्यानिष्पादनसन्देहेन, तत्त्वम् = तथ्यम्, इच्छुः = अभीप्सुः सन्, वादम् = अभियोगम्, प्रवर्त्तयेत् = चालयेत्॥ १२८॥

**हिन्दी**—कोई वादी या प्रतिवादी ने अपने-अपने साधनों में कोई जालसाजी तो नहीं की हैं। इसलिए तथ्य को जानने का इच्छुक राजा यह देख ले कि वादी और प्रतिवादी दोनों ही अपने-अपने पक्षों की पुष्टि कर रहे हैं या नहीं? राजा के द्वारा उसकी पुष्टि हो रही है या नहीं? अपनी-अपनी नौकरी प्रमाणों की पुष्टि की रक्षा कर रहे हैं या नहीं और अपने-अपने मुकदमे के सम्पूर्ण साधनों से युक्त है या नहीं? इस परीक्षण के बाद राजा वादी-प्रतिवादी को सामने उपस्थित कर मुकदमे की तहकीकात प्रारंभ करे॥ १२८॥

**विवादिनाविति**। ससाधनौ विवादसाधनसमेतौ, स्वपुष्टौ स्वाधीनौ, परपुष्टौ पराधीनौ वा स्वभृत्या निजवेतनेन पुष्टरक्षकौ पोष्यपालकौ विवादिनौ सन्निरुध्य ततः अनन्तरं कूटसाधन-शङ्कया अलीकधनसन्देहेन तत्त्वं याथार्थ्यम् इच्छुः सन् वाढं प्रवर्त्तयेत् राजेति शेषः॥ १२८॥

**प्रतिज्ञादोषनिर्मुक्तं साध्यं सत्कारणान्वितम्।**
**निश्चितं लोकसिद्धञ्च पक्षं पक्षविदो विदुः॥ १२९॥**

**अन्वयः**—पक्षविदः प्रतिज्ञादोषनिर्मुक्तं सत्कारणान्वितं निश्चितं लोकसिद्धञ्च साध्यं पक्षं विदुः ॥ १२९ ॥

**व्याख्या**—पक्षविदः = भाषाभिज्ञाः विद्वांसः, प्रतिज्ञादोषनिर्मुक्तम् = सङ्कल्पनिर्देशः, तस्याः दोषेण = दुर्गुणेन, निर्मुक्तम् = उन्मूलितम्, सत् = साधु, कारणेन = हेतुना, अन्वितम् = युक्तम्, निश्चितम् = संशयशून्यम्, लोकसिद्धम् = लोकानुष्ठितम्, साध्यम् = विवादविषयम्, पक्षम् = व्यवहारपक्षम्, विदुः = जानन्ति ॥ १२९ ॥

**हिन्दी**—पूर्वकृत प्रतिज्ञा के दोष से जो मुक्त हो, अच्छे कारणों से युक्त साधनों द्वारा सिद्ध किया जाने वाला, निश्चित किया जाने वाला तथा लोकसिद्ध हो, उसे पक्षवेत्ता जन 'पक्ष' कहते हैं ॥ १२९ ॥

**प्रतिज्ञेति**। पक्षविदः भाषाभिज्ञाः पण्डिताः प्रतिज्ञादोषनिर्मुक्तं प्रतिज्ञा प्रथमनिर्देशः तस्याः दोषेण निर्मुक्तं रहितं सत्कारणान्वितं सुसाधनसम्पन्नं निश्चितम् असन्दिग्धं लोकसिद्धं न त्वलौकिकमित्यर्थः, साध्यम् अभियोगविषयं पक्षं विदुः जानन्ति ॥ १२९ ॥

**अन्यार्थमर्थहीनं च प्रमाणागमवर्जितम्।**
**लेख्यहीनाधिकं भ्रष्टं भाषादोषा उदाहृताः ॥ १३० ॥**

**अन्वयः**—अन्यार्थम् अर्थहीनं प्रमाणागमवर्जितं लेख्यहीनाधिकं वा भ्रष्टं भाषादोषाः उदाहृताः ॥ १३० ॥

**व्याख्या**—अन्यार्थम् = भिन्नार्थबोधकम्, अर्थहीनम् = इष्टार्थबोधनेऽक्षमम्, प्रमाणागम-वर्जितम्—प्रमाणेन = निदर्शनेन, आगमेन = शब्दप्रमाणेन, च, वर्जितम् = रहितम्, लेख्यहीनाधिकम्—हीनलेख्यम् = न्यूनप्रतिपाद्यविषयकं व्यवहारपत्रम्, अधिकलेख्यम् = अतिरिक्तविषयकव्यवहारपत्रम्, वा, भ्रष्टम् = च्युतम्, केनाप्यंशेन, एते, भाषादोषाः—भाषायाः = प्रतिज्ञावचनस्य, दोषाः = दुर्गुणाः, उदाहृताः = कथिताः ॥ १३० ॥

**हिन्दी**—जो अभिप्रेत अर्थ से भिन्न अर्थ अथवा अर्थविहीन प्रमाण या लोकाचार-विरुद्ध लिखने में कम या ज्यादा अथवा भ्रष्ट हो, उसे भाषादोष कहते हैं। अर्थात् अर्जी-दावापत्र के ये सभी दुर्गुण माने गये हैं ॥ १३० ॥

**अन्यार्थमिति**। अन्यार्थम् अपरार्थबोधकम् अर्थहीनम् अभिप्रेतार्थविरहितं प्रमाणागमवर्जितं प्रमाणेन आगमेन हेतुविशेषेण च वर्जितं लेख्यहीनाधिकं हीनलेख्यम् अधिकलेख्यं वा भ्रष्टं च्युतं केनापि अंशेनेत्यर्थः, एते भाषादोषाः भाषायाः प्रतिज्ञावाक्यस्य दोषाः उदाहृताः उक्ताः ॥ १३० ॥

**अप्रसिद्धं निराबाधं निरर्थं निष्प्रयोजनम्।**
**असाध्यं वा विरुद्धं वा पक्षाभासं विवर्जयेत् ॥ १३१ ॥**

**अन्वयः**—अप्रसिद्धं निराबाधं निष्प्रयोजनं निरर्थम् असाध्यं वा विरुद्धं तं पक्षाभासं विवर्जयेत् ॥ १३१ ॥

**व्याख्या**—अप्रसिद्धम् = ख्यातिरहितम्, निराबाधम् = बाधारहितम्, निष्प्रयोजनम् = प्रयोजनातीतम्, निरर्थम् = अर्थविहीनम्, असाध्यम् = अनिष्पाद्यम्, वा = अथवा, विरुद्धं साध्यम्, पक्षाभास उच्यते, तं पक्षाभासम्, विवर्जयेत् = विशेषरूपेण परित्यजेत् ॥ १३१ ॥

**हिन्दी**—जो अपसिद्ध, निर्बाध, निरर्थक, निष्प्रयोजन, असाध्य अथवा विपरीतपक्ष हो, उसे

पक्षाभास कहते हैं। पक्षाभास को राजा छोड़ दे ॥१३१॥

**अप्रसिद्धमिति।** अप्रसिद्धं निराबाधं निर्बाधं निष्प्रयोजनम् असाध्यं साध्यातीतं वा विरुद्धं साध्यं पक्षाभास उच्यते इति शेषः, तं पक्षाभासं विवर्जयेत् न गृह्णीयात् राजेति शेषः॥१३१॥

**न केनचिच्छ्रुतो दृष्टः सोऽप्रसिद्ध उदाहृतः।**
**अहं मूकेन संशप्तो वन्ध्यापुत्रेण ताडितः॥ १३२॥**

**अन्वयः**—यः केनचित् न श्रुतः दृष्टश्च सः अप्रसिद्धः उदाहृतः। यथा अहं मूकेन संशप्तः वन्ध्यापुत्रेण ताडितश्च॥१३२॥

**व्याख्या**—यः = वस्तु, केनचित् = केनाऽपि, न = नहि, श्रुतः = आकर्णितः, दृष्टश्च = अवलोकितश्च, सः = असौ, अप्रसिद्धः = अख्यातः, उदाहृतः = निर्देशितः। यथा—अहम् = मया, मूकेन = वाग्विहीनेन, संशप्तः = शापितः, तथा वन्ध्यापुत्रेण—वन्ध्यायाः = अजातपुत्रायाः, पुत्रेण = सुतेन, ताडितः इति॥१३२॥

**हिन्दी**—जो किसी से न सुना हो और न देखा हो, उसे अप्रसिद्ध कहते हैं। जैसे मुझे गूंगे ने गाली दी है और बाँझ औरत के बेटे ने पीटा है॥१३२॥

**नेति।** यः केनचित् न श्रुतः दृष्टश्च सः अप्रसिद्धः उदाहृतः उक्तः। यथा अहं मूकेन वर्णानुच्चारकेण शप्तः, तथा वन्ध्यापुत्रेण वन्ध्यायाः अजातपुत्रायाः पुत्रेण ताडित इति॥१३२॥

**अधीते सुस्वरं गाति स्वगेहे विहरत्ययम्।**
**धत्ते मार्गमुखद्वारं मम गेहसमीपतः।**
**इति ज्ञेयं निराबाधं निष्प्रयोजनमेव तत्॥ १३३॥**

**अन्वयः**—निराबाधं यत् निष्प्रयोजनं तत् यथा अयं स्वगेहे सुस्वरम् अधीते, गाति, स्वगेहे अयं विहरति तथा मम गेहसमीपतः मार्गमुखद्वारं धत्ते इति ज्ञेयम्॥१३३॥

**व्याख्या**—निराबाधम् = निर्बाधम्, यत् निष्प्रयोजनम् = निरर्थकम्, तत् = तदेव, यथा—अयम् = एषः, स्वगेहे = निजगृहे, सुस्वरम् = तारस्वरेण, अधीते = पठति, वा गाति = गायनं करोति, 'गाति' इत्यार्षप्रयोगः, तथा तत्रैव विहरति = विचरणं करोति, किञ्च मम गेहसमीपतः = मदीयगृहपार्श्वे, मार्गस्य = पथः, मुखे = सम्मुखे, द्वारम्, धत्ते = ददाति इति॥१३३॥

**हिन्दी**—वह अपने घर में रहकर ऊँची आवाज से पढता है या गीत गाता है या विहार करता है अथवा मेरे घर के पास ही राह की ओर अपने घर का दरवाजा बनाता है—इन सब को 'निराबाध' या 'निष्प्रयोजन' कहते हैं। क्योंकि ऐसा करने में किसी को कोई रोक नहीं लगा सकता है। इसलिए इसे निराबाध या निष्प्रयोजन कहा जाता है॥१३३॥

**अधीते इति।** निराबाधं यत् निष्पयोजनश्च तत् यथा अयं स्वगेहे निजगृहे सुस्वरम् अधीते पठति गाति गायतीत्यर्थः, आर्षोऽयं प्रयोगः। तथा विहरति, किञ्च मम गेहसमीपतः मद्गृहसमीपे मार्गस्य पथः मुखे द्वारं धत्ते ददाति इति॥१३३॥

**सदा मद्दत्तकन्यायां जामाता विहरत्ययम्।**
**गर्भं धत्ते न वन्ध्येयं मृतोऽयं न प्रभाषते।**
**किमर्थमिति तज्ज्ञेयमसाध्यञ्च विरुद्धकम्॥ १३४॥**

**अन्वयः**—अयं जामाता मद्दत्तकन्यायां सदा विहरति तथापि गर्भं न धत्ते। इयञ्च वन्ध्या किमर्थम् इति असाध्यम्। अयं मृतः न प्रभाषते किमर्थमिति विरुद्धकं ज्ञेयम् ॥ १३४ ॥

**व्याख्या**—अयम् = एष पुरुषः, जामाता = मम पुत्रीपतिः, मद्दत्तकन्यायाम्—मत् = अस्मत्, दत्ता = समर्पिता, कन्यया = सुतया सह, सदैव = सततमेव, विहरति = रमयति, कथम्? इयञ्च = एषा च, वन्ध्या = प्रसवशून्यनारी, गर्भम् = भ्रूणः, किमर्थम्, न = नहि, धत्ते = धारयति? इति असाध्यम्। अयम् = एषः, मृतः = प्राणहीनो जनः, किमर्थञ्च, न = नहि, प्रभाषते = वदति, इति तु विरुद्धकम्, ज्ञेयम् = बोध्यम् ॥ १३४ ॥

**हिन्दी**—यह मेरा दामाद मेरी दी हुई कन्या के साथ सदा विहार क्यों करता है? तथा यह बाँझ गर्भधारण क्यों नहीं करती है? ऐसा प्रश्न असाध्य है और यह मरा हुआ आदमी बोलता क्यों नहीं है? इसे विरुद्ध जानना चाहिए ॥ १३४ ॥

**सदेति**। अयं जामाता मद्दत्तकन्यायां सदा विहरति, तथापि गर्भं न धत्ते, इयञ्च वन्ध्या किमर्थमिति असाध्यम्। अयं मृतः न प्रभाषते न कथयति किमर्थमिति विरुद्धकं ज्ञेयम् ॥ १३४ ॥

मद्दुःखसुखतो लोको दूयते न च नन्दति।
निरर्थमिति वा ज्ञेयं निष्प्रयोजनमेव वा ॥ १३५ ॥

**अन्वयः**—लोकः मद्दुःखसुखतः न दूयते न च नन्दति इति निरर्थं वा निष्प्रयोजनं ज्ञेयम् ॥ १३५ ॥

**व्याख्या**—लोकः = जनः, मत् = मम, दुःखेन = पीडया, च = पुनः, सुखेन = आनन्देन च, न, दूयते = दुःखितो भवति, न च नन्दति = आनन्दितो भवति, इति = इत्थम्, निरर्थम् = अर्थविहीनम्, वा निष्प्रयोजनम्, ज्ञेयम् = बोध्यम् ॥ १३५ ॥

**हिन्दी**—मेरे द्वारा प्रदत्त दुःख या सुख से लोग दुःखी या प्रसन्न क्यों होते हैं? ऐसा पूछना या समझना निरर्थक या निष्प्रयोजन कहा जाता है ॥ १३५ ॥

**मद्दुःखेति**। लोकः मम दुःखेन सुखेन च न दूयते न दुःखितो भवति न च नन्दति इति निरर्थं वा निष्प्रयोजनं वा ज्ञेयम् ॥ १३५ ॥

श्रावयित्वा तु यत् कार्य्यं त्यजेदन्यद् वदेदसौ।
अन्यपक्षाश्रयाद् वादी हीनो दण्ड्यश्च स स्मृतः ॥ १३६ ॥

**अन्वयः**—यत् कार्यं श्रावयित्वा त्यजेत् असौ अन्यत् वदेत्, सः अन्यत् पक्षाश्रयात् हीनः दण्ड्यः च स्मृतः ॥ १३६ ॥

**व्याख्या**—यत् = यः वादी, कार्यम् = विवादमेकम्, श्रावयित्वा = वदित्वा, तत् = कार्यम्, त्यजेत् = परित्यागं कुर्यात्, असौ = वादी, अन्यत् = तद्भिन्नम्, वदेत् = कथयेत्, सः = वादी, अन्यपक्षाश्रयात् = विपरीतपक्षावलम्बनात्, हीनः = विवादात् भ्रष्टः, अग्राह्याभियोग इति, अतः दण्ड्यः = दण्डार्हः, च, स्मृतः = कथितः ॥ १३६ ॥

**हिन्दी**—जो वादी विवाद के सम्बन्ध में एक बार अपना अभिमत सुनाकर उसे छोड़ दे और उसके विरुद्ध पक्ष से मिलकर दूसरे ढंग से बोले तो वह हीन समझा जाता है और दण्ड का भागी होता है ॥ १३६ ॥

**श्रावयित्वेति।** यः वादी कार्य्यम् एकमित्यर्थः, श्रावयित्वा त्यजेत् तत् इति शेषः, असौ वादी अन्यत् वदेच्च सः वादी अन्यपक्षाश्रयात् हीनः अभियोगात् भ्रष्टः अग्राह्याभियोग इत्यर्थः, दण्ड्यश्च स्मृतः॥ १३६ ॥

**विनिश्चिते पूर्वपक्षे ग्राह्याग्राह्यविशोधिते।**
**प्रतिज्ञाते स्थिरीभूते लेखयेदुत्तरं ततः॥ १३७॥**

**अन्वयः**—प्रतिज्ञाते पूर्वपक्षे ग्राह्याग्राह्याभ्यां विशोधिते अत एव विनिश्चिते तथा स्थिरीभूते ततः उत्तरं लेखयेत्॥ १३७॥

**व्याख्या**—प्रतिज्ञाते = प्रतिश्रुते, पूर्वपक्षे = अभियोगे, ग्राह्याग्राह्याभ्याम् = उपादेयानुपादेयाभ्याम्, स्वीकार्यास्वीकार्याभ्यामंशाभ्यां वेति, विशोधिते = परिष्कृते, अत एव, विनिश्चिते = विशेषेण शान्तचित्ते, स्थिरीभूते = स्थिरीकृते सति, ततः = तत्पश्चात्, उत्तरम् = प्रतिवचनम्, लेखयेत् = लिपिबद्धं कुर्यात्॥ १३७॥

**हिन्दी**—जब अर्जी-दावा पूरा हो जाय और उसमें से स्वीकार करने योग्य तथा अस्वीकार करने योग्य बातों का निर्णय हो जाय तथा प्रतिश्रुत अर्थ का निश्चय हो जाय, तब उसके बाद उसका उत्तर लिखना चाहिए॥ १३७॥

**विनिश्चिते इति।** प्रतिज्ञाते पूर्वपक्षे ग्राह्याग्राह्याभ्याम् अंशाभ्यां विशोधिते संस्कृते अत एव विनिश्चिते तथा स्थिरीभूते सति ततः उत्तरं लेखयेत् प्रतिवादिनेति शेषः॥ १३७॥

**तत्राभियोक्ता प्राक् पृष्टो ह्यभियुक्तस्त्वनन्तरम्।**
**प्राड्विवाकः सदस्याद्यैर्दाप्यते ह्युत्तरं ततः॥ १३८॥**

**अन्वयः**—तत्र प्राक् अभियोक्ता ततः अभियुक्तः पृष्टः। अनन्तरम् उभयोः सदस्याद्यैः प्राड्विवाकः उत्तरं दाप्यते॥ १३८॥

**व्याख्या**—तत्र = तस्मिन् विवादे, प्राक् = प्रथमम्, अभियोक्ता = वादी, ततः = तदनन्तरम्, अभियुक्तः = प्रतिवादी, पृष्टः = जिज्ञासितो भवेत्। अनन्तरम् = तत्पश्चात्, उभयोः = द्वयोः पृच्छानन्तरम्, सदस्याद्यैः = सांसदप्रभृतिभिः, प्राड्विवाकः = न्यायाधीशः, उत्तरम् = प्रतिवचनम्, दाप्यते = विचारयेत्॥ १३८॥

**हिन्दी**—उनमें पहले वादी से, फिर प्रतिवादी से पूछना चाहिए। दोनों से पूछने के बाद जज जूरीपंचों से इसका उत्तर दिलवाए॥ १३८॥

**तत्रेति।** तत्र विवादे प्राक् अभियोक्ता अर्थी, तदनन्तरम् अभियुक्तः प्रत्यर्थी पृष्टः जिज्ञासितः स्यात्, ततः उभयोः पृच्छानन्तरं सदस्याद्यैः विचारनियुक्तपुरुषादिभिः प्राड्विवाकः उत्तरं दाप्यते सिद्धान्तपक्षमाश्रित्य प्राड्विवाको विचारयेदिति भावः॥ १३८॥

**श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसन्निधौ।**
**पक्षस्य व्यापकं सारमसन्दिग्धमनाकुलम्।**
**अव्याख्यागम्यमित्येतन्निर्दुष्टं प्रतिवादिना॥ १३९॥**

**अन्वयः**—प्रतिवादिना पूर्वावेदकसन्निधौ श्रुतार्थस्य पक्षस्य व्यापकं सारम् असन्दिग्धम् अनाकुलम् अव्याख्यागम्यम् उत्तरं लेख्यम्, इति एतत् निर्दुष्टं स्यात्॥ १३९॥

**व्याख्या**—प्रतिवादिना = प्रत्यर्थिना, पूर्वावेदकस्य = अभ्यर्थिनः, सन्निधौ = समीपे, **श्रुतार्थस्य** = अभिय्रोगविषयीभूतस्य, पक्षस्य = समूहस्य, व्यापकम् = आच्छादकम्, सारम् = तथ्यम्, असन्दिग्धम् = सन्देहशून्यम्, अनाकुलम् = सहजभावेन ग्राह्यमर्थम्, अव्याख्यागम्यम् = सुबोध्यम्, उत्तरम् = प्रतिवचनम्, लेख्यम् = लिखितव्यम्, इति = इत्थम्, एतत् = उत्तरम्, निर्दुष्टम् = दोषरहितं ज्ञेयम् ॥ १३९ ॥

**हिन्दी**—सुने हुए अर्थ का उत्तर पहले दावा करने वाले के पास में लिखे, जिसमें उसके पक्ष का व्यापक वर्णन होते हुए संक्षिप्त या तथ्यपूर्ण हो, कहीं संदिग्ध या त्रुटि न हो, फिर सुबोध हो, व्याख्या-सापेक्ष न हो। प्रतिवादी द्वारा किसी तरह की आपत्ति न उठाई जाय, ऐसा लेख होना चाहिए ॥ १३९ ॥

**श्रुतार्थस्येति**। प्रतिवादिना पूर्वावेदकस्य वादिनः सन्निधौ श्रुतार्थस्य अभियोगविषयीभूतस्य पक्षस्य व्यापकम् आच्छादकं सारम् असन्दिग्धं सन्देहरहितम् अनाकुलं सुखेन बोध्यप्रतिपाद्यमित्यर्थः, अव्याख्यागम्यं सुबोधमित्यर्थः, उत्तरं लेख्यम् इति एवंरूपम् एतत् उत्तरं निर्दुष्टं दोषरहितं भवतीति शेषः ॥ १३९ ॥

**सन्दिग्धमन्यत् प्रकृतादत्यल्पमतिभूरि च।**
**पक्षैकदेशे व्याप्यं यत् तत्तु नैवोत्तरं भवेत् ॥ १४० ॥**

**अन्वयः**—सन्दिग्धं प्रकृतात् अन्यत् अत्यल्पं च अतिभूरि वा तथा पक्षैकदेशे व्याप्यं यत् तत् उत्तरं नैव भवेत् ॥ १४० ॥

**व्याख्या**—सन्दिग्धम् = संशयपूर्णम्, प्रकृतात् = प्रस्तुतात्, अन्यत् = भिन्नम्, अत्यल्पम् अतितुच्छं वा, अतिभूरि = अत्यधिकम्, तथा पक्षैकदेशे—पक्षस्य = तत्पक्षस्य, एकदेशे = एकस्मिन् अंशे, व्याप्यम् = व्याप्तुं योग्यम्, यत् तत् उत्तरम् = प्रतिवचनम्, नैव = नास्त्येव, भवेत् = स्यात् ॥ १४० ॥

**हिन्दी**—और जो उत्तर संदेहयुक्त, प्रसंग से बाहर, अतिसंक्षिप्त या अतिविस्तृत, पक्ष के एक भाग में व्याप्त रहने वाला हो, उसे नहीं लिखना चाहिए ॥ १४० ॥

**सन्दिग्धमिति**। सन्दिग्धं सन्देहयुक्तम् इदं वा एतद्वेति द्वेधयुक्तं प्रकृतात् प्रस्तुतात् अन्यत् भिन्नम् अत्यल्पम् अतिभूरि अत्यधिकं वा तथा पक्षैकदेशे एकस्मिन् पक्षांशे व्याप्यं न तु सर्वस्मिन्नित्यर्थः, यत् तत् उत्तरं नैव भवेत् ॥ १४० ॥

**न चाहूतो वदेत् किञ्चिद्धीनो दण्ड्यश्च स स्मृतः ॥ १४१ ॥**

**अन्वयः**—यः आहूतः सन् न किञ्चित् वदेत् सः हीनः दण्ड्यश्च भवेत् ॥ १४१ ॥

**व्याख्या**—यः = पुरुषः, आहूतः = आकारितः सन्, न = नहि, किञ्चित् = किमपि, वदेत् = कथयेत्, सः = असौ, हीनः = आश्रितः, दण्ड्यः = दण्डनीयश्च, भवेत् = स्यात् ॥ १४१ ॥

**हिन्दी**—और बुलाने पर भी जो वादी या प्रतिवादी उत्तर न दे, वह हीन एवं दण्डनीय होता है ॥ १४१ ॥

**न चेति**। यः अर्थी प्रत्यर्थी वा आहूतः सन् न किञ्चित् वदेत्, सः हीनः पराजितः दण्ड्यश्च भवेत् ॥ १४१ ॥

**पूर्वपक्षे यथार्थे तु न दद्यादुत्तरन्तु यः।**
**प्रत्यर्थी दापनीयः स्याद् सामादिभिरुपक्रमैः ॥ १४२ ॥**

**अन्वयः**—यथार्थे पूर्वपक्षे यः प्रत्यर्थी उत्तरं न दद्यात् सः सामादिभिः उपक्रमैः दापनीयः ॥ १४२ ॥

**व्याख्या**—यथार्थे = तथ्यपूर्णे, सति, पूर्वपक्षे = वादीपक्षे, यः = पुरुषः, प्रत्यर्थी = प्रतिवादी, उत्तरम् = प्रतिवचनम्, न = नहि, दद्यात् = प्रयच्छेत्, सः = वादी, सामादिभिः = सामदानदण्डादिभिः, उपक्रमैः = उपायैः, दापनीयः = वादीधनम् अर्पयितव्यः ॥ १४२ ॥

**हिन्दी**—वादी का पक्ष सत्य सिद्ध होने पर प्रतिवादी उत्तर न दे तो प्रतिवादी पर डिग्री कर देना चाहिए और साम-दानादि उपायों से वादी को उसका धन दिलवा देना चाहिए ॥ १४२ ॥

**पूर्वपक्षे इति**। यथार्थे पूर्वपक्षे सतिः यः प्रत्यर्थी उत्तरं न दद्यात् सः सामादिभिः सान्त्ववादादिभिः उपक्रमैः उपायैः दापनीयः अभियुक्तधनमिति शेषः स्यात् ॥ १४२ ॥

**मोहाद् वा यदि वा शाठ्याद् यन्नोक्तं पूर्ववादिना।**
**उत्तरान्तर्गतं वा तत् प्रश्नैर्ग्राह्यं द्वयोरपि ॥ १४३ ॥**

**अन्वयः**—मोहात् वा शाठ्यात् वा पूर्ववादिनाः यत् न उक्तं यच्च उत्तरान्तर्गतं तत् द्वयोरपि प्रश्नैः ग्राह्यम् ॥ १४३ ॥

**व्याख्या**—मोहात् = प्रपञ्चात्, वा = अथवा, शाठ्यात् = दौर्जन्यात्, यत् = किञ्चिदपि, न = नहि, उक्तम् = कथितम्, वा = अथवा, यच्च = यदुत्तरम्, उत्तरान्तर्गतम् = प्रतिवादिनः उत्तर-वाक्यान्तरालपतितम्, तत् = सकलम्, द्वयोः = पूर्वापरपक्षयोः समीपात्, पश्नैः = पृच्छाभिः, ग्राह्यम् = ग्रहणं कर्त्तव्यमिति ॥ १४३ ॥

**हिन्दी**—अज्ञान या शठतावश पहले वादी ने जो कुछ नहीं कहा, प्रतिवादी के उत्तर में वह छूट गया, उसे न्यायाधीश दोनों से पूछ कर साफ कर ले ॥ १४३ ॥

**मोहादिति**। मोहात् अज्ञानात् वा शाठ्यात् वा पूर्ववादिना अर्थिना यत् न उक्तं पूर्वपक्षे इति भावः, यच्च उत्तरान्तर्गतं प्रतिवादिनः उत्तरवाक्यमध्यपतितं मोहनिबन्धनं शाठ्यनिबन्धनं वा किञ्चित्, तत् सर्वम् उभयोः वादिप्रतिवादिना सकाशात् प्रश्नैः पृच्छाभिः ग्राह्यं प्रश्नचातुर्य्येण मोहस्खलितं वा शाठ्यविजृम्भितं बहिष्करणीयमिति भावः ॥ १४३ ॥

**सत्यं मिथ्योत्तरञ्चैव प्रत्यवस्कन्दनं तथा।**
**पूर्वन्यायविधिश्चैवमुत्तरं स्याच्चतुर्विधम् ॥ १४४ ॥**

**अन्वयः**—उत्तरं चतुर्विधं स्यात्। यथा सत्यं मिथ्योत्तरं प्रत्यवस्कन्दनं तथा पूर्वन्याय-विधिः ॥ १४४ ॥

**व्याख्या**—उत्तरम् = प्रतिवचनम्, चतुर्विधम् = चतुःप्रकारकम्, स्यात् = भवेत्। यथा—सत्यम् = यथार्थम्, मिथ्योत्तरम् = असत्योत्तरम्, प्रत्यवस्कन्दनम्, पूर्वन्यायविधिश्च ॥ १४४ ॥

**हिन्दी**—उत्तर चार प्रकार के होते हैं। जैसे—सत्य, मिथ्या, प्रत्यवस्कन्द एवं पूर्वन्याय-विधि ॥ १४४ ॥

**सत्यमिति**। उत्तरं चतुर्विधं स्यात्। यथा—सत्यं, मिथ्योत्तरं तथा प्रत्यवस्कन्दनं, पूर्वन्याय-विधिश्च ॥ १४४ ॥

**अङ्गीकृतं यथार्थं यद्वाद्युक्तं प्रतिवादिना।**
**सत्योत्तरन्तु तज्ज्ञेयं प्रतिपत्तिश्च सा स्मृता ॥ १४५ ॥**

**अन्वयः**—वादिना उक्तं यथार्थं यद्वाक्यं प्रतिवादिना अङ्गीकृतं तत् सत्योत्तरं विज्ञेयम्। सा च प्रतिपत्तिः स्मृता ॥ १४५ ॥

**व्याख्या**—वादिना = अभियोगिना, उक्तम् = कथितम्, यथार्थम् = सत्यम्, यत् = किञ्चित्, वाक्यम् = कथनम्, प्रतिवादिना = प्रत्यर्थिना, अङ्गीकृतम् = स्वीकृतम्, तत् = वाक्यम्, सत्योत्तरम् = सत्यारोपम्, विज्ञेयम् = विशेपेण ज्ञातव्यम्, सा = वाणी, प्रतिपत्तिः = उपलब्धिः, स्मृता = कथिता ॥ १४५ ॥

**हिन्दी**—वादी ने जो कुछ कहा वह सत्य है, ऐसा यदि प्रतिवादी स्वीकार कर ले तो इस उत्तर को सत्य कहते हैं। इसी सत्य उत्तर को प्रतिपत्ति अर्थात् उपलब्धि भी कहते हैं ॥ १४५ ॥

**अङ्गीकृतमिति**। वादिना उक्तं यथार्थं यत् वाक्यं प्रतिवादिना अङ्गीकृतञ्चेत् तत् सत्योत्तरं विज्ञेयं सा च प्रतिपत्तिः स्मृता ॥ १४५ ॥

**श्रुत्वा भाषार्थमन्यस्तु यदि तं प्रतिषेधति।**
**अर्थतः शब्दतो वापि मिथ्या तज्ज्ञेयमुत्तरम् ॥ १४६ ॥**

**अन्वयः**—अन्यस्तु भाषार्थं श्रुत्वा अर्थतः शब्दतः वापि यदि तं प्रतिषेधति तदा तत् मिथ्योत्तरं ज्ञेयम् ॥ १४६ ॥

**व्याख्या**—अन्यस्तु = प्रत्यर्थी तु, भाषार्थम् = अभियोगपक्षम्, श्रुत्वा = आकर्ण्य, अर्थतः = आशयतः, शब्दतः = वाक्याच्च, यदि तम् = कथनम्, प्रतिषेधति = विरोधं करोति, तदा तत् = उत्तरम्, मिथ्योत्तरम् = असत्यप्रतिवचनम्, ज्ञेयम् = बोध्यम् ॥ १४६ ॥

**हिन्दी**—वादी की अर्जी को सुनकर यदि प्रतिवादी उसे स्वीकार न करे तो उसे मिथ्या उत्तर कहते हैं। यह प्रतिषेध चाहे अर्थ से हो या शब्द से हो ॥ १४६ ॥

**श्रुत्वेति**। अन्यस्तु प्रतिवादी तु भाषार्थं पूर्वपक्षं श्रुत्वा अर्थतः शब्दतश्च यदि तं प्रतिषेधति न स्वीकरोतीत्यर्थः, तदा तत् मिथ्योत्तरं ज्ञेयम् ॥ १४६ ॥

**मिथ्यैतन्नाभिजानामि तदा तत्र न सन्निधिः।**
**अजातश्चास्मि तत्काले इति मिथ्या चतुर्विधम् ॥ १४७ ॥**

**अन्वयः**—मिथ्या च चतुर्विधम्—एतत् मिथ्या, अहं न अभिजानामि, तत्र न मम सन्निधिः, तत्काले अहं अजातः च अस्मि ॥ १४७ ॥

**व्याख्या**—मिथ्या = अनृतम्, च चतुर्विधम् = चतुःप्रकारकम्, तद्यथा—एतत् = अभियोगः, मिथ्या = अनर्गल आरोपः, एतत् = कथनम्, अहम् = प्रतिवादी, न = नहि, अभिजानामि = अवगतोऽस्मि, तत्र = तस्मिन् स्थाने, न = नहि, मम = प्रत्यभ्यर्थिनः, सन्निधिः = सामीप्यम्, तत्काले = तस्मिन्समये, अहम्, अजातः अस्मि = अनुत्पन्नोऽस्मि ॥ १४७ ॥

**हिन्दी**—झूठा उत्तर चार प्रकार का होता है। जैसे—यह झूठ है, इसे मैं नहीं जानता हूँ, उस समय मैं वहाँ मौजूद नहीं था और मेरा तो उस समय जन्म भी नहीं हुआ था ॥ १४७ ॥

**मिथ्येति।** मिथ्या च चतुर्विधम्, यथा—एतत् मिथ्या, एतत् अहं न अभिजानामि, तदा यत्कालिकः अभियोग इत्यर्थः, तत्र तस्मिन् स्थाने न मम सन्निधिः सन्निधानम् अवस्थानमित्यर्थः, तत् काले अहम् अजातश्च अस्मि इति ॥ १४७ ॥

**अर्थिना लिखितो ह्यर्थः प्रत्यर्थी यदि तं तथा।**
**प्रपद्य कारणं ब्रूयात् प्रत्यवस्कन्दनं हि तत् ॥ १४८ ॥**

**अन्वयः**—अर्थिना यः अर्थः लिखितः प्रत्यर्थी यदि तं तथा प्रपद्य कारणं ब्रूयात् तदा तत् प्रत्यवस्कन्दनं हि ॥ १४८ ॥

**व्याख्या**—अर्थिना = वादिना, यः = यत्, अर्थः = अभिप्रेतार्थः, लिखितः = लिपिबद्धः कृतः, यदि तम् = अभियोगपत्रम्, तथा प्रपद्य = स्वीकृत्य, कारणम् = तस्य हेतुः, ब्रूयात् = वदेत्, तदा तत् = उत्तरम्, प्रत्यवस्कन्दनं, कथ्यते, हि = इत्यवधारणे ॥ १४८ ॥

**हिन्दी**—दावापत्र में वादी ने जो कुछ लिखा है उसे यदि प्रतिवादी स्वीकार कर के भी उसमें दोष दिखलाये तथा उन दोषों का कारण बतलाये तो इस उत्तर को अवस्कन्दन कहते हैं। पहले मानकर फिर उसे काटना कहते हैं ॥ १४८ ॥

**अर्थिनेति।** अर्थिना यः अर्थः लिखितः, प्रत्यर्थी यदि तं लिखितम् अर्थं तथा प्रपद्य स्वीकृत्य कारणं ब्रूयात् तदा तत् प्रत्यवस्कन्दनं हि, हिशब्दः अवधारणार्थः ॥ १४८ ॥

**अस्मिन्नर्थे समानेन वादः पूर्वमभूत् तदा।**
**जितोऽयमिति चेद्ब्रूयात् प्राङ्न्यायः स उदाहृतः ॥ १४९ ॥**

**अन्वयः**—अस्मिन् अर्थे पूर्वम् अनेन मम वादः अभूत् तदा अयं जितः, इति चेत् ब्रूयात् सः प्राङ्न्यायः उदाहृतः ॥ १४९ ॥

**व्याख्या**—अस्मिन् अर्थे = विषयेऽस्मिन्, पूर्वम् = प्राक्, अनेन = वादिना, मम = प्रतिवादिनः, वादः = विवादः, अभूत् = सञ्जातः, तदा, अयम् = एषः, जितः = विजयी अभवत्, इति = अभियुक्तः, यदि = चेत्, ब्रूयात् = वदेत्, तदा सः प्राङ्न्यायविधिः, उदाहृतः = कथितः ॥ १४९ ॥

**हिन्दी**—इसके साथ इस तरह का मेरा विवाद पहले हो चुका है, इसमें हमारी जीत हो चुकी है, ऐसा जवाब यदि प्रतिवादी का हो तो इस उत्तर को प्राङ्न्यायविधि या पूर्वन्याय कहते हैं ॥ १४९ ॥

**अस्मिन्निति।** अस्मिन् अर्थे विषये पूर्वमनेन मम वादः अभूत्, तदा अयं जितः मया पराजित इति प्रत्यर्थी यदि ब्रूयात् तदा सः प्राङ्न्यायः उदाहृतः उक्तः ॥ १४९ ॥

**जयपत्रेण सभ्यैर्वा साक्षिभिर्भावयाम्यहम्।**
**मया जितः पूर्वमिति प्राङ्न्यायस्त्रिविधः स्मृतः ॥ १५० ॥**

**अन्वयः**—प्राङ्न्यायः त्रिविधः स्मृतः। यथा—अयं मया पूर्वं जितः इति जयपत्रेण सभ्यैः वा साक्षिभिः अहं भावयामि ॥ १५० ॥

**व्याख्या**—प्राङ्न्यायः त्रिविधः = त्रिप्रकारकः, स्मृतः = कथितः, यथा—अयम् = एष जनः, मया = प्रतिवादिना, जितः = विजितः, इति जयपत्रेण = विजयप्रमाणपत्रेण, सभ्यैः = सांसद्भिः, वा = अथवा, साक्षिभिः, अहम् = प्रतिवादी, भावयामि = प्रतिपादयामि ॥ १५० ॥

**हिन्दी**—जयपत्र अर्थात् मुकदमे की डिग्री सांसदों अर्थात् जूरीपंचों या गवाहियों के द्वारा मेरी जीत हो चुकी है, इसे मैं प्रमाणित कर रहा हूँ, ऐसे उत्तर वाले प्राङ्न्याय के ऊपर-लिखित तीन भेद होते हैं ॥ १५० ॥

**जयपत्रेणेति**। प्राङ्न्यायः त्रिविधः स्मृतः।यथा—अयं मया पूर्वं जित इति जयपत्रेण, सभ्यैः, वा साक्षिभिः भावयामि प्रतिपादयामि, उपायस्य त्रैविध्यादिति भावः ॥ १५० ॥

**अन्योऽन्ययोः समक्षन्तु वादिनोः पक्षमुत्तरम्।**
**न हि गृह्णन्ति ये सभ्या दण्ड्यास्ते चौरवत् सदा ॥ १५१ ॥**

**अन्वयः**—ये सभ्याः वादिनोः अन्योऽन्ययोः समक्षं पक्षं वा उत्तरं न नहि गृह्णन्ति ते चौरवत् सदा दण्ड्याः ॥ १५१ ॥

**व्याख्या**—ये सभ्याः = विचारार्थनियोजितसांसदः, वादिनोः = वादिप्रतिवादिनोः, अन्योऽन्ययोः = परस्परयोः, समक्षम् = सम्मुखे एव, पक्षम् = अभियोगम्, वा उत्तरम्, तस्य प्रतिवचनम्, नहि = नास्ति, गृह्णन्ति = लिखन्ति, ते = विचारपुरुषाः, चौरवत् = तस्कर इव, सदा = सर्वदा, दण्ड्याः = दण्डनीयाः ॥ १५१ ॥

**हिन्दी**—जो सभासद परस्पर एक-दूसरे के सामने ही वादी और प्रतिवादी के अभियोग एवं उत्तर को सुनकर स्वीकार नहीं करते या लिख नहीं लेते, विचारार्थ नियुक्त वे सभासद सदैव चोर की तरह दण्डनीय होते हैं ॥ १५१ ॥

**अन्योऽन्ययोरिति**। ये सभ्याः विचारनियुक्ताः पुरुषाः वादिनोः अर्थिप्रत्यर्थिनोः अन्योऽन्ययोः परस्परयोः समक्षं पक्षं वा उत्तरं न हि गृह्णन्ति, ते चौरवत् सदा दण्ड्याः ॥ १५१ ॥

**लिखिते शोधिते सम्यक् सति निर्दोष उत्तरे।**
**अर्थिप्रत्यर्थिनोर्वापि क्रिया कारणमिष्यते ॥ १५२ ॥**

**अन्वयः**—लिखिते उत्तरे सम्यक् शोधिते निर्दोषे सति अर्थिप्रत्यर्थिनोः क्रिया कारणम् इष्यते ॥ १५२ ॥

**व्याख्या**—लिखते = लिपिबद्धकृते, उत्तरे = प्रतिवचने, सम्यक् = सुष्ठुतया, शोधिते = परिमार्जिते, अत एव निर्दोषे = दोषरहिते सति, अर्थिप्रत्यर्थिनोः = वादिप्रतिवादिनोः, क्रिया = प्रमाण-प्रस्तुतीकरणादिरूपा, कारणम् = जयपत्रस्य साधनम्, इष्यते = अभिलषते, अन्विष्यते वेति ॥१५२ ॥

**हिन्दी**—लिखित उत्तर के भलीभाँति संशोधित हो जाने पर जब दोषरहित सिद्ध हो जाय तब वादी और प्रतिवादी की क्रिया अर्थात् जयपत्र के कारणभूत गवाही का लेखपत्र प्रदर्शन जैसी क्रिया प्रारम्भ करे ॥ १५२ ॥

**लिखिते इति**। लिखिते उत्तरे सम्यक् शोधिते अत एव निर्दोषे सति अतःपरमित्यर्थः, अर्थि-प्रत्यर्थिनोः क्रिया साक्षिलेख्यादिप्रमाणप्रदर्शनादिरूपा कारणं जयपत्रस्येति भावः इष्यते ॥ १५२ ॥

**पूर्वपक्षः स्मृतः पादो द्वितीयश्चोत्तरात्मकः।**
**क्रियापादस्तृतीयस्तु चतुर्थो निर्णयाभिधः ॥ १५३ ॥**

**अन्वयः**—पूर्वपक्षः पादः, उत्तरात्मकः द्वितीयः, क्रियापादः तृतीयः, चतुर्थः तु निर्णयाभिधः स्मृतः ॥ १५३ ॥

**व्याख्या**—पूर्वपक्षः = विवादस्य प्रथमः पादः, उत्तरात्मकः = अभियोगस्य प्रतिवचनात्मकः द्वितीयः पादः, क्रिया तु = विचारप्रक्रिया तु, तृतीयः पादः, चतुर्थः पादः, निर्णयाभिधः = विचारपतिना प्रदत्तसिद्धान्तस्तु व्यवहारस्य चतुर्थः पादः, स्मृतः = उक्तः ॥ १५३ ॥

**हिन्दी**—इस तरह किसी भी मुकदमे के चार चरण होते हैं—अभियोग पहला चरण है, उसका उत्तर दूसरा चरण, विचार-प्रक्रिया तीसरा चरण तथा निर्णय अन्तिम अर्थात् चौथा चरण होता है ॥ १५३ ॥

**पूर्वपक्ष इति**। पूर्वपक्षः पादः प्रथम इति भावः, उत्तरात्मकः द्वितीयः पादः, क्रियापादः तृतीयः, चतुर्थस्तु पादः निर्णयाभिधः सिद्धान्तरूप इत्यर्थः, एतेन व्यवहारस्य चतुष्पादत्वयुक्तम् ॥ १५३ ॥

**कार्य्यं हि साध्यमित्युक्तं साधनन्तु क्रियोच्यते।**
**अर्थी तृतीयपादे तु क्रियया प्रतिपादयेत् ॥ १५४ ॥**

**अन्वयः**—साध्यं हि कार्यम् इत्युक्तं, क्रिया साधनम् इत्युच्यते। अर्थी तु तृतीयपादे क्रियया प्रतिपादयेत् ॥ १५४ ॥

**व्याख्या**—साध्यम् = अनुष्ठेयम्, हि = यतः, कार्यम्, इति = एवम्, उक्तम् = कथितम्, क्रिया = व्यवहारे साक्षिकथनलेख्यादि, साधनम् = साध्यस्योपकरणम्, उच्यते, तस्मात् अर्थी = वादी, तृतीयपादे = व्यवहारस्य तृतीयचरणे, तु, क्रियया = पूर्वकथितरूपेण, प्रतिपादयेत् = साध्यं सम्पादयेदिति ॥ १५४ ॥

**हिन्दी**—कार्य को साध्य और साधन को क्रिया कहते हैं। अतः वादी को मुकदमे की तहकीकात ( तीसरा चरण ) समाप्त हो जाने पर साधन अर्थात् प्रमाणों को न्यायाधीश के सामने प्रस्तुत कर देना चाहिए ॥ १५४ ॥

**कार्य्यमिति**। साध्यं कार्य्यमिति उक्तं, क्रिया साक्षिलेख्यादिः साधनं साध्यस्य प्रमाणम् उच्यते, तस्मात् अर्थी तृतीयपादे व्यवहारस्य तृतीयचरणे क्रियया उक्तरूपया प्रतिपादयेत् साध्यं प्रमापयेदित्यर्थः ॥ १५४ ॥

**चतुष्पाद् व्यवहारः स्यात् प्रतिपत्त्युत्तरं विना ॥ १५५ ॥**

**अन्वयः**—प्रतिपत्त्युत्तरं विना व्यवहारः चतुष्पाद् स्यात् ॥ १५५ ॥

**व्याख्या**—प्रतिपत्तिः = उपलब्धिर्वाऽधिगमनस्वरूपम्, उत्तरम् = प्रतिवचनम्, विना = विहाय, अपरेषु त्रिषु उत्तरेषु, व्यवहारः = कार्यः, चतुष्पाद् = चतुश्चरणम्, स्यात् = भवेत् ॥ १५५ ॥

**हिन्दी**—प्रतिपत्ति अर्थात् सत्य उत्तर में जहाँ वादी प्रतिवादी के अभियोग को सीधा स्वीकार कर लेता है, वहाँ मुकदमा दो चरण का ही होता है। शेष स्थिति में मुकदमे के चार चरण होते हैं ॥ १५५ ॥

**चतुष्पादिति**। प्रतिपत्तिरूपम् उत्तरं विना अपरेषु त्रिषु उत्तरेषु इत्यर्थः, व्यवहारः चतुष्पाद् स्यात्, प्रतिपत्त्युत्तरेषु द्विपादे च तत्र क्रियापादस्य निर्णयपादस्य वा प्रयोजनकत्वादिति भावः ॥ १५५ ॥

**क्रमागतान् विवादांस्तु पश्येद् वा कार्य्यगौरवात् ॥ १५६ ॥**

**अन्वयः**—क्रमागतान् विवादान् वा कार्यस्य गौरवात् पश्येत् ॥ १५६ ॥

**व्याख्या**—क्रमागतान् = क्रमेण = आनुपूर्व्येण, आगतान् = सम्प्राप्तान्, विवादान् =

व्यवहारान्, वा = अथवा, कार्यस्य = व्यवहारस्य, गौरवात् = लाघवगौरवमपेक्ष्य, अत्र यदर्थे पञ्चमी विभक्तिः, पश्येत् = अवलोकयेत् ॥ १५६ ॥

**हिन्दी**—राजा मुकदमे को क्रमानुसार अथवा मुकदमे की लघुता-गुरुता के अनुसार जैसा उचित समझे तहकीकात करे ॥ १५६ ॥

**क्रमागतानिति**। क्रमागतान् यथाक्रमेण उपस्थितान् विवादान् क्रमेण वा कार्य्यस्य गौरवात् गौरवमपेक्ष्य इत्यर्थः, यदर्थे पञ्चमी, पश्येत् ॥ १५६ ॥

**यस्य वाभ्यधिका पीडा कार्य्यं वाभ्यधिकं भवेत्।**
**वर्णानुक्रमतो वापि नयेत् पूर्वं विवादयेत् ॥ १५७ ॥**

**अन्वयः**—वा यस्य पीडा अभ्यधिका वा कार्यम् अधिकं भवेत् वाऽपि वर्णानुक्रमतः पूर्वं नयेत् विवादयेत् च ॥ १५७ ॥

**व्याख्या**—वा = अथवा, यस्य = अभियोगिनः, पीडा = कष्टम्, अभ्यधिका = अत्यधिका, वा = अथवा, कार्यम् = कृत्यम्, व्यवहारञ्च, अधिकम् = बहुलम्, भवेत् = स्यात्, इत्यनुचिन्त्य, वाऽपि = अथवा, वर्णानुक्रमतः = जात्यानुक्रमेण, पूर्वम् = प्रथमम्, नयेत् = व्यवहारं गृहीत्वा, विवादयेत् = विचारयेत् ॥ १५७ ॥

**हिन्दी**—जिस वादी को अधिक पीड़ा हो अथवा अधिक कार्य हो, इसका विचार कर वर्णानुक्रम से मुकदमे की पहली पेशी में लेकर निर्णय करे ॥ १५७ ॥

**यस्येति**। यस्य वा पीडा अभ्यधिका, वा कार्य्यम् अभ्यधिकम् अत्यधिकं भवेत् एवं विविच्येति शेषः, वापि अथवा वर्णानुक्रमतः ब्राह्मणादिक्रमेण पूर्वं नयेत् विवादयेच्च अभियोगं गृहीत्वा विचारयेदित्यर्थः ॥ १५७ ॥

**कल्पयित्वोत्तरं सभ्यैर्दातव्यैकस्य भावना ॥ १५८ ॥**

**अन्वयः**—सभ्यैः उत्तरं कल्पयित्वा एकस्य भावना दातव्या ॥ १५८ ॥

**व्याख्या**—सभ्यैः = सांसद्भिः, उत्तरम् = प्रतिवचनम्, कल्पयित्वा = यथोक्तरीत्या प्रतिवादिनः समीपात् सङ्गृह्य, एकस्य = अभियोगिनः, भावना = चिन्तनस्यावसरः, दातव्या = प्रदानं कर्त्तव्येति ॥ १५८ ॥

**हिन्दी**—सांसदों अर्थात् विचारकों को चाहिए कि प्रतिवादी से उत्तर सुनकर वादी को सोचने-विचारने का कुछ अवसर अवश्य दे ॥ १५८ ॥

**कल्पयित्वेति**। सभ्यैः राजपुरुषैः उत्तरं कल्पयित्वा यथोक्तरूपेण प्रतिवादिनः सकाशात् आदाय इत्यर्थः, एकस्य वादिनः भावना चिन्ता साध्यसाधनार्थं चिन्तावसर इत्यर्थः दातव्या ॥ १५८ ॥

**साध्यस्य साधनार्थं हि निर्दिष्टा यस्य भावना।**
**विभावयेत् प्रतिज्ञातं सोऽखिलं लिखितादिना ॥ १५९ ॥**

**अन्वयः**—साध्यस्य साधनार्थं यस्य भावना निर्दिष्टा, सः लिखितादिना अखिलं प्रतिज्ञातं विभावयेत् ॥ १५९ ॥

**व्याख्या**—साध्यस्य = अभियोगस्य, साधनार्थम् = प्रमाणितार्थम्, यस्य = अभियोगिनः, भावना = अनुचिन्तनम्, निर्दिष्टा = कथिता, सः लिखितादिना = विभिन्नसाधनेन,

अखिलम् = समस्तम्, प्रतिज्ञातम् = संश्रुतम्, विभावयेत् = प्रतिपादयेत् ॥ १५९ ॥

**हिन्दी**—अभियोग सिद्ध करने वाले साधनों को जुटाने के लिए वादी को जो मौका दिया गया, वह लिखित या साक्ष्य जैसे साधनों की सहायता से सम्पूर्ण अभियोग को प्रमाणित करे ॥ १५९ ॥

**साध्यस्येति**। साध्यस्य पक्षस्य साधनार्थं प्रामाण्यार्थं यस्य वादिनः भावना निर्दिष्टा कथिता, सः लिखितादिना साधनेन अखिलं समस्तं प्रतिज्ञातं विभावयेत् प्रतिपादयेत् प्रमापयेदित्यर्थः ॥ १५९ ॥

**न चैकस्मिन् विवादे तु क्रिया स्याद् वादिनोर्द्वयोः ॥ १६० ॥**

**अन्वयः**—एकस्मिन् विवादे द्वयोः वादिनोः क्रिया न च स्यात् ॥ १६० ॥

**व्याख्या**—एकस्मिन् = एकमात्रे, विवादे = व्यवहारे, द्वयोः = उभयोः, वादिनोः = वादिप्रतिवादिनोः, क्रिया = उपकरणनिश्चयार्थम्, न च = नैव, स्यात् = भवेत् ॥ १६० ॥

**हिन्दी**—एक ही मुकदमे में दोनों वादी और प्रतिवादी को एक ही साथ अपने-अपने पक्ष की सम्पुष्टि हेतु प्रमाण उपस्थित करने का आदेश देना उचित नहीं होता है ॥ १६० ॥

**न चेति**। एकस्मिन् विवादे द्वयोः वादिनोः अर्थिप्रत्यर्थिनोः क्रिया साधननिर्देशार्थं प्रयासः न च स्यात् एकेनैव क्रिया निर्देश्या इति भावः ॥ १६० ॥

**मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनि।**
**प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत् क्रियाम् ॥ १६१ ॥**

**अन्वयः**—मिथ्या पूर्ववादे तथा कारणे प्रतिवादिनि क्रिया प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी क्रियां निर्दिशेत् ॥ १६१ ॥

**व्याख्या**—मिथ्या = असत्योत्तरे, पूर्ववादे = प्रथमाभियोगिनि, कारणे = प्रत्यवस्कन्दने उत्तरे, प्रतिवादिनि = प्रत्यर्थिनि, क्रिया = साधननिर्देशादिप्रकिया, प्राङ्न्यायकारणोक्तौ = प्राङ्न्यायविधिना साधनोक्तौ, तु प्रत्यर्थी = प्रतिवादी, क्रियाम् = व्यवहारनिर्देशिकां क्रियाम्, निर्दिशेत् = निर्देशं कुर्यात् ॥ १६१ ॥

**हिन्दी**—यदि प्रतिवादी का उत्तर झूठा हो तो वादी को उसे असत्य सिद्ध करने के लिए अवसर देना चाहिए और यदि प्रतिवादी का प्रमाण झूठा हो तो उसे सत्य सिद्ध करने का प्रमाण माँगना चाहिए। यदि प्रतिवादी यह कहे कि इस विषय पर इनके साथ मेरा विवाद पहले भी हुआ है, जिसमें मेरी जीत हुई है तो इसका भी प्रमाण माँगना चाहिए ॥ १६१ ॥

**मिथ्येति**। मिथ्योत्तरे पूर्ववादे प्रथमवादिनि, तथा कारणे प्रत्यवस्कन्दने उत्तरे प्रतिवादिनि क्रिया साधननिर्देशभारः स्यादित्यर्थः, प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी प्रतिवादी क्रियां निर्दिशेत् ॥ १६१ ॥

**कारणात् पूर्वपक्षोऽपि उत्तरत्वं प्रपद्यते ॥ १६२ ॥**

**अन्वयः**—पूर्वपक्षोऽपि कारणात् उत्तरत्वं प्रपद्यते ॥ १६२ ॥

**व्याख्या**—पूर्वपक्षोऽपि = अभियोगी अपि, कारणात् = कस्मादपि हेतोः, कदाचित्, उत्तरत्वम् = उत्तरपक्षत्वम्, प्रपद्यते = आश्रयते ॥ १६२ ॥

**हिन्दी**—पूर्वपक्ष भी कभी-कभी कारणवश उत्तरपक्ष का अवलम्बन करता है ॥ १६२ ॥

**कारणादिति**। पूर्वपक्षोऽपि कारणात् कस्मादपि हेतोरित्यर्थः, कदाचित् उत्तरत्वम् उत्तरपक्षत्वं प्रपद्यते अवलम्बते ॥ १६२ ॥

**ततोऽर्थी लेखयेत् सद्यः प्रतिज्ञातार्थसाधनम्।**
**तत् साधनन्तु द्विविधं मानुषं दैविकं तथा ॥ १६३ ॥**

**अन्वयः**—ततः अर्थी सद्यः प्रतिज्ञातस्य अर्थस्य साधनं लेखयेत्। तत् साधनं तु द्विविधम्—मानुषं दैविकं च ॥ १६३ ॥

**व्याख्या**—ततः = तत्पश्चात्, अर्थादुत्तरप्रदानानन्तरम्, अर्थी = वादी, सद्यः = तत्क्षणमेव, प्रतिज्ञातस्य = प्रतिश्रुतस्य, अर्थस्य = विषयस्य, साधनम् = प्रामाण्यम्, कारणम् = हेतुः, लेखयेत् = लिपिबद्धं कुर्यात्, तत् साधनन्तु, द्विविधम् = प्रकारद्वयमस्ति—मानुषम् = मानवीयम्, तथा दैविकम् = देवतासम्बन्धिनम् ॥ १६३ ॥

**हिन्दी**—पूर्वपक्ष के उत्तर देने के बाद वादी उसी समय उस उत्तर को प्रतिश्रुत विषय को सिद्ध करने के लिए उसे सप्रमाण लिखवा दे। यह प्रमाण मानवीय एवं दैवी दो तरह का होता है ॥१६३ ॥

**तत इति**। ततः उत्तरदानानन्तरम् अर्थी सद्यः तत्क्षणात् प्रतिज्ञातस्य अर्थस्य विषयस्य साधनं प्रमाणभूतं कारणं लेखयेत्, तत् साधनन्तु द्विविधं, मानुषं तथा दैविकम् ॥ १६३ ॥

**क्रिया स्याल्लिखितं भुक्तिः साक्षिणश्चेति मानुषम्।**
**दैवं घटादि तद्भव्यं भूतालाभान्नियोजयेत् ॥ १६४ ॥**

**अन्वयः**—लिखितं भुक्तिः साक्षिणश्च इति क्रिया मानुषं स्यात्। घटादि दैवं भूतस्य अलाभात् तद् भव्यं नियोजयेत् ॥ १६४ ॥

**व्याख्या**—लिखितम् = लिपिबद्धम्, भुक्तिः = भोगः, साक्षिणः = प्रेक्षकाश्च, इति = इत्थम्, त्रिविधा क्रिया, मानुषम् = मानवीयम्, स्यात् = भवेत्। घटादि = तुलादण्डादिरूपं, दैवीम्, भूतस्य = यथार्थस्य, अलाभात् = अप्राप्तेः, तत् = भव्यादिकम्, नियोजयेत् = नियोजनं कुर्यात् ॥ १६४ ॥

**हिन्दी**—इसमें लिखित, अधिकृत एवं साक्षी—ये तीन मानवीय प्रमाण होते हैं। तुलादण्डादिरूप प्रमाण को दैवी कहते हैं, इसी को भव्य भी कहते हैं। इनका उपयोग यथार्थ का निश्चय न होने पर किया जाता है ॥ १६४ ॥

**क्रियेति**। लिखितं, भुक्तिः भोगः, साक्षिणश्च इति त्रिविधा क्रिया मानुषं, घटादि तुलादण्डादि-रूपं दैवम्। भूतस्य यथार्थस्य अलाभात् अप्राप्तेः तद् भव्यं घटादि नियोजयेत् ॥ १६४ ॥

**तत्त्वाच्छलानुसारित्वाद् भूतं भव्यं द्विधा स्मृतम्।**
**तत्त्वं सत्यार्थाभिधायि कूटाद्यभिहितं छलम् ॥ १६५ ॥**

**अन्वयः**—तत्त्वस्य छलस्य च अनुसारित्वात् साधनं द्विधा भूतं भव्यं स्मृतम्। सत्यार्थस्य अभिधायि तत्त्वं कूटाद्यभिहितं छलम् ॥ १६५ ॥

**व्याख्या**—तत्त्वस्य = यथार्थस्य, छलस्य = कपटस्य, च, अनुसारित्वात् = अनुकूलत्वात्,

साधनम् = उपकरणम्, द्विधा = प्रकारद्वयम्, स्मृतम् = कथितम्। तद्यथा—भूतम् = मानवीयम्, भव्यम् = दैवीम्, स्मृतम् = कथितम्, सत्यार्थस्य = यथार्थस्य, अभिधायि = प्रतिपादकं साधनम्, तत्त्वम्, कूटाद्यभिहितम् = कपटादिसमन्वितम्, साधनं, छलं स्मृतम् ॥ १६५ ॥

**हिन्दी**—तत्त्व तथा छल के अनुसार भूत एवं भव्य दो प्रकार के साधन कहे गये हैं। यथार्थ का प्रतिपादक साधन तत्त्व एवं तथा कपटयुक्त साधन छल है ॥ १६५ ॥

**तत्त्वेति**। तत्त्वस्य छलस्य च अनुसारित्वात् साधनं द्विविधं भूतं भव्यञ्च। सत्यार्थस्य अभिधायि प्रतिपादकं साधनं तत्त्वं, कूटाद्यभिहितं कपटादियुक्तं साधनं छलम् ॥ १६५ ॥

**छलं निरस्य भूतेन व्यवहारान् नयेन्नृपः।**
**युक्त्यानुमानतो नित्यं सामादिभिरुपक्रमैः ॥ १६६ ॥**

**अन्वयः**—नृपः युक्त्या अनुमानतः च सामादिभिः उपक्रमैः छलं निरस्य भूतेन व्यवहारान् नित्यं नयेत् ॥ १६६ ॥

**व्याख्या**—नृपः = राजा, युक्त्या = कौशलेन, अनुमानतः = अभ्यूहनेन, सामादिभिः = सामदानादिभिः, उपक्रमैः = उपायैश्च, छलम् = कपटम्, निरस्य = परित्यज्य, भूतेन = याथार्थ्येन, व्यवहारान् = विवादान्, नित्यम् = सततं, नयेत् = विचारयेदिति ॥ १६६ ॥

**हिन्दी**—राजा युक्ति, अनुमान तथा सामादि उपायों से छल को हटाकर यथार्थ साधनों की सहायता से सदा मुकदमें पर विचार करे ॥ १६६ ॥

**छलमिति**। नृपः युक्त्या अनुमानतः अनुमानेन च सामादिभिः उपक्रमैः उपायैश्च छलं निरस्य भूतेन याथार्थ्येन व्यवहारान् नित्यं सदा नयेत् पश्येदित्यर्थः ॥ १६६ ॥

**न कालहरणं कार्य्यं राज्ञा साधनदर्शने।**
**महान् दोषो भवेत् कालाद्धर्मव्यापत्तिलक्षणः ॥ १६७ ॥**

**अन्वयः**—राज्ञा साधनदर्शने कालहरणं न कार्यम्। कालात् धर्मव्यापत्तिलक्षणः महान् दोषः भवेत् ॥ १६७ ॥

**व्याख्या**—राजा = नृपेण, व्यवहारस्य = विवादस्य, दर्शने = अवलोकने, कालहरणम् = समयविनष्टम्, न = नहि, कार्यम् = विधेयम्। कालात् = समयातिपातात् कालक्षेपाद्वा, धर्मव्यापत्तिलक्षणः = धर्महानिरूपः, महान् = अतीव, दोषः = अपराधः, भवेत् = स्यादिति ॥ १६७ ॥

**हिन्दी**—राजा वादी-प्रतिवादी के साक्ष्यों को देखने में कालक्षेप न करे। क्योंकि ऐसा करने से धर्मतत्त्व की हानि रूप महान् अपराध होता है ॥ १६७ ॥

**नेति**। राज्ञा साधनदर्शने कालहरणं न कार्य्यं, कालात् कालहरणात् धर्मव्यापत्तिलक्षणः धर्महानिरूपः महान् दोषः भवेत् ॥ १६७ ॥

**अर्थिप्रत्यर्थिप्रत्यक्षं साधनानि प्रदर्शयेत्।**
**अप्रत्यक्षं तयोर्नैव गृह्णीयात् साधनं नृपः ॥ १६८ ॥**

**अन्वयः**—नृपः अर्थिप्रत्यर्थिप्रत्यक्षं साधनानि प्रदर्शयेत्। तयोः अप्रत्यक्षं साधनं नैव गृह्णीयात् ॥ १६८ ॥

**व्याख्या**—नृपः = राजा, अर्थिप्रत्यर्थिनोः = वादिप्रतिवादिनोः, प्रत्यक्षम् = नयनयोः पुरतः, साधनानि = लिखिताद्युपकरणानि, प्रदर्शयेत् = दृग्गोचरं कारयेत्। तयोः = वादिप्रतिवादिनोः, अप्रत्यक्षम् = असमक्षम्, साधनम् = उपकरणम्, नैव = नास्त्येव, गृह्णीयात् = स्वीकुर्यात् ॥१६८॥

**हिन्दी**—राजा वादी-प्रतिवादी दोनों के सामने ही मुकदमे के साधनों को दिलवाये। उनके परोक्ष में उन साधनों को न देखे ॥१६८॥

**अर्थीति**। नृपः अर्थिप्रत्यर्थिनोः प्रत्यक्षं साधनानि प्रदर्शयेत्, तयोः अप्रत्यक्षम् असमक्षं साधनं नैव गृह्णीयात् ॥१६८॥

**साधनानाञ्च ये दोषा वक्तव्यास्ते विवादिना।**
**गूढास्तु प्रकटाः सभ्यैः काले शास्त्रप्रदर्शनात् ॥ १६९ ॥**

**अन्वयः**—साधनानाञ्च ये दोषाः ते विवादिना वक्तव्याः। गूढास्तु सभ्यैः काले शास्त्रप्रदर्शनात् प्रकटाः ॥ १६९ ॥

**व्याख्या**—साधनानाम् = प्रमाणाद्युपकरणानाम्, ये दोषाः = दुर्गुणाः, ते = सर्वे, विवादिना = वादिना वा प्रतिवादिना, वक्तव्याः = कथितव्याः। गूढाः = प्रच्छन्नाः दोषाः, सभ्यैः = विचारनियुक्तैः राजपुरुषैः, काले = यथावसरे, शास्त्राणाम् = धर्मग्रन्थानाम्, प्रदर्शनात् = प्रकाशनात्, प्रकटाः = स्पष्टाः, यथा तथा वक्तव्याः इति ॥ १६९ ॥

**हिन्दी**—वादी या प्रतिवादी एक-दूसरे के साधनों के दोषों को खुलकर बतलाये तथा छिपे हुए साधन-दोषों को विचार के लिए नियुक्त राजपुरुषों के सामने यथासमय शास्त्र के आधार पर प्रकट रूप से कहने चाहिए ॥ १६९ ॥

**साधनानामिति**। साधनानां प्रमाणानां ये दोषाः, ते विवादिना अर्थिना प्रत्यर्थिना वा वक्तव्याः, गूढाः गुप्तास्तु दोषाः सभ्यैः विचारनियुक्तैः पुरुषैः काले विचारकाले शास्त्राणां प्रदर्शनात् प्रकटाः प्रस्फुटाः यथा तथा वक्तव्या इति शेषः ॥ १६९ ॥

**अन्यथा दूषयन् दण्ड्यः साध्यार्थादेव हीयते।**
**विमृश्य साधनं सम्यक् कुर्य्यात् कार्य्यविनिर्णयम् ॥ १७० ॥**

**अन्वयः**—अन्यथा दूषयन् दण्ड्यः साध्यार्थात् एव हीयते। साधनं सम्यक् विमृश्य कार्यनिर्णयं कुर्यात् ॥ १७० ॥

**व्याख्या**—अन्यथा = अन्येन प्रकारेण, दूषयन् = दोषारोपणं कुर्वन्, दण्ड्यः = दण्डनीयो भवति, साध्यार्थात् = उपकरणहेतोः, हीयते = प्रभ्रश्यते च। तस्मात्, साधनम्, सम्यक् = सुष्ठुतया, विमृश्य = अनुचिन्त्य, कार्यनिर्णयम्—कार्य्यस्य = व्यवहारस्य, निर्णयम् = निश्चयं कुर्यात् ॥ १७० ॥

**हिन्दी**—वादी या प्रतिवादी शास्त्र-विरुद्ध व्यर्थ किसी साधन में दोष दिखलाता है तो वह दण्डनीय होता है और जिसे सिद्ध करना चाहता है, उसे यदि प्रमणित नहीं कर पाता है तो मुकदमा खारिज कर देना चाहिए। अतः राजा प्रमाणों पर पूरा विचार कर ही मुकदमे का फैसला सुनाये ॥ १७० ॥

**अन्यथेति**। अन्यथा अन्येन प्रकारेण अशास्त्रमार्गेणेत्यर्थः, दूषयन् दण्ड्यः दण्डनीयः भवति,

साध्यार्थात् साधनीयात् विषयात् हीयते प्रभ्रश्यते च। तस्मात् साधनं सम्यक् विमृश्य विविच्य कार्य्यनिर्णयं कुर्य्यात् ॥ १७० ॥

**कूटसाधनकारी तु दण्ड्यः कार्य्यानुरूपतः।**
**द्विगुणं कूटसाक्षी तु साक्ष्यलोपी तथैव च ॥ १७१ ॥**

**अन्वयः**—कूटसाधनकारी कार्यानुरूपतः दण्ड्यः। कूटसाक्षी तथैव साक्ष्यलोपी द्विगुणं दण्ड्यः ॥ १७१ ॥

**व्याख्या**—कूटम् = कपटम्, साधनम् = उपकरणम्, करोतीति तथोक्तः, वादी वा प्रतिवादी, कार्यस्य = व्यवहारस्य, अनुरूपात् = अनुसारात्, दण्ड्यः = दण्डनीयः। कूटसाक्षी = कपटप्रेक्षकः, तथा = तेनैव प्रकारेण, साक्ष्यलोपी = प्रमाणविनष्टा, द्विगुणम् = द्विगुणितम्, दण्ड्यः = दण्डनीयः ॥ १७१ ॥

**हिन्दी**—झूठा प्रमाण उपस्थित करने वाले वादी या प्रतिवादी को मुकदमे के अनुसार कम या ज्यादे दण्ड देना चाहिए। झूठी गवाही देने वाले तथा अपराध के प्रमाण को नष्ट करने वाले को उससे दूना जुर्माना या दण्ड देना चाहिए ॥ १७१ ॥

**कूटेति**। कूटं कपटं साधनं करोतीति तथोक्तः वादी वा प्रतिवादी कार्य्यानुरूपतः कार्य्यस्य अनुरूपात् गौरवलाघवानुसारादित्यर्थः दण्ड्यः। कूटसाक्षी तथा साक्ष्यलोपी साक्ष्यमन्यथा कुर्वन्नित्यर्थः, जनः द्विगुणं यथा तथा दण्ड्य इति शेषः ॥ १७१ ॥

**अधुना लिखितं वच्मि यथावदनुपूर्वशः।**
**अनुभूतस्मारकन्तु लिखितं ब्रह्मणा कृतम् ॥ १७२ ॥**

**अन्वयः**—अधुना यथावदनुपूर्वशः लिखितं वच्मि। ब्रह्मणा अनुभूतस्मारकं लिखितं कृतम् ॥ १७२ ॥

**व्याख्या**—अधुना = सम्प्रति, यथावत् = यद्वत्, अनुपूर्वशः = आनुपूर्व्येण, लिखितम् = साधनम्, वच्मि = वदामि, ब्रह्मणा = विधिना, अनुभूतस्मारकम् = पूर्वकृतस्मरणार्थम्, लिखितम् = लेखनविधिम्, कृतम् = रचितम् ॥ १७२ ॥

**हिन्दी**—इस समय मैं एक के बाद दूसरा ज्यों-के-त्यों लिखित साधन के बारे में बतलाता हूँ। ब्रह्मा ने किये गये कर्म की याद दिलाने के लिए ही लिखित साधन की रचना की है ॥ १७२ ॥

**अधुनेति**। अधुना सम्प्रति यथावत् अनुपूर्वशः अनुक्रमेण लिखितं साधनमित्यर्थः, वच्मि ब्रवीमि। ब्रह्मणा विधात्रा अनुभूतस्मारकं पूर्वकृतस्मरणार्थमित्यर्थः लिखितं कृतं निर्मितम् ॥ १७२ ॥

**राजकीयं लौकिकञ्च द्विविधं लिखितं स्मृतम्।**
**स्वहस्तलिखितं वान्यहस्तेनापि विलेखितम्।**
**असाक्षिमत् साक्षिमच्च सिद्धिर्देशस्थितेस्तयोः ॥ १७३ ॥**

**अन्वयः**—लिखितं द्विविधं स्मृतं—राजकीयं लौकिकञ्च, स्वहस्तलिखतं वा अन्यहस्तेनापि विलेखितम् असाक्षिमत् साक्षिमत् देशस्थितेः तयोः सिद्धिः भवेत् ॥ १७३ ॥

**व्याख्या**—लिखितम् = लिपिबद्धम्, द्विविधम् = प्रकारद्वयम्, स्मृतम् = कथितम्, राजकीयम्

= प्रशासकीयम्, च = पुनः, लौकिकम् = व्यावहारिकमाचारिकं वेति, तदपि द्विविधम्—स्वहस्तलिखितम्—स्वस्य = आत्मनः, हस्तेन = करेण, लिखितम् = लिपिबद्धं कृतम्, वा = अथवा, अन्यहस्तलिखितम्—अन्यस्य = अपरस्य जनस्य, हस्तेन = करेण, लिखितम् = अङ्कितम्, विलेखितम् = विशिष्टेन लिखितम्, पुनश्च द्विविधम्—आसाक्षिमत् = प्रेक्षकहस्ताक्षरविहीनम्, च = पुनः, साक्षिमत् = प्रेक्षकहस्ताक्षरसमन्वितम्, देशस्थितेः = स्थानानुसारेण, तयोः = उभयोः साक्षिकासाक्षिकयोः, सिद्धिः = साफल्यम्, भवेदिति ॥ १७३ ॥

**हिन्दी**—लिखित साधन दो प्रकार के होते हैं—राजकीय एवं लौकिक और इनमें से प्रत्येक लिखित फिर अपने हाथ से या दूसरे के हाथ से लिखा होने के कारण दो प्रकार का होता है। पुनः सभी प्रकार के लेख गवाह के हस्ताक्षर सहित एवं गवाही रहित होते हैं ॥ १७३ ॥

**राजकीयमिति**। लिखितं द्विविधं स्मृतं राजकीयं लौकिकञ्च। तदपि द्विविधं स्वहस्तलिखितम् अन्यहस्तलिखितं वा। पुनश्च द्विविधम् असाक्षिकं साक्षिमच्च, देशस्थितेः स्थानानुसारेण उभयोः ससाक्षिकासाक्षिकयोः सिद्धिः भवेदित्यर्थः ॥ १७३ ॥

**भागदानक्रियादानसंविद्दानऋणादिभिः ।**
**सप्तधा लौकिकं चैतत् त्रिविधं राजशासनम्।**
**शासनार्थं ज्ञापनार्थं निर्णयार्थं तृतीयकम् ॥ १७४ ॥**

**अन्वयः**—लौकिकं च एतत् भागदानक्रियादानसंविद्दानऋणादिभिः सप्तधा। राजशासनं तु त्रिविधम्—शासनार्थम्, ज्ञापनार्थं निर्णयार्थम् ॥ १७४ ॥

**व्याख्या**—लौकिकम् = व्यावहारिकं लिखितं च, एतत् भागैः = अंशैः, दानैः = प्रदानैः, क्रियाभिः = आचारैः, आदानैः = न्यासैः, संविद्भिः = प्रतिज्ञातैः, ऋणादिभिः = पर्युदञ्चनादिभिः, सप्तधा = सप्तप्रकारकं भवति, राजशासनन्तु, त्रिविधम्, शासनार्थम् = प्रशासनाय एकम्, ज्ञापनार्थम् = सूचनाय द्वितीयम्, तृतीयं तु निर्णयार्थम् = सिद्धान्तार्थम्, भवति ॥ १७४ ॥

**हिन्दी**—बटवारा, दान, आचार, धरोहर, इकरारनामा, सेवा तथा ऋण प्रभृति—ये लौकिक लेख के सात भेद होते हैं तथा राजकीय लेख शासन के लिए, सूचना देने के लिए तथा निर्णय देने के लिए—तीन तरह के होते हैं ॥ १७४ ॥

**भागेति**। लौकिकञ्च लिखितम् एतत् भागदानक्रियादानसंविद्दानऋणादिभिः निमित्तभूतैः सप्तधा सप्तविधमित्यर्थः, राजशासनन्तु त्रिविधं, शासनार्थम् एकं, ज्ञापनार्थं द्वितीयं, निर्णयार्थं तृतीयम् ॥ १७४ ॥

**साक्षिमद्रिक्थ्यभिमतं भागपत्रं सुभक्तियुक्।**
**सिद्धिकृच्चान्यथा पित्रा कृतमप्यकृतं स्मृतम् ॥ १७५ ॥**

**अन्वयः**—साक्षिमत् रिक्थ्यभिमतं सुभक्तियुक् भागपत्रं सिद्धिकृत्, अन्यथा पित्रा कृतमपि अकृतं स्मृतम् ॥ १७५ ॥

**व्याख्या**—साक्षिमत् = ससाक्षिकं, रिक्थिभिः = गोत्रजैः, अभिमतम् = सम्मतम्, सुभक्तियुक् = सुष्ठुतया विभाजितम्, भागपत्रम् = वण्टनलेख्यम्, सिद्धिकृत् = निर्णीतम्, निर्धारितं वा, अन्यथा = इतरथा, पित्रा कृतमपि = जनकेन विभाजितमपि, भागपत्रम् = वण्टनलेख्यम्, अकृतम् = अस्वीकार्यम्, स्मृतम् = कथितम् ॥ १७५ ॥

**हिन्दी**—बटवारे के दस्तावेज पर गवाही का हस्ताक्षर हो, पट्टीदारों की स्वीकृति हो, अच्छी तरह बटवारे की वस्तु का निर्णय किया गया हो, वह माननीय होता है; नहीं तो बाप का किया गया बटवारे का लेख भी अमान्य होता है ॥ १७५ ॥

**साक्षिमदिति**। साक्षिमत् ससाक्षिकं रिक्थिभिः दायादैः अभिमतं सुभक्तियुक् सुष्ठुरचनायुक्तं भागपत्रं वण्टनलेख्यं सिद्धिकृत्, अन्यथा अतथात्वे इत्यर्थः, पित्रा कृतमपि भागपत्रम् अकृतं स्मृतम् अग्राह्यमित्यर्थः ॥ १७५ ॥

**दायादाभिमतं दानक्रयविक्रयपत्रकम्।**
**स्थावरस्य ग्रामपादिसाक्षिकं सिद्धिकृत् स्मृतम् ॥ १७६ ॥**

**अन्वयः**—स्थावरस्य दानक्रयविक्रयपत्रकं दायादाभिमतं ग्रामपादिसाक्षिकं सिद्धिकृत् स्मृतम् ॥ २७६ ॥

**व्याख्या**—स्थावरस्य = अचलस्य सम्पदः, दानपत्रम् = दानलेखः, क्रयपत्रम् = मूल्येन क्रीत-पदार्थलेखः, विक्रयपत्रम् = विपणनपत्रम्, च, दायादाभितम्—दायादैः = गोत्रजैः, अभिमतम् = मनोनीतम्, ग्रामपादिसाक्षिकम् = ग्रामप्रधानादिसाक्ष्यसहितम्, सिद्धिकृत् = निर्णीतपत्रम्, स्मृतम् = कथितम् ॥ १७६ ॥

**हिन्दी**—अचल सम्पत्ति-विषयक दानपत्र, खरीदपत्र एवं विक्रयपत्र यदि पट्टीदारों से अनुमोदित, ग्राममुखिया की गवाही हो तो माननीय है, अन्यथा अमान्य होता है ॥ १७६ ॥

**दायादेति**। स्थावरस्य भूम्यादेः दानविक्रयपत्रं दानपत्रं विक्रयपत्रं क्रयपत्रञ्च दायादाभिमतं दायादैः अभिमतं सम्मतं ग्रामपादिसाक्षिकं ग्रामाध्यक्षसमेतं सत् सिद्धिकृत् स्मृतम् ॥ १७६ ॥

**राज्ञा स्वहस्तसंयुक्तं स्वमुद्राचिह्नितं तथा।**
**राजकीयं स्मृतं लेख्यं प्रकृतिभिश्च मुद्रितम् ॥ १७७ ॥**

**अन्वयः**—राजकीयं लेख्यं राज्ञा स्वहस्तसंयुक्तं वा स्वमुद्राचिह्नितम् अथवा प्रकृतिभिश्च मुद्रितम् ॥ १७७ ॥

**व्याख्या**—राजकीयम् = प्रशासकीयम्, लेख्यम् = लेखपत्रम्, राज्ञा = नृपेण, स्वहस्तसंयुक्तम् = स्वकीयहस्ताक्षरेण सहितम्, वा स्वमुद्राचिह्नितम् = राजमुद्राङ्कितम्, अथवा नृपाभिमतेन प्रकृतिभिः = राजपुरुषैः, मुद्रितम् = अङ्कितम्, स्यादिति ॥ १७७ ॥

**हिन्दी**—जिस लेख पर राजा का हस्ताक्षर हो अथवा राजमुद्रा अंकित हो या राजा के आदेश से मंत्रियों की मुहर लगी हो, उसे राजकीय पत्र कहते हैं ॥ १७७ ॥

**राज्ञेति**। राजकीयं लेख्यं राज्ञा स्वहस्तसंयुक्तं स्वहस्ताक्षरितं वा स्वस्य मुद्रया चिह्नितम् अथवा राजानुमत्या प्रकृतिभिः राजपुरुषैः मुद्रितं भवतीति शेषः ॥ १७७ ॥

**निवेश्य कालं वर्षं च मासं पक्षं तिथिं तथा।**
**वेलां प्रदेशं विषयं स्थानं जात्याकृती वयः ॥ १७८ ॥**
**साध्यं प्रमाणं द्रव्यं च सङ्ख्यां नाम तथात्मनः।**
**राज्ञां च क्रमशो नाम निवासं साध्यनाम च ॥ १७९ ॥**
**क्रमात् पितृणां नामानि पीडामाहर्तृदायकौ।**
**क्षमालिङ्गानि चान्यानि पक्षे सङ्कीर्त्य लेखयेत् ॥ १८० ॥**

**अन्वयः**—पक्षे कालं वर्षं मासं पक्षं तिथिं तथा वेलां प्रदेशं विषयं स्थानं जात्या आकृती वयः साध्यं प्रमाणं संख्याम् आत्मनः नाम च तथा क्रमशः राज्ञां नाम निवासं साध्यनाम पितृणाम् आत्मनः नामानि पीडाम् आहर्तृदायकौ क्षमालिङ्गानि अन्यानि सङ्कीर्त्य लेखयेत् ॥ १७८-१८० ॥

**व्याख्या**—पक्षे = साध्ये, कालम् = समयम्, वर्षम् = अब्दम्, मासम् = पक्षद्वयावधिम्, पक्षम् = मासार्द्धम्, तिथिम् = दिनम्, प्रदेशम् = क्षेत्रम्, विषयम् = मण्डलम्, स्थानम् = ग्रामम्, जात्याकृती—जातिम् = वर्णम्, आकृतिम् = आकारम्, वयः = अवस्था, साध्यम् = प्रमाणम्, द्रव्यम् = धनम्, संख्याम् = अङ्कः, आत्मनः = स्वस्य, नाम = अभिधानम्, निवेश्य = उल्लिख्य, क्रमशः = क्रमेण, राज्ञाम् = नृपाणाञ्च, नाम = अभिधानम्, निवासम् = निवासस्थानम्, साध्यनाम—साध्यस्य = विवादस्य, नाम = संज्ञा, पितृणाम् = जनकानाम्, आत्मनः = स्वस्य, राज्ञाञ्चेति शेषः, नामानि = अभिधानानि, पीडाम् = कष्टम्, अभियोगभूततथ्यम्, आहर्तृदायकौ = उपार्जकदातारौ, नाम्नी, क्षमालिङ्गानि—क्षमायाः = सहिष्णुतायाः, लिङ्गानि = चिह्नानि, अन्यानि = अपराणि, आवश्यकवस्तूनि, सङ्कीर्त्य = कथयित्वा, लेखयेत् = उल्लेखं कारयेत् ॥ १७८-१८० ॥

**हिन्दी**—दावा में समय, साल, महीना, पक्ष, दिन, काल, प्रान्त, जिला, ग्राम, जाति, आकार, अवस्था, अभियोग, प्रमाण, धन और उनकी संख्या तथा अपना नाम लिखकर क्रमशः राजा का नाम, उनका निवासस्थान तथा साध्य का नाम, पिता-पितामह प्रभृति का नाम, अपनी पीडा, अर्जित करने वाले का नाम, देने वाले का नाम, क्षमा के चिह्न तथा इनके अतिरिक्त अन्य जो कुछ आवश्यक तथ्य हों, उसका नाम कहकर लिखवा दे ॥ १७८-१८० ॥

सम्प्रति लेखनप्रकारमाह—**निवेश्येत्यादि**। पक्षे साध्ये कालं वर्षं मासं पक्षं तिथिं वेलां प्रदेशं विषयं स्थानं जात्याकृती जातिम् आकृतिञ्चेत्यर्थः, वयः यौवनादिकं साध्यं प्रमाणं द्रव्यं संख्याम् आत्मनः नाम च निवेश्य, तथा क्रमशः यथाक्रमं राज्ञां नाम, निवासं साध्यानाम्, पितृणाम् आत्मनः राज्ञाञ्चेति शेषः, नामानि, पीडाम् अभियोगहेतुभूतामित्यर्थः, आहर्त्तृदायकौ अर्जकं दातारञ्चेत्यर्थः, क्षमालिङ्गानि क्षमायाः चिह्नानि अन्यानि आवश्यकानि च सङ्कीर्त्य लेखयेत् ॥ १७८-१८० ॥

**यत्रैतानि न लिख्यन्ते हीनं लेख्यं तदुच्यते।**
**भिन्नक्रमं व्युत्क्रमार्थं प्रकीर्णार्थं निरर्थकम् ॥ १८१ ॥**
**अतीतकाललिखितं न स्यात् तत् साधनक्षमम्।**
**अप्रगल्भेन च स्त्रिया बलात्कारेण यत् कृतम् ॥ १८२ ॥**

**अन्वयः**—यत्र एतानि न लिख्यन्ते तत् हीनं लेख्यम् उच्यते। यत् भिन्नक्रमं व्युत्क्रमार्थं, प्रकीर्णार्थं निरर्थकं वा अतीतकाललिखितं; यच्च अप्रगल्भेन स्त्रिया बलात्कारेण कृतं, तत् साधनक्षमं न स्यात् ॥ १८१-१८२ ॥

**व्याख्या**—यत्र = यस्मिन्लेखे, एतानि = पूर्वोक्तानि, न = नहि, लिख्यन्ते, तत् = लेख्यम्, हीनम् = प्रमाणशून्यम्, निकृष्टम्, उच्यते = कथ्यते। यत् = लेखम्, भिन्नक्रमम् = क्रमभङ्गान्वितम्, व्युत्क्रमार्थम् = विपरीतार्थम्, प्रकीर्णार्थम् = विश्लिष्टार्थम्, निरर्थकम् = अर्थशून्यं, वा,

अतीतकाललिखितम् = कालान्तरे लिखितम्, यच्च, अप्रगल्भेन = अकुशलेन, वा, स्त्रियाः = नारीजनेन, अथवा बलात्कारेण = बलपूर्वकेण, कृतम् = लिखितम्, तत् = लेखम्, साधनक्षमम् = प्रामाणिकम्, तथ्ययुक्तं वा, न = नहि, स्यात् = भवेत् ॥ १८१-१८२ ॥

**हिन्दी**—जिस लेख में ऊपरलिखित बातों का उल्लेख न हो, वह अप्रामाणिक या हीन होता है। जो लेख सिलसिलेवार न लिखा गया हो या उलटे अर्थ को बतलाने वाला हो या बिखरे अर्थ को बतलाने वाला हो, निरर्थक हो, कालान्तर का लिखा हो वह लेख प्रामाणिक नहीं माना जाता है। जो लेख अप्रबुद्ध व्यक्ति का लिखा हो या किसी और का लिखा हो अथवा जबर्दस्ती लिखवाया गया हो, वह लेख भी अप्रामाणिक माना जाता है ॥ १८१-१८२ ॥

**यत्रेति। अतीतेति।** यत्र एतानि उक्तानि न लिख्यन्ते तत् लेख्यं हीनम् अप्रमाणमित्यर्थः, उच्यते। यत् भिन्नकर्म क्रमभङ्गयुतं व्युत्क्रमार्थं विपरीतार्थं प्रकीर्णार्थं विक्षिप्तप्रतिपाद्यं निरर्थकम् अर्थशून्यं वा अतीतकाललिखितं कालान्तरे लिखितं, यच्च अप्रगल्भेन अचतुरेण निर्बोधेनेत्यर्थः, वा स्त्रिया स्त्रीलोकेन अथवा बलात्कारेण कृतं लिखितं तत् लेख्यं साधनक्षमं प्रामाणिकं न स्यात् ॥ १८१-१८२ ॥

**सद्भिर्लेख्यैः साक्षिभिश्च भोगैर्दिव्यैः प्रमाणताम्।**
**व्यवहारे नरो याति चेहामुत्राश्नुते सुखम् ॥ १८३ ॥**

**अन्वयः**—नरः सद्भिः लेख्यैः साक्षिभिः भोगैः दिव्यैः प्रमाणतां याति। एवम् इह अमुत्र च सुखम् अश्नुते ॥ १८३ ॥

**व्याख्या**—नरः = पुरुषः, सद्भिः = दोषशून्यैः, लेख्यैः = साध्यैः, साक्षिभिः = प्रत्यक्षदर्शकैः, भोगैः = उपभोगैः, दिव्यैः = घटादिभिश्च, व्यवहारे प्रमाणताम्, याति = प्राप्नोति, इह = संसारे, अमुत्र = परलोके च, सुखम् = आनन्दम्, अश्नुते = भुङ्क्ते ॥ १८३ ॥

**हिन्दी**—कोई भी आदमी निर्दोष लिखित प्रमाणों से गवाही के द्वारा किसी सम्पत्ति पर कब्जा होने से, दिव्य प्रमाणों से व्यावहारिकता में प्रमाण प्राप्त करता है, ऐसा व्यक्ति ही संसार तथा संसार से परे सुख भोगता है ॥ १८३ ॥

**सद्भिरिति।** नरः सद्भिः निर्दोषैः लेख्यैः साक्षिभिः भोगैश्च तथा दिव्यैः घटादिभिश्च व्यवहारे प्रमाणतां याति प्राप्नोति, इह अस्मिन् लोके अमुत्र परलोके च सुखम् अश्नुते ॥ १८३ ॥

**स्वेतरः कार्य्यविज्ञानी यः स साक्षी त्वनेकधा।**
**दृष्टार्थश्च श्रुतार्थश्च कृतश्चैवाकृतो द्विधा ॥ १८४ ॥**

**अन्वयः**—यः स्वेतरः कार्यविज्ञानी सः साक्षी, स तु अनेकधा, दृष्टार्थः श्रुतार्थश्च द्विधा, पुनः कृतः अकृतश्चेति द्विविधः ॥ १८४ ॥

**व्याख्या**—यः = नरः, स्वेतरः—स्वस्य = आत्मनः, इतरः = भिन्नो जनः, तस्य कार्यविज्ञानी = कार्यवेत्ता, भवति, सः = असौ, साक्षी = प्रेक्षको भवति, सः = साक्षी, तु अनेकधा = बहुविधा भवन्ति, दृष्टार्थः = प्रत्यक्षद्रष्टा, श्रुतार्थश्च = श्रोता च, द्विविधः, सः तु पुनः कृतः = वादिना समुपस्थितः, अकृतश्च = नृपेणाहूतः द्विविधः ॥ १८४ ॥

**हिन्दी**—जो अपना सम्बन्धी न हो पर मुकदमे की जानकारी रखता हो, वह गवाह मानने लायक होता है। गवाह अनेक तरह के होते हैं—कोई प्रत्यक्षदर्शी होता है तो कोई केवल सुनने वाला ही होता है। फिर ये दो तरह के होते हैं—एक वह जो वादी द्वारा उपस्थित किया जाता है, उसे 'कृति' कहते हैं। दूसरा वह जिसे राजा बुलवाता है, वह अकृत कहलाता है॥ १८४॥

**स्वेतर इति**। यः स्वेतरः स्वस्मात् आत्मनः इतरः अन्यः सन् कार्य्यविज्ञानी कार्य्यज्ञानवान् भवति सः साक्षी, स तु अनेकधा, दृष्टार्थः श्रुतार्थश्चेति द्विविधः, स पुनः कृतः अकृतश्चेति द्विविधः॥ १८४॥

**अर्थिप्रत्यर्थिसान्निध्यादनुभूतं तु प्राग् यथा।**
**दर्शनैः श्रवणैर्येन स साक्षी तुल्यवाग् यदि॥ १८५॥**

**अन्वयः**—येन प्राक् अर्थिप्रत्यर्थिसान्निध्यात् दर्शनैः श्रवणैः वा यथा अनुभूतं सः यदि तुल्यवाग् तदा साक्षी भवति॥ १८५॥

**व्याख्या**—येन = जनेन, प्राक् = पूर्वम्, अर्थिप्रत्यर्थिसान्निध्यात् = वादिप्रतिवादिसामीप्यात्, दर्शनैः = अवलोकनैः, श्रवणैः = आकर्णनैः, वा = अथवा, यथा अनुभूतम् = अनुभवगम्यम्, सः = असौ, यदि, तुल्यवाक् = समानकथनम्, भवति, तदा साक्षी = प्रेक्षको भवति॥ १८५॥

**हिन्दी**—वादी या प्रतिवादी के पास रहने से जैसा पहले देखने या सुनने से मुकदमे के बारे में अनुभव हुआ हो और उसी के अनुरूप कहने वाला हो तो उसे ही गवाही कहते हैं॥१८५॥

**अर्थीति**। येन प्राक् पूर्वम् अर्थिप्रत्यर्थिसान्निध्यात् वादिप्रतिवादिसकाशात् दर्शनैः श्रवणैर्वा यथा अनुभूतम् अनुभवविषयीकृतं सः यदि तुल्यवाक् अविरुद्धवाक् भवति तदा साक्षी भवति॥ १८५॥

**यस्य नोपहता बुद्धिः स्मृतिः श्रोत्रं च नित्यशः।**
**सुदीर्घेणापि कालेन स वै साक्षित्वमर्हति॥ १८६॥**

**अन्वयः**—यस्य बुद्धिः स्मृतिः श्रोत्रं च सुदीर्घेणापि न उपहता (भवति) सः वै नित्यशः साक्षित्वं भवेत्॥ १८६॥

**व्याख्या**—यस्य = जनस्य, बुद्धि = मतिः, स्मृतिः = स्मरणशक्तिः, श्रोत्रम् = श्रवणशक्तिश्च, सुदीर्वेणापि = बहुकालात्ययेनापि, न = नहि, उपहता = विनष्टा भवति, सः = असौ, वै = इति निश्चयेन, नित्यशः = सततम्, साक्षित्वम् = प्रेक्षकत्वम्, अर्हति = योग्यो भवति॥ १८६॥

**हिन्दी**—बहुत समय बीत जाने के बावजूद जिसकी बुद्धि, स्मरणशक्ति और सुनने की शक्ति क्षीण न हुई हो, वही व्यक्ति सचमुच गवाही देने योग्य होता है॥ १८६॥

**यस्येति**। यस्य बुद्धिः स्मृतिः श्रोत्रञ्च सुदीर्घेणापि बहुनापि कालेन न उपहता न विलुप्ता भवति, स वै स एव नित्यशः सततं साक्षित्वम् अर्हति॥ १८६॥

**अनुभूतः सत्यवाग्यः सैव साक्षित्वमर्हति।**
**उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित्॥ १८७॥**

**अन्वयः**—यः अनुभूतः सत्यवाक् स एव साक्षित्वम् अर्हति, यश्च धर्मवित् उभयानुमतः सः एकोऽपि साक्षी भवति ॥ १८७ ॥

**व्याख्या**—यः= जनः, अनुभूतः= साक्षात् ज्ञातः, सत्यवाक्= सत्यवचनवादी, स एव, साक्षित्वम्= साक्षिता, अर्हति= योग्यो भवति, यश्च= यो हि जनः, धर्मविद्= धार्मिकः, उभयानुमतः= अर्थिप्रत्यर्थिभ्यां सम्मतः, सः= असौ, एकोऽपि= एकेनैवोभयपक्षस्य, साक्षी= प्रेक्षकः भवति ॥ १६७ ॥

**हिन्दी**—मुकदमे का जिसने अनुभव किया है तथा सत्यवादी है, वही गवाह बनने योग्य होता है और कोई धर्मात्मा अकेले ही वादी और प्रतिवादी दोनों के लिए गवाही के रूप में मान्य हाता है ॥ १८७ ॥

**अनुभूत इति**। यः अनुभूतः अनुभवशक्तिसम्पन्नस्तथा सत्यवाक् सैव स एव ( सन्धिरार्षः) साक्षित्वम् अर्हति। यश्च धर्मवित् धार्मिकः उभयानुमतः वादिप्रतिवादिभ्यां सम्मतः स एकोऽपि साक्षी भवति ॥ १८७ ॥

**यथाजाति यथावर्णं सर्वे सर्वेषु साक्षिणः।**
**गृहिणो न पराधीनाः सूरयश्चाप्रवासिनः ॥ १८८ ॥**

**अन्वयः**—यथाजाति यथावर्णं सर्वे सर्वेषु साक्षिणः गृहिणः न पराधीना सूरयश्च अप्रवासिनः साक्षिणः भवन्ति ॥ १८८ ॥

**व्याख्या**—यथाजाति= जात्यनुरूपेण, यथावर्णम्= वर्णानुसारेण, सर्वे= सकलाः, सर्वेषु= सकलेषु, साक्षिणः= प्रेक्षकाः, गृहिणः= गृहस्थाः, न= नहि, पराधीनाः= परतन्त्राः, सूरयश्च= विद्वांसः, तथा अप्रवासिनः जनाः, साक्षिणः= प्रेक्षकाः भवन्तीति ॥ १८८ ॥

**हिन्दी**—जाति और वर्ण के अनुसार सभी जाति में सभी जाति के लोग गवाह बन सकते हैं। गृहस्थ, किसी के अधीन न रहने वाले, विद्वान्, परदेश में नहीं रहने वाले लोग गवाह हो सकते हैं ॥ १८८ ॥

**यथेति**। यथाजाति जात्यनुसारेण यथावर्णं वर्णानुसारेण सर्वेषु विषयेषु सर्वे गृहिणः सर्वे गृहस्थाः न पराधीनाः स्वाधीना इत्यर्थः, सूरयः विद्वांसः तथा अप्रवासिनः जनाः साक्षिणः भवन्तीति शेषः ॥ १८८ ॥

**युवानः साक्षिणः कार्य्याः स्त्रियः स्त्रीषु च कीर्त्तिताः ॥१८९ ॥**

**अन्वयः**—युवानः साक्षिणः कार्याः च स्त्रीषु स्त्रियः कीर्त्तिताः ॥ १८९ ॥

**व्याख्या**—युवानः= तरुणाः, न तु वृद्धाः बालकाश्च, साक्षिणः= प्रेक्षकाः, कार्याः= विधेयाः, च= पुनः, स्त्रीषु= नारीविषयेषु, स्त्रियः= नार्यः एव, साक्षिण्यः= प्रेक्षिकाः, कीर्त्तिताः= कथिताः ॥१८९ ॥

**हिन्दी**—युवा व्यक्ति ही गवाह बनाने योग्य होते हैं तथा औरतों के मुकदमे में औरतों को ही गवाही देनी चाहिए ॥ १८९ ॥

**युवान इति**। युवानः न तु बालका वा वृद्धा इत्यर्थः, साक्षिणः, तथा स्त्रीषु विषयेषु स्त्रियः साक्षिण्य इत्यर्थः कीर्त्तिताः ॥ १८९ ॥

साहसेषु च सर्वेषु स्तेयसङ्ग्रहणेषु च।
वाग्दण्डयोश्च पारुष्ये न परीक्षेत साक्षिणः ॥ १९० ॥

**अन्वयः**—साहसेषु सर्वेषु स्तेयसङ्ग्रहणेषु तथा वाग्दण्डयोश्च पारुष्ये साक्षिणः न परीक्षेत ॥ १९० ॥

**व्याख्या**—साहसेषु = कुकृत्येषु, सर्वेषु = सकलेषु, स्तेयसङ्ग्रहणेषु = चौर्यादिजघन्यकृत्येषु, तथा वाग्दण्डयोः = वाचस्तथा दण्डस्य, च, पारुष्ये = कार्कश्ये, साक्षिणः = प्रेक्षकाः, न = नहि, परीक्षेत = परीक्षणं कुर्यात् ॥ १९० ॥

**हिन्दी**—डकैती, चोरी, बलात्कार या अपहरण, कठोर वचन तथा कठोर दण्ड जैसे जघन्य अपराधों में गवाही का विशेष परीक्षण नहीं होता। क्योंकि ऐसे मुकदमे में कोई भी गवाह बन सकता है ॥ १९० ॥

**साहसेष्विति**। सर्वेषु साहसेषु दस्युव्यवहारेषु स्तेयसङ्ग्रहणेषु चौर्य्येषु बलात्कारेषु च तथा वाग्दण्डयोः पारुष्ये साक्षिणः न परीक्षेत ये केचन साक्षिणो भवन्तीति भावः ॥ १९० ॥

बालोऽज्ञानादसत्यात् स्त्री पापाभ्यासाच्च कूटकृत्।
विब्रूयाद् बान्धवः स्नेहाद्वैरनिर्य्यातनादरिः ॥ १९१ ॥
अभिमानाच्च लोभाच्च विजातिश्च शठस्तथा।
उपजीवनसङ्कोचाद्भृत्यश्चैते ह्यसाक्षिणः।
नार्थसम्बन्धिनो विद्यायौनसम्बन्धिनोऽपि न ॥ १९२ ॥

**अन्वयः**—बालः अज्ञानात्, स्त्री असत्यात्, कूटकृत् पापाभ्यासात्, बान्धवः स्नेहात्, अरिः वैरनिर्यातनात्, विजातिः अभिमानात्, शठः लोभात् तथा भृत्यः उपजीवनसङ्कोचात् विब्रूयात्। तस्मात् एते असाक्षिणः किञ्च अर्थसम्बन्धिनः विद्यायौनसम्बन्धिनोऽपि नेति ॥ १९१-१९२ ॥

**व्याख्या**—बालः = बालकः, अज्ञानात् = ज्ञानहीनत्वात्, स्त्री = नारी, असत्यात् = मिथ्यावादनाभ्यासात्, कूटकृत् = मायिकः, पापाभ्यासात्—पापस्य = अधर्मस्य, अभ्यासात् = सततानुशीलनात्, बान्धवः = सम्बन्धिनः, स्नेहात् = प्रेम्णः, अरिः = रिपुः, वैरनिर्यातनात् = शत्रुत्वनिष्कासनात्, विजातिः = अपकृष्टजातिः, अभिमानात् = स्वदर्पात्, शठः = धूर्त्तः, लोभात् = लिप्सायाः, तथा भृत्यः = सेवकः, उपजीवनसङ्कोचात्—उपजीवनस्य = जीविकायाः, सङ्कोचात् = विनाशभयात्, विब्रूयात् = विरुद्धं विपरीतं वा वदेत्। तस्मात् हेतोः, एते = पूर्वोक्ताः सर्वे, असाक्षिणः = साक्षित्वं नार्हन्ति, किञ्च अर्थसम्बन्धिनः—अर्थेन = धनेन, सम्बन्धवन्तः = संसर्गवन्तः, न = नहि, तथा विद्यायौनसम्बन्धिनः—विद्यासम्बन्धिनः = सहाध्यायिनः, यौनसम्बन्धिनः = जामात्रादयः, न = नहि, साक्षिणः = प्रेक्षकाः, भवन्ति ॥ १९१-१९२ ॥

**हिन्दी**—बालक अज्ञानी होने के कारण, झूठ बोलने के अभ्यास के कारण औरत, जालसाजी करने के कारण जालसाज, स्नेह के कारण सम्बन्धी, शत्रुता साधने के कारण शत्रु, संमान-वृद्धि के दंभ से हीन जाति के लोग तथा नौंकरी छूट जाने के डर से नौकर विरुद्ध बोल सकते हैं। अतः ये गवाह बनने योग्य नहीं होते और किसी तरह धन से जुडे लोग या सहपाठी और जमाई जैसे सम्बन्धी जन भी गवाह नहीं हो सकते हैं ॥ १९१-१९२ ॥

**बाल इत्यादि**। बालः शिशुः अज्ञानात्, स्त्री असत्यात्, कूटकृत् कपटकारी पापाभ्यासात् पापानुष्ठानसातत्यात्, बान्धवः स्नेहात्, अरिः शत्रुः वैरनिर्य्यातनात्, विजातिः अपकृष्टजातिः अभिमानात् आत्मनः मानवर्द्धनप्रत्याशायोगादित्यर्थः, शठः लोभात्, तथा भृत्यः उपजीवनसङ्कोचात् उपजीवनस्य जीविकायाः सङ्कोचो भवेदिति भयादित्यर्थः, विब्रूयात् विरुद्धं वदेत्, तस्मात् एते बालादयः असाक्षिणः साक्षित्वं नार्हन्तीत्यर्थः, किञ्च अर्थसम्बन्धिनः अर्थेन सम्बन्धवन्तः न, तथा विद्यायौनसम्बन्धिनः सहाध्यायिनः जामात्रादयश्चेत्यर्थः न साक्षिणो भवन्तीत्यर्थः॥ १९१-१९२ ॥

**श्रेण्यादिषु च वर्गेषु कश्चिच्चेद् द्वेष्यतामियात्।**
**तस्य तेभ्यो न साक्ष्यं स्याद्द्वेष्टारः सर्व एव ते॥ १९३ ॥**

**अन्वयः**—श्रेण्यादिषु वर्गेषु चेत् कश्चित् द्वेष्यताम् इयात् तदा तेभ्यः तस्य साक्ष्यं न स्यात्। ते सर्वे एव द्वेष्टारः॥ १९३ ॥

**व्याख्या**—श्रेण्यादिषु = जातिविशेषेषु, वर्गेषु = समूहेषु, च चेत् = यदि, कश्चित् = कोऽपि जनः, द्वेष्यताम् = वैरित्वम्, इयात् = इच्छेत्, तदा तेभ्यः = श्रेण्यादिभ्यः वर्गेभ्यश्च, समीपात्, तस्य = जनस्य, साक्ष्यम् = प्रेक्षकत्वम्, न = नहि, स्यात् = भवेत्। ते सर्वे एव जनाः, द्वेष्टारः = विद्वेषिणो भवन्तीति॥ १९३ ॥

**हिन्दी**—कारीगरों के समूह में यदि किसी एक व्यक्ति को विद्वेष हो जाय तो उस समूह से किसी को गवाह नहीं मानना चाहिए। क्योंकि एकता के कारण वे सभी विद्वेषी हो जाते हैं॥ १९३ ॥

**श्रेण्यादिषु इति**। श्रेण्यादिषु जातिविशेषेषु वर्गेषु गणेषु सम्प्रदायविशेषेषु च मध्ये चेत् यदि कश्चित् जनः द्वेष्यतां शत्रुताम् इयात् तदा तेभ्यः श्रेण्यादिभ्यः वर्गेभ्यश्च सकाशात् तस्य विद्वेषिणः जनस्य साक्ष्यं न स्यात्। यस्मात् ते सर्व एक द्वेष्टारः विद्वेषिणः भवन्तीति शेषः॥ १९३ ॥

**न कालहरणं कार्य्यं राज्ञा साक्षिप्रभाषणे।**
**अर्थिप्रत्यर्थिसान्निध्ये साध्यार्थेऽपि च सन्निधौ॥ १९४॥**
**प्रत्यक्षं वादयेत् साक्ष्यं न परोक्षं कथञ्चन।**
**नाङ्गीकरोति यः साक्ष्यं दण्ड्यः स्याद्देशितो यदि॥ १९५ ॥**

**अन्वयः**—राज्ञा अर्थिप्रत्यर्थिसान्निध्ये साक्षिप्रभाषणे सन्निधौ साध्यार्थे कालहरणं न कार्यम्। प्रत्यक्षं साक्ष्यं वादयेत् कथञ्चन परोक्षं न। यश्च देशितः यदि साक्ष्यं न अङ्गीकरोति स दण्ड्यः स्यात्॥ १९४-१९५ ॥

**व्याख्या**—राज्ञा = नृपेण, अर्थिप्रत्यर्थिनोः = वादिप्रतिवादिनोः, सान्निध्ये = सामीप्ये, साक्षिप्रभाषणे—साक्षिणाम् = प्रेक्षकानाम्, प्रभाषणे = प्रकर्षेण वचने, तथा सन्निधौ = सामीप्ये, तयोः समक्षम्, साध्यार्थे = साधनीयप्रयोजनेऽपि, कालहरणम् = कालक्षेपम्, न = नहि, कार्यम् = विधेयम्। किञ्च प्रत्यक्षम् = तयोः वादिप्रतिवादिनोः समक्षम्, साक्ष्यम् = साक्षित्वम्, वादयेत् = वादितुं प्रेरयेत्, कश्चन = कोऽपि, परोक्षे = अनुपस्थितौ, न वादयेत्। यश्च = पुरुषश्च, देशितोऽपि = नृपेणादिष्टोऽपि, साक्ष्यम् = साक्षित्वम्, न = नहि, अङ्गीकरोति = स्वीकरोति, सः = पुरुषः, दण्ड्यः = दण्डनीयः, स्यात् = भवेत्॥ १९४-१९५ ॥

हिन्दी—वादी-प्रतिवादी की उपस्थिति में गवाह से गवाही लेने में राजा कालक्षेप न करे, साथ ही मुकदमे की सुनवाई में भी देर न करे। वादी-प्रतिवादी के सामने ही सदा गवाही लेनी चाहिए, उनकी अनुपस्थिति में नहीं। राजा की आज्ञा के बावजूद यदि कोई गवाह गवाही देना स्वीकार न करे तो वह दण्डनीय होता है॥१९४-१९५॥

नेति। राजा अर्थिप्रत्यर्थिनोः सान्निध्ये समक्षं साक्षिप्रभाषणे साक्षिणां प्रभाषणे वचने यथा सान्निध्ये तयोः समक्षमित्यर्थः, साध्यार्थं साक्षणीये अर्थे विषयेऽपि कालहरणं न कर्तव्यम्। किञ्च प्रत्यक्षम् उभयोः समक्षं साक्ष्यं वादयेत्, कथञ्चन परोक्षं न वादयेदित्यर्थः। यश्च देशितः यदि आदिष्टोऽपीत्यर्थः, साक्ष्यं न अङ्गीकरोति सः दण्ड्यः स्यात्॥१९४-१९५॥

**यः साक्षान्नैव निर्दिष्टो नाहूतो नैव देशितः।**
**ब्रूयात् मिथ्येति तथ्यं वा दण्ड्यः सोऽपि नराधमः॥१९६॥**

**अन्वयः**—यः साक्षात् नैव निर्दिष्टः न आहूतः नैव देशितः, सः मिथ्या वा तथ्यं ब्रूयात्, सदा सः अपि नराधमः दण्ड्यः॥१९६॥

**व्याख्या**—यः = पुरुषः, साक्षात् = विचारपतिसम्मुखे, नैव = नास्त्येव, निर्दिष्टः = साक्षित्वेनोपस्थापितः, न = नहि, राज्ञा, आहूतः = आकारितः, न च देशितः = आदिष्टः, सः = एवंविधो जनः, मिथ्या = असत्यम्, वा = अथवा, तथ्यम् = सत्यम्, ब्रूयात् = वदेत्, सदा सोऽपि, नराधमः = नीचपुरुषः, दण्ड्यः = दण्डनीयो भवति॥१९६॥

**हिन्दी**—जो व्यक्ति विचारपति के सामने गवाही देने के लिए उपस्थित न किया गया हो, उसे न बुलाया गया हो तथा न वह राजा से आदेशित हो; ऐसा नराधम व्यक्ति चाहे सच कहे या झूठ दण्डनीय होता है॥१९६॥

**य इति।** यः साक्षात् विचारकसन्निधाने इत्यर्थः, निर्दिष्टः साक्षित्वेन प्रदर्शित इत्यर्थः, न आहूतः न देशितः आदिष्टश्च न, स चेत् मिथ्या वा तथ्यं ब्रूयात् सदा सः अपि नराधमः दण्ड्यः दण्डनीयो भवतीत्यर्थः॥१९६॥

**द्वैधे बहूनां वचनं समेषु गुणिनां वचः।**
**तत्राधिकगुणानां च गृह्णीयाद्वचनं सदा॥१९७॥**

**अन्वयः**—द्वैधे बहूनां वचनं समेषु गुणिनां वचः अधिकगुणानां वचनं सदा गृह्णीयात्॥१९७॥

**व्याख्या**—द्वैधे = संशये, बहूनाम् = अनेकानाम्, वचनम् = कथनम्, समेषु = समानेषु तुल्येषु वा, मध्ये, गुणिनाम् = गुणवताम्, वचः, तत्राऽपि = सर्वेषु गुणिषु, अधिकगुणानाम् = सर्वाधिकगुणवताम्, वचनम् = कथनम्, सदा = सर्वदा, गृह्णीयात् = ग्रहणं कुर्यात्॥१९७॥

**हिन्दी**—अनेक गवाहों के विभिन्न कथनों के कारण यदि निर्णय लेने में संदेह पैदा हो तो बहुसंख्यक की बातों की मान्यता होनी चाहिए। यदि समान संख्यावालों में विभिन्नता हो तो जिधर गुणीजन अधिक हो उधर की बातें माननी चाहिए। यदि गुणियों की बातों में भी भेद हो तो सर्वाधिक गुणवानों की बातें मान्य होनी चाहिए॥१९७॥

**द्वैधे इति।** द्वैधे साक्षिणां वचनेषु अनैक्यवशात् संशये सतीत्यर्थः, बहूनां वचनं, समेषु तुल्येषु समसंख्येषु भिन्नवचनेष्वित्यर्थः, मध्ये गुणिनां गुणवतां वचः, तत्रापि सर्वेषु गुणिष्वित्यर्थः,

अधिकगुणानां वचनं सदा गृह्णीयात् ॥ १९७ ॥

**यत्रानियुक्तोऽपीक्षेत शृणुयाद्वापि किञ्चन।**
**पृष्टस्तत्रापि सो ब्रूयाद् यथादृष्टं यथाश्रुतम्॥ १९८॥**

**अन्वयः**—यत्र अनियुक्तोऽपि यदि किञ्चन ईक्षेत वा शृणुयात्, तत्र सः पृष्टः सन् यथादृष्टं यथाश्रुतं ब्रूयात् ॥ १९८ ॥

**व्याख्या**—यत्र = यस्मिन् विषये, अनियुक्तोऽपि = नियोजनरहितोऽपि, कोऽपि जनः यदि, किञ्चित् = किमपि, ईक्षेत = पश्येत्, वा = अथवा, शृणुयात् = श्रवणं कुर्यात्, तत्र = तस्मिन् विषये, सः = जनः, पृष्टः = जिज्ञासितः, सन्, यथादृष्टम् = यद्वदालोकितम्, यथाश्रुतम् = यादृशमाकर्णितम्, तथैव ब्रूयात् = वदेत् ॥ १९८ ॥

**हिन्दी**–कोई व्यक्ति बिना नियुक्ति के भी यदि कुछ देखे या सुने तो उस विषय में पूछे जाने पर वह जैसा देखा या सुना हो, वैसा ही कहे ॥ १९८ ॥

**यत्रेति**। यत्र अनियुक्तोऽपि जनः यदि किञ्चन ईक्षेत वा शृणुयात् तत्र सः पृष्टः सन् यथादृष्टं यथाश्रुतं ब्रूयात् ॥ १९८ ॥

**विभिन्नकाले यज्ज्ञातं साक्षिभिश्चांशतः पृथक्।**
**एकैकं वादयेत्तत्र विधिरेष सनातनः ॥ १९९ ॥**

**अन्वयः**—विभिन्नकाले साक्षिभिः अंशतः पृथक् यत् ज्ञातं तत् एकैकं वादयेत्। तत्र एष विधिः सनातनः ॥ १९९ ॥

**व्याख्या**—विभिन्नकाले = अनेकसमये, साक्षिभिः = प्रेक्षकैः, अंशतः = खण्डतः, तत् ज्ञातम् = अवगतम्, तत् = सर्वम्, एकैकम् = एकैकशः, वादयेत् = वाचयेत्, एषः विधिः = रीतिः, सनातनः = पुरातनः इति ॥ १९९ ॥

**हिन्दी**—जहाँ विभिन्न समयों में विभिन्न गवाहों ने मुकदमे के विभिन्न विषयों की जानकारी दी है, उसे जानने के लिए प्रत्येक की गवाही लेनी चाहिए। वहाँ यही सनातन रीति है ॥ १९९ ॥

**विभिन्नकाले इति**। विभिन्नकाले पृथक् पृथक् समये साक्षिभिः अंशतः पृथक् **पृथक्** यत् ज्ञातं, तत् एकैकं वादयेत्, वाचयेत्। तत्र एषः विधिः एकैकवादनरूपः **सनातनः** चिरप्रचलित· ॥ १९९ ॥

**स्वभावोक्तं वचस्तेषां गृहणीयान्न बलात् क्वचित्।**
**उक्ते तु साक्षिणा साक्ष्ये न प्रष्टव्यं पुनः पुनः ॥ २०० ॥**

**अन्वयः**—तेषां स्वभावोक्तं वचः गृह्णीयात्, बलात् क्वचित् न। साक्षिणा साक्ष्ये उक्ते पुनः पुनः न प्रष्टव्यम् ॥ २०० ॥

**व्याख्या**—तेषाम् = प्रेक्षकानाम्, स्वभावोक्तम् = स्वाभाविकरूपेण कथितम्, वचः = वचनम्, गृह्णीयात् = ग्रहणं कुर्यात्, बलात् = बलपूर्वकेन, क्वचित् = कदाचित्, न = नहि, गृह्णीयात्। साक्षिणा = प्रेक्षकेन, साक्ष्ये = साक्षित्वे, उक्ते = कथिते, पुनः पुनः = वारं-वारम्, न = नहि, प्रष्टव्यम् = जिज्ञासितव्यम् ॥ २०० ॥

**हिन्दी**—गवाहों के स्वाभाविक ढंग से कहे गये वचन ही स्वीकार करने चाहिए। **किसी**

के दबाव में कही गई बातों को कभी न माने। गवाह एक बार यदि अपना बयान दे चुका हो तो फिर बार-बार उससे पूछना नहीं चाहिए॥ २०० ॥

**स्वभावोक्तमिति**। तेषां साक्षिणां स्वभावोक्तं स्वाभाविकं वचः गृह्णीयात् बलात् बलमाश्रित्य इत्यर्थः, क्वचित् कदाचित् न गृह्णीयादित्यर्थः। साक्षिणा च साक्ष्ये उक्ते सति पुनः पुनः न प्रष्टव्यं तं साक्षिणं प्रतीति शेषः॥ २०० ॥

**आहूय साक्षिणः पृच्छेन्नियम्य शपथैर्भृशम्।**
**पौराणैः सत्यवचनधर्ममाहात्म्यकीर्त्तनैः।**
**अनृतस्यातिदोषैश्च भृशमुत्त्रासयेच्छनैः॥ २०१ ॥**

**अन्वयः**—साक्षिणः आहूय शपथैः भृशं नियम्य पृच्छेत्। पौराणैः सत्यवचनधर्ममाहात्म्यकीर्त्तनैः अनृतस्य अतिदोषैः भृशं शनैः उत्त्रासयेत्॥ २०१ ॥

**व्याख्या**—साक्षिणः = प्रेक्षकान्, आहूय = आह्वानं कृत्वा, शपथैः = प्रतिज्ञावचनैः, भृशम् = अत्यर्थम्, नियम्य = आयत्तीकृत्य, पृच्छेत् = पृच्छां कुर्यात्। पौराणैः = पुराणोक्तवचनैः, सत्यवचनधर्ममाहात्म्यकीर्त्तनैः—सत्यवचनरूपधर्मस्य = ऋतकथनस्वरूपस्य धर्मस्य, माहात्म्यकीर्त्तनैः = महिम्नगुणकथनैः, अनृतस्य = मिथ्याकथनस्य, अतिदोषैः = बहुदोषकीर्त्तनैः, भृशम् = अत्यर्थम्, शनैः = मन्दं-मन्दम्, उत्त्रासयेत् = भयाक्रान्तं कुर्यात्॥ २०१ ॥

**हिन्दी**—गवाहों को बुलाकर खाश ढंग से उन्हें सौगन्ध खिलाकर पुराणों में वर्णित सत्यवचन रूपी धर्म के माहात्म्य का वर्णन कर पूछे। फिर झूठ बोलने में अत्यन्त पाप होता है, इसी की पुष्टि पुराणों से कर उसे धीरे-धीरे इस अपकर्म का भय दिलाये॥ २०१ ॥

**आहूयेति**। साक्षिणः आहूय शपथे भृशम् अत्यर्थं नियम्य आयत्तीकृत्य पृच्छेत् तथा पौराणैः पुराणोक्तैः सत्यवचनरूपधर्मस्य माहात्म्यकीर्त्तनैः, अनृतस्य असत्यस्य अतिदौषैः अतिदोषकीर्त्तनैश्च वक्ष्यमाणैरिति शेषः, भृशम् अत्यर्थं शनैः मन्दं मन्दम् उत्त्रासयेत्॥ २०१ ॥

**देशे काले कथं कस्मात् किं दृष्टं वा श्रुतं त्वया।**
**लिखितं लेखितं यत् तद् वद सत्यं तदेव हि॥ २०२ ॥**

**अन्वयः**—देशे काले कथं कस्मात् त्वया किं दृष्टं श्रुतं यच्च लिखितं लेखितं तत् तत् सत्यं वद॥ २०२ ॥

**व्याख्या**—देशे = कस्मिन् स्थानविशेषे, काले = कस्मिन् समये, कथम = केन प्रकारेण, कस्माद्धेतोः, त्वया किं दृष्टम् = अवलोकितम्, वा = अथवा, श्रुतम् = आकर्णितम्, यच्च, लिखितम् = लिपिबद्धं कृतम्, लेखितम्, तत् तत्, सत्यम् = ऋतम्, वद = कथय॥ २०२ ॥

**हिन्दी**—तुमने कहाँ, किस समय, कैसे, किस वजह से, क्या देखा और क्या सुना? जो लिखा गया या लिखवाया गया वह सच-सच बतलाओ?॥ २०२ ॥

पृच्छाप्रकारमाह—**देशे इति**। देशे कस्मिन् स्थाने, काले कस्मिन् समये, कथं केन प्रकारेण कस्मात् हेतोः त्वया किं दृष्टं वा श्रुतं, यच्च लिखितं लेखितञ्च तत् तत् सत्यं वद हिशब्दः अवधारणार्थः॥ २०२ ॥

**सत्यं साक्ष्यं ब्रुवन् साक्षी लोकानाप्नोति पुष्कलान्।**
**इह चानुत्तमां कीर्त्तिं वागेषा ब्रह्मपूजिता ॥ २०३ ॥**

**अन्वयः**—साक्षी सत्यं साक्ष्यं ब्रुवन् पुष्कलान् लोकान् इह च अनुत्तमां कीर्त्तिम् आप्नोति। एषा वाक् ब्रह्मपूजिता ॥ २०३ ॥

**व्याख्या**—साक्षी = प्रेक्षकः, सत्यम् = ऋतम्, साक्ष्यम् = साक्षित्वम्, ब्रुवन् = वदन्, पुष्कलान् = विपुलान् महतः वा, लोकान्, इह च = अस्मिन् संसारे च, अनुत्तमाम् = उत्कृष्टतराम्, कीर्त्तिम् = यशः, आप्नोति = प्राप्नोति। एषा वाक् = वाणी, ब्रह्मणा = विधिना, पूजिता = प्रशंसिते ॥२०३ ॥

**हिन्दी**—जो गवाह सच्ची गवाही देता है उसे उत्तम लोक की प्राप्ति होती है तथा इस संसार में वह उत्कृष्ट यशस्वी होता है। उसकी वाणी की विधाता भी प्रशंसा करते हैं ॥ २०३ ॥

**सत्यमिति**। साक्षी सत्यं साक्ष्यं ब्रुवन् पुष्कलान् महतः लोकान्, इह च अनुत्तमां कीर्त्तिम् आप्नोति एषा वाक् ब्रह्मपूजिता ब्रह्मणा प्रशंसिता ॥ २०३ ॥

**सत्येन पूयते साक्षी धर्मः सत्येन वर्द्धते।**
**तस्मात् सत्यं हि वक्तव्यं सर्ववर्णेषु साक्षिभिः ॥ २०४ ॥**

**अन्वयः**—साक्षी सत्येन पूयते, धर्मः सत्येन वर्द्धते। तस्मात् सर्ववर्णेषु साक्षिभिः सत्यं हि वक्तव्यम् ॥ २०४ ॥

**व्याख्या**—साक्षी = प्रेक्षकः, सत्येन = अवितथेन, पूयते = पवित्रो भवति, धर्मः = पुण्यः सत्येन = तत्त्वेन, वर्द्धते = एधते। तस्माद्धेतोः, सर्ववर्णेषु = सकलजातिषु, साक्षिभिः = प्रेक्षकैः, सत्यम् = यथार्थमेव, वक्तव्यम् = कथनीयमिति ॥ २०४ ॥

**हिन्दी**—सच बोलने से गवाह पवित्र हो जाता है, सच कहने से धर्म बढ़ता है। अतः सभी वर्णों के गवाहों को सच ही बोलना चाहिए ॥ २०४ ॥

**सत्येनेति**। साक्षी सत्येन पूयते पवित्रो भवति, धर्मः सत्येन सत्यकथनेन वर्द्धते। तस्मात् सर्ववर्णेषु साक्षिभिः सत्यं हि सत्यमेव वक्तव्यम् ॥ २०४ ॥

**आत्मैव ह्यात्मनः साक्षी गतिरात्मैव ह्यात्मनः।**
**मावसंस्थाः स्वमात्मानं नृणां साक्षित्वमुत्तमम् ॥ २०५ ॥**

**अन्वयः**—आत्मा एव आत्मनः साक्षी, आत्मा एव आत्मनः गतिः । तस्मात् स्वं नृणाम् उत्तमं साक्षित्वम् आत्मानं मा अवसंस्थाः ॥ २०५ ॥

**व्याख्या**—आत्मा एव = शरीरस्थः साक्षी पुरुष एव, आत्मनः = स्वस्य, साक्षी = प्रेक्षकः, आत्मा = जीवः, एव, आत्मनः = जीवस्य, गतिः = आश्रयः। तस्मात् स्वम् = आत्मानम्, नृणाम् = अभियोगमापन्नानाम्, उत्तमम् = श्रेष्ठम्, साक्षिणम्, तस्मात्, आत्मानम् = अन्तःस्थ-परमपुरुषम्, मा = नहि, अवमंस्थाः = अवमानितं कार्षीः ॥ २०५ ॥

**हिन्दी**—मनुष्य की अपनी आत्मा ही उसकी गवाही है, वही उसकी गति है; इसलिए मानव का उत्तम साक्षी (गवाह) उसकी आत्मा है। अतः इसका तिरस्कार मत करो। अर्थात् अपनी आत्मा की आवाज सुनो या पहचानो ॥ २०५ ॥

**आत्मैवेति**। आत्मा एव अन्तर्यामी पुरुष एव आत्मनः जीवस्य साक्षी पापपुण्यकर्मणां द्रष्टा,

आत्मा एव आत्मनः गतिः आश्रयः, तस्मात् त्वं नृणाम् अभियोगमापन्नानाम् उत्तमं साक्षिणम् आत्मानं मा अवमंस्थाः अवमानितं मा कार्षीरित्यर्थः॥२०५॥

**मन्यते वै पापकारी न कश्चित् पश्यतीति माम्।**
**तांश्च देवाः प्रपश्यन्ति तथा ह्यन्तरपूरुषः॥२०६॥**

**अन्वयः**—पापकारी कश्चित् मां न पश्यतीति मन्यते वै, देवाः तथा अन्तरपूरुषः तांश्च प्रपश्यन्ति॥२०६॥

**व्याख्या**—पापकारी = पापात्मा, कश्चित् = कोऽपि जनः, माम् = पापिनम्, न = नहि, पश्यति = अवलोकयति, इति मन्यते = बुद्ध्यते, वै = इति निश्चयेन, किञ्च, देवाः = देवताः, तथा अन्तरपूरुषः = अन्तर्यामी, तान् = साक्षिणः, प्रपश्यन्ति = अवलोकयन्ति॥२०६।

**हिन्दी**—पापी यह समझता है कि कोई पाप करते समय मुझे नहीं देखा रहा है, किन्तु उसका यह समझना ठीक नहीं है। क्योंकि उसे देवता लोग और उसकी अन्तरात्मा सब कुछ देख रही है॥२०६॥

**मन्यते इति**। पापकारी जनः, कश्चित् मां न पश्यतीति मन्यते वैशब्दोऽवधारणार्थः। देवाः तथा अन्तरपूरुषः अन्तर्यामी तान् साक्षिणः प्रपश्यन्ति॥२०६॥

**सुकृतं यत् त्वया किञ्चित् जन्मान्तरशतैः कृतम्।**
**तत् सर्वं तस्य जानीहि यं पराजयसे मृषा।**
**समाप्नोषि च तत्पापं शतजन्मकृतं सदा॥२०७॥**
**साक्षिणं श्रावयेदेव सभायामरहोगतम्॥२०८॥**

**अन्वयः**—त्वया जन्मान्तरशतैः यत्किञ्चित् सुकृतं कृतं, तत् सर्वं यं मृषा पराजयसे तस्य जानीहि, किञ्च शतजन्मकृतं तत्पापं सदा समाप्नोषि। एवं सभायाम् अरहोगतं साक्षिणं श्रावयेत्॥२०७-२०८॥

**व्याख्या**—त्वया = भवता, जन्मान्तरशतैः = शतान्यपरजन्मनि, यत्किञ्चित् = यत्किमपि, सुकृतम् = पुण्यम्, कृतम् = अनुष्ठितम्, तत् सर्वम् = सकलम्, यम् = व्यक्तिविशेषम्, मृषा = असत्येन, पराजयसे = पराजितं कुरुषे, तस्य = जनस्य भवेत्, किञ्च, शतजन्मकृतम् = जन्मान्तर-शतमर्जितम्, तत्पापम् = तत्कृतं पापम्, तस्य पराजेतुमभीष्टस्य जनस्य पापम्, सदा = सर्वदा, समाप्नोषि = लभसे च। एवं प्रकारेण, सभायाम् = विचारसमितौ, अरहोगतम् = सकलजनसमक्ष-वर्त्तिनम्, साक्षिणम् = प्रेक्षकम्, श्रावयेत्॥२०७-२०८॥

**हिन्दी**—सैंकड़ों जन्म में तुमने जो पुण्य अर्जित किया है, वह उसका हो जायेगा, जिसे तुमने झूठ बोलकर पराजित किया है तथा उस पराजित व्यक्ति के सैंकड़ों जन्म के संचित पाप तुम्हारे हो जायेंगे, इसे जान लो। इस तरह भरी सभा में सबके सामने गवाही देने वाले व्यक्ति को अवश्य सुना दे॥२०७-२०८॥

**सुकृतमिति। समाप्नोषीति**। त्वया जन्मान्तरशतैः यत् किञ्चित् सुकृतं कृतं तत् सर्वं, यं मृषा असत्यवचनेन पराजयसे तस्य भवेदिति शेषः, जानीहि बुध्यस्व। किञ्च शतजन्मकृतं तत्पापं तस्य पराजेतुमिष्टस्य जनस्य पापं सदा समाप्नोषि लभसे च, एवम्प्रकारेण सभायाम् अरहोगतं

सर्वसमक्षवर्त्तिनं साक्षिणं श्रावयेत् ॥ २०७-२०८ ॥

**दद्याद्देशानुरूपं तु कालं साधनदर्शने।**
**उपाधिं वा समीक्ष्यैव दैवराजकृतं सदा ॥ २०९ ॥**

**अन्वयः**—राजा देशानुरूपं वा दैवराजकृतम् उपाधिं समीक्ष्य साधनदर्शने कालं दद्यात् ॥२०९ ॥

**व्याख्या**—राजा, देशानुरूपम् = स्थानविशेषानुसारम्, वा = अथवा, दैवराजकृतम्— दैवकृतम् = भाग्यानुष्ठितम्, राजकृतम् = नृपकृतम्, वा, उपाधिम् = उपद्रवः, समीक्ष्य = अनुचिन्त्य, साधनदर्शने = प्रमाणावलोकने, कालम् = समयम्, दद्यात् = प्रयच्छेत् ॥ २०९ ॥

**हिन्दी**—देश के अनुरूप तथा राजा एवं दैव कृत उपद्रवों को ठीक से विचार कर प्रमाण दिखलाने का समय दे ॥ २०९ ॥

**दद्यादिति**। राजा सदा देशानुरूपं स्थानोपयुक्तं वा दैवराजकृतम् उपाधिं निमित्तं समीक्ष्य विविच्य साधनदर्शने प्रमाणप्रदर्शने कालं समयं दद्यात् ॥ २०९ ॥

**विनष्टे लिखिते राजा साक्षिभोगैर्विचारयेत्।**
**लेखसाक्षिविनाशे तु सद्भोगादेव चिन्तयेत् ॥ २१० ॥**

**अन्वयः**—लिखिते विनष्टे राजा साक्षिभिः भोगैश्च विचारयेत्। लेखसाक्षिविनाशे तु सद्भोगादेव चिन्तयेत् ॥ २१० ॥

**व्याख्या**—लिखिते = लिपिबद्धप्रमाणे, विनष्टे = निर्मूलिते सति, राजा = नृपः, साक्षिभिः = प्रेक्षकैः, भोगैश्च = प्रमाणैश्च, विचारयेत् = चिन्तयेत्। तथा लेखस्य—लिखितप्रमाणस्य, साक्षिणश्च = प्रेक्षकस्य च, विनाशे = विनष्टे सति, सद्भोगात् = उत्तमात् भोगादेव, चिन्तयेत् = विचारयेत् ॥ २१० ॥

**हिन्दी**—लिखित प्रमाण नष्ट हो जाने पर गवाही एवं कब्जे पर विचार करना चाहिए। जहाँ लेख और गवाह दोनों विनष्ट हो गये हों, वहाँ निश्चित-कब्जा देखकर ही विचार करना चाहिए ॥ २१० ॥

**विनष्टे इति**। लिखिते लेख्ये प्रमाणे विनष्टे सति राजा साक्षिभिः भोगैश्च प्रमाणैः विचारयेत्। तथा लेखस्य साक्षिणश्च विनाशे सति सद्भोगात् उत्तमात् अक्षुण्णादित्यर्थः, भोगात् एव चिन्तयेत् विचारयेत् ॥ २१० ॥

**सद्भोगाभावतः साक्षिलेखतो विमृशेत् सदा।**
**केवलेन च भोगेन लेखेनापि च साक्षिभिः ॥ २११ ॥**

**अन्वयः**—सद्भोगाभावतः सदा साक्षिलेखतः विमृशेत्। किञ्च केवलेन भोगेन लेखेन साक्षिभिश्च विमृशेत् ॥ २११ ॥

**व्याख्या**—सद्भोगाभावतः = श्रेष्ठस्वामित्वाभावे, सदा = सर्वदा, साक्षिलेखतः—साक्षिभिः = प्रेक्षकैः, लेख्यैः = लिखितविषयैः, विमृशेत् = विचारयेत्। केवलेन = एकमात्रेण, भोगेन = स्वामित्वेन, केवलेन लेखेन = लिखितविषयेण वा, केवलैः, साक्षिभिश्च = प्रेक्षकैश्च, विमृशेत् = विचारयेत् ॥ २११ ॥

**हिन्दी**—उत्तम स्वामित्व के अभाव में गवाह या लिखित प्रमाण के आधार पर विचार करना चाहिए। केवल स्वामित्व, दस्तावेज या केवल गवाही के आधार पर विचार करना चाहिए॥ २११ ॥

**सद्भोगाभावत इति**। सद्भोगाभावतः उत्तमभोगाभावे सतीत्यर्थः, सदा साक्षिलेखतः साक्षिभिः लेख्यैश्च विमृशेत् विचारयेत्। किञ्च केवलेन भोगेन, केवलेन लेखेन वा केवलैः साक्षिभिश्च विमृशेत् ॥ २११ ॥

**कार्य्यं न चिन्तयेद्राजा लोकदेशादिधर्मतः ॥ २१२ ॥**

**अन्वयः**—लोकदेशादिधर्मतः राजा कार्यं न चिन्तयेत् ॥ २१२ ॥

**व्याख्या**—लोकदेशादिधर्मतः—लोकम् = जनम्, अर्थात् अयं हि श्रेष्ठो वा निकृष्टो जनः इत्थं विचार्य, देशादिम् = अयं हि महान् देशो वा हीनदेशः एवं सञ्चित्य, धर्मञ्च = अयं हि स्वधर्मः वा परधर्म इति विविच्य, कार्यम् = व्यवहारम्, राजा = नृपः, न = नहि, चिन्तयेत् = विचारयेत् ॥ २१२ ॥

**हिन्दी**—यह बड़ा आदमी है और यह छोटा, यह उत्तम देश है और यह अधम अथवा यह स्वधर्म है और यह परधर्म, ऐसा सोचकर राजा मुक़दमे का फैसला न करे॥ २१२ ॥

**कार्य्यमिति** लोकदेशादिधर्मतः लोकं देशादिं स्थानप्रभृतिं धर्मञ्च अनुरुध्य इत्यर्थः, यवर्थे पञ्चमी। अयं महान् वा निकृष्टः अयम् उत्कृष्टो देशः वा नीचदेशः अयं परधर्मः वा नीचधर्म इत्येवं विविच्य इत्यर्थः, कार्य्यं न चिन्तयेत् न विचारयेत् इत्यर्थः॥ २१२ ॥

**कुशला लेख्यबिम्बानि कुर्वन्ति कुटिलाः सदा।**
**तस्मान्न लेख्यसामर्थ्यात् सिद्धिरैकान्तिकी मता॥ २१३ ॥**

**अन्वयः**—कुशलाः कुटिलाः सदा लेख्यबिम्बानि कुर्वन्ति। तस्मात् लेख्यस्य सामर्थ्यात् ऐकान्तिकी सिद्धिः न मता॥ २१३ ॥

**व्याख्या**—कुशलाः = दक्षाः, कुटिलाः = दुष्टाः, सदा = सर्वदा, लेख्यबिम्बानि = अनुरूपाणि लेख्यानि, कुर्वन्ति = निष्पादयन्ति, तस्मात् = कारणात्, लेख्यस्य = लिपिबद्धविषयस्य, सामर्थ्यात् = शक्त्याः, ऐकान्तिकी = सम्पन्ना, सिद्धिः = सफलता, न = नहि, मता = सम्मता इति ॥ २१३ ॥

**हिन्दी**—चतुर जालसाज किसी दस्तावेज की हूबहू नकल कर लेते हैं। अतः केवल लेख के आधार पर फैसला करना पूर्णरूप से उचित नहीं कहा गया है॥ २१३ ॥

**कुशला इति**। कुशलाः निपुणाः कुटिलाः दुर्जनाः सदा लेख्यबिम्बानि अनुरूपाणि लेख्यानि कुर्वन्ति। तस्मात् लेख्यस्य सामर्थ्यात् बलात् ऐकान्तिकी सिद्धिः न मता॥ २१३ ॥

**स्नेहलोभभयक्रोधैः कूटसाक्षित्वशङ्कया।**
**केवलैः साक्षिभिर्नैव कार्य्यं सिध्यति सर्वदा॥ २१४॥**

**अन्वयः**—स्नेहलोभभयक्रोधैः तथा कूटसाक्षित्वशङ्कया केवलैः साक्षिभिः सर्वदा कार्यं नैव सिद्ध्यति ॥ २१४ ॥

**व्याख्या**—स्नेहेन = रागेण, लोभेन = लिप्सया, क्रोधेन = कोपेन, तथा

कूटसाक्षित्वशङ्कया = मिथ्यासाक्ष्यसन्देहेन, केवलैः = मात्रैः, साक्षिभिः = प्रेक्षकैः, सदा = सर्वदा, कार्यम् = व्यवहारः, नैव = नास्त्येव, सिद्ध्यति = सफलतां याति ॥ २१४ ॥

**हिन्दी**—प्रीति, लालच, डर या गुस्से में आकर मनुष्य झूठी गवाही दे सकता है, इस आशंका से केवल गवाही के आधार पर सदा मुकदमे का उचित फैसला नहीं किया जा सकता है ॥ २१४ ॥

**स्नेहेति**। स्नेहेन, लोभेन, भयेन, क्रोधेन च तथा कूटसाक्षित्वशङ्कया केवलैः साक्षिभिः सर्वदा कार्य्यं नैव सिध्यति ॥ २१४ ॥

**अस्वामिकं स्वामिकं वा भुङ्क्ते यद् बलदर्पतः।**
**इति शङ्कितभोगैर्न कार्य्यं सिध्यति केवलैः ॥ २१५ ॥**

**अन्वयः**—यत् बलदर्पतः अस्वामिकं स्वामिकं वा भुङ्क्ते, इति शङ्कितभोगैः केवलैः कार्यं न सिध्यति ॥ २१५ ॥

**व्याख्या**—यत् = यस्मात्, लोकः, बलर्दपतः—बलात् = शक्त्याः, दर्पात् = अभिमानात् गर्वाद्वा, अस्वामिकम् = दायादरहितम्, स्वामिकम् = सस्वामिकम्, वा = अथवा, भुङ्क्ते = उपभोगं कुरुते, इति = इत्थम्, शङ्कितभोगैः = सन्दिग्धैः भोगैः, केवलैः, कार्यम् = व्यवहारः, न = नहि, सिध्यति = साफल्यं भवति ॥ २१५ ॥

**हिन्दी**—अपनी ताकत के घमण्ड में आकर मनुष्य चाहे अपनी वस्तु हो या पराई, उस पर जबर्दस्ती अधिकार जमा कर स्वामित्व कायम कर लेता है; ऐसी स्थिति में स्वामित्व के संदेह में केवल वस्तु पर कब्जा के आधार पर मुकदमे का फैसला उचित नहीं होता ॥ २१५ ॥

**अस्वामिकमिति**। यत् यस्मात् लोकः बलदर्पतः बलात् दर्पाच्च अस्वामिकं सस्वामिकमित्यर्थः, वा भुङ्क्ते, इति शङ्कितभोगैः इत्थं शङ्कायुक्तैः केवलैः भोगैरित्यर्थः, कार्य्यं न सिध्यति ॥ २१५ ॥

**शङ्कितव्यवहारेषु शङ्कयेदन्यथा न हि।**
**अन्यथा शङ्कितान् सभ्यान् दण्डयेच्चोरवन्नृपः ॥ २१६ ॥**

**अन्वयः**—नृपः शङ्कितव्यवहारेषु शङ्कयेत्, अन्यथा न हि। अन्यथा शङ्कितान् सभ्यान् चोरवत् दण्डयेत् ॥ २१६ ॥

**व्याख्या**—नृपः = राजा, शङ्कितव्यवहारेषु = सन्दिग्धकार्येषु, शङ्कयेत् = शङ्कां कुर्यात्, अन्यथा = इतरथा, न हि = नैव कुर्यात्। अन्यथा = अन्यप्रकारेण, शङ्कितान् = सन्दिग्धान्, सभ्यान् = सभासदः, चोरवत् = तस्कर इव, दण्डयेत् = दमनं कुर्यात् ॥ २१६ ॥

**हिन्दी**—जिस मुकदमे में उचित संदेह एक बार प्रकट किया जा चुका है, उसमें पुनः विपरीत सन्देह नहीं करना चाहिए। दूसरे ढंग से संदेह पैदा करने वाले सभासदों को राजा चोर की तरह दण्ड दे ॥ २१६ ॥

**शङ्कितेति**। नृपः शङ्कितव्यवहारेषु शङ्कायुक्तेषु व्यवहारेषु शङ्कयेत् अन्यथा न हि नैव शङ्कयेदित्यर्थः। अन्यथा शङ्कितान् सभ्यान् चोरवत् दण्डयेत् ॥ २१६ ॥

**अन्यथा शङ्कनान्नित्यमनवस्था प्रजायते।**
**लोको विभिद्यते धर्मो व्यवहारश्च हीयते ॥ २१७ ॥**

**अन्वयः**—अन्यथा शङ्कनात् नित्यम् अनवस्था प्रजायते, लोकः विभिद्यते, धर्मः व्यवहारश्च हीयते ॥ २१७ ॥

**व्याख्या**—अन्यथा = इतरथा, शङ्कनात् = सन्देहात्, नित्यम् = निरन्तरम्, अनवस्था = अव्यवस्था, प्रजायते = उत्पन्नो भवति, लोकः = जनः, विभिद्यते = भेदं गच्छति, धर्मः = आचारः, व्यवहारश्च = कार्यश्च, हीयते = हीनो भवति ॥ २१७ ॥

**हिन्दी**—विपरीत सन्देह करने से व्यवहार में अनवस्था उत्पन्न होती है, निरर्थक फैसले में देर होती है, इससे लोकधर्म नष्ट होता है और व्यवहार भी हीन हो जाता है ॥ २१७ ॥

**अन्यथेति**। अन्यथा शङ्कनात् नित्यं सततम् अनवस्था अस्थितिः प्रजायते, लोकः विभिद्यते भेदं गच्छति, धर्मः व्यवहाश्च हीयते विच्युतो भवति ॥ २१७ ॥

**सागमो दीर्घकालश्च निराक्रोशो निरन्तरः।**
**प्रत्यर्थिसन्निधानश्च भुक्तो भोगः प्रमाणवत् ॥ २१८ ॥**

**अन्वयः**—आगमः दीर्घकालश्च निराक्रोशः निरन्तरः प्रत्यर्थिसन्निधानश्च भुक्तः भोगः प्रमाणवत् ॥ २१८ ॥

**व्याख्या**—आगमः = आगमनं प्राप्तिर्वा, दीर्घकालश्च = चिरकालिकः, निराक्रोशः = अन्याक्षेपरहितः, निरन्तर = क्रमागतः, प्रत्यर्थिसन्निधानः = प्रतिवादिसन्निहितश्च, भुक्तः = उपभुक्तः, भोगः = स्वामित्वम्, प्रमाणवत् = प्रमाण इवेति ॥ २१८ ॥

**हिन्दी**—लेख सहित बहुत दिनों से कब्जा प्रामाणिक होता है। यदि मालिक का अपनी वस्तु से विलगाव हो गया या उसने उस वस्तु का त्याग ही कर दिया हो और प्रतिवादी उसका पार्श्ववर्त्ती हो तो उसका अधिकार वहाँ प्रमाणित माना गया है ॥ २१८ ॥

**सागम इति**। सागमः आगमेन प्रतिग्रहक्रयादिरूपेण अर्जनेन सहितः, दीर्घकालः बहुकालिकः निराक्रोशः अन्याक्रोशरहितः निरन्तरः क्रमागतः प्रत्यर्थिसन्निधानः प्रतिवादिसन्निहितश्च भुक्तः भोगः प्रमाणवत् प्रमाणतुल्यः ॥ २१८ ॥

**सम्भोगं कीर्त्तयेद्यस्तु केवलं नागमं क्वचित्।**
**भोगच्छलापदेशेन विज्ञेयः स तु तस्करः ॥ २१९ ॥**

**अन्वयः**—यस्तु केवलं सम्भोगं कीर्त्तयेत् क्वचित् आगमं न, सः तु भोगच्छलापदेशेन तस्करः विज्ञेयः ॥ २१९ ॥

**व्याख्या**—यः = जनः, केवलम् = मात्रम्, सम्भोगम् = सम्यगधिकारम्, कीर्त्तयेत् = कथयेत्, क्वचित् = कदाचित्, आगमम् = आगमनम्, न = नहि, सः = असौ तु, भोगच्छलापदेशेन = स्वामित्वरूपकपटाश्रयेण, तस्करः = चौरः, विज्ञेयः = विशेषरूपेण ज्ञातव्यः इति ॥ २१९ ॥

**हिन्दी**—जो केवल भलीभाँति अपना कब्जा ही दिखलाता है, कोई अभिलेख नहीं, वह कब्जा बलपूर्वक कहा जाता है और कब्जा करने वाला चोर की तरह दण्डनीय होता है ॥ २१९ ॥

**सम्भोगमिति**। यस्तु केवलं सम्भोगं कीर्त्तयेत् क्वचित् कदाचित् आगमं न, स तु भोगच्छलापदेशेन भोगरूपच्छलावलम्बेन तस्करः चौरः विज्ञेयः ॥ २१९ ॥

**आगमेऽपि बलं नैव भुक्तिः स्तोकापि यत्र नो ॥ २२० ॥**

**अन्वयः**—यत्र स्तोकाऽपि भुक्तिः नो तत्र आगमेऽपि बलं नैव ॥ २२० ॥

**व्याख्या**—यत्र = यस्मिन् विषये, स्तोकाऽपि = अल्पापि, भुक्तिः = अधिकारः, नो = न विद्यते, तत्र आगमेऽपि = आगमनेऽपि, बलम् = प्रमाणम्, नास्ति = न भवति ॥ २२० ॥

**हिन्दी**—जहाँ थोड़ा भी कब्जा नहीं है वहाँ पर केवल लेख का प्रमाण मान्य नहीं ही होता है ॥ २२० ॥

**आगमेऽपि इति**। यत्र स्तोका अल्पापि भुक्तिः नो न विद्यते इत्यर्थः, तत्र आगमेऽपि बलं न अस्तीति शेषः। एतेन सागमो भोग एव प्रमाणमित्युक्तम् ॥ २२० ॥

**यं कञ्चिद्दशवर्षाणि सन्निधौ प्रेक्षते धनी।**
**भुज्यमानं परैरर्थं न स तं लब्धुमर्हति ॥ २२१ ॥**

**अन्वयः**—धनी यं कश्चित् अर्थं परैः सन्निधौ दशवर्षाणि भुज्यमानं प्रेक्षते, सः तम् अर्थं लब्धुं न अर्हति ॥ २२१ ॥

**व्याख्या**—धनी = धनवान्, यम् = व्यक्तिविशेषम्, कञ्चित् = किमपि, अर्थम् = धनम्, परैः = अन्यैः, सन्निधौ = सामीप्ये, दशवर्षाणि = दशवर्षपर्यन्तम्, भुज्यमानम्, प्रेक्षते = अवलोक्यते, सः = असौ, तम् = अर्थम्, लब्धुम् = प्राप्तुम्, न = नहि, अर्हति = समर्थो भवति ॥ २२१ ॥

**हिन्दी**—धनी अपनी वस्तु के पास रहकर भी उस पर दूसरे का कब्जा देखकर भी यदि उसे नहीं रोकता है और उस वस्तु पर यदि दस साल तक उसका कब्जा बरकरार रह जाता है तो बाद में विरोध करने पर भी उसका उस धन पर स्वामित्व नहीं रहता है ॥ २२१ ॥

**यमिति**। धनी यं कञ्चित् अर्थं परैः अन्यैः सन्निधौ स्वसमीपे इत्यर्थः, दशवर्षाणि व्याप्य भुज्यमानं प्रेक्षते, सः तम् अर्थं लब्धुं न अर्हति न समर्थो भवतीत्यर्थः ॥ २२१ ॥

**वर्षाणि विंशतिर्यस्य भूर्भुक्ता तु परैरिह।**
**सति राज्ञि समर्थस्य तस्य सेह न सिध्यति ॥ २२२ ॥**

**अन्वयः**—इह यस्य भूः विंशतिः वर्षाणि परैः भुक्ता सति राज्ञि समर्थस्य तस्य सः इह न सिध्यति ॥ २२२ ॥

**व्याख्या**—इह = संसारे, यस्य = जनस्य, भूः = पृथिवी, विंशतिः, वर्षाणि = अब्दानि, व्याप्य, परैः = अन्यैः, भुक्ता = उपभुक्ता, सति, राज्ञि = राजनि विद्यमानेऽपि, समर्थस्य = सशक्तस्य, तस्य = जनस्य, सा = भूमिः, इह = जगति, न = नहि, सिध्यति = प्रमाणयति ॥ २२२ ॥

**हिन्दी**—जिसकी जमीन पर बीस साल से कोई कब्जा कर लिया हो और ताकत रहते हुए भी यदि भूस्वामी ने उसका विरोध न किया हो, तो राजा के रहते हुए भी इस संसार में उस जमीन पर उसका अधिकार नहीं हो सकता ॥ २२२ ॥

**वर्षाणीति**। इह जगति यस्य भूः भूमिः विंशतिः वर्षाणि व्याप्य परैः भुक्ता सति, राज्ञि राजनि विद्यमानेऽपि समर्थस्य बलवतोऽपि तस्य सा भूः इह संसारे न सिध्यति न घटते इत्यर्थः ॥ २२२ ॥

**अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि।**
**चौरदण्डेन तं पापं दण्डयेत् पृथिवीपतिः ॥ २२३ ॥**

**अन्वयः**—यः बहूनि अब्दशतानि अनागमं भुङ्क्ते, पृथिवीपतिः चौरदण्डेन तं दण्डयेत् ॥ २२३ ॥

**व्याख्या**—यः = जनः, बहूनि = बहुकालानि, अब्दशतानि = वर्षशतानि, व्याप्य, अनागमम् = आगमं विनैवान्यस्य धनस्योपभोगं कुरुते, पृथिवीपतिः = राजा, तम् = पापम्, चौरदण्डेन = तस्कर इव दण्डेन, दण्डयेत् = दण्डं कुर्यात् ॥ २२३ ॥

**हिन्दी**—बिना किसी लिखित प्रमाण के किसी भूमि को कई सौ साल से यदि कोई ऐसे ही हथिया लिया हो, किन्तु जब उसके असली मालिक का पता चल जाय तो कब्जा करने वाले उस पापी को राजा चोर की तरह दण्ड दे ॥ २२३ ॥

**अनागममिति**। यः बहूनि अब्दशतानि वर्षशतानि व्याप्य अनागमम् आगमं विना परद्रव्यं भुङ्क्ते, पृथिवीपतिः चौरदण्डेन तं पापं दण्डयेत् ॥ २२३ ॥

**अनागमापि या भुक्तिर्विच्छेदोपरमोज्झिता।**
**षष्टिवर्षात्मिका सापहर्त्तुं शक्या न केनचित् ॥ २२४ ॥**

**अन्वयः**—या भुक्तिः अनागमाऽपि षष्टिवर्षात्मिका तथा विच्छेदोपरमोज्झिता सा केनचित् अपहर्त्तुं न शक्या ॥ २२४ ॥

**व्याख्या**—या भुक्तिः = लौकिकसुखोपभोगः, अनागमाऽपि = प्राप्तिरहिताऽपि, षष्टिवर्षात्मिका = षष्ट्याब्दव्यापिनी, तथा विच्छेदोपरमोज्झिता—विच्छेदेन = पृथक्स्थितेन, उपरमेण = विश्रान्तेन, च, उज्झिता = अधिकारविहीना भवति, सा = सम्पद्, केनचित् = केनाऽपि, अपहर्त्तुम् = अधिकर्त्तुम्, न = नहि, शक्या = समर्थेति ॥ २२४ ॥

**हिन्दी**—किसी वस्तु पर बिना लेख का किसी का कब्जा हो, मालिक उसे बिलकुल छोड़ दिया हो और यह कब्जा बे-रोक-टोक साठ साल तक चलता रहे तो फिर वहाँ से उसे कोई अनधिकृत नहीं कर सकता ॥ २२४ ॥

**अनागमापीति**। या भुक्तिः अनागमा आगमेन विरहितापि षष्टिवर्षात्मिका षष्टिवर्षव्यापिनी तथा विच्छेदोपरमोज्झिता विच्छेदेन उपरमेण निवृत्त्या च उज्झिता हीना भवति, सा केनचित् केनापि अपहर्त्तुं न शक्या ॥ २२४ ॥

**आधिः सीमा बालधनं निक्षेपोपनिधिस्तथा।**
**राजस्वं श्रोत्रियस्वं च न भोगेन प्रणश्यति ॥ २२५ ॥**

**अन्वयः**—आधिः, सीमा, बालधनं, निक्षेपः तथा उपनिधिः, राजस्वं च श्रोत्रियस्वं भोगेन न प्रणश्यति ॥ २२५ ॥

**व्याख्या**—आधिः = बन्धकधनम्, सीमा = ग्रामसीमा, बालधनम् = अवयस्कस्य शिशोः धनम्, निक्षेपः = न्यासः, तथा = तेनैव प्रकारेण, उपनिधिः = उपन्यस्तं वस्तु, राजस्वम् = नृपाधिपत्यम्, श्रोत्रियस्वम् = वेदपाठकस्य धनम्, भोगेन = उपभोगेन, न = नहि, प्रणश्यति = विनष्टो भवति ॥ २२५ ॥

**हिन्दी**—बन्धक रखी गई वस्तु, गाँव की सीमान्त भूमि, नाबालिग का धन, धरोहर, स्त्रीधन, राजधन तथा वेदपाठी ब्राह्मण के धन पर कब्जा कर लेने से ही कोई उसे पा नहीं सकता ॥ २२५ ॥

**आधिरिति।** आधिः बन्धकद्रव्यं सीमा, बालधनम् आप्राप्तवयस्कस्य धनं निक्षेपः गच्छितद्रव्यम् उपनिधिः विश्वासात् परहस्ते न्यासीकृतं गृहक्षेत्रादि निक्षेपोपनिध्योरस्थावरत्व-स्थावरत्वाभ्यां विशेषोऽवगन्तव्यः। तथा राजस्वं श्रोत्रियस्वञ्च ब्रह्मस्वमित्यर्थः, भोगेन न प्रणश्यति ॥ २२५ ॥

**उपेक्षां कुर्वतस्तस्य तूष्णीम्भूतस्य तिष्ठतः।**
**काले विपन्ने पूर्वोक्ते तत् फलं नाप्नुते धनी ॥ २२६ ॥**

**अन्वयः**—उपेक्षां कुर्वतः तूष्णीम्भूतस्य तिष्ठतः तस्य पूर्वोक्ते काले विपन्ने धनी तत् फलं न आप्नुते ॥ २२६ ॥

**व्याख्या**—उपेक्षाम् = औदासीन्यम्, कुर्वतः = विदधतः, तूष्णीम्भूतस्य = मौनसाधकस्य, तिष्ठतः = स्थितः, तस्य = धनिनः, पूर्वोक्ते = निर्धारिते, काले = समये, विपन्ने = व्यतीते सति, धनिकः, तत् = तस्य, फलम् = परिणामम्, न = नहि, अश्नुते = भुङ्क्ते ॥ २२६ ॥

**हिन्दी**—यदि कोई स्वामी अपनी वस्तु पर किसी के कब्जे को देखकर भी इसकी उपेक्षा कर दे या चुप लगा जाय और ऊपरलिखित समय भी बीत जाय तो फिर वह उस धन को पाने का अधिकारी नहीं हो सकता है ॥ २२६ ॥

**उपेक्षामिति।** उपेक्षां कुर्वतः तूष्णीम्भूतस्य तिष्ठतः तस्य धनिन इत्यर्थः, पूर्वोक्ते निर्धारिते काले द्रव्यभोगस्येति भावः, विपन्ने अतीते सति धनी तत् फलं तस्य द्रव्यस्य फलं न आप्नुते न लभते, कालातिक्रमस्य स्वत्वध्वंसकत्वेन निर्द्धारणादिति भावः ॥ २२६ ॥

**भोगः सङ्क्षेपतश्चोक्तस्तथा दिव्यमथोच्यते।**
**प्रमादाद्धनिनो यत्र त्रिविधं साधनं न चेत् ॥ २२७ ॥**
**अर्थं चापह्नुते वादी तत्रोक्तस्त्रिविधो विधिः ॥ २२८ ॥**

**अन्वयः**—भोगः सङ्क्षेपतः तथा उक्तः, अथ दिव्यम् उच्यते। यत्र धनिनः प्रमादात् त्रिविधं साधनं न चेत् वादी अर्थम् अपह्नुते तत्र त्रिविधः विधिः उक्तः ॥ २२७-२२८ ॥

**व्याख्या**—भोगः = भुक्तिः, सङ्क्षेपतः = समासेन, तथा = तेनैव प्रकारेण, उक्तः = वर्णितः, अथ = अधुना, दिव्यम् = प्रमाणम्, उच्यते = कथ्यते। यत्र = यस्मिन् स्थाने, धनिनः = धनिकाः, प्रमादात् = आलस्यवशात्, त्रिविधम् = उक्तरूपं लेख्यसाक्षिभोगात्मकम्, साधनम् = प्रमाणम्, न चेत् = घटते, वादी = अभियुक्तः, च = पुनः, अर्थम् = धनम्, अपह्नुते = निगूहते, तत्र = तस्मिन् विषये, त्रिविधः = त्रिप्रकारकः, विधिः = उपायः, उक्तः = कथितः ॥ २२७-२२८ ॥

**हिन्दी**—कब्जा करने के सम्बन्ध में संक्षिप्त रूप से अब तक कहा गया है, अब दिव्य अर्थात् प्रमाण के सम्बन्ध में बतलाते हैं। यदि किसी धन के मालिक के आलस्य से जिस मुकदमे में पूर्वोक्त तीन तरह के लेख, कब्जा और गवाह जैसे साधन न हो सके और वादी उसकी वस्तु हड़पना चाहे तो ऐसी स्थिति में तीन तरह की विधि बतलाई गई है ॥ २२७-२२८ ॥

**भोग इति**। भोगः सङ्क्षेपतः सङ्क्षेपेण तेन प्रकारेण उक्तः कथितः, अथ इदानीं दिव्यं प्रमाणम् उच्यते, यत्र धनिनः प्रमादात् अनवधानवशात् त्रिविधम् उक्तरूपं लेख्यसाक्षिभोगात्मकं साधनं प्रमाणं न चेत् घटते वादी च अर्थम् अपह्नुते वञ्चयति तत्र त्रिविधः विधिः उपायः उक्तः॥ २२७-२२८ ॥

**चोदनाप्रतिकालश्च युक्तिलेशस्तथैव च।**
**तृतीयः शपथः प्रोक्तस्तैरेवं साधयेत् क्रमात्॥ २२९ ॥**

**अन्वयः**—चोदनाप्रतिकालः युक्तिलेशः तथैव शपथः च तृतीयः प्रोक्तः। तैः क्रमात् साधयेत्॥२२९ ॥

**व्याख्या**—चोदनाप्रतिकालः= भूयोभूयः प्रेरितोऽप्यनुत्तरितः प्रथमः, युक्तिलेशः= चातुर्य-प्रयोगो द्वितीयः, तथैव= तेनैव प्रकारेण, शपथः= प्रतिज्ञा, तृतीयः, तैः= त्रिभिर्विधिभिः, क्रमात्= क्रमशः, साधयेत्= तथ्यस्य निर्णयं कुर्यात्॥ २२९ ॥

**हिन्दी**—बार-बार प्रेरित करने पर भी वादी के वचन का उत्तर न देना पहला, युक्तियों का प्रयोग दूसरा और शपथ तीसरा—इन तीनों का क्रमशः उपयोग कर कार्य साधे॥ २२९ ॥

**चोदनेति**। चोदनाप्रतिकालः प्रथमः, युक्तिलेशः द्वितीयः, शपथः तृतीयः प्रोक्तः कथितः। तैः त्रिभिर्विधिभिः क्रमात् साधयेत् तत्त्वं निश्चिनुयादित्यर्थः॥ २२९ ॥

**विशिष्टतर्किता या च शास्त्रशिष्टाविरोधिनी।**
**योजना स्वार्थसंसिद्ध्यै सा युक्तिस्तु न चान्यथा॥ २३० ॥**

**अन्वयः**—विशिष्टतर्किता शास्त्रशिष्टाविरोधिनी या योजना स्वार्थसंसिद्ध्यै सा युक्तिः अन्यथा न॥२३० ॥

**व्याख्या**—विशिष्टतर्किता= विलक्षणतर्कसहिता, शास्त्रैः= धर्मशून्यैः, शिष्टैः= सभ्यैः, अविरोधिनी= विरोधरहिता, या योजना, सा= युक्तिः, सा एव, स्वार्थस्य—स्वस्य= आत्मनः, अर्थस्य= प्रयोजनस्य, संसिद्ध्यै= सम्यग्रूपेण सिद्धये भवति, अन्यथा= अन्यप्रकारेण, न= न भवति॥ २३० ॥

**हिन्दी**—सुन्दर तर्कयुक्त, शास्त्र और सभ्यजन सम्मत स्वार्थसिद्धि के लिए बनाई गई योजना को युक्ति कहते हैं, दूसरे ढंग से बनी हुई को नहीं॥ २३० ॥

**विशिष्टेति**। विशिष्टतर्किता विशिष्टतर्कसमेता शास्त्रैः शिष्टैश्च अविरोधिनी शास्त्रशिष्टसम्मता इत्यर्थः, या योजना सा युक्तिः सा एव स्वार्थस्य स्वकार्य्यस्य संसिद्ध्यै सम्यक् सिद्ध्यै भवति, अन्यथा न हि नैव॥ २३० ॥

**दानं प्रज्ञापना भेदः सम्प्रलोभक्रिया च या।**
**चित्तापनयनं चैव हेतवो हि विभावकाः॥ २३१ ॥**

**अन्वयः**—दानं प्रज्ञापना भेदः च या सम्प्रलोभक्रिया चित्तापनयनं चैव हि विभावकाः हेतवः॥ २३१ ॥

**व्याख्या**—दानम्= प्रत्यर्पणम्, प्रज्ञापना—प्रकर्षेण, ज्ञपना= बोधः, भेदः= उपजापः, चः= पुनः, या सम्प्रलोभक्रिया= सुष्ठुतया लोभप्रदर्शनम्, तथा चित्तस्य= मनसः,

अपनयनम् = अपसारणम्, एते = पञ्च, विभावकाः = साधकाः, हेतवः = निमित्तानि ॥ २३१ ॥

**हिन्दी**—दान देना, समझाना, फूट डालना, लुभाना और मन को प्रतिकूल करना—ये पाँचों विषय के कारण कहे जाते हैं ॥ २३१ ॥

**दानमिति**। दानं प्रज्ञापना प्रकर्षेण ज्ञापनं भेदः मनोभङ्गः सम्प्रलोभक्रिया सम्यक् लोभप्रदर्शनं तथा चित्तस्य मनसः अपनयनम् अपसारणं निश्चितविषयेभ्य इति शेषः, एते पञ्च विभावकाः साधका हेतवः ॥ २३१ ॥

**अभीक्ष्णं चोद्यमानोऽपि प्रतिहन्यान्न तद्वचः ।**
**त्रिचतुःपञ्चकृत्वो वा परतोऽर्थं स दाप्यते ॥ २३२ ॥**

**अन्वयः**—अभीक्ष्णं त्रिचतुःपञ्चकृत्वो वा चोद्यमानोऽपि तत् वचः न प्रतिहन्यात्, तदा परतः स अर्थं दाप्यते ॥ २३२ ॥

**व्याख्या**—अभीक्ष्णम् = पौनःपुन्येन, त्रिचतुःपञ्चकृत्वो वा, चोद्यमानोऽपि = प्रेरितो भूत्वाऽपि, तत् = तस्य, वचः = वाणी, अनुरोधकथनम्, न = नहि, प्रतिहन्यात्, तदा परतः = प्रतिवादीतः, सः अर्थं दाप्यते ॥ २३२ ॥

**हिन्दी**—बार-बार अनुरोध करने पर भी जो प्रतिवादी के वचन को न काटे, उत्तर न दे; ऐसा तीन, चार या पाँच बार करने पर भी उत्तर न देना उस प्रतिवादी को धन दिलाने वाला हो जाता है। अर्थात् वादी का अभियोग सत्य प्रमाणित हो जाने पर वह विजयी होता है ॥२३२ ॥

**अभीक्ष्णमिति**। अभीक्ष्णं पुनः पुनः त्रिचतुःपञ्चकृत्वो वा चोद्यमानः अनुरुध्यमानः अपि यदा तत् वचः अनुरोधवचनं न प्रतिहन्यात् तदा परतः अनन्तरं सः अर्थं दाप्यते ॥ २३२ ॥

**युक्तिष्वप्यसमर्थासु दिव्यैरेनं विमर्दयेत् ॥ २३३ ॥**

**अन्वयः**—युक्तिषु अपि असमर्थासु दिव्यैः एनं विमर्दयेत् ॥ २३३ ॥

**व्याख्या**—युक्तिष्वपि = उपायेष्वपि, असमर्थासु = अशक्तासु सतीषु, दिव्यैः = शपथादिभिः, एनम् = प्रत्यर्थिनम्, विमर्दयेत् = प्रशासयेत् ॥ २३३ ॥

**हिन्दी**—जहाँ युक्तियों से भी काम नहीं चले, वहाँ दिव्य शपथ देकर प्रतिवादी को प्रशासित करना चाहिए ॥ २३३ ॥

**युक्तिष्विति**। युक्तिषु असमर्थासु अवसन्नासु सतीषु दिव्यैः शपथादिभिः एवं प्रतिवादिनं विमर्दयेत् शासयेत् ॥ २३३ ॥

**यस्माद्देवैः प्रयुक्तानि दुष्करार्थे महात्मभिः ।**
**परस्परविशुद्ध्यर्थं तस्माद्दिव्यानि नामतः ॥ २३४ ॥**

**अन्वयः**—यस्मात् महात्मभिः देवैः दुष्करार्थे परस्परविशुद्ध्यर्थं प्रयुक्तानि तस्मात् नामतः दिव्यानि उच्यन्ते ॥ २३४ ॥

**व्याख्या**—यस्मात् = हेतोः, महात्मभिः = उदारचरितैः, देवैः = देवताभिः, परस्परविशुद्ध्यर्थम् = इतरेतरसन्देहनिवारणार्थम्, दुष्करार्थे = दुरूहविषये, प्रयुक्तानि = व्यवहृतानि, तस्मात् = तेन हेतुना, नामतः = नाम्ना, दिव्यानि उच्यन्ते = कथ्यन्ते ॥ २३४ ॥

**हिन्दी**—साधनविहीन व्यवहार में कठिनाई आने पर महात्माओं एवं देवताओं ने दिव्य

शपथों का प्रयोग किया है। इसीलिए वादी-प्रतिवादी के परस्पर विशुद्धिकरण नाम से ये दिव्य शपथ कहलाते हैं॥२३४॥

**यस्मादिति**। यस्मात् महात्मभिः देवैः दुष्करार्थे असाध्यविषये परस्परविशुद्ध्यर्थं प्रयुक्तानि, तस्मात् नामतः नाम्ना दिव्यानि उच्यन्ते इति शेषः॥२३४॥

**सप्तर्षिभिश्च भिस्मार्थे स्वीकृतान्यात्मशुद्धये॥२३५॥**

**अन्वयः**—सप्तर्षिभिः भिस्मार्थे आत्मशुद्धये स्वीकृतानि॥२३५॥

**व्याख्या**—सप्तर्षिभिः = मरीच्यादिभिः, भिस्मार्थे = अन्नहेतवे, आत्मशुद्धये = आत्मनः पवित्रीकरणाय, दिव्यानि शपथानि, स्वीकृतानि = प्रतिगृहीतानि॥२३५॥

**हिन्दी**—अन्नहरण रूप दोष उपस्थित होने पर आत्मशुद्धि के लिए सप्तर्षियों ने भी दिव्य शपथ को स्वीकार किया था॥२३५॥

**सप्तर्षिभिरिति**। सप्तर्षिभिः मरीच्यादिभिश्च भिस्मार्थे अन्नार्थे आत्मशुद्धये अन्नहरण-दोषक्षालनायेत्यर्थः, दिव्यानि स्वीकृतानि अङ्गीकृतानि॥२३५॥

**स्वमहत्त्वाच्च यो दिव्यं न कुर्य्यात् ज्ञानदर्पतः।**
**वसिष्ठाद्याश्रितं नित्यं स नरो धर्मतस्करः॥२३६॥**

**अन्वयः**—यः स्वमहत्त्वात् ज्ञानदर्पतः नित्यं वसिष्ठाद्याश्रितं दिव्यं न कुर्यात्, सः नरः धर्मतस्करः॥२३६॥

**व्याख्या**—यः = नरः, स्वस्य = आत्मनः, महत्त्वात् = उत्तमत्वात्, ज्ञानदर्पात्—ज्ञानस्य = बोधस्य, दर्पात् = गौरवात्, नित्यम् = प्रतिदिनम्, वसिष्ठादिभिः = वसिष्ठादिमुनिभिः, आश्रितम् = स्वीकृतम्, दिव्यम्, न = नहि, कुर्यात् = निष्पादयेत्, सः = असौ, नरः = मानवः, धर्मतस्करः = धर्मचौरः भवति॥२३६॥

**हिन्दी**—जो अपने बड़प्पन और ज्ञान के गर्व से दिव्य शपथों को स्वीकार नहीं करता है, जिसे वसिष्ठादि महर्षियों ने भी सद्यः ग्रहण किया था; ऐसा आदमी धर्मचोर कहलाता है॥२३६॥

**स्वमहत्त्वादिति**। यच्च स्वस्य महत्त्वात् ज्ञानदर्पतः ज्ञानदर्पाच्च नित्यं वसिष्ठादिभिः सप्तर्षिभिः आश्रितं स्वीकृतं दिव्यं न कुर्य्यात् स नरः धर्मतस्करः॥२३६॥

**प्राप्ते दिव्येऽपि न शपेद् ब्राह्मणो ज्ञानदुर्बलः।**
**संहरन्ति च धर्मार्थं तस्य देवा न संशयः॥२३७॥**

**अन्वयः**—ज्ञानदुर्बलः ब्राह्मणः दिव्ये प्राप्तेऽपि न शपेत्, देवाः तस्य धर्मार्थं संहरन्ति; न संशयः॥२३७॥

**व्याख्या**—ज्ञानदुर्बलः = ज्ञानहीनः, ब्राह्मणः = विप्रः, दिव्ये = भास्वरे, प्राप्तेऽपि = उपलब्धेऽपि, न = नहि, शपेत् = कुर्यात्, देवाः = देवताः, तस्य = एवंविधस्य ब्राह्मणस्य, धर्मम् = पुण्यम्, अर्थम् = वित्तञ्च, संहरन्ति = विनाशं कुर्वन्ति, अस्मिन् विषये, न = नहि, संशयः = सन्देहः कर्त्तव्यः॥२३७॥

**हिन्दी**—जो मूर्ख ब्राह्मण अवसर मिलने पर भी दिव्यशपथ का प्रयोग नहीं करता है, देवता उसके धर्म और अर्थ दोनों का निःसंदेह अपहरण कर लेते हैं॥२३७॥

**प्राप्ते इति।** यः ज्ञानदुर्बलः ज्ञानहीनः ब्राह्मणः दिव्ये प्राप्ते उपस्थितेऽपि न शपेत् न दिव्यं कुर्य्यात्, देवाः तस्य धर्मार्थं धर्मम् अर्थञ्च संहरन्ति न संशयः॥ २३७॥

**यस्तु स्वशुद्धिमन्विच्छन् दिव्यं कुर्य्यादतन्द्रितः।**
**विशुद्धो लभते कीर्त्तिं स्वर्गं चैवान्यथा न हि॥ ३३८॥**

**अन्वयः**—यस्तु स्वशुद्धिम् अन्विच्छन् अतन्द्रितः सन् दिव्यं कुर्यात् सः विशुद्धः सन् कीर्त्तिं स्वर्गञ्च लभते, अन्यथा न हि॥ २३८॥

**व्याख्या**—यस्तु = यो जनस्तु, स्वस्य = आत्मनः, शुद्धिम् = नैर्मल्यम्, अन्विष्यन् = अनुसन्धानं कुर्वन्, अतन्द्रितः = अनलसः सन्, दिव्यम् = शपथम्, कुर्यात् = अनुष्ठानं कुर्यात्, सः = असौ, विशुद्धः सन् = पवित्रः सन्, कीर्त्तिम् = यशः, स्वर्गम् = अपरलोकम्, च, लभते = आप्नोति, अन्यथा = इतरथा, न हि = नैव॥ ३३८॥

**हिन्दी**—आत्मशुद्धि को खोजते हुए जो आलस्य छोड़कर दिव्य शपथ ग्रहण करता है, वह पवित्र होकर लोक में यश और परलोक में स्वर्ग पाता है; अन्यथा नहीं॥ २३८॥

**य इति।** यस्तु स्वबुद्धिम् अन्विच्छन् अनुसरन् अतन्द्रितः अनलसः सन् दिव्यं कुर्य्यात्, सः विशुद्धः सन् कीर्त्तिं स्वर्गञ्च लभते, अन्यथा दिव्याकरणे इत्यर्थः, न हि नैव लभते इत्यर्थः॥ २३८॥

**अग्निर्विषं घटस्तोयं धर्माधर्मौ च तण्डुलाः।**
**शपथाश्चैव निर्दिष्टा मुनिभिर्दिव्यनिर्णये॥ २३९॥**

**अन्वयः**—अग्निः विषं घटः तोयं धर्माधर्मौ च तण्डुलाः शपथाश्च—एते मुनिभिः दिव्यनिर्णये निर्दिष्टाः॥ २३९॥

**व्याख्या**—अग्निः = वह्निः, विषम् = गरलम्, घटः = कुम्भः, तोयम् = जलम्, धर्मः = सुकृतः, अधर्मश्च = पापश्च, तण्डुलाः = धान्यसाराः, शपथाश्च, एते = पूर्वोक्ताः, मुनिभिः = ऋषिभिः, दिव्यनिर्णये, निर्दिष्टाः = निर्देशं कृताः॥ २३९॥

**हिन्दी**—दिव्य परीक्षा द्वारा निर्णय करने में आग, विष, घट, जल, धर्म, अधर्म, चावल और शपथ—इन सबों का निंदेश मुनियों ने किया है॥ २३९॥

**अग्निरिति।** अग्निः, विषं, घटः, तोयं जलं, धर्मः अधर्मः तण्डुलाः शपथाश्च एते मुनिभिः दिव्यनिर्णये निर्दिष्टाः॥ २३९॥

**पूर्वं पूर्वं गुरुतरं कार्य्यं दृष्ट्वा नियोजयेत्।**
**लोकप्रत्ययतः प्रोक्तं सर्वं दिव्यं गुरु स्मृतम्॥ २४०॥**

**अन्वयः**—कार्यं दृष्ट्वा लोकप्रत्ययतः पूर्वं पूर्वं गुरुतरं दिव्यं नियोजयेत्। प्रोक्तं सर्वं दिव्यं गुरु स्मृतम्॥ २४०॥

**व्याख्या**—कार्यस्य = व्यवहारस्य, गुरुताम्, दृष्ट्वा = अवलोक्य, लोकप्रत्ययतः—लोकानाम् = जनानाम्, प्रत्ययतः = विश्वासात्, पूर्वं पूर्वम् = प्राक् प्राक्, गुरुतरम् = श्रेष्ठतरम्, दिव्यम् = शपथम्, नियोजयेत् = नियुक्तं कुर्यात्। प्रोक्तम् = कथितम्, सर्वम् = निखिलम्, दिव्यम् = अलौकिकम्, गुरु, स्मृतम् = कथितम्॥ २४०॥

**हिन्दी**—इनमें बाद की अपेक्षा पहले के दिव्य-तण्डुल आदि अधिक महत्त्वपूर्ण हैं। इनका प्रयोग यथायोग्य कार्य की गुरुता देखकर ही किया जाता है। लोगों का विश्वास होने के कारण सभी दिव्यशपथ गौरवपूर्ण माने जाते हैं ॥ २४० ॥

**पूर्वमिति**। कार्य्यं दृष्ट्वा लोकप्रत्ययतः लोकानां विश्वासात् पूर्वं पूर्वं गुरुतरं दिव्यं नियोजयेत्, किन्तु प्रोक्तं कथितं सर्वमेव दिव्यं गुरु स्मृतम् ॥ २४० ॥

**तप्तायोगोलकं धृत्वा गच्छेन्नवपदं करे।**
**तप्ताङ्गारेषु वा गच्छेत् पद्भ्यां सप्त पदानि हि ॥ २४१ ॥**
**तप्ततैलगतं लोहमाषं हस्तेन निर्हरेत्।**
**सुतप्तलोहपत्रं वा जिह्वया संलिहेदपि ॥ २४२ ॥**

**अन्वयः**—करे तप्तायोगोलकं धृत्वा नवपदं गच्छेत्, वा तप्ताङ्गारेषु पद्भ्यां सप्तपदानि गच्छेत्, वा हस्तेन तप्ततैलगतं लोहमाषं निर्हरेत्, वा जिह्वया सुतप्तलोहपत्रं संलिहेत् ॥ २४१-२४२ ॥

**व्याख्या**—करे = हस्ते, तप्तम् = ज्वलितम्, अयोगोलकम् = लौहपिण्डम्, धृत्वा = गृहीत्वा, नवपदम् = अल्पान्तरं नवपदम्, गच्छेत् = चलेत्, वा = अथवा, तप्तेषु = प्रज्वलितेषु, अङ्गारेषु = दग्धकाष्ठखण्डेषु, पद्भ्याम् = चरणाभ्याम्, सप्तपदानि, गच्छेत् = चलेत्, किंवा, हस्तेन = करेण, तप्ततैलगतम्—तप्तेषु = ज्वलितेषु, तैलेषु = स्नेहेषु, स्थितम्, लोहमाषम् = माषपरिमितं लौहखण्डम्, निर्हरेत् = निष्काशयेत्, वा = अथवा, जिह्वया = रसनया, सुतप्तम् = अत्यन्तज्वलत्, लोहपत्रम् = लौहखण्डम्, संलिहेत् = सम्यग्रूपेण स्पृशेत् ॥ २४१-२४२ ॥

**हिन्दी**—अग्नि द्वारा दिव्य परीक्षा की विधि—आग द्वारा तपे (लाल) हुए लोहा के गोले को हाथ में रखकर नौ कदम चले, यदि हाथ न जले या जलते हुए अंगारों पर सात कदम नंगे पैरों से चले, यदि पैर न जलें या खौलते हुए तेल में से एक माषा लोहा को निकाले, यदि हाथ न जले अथवा अत्यन्त तपी हुई लोहे की पत्ती को जीभ से चाटे, यदि जीभ न जले तो उस व्यक्ति को निर्दोष समझे ॥ २४१-२४२ ॥

अग्निपरीक्षामाह—**तप्तेति**। करे हस्ते तप्तम् अयोगोलकं लौहपिण्डं धृत्वा नवपदं गच्छेत्। वा अथवा तप्तेषु ज्वलत्सु अङ्गारेषु पद्भ्यां सप्तपदानि गच्छेत्। किंवा हस्तेन तप्ततैलगतं तप्तेषु तैलेषु स्थितं लोहमाषं माषपरिमितं लौहं निर्हरेत् तस्मात् निष्काशयेदित्यर्थः। वा अथवा जिह्वया सुतप्तम् अतितप्तं ज्वलदित्यर्थः, लोहपत्रं लौहदण्डं संलिहेत् सम्यक् स्पृशेदित्यर्थः ॥ २४१-२४२ ॥

**गरं प्रभक्षयेद्धस्तैः कृष्णसर्पं समुद्धरेत् ॥ २४३ ॥**

**अन्वयः**—गरं प्रभक्षयेत् वा हस्तैः कृष्णसर्पं समुद्धरेत् ॥ २४३ ॥

**व्याख्या**—गरम् = गरलम्, प्रभक्षयेत् = प्रचुरमात्रायां, पिबेत्, वा = अथवा, हस्तैः = करैः, कृष्णसर्पम् = अत्यन्तविषधरम्, सर्पम्, समुद्धरेत् = सर्पदंशं कारयेत् ॥ २४३ ॥

**हिन्दी**—जहर खा ले या बाँबी से काले नाग को हाथ से निकालते समय डँसवा ले, फिर भी जहर का असर न हो तो निर्दोष माने ॥ २४३ ॥

विषपरीक्षामाह—**गरमिति**। गरं विषं प्रभक्षयेत् वा हस्तैः कृष्णसर्पं समुद्धरेत् ॥ २४३ ॥

**कृत्वा स्वस्य तुलासाम्यं हीनाधिक्यं विशोधयेत् ॥ २४४ ॥**

**अन्वयः**—स्वस्य तुलासाम्यं कृत्वा हीनाधिक्यं विशोधयेत् ॥ २४४ ॥

**व्याख्या**—स्वस्य = आत्मनः, तुलासाम्यम् = समरूपं तुलाम्, कृत्वा = विधाय, हीनाधिक्यम्—हीनः = अल्पम्, अधिकम् = विशेषम्, भवति तदा विशोधयेत् = विशेषेण शुद्धिं कुर्यात् ॥ २४४ ॥

**हिन्दी**—तराजू के एक पलड़े पर स्वयं बैठे और दूसरे पर बाट रख कर तौले। कम या ज्यादे होने पर विशुद्धि का परीक्षण करे ॥ २४४ ॥

घटपरीक्षामाह—**कृत्वेति**। स्वस्य आत्मनः तुलासाम्यं कृत्वा हीनाधिक्यं विशोधयेत्, यदि हीनः वा अधिकः भवति तदा शुद्ध्येदिति भावः ॥ २४४ ॥

**स्वेष्टदेवस्नपनजमद्यादुदकमुत्तमम्।**
**यावन्नियमितः कालस्तावदप्सु निमज्जयेत् ॥ २४५ ॥**

**अन्वयः**—स्वेष्टदेवस्नपनजम् उत्तमम् उदकम् अद्यात्। ततः यावन्नियमितः कालः तावत् अप्सु निमज्जयेत् ॥ २४५ ॥

**व्याख्या**—स्वस्य = आत्मनः, यः इष्टदेवः = कुलदेवता, तस्य, स्नपनात् = कृतस्नानात्, जनितम् = जातम्, उत्तमम् = महत्तमम्, उदकम् = जलम्, अद्यात् = पिबेत्, अभियुक्तः। तत्पश्चात्, यावत् = यावत्कालपर्यन्तम्, नियमितः = निर्धारितः समयः, तावत् कालं व्याप्यः, अप्सु = जलेषु, निमज्जयेत् = स्नापयेत् अभियुक्तं राजेति ॥ २४५ ॥

**हिन्दी**—अपने कुलदेवता को स्नान कराये गये उत्तम जल अर्थात् चरणामृत पीकर शपथ ग्रहण करे कि मैंने अमुक अपराध नहीं किया है, यदि किया हो तो वह नाश कर दे। जितने समय तक का नियम किया गया हो उतने समय तक जल में डूब कर पड़े रहना निर्दोष समझा जाता है ॥ २४५ ॥

तोयपरीक्षामाह—**स्वेष्टेति**। स्वस्य आत्मनः यः इष्टदेवः तस्य स्नपनात् जनितम् उत्तमम् उदकम् अद्यात् पिबेत् अभियुक्त इति शेषः। ततः यावन्नियमितः निर्द्धारितः कालः, तावत् कालं व्याप्येत्यर्थः, अप्सु जलेषु निमज्जयेत् अभियुक्तं राजेति पदद्वयमूह्यम् ॥ २४५ ॥

**अधर्मधर्ममूर्त्तीनामदृष्टहरणं तथा ॥ २४६ ॥**

**अन्वयः**—अधर्मधर्ममूर्त्तीनाम् अदृष्टस्य हरणं तथा ॥ २४६ ॥

**व्याख्या**—अधर्ममूर्त्तीनाम्—अधर्माणाम् = पापानाम्, मूर्त्तीनाम् = स्वरूपाणाम्, पापिनाम्, धर्माणाम् = पुण्यानाम्, मूर्त्तीनाम् = स्वरूपाणाम् = सुकृतानाञ्च, अदृष्टस्य = अलक्षितस्य, हरणम् = वर्द्धनञ्च विनाशयेत् ॥ २४६ ॥

**हिन्दी**—अधर्म और धर्म की मूर्त्तियों में से किसी एक को उत्तम आँखों में पट्टी बाँध कर उठाना, यदि धर्म की मूर्त्ति उठती है तो निर्दोष, अन्यथा दोषी माना जाता है ॥ २४६ ॥

धर्माधर्मपरीक्षामाह—**अधर्मेति**। अधर्ममूर्त्तीनां पापानां धर्ममूर्त्तीनां सुकृतानाञ्च अदृष्टस्य फलजनकापूर्वस्य हरणं वर्द्धनं नाशश्चेत्यर्थः कर्त्तव्यमिति शेषः। अयमर्थः—यदि मया एतत् दुष्कृतं कृतं तदा मम सर्वाणि सुकृतानि विफलानि भवन्तु दुष्कृतानि च वर्द्धन्ताम् इत्येवंरूपः शपथः कर्त्तव्य इति ॥ २४६ ॥

**कर्षमात्रांस्तण्डुलांश्च चर्वयेच्च विशङ्कितः ॥ २४७ ॥**

**अन्वयः**—विशङ्कितः कर्षमात्रान् तण्डुलान् च चर्वयेत् ॥ २४७ ॥

**व्याख्या**—विशङ्कितः = शङ्कारहितः सन्, कर्षमात्रान् = राजमुद्रापरिमितान्, तण्डुलान् = धान्यसारान् चर्वयेत् = दन्तैः निष्पेषयेत् ॥ २४७ ॥

**हिन्दी**—एक रुपये भर चावलों को निःशङ्क होकर चबाये। यह लोकप्रसिद्ध है कि दोषी के मुँह से खून निकलने लगता है ॥ २४७ ॥

तण्डुलपरीक्षामाह—**कर्षमात्रानिति**। विशङ्कितः निःशङ्कः सन् कर्षमात्रान् कर्षपरिमितान् तण्डुलान् चर्वयेच्च ॥ २४७ ॥

**स्पर्शयेत् पूज्यपादांश्च पुत्रादीनां शिरांसि च।**
**धनानि संस्पृशेद्द्राक् तु सत्येनापि शपेत् तथा।**
**दुष्कृतं प्राप्नुयां यद्यत् सर्वं नश्येत्तु सत्कृतम् ॥ २४८ ॥**

**अन्वयः**—पूज्यपादान् स्पर्शयेत्, पुत्रादीनां शिरांसि च धनानि संस्पृशेत्, तथा द्राक् सत्येनापि शपेत्। यत् यत् दुष्कृतमस्ति तत्तत् प्राप्नुयां सर्वञ्च सत्कृतं नश्येत् ॥ २४८ ॥

**व्याख्या**—पूज्यपादान् = पूज्यचरणान् गुरून्, स्पर्शयेत् = स्पर्शं कुर्यात्, पुत्रादीनाम् = सुतप्रभृतीनाम्, शिरांसि = मस्तकानि, च = पुनः, धनानि = वित्तानि, संस्पृशेत् = स्पर्शं कुर्यात्, तथा द्राक् = झटिति, सत्येनापि = अवितथेनापि, शपेत् = शपथं गृह्णीयात्। यद्येवं मया दुर्वृत्तमाचरितं तथा मम गुरवः निरये पतन्तु, पुत्रादयः धनानि च नश्यन्तु, ऋतञ्चानृतं भवतु सकलम्, इत्येवं शपेत्। किञ्च यत् यद् दुष्कृतमस्ति तत्तत् अहं प्राप्नुयाम्, सर्वञ्च = सकलञ्च, सत्कृतम् = पुण्यम्, विनष्टो भवेत् ॥ २४८ ॥

**हिन्दी**–पूज्य गुरुजनों के चरणों, पुत्रादिकों के मस्तकों का स्पर्श एवं धनादि का स्पर्श कर शपथ ले। इससे अपराधी का नाश हो जाता है, उसका वंश और धनादि विनष्ट हो जाते हैं। सत्य की दुहाई देकर भी शपथ ले। यदि मैं अपराधी होऊँ तो मुझे जो-जो पाप है वह मिले और मेरा सारा सुकृत विनष्ट हो जाय ॥ २४८ ॥

अन्यान् शपथानाह—**स्पर्शयेदिति**। पूज्यपादान् गुरून् स्पर्शयेत्, पुत्रादीनां शिरांसि धनानि संस्पृशेत् तथा द्राक् झटिति सत्येनापि शपेत् यदि मया एतत् दुष्कृतं कृतं तदा मम गुरवः नरके निपतन्तु, पुत्रादयः धनानि च नश्यन्तु, सत्यञ्च सर्वं मिथ्या भवतु इत्येवं शपथं कुर्यादिति भावः। किञ्च यत् यत् दुष्कृतमस्ति तत्तत् अहं प्राप्नुयां, सर्वञ्च सत्कृतं नश्येत् तुशब्दः अवधारणार्थः ॥ २४८ ॥

**सहस्रेऽपहृते चाग्निः पादोने च विषं स्मृतम्।**
**त्रिभागोने घटः प्रोक्तो ह्यर्द्धे च सलिलं तथा ॥ २४९ ॥**

**अन्वयः**—सहस्रे अपहृते अग्निः स्मृतः, च पादोने अपहृते विषं स्मृतम्, त्रिभागोने घटः प्रोक्तः तथा अर्द्धे सलिलं प्रोक्तमिति ॥ २४९ ॥

**व्याख्या**—सहस्रे = दशशते, सुवर्णमुद्रा, अपहृते = अपहरणकृते, अग्निः = वह्निपरीक्षा, स्मृतः = कथितः, च = पुनः, पादोने = पादैकहीने, पञ्चसप्ततिशते, अपहृते = चोरिते, विषम् = गरलपरीक्षा, स्मृतम् = विहितम्, त्रिभागोने = तृतीयभागहीने सहस्रे, अपहृते = बलान्नीते, घटः = तुलापरीक्षणम्, प्रोक्तः = कथितः, तथा अर्द्धे = सहस्रार्द्धे,

अपहृते = नीते, सलिलम् = जलपरीक्षणम्, स्मृतम् = कथितम् ॥ २४९ ॥

**हिन्दी**—एक हजार मुद्रा का यदि अपहरण हुआ हो तो अग्निपरीक्षा, चतुर्थांश कम अर्थात् सात सौ पचीस रुपये अपहृत हो तो विषपरीक्षा, तृतीयांश हीन अर्थात् नौ सौ सड़सठ रुपये की चोरी हो तो तुला-परीक्षा तथा आधा सहस्र अर्थात् पाँच सौ के अपहण में जलपरीक्षा कही गई है ॥ २४९ ॥

**सहस्र इति**। सहस्रे अपहृते अग्निः स्मृतः। पादोने चतुर्थभागहीने सहस्रे पञ्चाशदधिकसप्तशते इत्यर्थः, अपहृते विषं स्मृतम्। त्रिभागेण ऊने तृतीयभागहीने सहस्रे अपहृते घटः प्रोक्तः। अर्द्धे पञ्चशते अपहृते तु इत्यर्थः, सलिलं स्मृतम् ॥ २४९ ॥

**धर्माधर्मौ तदर्धे च ह्यष्टमांशे च तण्डुलाः।**
**षोडशांशे च शपथा एवं दिव्यविधिः स्मृतः ॥ २५० ॥**

**अन्वयः**—तदर्द्धे धर्माधर्मौ स्मृतौ, अष्टमांशे तण्डुलाः स्मृताः, षोडशांशे च शपथाः एवं दिव्यविधिः स्मृतः ॥ २५० ॥

**व्याख्या**—तदर्द्धे—तत् = तस्या अर्द्धसहस्रस्य, अर्द्धे = पञ्चाशदधिकशतद्वयेऽपहृते, धर्माधर्मौ, स्मृतौ = कथितौ, अष्टमांशे = पञ्चविंशत्यधिकशते, अपहृते, तण्डुलाः = तण्डुलपरीक्षणम्, स्मृताः, षोडशांशे = सार्द्धद्विषष्टिसंज्ञके नीते सति अन्ये शपथाः, स्मृताः = कथिताः, एवम् = अनेन प्रकारेण, दिव्यविधिः, कथितः = स्मृतः ॥ २५० ॥

**हिन्दी**—हजार का चौथा भाग अगर अपहृत हो तो धर्म-अधर्म परीक्षा, हजार का अगर आठवाँ भाग अपहृत हो तो चावल-परीक्षा तथा हजार का सोलहवाँ भाग अगर अपहृत हो तो उसे सौगन्ध खिलाना—इस प्रकार यह दिव्यविधि कहलाती है ॥ २५० ॥

**धर्मेति**। तदर्द्धे पञ्चाशदधिकशतद्वये अपहृते इत्यर्थः, धर्माधर्मौ स्मृतौ अष्टमांशे पञ्चविंशत्यधिकशते अपहृते इत्यर्थः, तण्डुलाः स्मृताः। षोडशांशे सार्द्धद्विषष्टिसंख्यके अपहृते इत्यर्थः, अन्ये शपथाः स्मृताः। एवम् उक्तरूपः दिव्यविधिः स्मृतः कथितः ॥ २५० ॥

**एषा संख्या निकृष्टानां मध्यानां द्विगुणा स्मृता।**
**चतुर्गुणोत्तमानां च कल्पनीया परीक्षकैः ॥ २५१ ॥**

**अन्वयः**—परीक्षकैः निकृष्टानाम् एषा संख्या, मध्यानां द्विगुणा स्मृता, उत्तमानां च चतुर्गुणा कल्पनीया ॥ २५१ ॥

**व्याख्या**—परीक्षकैः = विचारकैः राजपुरुषैः, निकृष्टानाम् = निम्कोटिपुरुषाणाम्, एषा = पूर्वोक्ता, संख्या = परिगणना, मध्यानाम् = मध्यमकोटिपुरुषाणाम्, एतत् पूर्वोक्ता संख्या, द्विगुणा = द्विगुणिता, स्मृता = कथिता, उत्तमानाञ्च = उत्तमकोटिजनानाम्, चतुर्गुणा, कल्पनीया = विहितव्या ॥ २५१ ॥

**हिन्दी**—यह संख्या निम्न दिव्य परीक्षा की है, मध्यम दर्जे की दिव्य परीक्षा में ऊपर लिखित संख्या दूनी होती है तथा उत्तम दिव्य परीक्षा में परीक्षकों द्वारा यह संख्या चौगुनी विहित होनी चाहिए ॥ २५१ ॥

**एषेति**। परीक्षकैः राजपुरुषैः निकृष्टानां नीचानाम् एषा उक्तरूपा संख्या, मध्यानां मानवानाम् एतद् द्विगुणा स्मृता। उत्तमानाञ्च चतुर्गुणा कल्पनीया ॥ २५१ ॥

**शिरोवर्त्ती यदा न स्यात् तदा दिव्यं न दीयते।**
**अभियोक्ता शिरःस्थाने दिव्येषु परिकीर्त्यते॥ २५२॥**

**अन्वयः**—यदा अभियोक्ता शिरोवर्त्ती न स्यात् तदा दिव्यं न दीयते। अभियोक्ता दिव्येषु शिरःस्थाने परिकीर्त्यते॥ २५२॥

**व्याख्या**—यदा = यस्मिन् काले, अभियोक्ता = वादी, शिरोवर्त्ती = सम्मुखस्थः, न = नहि, स्यात् = भवेत्, तदा = तस्मिन् काले, दिव्यम् = दिव्यशपथम्, न = नहि, दीयते = दातव्यम्। अभियोक्ता = वादी, दिव्येषु = दीयमानेषु, शिरःस्थाने = अग्रस्थाने, परिकीर्त्यते = कथ्यते॥२५२॥

**हिन्दी**—दिव्यशपथ लेने वाला जब तक शिर हिलाकर स्वीकृति न दे तब तक शपथ नहीं दिलानी चाहिए। अथवा जब तक वादी सामने उपस्थित न हो तब तक प्रतिवादी को शपथ नहीं दिलानी चाहिए, क्योंकि दिव्य शपथ में अभियोक्ता शिरःस्थानीय है॥ २५२॥

**शिर इति**। यदा अभियोक्ता शिरोवर्त्ती अग्रवर्त्ती सम्मुखस्थितः न स्यात् तदा दिव्यं न दीयते अभियोक्ता दिव्येषु दीयमानेष्वित्यर्थः, शिरःस्थाने परिकीर्त्यते शिरोवर्त्ती भवेदिति कथ्यते॥ २५२॥

**अभियुक्ताय दातव्यं दिव्यं श्रुतिनिदर्शनात्।**
**न कश्चिदभियोक्तारं दिव्येषु विनियोजयेत्॥ २५३॥**

**अन्वयः**—अभियुक्ताय श्रुतिनिदर्शनात् दिव्यं दातव्यम्। कश्चित् अभियोक्तारं दिव्येषु न विनियोजयेत्॥ २५३॥

**व्याख्या**—अभियुक्ताय = प्रतिवादिने, श्रुतिनिदर्शनात् = वेदनिर्देशात्, दिव्यम् = दिव्यशपथम्, दातव्यम् = प्रदातव्यम्। कश्चित् = कोऽपि जनः, अभियोक्तारम् = वादिनम्, दिव्येषु = दीयमानेषु शपथेषु, न = नहि, विनियोजयेत् = प्रेरयेत्॥ २५३॥

**हिन्दी**—वेद-निर्देशित होने के कारण दिव्यशपथ प्रतिवादी को ही दिलवाना चाहिए। अतः कोई वादी को दिव्यशपथ न दिलवाये॥ २५३॥

**अभियुक्तायेति**। श्रुतिनिदर्शनात् वेदनिधानात् अभियुक्ताय दिव्यं दातव्यम्। कश्चित् जनः अभियोक्तारं दिव्येषु न विनियोजयेत्॥ २५३॥

**इच्छया त्वितरः कुर्य्यादितरो वर्त्तयेच्छिरः॥ २५४॥**

**अन्वयः**—इच्छया तु इतरः कुर्यात् तदा इतरः शिरः वर्त्तयेत्॥ २५४॥

**व्याख्या**—इच्छया = अभियुक्तस्येच्छया, तु, इतरः = अन्यः, अभियोक्ता, कुर्यात् = दिव्यं सम्पादयेत्, तदा इतरः = स एव, शिरः = अभियोक्तृमस्तके सम्मुखे वा, तिष्ठेत्॥ २५४॥

**हिन्दी**—प्रतिवादी की इच्छा से यदि वादी दिव्यशपथ ग्रहण करे तो प्रतिवादी की उपस्थिति आवश्यक है। क्योंकि ऐसी स्थिति में वही शिरःस्थानीय होता है॥ २५४॥

**इच्छयेति**। इच्छया तु अभियुक्तस्येति भावः, इतरः अभियोक्ता कुर्य्यात् दिव्यमिति शेषः। तदा इतरः स एव शिरः वर्त्तयेत् अभियोक्तृशिरसि तिष्ठेदित्यर्थः॥ २५४॥

**पार्थिवैः शङ्कितानां च निर्दिष्टानां च दस्युभिः।**
**आत्मशुद्धिपराणां च दिव्यं देयं शिरो विना॥ २५५॥**

**अन्वयः**—दस्युभिः निर्दिष्टानाम् अतः पार्थिवैः शङ्कितानाम् आत्मशुद्धिपराणां शिरः विना दिव्यं देयम् ॥ २५५ ॥

**व्याख्या**—दस्युभिः = लुण्ठकैः, निर्दिष्टानाम् = सङ्केतितानाम्, अत एव, पार्थिवैः = नृपैः, शङ्कितानाम् = सन्दिग्धानाम्, आत्मशुद्धिपराणाम्—आत्मनः = स्वस्य, शुद्धिः = पवित्रीकरणम्, तस्मिन् पराणाम् = तत्पराणाम्, शिरः = कस्यापि जनस्य मस्तके स्थितम्, विना = विहाय, दिव्यम् = भास्वरं शपथम्, देयम् = दातुं योग्यमस्ति ॥ २५५ ॥

**हिन्दी**—राजा का जिन पर अपराधी होने का संदेह किया गया हो, अथवा डाकू आदि ने अपराध करने में जिनका नाम निर्देशित किया हो या जो स्वयं अपनी निर्दोषिता सिद्ध करना चाहते हों, उन्हें विराधी पक्ष की उपस्थिति या सिर हिलाकर स्वीकृति की कोई आवश्यकता नहीं होती है ॥ २५५ ॥

**पार्थिवैरिति**। दस्युभिः निर्दिष्टानां दूषितत्वेन प्रदर्शितानाम् अत एव पार्थिवैः राजभिः शङ्कितानाम् आत्मशुद्धिपराणां स्वदोषक्षालनार्थिनां मानवानां शिरः कस्यापि शिरसि अवस्थानं विना दिव्यं देयम् ॥ २५५ ॥

**परदाराभिशापे च ह्यगम्यागमनेषु च।**
**महापातकशस्ते च दिव्यमेव न चान्यथा ॥ २५६ ॥**

**अन्वयः**—परदाराभिशापे अगम्यागमनेषु तथा महापातकशस्ते दिव्यमेव, अन्यथा च न ॥ २५६ ॥

**व्याख्या**—परदाराभिशापे = परनारीगमनाभियोगे, च = पुनः, अगम्यानाम् = दुर्गमानां नारीणाम्, गमनेषु = मैथुनेषु, तथा = तेनैव प्रकारेण, महापातकशस्ते = ब्रह्महत्यादि-महापातकाभियोगे, दिव्यमेव = पूर्वोक्तदिव्यशपथमेव, देयम्, अन्यथा = अन्यप्रकारेण, न = नहि ॥ २५६ ॥

**हिन्दी**—परनारीगमन का अभियोग लगने पर, अगम्या नारी के साथ गमन का अभियोग लगने पर अथवा ब्रह्महत्या जैसे जघन्य अपराध के अभियोग में ही दिव्यशपथ का प्रयोग करना चाहिए, अन्यथा नहीं ॥ २५६ ॥

**परदारेति**। परदाराभिशापे परस्त्रीगमनाभियोगे, अगम्यानां विमातृप्रभृतीनां गमनेषु तथा महापातकशस्ते ब्रह्महत्यादिमहापापाभियोगे च दिव्यमेव शोधनमित्यर्थः, अन्यथा न शुद्धिरित्यर्थः ॥ २५६ ॥

**चौर्य्याभिशङ्कायुक्तानां तप्तमाषो विधीयते ॥ २५७ ॥**

**अन्वयः**—चौर्याभिशङ्कायुक्तानां तप्तमाषः विधीयते ॥ २५७ ॥

**व्याख्या**—चौर्याभिशङ्कायुक्तानाम् = स्तेयापयशग्रस्तानाम्, तप्तमाषः = तापिततैलगत-माषपरिमितलोहपिण्डम्, विधीयते = विधानमस्ति ॥ २५७ ॥

**हिन्दी**—जिस पर चोरी जैसे अभियोग का संदेह किया गया हो, ऐसे अपराधी के लिए खौलते तेल में हाथ डालकर तपे लोहे के उरदों को निकालने का विधान है ॥ २५७ ॥

**चौर्य्येति**। चौर्य्याभिशङ्कायुक्तानां चौर्य्यापवादग्रस्तानां मानवानां तप्तमाषः तप्ततैलगतमाष-परिमितलोहपिण्डं विधीयते ॥ २५७ ॥

**प्राणान्तिकविवादे तु विद्यमानेऽपि साधने।**
**दिव्यमालम्बते वादी न पृच्छेत् तत्र साधनम्॥ २५८॥**

**अन्वयः**—प्राणान्तिकविवादे साधने विद्यमानेऽपि वादी दिव्यम् आलम्बते। तत्र साधनं न पृच्छेत्॥ २५८॥

**व्याख्या**—प्राणान्तिकविवादे = प्राणघातकव्यवहारे समुपस्थिते, साधने = अपरस्मिन् उपकरणे प्रमाणे वा, विद्यमानेऽपि = उपस्थितेऽपि, वादी = अभियोगी, दिव्यम् = प्रमाणम्, आलम्बते = आलम्बनं कुरुते, तत्र = तस्मिन्स्थाने, साधनम् = उपकरणं प्रमाणं वा, न = नहि, पृच्छेत् = जिज्ञासां कुर्यात्॥ २५८॥

**हिन्दी**—प्राणसंकट उपस्थित होने वाले मुकदमे में भले ही साधन उपस्थित हो, फिर भी अभियुक्त दिव्य साधन का सहारा ले सकता है। पर वहाँ साधन के सन्दर्भ में वादी को कोई प्रश्न नहीं पूछना चाहिए॥ २५८॥

**प्राणान्तिकेति**। प्राणान्तिकविवादे उपस्थिते इत्यर्थः, साधने अन्यस्मिन् प्रमाणे विद्यमानेऽपि वादी दिव्यं प्रमाणम् आलम्बते आश्रयति, तत्र साधनम् अन्यदिति भावः न पृच्छेत्॥ २५८॥

**सोपधं साधनं यत्र तद्राज्ञे श्रावितं यदि।**
**शोधयेत्तत्तु दिव्येन राजा धर्मासनस्थितः॥ २५९॥**

**अन्वयः**—यत्र साधनं सोपधं तत् यदि राज्ञे श्रावितं धर्मासनगतः राजा तत् दिव्येन शोधयेत्॥ २५९॥

**व्याख्या**—यत्र = यस्मिन् विवादे, साधनम् = प्रमाणम्, सोपधम् = छलयुक्तम्, तच्च यदि = चेत्, राज्ञे = भूभृति, श्रावितम् = सूचितं स्यात्, तदा धर्मासनगतः = न्यायासने स्थितः, राजा = नृपः, तत् = विवादम्, दिव्येन = प्रमाणेन, शोधयेत् = विचारयेत्॥ २५९॥

**हिन्दी**—यदि किसी मुकदमे में प्रमाण जाली हो और इसकी सूचना राजा को मिल जाय, तो न्याय के आसन पर बैठा राजा दिव्यशपथ के द्वारा इसकी परीक्षा करे॥ २५९॥

**सोपधमिति**। यत्र साधनं प्रमाणं सोपधं कापट्यपूर्णं, तच्च यदि राज्ञे श्रावितं स्यात् तदा धर्मासनगतः राजा दिव्येन तत् शोधयेत्॥ २५९॥

**यन्नामगोत्रैर्यल्लेख्यतुल्यं लेख्यं यदा भवेत्।**
**अगृहीतधने तत्र कार्य्यो दिव्येन निर्णयः॥ २६०॥**

**अन्वयः**—यदा यत् लेख्यं यन्नामगोत्रैः लेख्यस्य तुल्यं भवेत्, तदा तत्र अगृहीतधने दिव्येन निर्णयः कार्यः॥ २६०॥

**व्याख्या**—यदा यल्लेख्यम् = व्यवहारपत्रम्, यन्नामगोत्रैः = यथाविधिनामगोत्रैः, लेख्यस्य = तात्त्विकविवादपत्रस्य, तुल्यम् = समम्, भवेत्, तदा तत्र = तस्मिन्विवादे अभियुक्ते, अगृहीतधने—न, गृहीतम् = नीतम्, धनम् = अर्थम्, येन तस्मिन् धनाग्राहिणि वादिसकाशात्, दिव्येन = प्रमाणेन, निर्णयः = दण्डाज्ञा, कार्यः = विधेयः॥ २६०॥

**हिन्दी**—रुपया न लेने के बावजूद यदि कोई नामगोत्र के साथ जाली ऋणपत्र तैयार कर दावा ठोक दे तो राजा सत्यासत्य का निर्णय दिव्यशपथ द्वारा करे॥ २६०॥

**यदिति।** यदा यत् लेख्यं यन्नामगोत्रैः यथायथनामगोत्रैः लेख्यस्य तात्त्विकस्य तुल्यं भवेत् तदा तत्र अभियुक्ते अगृहीतधने धनाग्राहिणि वादिसकाशात् आत्मानम् अगृहीतधनत्वेन मन्यमाने इत्यर्थः, दिव्येन निर्णयः कार्य्यः॥ २६०॥

**मानुषं साधनं न स्यात्तत्र दिव्यं प्रदापयेत्।**
**अरण्ये निर्जने रात्रावन्तर्वेश्मनि साहसे॥ २६१॥**
**स्त्रीणां शीलाभियोगेषु सर्वार्थापह्नवेषु च।**
**प्रदुष्टेषु प्रमाणेषु दिव्यैः कार्य्यं विशोधनम्॥ २६२॥**

**अन्वयः**—यत्र मानुषं साधनं न स्यात् तत्र दिव्यं प्रदापयेत्। तथा च अरण्ये निर्जने रात्रौ अन्तर्वेश्मनि साहसे स्त्रीणां शीलाभियोगेषु सर्वेषाम् अर्थानाम् अपह्नवेषु तथा प्रमाणेषु प्रदुष्टेषु च दिव्यैः विशोधनं कार्यम्॥ २६१-२६२॥

**व्याख्या**—यत्र = यस्मिन् विवादे, मानुषम् = लौकिकम्, साधनम् = उपकरणम्, न = नहि, स्यात् = भवेत्, तत्र = तस्मिन् विवादे, दिव्यम् = दिव्यप्रमाणम्, प्रदापयेत् = प्रयच्छेत्, तथा च अरण्ये = वने, निर्जने = जनशून्यस्थाने, रात्रौ = निशायाम्, अन्तर्वेश्मनि = गृहाभ्यन्तरे, साहसे = दस्युतायाम्, स्त्रीणाम् = नारीणाम्, शीलाभियोगेषु = चरित्रहननेषु, सर्वेषाम् = सकलानाम्, अर्थानाम् = धनानाम्, अपह्नवेषु = प्रच्छादनेषु, तथा प्रमाणेषु लौकिकेषु, प्रदुष्टेषु = प्रकर्षेण दूषितेषु, दिव्यैः = शपथैः, विशोधनम् = परिष्करणम्, कार्यम् = विधेयम्॥ २६१-२६२॥

**हिन्दी**—जहाँ पर कोई लौकिक प्रमाण न मिले वहाँ दिव्यशपथ दिलाना चाहिए। जंगल, जनशून्य स्थान, रात, घर का भीतरी भाग, डकैती प्रभृति साहसिक कर्म और स्त्रियों के आचरण—इन सबों के विषय में सम्बद्ध अभियोग में और जहाँ सम्पूर्ण अर्थ का रहस्य स्पष्ट न हो, जो कुछ प्रमाण हो वह भी दूषित हो तो वहाँ दिव्यशपथ द्वारा अपराधी की परीक्षा करनी चाहिए॥ २६१-२६२॥

**मानुषमिति। स्त्रीणामिति।** यत्र मानुषं साधनं लौकिकं प्रमाणं न स्यात् न विद्यते, तत्र दिव्यं प्रदापयेत्। तथा च अरण्ये, निर्जने, रात्रौ, अन्तर्वेश्मनि गृहाभ्यन्तरे, साहसे दस्युतायां स्त्रीणां शीलाभियोगेषु चरित्रदूषणेषु सर्वेषाम् अर्थानाम् अपह्नवेषु तथा प्रमाणेषु लौकिकेषु प्रदुष्टेषु प्रकर्षेण दूषितेषु च दिव्यैः विशोधनं कार्य्यम्॥ २६१-२६२॥

**महापापाभिशापेषु निक्षेपहरणेषु च।**
**दिव्यैः कार्य्यं परीक्षेत राजा सत्स्वपि साक्षिषु॥ २६३॥**

**अन्वयः**—राजा महापापाभिशापेषु च निक्षेपहरणेषु च साक्षिषु सत्स्वपि दिव्यैः कार्यं परीक्षेत॥ २६३॥

**व्याख्या**—राजा = नृपः, महापापाभिशापेषु = ब्रह्महत्यादिमहापातकाभियोगेषु, तथा निक्षेपाणाम् = न्यस्तधनानाम्, हरणेषु = बलान्नीतेषु च, साक्षिषु = प्रेक्षकेषु, सत्स्वपि = विद्यमानेष्वपि, दिव्यैः, कार्यम् = व्यवहारम्, परीक्षेत = परीक्षां कुर्यात्॥ २६३॥

**हिन्दी**—राजा साक्षी के रहने के बावजूद बड़े अपराधों, धरोहर पचा जाने जैसे कुकृत्यों का निर्णय दिव्यशपथ द्वारा ही करे॥ २६३॥

**महेति।** राजा महापापाभिशापेषु महापातकाभियोगेषु तथा निक्षेपाणां न्यस्तद्रव्याणां हरणेषु च साक्षिषु सत्स्वपि विद्यमानेषु अपि दिव्यैः कार्य्यं परीक्षेत ॥ २६३ ॥

**प्रथमा यत्र भिद्यन्ते साक्षिणश्च तथा परे।**
**परेभ्यश्च तथा चान्ये तं वादं शपथैर्नयेत्॥ २६४॥**

**अन्वयः**—यत्र प्रथमाः तथा परे परेभ्यश्च अन्ये साक्षिणः भिद्यन्ते, तत्र शपथैः तं वादं नयेत् ॥ २६४ ॥

**व्याख्या**—यत्र = यस्मिन् विवादे, प्रथमाः = उत्तमाः, तथा परे = मध्यमाः, तथा परेभ्यश्च = अन्येभ्यश्च, अन्ये = इतरे, साक्षिणः = प्रेक्षकाः, भिद्यन्ते = भेदं गच्छन्ति, तत्र = तस्मिन् विवादे, शपथैः = दिव्यैः, वादम् = व्यवहारम्, नयेत् = विचारयेत् ॥ २६४ ॥

**हिन्दी**—जहाँ पर उत्तम, मध्यम और निकृष्ट कोटि के गवाह दूसरों के द्वारा फोड़ लिये गये हों, वहाँ दिव्यशपथ के द्वारा अभियोग का निर्णय करना चाहिए ॥ २६४ ॥

**प्रथमा इति।** यत्र प्रथमाः श्रेष्ठाः तथा परे मध्यमा इत्यर्थः, तथा परेभ्यश्च अन्ये साक्षिणः भिद्यन्ते भेदं गच्छन्ति तत्र शपथैः वादं नयेत् निष्पादयेदित्यर्थः ॥ २६४ ॥

**स्थावरेषु विवादेषु पूगश्रेणिगणेषु च।**
**दत्तादत्तेषु भृत्यानां स्वामिनां निर्णये सति॥ २६५॥**
**विक्रयादानसम्बन्धे क्रीत्वा धनमनिच्छति।**
**साक्षिभिर्लिखितेनाथ भुक्त्या चैतान् प्रसाधयेत्॥ २६६॥**

**अन्वयः**—स्थावरेषु पूगश्रेणिगणेषु भृत्यानां दत्तादत्तेषु विवादेषु स्वामिनां निर्णये विक्रयादानसम्बन्धे धनं क्रीत्वा अनिच्छति। साक्षिभिः लिखितेन तथा भुक्त्या एतान् प्रसाधयेत् ॥ २६५-२६६ ॥

**व्याख्या**—स्थावरेषु = अचलासु सम्पत्सु भूम्यादिषु च, पूगश्रेणिगणेषु—पूगाः = जातिविशेषस्य समुच्चयाः, श्रेणयः = समव्यवसायिसङ्घाः, गणाः = अनुचरवर्गाः, तेषु, भृत्यानाम् = सेवकानाम्, दत्तादत्तेषु = अर्पितानर्पितेषु, वेतनस्य, विवादेषु = व्यवहारेषु, स्वामिनाम् = प्रभूणाम्, निर्णये = निश्चये, केऽस्य स्वामिनः इत्येवं निश्चये, विक्रयादानसम्बन्धे—विक्रयः = कृतविक्रयः, अदाने = अनुत्सर्जने, तथा धनम् = द्रव्यम्, क्रीत्वा = मूल्येनाधिगम्य, अनिच्छति = अगृह्णाति सति, साक्षिभिः = प्रेक्षकैः, लिखितेन = लिपिबद्धकृतेन, तथा भुक्त्या = भोगेन, एतान् = विवादान्, प्रसाधयेत् = सम्पादयेत् ॥ २६५-२६६ ॥

**हिन्दी**—अचल सम्पत्ति-विषयक विवाद, पूग अर्थात् एक प्रकार की जाति का समुच्चय, श्रेणी, व्यवसायिकों के संघ, गण अर्थात् अनुचरों का समूह-विषयक विवाद एवं सेवकों के वेतन-भुगतान विषयक, किसी धन के स्वामित्व-विषयक निर्णय के सम्बन्ध में, बेची गयी वस्तु को न देने के सम्बन्ध में तथा वस्तु खरीद कर उसे न लेने की इच्छा के सम्बन्ध में विवाद उपस्थित होने पर गवाह, दस्तावेज एवं कब्जा के आधार पर इनका निर्णय करे ॥ २६५-२६६ ॥

**स्थावरेष्विति। विक्रयेति।** स्थावरेषु भूम्यादिषु विषयेषु पूगश्रेणिगणेषु पूगाः जातिविशेषसङ्घाः

श्रेणयः विभिन्नजातिसङ्घाः गणाः एकविधजातिसङ्घाः तेषु, भृत्यानां दत्तादत्तेपु वेतनस्येति भावः, विवादे तथा स्वामिनां निर्णये के अस्य स्वामिनः इत्येवं निश्चये सति, विक्रयादानसम्बन्धे विक्रीय अदाने इत्यर्थः, तथा धनं द्रव्यं क्रीत्वा अनिच्छति अगृह्णति सति साक्षिभिः लिखितेन तथा भुक्त्या एतान् विवादान् प्रसाधयेत निष्पादयेत् ॥ २६५-२६६ ॥

**विवाहोत्सवद्यूतेषु विवादे समुपस्थिते।**
**साक्षिणः साधनं तत्र न दिव्यं न च लेख्यकम् ॥ २६७ ॥**

**अन्वयः**—विवाहोत्सवद्यूतेपु विवादे समुपस्थिते तत्र साक्षिणः साधनं दिव्यं न लेख्यकञ्च नेति ॥ २६७ ॥

**व्याख्या**—विवाहे = पाणिग्रहणसंस्कारे, उत्सवे = महे, तथा, द्यूतेषु = पणनेषु, विवादे = व्यवहारे, समुपस्थिते = समागते सति, तत्र = तस्मिन् विषये, साक्षिणः = प्रेक्षकाः, साधनम् = प्रमाणम्, दिव्यम् = दिव्यशपथम्, न = नास्ति, प्रमाणं, लेख्यकञ्च = लिपिबद्धपत्रञ्च, साधनम् = प्रमाणम्, न भवेत् ॥ २६७ ॥

**हिन्दी**—विवाह, उत्सव, एवं जुए के सम्बन्ध में विवाद उपस्थित होने पर गवाह को ही मुख्य प्रमाण के रूप में स्वीकार किया जाता है। इसमें न तो दिव्यशपथ चलता है और न लिखित प्रमाण ही माँगा जाता है ॥ २६७ ॥

**विवाहेति**। विवाहे उत्सवे तथा द्यूतेषु विवादे समुपस्थिते सति तत्र साक्षिणः साधनं प्रमाणं, दिव्यं न, लेख्यकञ्च न साधनमित्यर्थः ॥ २६७ ॥

**द्वारमार्गक्रियाभोग्यजलवाहादिषु तथा।**
**भुक्तिरेव तु गुर्वी स्यान्न दिव्यं न च साक्षिणः ॥ २६८ ॥**

**अन्वयः**—द्वारमार्गक्रियाभोग्यजलवाहादिषु भुक्तिः एव गुर्वी स्यात्, न दिव्यं न च साक्षिणः ॥ २६८ ॥

**व्याख्या**—द्वारे = द्वारानुष्ठाने, मार्गे = मार्गकरणे, भोग्यानाम् = उपभोग्यानाम्, क्रमागतम्, जलवाहादिषु = जलनिः सारणादिषु, भुक्तिः = भोगः एव, गुर्वी = गम्भीरप्रमाणम्, स्यात्, दिव्यम् = शपथम्, साक्षिणश्च = प्रेक्षकादीनाञ्च, प्रमाणं न भवति ॥ २६८ ॥

**हिन्दी**—घर का दरवाजा, निकलने की राह, पानी का निकास, अधिकृत वस्तु के सम्बन्ध में उपस्थित मुकदमे में किसका अधिकार है? यह कब्जा ही महत्त्वपूर्ण प्रमाण माना जाता है; न तो दिव्य शपथ या गवाह ही ॥ २६८ ॥

**द्वारेति**। द्वारमार्गक्रियाभोग्यजलवाहादिषु द्वारानुष्ठाने मार्गकरणे भोग्यानां क्रमागतं जलनिःसारणादिषु भुक्तिः भोगः एव गुर्वी प्रमाणं स्यात्, दिव्यं न साक्षिणश्च न प्रमाणमित्यर्थः ॥ २६८ ॥

**यद्येको मानुषीं ब्रूयादन्यो ब्रूयात्तु दैविकीम्।**
**मानुषीं तत्र गृहणीयान्न तु दैवीं क्रियां नृपः ॥ २६९ ॥**

**अन्वयः**—यदि एकः मानुषीं ब्रूयात् अन्यः दैविकीं, नृपः तत्र मानुषीं क्रियां गृह्णीयात्; न तु दैवीम् ॥ २६९ ॥

**व्याख्या**—यदि = चेत्, एकः = वादी वा प्रतिवादी, मानुषीम् = मानवीम्, क्रियाम् = प्रमाणम्, ब्रूयात् = वदेत्, अन्यः = अपरः, दैवीं क्रियाम् = दिव्यशपथम्, ब्रूयात् = वदेत्, तदा, नृपः = राजा, तत्र = विवादे, मानुषीम् = मानवीम्, क्रियाम् = प्रमाणम्, गृह्णीयात् = स्वीकुर्यात्, न तु दैवीम् इति ॥ २६९ ॥

**हिन्दी**—वादी-प्रतिवादी में से कोई एक यदि मानवीय प्रमाण तथा दूसरा दैवी प्रमाण के बारे में कहे तो राजा को चाहिए कि वह मानवीय प्रमाण ही माने, न कि दैवी प्रमाण ॥ २६९ ॥

**यदीति**। यदि एकः जनः मानुषीं क्रियां ब्रूयात्, अन्यस्तु प्रतिवादी तु दैविकीं ब्रूयात् तत्र नृपः मानुषीं क्रियां गृह्णीयात् न तु दैवीम् ॥ २६९ ॥

**यद्येकदेशप्राप्तापि क्रिया विद्येत मानुषी।**
**सा ग्राह्या न तु पूर्णापि दैविकी वदतां नृणाम् ॥ २७० ॥**

**अन्वयः**—यदि मानुषी क्रिया एकदेशप्राप्ताऽपि विद्येत सा ग्राह्या, न तु पूर्णापि दैविकीं वदतां नृणां न ग्राह्येति ॥ २७० ॥

**व्याख्या**—यदि = चेत्, मानुषीम् = मानवीम्, क्रियाम् = प्रमाणम्, एकदेशप्राप्ताऽपि—एकदेशे = विवादस्यैकांशे, प्राप्ता = अधिगताऽपि, विद्येत = भवेत्, तदा सा = क्रिया, ग्राह्या = स्वीकार्या, पूर्णापि = सम्पूर्णांशव्याप्ताऽपि, दैविकीम्, वदताम् = निर्दिष्टताम्, नृणाम् = नराणाम्, न तु, ग्राह्या = स्वीकार्या ॥२७० ॥

**हिन्दी**—भले ही मानुषी क्रिया विवाद के एक पक्ष की ही सम्पुष्टि करती हो, फिर भी वह स्वीकार्य है। विवाद के पूरे अंशों की सम्पुष्टि करने वाली दैवी क्रिया किसी भी स्थिति में स्वीकार्य नहीं होनी चाहिए ॥ २७० ॥

**यदीति**। यदि मानुषी क्रिया एकदेशप्राप्तापि अभियोगस्य कियत्यपि अंशे प्राप्तापि विद्येत, तदा सा ग्राह्या। पूर्णापि दैविकी वदतां नृणां न तु ग्राह्या इत्यर्थः ॥ २७० ॥

**प्रमाणैर्हेतुचरितैः शपथेन नृपाज्ञया।**
**वादिसम्प्रतिपत्त्या वा निर्णयः षड्विधः स्मृतः ॥ २७१ ॥**

**अन्वयः**—प्रमाणैः हेतुचरितैः शपथेन नृपाज्ञया वादिना सम्प्रतिपत्त्या वा षड्विधः निर्णयः स्मृतः ॥ २७१ ॥

**व्याख्या**—प्रमाणैः = साक्ष्यादिसाधनैः, हेतुभिः = निमित्तैः, चरितैः = आचारैः, शपथेन = सङ्कल्पेन, नृपाज्ञया—नृपस्य = राज्ञः, आज्ञया = आदेशेन, वादिना = अभ्यर्थिना, सम्प्रतिपत्त्या = विचारेण वा, एभिः = षड्भिः, निष्पाद्यत्वात्, निर्णयः = निष्पत्तिः, षड्विधः = षट्प्रकारकः, स्मृतः = कथितः ॥ २७१ ॥

**हिन्दी**—गवाह या लेख जैसे प्रमाण, प्रयोजन, आचारण, सौगन्ध, राजा का हुक्म तथा वादी की इच्छा—इन छः प्रकारों से निष्पन्न होने के कारण निर्णय छः तरह के होते हैं ॥७०२ ॥

**प्रमाणैरिति**। प्रमाणैः साक्षिलेख्यादिभिः हेतुभिः कारणैः, चरितैः, आचरणैः, शपथेन, नृपाज्ञया राजादेशेन, वादिनः सम्प्रतिपत्त्या सम्मत्या वा एभिः षड्भिः निष्पाद्यत्वात् निर्णयः निष्पत्तिः षड्विधः स्मृतः ॥ २७१ ॥

**लेख्यं यत्र न विद्येत न भुक्तिर्न च साक्षिणः।**
**न च दिव्यावतारोऽस्ति प्रमाणं तत्र पार्थिवः॥ १७२॥**

**अन्वयः**—यत्र लेख्यं न भुक्तिश्च न साक्षिणश्च न विद्येत, दिव्यावतारश्च न अस्ति, तत्र पार्थिवः प्रमाणं कुर्यात्॥ २७२॥

**व्याख्या**—यत्र = यस्मिन् विवादे, लेख्यम् = लिपिबद्धप्रमाणम्, न = नास्ति, भुक्तिश्च = भोगश्च, न = नैव, साक्षिणः = प्रेक्षकाश्च, न विद्यते = नास्ति, दिव्यावतारश्च = दिव्यशपथस्यावसरोऽपि, न = नास्ति, तत्र = तस्मिन् विवादे, पार्थिवः = राजा, प्रमाणम् = निदर्शनम्, कुर्यात् = स्यात्॥ २७२॥

**हिन्दी**—जहाँ लिखित प्रमाण, कब्जा, गवाह या दिव्यशपथ—इनमें किसी का प्रमाण न दिया गया हो, वहाँ राजा का निर्णय ही प्रमाण माना जाता है॥ २७२॥

**लेख्यमिति**। यत्र लेख्यं न भुक्तिश्च न विद्यते, साक्षिणश्च न सन्ति, दिव्यावतारश्च न अस्ति, तत्र पार्थिवः राजा प्रमाणं यथाभिमतं कुर्य्यादित्यर्थः॥ २७२॥

**निश्चेतुं ये न शक्याः स्युर्वादाः सन्दिग्धरूपिणः।**
**सीमाद्यास्तत्र नृपतिः प्रमाणं स्यात् प्रभुर्यतः॥ २७३॥**

**अन्वयः**—ये सन्दिग्धरूपिणः सीमाद्याः वादाः निश्चेतुं न शक्याः स्युः, तत्र नृपतिः प्रमाणं स्यात्; यतः सः प्रभुः॥ २७३॥

**व्याख्या**—ये = विवादाः, सन्दिग्धरूपिणः = शङ्काभिराक्रान्ताः, सीमाद्याः = प्रान्तादिसङ्क्रमिताः, वादाः = विवादाः, निश्चेतुम् = निर्णेतुम्, न = नहि, शक्याः = समर्थाः, स्युः = भवेयुः, तत्र = तस्मिन् विवादे, नृपतिः = राजा एव, प्रमाणम् = निदर्शनम्, स्यात्, यतः = यस्माद्धेतोः, सः = राजा, प्रभुः = सर्वेषां जनानां स्वामी भवति॥ २७३॥

**हिन्दी**—सीमा-विवाद जैसे सन्दिग्ध मुकदमे में जिनका निश्चयपूर्वक निर्णय नहीं किया जा सके, ऐसे मामलों में राजा का निर्णय ही निष्पत्ति है; क्योंकि वह सबका स्वामी होता है।

**निश्चेतुमिति**। ये सन्दिग्धरूपिणः सन्देहसङ्कुलाः सीमाद्याः सीमादिसङ्क्रान्ताः वादा विवादाः निश्चेतुं न शक्याः स्युः, तत्र नृपतिः प्रमाणं स्यात्, यतः सः प्रभुः॥ २७३॥

**स्वतन्त्रः साधयन्नर्थान् राजापि स्याच्च किल्बिषी।**
**धर्मशास्त्राविरोधेन ह्यर्थशास्त्रं विचारयेत्॥ २७४॥**

**अन्वयः**—राजाऽपि स्वतन्त्रः अर्थान् साधयन् किल्बिषी स्यात्, तस्मात् धर्मशास्त्राविरोधेन अर्थशास्त्रं विचारयेत्॥ २७४॥

**व्याख्या**—राजापि = नृपोऽपि, स्वतन्त्रः = स्वेच्छाचारी भूत्वा, अर्थान् = धनानि, साधयन् = निष्पादयन्, किल्बिषी = पापी, स्यात् = भवेत्, तस्मात् = कारणात्, धर्मशास्त्राविरोधेन = धर्मग्रन्थानुसारेण, अर्थशास्त्रम् = धनप्राप्तिरक्षावृद्ध्याद्युपायदर्शकं शास्त्रम्, विचारयेत् = चिन्तयेत्॥ २७४॥

**हिन्दी**—स्वेच्छाचारी राजा भी पापी होता है। अतः धर्मशास्त्र के अनुसार ही उसे अर्थशास्त्र का अनुचिन्तन करना चाहिए॥ २७४॥

**स्वतन्त्र इति।** राजापि स्वतन्त्रः स्वेच्छाचारी अर्थात् कार्य्याणि साधयन् समादधानः किल्बिषी पापी स्यात्। तस्मात् धर्मशास्त्राविरोधेन अर्थशास्त्रं विचारयेत् तथात्वे पापस्पर्शो न भवेदिति भावः॥ २७४॥

राजामात्यप्रलोभेन व्यवहारस्तु दुष्यति।
लोकोऽपि च्यवते धर्मात् कूटार्थे सम्प्रवर्त्तते॥ २७५॥

**अन्वयः**—राजामात्यप्रलोभेन व्यवहारः दुष्यति। लोकोऽपि धर्मात् च्यवते कूटार्थे च सम्प्रवर्त्तते॥ २७५॥

**व्याख्याः**—राज्ञः = नृपस्य, अमात्यानाञ्च = मन्त्रिणाञ्च, प्रलोभेन = प्रकर्षेण लिप्सया, व्यवहारः = आचारविचारः, दुष्यति = दूषितो भवति, लोकोऽपि = प्रजाऽपि, धर्मात् = सुकर्मणः, च्यवते = भ्रश्यति, कामाचारी भवतीत्यर्थः, कूटार्थे = कपटकृत्ये, च = पुनः, सम्प्रवर्त्तते = प्रवृत्तो भवति॥ २७५॥

**हिन्दी**—राजा और मन्त्रियों की लिप्सा के कारण मुकदमे का निर्णय कलुषित हो जाता है। प्रजा भी भ्रष्ट हो जाती है, उनका व्यवहार भी कपटपूर्ण होने लगता है॥ २७५॥

**राजेति।** राज्ञः अमात्यानाञ्च प्रलोभेन लोभातिशयेन व्यवहारः विचारः दुष्यति सदोषो भवति, लोकोऽपि धर्मात् च्यवते भ्रश्यति यथेच्छं व्यवहरतीत्यर्थः, कूटार्थे कपटकार्य्ये सम्प्रवर्त्तते च॥ २७५॥

अतिकामक्रोधलोभैर्व्यवहारः प्रवर्त्तते।
कर्तॄनथो साक्षिणश्च सभ्यान् राजानमेव च।
व्याप्नोत्यतस्तु तन्मूलं छित्वा तं विमृशं नयेत्॥ २७६॥

**अन्वयः**—अतिकामक्रोधलोभैः व्यवहारः प्रवर्त्तते, कर्तॄन् साक्षिणः सभ्यान् राजानञ्च व्याप्नोति। अतः तन्मूलं छित्वा तं विमृशं नयेत्॥ २७६॥

**व्याख्या**—अतिकामक्रोधलोभैः—अतिशयकामेन = वासनया, क्रोधातिशयेन = अतिशय-कोपेन, लोभेन = लोभातिशयेन, यदि व्यवहारः = विवादः, प्रवर्त्तते = आचरते, तदा एव तज्ज-नितम्, पापं कर्तॄन् = अधर्मकारिणः, साक्षिणः = प्रेक्षकान्, सभ्यान् = पारिषदः, राजानञ्च = नृपञ्च, व्याप्नोति = अवलम्बते। अतः = अस्मात् कारणात्, तत् = तस्य पापस्य, मूलम् = कामादीनामा-तिशय्यम्, छित्वा = विहाय, तम् = विवादम्, विमृशम् = विशिष्टविवेकम्, नयेत् = प्रापयेत्॥ २७६॥

**हिन्दी**—जब काम, क्रोध और लोभ की अधिकता से मनुष्य का व्यवहार दूषित होने लगता है तब वह फैलकर कर्त्ता, गवाह, पारिषद और राजा में भी व्याप्त हो जाता है। अतः राजा उसके मूल कारण कामादि को हटाकर विवाद का विवेक से पूर्ण विचार कर निर्णय करे॥ २७६॥

**अतीति।** अतिकामक्रोधलोभैः कामातिशयेन क्रोधातिशयेन लोभातिशयेन च यदि व्यवहारः प्रवर्त्तते चलति तदा एव तज्जनितं पापं कर्तॄन् पापकारिणः साक्षिणः सभ्यान् राजानञ्च व्याप्नोति आश्रयति, अतः तस्य पापस्य मूलं कामादीनाम् आतिशय्यं छित्वा निरस्य तं व्यवहारं विमृशं विशिष्टविवेकं नयेत् प्रापयेत् विचिच्य विचारयेदित्यर्थः॥ २७६॥

**अनर्थं चार्थवत् कृत्वा दर्शयन्ति नृपाय ये।**
**अविचिन्त्य नृपस्तथ्यं मन्यते तैर्निदर्शितम्।**
**स्वयं करोति तद्वृत्तौ भुज्यतेऽष्टगुणं त्वघम्॥ २७७॥**

**अन्वयः**—ये अनर्थम् अर्थवत् कृत्वा नृपाय दर्शयन्ति, यश्च नृपः अविचिन्त्य तैः निदर्शितं तथ्यं मन्यते तथा स्वयं करोति; तैः तद्वृत्तौ अष्टगुणम् अघं भुज्यते॥ २७७॥

**व्याख्या**—ये = सचिवाः, अनर्थम् = अयुक्तम्, अर्थवत् = अभीष्टमिव, कृत्वा = विचार्य, नृपाय = राज्ञे, दर्शयन्ति = प्रदर्शयन्ति, यश्च राजा अविचिन्त्य = विचारं विहाय, तैः = सचिवैः, निदर्शितम् = निर्देशितम्, तथ्यम् = यथार्थम्, मन्यते = अवगम्यते, तथा स्वयम् = आत्मनः, करोति = निष्पादयति, तेषां, कथनानुसारेण निष्पत्तिं ददाति, तैः = राज्ञा अमात्यैश्च, तत् = तथा, वृत्तौ = व्यवहारे च, अष्टगुणम् अधिकम्, अघम् = पापञ्च, भुज्यते = प्राप्नुते॥ २७७॥

**हिन्दी**—जो विचारपति अनिष्ट को इष्ट की तरह मानकर राजा को दिखलाता है और उस पर बिना विचार किये राजा उसे सच मानकर उसी के अनुसार स्वयं भी व्यवहार करता है; तो वैसा करने पर उनसे आठ गुना अधिक पाप निर्णायक को लगता है॥ २७७॥

**अनर्थमिति**। ये अमात्याः अनर्थम् अनिष्टम् अर्थवत् इष्टवत् कृत्वा नृपाय दर्शयन्ति, यश्च नृपः अविचिन्त्य अविविच्य तैः अमात्यैः निदर्शितं प्रदर्शितं तथ्यं सत्यं मन्यते तथा स्वयं करोति तेषां मतानुसारेण वादं निष्पादयति, तैः राज्ञा अमात्यैश्च तद्वृत्तौ तथा व्यवहारे सति अष्टगुणम् अघं पापं भुज्यते॥ २७७॥

**अधर्मतः प्रवृत्तं तं नोपेक्षेरन् सभासदः।**
**उपेक्ष्यमाणाः सनृपा नरकं यान्त्यधोमुखाः॥ २७८॥**

**अन्वयः**—सभासदः अधर्मतः प्रवृत्तं तं न उपेक्षेरन्, उपेक्ष्यमाणाः सनृपाः अधोमुखाः नरकं यान्ति॥ २७८॥

**व्याख्या**—सभासदः = सभ्याः, अधर्मतः = अधर्मे निरतम्, तम् = राजानम्, न = नहि, उपेक्षेरन् = वारयेयुः, उपेक्ष्यमाणाः = अवारयन्तः, सनृपाः = राजासहिताः, अधोमुखाः = नीचाननाः सन्, नरकम् = निरयम्, यान्ति = गच्छन्ति॥ २७८॥

**हिन्दी**—जो विचारपति अधर्म में प्रवृत्त राजा को वैसा करने से नहीं रोकते, वे राजा के साथ ही अधोमुख होकर नरकगामी होते हैं॥ २७८॥

**अधर्मत इति**। सभासदः अमात्यादयः अधर्मतः अधर्मे प्रवृत्तं तं नृपं न उपेक्षेरन् वारयेयुरित्यर्थः, उपेक्ष्यमाणाः अवारयन्तः सनृपाः नृपसहिताः अधोमुखाः नरकं यान्ति गच्छन्ति॥ २७८॥

**धिग्दण्डस्त्वथ वाग्दण्डः सभ्यायत्तौ तु तावुभौ।**
**अर्थदण्डवधावुक्तौ राजायत्तावभावपि॥ २७९॥**

**अन्वयः**—धिग्दण्डः तथा वाग्दण्डः तौ उभौ सभ्यायत्तौ। अर्थदण्डः वधदण्डः उभावपि नृपाधीनौ उक्तौ॥ २७९॥

**व्याख्या**—धिग्दण्डः = त्वां धिक् इत्येवंरूपो दण्डः, तथा वाग्दण्डः—वाक्येन = वचसा, अपमानस्वरूपः दण्डः, तौ उभौ = द्वावपि, सभ्यानाम् = सांसदाम्, आयत्तौ = अधीनौ, सभ्याः

पूर्वोक्तौ दण्डौ कर्तुं शक्नुवन्ति। अर्थदण्डः = आर्थिकदण्डस्तथा वधदण्डः = मृत्युदण्डश्च, उभौ = द्वौ, अपि, नृपायत्तौ = राजाधीनौ, उक्तौ = कथितौ ॥ २७९ ॥

**हिन्दी**—किसी को धिक्कार देने या डाँट-फटकार देने का अधिकार सभासदों को हैं तथा अर्थदण्ड एवं प्राणदण्ड देने का अधिकार राजा को है ॥ २७९ ॥

**धिगिति**। धिग्दण्डः त्वां धिक् इत्येवं निर्भर्त्सनरूपो दण्डः तथा वाग्दण्डः वाक्येन तिरस्करणरूपः दण्डः तौ उभौ अपि सभ्यानाम् आयत्तौ अधीनौ, सभ्याः एतौ एव दण्डौ कर्तुं शक्नुवन्तीत्यर्थः। अर्थदण्डः वधदण्डश्च उभौ अपि राजायत्तौ नृपाधीनौ उक्तौ, नृपः अर्थदण्डं वधदण्डं कर्तुं शक्नोतीत्यर्थः ॥ २७९ ॥

**तीरितं चानुशिष्टञ्च यो मन्येत विधर्मतः।**
**द्विगुणं दण्डमाधाय पुनस्तत् कार्य्यमुद्धरेत् ॥ २८० ॥**

**अन्वयः**—यः तीरितम् अनुशिष्टं विधर्मतः मन्येत सः द्विगुणं दण्डम् आधाय पुनः तत् कार्यम् उद्धरेत् ॥ २८० ॥

**व्याख्याः**—यः = अभ्यर्थी, तीरितम् = निर्णीतम्, अनुशिष्टम् = आदिष्टञ्च पराजयलक्षणम्, विधर्मतः = अधर्मेण युक्तम्, मन्येत = अवगम्येत, सः = अर्थी, द्विगुणम्, दण्डम्, आधाय = दत्त्वा, पुनः = भूयः, तत् = कार्यम्, उद्धरेत् = चालयेत् ॥ २८० ॥

**हिन्दी**—यदि कोई विवादी यह समझे कि मुकदमे का फैसला जो हुआ है वह न्यायसंगत नहीं है, तो दूना दण्ड देकर उस मुकदमे की अपील कर सकता है ॥ २८० ॥

**तीरितमिति**। यः विवादी तीरितं निष्पादितम् अनुशिष्टम् आज्ञप्तञ्च पराजयलक्षणं विधर्मतः अधर्मेण युक्तमिति भावः, विशेषणे तृतीया। मन्येत, सः द्विगुणं दण्डम् आधाय दत्त्वा पुनस्तत् कार्यम् उद्धरेत् चालयेत् ॥ २८० ॥

**साक्षिसभ्यावसन्नानां दूषणे दर्शनं पुनः।**
**स्वचर्चावसितानां च प्रोक्तः पौनर्भवो विधिः ॥ २८१ ॥**

**अन्वयः**—साक्षिसभ्यावसन्नानां दूषणे पुनः दर्शनं च स्वचर्चावसितानां पौनर्भवः विधिः प्रोक्तः ॥ २८१ ॥

**व्याख्या**—साक्षिभिः = प्रेक्षकैः, सभ्यैः = सांसद्भिः, अवसन्नानाम् = विषण्णानाम्, दूषणे = सदोषे, पुनर्दर्शनम् = पुनरावलोकनम्, कर्त्तव्यः, च = पुनः, स्वस्य = आत्मनः, नृपस्य, चर्चया = व्यवहारदर्शनेन, अवसितानाम् = समाप्तानाम्, पौनर्भवः विधिः = पुनरीक्षणं संशोधनञ्च, प्रोक्तः = कथितः ॥ २८१ ॥

**हिन्दी**—गवाह एवं विचारपतियों के द्वारा यदि किसी की हार हुई हो तो मुकदमे पर पुनः विचार किया जाता है या स्वयं विचार करने में राजा या सभासद आदि की त्रुटि हो गई हो तो भी फिर से विचार करना उचित होता है ॥ २८१ ॥

**साक्षीति**। साक्षिभिः सभ्यैरमात्यैश्च अवसन्नानां हारितानां दूषणे पराजयपत्रस्येति भावः, बहिष्कृते सतीत्यर्थः, पुनर्दर्शनं पुनर्विचारः कर्त्तव्य इति शेषः, किञ्चेति चार्थः, स्वस्य राज्ञश्चर्चया व्यवहारदर्शनेन अवसितानां निष्पादितानाञ्च पौनर्भवः विधिः पुनर्विचार इत्यर्थः प्रोक्तः ॥ २८१ ॥

**अमात्यः प्राड्विवाको वा ये कुर्य्युः कार्य्यमन्यथा।**
**तत्सर्वं नृपतिः कुर्य्यात्तान् सहस्रन्तु दण्डयेत्॥ २८२॥**

**अन्वयः**—अमात्यः प्राड्विवाकः वा ये च अन्यथा कार्यं कुर्युः, तत् सर्वं नृपतिः कार्यं कुर्यात्, तान् सहस्रं दण्डयेत्॥ २८२॥

**व्याख्या**—अमात्यः = सचिवः, प्राड्विवाकः = न्यायाधिपतिः, वा = अथवा, ये = सभ्याः, अन्यथा = इतरथा, कार्यम् = व्यवहारम्, कुर्युः = विधेयुः, तत् = पूर्वोक्तम्, सर्वम् = सकलम्, नृपतिः = राजा, कार्यम् = व्यवहारम्, कुर्यात् = निष्पादयेत्, तान् = सभ्यादीन्, सहस्रम् = दशशतम्, दण्डयेत् = दण्डं कुर्यात्॥ २८२॥

**हिन्दी**—यदि सभासद् या विचारपति कोई नियम-विरुद्ध फैसला करे तो राजा स्वयं उस पर पुनर्विचार कर सही फैसला दे और दोषी पदाधिकारियों को हजार रुपये का जुर्माना करे॥ २८२॥

**अमात्य इति।** अमात्यः प्राड्विवाको वा विचारपतिर्वा ये चान्ये सभ्याः कार्य्यम् अन्यथा कुर्य्युः, तत् सर्वं कार्यं नृपतिः कुर्यात् तत्त्वेन निष्पादयेत्, तांश्च अमात्यादीन् सहस्रं दण्डयेत्॥२८२॥

**न हि जातु विना दण्डं कश्चिन्मार्गेऽवतिष्ठते।**
**सन्दर्शिते सभ्यदोषे तदुद्धृत्य नृपो नयेत्॥ २८३॥**

**अन्वयः**—दण्डं विना कश्चित् जातु मार्गे न हि अवतिष्ठते। सभ्यदोषे सन्दर्शिते नृपः तत् उद्धृत्य नयेत्॥ २८३॥

**व्याख्या**—दण्डम् = दमनम्, विना = विहाय, कश्चित् = कोऽपि जनः, जातु = कदाचित्, मार्गे = सत्पथि, न हि = नैव, अवतिष्ठते = स्थिरो भवति। सभ्यदोषे—सभ्यानाम् = सभासदाम्, दोषे = अवगुणे, सन्दर्शिते = सम्यग्रूपेण प्रदर्शिते, नृपः = राजा, उद्धृत्य = उपन्यस्तं कृत्वा, नयेत् = निष्पादयेत्॥ २८३॥

**हिन्दी**—बिना दण्डभय से कोई कभी सही राह पर नहीं चलता। विवादियों द्वारा फैसले में सभासदों का दोष दिखलाये जाने पर उस दोष का निराकरण कर राजा स्वयं फैसला करे॥२८३॥

**नेति।** दण्डं विना कश्चिदपि जनः जातु कदाचित् मार्गे सदाचाररूपे पथि न हि नैव अवतिष्ठते। सभ्यानां दोषे सन्दर्शिते सम्यक् प्रदर्शिते सति विवादिनेति शेषः, नृपः तत् दूषणम् उदधृत्य नयेत् विवादं निष्पादयेत्॥ २८३॥

**प्रतिज्ञाभावनाद्वादी प्राड्विवाकादिपूजनात्।**
**जयपत्रस्य चादानाज्जयी लोके निगद्यते॥ २८४॥**

**अन्वयः**—वादी प्रतिज्ञाभावनात् प्राड्विवाकादिपूजनात् तथा जयपत्रस्य आदानात् लोके जयी निगद्यते॥ २८४॥

**व्याख्या**—वादी = अभ्यर्थी, प्रतिज्ञायाः = प्रतिश्रवस्य, साध्यस्य, भावनात् = प्रमाणीकरणात्, प्राड्विवाकादीनाम् = न्यायाधीशादीनाम्, पूजनात् = प्रशंसनात्, तथा जयपत्रस्य = विजयलेख्यस्य, आदानात् = स्वीकरणात्, लोके = संसारे, जयीति, निगद्यते = निष्पाद्यते॥ २८४॥

**हिन्दी**—वादी का दावा प्रमाणित हो जाने पर, विचारपतियों द्वारा मुकदमा प्रशंसित या अनुमोदित होने पर तथा डिग्री हासिल हो जाने पर संसार में वादी विजयी माना जाता है ॥ २८४ ॥

**प्रतिज्ञेति**। वादी प्रतिज्ञायाः साध्यस्य भावनात्, प्रमाणीकरणात्, प्राड्विवाकादीनां पूजनात् सत्याभियोक्तृत्वेन प्रशंसनात् तथा जयपत्रस्य आदानात् ग्रहणाच्च लोके जयीति निगद्यते कथ्यते ॥ २८४ ॥

**सभ्यादिभिर्विनिर्णिक्तं विधृतं प्रतिवादिना।**
**दृष्ट्वा राजा तु जयिने प्रदद्याज्जयपत्रकम् ॥ २८५ ॥**

**अन्वयः**—राजा तु सभ्यादिभिः विनिर्णिक्तं प्रतिवादिना च विधृतं दृष्ट्वा जयिने जयपत्रकं दद्यात् ॥ २८५ ॥

**व्याख्या**—राजा = नृपस्तु, सभ्यादिभिः = सभासद्भिः, विनिर्णिक्तम् = विशेषेण निर्धारितम् = यथार्थरूपेणावधारितम्, प्रतिवादिना = प्रत्यर्थिना, च = पुनः, विधृतम् = विशिष्टरूपेण, धृतम् = अङ्गीकृतम्, साध्यमिति, दृष्ट्वा = अवलोक्य, जयिने = विजयिने, जयपत्रकम् = आधिकरणिकपत्रम्, प्रदद्यात् = समर्पयेत् ॥ २८५ ॥

**हिन्दी**—विचारपतियों ने मुकदमे की सत्यता प्रमाणित कर दी और प्रतिवादी ने उसे स्वीकार कर लिया, यह देखकर राजा मुकदमे में जिसकी जीत हुई उसे डिग्री दे दे ॥ २८५ ॥

**सभ्यादिभिरिति**। राजा तु सभ्यादिभिः विचारनियुक्तैः विनिर्णिक्तं विशेषेण निर्द्धारितं तथ्यतया अवधारितं प्रतिवादिना च विधृतं स्वीकृतं साध्यमिति शेषः, दृष्ट्वा जयिने जयपत्रकं प्रदद्यात् ॥ २८५ ॥

**अन्यथा ह्यभियोक्तारं निरुध्याद् बहुवत्सरम्।**
**मिथ्याभियोगसदृशमर्हयेदभियोगिनम् ॥ २८६ ॥**

**अन्वयः**—अन्यथा अभियोगस्य अभियोक्तारं मिथ्याभियोगसदृशं बहुवत्सरं निरुद्ध्यात् तथा अभियोगिनम् अभियुक्तम् अर्हयेत् ॥ २८६ ॥

**व्याख्या**—अन्यथा = असत्यपरके, अभियोगस्य = दोषारोपणस्य, अभियोक्तारम् = वादिनम्, मिथ्याभियोगसदृशम् = अतात्त्विकदोषारोपणयुक्तम्, यथा तथा, बहुवत्सरम् = अनेकवर्षपर्यन्तम्, निरुध्यात् = कारागारे निवासयेत्, अभियोगिनम्, अभियुक्तम् = प्रतिवादिनम्, अर्हयेत् = पूजयेत् ॥ २८६ ॥

**हिन्दी**—झूठा विवाद उपस्थित करने वाले वादी को अनेक सालों के लिए जेल के सिखचों में बन्द कर दे। जिस पर इल्जाम लगाया गया हो, उसे ससम्मान छोड़ दे ॥ २८६ ॥

**अन्यथेति**। अन्यथा अभियोगस्य अतात्त्विकत्वे इत्यर्थः, अभियोक्तारं मिथ्याभियोगसदृशम् अलीकाभियोगोपयुक्तं यथा तथा बहुवत्सरं निरुध्यात् कारायां वासयेत्। तथा अभियोगिनम् अभियुक्तं जनम् अर्हयेत् पूजयेत् ॥ २८६ ॥

**कामक्रोधौ तु संयम्य योऽर्थान् धर्मेण पश्यति।**
**प्रजास्तमनुवर्त्तन्ते समुद्रमिव सिन्धवः ॥ २८७ ॥**

**अन्वयः**—यः कामक्रोधौ संयम्य धर्मेण अर्थान् पश्यति प्रजाः सिन्धवः समुद्रमिव तम् अनुवर्त्तन्ते ॥ २८७ ॥

**व्याख्या**—यः = राजा, कामक्रोधौ—कामश्च = वासना च, क्रोधश्च = कोपश्च, तौ, संयम्य = आत्मनियन्त्रणं कृत्वा, धर्मेण = सुकृतिना, अर्थान् = व्यवहारान्, पश्यति = अवलोकयति, प्रजाः = जनाः, सिन्धवः = नद्यः, समुद्रमिव = जलधिरिव, तम् = नृपम्, अनुवर्त्तन्ते = अनुसरन्ति ॥ २८७ ॥

**हिन्दी**—जो राजा काम-क्रोध को नियंत्रित कर व्यवहार का निर्णय करता है, प्रजा उसका उसी तरह अनुसरण करती है जैसे नदियाँ सागर का ॥ २८७ ॥

**कामक्रोधाविति**। यः कामक्रोधौ संयम्य धर्मेण अर्थान् कार्य्याणि पश्यति, प्रजाः सिन्धवः नद्यः समुद्रमिव तम् अनुवर्त्तन्ते ॥ २८७ ॥

**जीवतोरस्वतन्त्रः स्याज्जरयापि समन्वितः ।**
**तयोरपि पिता श्रेयान् बीजप्राधान्यदर्शनात् ॥ २८८ ॥**

**अन्वयः**—जरयाऽपि समन्वितः जीवितोः मातापित्रोः अस्वतन्त्रः भवेत् । तयोः बीजप्राधान्यदर्शनात् पिता श्रेयान् ॥ २८८ ॥

**व्याख्या**—जरयाऽपि = वार्द्धक्येनापि, समन्वितः = संयुक्तः, जीवितोः = सजीवयोः, मातापित्रोः = जननीजनकयोः, अस्वतन्त्रः = अस्वच्छन्दः, पुत्रो भवेत् = स्यात् । तयोः = उभयोर्मध्ये, बीजप्राधान्यदर्शनात्—बीजस्य = वीर्यस्य, प्राधान्यदर्शनात् = उत्तमत्वावलोकनात्, पिता = जनकः, एव श्रेयान् = श्रेष्ठत्वमस्ति ॥ २८८ ॥

**हिन्दी**—माँ-बाप के जिन्दा रहते, बूढ़े हो जाने पर भी बेटा स्वच्छन्द होकर धन का स्वामी नहीं हो सकता है। उन दोनों में भी बीज की प्रधानता होने के कारण पिता की प्रधानता ही मान्य है ॥ २८८ ॥

सम्प्रति दायप्रकरणमुद्दिशति—**जीवतोरिति**। जरया वार्द्धकेन समन्वितोऽपि पुत्र इति शेषः, जीवतोः मातापित्रोः अस्वतन्त्रः अस्वेच्छाचारी भवेदित्यर्थः, तयोः मातापित्रोः मध्येऽपि बीजस्य प्राधान्यदर्शनात् पिता श्रेयान् श्रेष्ठतरः ॥ २८८ ॥

**अभावे बीजिनो माता तदभावे तु पूर्वजः ।**
**स्वातन्त्र्यं तु स्मृतं ज्येष्ठे ज्यैष्ठ्यं गुणवयः कृतम् ॥ २८९ ॥**

**अन्वयः**—बीजिनः अभावे माता, तदभावे तु पूर्वजः । यतः ज्येष्ठे स्वातन्त्र्यं स्मृतम्, ज्यैष्ठ्यञ्च गुणवयः कृतम् ॥ २८९ ॥

**व्याख्या**—बीजिनः = जनकस्य, अभावे = अनस्तिवे, माता = जननी, श्रेयसी, तत् = तस्याः, अभावे = अविद्यमानत्वे, तु, पूर्वजः = अग्रजन्मा, श्रेयः । यतः, ज्येष्ठे स्वातन्त्र्यम् = स्वाधीनत्वम्, स्मृतम् = कथितम्, ज्यैष्ठ्यञ्च = ज्येष्ठत्वं च, गुणेन = धर्मेण, वयसा = जीवितकालेन च, उभाभ्यां श्रेष्ठत्वम् ॥ २८९ ॥

**हिन्दी**—पिता के अभाव में माता और माता के अभाव में बड़ा भाई ही श्रेष्ठ माना जाता है। श्रेष्ठता गुण और उम्र दोनों दृष्टि से मान्य है। ऐसा ही बड़ा भाई स्वतंत्र होकर धन-सम्पत्ति का स्वामी होगा, न कि केवल उम्र से बड़ा ॥ २८९ ॥

**अभावे इति**। बीजिनः पितुः अभावे माता श्रेयसी, तदभावे तस्या मातुरभावे पूर्वजः ज्येष्ठः श्रेयान्, यतः ज्येष्ठे स्वातन्त्र्यं स्वाधीनत्वं स्मृतं, ज्यैष्ठ्यञ्च ज्येष्ठत्वञ्च गुणेन वयसा च कृतं केवलं वयसा ज्यैष्ठ्यं न श्रेष्ठं गुणेन वयसा च उभाभ्यान्तु श्रेष्ठमित्यर्थः॥ २८९ ॥

**याः सर्वाः पितृपत्न्यः स्युस्तासु वर्त्तेत मातृवत्।**
**स्वसमैकेन भागेन सर्वास्ताः प्रतिपालयन्॥ २९० ॥**

**अन्वयः**—याः सर्वाः पितुः पत्न्यः स्युः, तासु मातृवत् वर्त्तेत तथा स्वसमैकेन भागेन ताः सर्वाः प्रतिपालयन्॥ २९० ॥

**व्याख्या**—याः= नार्यः, सर्वाः= सकलाः, पितुः= जनकस्य, पत्न्यः= विवाहिताः, स्यु= भवेयुः, तासु= स्त्रीषु, मातृवत्= स्वजननीव, वर्त्तेत= व्यवहरेत्, तथा स्वस्य= आत्मनः, समेन= तुल्येन, एकेन= एकमात्रेण, भागेन= अंशेन, ताः= सर्वाः मातरः, प्रतिपालयेत्= पोषयेत्॥ २९० ॥

**हिन्दी**—पिता की चाहे जितनी पत्नियाँ हो सबों को अपनी जननी की तरह ही सम्मानित करना चाहिए। अपनी तरह एक-एक हिस्से से उनका भरण-पोषण करना चाहिए॥ २९० ॥

**या इति**। याः सर्वाः पितुः पत्न्याः स्युः, तासु मातृवत् वर्त्तेत व्यवहरेत् तथा स्वस्य आत्मनः समेन समानेन एकेन भागेन ताः सर्वाः मातृः प्रतिपालयेत्॥ २९० ॥

**अस्वतन्त्राः प्रजाः सर्वाः स्वतन्त्रः पृथिवीपतिः।**
**अस्वतन्त्रः स्मृतः शिष्य आचार्य्ये तु स्वतन्त्रता॥ २९१ ॥**

**अन्वयः**—सर्वाः प्रजाः अस्वतन्त्राः, पृथिवीपतिस्तु स्वतन्त्रः। शिष्यः अस्वतन्त्रः स्मृतः, आचार्ये तु स्वतन्त्रता॥ २९१ ॥

**व्याख्या**—सर्वाः= सकलाः, प्रजाः= जनाः, अस्वतन्त्राः= पराधीनाः, स्युः, तु= किन्तु, पृथिवीपतिः= नृपतिः, स्वतन्त्रः= आत्माधीनः स्यात्, शिष्यः= अन्तेवासी, अस्वतन्त्रः= पराधीनः, स्मृतः= कथितः, आचार्ये= उपाध्याये, स्वतन्त्रता= स्वाधीनता वर्त्तते॥ २८९ ॥

**हिन्दी**—सभी पजा पराधीन हैं, केवल राजा ही स्वतंत्र होता है। शिष्य पराधीन होता है, किन्तु आचार्य में स्वतन्त्रता होती है॥ २९१ ॥

**अस्वतन्त्रा इति**। सर्वाः प्रजाः अस्वतन्त्राः पराधीनाः, पृथिवीपतिस्तु स्वतन्त्रः स्वाधीनः। शिष्यः अस्वतन्त्रः स्मृतः, आचार्य्ये तु स्वतन्त्रता अस्तीति शेषः॥ २९१ ॥

**सुतस्य सुतदाराणां वशित्वमनुशासने।**
**विक्रये चैव दाने च वशित्वं न सुते पितुः॥ २९२ ॥**

**अन्वयः**—सुतस्य सुतदाराणाम् अनुशासने वशित्वं किञ्च सुते विक्रये दाने च पितुः वशित्वं न॥ २९२ ॥

**व्याख्या**—सुतस्य= पुत्रस्य, सुतदाराणाम्= पुत्रवधूनाम्, अनुशासने= उपदेशे वा शासने, **वशित्वम्= स्वातन्त्र्यमस्ति**, किञ्च **सुते**= पुत्रविषये, विक्रये= विपणने, दाने= समर्पणे, पितुः= **जनकस्य, वशित्वम्**= स्वातन्त्र्यम्, न= नास्ति॥ २९२ ॥

**हिन्दी**—पुत्र और पुत्रवधुओं को पिता या श्वसुर की आज्ञा मानने में पराधीनता मानी गई है। किन्तु समर्थ पुत्र के लिए वस्तु बेचने या दान देने में पिता की आज्ञा की प्रतीक्षा की आवश्यकता नहीं मानी गई है॥ २९२॥

**सुतस्येति**। सुतस्य पुत्रस्य सुतदाराणां स्नुषाणाञ्च अनुशासने उपदेशे दमने वा वशित्वं स्वातन्त्र्यम् अस्तीति शेषः, किन्तु सुते पुत्रे विषये विक्रये दाने च पितुः वशित्वं स्वातन्त्र्यं न अस्तीति शेषः॥ २९२॥

**स्वतन्त्राः सर्व एवैते परतन्त्रेषु नित्यशः।**
**अनुशिष्टौ विसर्गे वाऽविसर्गे चेश्वरा मताः॥ २९३॥**

**अन्वयः**—परतन्त्रेषु एते सर्वे एव नित्यशः स्वतन्त्राः, यतः अनु यतः अनुशिष्टौ विसर्गे वा अविसर्गे ईश्वराः मताः॥ २९३॥

**व्याख्या**—परतन्त्रेषु = पराधीनेषु, एते सर्वे = सकलाः, एव = प्रायः, नित्यशः = सततम्, स्वतन्त्राः = स्वाधीनाः, यतः अनुशिष्टौ = अनुशासने जनकेन सह मन्त्रणे, विसर्गे = उत्सर्जने, अविसर्गे = अनुत्सर्जने च, ईश्वराः = स्वामिनः, मताः = प्रोक्ता॥ २९३॥

**हिन्दी**—पराधीन होने के बावजूद ये सभी बेटे सदा स्वाधीन नहीं होते हैं, क्योंकि पिता के साथ मंत्रणा करने, देने या न देने में ये स्वाधीन माने गये हैं॥ २९३॥

**स्वतन्त्रा इति**। परतन्त्रेषु पराधीनेषु मध्ये एते सर्वे पुत्रा एव नित्यशः सततं स्वतन्त्राः प्रायेण स्वाधीना इत्यर्थः, स्वाधीनवदाचरन्तीति भावः, यतः अनुशिष्टौ अनुशासने पित्रा सह मन्त्रणे विसर्गे दाने अविसर्गे च ईश्वराः स्वाधीनाः मताः कथिताः॥ २९३॥

**मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः।**
**स्थावरस्य तु सर्वस्य न पिता न पितामहः॥ २९४॥**

**अन्वयः**—पिता मणिमुक्तप्रवालानां प्रभुः, किन्तु सर्वस्य स्थावरस्य पिता न पितामहश्च न प्रभुः॥ २९४॥

**व्याख्या**—पिता = जनकः, मणीनाम् = रत्नानाम्, मुक्तानाम् = प्रवालानाम्, अन्यस्य = सर्वस्यैव = चलसम्पदः, प्रभुः = स्वामी, पिता = जनकः, एव, किन्तु, सर्वस्य = सकलस्य, स्थावरस्य = अचलस्य, पिता = जनकः, न = नहि, पितामहस्य च, न = नहि, प्रभुः = स्वामित्वं वर्त्तते॥ २९४॥

**हिन्दी**—मणि, मोती, मूंगा आदि सम्पूर्ण चल सम्पत्ति के ऊपर पिता का प्रभुत्व रहता है, किन्तु सभी अचल सम्पत्ति के ऊपर न तो पिता का और न तो पितामह का ही पूर्ण प्रभुत्व रहता है। इन पर इनका आंशिक ही प्रभुत्व रहता है॥ २९४॥

**मणीति**। पिता मणीनां मुक्तानां प्रवालानाम् अन्यस्य सर्वस्य अस्थावरस्य इत्यर्थः, प्रभुः यथेच्छं व्यवहारक्षम इत्यर्थः, किन्तु सर्वस्य स्थावरस्य पिता न पितामहश्च न प्रभुरित्यर्थः, स्थावरे पितुः स्वाधीनता नास्तीति भावः, सर्वस्येत्युपादानात् कियदंशस्थावरदानादिषु पितुः स्वाधीनतेति सूच्यते॥ २९४॥

**भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः।**
**यत् ते समधिगच्छन्ति यस्यैते तस्य तद्धनम्॥ २९५॥**

**अन्वयः**—भार्या पुत्रः दासः एते त्रय एव अधनाः स्मृताः। ते यत् समधिगच्छन्ति तत् एते यस्य तस्य ॥ २९५ ॥

**व्याख्या**—भार्या = जाया, पुत्रः = सुतः, दासः = सेवकः, एते = पूर्वपरिगणिताः, त्रयः = भार्यादयः, एव, अधनाः = प्रभुत्वहीनाः, परतन्त्राः, स्मृताः = कथिताः। ते = भार्यादयः, यत् = सम्पदम्, समधिगच्छन्ति = प्राप्नुवन्ति, तत् = धनम्, एते = पत्न्यादयः, यस्य तस्यैवास्तीति भावः ॥ २९५ ॥

**हिन्दी**—पत्नी, पुत्र और नौकर ये तीनों ही क्रम से पति, पिता और मालिक के रहते दम तक अधन अर्थात् धन के स्वामित्व से हीन होते हैं। जहाँ कहीं जो कुछ ये उपार्जित करते हैं वे क्रमशः ये जिनके अधीन हैं उन्हीं का हो जाता है। इसीलिए इन्हें अधन कहा गया है ॥ २९५ ॥

**भार्य्या इति**। भार्य्या पत्नी, पुत्रः दासः भृत्यश्च एते त्रय एव अधनाः अस्वामिनः अस्वतन्त्राः इत्यर्थः, स्मृताः उक्ताः, ते भार्य्यादयः यत् धनं समधिगच्छन्ति अर्जयन्ति, तत् धनम् एते भार्य्यादयः यस्य, तस्य भवतीति शेषः ॥ २९५ ॥

**वर्त्तते यस्य यद्धस्ते तस्य स्वामी स एव न।**
**अन्यस्वमन्यहस्तेषु चौर्य्याद्यैः किं न दृश्यते ? ॥ २९६ ॥**

**अन्वयः**—यत् यस्य हस्ते वर्त्तते स एव तस्य स्वामी न। चौर्याद्यैः अन्यस्वम् अन्यहस्तेषु किं न दृश्यते ? ॥ २९६ ॥

**व्याख्या**—यत् = धनम्, यस्य = जनस्य, हस्ते = करे, वर्त्तते = तिष्ठति, सः = असौ, एवेति बलार्थकः, तस्य = धनस्य, स्वामी = प्रभुः, न = नास्ति, तथाहि, चौर्याद्यैः = तस्करप्रभृतिभिः, अन्यस्वम् = अपरजनस्य धनम्, अन्यहस्तेषु = अपरजनानां करेषु, किमिति प्रश्ने, न = नहि, दृश्यते = अवलोक्यते ? ॥ २९६ ॥

**हिन्दी**—जो धन जिसके हाथ में रहता है, उस धन का वही मालिक नहीं माना जाता है। चोरी के कारण क्या दूसरे का धन दूसरों के हाथ में नहीं देखा जाता ? ॥ २९६ ॥

**वर्त्तते इति**। यत् धनं यस्य हस्ते वर्त्तते तिष्ठति, स एव तस्य धनस्य स्वामी न, तथाहि चौर्य्याद्यैः हेतुभिः अन्यस्वम् अपरधनम् अन्यहस्तेषु अपरजनानां तस्करादीनामित्यर्थः, हस्ते किं न दृश्यते ? अपितु दृश्यत एव ॥ २९६ ॥

**तस्माच्छास्त्रत एव स्यात् स्वाम्यं नानुभवादपि।**
**अस्यापहृतमेतेन न युक्तं वक्तुमन्यथा ॥ २९७ ॥**

**अन्वयः**—तस्मात् शास्त्रतः एव स्वाम्यं स्यात्, अनुभवात् अपि न। अन्यथा एतेन अस्य जनस्य अपहृतं वक्तुं न युक्तम् ॥ २९७ ॥

**व्याख्या**—तस्मात् = तेन हेतुना, शास्त्रतः = धर्मग्रन्थनिर्देशानुसारेण, एव, स्वाम्यम् = प्रभुत्वम्, स्यात् = भवेत्, अनुभवात् = प्रत्यक्षदर्शनादिकारणात्, अपि = चेत्, न = अस्ति। अन्यथा = इतरथा, एतेन = जनेन, अस्य = जनस्य, अपहृतम् = धनं बलादधिकृतम्, इत्थम्, वक्तुम् = वदितुम्, न = नहि, युक्तम् = उचितं भवति ॥ २९७ ॥

**हिन्दी**—अतः शास्त्रानुसार ही किसी धन का कोई मालिक हो सकता है, केवल

अनुभव से नहीं। अन्यथा इसका धन इसने हड़प लिया, यह कहना भी उचित नहीं होता ॥ २९७ ॥

**तस्मादिति**। तस्मात् शास्त्रतः एव शास्त्रानुसारेणैव स्वाम्यं स्यात्, अनुभवात् प्रत्यक्ष-दर्शनादिकारणात् अपि न स्वाम्यमित्यर्थः। अन्यथा एतेन अस्य जनस्य अपहृतम् इति वक्तुं न युक्तम् अपहर्त्तुः तत्र स्वाम्यादिति भावः ॥ २९७ ॥

**विदितोऽर्थागमः शास्त्रे तथा वर्णैः पृथक् पृथक्।**
**शास्ति तच्छास्त्रधर्मं यत्म्लेच्छानामपि तत् सदा।**
**पूर्वाचार्य्यैस्तु कथितं लोकानां स्थितिहेतवे ॥ २९८ ॥**

**अन्वयः**—यथावर्णं पृथक् पृथक् अर्थागमः शास्त्रे विदितः। तस्य शास्त्रस्य यत् धर्मः तत् सदा म्लेच्छानामपि शास्ति। एतच्च लोकानामपि हेतवे पूर्वाचार्यैः तु कथितम् ॥ २९८ ॥

**व्याख्या**—यथावर्णम् = वर्णानुकूलेन, पृथक् पृथक् = भिन्नं भिन्नम्, अर्थागमः— अर्थस्य = धनस्य, आगमः = प्राप्तिः, शास्त्रे = धर्मग्रन्थे, विदितः = विख्यातः, तस्य = पूर्वोक्तस्य, शास्त्रस्य = धर्मग्रन्थस्य, यत् = निर्धारितम्, धर्मः = कर्त्तव्यः, तत् = धर्मः, सदा = सर्वदा, म्लेच्छानाम् = वर्णाश्रमधर्मविहीनानामपि, शास्ति = उपदिशति, एतच्च लोकानामपि = सर्वसाधारणजनानामपि, स्थितिहेतवे = सदाचाररक्षणाय, पूर्वाचार्यैः = पुरोवर्तिभिः विद्वद्भिः, कथितम् = निगदितम् ॥ २९८ ॥

**हिन्दी**—वर्णानुसार प्रत्येक जाति के लिए अलग-अलग धन कमाने का मार्ग शास्त्र में निर्दिष्ट हैं। धर्नाजन के लिए जो धर्मशास्त्र में निर्दिष्ट है वह म्लेच्छों के लिए भी मान्य है। पूर्वाचार्यों ने लोक के सदाचार की रक्षा के लिए दूसरी जगह भी ऐसा ही कहा है ॥ २९८ ॥

**विदित इति**। यथावर्णं वर्णानुसारेण पृथक् पृथक् अर्थागमः धनार्जनोपायः स्वामीरिक्थ क्रयेत्यादि शास्त्रे विदितः। तस्य शास्त्रस्य यत् धर्मं तत् सदा म्लेच्छानामपि शास्ति म्लेच्छानामिति कर्मणि षष्ठी। म्लेच्छा अपि तं शास्त्रमनुसृत्य अर्थागमेषु व्यवहरन्तीत्यर्थः। एतच्च लोकानां स्थितिहेतवे सदाचाररक्षणाय पूर्वाचार्य्यैः पूर्वपण्डितैः कथितम् ॥ २९८ ॥

**समानभागिनः कार्य्याः पुत्राः स्वस्य च वै स्त्रियः।**
**स्वभागार्द्धहरा कन्या दौहित्रस्तु तदर्द्धभाक् ॥ २९९ ॥**

**अन्वयः**—स्वस्य च स्त्रियः वै पुत्राश्च समानभागिनः कार्याः। कन्या स्वभागार्द्धहरा, दौहित्रस्तु तदर्द्धभाक् ॥ २९९ ॥

**व्याख्या**—स्वस्य च = आत्मनश्च, स्त्रियः = भार्याः, वै = तथा, पुत्राश्च = सुताश्च, समानभागिनः = तुल्यांशिनः, कार्याः। कन्या = अनूढा पुत्री, तद्भागार्द्धहराः—तत् = तस्य पुत्रस्य, यः भागः = अंशः, तस्य = भागस्य, अर्द्धहराः = अर्द्धांशहरा भवति, दौहित्रस्तु = दुहितापुत्रस्तु, तदर्द्धभाक्—तस्य = कन्याप्राप्यांशस्य अर्द्धभाग्भागिनो भवति ॥ २९९ ॥

**हिन्दी**—पत्नी और पुत्र का हिस्सा सम्पत्ति में धनपति के हिस्से के बराबर होना चाहिए। अपने हिस्सा का आधा भाग अपनी अविवाहिता बेटी का होना चाहिए तथा उसके हिस्से का आधा भाग नाती का हिस्सा होना चाहिए ॥ २८९ ॥

**समानेति।** स्वस्य आत्मनः पुत्राः स्त्रियश्च समानभागिनः कार्य्याः, कन्या अनूढा दुहिता तद्भागार्द्धहराः तस्य पुत्रस्य यो भागः तस्य अर्द्धहरा, दौहित्रस्तु तदर्द्धभाक् तस्य कन्याप्राप्यांशस्य अर्द्धभाक् भवेदित्यर्थः॥ २९९ ॥

**मृतेऽधिपेऽपि पुत्राद्या उक्तभागहराः स्मृताः ॥ ३०० ॥**

**अन्वयः**—अधिपे मृतेऽपि पुत्राद्याः उक्तभागहराः भवन्ति ॥ ३०० ॥

**व्याख्या**—अधिपे = धनस्वामिनि, मृतेऽपि = उपरतेऽपि, पुत्राद्याः = सुतदारादयः, उक्तभागहराः = तुल्यांशिनः भवन्ति ॥ ३०० ॥

**हिन्दी**—धनपति के मर जाने पर पूर्वोक्त ढंग से धन का बटवारा पुत्र प्रभृति के बीच करना चाहिए, ऐसा कहा गया है ॥ ३०० ॥

**मृते इति।** अधिपे स्वामिनि पितरि इत्यर्थः, मृतेऽपि पुत्राद्या पुत्रप्रभृतयः उक्तभागहराः समभागिन इत्यर्थः स्मृताः ॥ ३०० ॥

**मात्रे दद्याच्चतुर्थांशं भगिन्यै मातुरर्द्धकम्।**
**तदर्द्धं भागिनेयाय शेषं सर्वं हरेत् सुतः ॥ ३०१ ॥**

**अन्वयः**—सुतः मात्रे चतुर्थांशं, भगिन्यै मातुरर्द्धकं, तदर्द्धं भागिनेयाय, शेषं सर्वं स्वयं हरेत् ॥ ३०१ ॥

**व्याख्या**—सुतः = पुत्रः, मात्रे = जनन्यै, चतुर्थांशम् = स्वचतुर्थभागस्यैकभागम्, भगिन्यै = सोदरायै, मातुः = जनन्याः, अर्द्धकम् = अर्द्धांशम्, तत् = तस्याः, अर्द्धम् = अर्द्धभागम्, दद्यात् = दातव्यम्, शेषम् = धनस्यावशिष्टाद्यंशम्, सर्वम् = सकलम्, स्वयम्, हरेत् = स्वीकुर्यात् ॥ ३०१ ॥

**हिन्दी**—बेटा माँ के लिए अपने हिस्से का चौथाई धन दे, माँ को जितना हिस्सा मिले उसका आधा हिस्सा बहिन को दे, बहिन के हिस्से का आधा भाग भगिने को दे तथा शेष बचे सारे धन का अधिकारी पुत्र स्वयं हो ॥ ३०१ ॥

**मात्रे इति।** सुतः मात्रे चतुर्थांशं स्वचतुर्थभागैकभागं भगिन्यै मातुः अर्द्धकम् अष्टमभागैकभागमित्यर्थः, तथा भागिनेयाय तदर्द्धं षोडशभागैकभागमित्यर्थः दद्यात्, शेषम् अवशिष्टं सर्वं स्वयं हरेत् गृह्णीयात् ॥ ३०१ ॥

**पुत्रो नप्ता धनं पत्नी हरेत् पुत्री च तत्सुतः।**
**माता पिता च भ्राता च पूर्वालाभाच्च तत्सुतः ॥ ३०२ ॥**

**अन्वयः**—पुत्रो नप्ता पत्नी पुत्री तत्सुतः माता पिता भ्राता च तथा पूर्वेषाम् अलाभात् तत् सुतः धनं हरेत् ॥ ३०२ ॥

**व्याख्या**—पुत्रः = आत्मजः, नप्ता = पौत्रः, पत्नी = भार्या, पुत्री = सुता, तत् = तस्याः, सुतः = पुत्रः, दौहित्रः, माता = जननी, पिता = जनकः, भ्राता = सोदरः, च = पुनः, तथा = तेनैव प्रकारेण, पूर्वेषाम् = उक्तानाम्, अलाभात् = पुत्रादीनामभावात्, तत् = तस्य, सुतः = पुत्रः, सोदरसुतः, धनम् = सम्पदम्, हरेत् = नयेत् ॥ ३०२ ॥

**हिन्दी**—बेटा, पोता, भार्या, बेटी, नाती, माँ, बाप और भाई क्रमशः एक के बाद दूसरा धन का अधिकारी होता है। इन सबों के अभाव में अन्त में भतीजा उत्तराधिकारी होता है ॥ ३०२ ॥

**पुत्र इति**। पुत्रः, नप्ता पौत्रः, पत्नी, पुत्री कन्या, तत्सुतः दौहित्रः, माता, पिता भ्राता च यथाक्रमं, तथा पूर्वेषाम् उक्तानां पुत्रादीनाम् अलाभात् अभावाच्च तत्सुतः भ्रातृसुतः, धनं हरेत् ॥ ३०२ ॥

**सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते।**
**विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि॥ ३०३ ॥**

**अन्वयः**—स्त्रीणां सौदायिकं धनं प्राप्य स्वातन्त्र्यम् इष्यते। स्थावरेष्वपि विक्रये दाने च यथेष्टं स्वातन्त्र्यम् ॥ ३०३ ॥

**व्याख्या**—स्त्रीणां = नारीणाम्, सौदायिकम् = युतकम्, धनम् = द्रव्यम्, प्राप्य = लब्ध्वा, स्वातन्त्र्यम् = स्वाधीनताम्, इष्यते = वाञ्छति। स्थावरेष्वपि = अचलेष्वपि, विक्रये = विपणने, दाने = प्रदाने, च, यथेष्टम् = पर्याप्तम्, स्वातन्त्र्यमस्ति ॥ ३०३ ॥

**हिन्दी**—उपहार में प्राप्त धन को पाकर नारी उसका उपभोग स्वतन्त्ररूप से कर सकती है। स्त्री धन के रूप में प्राप्त अचल सम्पत्ति को भी किसी के हाथ बेच देने में या किसी को दान दे देने में यथेच्छ स्वतंत्र है ॥ ३०३ ॥

**सौदायिकमिति**। स्त्रीणां सौदायिकं धनं प्राप्य स्वातन्त्र्यम् इष्यते, स्थावरेषु अपि सौदायिकेषु इत्यर्थः, विषयेषु विक्रये दाने च यथेष्टं स्वातन्त्र्यमस्तीति शेषः ॥ ३०३ ॥

**ऊढया कन्यया वापि पत्युः पितृगृहाच्च यत्।**
**मातृपित्रादिभिर्दत्तं धनं सौदायिकं स्मृतम्॥ ३०४ ॥**

**अन्वयः**—ऊढया कन्यया वापि पत्युः पितृगृहात् दत्तं यत् धनं तत् सौदायिकं स्मृतम् ॥ ३०४ ॥

**व्याख्या**—ऊढया = विवाहितया, कन्यया = अविवाहितयाऽपि च, पत्युः गृहात् = स्वामिनः सदनात्, पितृगृहाच्च = पितृसकाशाच्च, जननीजनकादिभिः, दत्तम् = उपहृतम्, यत् = धनम्, प्राप्तम्, तद्धनं सौदायिकम्, स्मृतम् = कथितम् ॥ ३०४ ॥

**हिन्दी**—विवाहिता या अविवाहिता कन्या को पति के घर से या पिता के घर से या माता-पिता की ओर से जो धन मिलता है, उसे सौदायिक कहते हैं ॥ ३०४ ॥

**ऊढयेति**। ऊढया परिणीतया कन्यया अनूढया अपि पत्युः सकाशात् पितृगृहाच्च मातृपित्रादिभिः दत्तं यत् धनं प्राप्तमिति शेषः, तत् सौदायिकं स्मृतम् ॥ ३०४ ॥

**पित्रादिधनसम्बन्धहीनं यद्यदुपार्जितम्।**
**येन सः काममश्नीयादविभाज्यं धनं हि तत्॥ ३०५ ॥**

**अन्वयः**—पित्रादिधनसम्बन्धहीनं यत् यत् उपार्जितं तत् तत् सः कामम् अश्नीयात्। हि तत् धनम् अविभाज्यम् ॥ ३०५ ॥

**व्याख्या**—पित्रादिधनसम्बन्धहीनम् = पैत्रिकसम्पत्तिसाहाय्यविहीनम्, यत् यत् = यत् किञ्चित्, उपार्जितम् = धनं सङ्गृहीतम्, तत् तत् = सकलं धनम्, सः = उपार्जकः, कामम् = यथेच्छम्, अश्नीयात् = उपभोगं कुर्यात्, हि = यतः, तत् = धनम्, अविभाज्यम् = भ्रात्राादिभिर्न विभजनीयम् ॥ ३०५ ॥

**हिन्दी**—जो धन पैत्रिक सम्पत्ति की सहायता के बिना उपार्जित किया गया हो, उस धन का उपभोग यथेच्छ रूप से उपार्जक कर सकता है। क्योंकि इसके बटवारे का कोई दूसरा हकदार नहीं होता है ॥ ३०५ ॥

**पित्रादीति**। पित्रादिधनसम्बन्धहीनं पैतृकधनसाहाय्यं विनेत्यर्थः, यत् यत् उपार्जितं तत् तत् सः उपार्जकः कामं यथेष्टम् अश्नीयात् उपभुञ्ज्यात्। हि यतः तत् धनम् अविभाज्यं भ्रात्रादिभिर्न विभजनीयम् ॥ ३०५ ॥

**जलतस्करराजाग्निव्यसने समुपस्थिते।**
**यस्तु स्वशक्त्या संरक्षेत् तस्यांशो दशमः स्मृतः ॥ ३०६ ॥**

**अन्वयः**—यत्तु जलतस्करराजाग्निव्यसने समुपस्थिते स्वशक्त्या संरक्षेत्, तस्य दशमः अंशः स्मृतः ॥ ३०६ ॥

**व्याख्या**—यत्तु = यः कश्चित्, जलतस्करराजाग्निव्यसने—जलम् = जलस्वरूपे, तस्करः = चोररूपे, राजरूपे, व्यसने = विपदि, उपस्थिते सति, स्वशक्त्या = आत्मसामर्थ्येन, संरक्षेत् = परधनस्य सम्यक् रूपेण रक्षां कुर्यात्, तस्य = धनस्य, दशमांशः = दशमो भागः स्मृतः = कथितः ॥ ३०६ ॥

**हिन्दी**—यदि कोई व्यक्ति, पानी, चोर, राजा या अग्नि के संकट से घिरी किसी की सम्पत्ति की रक्षा अपनी समस्त शक्ति लगा कर कर लेता है तो उस धन के दशवें हिस्से का वह हकदार हो जाता है ॥ ३०६ ॥

**जलेति**। यत्तु जलतस्करराजाग्निव्यसने जलरूपे चोररूपे राजरूपे तथा अग्निरूपे व्यसने विपदि समुपस्थिते सति स्वशक्त्या निजसामर्थ्येन संरक्षेत् अपरधनमिति शेषः, तस्य दशमः अंशः स्मृतः, तद्धनात् स दशमभागं लभेतेत्यर्थः ॥ ३०६ ॥

**हेमकारादयो यत्र शिल्पं सम्भूय कुर्वते।**
**कार्य्यानुरूपं निर्वेशं लभेरंस्ते यथार्हतः ॥ ३०७ ॥**

**अन्वयः**—यत्र हेमकारादयः सम्भूय शिल्पं कुर्वते ते यथार्हतः कार्यानुरूपं निर्वेशं लभेरन् ॥ ३०७ ॥

**व्याख्या**—यत्र = यस्मिन् कर्मणि, हेमकारादयः = स्वर्णकारप्रभृतयः, सम्भूय = सम्मिल्य, शिल्पम् = हस्तकर्म, कुर्वते = निष्पाद्यते, ते = सर्वे, यथार्हतः = यथायोग्यम्, कार्यानुरूपम् = कार्यानुसारेण, निर्वेशम् = भृतिः, लभेरन् ॥ ३०७ ॥

**हिन्दी**—जहाँ कई सोनार मिलकर एक साथ कोई हस्तकर्म करे, वहाँ काम के अनुसार उन्हें पारिश्रमिक देना चाहिए ॥ ३०७ ॥

**हेमेति**। यत्र हेमकारादयः स्वर्णकारप्रभृतयः व्यवसायिन इत्यर्थः, सम्भूय मिलित्वा शिल्पं कुर्वते, ते यथार्हतः यथायोग्यं कार्य्यानुरूपं निर्वेशं भृतिं भोगं वा 'निर्वेशो भृतिभोगयोरि'त्यमरः। लभेरन् ॥ ३०७ ॥

**संस्कर्त्ता तत्कलाभिज्ञः शिल्पी प्रोक्तो मनीषिभिः ॥ ३०८ ॥**

**अन्वयः**—संस्कर्त्ता तत् कलाभिज्ञः मनीषिभिः शिल्पी प्रोक्तः ॥ ३०८ ॥

**व्याख्या**—संस्कर्त्ता = परिष्कर्त्ता, तत्कलासु = तत्तत्कलासु, अभिज्ञः = विशेषज्ञः वेत्ता च, मनीषिभिः = विद्वद्भिः, शिल्पी = हस्तकर्मकुशलः, प्रोक्तः = कथितः ॥ ३०८ ॥

**हिन्दी**—किसी कला का विशिष्ट जानकार होते हुए उनकी खामियों का सुधार करने वाले को ज्ञानीजन 'शिल्पी' कहते हैं ॥ ३०८ ॥

**संस्कर्त्तेति**। संस्कर्त्ता संस्कारकः कार्य्यशोधक इत्यर्थः तत्कलासु संस्कारकार्य्यविभागेषु अभिज्ञः जनः मनीषिभिः विद्वद्भिः शिल्पी प्रोक्तः ॥ ३०८ ॥

**हर्म्यं देवगृहं वापि वापिकोपस्कराणि च।**
**सम्भूय कुर्वतां तेषां प्रमुख्यो द्व्यंशमर्हति ॥ ३०९ ॥**

**अन्वयः**—हर्म्यं देवगृहं वा वापिकोपस्कराणि च सम्भूय कुर्वतां तेषां प्रमुख्यः द्व्यंशम् अर्हति ॥ ३०९ ॥

**व्याख्या**—हर्म्यम् = राजभवनम्, देवगृहम् = देवालयम्, वा = अथवा, वापिकाम् = दीर्घिकाम्, उपस्कराणि = गृहोपकरणानि, सङ्कटकानि च, च = पुनः, सम्भूय = मिलित्वा, कुर्वताम् = विदधताम्, तेषाम् = जनानाम्मध्ये, प्रमुख्यः = प्रधानतमः, द्व्यंशम् = भागद्वयम्, अर्हति = प्राप्तुं योग्यो भवति ॥ ३०९ ॥

**हिन्दी**—राजमहल, देवमन्दिर अथवा बावड़ी या घरेलू उपकरणों को मिलकर बनाने वाले कारीगरों के बीच जो प्रमुख कारीगर है वह दूनी मजदूरी पाने का हकदार होता है ॥ ३०९ ॥

**हर्म्यमिति**। हर्म्यं देवगृहं वा वापिकां दीर्घिकाम् उपस्कराणि गृहोपकरणानि च सम्भूय कुर्वतां तेषां व्यवसायिनां मध्ये प्रमुख्यः प्रधानतमः द्व्यंशं द्वौ भागौ अर्हति लभते ॥ ३०९ ॥

**नर्त्तकानामेव धर्मः सद्भिरेष उदाहृतः।**
**तालज्ञो लभतेऽर्थार्द्धं गायनास्तु समांशिनः ॥ ३१० ॥**

**अन्वयः**—नर्त्तकानाम् एव एषः धर्मः सद्भिः उदाहृतः। तालज्ञः अर्थार्द्धं लभते, अन्ये गायनास्तु समांशिनः ॥ ३१० ॥

**व्याख्या**—नर्त्तकानाम् = लयावलम्बानाम्, एव = अपि, एषः = अयमेव, धर्मः = विधिः, सद्भिः = सज्जनैः, उदाहृतः = वर्णितः। तालज्ञः = सङ्गीते कालक्रियामानज्ञः, अर्थार्द्धम्—अर्थस्य = उपार्जितस्य धनस्य, अर्द्धम् = अर्द्धभागम्, लभते = आप्नोति, अन्ये = गायकास्तु, समांशिनः = समभागिनः भवन्ति ॥ ३१० ॥

**हिन्दी**—सज्जनों ने नर्त्तकों के लिए भी यही विधि बतलाई है। इनमें तालविशेषज्ञ अर्जित धन के आधे भाग का हकदार है। शेष आधे में सभी बराबर बटवारा कर ले ॥ ३१० ।।

**नत्र्तकानामिति**। नर्त्तकानाम् एव शब्दोऽप्यर्थः नटानामपीत्यर्थः एषः धर्मः सद्भिः साधुभिः उदाहृतः निरूपितः। यथा तालाः अथार्द्ध धनस्य अर्जितस्य अर्द्ध लभते, अन्ये गायनास्तु संमाशिनः समभागिनः भवन्ति ॥ ३१० ॥

**परराष्ट्राद्धनं यत् स्याच्चौरैः स्वाम्याज्ञया हृतम्।**
**राज्ञे षष्ठांशमुद्धृत्य विभजेरन् समांशकम् ॥ ३११ ॥**

**अन्वयः**—स्वाम्याज्ञया चौरैः परराष्ट्रात् यत् धनं हृतम्, षष्ठांशं राज्ञे उद्धृत्य समांशकं विभजेरन् ॥ ३११ ॥

**व्याख्या**—स्वामिनः = प्रभोः, आज्ञया = आदेशेन, चौरैः = तस्करैः, परराष्ट्रात् = अन्यदेशात्, यत् धनम् = द्रव्यम्, हृतम् = चोरितम्, ते, तस्य = प्राप्तधनस्य, षष्ठांशम् = षष्ठभागम्, राज्ञे = नृपाय, उद्धृत्य = निष्कास्य, अवशिष्टस्य समांशकम् = समरूपेण, विभजेरन् = वण्टनं कुर्युः ॥ ३११ ॥

**हिन्दी**—मालिक के हुक्म से चोर लोग दूसरे राज्य से जो धन चुरा कर लाते हैं, उनका छठा हिस्सा राजा को देकर शेष का आपस में बराबर बटवारा करना चाहिए ॥ ३११ ॥

**परराष्ट्रादिति**। स्वामिनः आज्ञया चौरैः परराष्ट्रात् यत् धनं हृतं, ते तस्य षष्ठांशं राज्ञे स्वामिने उद्धृत्य दत्त्वा समांशकं विभजेरन् ॥ ३११ ॥

**तेषां चेत् प्रसृतानां च ग्रहणं समवाप्नुयात्।**
**तन्मोक्षार्थं च यद्दत्तं वहेयुस्ते समांशतः ॥ ३१२ ॥**

**अन्वयः**—प्रसृतानां तेषां चेत् ग्रहणं समवाप्नुयात् तन्मोक्षार्थं यद्दत्तं ते समांशतः वहेयुः ॥ ३१२ ॥

**व्याख्या**—प्रसृतानाम् = चौरकर्मणि प्रचलितानाम्, तेषाम् = चौराणाम्, मध्ये, चेत् = यदि, कश्चित्, ग्रहणम् = धृतः, समवाप्नुयात् = सम्यक्प्रकारेणावाप्नुयात्, अर्थात् कारागृहे निक्षिप्तो भवेत्, तदा तस्य मोक्षार्थम् = मुक्त्यर्थम्, यद्दत्तम्, तत् = परिजनैः, ते = तस्कराः, तत् = तेषां प्रदत्तं धनम्, समांशतः = समभागेन, वहेयुः = दद्युः ॥ ३१२ ॥

**हिन्दी**—और यदि चोरी करते वे पकड़ लिये जाये तो उसे छुड़वाने के लिए जो धन खर्च हो, उसे समान भाग से बाँटकर अपने-अपने हिस्से में से दे दें ॥ ३१२ ॥

**तेषामिति**। प्रसृतानां चौर्यकर्म्मणि प्रवृत्तानां तेषां मध्ये यदि कश्चित् ग्रहणं समवाप्नुयात् धृतो भवेदित्यर्थः, तदा तस्य मोक्षार्थम् उद्धारार्थं यत् दत्तं तत् परिजनैरिति भावः, ते चौराः तत् दत्तं धनं समांशतः वहेयुः दद्युरित्यर्थः ॥ ३१२ ॥

**प्रयोगं कुर्वते ये तु हेमधान्यरसादिना।**
**समन्यूनाधिकैरंशैर्लाभस्तेषां तथाविधः ॥ ३१३ ॥**

**अन्वयः**—ये तु हेमधान्यरसादिना प्रयोगं समन्यूनाधिकैः अंशैः तेषां तथाविधः लाभः ॥ ३१३ ॥

**व्याख्या**—ये = जनाः, तु, हेमधान्यरसादिना—हेम्ना = सुवर्णेन, धान्येन = अन्नेन, रसादिना = द्रव्येण, प्रयोगम् = मिलित्वा वाणिज्यं प्रकुर्वते, तेषाम् = व्यापारिणाम्, धनानुरूपतः समन्यूनाधिकैः, अंशैः = भागैः, तथाविधः = तेन रूपेण, लाभः = प्राप्तिः, भवतीत्यर्थः ॥ ३१३ ॥

**हिन्दी**—जो लोग मिलकर सोना, अन्न एवं रसादि द्रव्यों का कोई व्यवसाय करते हैं और उनमें जिनका जैसा काम हो या धन लगा हो, उसके अनुरूप बराबर, कम या ज्यादे भाग में लाभांश में से उसे मिलता है ॥ ३१३ ॥

**प्रयोगमिति**। ये तु हेमधान्यरसादिना हेम्ना धान्येन रसादिना द्रव्येण प्रयोगं सम्भूय वाणिज्यमित्यर्थः, कुर्वते, तेषां कार्य्यानुरूपतः अर्थानुरूपतश्च समन्यूनाधिकैः अंशैः तथाविधः लाभः भवतीत्यर्थः ॥ ३१३ ॥

**समो न्यूनोऽधिको ह्यंशो योऽनुक्षिप्तस्तथैव सः।**
**व्ययं दद्यात् कर्म कुर्य्यात् लाभं गृह्णीत चैव हि॥ ३१४॥**

**अन्वयः**—यः समः न्यूनः अधिकः वा अंशः अनुक्षिप्तः सः तथैव व्ययं दद्यात्, कर्म कुर्यात्, लाभं गृह्णीत हि॥ ३१४॥

**व्याख्या**—यः = व्यवसायी, समः = समानः, न्यूनः = हीनः, अधिकः = विशेषः, वा अंशः = भागः, अनुक्षिप्तः = निर्धारितः, पूर्वमिति, सः = भागः, तथैव = तेनैव प्रकारेण, व्ययम् = वित्तविनियोगः, दद्यात् = समर्पयेत्, कर्म = कार्यम्, कुर्यात् = विदध्यात्, तथा = तेनैव रूपेण, लाभम् = प्राप्तिः, गृह्णीत = ग्रहणं कुर्यात्॥ ३१४॥

**हिन्दी**—व्यवसाय के प्रारम्भ में उन लोगों ने बराबर, कम या ज्यादे अंश में जो द्रव्य लगाया हो, उसी के अनुसार उनका हिस्सा होता है। फिर वे उसी के अनुसार खर्च और काम करते हैं तथा लाभ भी पाते हैं॥ ३१४॥

**सम इति**। यः समः तुल्यः, न्यूनः अल्पः अधिको वा अंशः अनुक्षिप्तः निर्द्धारितः पूर्वमिति शेषः, सः भागः तथैव स्यात्। व्ययं यथाभागं दद्यात् कर्म यथाभागं कुर्य्यात् तथा लाभं यथाभागं गृह्णीत हिशब्दः अवधारणार्थः॥ ३१४॥

**वणिजानां कर्षकाणामेष एव विधिः स्मृतः॥ ३१५॥**

**अन्वयः**—वणिजानां कर्षकाणाञ्च एषः एव विधिः स्मृतः॥ ३१५॥

**व्याख्या**—वणिजानाम् = व्यवसायिनाम्, कर्षकाणाञ्च = कृषकानाञ्च, एषः = पूर्वोक्तः, एव = इति निश्चयेन, विधिः = रीतिः, स्मृतः = कथितः॥ ३१५॥

**हिन्दी**—यही विधि बनियों और किसानों के लिए बतलाई गई है॥ ३१५॥

**वणिजानामिति**। वणिजानां कर्षकाणाञ्च एषः एव विधिः स्मृतः कथितः॥ ३१५॥

**सामान्यं याचितं न्यास अधिर्दासश्च तद्धनम्।**
**अन्वाहितं च निक्षेपः सर्वस्वं चान्वये सति।**
**आपत्स्वपि न देयानि नववस्तूनि पण्डितैः॥ ३१६॥**

**अन्वयः**—सामान्यं याचितं न्यासः आधिः दासश्च तद्धनम् अन्वाहितं च निक्षेपः अन्वये सति सर्वस्वम् एतानि नववस्तूनि पण्डितैः आपत्स्वपि न देयानि॥ ३१६॥

**व्याख्या**—सामान्यम् = विभाजनोपरान्तप्राप्तसाधारणधनम्, याचितम् = प्रत्यर्पणात् प्रार्थ्यमानीतं धनम्, न्यासः = स्थापितधनम्, आधिः = बन्धकत्वेन स्थापितं धनम्, दासः = सेवकः, तत् = तस्य धनम्, अन्वाहितम् = अन्यहस्तगतं धनम्, निक्षेपः = अवपातितं धनम्, अन्वये = सन्ताने सति, सर्वस्वम् = सकलं धनम्, एतानि = पूर्वोक्तानि, नववस्तूनि = नवसंख्यकानि वस्तूनि, पण्डितैः = विद्वद्भिः, आपत्स्वपि = घोरसङ्कटेऽपि, न = नहि, देयानि = अन्यहस्ते प्रत्यर्पितानि॥ ३१६॥

**हिन्दी**—बटवारें में प्राप्त साधारण धन, फिर से लौटाने की शर्त पर माँग कर लाया गया धन, धरोहर में रखा गया धन, बन्धक रखा गया धन, दास, दास का धन, दूसरे के हाथ में रखने के लिए दिया हुआ धन, कारीगर के हाथ में ठीक करने के लिए दिया गया धन तथा

सन्तान रहने के बावजूद अपना सर्वस्व धन घोर विपत्ति के आने के बावजूद भी दूसरों के हाथ में नहीं देना चाहिए॥ ३१६॥

**सामान्यमिति**। सामान्यं साधारणं धनं, याचितं प्रत्यर्पयिष्यामीत्युक्त्वा प्रार्थ्य आनीतं, न्यासः गच्छितं धनम् आधिः बन्धकं दासः, तद्धनं दासधनम् अन्वाहितम् अन्यहस्ते अर्पितं धनं निक्षेपः शिल्पिहस्ते संस्कारार्थं निक्षिप्तं द्रव्यं तथा अन्वये सन्ताने सति सर्वस्वं सर्वं धनम् एतानि नववस्तूनि पण्डितैः आपत्सु अपि न देयानि न अन्यहस्ते दानविक्रयादिना अर्पणीयानीत्यर्थः॥ ३१६॥

**अदेयं यश्च गृह्णाति यश्चादेयं प्रयच्छति।**
**तावुभौ चौरवच्छास्यौ दाप्यौ चोत्तमसाहसम्॥ ३१७॥**

**अन्वयः**—यः अदेयं गृह्णाति, यश्च अदेयं प्रयच्छति, तौ उभौ चौरवत् शास्यौ उत्तमसाहसं दाप्यौ च॥ ३१७॥

**व्याख्या**—यः = जनः, अदेयम् = दातुं न योग्यं वस्तु, गृह्णाति = ग्रहणं करोति, यश्च, अदेयम् = दाने प्रतिषिद्धं वस्तु, प्रयच्छति = ददाति, तौ = पूर्वोक्तौ, उभौ = द्वौ, चौरवत् = तस्कर इव, शास्यौ = दण्डनीयौ, उत्तमसाहसम् = एतदाख्यं दण्डम्, दाप्यौ = देयौ चेति॥ ३१७॥

**हिन्दी**—यदि न देने योग्य किसी वस्तु को कोई किसी को देता है या किसी से लेता है तो वे दोनों देने और लेने वाले चोर की तरह जुर्माना करने लायक होते हैं तथा पूर्ववर्णित उत्तमसाहस नामक दण्ड के हकदार होते हैं॥ ३१७॥

**अदेयमिति**। यः अदेयं दाने प्रतिषिद्धं वस्तु गृह्णाति, यश्च अदेयं प्रयच्छति ददाति तौ उभौ चौरवत् शास्यौ उत्तमसाहसं दाप्यौ च॥ ३१७॥

**अस्वामिकेभ्यश्चौरेभ्यो विगृह्णाति धनं तु यः।**
**अव्यक्तमेव क्रीणाति स दण्ड्यश्चौरवन्नृपैः॥ ३१८॥**

**अन्वयः**—यः अस्वामिकेभ्यः चौरेभ्यः धनं विगृह्णाति वा अव्यक्तमेव क्रीणाति, सः नृपैः चौरवत् दण्ड्यो भवति॥ ३१८॥

**व्याख्या**—यः = पुरुषविशेषः, अस्वामिकेभ्यः = अदायिकेभ्यः, चौरेभ्यः = तस्करेभ्यः, धनम् = वित्तम्, विगृह्णाति = विशिष्टरूपेण स्वीकरोति, सः = एवंविधः पुरुषः, चौरवत् = तस्कर इव, दण्ड्यः = दण्डनीयो भवति॥ ३१८॥

**हिन्दी**—लावारिस धन खरीदने वालों, चोरी का माल खरीदने वालों तथा गुप-चुप माल खरीदने वालों को राजा चोर की तरह दण्ड दे॥ ३१८॥

**अस्वामिकेभ्य इति**। यः अस्वामिकेभ्यः चौरेभ्यः धनं विगृह्णाति अव्यक्तं गूढं यथा तथा क्रीणाति च सः नृपैः चौरवत् दण्ड्यः॥ ३१८॥

**ऋत्विक् याज्यमदुष्टं यस्त्यजेदनपकारिणम्।**
**अदुष्टं चर्त्विजं याज्यो विनेयौ तावुभावपि॥ ३१९॥**

**अन्वयः**—यः ऋत्विक् अदुष्टम् अनपकारिणं याज्यं तथा याज्यः अदुष्टम् ऋत्विजं त्यजेत्, तौ उभौ अपि विनेयौ भवतः॥ ३१९॥

**व्याख्या**—यः = पुरुषः, ऋत्विक् = पुरोहितः, अदुष्टम् = दुष्टतारहितम्, अनपकारिणम् = नाहितकारिणम्, याज्यम् = यजमानम्, तथा याज्यः = यजमानश्च, अदुष्टम् = दोषरहितम्,

ऋत्विजम् = पुरोहितम्, त्यजेत् = परित्यागं कुर्यात्, तौ = यजमान-पुरोहितौ, उभौ = द्वौ अपि, विनेयौ = विशिष्टरूपेण दण्डनीयौ स्तः ॥ ३१९ ॥

**हिन्दी**—जो पुरोहित अपने निर्दोष एवं अनपकारी यजमान को तथा जो यजमान अपने निर्दोष एवं अनपकारी पुरोहित को छोड़ देता है, वे दानों ही दण्डनीय होते हैं ॥ ३१९ ॥

**ऋत्विगिति**। यः ऋत्विक् पुरोहितः अदुष्टं निर्दोषम् अनपकारिणं याज्यं यजमानं, तथा याज्यः यजमानश्च अदुष्टम् ऋत्विजं त्यजेत् तौ उभौ अपि विनेयौ दण्ड्यौ भवतः ॥ ३१९ ॥

**द्वात्रिंशांशं षोडशांशं लाभं पण्ये नियोजयेत्।**
**नान्यथा तद्व्ययं ज्ञात्वा प्रदेशाद्यनुरूपतः ॥ ३२० ॥**

**अन्वयः**—वणिक् पण्ये प्रदेशाद्यनुरूपतः तत् व्ययं ज्ञात्वा द्वात्रिंशांशं षोडशांशं वा लाभं नियोजयेत्, अन्यथा नेति ॥ ३२० ॥

**व्याख्या**—व्यवसायी, पण्ये = पणितव्ये वस्तुनि, प्रदेशादीनाम् = स्थानविशेषाणाम्, अनुरूपतः = अनुकूलत्वेन, तत् = तस्य विक्रेयवस्तुनः, व्ययम् = वित्तविनियोगम्, ज्ञात्वा = विज्ञाय, द्वात्रिंशांशम् = द्वात्रिंशद्भागम्, वा = अथवा, लाभम् = प्राप्तिः, नियोजयेत् = व्यवस्थापयेत्, अन्यथा = इतरथा, न = नहि ॥ ३२० ॥

**हिन्दी**—स्थान और समय के अनुसार विक्रेय वस्तु पर लागत व्यय को जानकर व्यवसायी के लाभांश का बत्तीसवाँ या सोलहवाँ भाग राजा को राजस्व के रूप में लेना चाहिए, अन्यथा नहीं। अर्थात् इससे अधिक न ले ॥ ३२० ॥

**द्वात्रिंशांशमिति**। वणिक् पण्ये विक्रये वस्तुनि प्रदेशादीनां देशकालादीनाम् अनुरूपतः तद् व्ययं तस्य पण्यस्य व्ययं ज्ञात्वा द्वात्रिंशांशं षोडशांशं वा लाभं नियोजयेत् व्यवस्थापयेत् अन्यथा न ततोऽधिकं नेत्यर्थः ॥ ३२० ॥

**वृद्धिं हित्वा ह्यर्द्धधनैर्वाणिज्यं कारयेत् सदा ॥ ३२१ ॥**

**अन्वयः**—वृद्धिं हित्वा अर्द्धधनैः सदा वाणिज्यं कारयेत् ॥ ३२१ ॥

**व्याख्या**—वृद्धिम् = लाभः, हित्वा = परित्यज्य, अथवा—लाभः नाङ्गीकरिष्यामीत्युक्त्वा, अर्द्धधनैः = मूलधनस्यार्द्धभागैः, अथवा—अर्द्धानि वाणिज्यप्राप्तानि धनानि दास्यामीति स्वीकार-वचनैः, सदा = सर्वदा, वाणिज्यम् = व्यापारम्, कारयेत् = कर्तुं प्रेरयेत्, वणिज इति ॥ ३२१ ॥

**हिन्दी**—'मैं लाभांश नहीं लूँगा' ऐसा कहकर और 'व्यापार में प्राप्त धन का आधा धन व्यापार के लिए बनिये को दूँगा' ऐसी स्वीकृति देकर व्यापार कराये; अथवा—राजा मुनाफा छोड़कर मूल धन के आधे से व्यापारियों द्वारा व्यापार संचालित कराये ॥ ३२१ ॥

**वृद्धिमिति**। वृद्धिं हित्वा वृद्धिं न ग्रहीष्यामीत्युक्त्वा अर्द्धधनैः अर्द्धानि वाणिज्यलब्धानि धनानि दास्यामीति अङ्गीकारवचनैः सदा वाणिज्यं कारयेत् ॥ ३२१ ॥

**मूलात्तु द्विगुणा वृद्धिर्गृहीता चाधमर्णिकात्।**
**तदोत्तमर्णमूलं तु दापयेन्नाधिकं ततः ॥ ३२२ ॥**

**अन्वयः**—यदा मूलात् द्विगुणा वृद्धिः अधमर्णिकात् गृहीता, तदा उत्तमर्णमूलं दापयेत्, ततः अधिकं न ॥ ३२२ ॥

**व्याख्या**—यदा = यस्मिन्काले, मूलात् = मूलधनात्, द्विगुणा = द्विगुणिता, वृद्धिः = लाभः, अधमर्णिकात् = ऋणिनः, गृहीता = नीता, तदा = तर्हि, उत्तमर्णस्य = महाजनस्य, मूलम् = मूलधनमेव, दापयेत् = दातुं प्रेरयेत् ततोऽधिकं न दापयेत् ॥ ३२२ ॥

**हिन्दी**—यदि महाजन कर्जदार से मूल धन का दूना मुनाफा पा चुका हो तो राजा उसे केवल मूल धन ही दिलाये, उससे अधिक नहीं ॥ ३२२ ॥

**मूलादिति**। यदा मूलात् मूलधनात् द्विगुणा वृद्धिः अधमर्णिकात् गृहीता, तदा उत्तमर्णस्य मूलन्तु मूलमेव दापयेत् राजेति शेषः, न अधिकं दापयेदित्यर्थः ॥ ३२२ ॥

**धनिकाश्चक्रवृद्ध्यादिमिषतस्तु　प्रजाधनम्।**
**संहरन्ति ह्यतस्तेभ्यो राजा संरक्षयेत् प्रजाम् ॥ ३२३ ॥**

**अन्वयः**—धनिकाः चक्रवृद्ध्यादिमिषतः प्रजानां धनं संहरन्ति हि। अतः राजा तेभ्यः प्रजां संरक्षयेत् ॥ ३२३ ॥

**व्याख्या**—धनिकाः = महाजनाः, चक्रवृद्धिः = चक्रवार्द्धुष्यम्, तस्य मिषतः = कपटप्रबन्धात्, प्रजानाम् = जनानाम्, धनम् = द्रव्यम्, संहरन्ति = अपहरन्ति। हि = यतः, राजा, तेभ्यः = धनिकेभ्यः, प्रजाम् = जनान्, संरक्षयेत् = रक्षां कुर्यात् ॥ २२३ ॥

**हिन्दी**—महाजन सूद-दर-सूद के बहाने कर्जदार का धन हर लेते हैं। राजा को ऐसे सूद-खोर महाजन से प्रजा की रक्षा करनी चाहिए ॥ २२३ ॥

**धनिका इति**। धनिकाः धनिनः चक्रवृद्धिः वृद्धेर्वृद्धिः तस्याः मिषतः छलात् प्रजानां धनं संहरन्ति हि, अतः राजा तेभ्यः धनिकेभ्यः प्रजाः संरक्षयेत् स्वार्थे ञयन्तोऽयं रक्षधातुः ॥ २२३ ॥

**यमर्थः सन्न ददाति गृहीतं धनिकाद्धनम्।**
**राजा सन्दापयेत्तस्मात् सामदण्डविकर्षणैः ॥ ३२४ ॥**

**अन्वयः**—यः समर्थः सन् धनिकात् गृहीतं धनं न ददाति, राजा सामदण्डविकर्षणैः तस्मात् सन्दापयेत् ॥ ३२४ ॥

**व्याख्याः**—यः = अधमर्णः, समर्थः = सशक्तः, सन्नपि, धनिकात् = महाजनात्, गृहीतम् = नीतम्, धनम् = द्रव्यम्, न = नहि, ददाति = प्रयच्छति, राजा, सामदण्डविकर्षणैः = सान्त्वनादण्ड-विकर्षणैः, तस्मात् = अधमर्णात्, सन्दापयेत् = प्रदापयेत् ॥ ३२४ ॥

**हिन्दी**—यदि लौटाने में समर्थ होकर भी कोई कर्जदार महाजन का धन न लौटाना चाहे तो राजा उसे समझा-बुझाकर या दण्ड देकर महाजन का धन दिलवा दे ॥ ३२४ ॥

**समर्थ इति**। यः समर्थः शक्तः सन् धनिकात् गृहीतं धनं न ददाति, राजा सामदण्डविकर्षणैः सान्त्ववादैः दण्डप्रयोगैश्च तस्मात् अधर्मणात् सन्दापयेत् ॥ ३२४ ॥

**लिखितं तु यदा यस्य नष्टं तेन प्रबोधितम्।**
**विज्ञाय साक्षिभिः सम्यक् पूर्ववद्दापयेत्तदा ॥ ३२५ ॥**

**अन्वयः**—यदा यस्य लिखितं नष्टं तदा तेन प्रबोधितं साक्षिभिः सम्यक् विज्ञाय पूर्ववत् सदा दापयेत् ॥ ३२५ ॥

**व्याख्या**—यदा = यस्मिन् काले, यस्य = महाजनस्य, लिखितम् = लिखितम् ऋणपत्रम्,

नष्टम् = विनष्टमभवत्, तदा तेन = धनिकेन, प्रबोधितम् = राज्ञे पूर्वनिवेदितम्, साक्षिभिः = प्रेक्षकैः, सम्यक् = सुष्ठुतया, विज्ञाय = ज्ञात्वा, पूर्ववत् = अनष्टलेख्येव, सदा = सर्वदा, धनिकाय, दापयेत् = दातुमादिशेत् ॥ ३२५ ॥

**हिन्दी**—यदि महाजन के पास से किसी कारणवश दस्तावेज (ऋणपत्र) नष्ट हो जाय और वह इसकी सूचना राजा को दे तो इसे ठीक से समझ कर गवाही द्वारा प्रमाणित हो जाने पर पहले की तरह जैसे उसका दस्तावेज मौजूद हो मानकर कर्जदार से महाजन को राजा रुपये दिलवा दे ॥ ३२५ ॥

**लिखितमिति**। यदा यस्य लिखितं ऋणलेख्यं नष्टं तदा तेन धनस्वामिना प्रबोधितं विज्ञापितं राज्ञे इति शेषः, साक्षिभिः सम्यक् विज्ञाय प्रमाणीकृत्य पूर्ववत् अनष्टलेख्यवत् सदा दापयेत् धनिकाय राजेति पदद्वयमध्याहार्य्यम् ॥ ३२५ ॥

**अदत्तं यश्च गृह्णाति सुदत्तं पुनरिच्छति।**
**दण्डनीयावुभावेतौ धर्मज्ञेन महीक्षिता ॥ ३२६ ॥**

**अन्वयः**—यश्च अदत्तं गृह्णाति सुदत्तं पुनः इच्छति, एतौ उभौ धर्मज्ञेन महीक्षिता दण्डनीयौ ॥ ३२६ ॥

**व्याख्या**—यश्च = पुरुषः, अदत्तम् = विनाप्रदत्तम्, गृह्णाति = नयति, च = पुनः, यः पुरुषः, सुदत्तम् = सम्यग्रूपेण प्रदत्तं धनम्, पुनः = भूयः, तस्मात्, ग्रहीतुम्, इच्छति = अभिलषति, तौ = पुरुषौ, उभौ = द्वौ प्रकारकौ, धर्मज्ञेन = धर्मवेत्रा, महीक्षिता = राज्ञा, दण्डनीयौ = दमनीयाविति ॥ ३२६ ॥

**हिन्दी**—जो बिना दिये ही किसी की वस्तु लेता है तथा जो किसी को दी गई वस्तु पुनः पाने की इच्छा करता है तो ये दोनों व्यक्ति धर्मवेत्ता से दण्डनीय होते हैं ॥ ३२६ ॥

**अदत्तमिति**। यश्च अदत्तं गृह्णाति यश्च सुदत्तं धनं पुनः ग्रहीतुम् इच्छति, एतौ उभौ धर्मज्ञेन महीक्षिता राज्ञा दण्डनीयौ ॥ ३२६ ॥

**कूटपण्यस्य विक्रेता स दण्ड्यश्चौरवत् सदा ॥ ३२७ ॥**

**अन्वयः**—यः कूटपण्यस्य विक्रेता सः सदा चौरवत् दण्ड्यः ॥ ३२७ ॥

**व्याख्या**—यः = वणिक्, कूटपण्यस्य—कूटेन = छलेन, पण्यस्य = विक्रेयवस्तुनः, विक्रेता = विक्रयिकः, सः = वणिक्, सदा = सर्वदा, चौरवत् = तस्कर इव, नृपेण, दण्ड्यः = दण्डं दातुं योग्यः ॥ ३२७ ॥

**हिन्दी**—जो किसी वस्तु को किसी के हाथ धोखा देकर बेचता है, वह सदा राजा के द्वारा चोर की तरह दण्डनीय होता है ॥ ३२७ ॥

**कूटेति**। यः कूटपण्यस्य कपटविक्रेयस्य विक्रेता, सः सदा चौरवत् दण्ड्यः ॥ ३२७ ॥

**दृष्ट्वा कार्य्याणि च गुणान् शिल्पिनां भृतिमावहेत् ॥ ३२८ ॥**

**अन्वयः**—शिल्पिनां कार्याणि गुणांश्च दृष्ट्वा भृतिम् आवहेत् ॥ ३२८ ॥

**व्याख्या**—शिल्पिनाम् = हस्तकर्मविशेषज्ञानाम्, कार्याणि = कृत्यानि, गुणांश्च = धर्मांश्च, दृष्ट्वा = अवलोक्य, भृतिम् = वेतनम्, आवहेत् = दद्यात् ॥ ३२८ ॥

**हिन्दी**—कारीगरों के काम और उनके गुणों को देखकर ही उसकी मजदूरी तय करे ॥ ३२८ ॥

**दृष्ट्वेति।** शिल्पिनां कार्य्याणि गुणांश्च दृष्ट्वा भृतिं वेतनम् आवहेत् दद्यात् ॥ ३२८ ॥

**पञ्चमांशं चतुर्थांशं तृतीयांशं तु कर्षयेत्।**
**अर्द्धं वा राजताद्राजा नाधिकं तु दिने दिने ॥ ३२९ ॥**

**अन्वयः**—राजा दिने दिने राजतात् पञ्चमांशं चतुर्थांशं तृतीयांशं वा अर्द्धं कर्षयेत्, न तु अधिकम् ॥ ३२९ ॥

**व्याख्या**—राजा = भूपतिः, दिने दिने = प्रतिदिनम्, राजतात् = रौप्यविक्रयात्, पञ्चमांशम् = पञ्चमो भागः, चतुर्थांशम् = चतुर्थो भागः, तृतीयांशम् = तृतीयो भागः, वा = अथवा, अर्द्धम् = अर्द्धांशम्, कर्षयेत् = ग्रहणं कुर्यात्, न तु अधिकम् = अतोऽधिकं न गृह्णीयात् ॥ ३२९ ॥

**हिन्दी**—राजा प्रतिदिन चाँदी की बिक्री में से लाभ का पाँचवाँ, चौथा या तीसरा भाग अथवा आधा भाग राजस्व के रूप में ले और इससे अधिक न ले ॥ ३२९ ॥

**पञ्चामांशमिति।** राजा दिने दिने प्रतिदिनं राजतात् रौप्यविक्रयात् पञ्चमांशं चतुर्थांशं तृतीयांशं वा अर्द्धं कर्षयेत् गृह्णीयात् न अधिकम् अर्द्धादप्यधिकं न गृह्णीयादित्यर्थः ॥ ३२९ ॥

**विद्रुतं न तु हीनं स्यात् स्वर्णं पलशतं शुचिः।**
**चतुःशतांशं रजतं ताम्रं न्यूनं शतांशकम् ॥ ३३० ॥**

**अन्वयः**—पलशतं शुचिः स्वर्णं विद्रुतं हीनं न तु स्यात्। रजतं चतुःशतांशकं तथा ताम्रं शतांशकं न्यूनं न स्यात् ॥ ३३० ॥

**व्याख्या**—पलशतम् = शतसंख्यकपलपरिमितम्, शुचिः = परिष्कृतम्, स्वर्णम् = कनकम्, विद्रुतम् = विगलितम्, सत्, हीनम् = भारेऽल्पम्, न तु = नैव, स्यात् = भवेत्। रजतम् = रौप्यम्, चतुःशतांशम् = चतुःशतभागः, तथा ताम्रम् = मुनिपित्तलम्, शतांशकम् = शतभागपरिमितम्, न्यूनम् = हीनम्, स्यात् = भवेत् ॥ ३३० ॥

**हिन्दी**—सौ पल अर्थात् चार सौ भर शुद्ध सोना गलाने पर वजन में कम नहीं होना चाहिए। सौ पल शुद्ध चाँदी गलाने पर उसका चारसौवाँ भाग तथा तथा ताँबे पर सौवाँ भाग कम होना चाहिए ॥ ३३० ॥

**विद्रुतमिति।** पलशतं शतपलमितं शुचिः निर्दोषं स्वर्णं विद्रुतं विगलितं सत् हीनं तौल्ये अल्पं न तु नैव स्यात्। रजतं चतुःशतांशं, तथा ताम्रं शतांशकं न्यूनं स्यात् ॥ ३३० ॥

**वङ्गं च जसदं सीसं हीनं स्यात् षोडशांशकम्।**
**अयोऽष्टांशं त्वन्यथा तु दण्ड्यः शिल्पी सदा नृपैः ॥ ३३१ ॥**

**अन्वयः**—वङ्गं जसदं तथा सीसं षोडशांशकं हीनं स्यात्, अयः अष्टांशम्। अन्यथा शिल्पी सदा नृपैः दण्डनीयः ॥ ३३१ ॥

**व्याख्या**—वङ्गम् = त्रपुः, जसदम् = सुवर्णारिः, तथा सीसम् = महाबलम्, षोडशांशकम् = षोडशभागपर्यन्तम्, हीनम् = तौल्येऽल्पम्, स्यात् = भवेत्, अयः = लोहम्, अष्टांशम् =

अष्टभागपरिमितम्, हीनं भवेत्। अन्यथा = एतत्परिमिताधिक्यहानौ, शिल्पी = हस्तकर्मकारः, सदा = सर्वदा, नृपैः = भूभृद्भिः, दण्ड्यः = दण्डनीयो भवति ॥ ३३१ ॥

**हिन्दी**—राँगा, जस्ता और सीसा गलाने पर सोलहवाँ हिस्सा कम हो जाता है और लोहा गलाने पर आठवाँ हिस्सा कम होता है। इससे कम तौल होने पर राजा कारीगर को दण्ड दे ॥ ३३१ ॥

**वङ्गमिति**। वङ्गं रङ्गमित्यर्थः, जसदं धातुविशेषः तदा सीसं षोडशांशकं हीनं स्यात्। अयः लौहस्तु अष्टांशं हीनं स्यादित्यर्थः, अन्यथा तु उक्ताधिक्यहानौ इत्यर्थः, नृपैः, शिल्पी तत्तद्धातुशिल्पकरः सदा दण्ड्यः ॥ ३३१ ॥

**सुवर्णं द्विशतांशं तु रजतं च शतांशकम्।**
**हीनं सुघटिते कार्य्ये सुसंयोगे तु वर्द्धते ॥ ३३२ ॥**

**अन्वयः**—सुघटिते कार्ये सुवर्णं द्विशतांशं च रजतं शतांशकं हीनं सुसंयोगे तु वर्द्धते ॥ ३३२ ॥

**व्याख्या**—सुघटिते = सुरचिते, कार्ये = निर्माणे, सुवर्णम् = कनकम्, द्विशतांशम् = शतद्वयभागपरिमितम्, च = पुनः, रजतम् = रौप्यम्, शतांशकम् = शतभागमितम्, हीनम् = अल्पम्, भवति, सुसंयोगे = सुष्ठुतयाऽन्यद्रव्यसम्मेलने, तु, वर्द्धते = एधते ॥ ३३२ ॥

**हिन्दी**—सुन्दर आभूषण तैयार करने के क्रम में छीलने के कारण सोने का दोसौवाँ भाग तथा चाँदी का सौवाँ भाग छीलता है अर्थात् तौल में घटता है और सुन्दर ढंग से आभूषण तैयार करने में टाँके लगाने के कारण सोलहवाँ भाग तौल में बढ़ जाता है ॥ ३३२ ॥

**सुवर्णमिति**। सुघटितकार्य्ये सुवर्णं द्विशतांशं, रजतं शतांशकं हीनं भवति, सुसंयोगे तु शोभनद्रव्यसंयोगे तु वर्द्धते वृद्धिं गच्छति ॥ ३३२ ॥

**षोडशांशं त्वन्यथा हि दण्ड्यः स्यात् स्वर्णकारकः।**
**संयोगघटनं दृष्ट्वा वृद्धिं ह्रासं प्रकल्पयेत् ॥ ३३३ ॥**

**अन्वयः**—अन्यथा तु स्वर्णकारकः षोडशांशं दण्ड्यः स्यात्। संयोगघटनं दृष्ट्वा वृद्धिं ह्रासं प्रकल्पयेत् ॥ ३३३ ॥

**व्याख्या**—अन्यथा = इतरथा, तु, स्वर्णकारकः = सुवर्णशिल्पी, षोडशांशम् = षोडशभागमितम्, दण्ड्यः = दण्डनीयः, स्यात् = भवेत्, संयोगघटनम् = सुसंयोगं कुसंयोगं वा, दृष्ट्वा = अवलोक्य, वृद्धिम् = तौल्ये वर्द्धनम्, ह्रासम् = हीनम्, वा, प्रकल्पयेत् = कल्पनां कुर्यात् ॥ ३३३ ॥

**हिन्दी**—और जिस तरह टाँका आदि देने में मिलावट की जाती है उसी तरह विचारक सोने की बढ़ोतरी या कमी की कल्पना करे। इससे भिन्न स्थिति में सोनार को दण्ड देना चाहिए ॥ ३३३ ॥

**षोडशांशमिति**। अन्यथा उक्ताधिक्यहानौ इत्यर्थः, स्वर्णकारकः षोडशांशं दण्ड्यः स्यात्। किञ्च संयोगघटनं सुसंयोगं कुसंयोगं वा दृष्ट्वा वृद्धिं ह्रासं वा प्रकल्पयेत् यदि सुसंयोगो भवेत् तदा वृद्धिः सुसंयोगे तु ह्रास एवेत्यर्थः ॥ ३३३ ॥

**स्वर्णस्योत्तमकार्य्ये तु भृतिस्त्रिंशांशकी मता।**
**षष्ट्यंशकी मध्यकार्य्ये हीनकार्य्ये तदर्द्धकी।**
**तदर्द्धा कटके ज्ञेया विद्रुते तु तदर्द्धकी ॥ ३३४ ॥**

**अन्वयः**—स्वर्णस्योत्तमकार्ये त्रिंशांशकी, मध्यकार्ये षष्ट्यंशकी तथा हीनकार्ये तदर्द्धकी भृतिः मता। कटके तदर्द्धा तथा विद्रुते कार्ये तदर्द्धकी भृतिः ज्ञेया ॥ ३३४ ॥

**व्याख्या**—स्वर्णस्य = चामीकरस्य, उत्तमः = उत्कृष्टः, कार्ये = निर्माणे, त्रिंशांशकी = त्रिंशद्भागस्यैकभागः, मध्यकार्ये = सामान्यनिर्माणे, षष्ट्यंशकी = षष्टिभागस्यैकभागः, हीनकार्ये = निकृष्टनिर्माणे, तदर्द्धकी = विंशत्यधिकशततमभागस्यैकभागः, भृतिः = पारिश्रमिकः, मता = कथिता। कटके = वलयनिर्माणे, तदर्द्धा = चत्वारिंशदधिकशतद्वयैकभागस्यैकभागः, तथा विद्रुते = मात्रगलितकार्ये, तदर्द्धकी = अशीत्यधिकचतुःशततमभागस्यैकभागः, भृतिः = वेतनम्, ज्ञेया = बोध्या ॥ ३३४ ॥

**हिन्दी**—उत्तम कोटि के स्वर्णालङ्कार-निर्माण की मजदूरी उस अलंकार के मूल्य के तीसवें भाग के बराबर होती है। मध्यम दर्जे के आभूषण की मजदूरी साठवाँ भाग, निकृष्ट कोटि के आभूषण की मजदूरी उसके एक सौ बीसवाँ भाग, केवल बल्ले की मजदूरी दो सौ चालीसवाँ भाग और केवल सौ सोना गलाने की मजदूरी अस्सीवाँ भाग होनी चाहिए ॥ ३३४ । ।

**स्वर्णस्येति**। स्वर्णस्य उत्तमकार्य्ये उत्कृष्टनिर्माणे त्रिंशांशकी त्रिंशभागैकभाग इत्यर्थः, मध्यकार्य्ये षष्ट्यंशकी षष्टिभागैकभाग इत्यर्थः, तथा हीनकार्य्ये अपकृष्टकर्मणि तदर्द्धकी विंशत्यधिकशततमभागैकभाग इत्यर्थः, भृतिः वेतनं मता। कटके वलये कार्य्ये इत्यर्थः, तदर्द्धा चत्वारिंशदधिकशतद्वयभागैकभाग इत्यर्थः, तदा विद्रुते गलितमात्रे कार्य्ये तदर्द्धकी अशीत्यधिकचतुःशततमभागैकभाग इत्यर्थः, भृतिः ज्ञेया ॥ ३३४ ॥

**उत्तमे राजते त्वर्द्धा तदर्द्धा मध्यमे स्मृता।**
**हीने तदर्द्धा कटके तदर्द्धा सम्प्रकीर्त्तिता ॥ ३३५ ॥**

**अन्वयः**—उत्तमे राजते त्वर्द्धा, मध्यमे तदर्द्धा स्मृता। हीने तदर्द्धा, कटके तदर्द्धा सप्रकीर्त्तिता ॥ ३३५ ॥

**व्याख्या**—उत्तमे = उत्कृष्टे, राजते = रौप्ये, कार्ये, अर्द्धा = अर्द्धभागमिता, भृतिः, मध्यमे = मध्यमराजताभूषणनिर्माणे, तदर्द्धा = चतुर्थभागः, भृतिः, स्मृता = ज्ञेया। हीने = निकृष्ट-निर्माणे, राजते = रौप्ये, तदर्द्धा = अष्टमभागः, वेतनं स्मृतम्, तथा कटके = वलये, तदर्द्धा = षोडशभागः, भृतिः = वेतनम्, प्रकीर्त्तिता = कथिता ॥ ३३५ ॥

**हिन्दी**—अच्छे ढंग के चाँदी के जेवर की मजदूरी जेवर के वजन का आधा भाग, मध्यम दर्जे के बने जेवर की मजदूरी चौथा भाग, हीन दर्जे के जेवर की मजदूरी आठवाँ भाग और केवल चाँदी के कड़े की मजदूरी सोलहवाँ भाग होती है ॥ ३३५ ॥

**उत्तमे इति**। उत्तमे राजते कार्य्ये अर्द्धा, मध्यमे राजते तदर्द्धा चतुर्थभाग इत्यर्थः, भृतिः स्मृता। हीने अपकृष्टे राजते तदर्द्धा अष्टमभाग इत्यर्थः, तथा कटके तदर्द्धा षोडशभाग इत्यर्थः, भृतिः सम्प्रकीर्त्तिता ॥ ३३५ ॥

**पादमात्रा भृतिस्ताम्रे वङ्गे च जसदे तथा।**
**लोहेऽर्द्धा वा समा वापि द्विगुणाष्टगुणाथवा ॥ ३३६ ॥**

**अन्वयः**—ताम्रे वङ्गे तथा जसदे च कार्ये पादमात्रा लोहे अर्द्धा वा समा वा द्विगुणा अथवा अष्टगुणा ॥ ३३६ ॥

**व्याख्या**—ताम्रे = मुनिपित्तले, वङ्गे = कस्तीरे, जसदे = यशदे, च = पुनः, कार्ये = वस्तु-निर्माणे, पादमात्रा = चतुर्थांशमेव, लोहे = अयस्के, अर्द्धा = अर्द्धभागः, वा = अथवा, समा = तुल्या, वा द्विगुणा = द्विगुणिता, अथवा अष्टगुणा = वसुगुणिता, भृतिः = वेतनम्, विज्ञेया ॥ ३३६ ॥

**हिन्दी**—ताँबा, राँगा अथवा जस्ता की बनी वस्तुओं की मजदूरी चौथे भाग के बराबर होती है। लोहे की बनी वस्तुओं की मजदूरी आधी, बराबर, दुगुनी अथवा आठगुनी होती है ॥ ३३६ ॥

**पादमात्रेति**। ताम्रे वङ्गे जसदे च कार्य्ये पादमात्रा चतुर्थभागः, लोहे अर्द्धा वा समा वा द्विगुणा अथवा अष्टगुणा भृतिः ज्ञेयेति शेषः, विकल्पश्च कार्य्यगौरवलाघवापेक्षो बोद्धव्यः ॥ ३३६ ॥

**धातूनां कूटकारी तु द्विगुणो दण्डमर्हति ॥ ३३७ ॥**

**अन्वयः**—धातूनां कूटकारी द्विगुणं दण्डम् अर्हति ॥ ३३७ ॥

**व्याख्या**—धातूनाम् = खनिजभेदानाम्, सुवर्णादीनां, कूटकारी = जालकरः, द्विगुणः = द्विगुणितम्, दण्डम् = दमनम्, अर्हति = समर्थो भवति ॥ ३३७ ॥

**हिन्दी**—धातुओं में यदि कोई मिलावट या जालसाजी करे तो मूल धन का दूना उसे जुर्माना होना चाहिए ॥ ३३७ ॥

**धातूनामिति**। धातूनां स्वर्णादीनां कूटकारी जालकरः द्विगुणं दण्डम् अर्हति लभते ॥ ३३७ ॥

**लोकप्रचारैरुत्पन्नो मुनिभिर्विधृतः पुरा।**
**व्यवहारोऽनन्तपथः स वक्तुं नैव शक्यते ॥ ३३८ ॥**

**अन्वयः**–लोकप्रचारैः उत्पन्नः पुरा मुनिभिः विधृतः व्यवहारः अनन्तपथः। सः वक्तुं नैव शक्यते ॥ ३३८ ॥

**व्याख्या**—लोकानाम् = जनानाम्, प्रचारैः = प्रचलनैः, उत्पन्नः = सञ्जातः, पुरा = प्राचीन-समये, मुनिभिः = ऋषिभिः, विधृतः = विशेषेण निरूपितः, व्यवहारः = आचारः, अनन्तपथः = अन्तहीनमार्गः। सः = एवंविधव्यवहारः, वक्तुम् = साकल्येन व्याख्यातुम्, नैव = नास्त्येव, शक्यते = शक्यो भवति ॥ ३३८ ॥

**हिन्दी**—लोगों के अनेक तरह के आचरणों से उत्पन्न तथा प्राचीन काल में मुनियों द्वारा निरूपित व्यवहार के रास्ते अन्तहीन हैं। अतः उनका यथावत् निरूपण करना सम्भव नहीं है ॥ ३३८ ॥

**लोकेति**। लोकानां प्रचारैः गतिभिः उत्पन्नः जातः पुरा पूर्वस्मिन् काले मुनिभिः विधृतः निरूपितः व्यवहारः अनन्तपथः अशेष इत्यर्थः। सः व्यवहारः वक्तुं साकल्येनेति भावः, नैव शक्यते ॥ ३३८ ॥

**उक्तं राष्ट्रप्रकरणं समासात् पञ्चमं तथा।**
**अत्रानुक्ता गुणा दोषास्ते ज्ञेया लोकशास्त्रतः ॥ ३३९ ॥**

**इति शुक्रनीतौ चतुर्थाऽध्यायस्य राष्ट्रेऽन्त्यं राजधर्मनिरूपणं नाम पञ्चमं प्रकरणम्।**

**अन्वयः**—पञ्चमं राष्ट्रप्रकरणं समासात् उक्तम् । अत्र गुणाः दोषाश्च अनुक्ताः, ते लोकशास्त्रतः ज्ञेयाः ॥ ३३९ ॥

**व्याख्या**—पञ्चमम् = पञ्चमाख्यम्, राष्ट्रप्रकरणम् = एतदाख्योऽध्यायः, समासात् = सङ्क्षेपेण, उक्तम् = कथितम् । अत्र = अस्मिन् ग्रन्थे, गुणाः = उत्कृष्टगुणाः, दोषाः = दुर्गुणाः, च, अनुक्ताः = अकथिताः, ते = व्यवहाराणि, लोकशास्त्रतः—लोकतः = लोकव्यवहारात्, शास्त्रतः = शास्त्रव्यवहारात्, ज्ञेयाः = बोध्याः ॥ ३३९ ॥

**हिन्दी**—इस तरह संक्षेप में पञ्चराष्ट्र-प्रकरण का मैंने निरूपण किया । इसमें इनके जो गुण या दोष नहीं कहे जा सके उन्हें लोक तथा शास्त्रों के व्यवहार से जान लेना चाहिए ॥ ३३९ ॥

**इस प्रकार शुक्रनीति में चतुर्थ अध्याय में 'राजधर्मनिरूपण' नामक पञ्चम प्रकरण की 'विमला' संस्कृत-हिन्दी व्याख्या समाप्त हुई ।**

---

**उक्तमिति** । पञ्चमं राष्ट्रप्रकरणं समासात् सङ्क्षेपेण उक्तम् । अत्र प्रकरणे गुणा दोषाश्च अनुक्ताः अकथिताः ते गुणदोषाः लोकशास्त्रतः लोकतः शास्त्रतश्च ज्ञेयाः ॥ ३३९ ॥

**इति श्रीजीवानन्दविद्यासागरविरचिता चतुर्थाध्यायस्य पञ्चमप्रकरणव्याख्या समाप्ता ।**

---

# चतुर्थाध्यायस्य षष्ठं प्रकरणम्

**षष्ठं दुर्गप्रकरणं प्रवक्ष्यामि समासतः।**
**खातकण्टकपाषाणैर्दुष्पथं दुर्गमैरिणम्॥ १॥**

**अन्वयः**—षष्ठं दुर्गप्रकरणं समासतः प्रवक्ष्यामि। खातकण्टकपाषाणैः दुष्पथं दुर्गमम् ऐरिणम्॥ १॥

**व्याख्या**—षष्ठम् = षष्ठसंज्ञकम्, दुर्गप्रकरणम् = दुर्गाख्योऽध्यायः, समासतः = सङ्क्षेपेण, प्रवक्ष्यामि = कथयामि, खातकण्टकपाषाणैः—खातेन = परिखया, कण्टकेन = विघ्नकरेण, पाषाणेन = प्रस्तरखण्डेन, दुष्पथम् = दुर्गमम्, दुर्गम् = कोटः, ऐरिणम् = एतदाख्यं प्रकरणम्, कथितमिति शेषः॥ १॥

**हिन्दी**—अब छठे दुर्ग-प्रकरण को संक्षेप में बतलाता हूँ। खाई, काँटे तथा पत्थरों से घिरे दुर्गम पथ वाले दुर्ग को 'ऐरिण' कहते हैं॥ १॥

**षष्ठमिति।** षष्ठं दुर्गप्रकरणं समासतः सङ्क्षेपेण प्रवक्ष्यामि। खातकण्टकपाषाणैः खातेन कण्टकेन पाषाणेन च दुष्पथं दुर्गममित्यर्थः, दुर्गम् ऐरिणं स्मृतमिति शेषः॥ १॥

**परितस्तु महाखातं पारिखं दुर्गमेव तत्।**
**इष्टकोपलमृद्भिर्भित्तिप्राकारं पारिघं स्मृतम्॥ २॥**

**अन्वयः**—परितः महाखातं तत् दुर्गं पारिखं एव। तथा इष्टकोपलमृद्भिर्भित्तिप्राकारं दुर्गं पारिघं स्मृतम्॥ २॥

**व्याख्या**—परितः = सर्वतः, महाखातम् = दीर्घपरिखा, यस्य तादृशम्, तत् = पूर्वोक्तम्, दुर्गमेव = कोट एव, पारिखम् = परिखयाऽऽवृतमेव, तथा, इष्टकैः = इष्टिकाभिः, उपलैः = पाषाणैः, वा = अथवा, मृद्भिः = मृत्तिकाभिः, दुर्गम् = कोटिः, पारिघम् = एतदाख्यं कोटम्, स्मृतम् = कथितम्॥ २॥

**हिन्दी**—और जिस के चारों ओर बड़ी खाई हो, उसे पारिख दुर्ग कहते हैं। जिसके चारों ओर ईंट, पत्थर और मिट्टी की दिवालों का परकोटा बना हो, उसे पारिघ दुर्ग कहा जाता है॥२॥

**परित इति।** परितः सर्वतः चतुर्दिक्षु इत्यर्थः, महाखातं महत्खातं यस्य तादृशं तत् दुर्गं परिखमेव तथा इष्टकैः उपलैः पाषाणैः मृद्भिर्वा भित्तिप्राकारो यस्य तादृशं दुर्गं पारिघं स्मृतम्॥ २॥

**महाकण्टकवृक्षौघैर्व्याप्तं तद्वनदुर्गमम्।**
**जलाभावस्तु परितो धन्वदुर्गं प्रकीर्त्तितम्॥ ३॥**

**अन्वयः**—महाकण्टकवृक्षौघैः व्याप्तं तत् वनदुर्गं, पारितः जलाभावस्तु धन्वदुर्गं प्रकीर्त्तितम् ॥३ ॥

**व्याख्या**—महाकण्टकवृक्षौघैः = सघनशल्यतरुसमूहैः, व्याप्तम् = वेष्टितम्, तत् = दुर्गम्, वनदुर्गम् = एतदाख्यदुर्गम्, ख्यातम् ।तथा परितः = चतुर्दिक्षु, जलाभावः—यस्य जलस्य = सलिलस्य,अभावः = अविद्यमानता,तत्,धन्वदुर्गम् = एताद्याख्यःकोटः,प्रकीर्तिम् = कथितम् ॥३ ॥

**हिन्दी**—जो किला बड़े-बड़े कटीले पेड़ों के समूह से चारों ओर घिरा हो, उन्हें वनदुर्गम या वनदुर्ग कहते हैं तथा जिस किले के दूर-दूर तक पानी का बिलकुल अभाव हो अर्थात् मरुभूमि से घिरा हो, उसे धन्वदुर्ग कहा जाता है ॥ ३ ॥

**महेति**। महाकण्टकवृक्षसमूहैः व्याप्तं वेष्टितं तत् दुर्गं वनदुर्गमं वनदुर्गमित्यर्थः। परितः समन्तात् यस्य जलाभावः, तत् धन्वदुर्गं प्रकीर्त्तितम् ॥ ३ ॥

जलदुर्गं स्मृतं तज्ज्ञैरासमन्तान्महाजलम् ।
सुवारिपृष्ठोच्चघरं विविक्ते गिरिदुर्गमम् ॥ ४ ॥

**अन्वयः**—आसमन्तात् महाजलं दुर्गं तज्ज्ञैः जलदुर्गं स्मृतम् । तथा विविक्ते सुवारिपृष्ठोच्चघरं गिरिदुर्गमम् ॥ ४ ॥

**व्याख्या**—आसमन्तात् = चतुर्दिक्षु, महाजलम् = गम्भीरजलपूर्णखातैरावेष्टितम्, तज्ज्ञैः = दुर्गाभिज्ञैः, जलदुर्गम् = एतदाख्यकोटः, स्मृतम् = कथितम् । तथा विविक्ते = निर्जनस्थाने, सुवारीणि = सुष्ठुजलाशययुक्तम्, पृष्ठे = पर्वतोपरि, यस्य तथाभूतम्, उच्चघरम् = उन्नतगृहम्, यस्मिन् तथोक्तं दुर्गम्, गिरिदुर्गमम् = गिरिदुर्गम्, प्रकीर्त्तितमिति शेषः ॥ ४ ॥

**हिन्दी**—जिस किले के चारों ओर बहुत दूर-दूर तक फैली जलराशि हो, उसे जलदुर्ग कहते हैं तथा जो एकान्त में किसी पहाड़ी पर बना हो एवं पानी का पूरा प्रबन्ध हो, उसे गिरिदुर्ग कहते हैं ॥ ४ ॥

**जलेति**। आसमन्तात् महाजलं चतुर्दिक्षु महाजलाशयवेष्टितं दुर्गं तज्ज्ञैः दुर्गाभिज्ञैः जलदुर्गं स्मृतम् । तथा विविक्ते विजने सुवारीणि पृष्ठे यस्य तथाभूतम् उच्चघरम् उन्नतगृहं यस्मिन् तथोक्तं दुर्गं गिरिदुर्गमं गिरिदुर्गम् ॥ ४ ॥

अभेद्यं व्यूहविद्वीरव्याप्तं तत् सैन्यदुर्गमम् ।
सहायदुर्गं तज्ज्ञेयं शूरानुकूलबान्धवम् ॥ ५ ॥

**अन्वयः**—अभेद्यं व्यूहविद्वीरव्याप्तं तत् सैन्यदुर्गम् । शूरानुकूलबान्धवं तत् सहायदुर्गं ज्ञेयम् ॥ ५ ॥

**व्याख्या**—अभेद्यम् = अरिभिरखण्डनीयम्, व्यूहविद्भिः = बलविन्यासविशेषज्ञैः, वीरैः, व्याप्तम् = पूरितम्, तत् = दुर्गम्, सैन्यदुर्गम् = सैन्यदुर्गमिति कथितम् । तथा शूराः = वीरपुरुषाः, अनुकूलाः = हितकराः, बान्धवाः = परिजनाः, यस्मिन् तथोक्तम्, तत् = दुर्गम्, सहायदुर्गम् = एतदाख्यम्, स्मृतम् = कथितम् ॥ ५ ॥

**हिन्दी**—व्यूहरचना में कुशल वीरों से भरे अभेद्य किले को सैन्यदुर्ग कहते हैं तथा जिसमें वीर एवं सदैव अनुकूल रहने वाले परिजन रहते हो, उसे सहायदुर्ग कहा जाता है ॥ ५ ॥

**अभेद्यमिति**। अभेद्यं शत्रुभिः दुर्भेद्यं व्यूहविद्भिः बलविन्यासविज्ञैः वीरैः व्याप्तं तत् दुर्गं सैन्यदुर्गमं सैन्यदुर्गम्। तथा शूराः बलवन्तः अनुकूलाः बान्धवा यस्मिन् तथोक्तं तत् दुर्गं सहायदुर्गं ज्ञेयम् ॥५॥

**परिखादैरिणं श्रेष्ठं पारिघं तु ततो वनम्।**
**ततो धन्वजलं तस्माद्गिरिदुर्गं ततः स्मृतम्॥ ६॥**

**अन्वयः**—परिखात् ऐरिणं श्रेष्ठम्, ततः पारिघम्, पारिघात् वनदुर्गं, ततः धन्वदुर्गं, ततः जलं, तस्मात् गिरिदुर्गं श्रेष्ठम् ॥६॥

**व्याख्या**—परिखात् = परिखावेष्टितकोटात्, ऐरिणं दुर्गम, श्रेष्ठम् = उत्कृष्टं भवतिः, ततः = तस्मादैरिणात्, पारिघं दुर्गं वरम्, ततः = तस्मात् पारिघात्, वनम् = वनदुर्गम्, श्रेष्ठम्, ततः = तस्मात् वनदुर्गात्, धन्वदुर्गम्, ततः = धन्वदुर्गात्, जलम् = जलदुर्गम, जलदुर्गात्, गिरिदुर्गम् श्रेष्ठम् = उत्तमं भवति ॥६॥

**हिन्दी**—पारिख दुर्ग से श्रेष्ठ ऐरिण दुर्ग, ऐरिण से श्रेष्ठ पारिघ दुर्ग, उससे भी श्रेष्ठ वनदुर्ग, वनदुर्ग से श्रेष्ठ जलदुर्ग और उससे भी श्रेष्ठ गिरिदुर्ग माना जाता है ॥६॥

**सहायसैन्यदुर्गे तु सर्वदुर्गप्रसाधके।**
**ताभ्यां विनान्यदुर्गाणि निष्फलानि महीभुजाम्॥ ७॥**

**अन्वयः**—सहायसैन्यदुर्गे सर्वदुर्गप्रसाधके, ताभ्यां विना अन्यदुर्गे महीभुजां निष्फलानि ॥७॥

**व्याख्या**—सहायसैन्यदुर्गे = सहायदुर्गं सैन्यदुर्गञ्च, सर्वेषाम् = सकलानां, दुर्गाणाम्, प्रसाधके = मण्डनकारके, ताभ्याम् = पूर्वोक्ताभ्यामुभाभ्याम्, विना = विहाय, अन्यदुर्गे—अन्यानि = अपराणि, दुर्गाणि = कोटाः, महीभुजाम् = नृपाणाम्, निष्फलानि = निष्प्रयोजनानि ॥७॥

**हिन्दी**—सैन्यदुर्ग एवं सहायदुर्ग सभी दुर्गों के आभूषण हैं। इन्हें छोड़कर अन्य दुर्ग राजा के लिए निष्फल हैं ॥७॥

**सहायेति**। सहायसैन्यदुर्गे सहायदुर्गं सैन्यदुर्गञ्च सर्वेषां दुर्गाणां प्रसाधके अलङ्कारके सम्पादके वा, यतः ताभ्यां सहायसैन्याभ्यां विना महीभुजां राज्ञाम् अन्यानि दुर्गाणि निष्फलानि भवन्तीत्यर्थः ॥७॥

**श्रेष्ठं तु सर्वदुर्गेभ्यः सेनादुर्गं स्मृतं बुधैः।**
**तत्साधकानि चान्यानि तद्रक्षेन्नृपतिः सदा॥ ८॥**

**अन्वयः**—सेनादुर्गं सर्वदुर्गेभ्यः श्रेष्ठं बुधैः स्मृतम्। अन्यानि तत् साधकानि, तत् नृपतिः सदा रक्षेत् ॥८॥

**व्याख्या**—सेनादुर्गम् = प्रशिक्षितसैन्यकोटम्, सर्वेभ्यः = अखिलेभ्यः, दुर्गेभ्यः = कोटेभ्यः, श्रेष्ठः = उत्कृष्टः, बुधैः = पण्डितैः, स्मृतम् = कथितम्। अन्यानि = अपराणि, दुर्गाणि = कोटाः, तत् = तेषाम्, साधकानि = तदुपजीव्यानि, तस्मात् = तेन हेतुना, नृपतिः = राजा, सदा = सर्वदा, तत् = सैन्यदुर्गम्, रक्षेत् = सर्वतोभावेन रक्षां कुर्यात् ॥८॥

**हिन्दी**—विद्वानों ने सभी दुर्गों में सैन्यदुर्ग को सर्वश्रेष्ठ दुर्ग माना है। अतः राजा को

सब तरफ से सैन्यदुर्ग की रक्षा करनी चाहिए। क्योंकि अन्य सभी दुर्ग तो इसके साधन मात्र हैं ॥ ८ ॥

**श्रेष्ठमिति**। सेनादुर्गं सर्वदुर्गेभ्यः श्रेष्ठं बुधैः स्मृतम्, अन्यानि दुर्गाणि तत्साधकानि तेषां पोषकाणि अथवा तानि साधकानि येषां तथोक्तानि तदुपजीव्यानीत्यर्थः। तस्मात् नृपतिः सदा तत् सैन्यदुर्गं रक्षेत् ॥ ८ ॥

**सेनादुर्गं तु यस्य स्यात् तस्य वश्या तु भूरियम्।**
**विना तु सैन्यदुर्गेण दुर्गमन्यत्तु बन्धनम् ॥ ९ ॥**

**अन्वयः**—यस्य सेनादुर्गं स्यात् तस्य इयं भू वश्या। सैन्यदुर्गेण विना अन्यदुर्गं बन्धनम् ॥९ ॥

**व्याख्या**—यस्य = राज्ञः, सेनादुर्गम् = सैन्यकोटः, स्यात् = भवेत्, तस्य = नृपस्य, इयम् = एषा, भूः = पृथिवी, वश्या = वशवर्त्तिनी, भवेत्। सैन्यदुर्गेण = सेनाकोटेन, विना = विहाय, अन्यत् = भिन्नम्, दुर्गम् = कोटः, बन्धनम् = कारागारमिवेति ॥ ९ ॥

**हिन्दी**—जिस राजा के पास सैन्यदुर्ग है सारी धरती उसकी वशवर्तिनी है और सैन्य-दुर्ग को छोड़कर सारे दुर्ग बन्धन मात्र है ॥ ९ ॥

**सेनादुर्गमिति**। यस्य सेनादुर्गं स्यात् तस्य इयं भूः वश्या वशवर्त्तिनी भवेदित्यर्थः, सैन्यदुर्गेण विना तु अन्यत् दुर्गं बन्धनं कारातुल्यमित्यर्थः ॥ ९ ॥

**आपत्कालेऽन्यदुर्गाणामाश्रयश्चोत्तमो मतः ॥ १० ॥**

**अन्वयः**—आपत्काले अन्यदुर्गाणाम् आश्रयः उत्तमः मतः ॥ १० ॥

**व्याख्या**—आपत्काले = विपत्समये, अन्यदुर्गाणाम्—अन्येषाम् = अपरेषाम्, दुर्गाणाम् = कोटानाम्, आश्रयः = अवलम्बनः, उत्तमः = श्रयेस्करः, मतः = प्रथितः ॥ १० ॥

**हिन्दी**—वस्तुतः विपत्काल में ही अन्य दुर्गों का आश्रय लेना श्रेयस्कर कहा गया है ॥१० ॥

**आपत्काले इति**। आपत्काले तु दुर्गाणाम् आश्रयः उत्तमः श्रेयस्करः मतः ॥ १० ॥

**एकः शतं योधयति दुर्गस्थोऽस्त्रधरो यदि।**
**शतं दशसहस्राणि तस्माद्दुर्गं समाश्रयेत् ॥ ११ ॥**

**अन्वयः**—दुर्गस्थः यदि अस्त्रधरः एकोऽपि शतं योधयति, शतं सहस्राणि, तस्मात् दुर्गं समाश्रयेत् ॥ ११ ॥

**व्याख्या**—दुर्गस्थः = दुर्गे स्थितो जनः, यदि = चेत्, अस्त्रधरः = सायुधः, भवेत्, तदा, एकोऽपि = एकमात्रोऽपि, शतम् = शतसंख्यकं, सैन्यम्, योधयति = युद्धं करोति, शतम् = शतसंख्यकम्, सैन्यम्, सहस्राणि = दशशतानि शत्रुबलानि, योधयति, तस्मात् = तेन कारणेन, दुर्गम् = कोटः, समाश्रयेत् = आश्रयणं कुर्यात् ॥ ११ ॥

**हिन्दी**—किले के भीतर हथियारबन्द एक सिपाही भी बाहर की सैकड़ों शत्रुसेना से लोहा ले सकता है। अगर किले में सौ हथियारबन्द सैनिक हों तो बाहर की हजारों सेना से युद्ध कर सकते हैं। अतः राजा को किले का आश्रय लेना चाहिए ॥ ११ ॥

**एक इति**। दुर्गस्थः जनः यदि अस्त्रधरः भवेत् तदा सः एकोऽपि शतं योधयति, शतं शतसङ्ख्यकः जन इत्यर्थः, दशसहस्राणि योधयेत् तस्मात् दुर्गं समाश्रयेत् ॥ ११ ॥

**शूरस्य सैन्यदुर्गस्य सर्वं दुर्गमिव स्थलम्।**
**युद्धसम्भारपुष्टानि राजा दुर्गाणि धारयेत्।**
**धान्यवीरास्त्रपुष्टानि कोशपुष्टानि वै तथा॥ १२॥**

**अन्वयः**—शूरस्य सैन्यदुर्गस्य सर्वं स्थलं दुर्गमिव, किञ्च राजा युद्धसम्भारपुष्टानि धान्यवीरास्त्रपुष्टानि तथा कोशपुष्टानि दुर्गाणि धारयेत॥ १२॥

**व्याख्या**—शूरस्य = महाबलशालिनः, सैन्यदुर्गस्य = सेनापूरितकोटस्य, सर्वम् = सकलम्, स्थलम् = स्थानम्, दुर्गमिव = कोट इव, भवति, किञ्च, राजा = भूपतिः, युद्धसम्भारपुष्टानि = युद्धस्य = समरस्य, सम्भारपुष्टानि = उपकरणपूर्णानि, च = पुनः, धान्यवीरास्त्रपुष्टानि- धान्यैः = अन्नैः; वीरैः = शूरसैन्यैः, अस्त्रैः = प्रहरणैश्च, पुष्टानि = पूर्णानि, तथा कोशपुष्टानि = धनपूर्णानि, दुर्गाणि = कोटाः, धारयेत् = अवलम्बयेत्॥ १२॥

**हिन्दी**—वीर सैनिकों के लिए तो सभी जगह सैन्यदुर्गों की भाँति होती हैं, किन्तु राजा युद्ध की सामग्रियों से भरे अन्न, आयुध, वीर सैनिक एवं खजाने से भरे किले का आश्रय ही ग्रहण करे॥ १२॥

**शूरस्येति**। शूरस्य अतिबलवतः सैन्यदुर्गस्य सर्वं स्थलं स्थानं दुर्गमिव भवति। किञ्च राजा युद्धसम्भारपुष्टानि सङ्ग्रामोपकरणपूर्णानि धान्यैर्वीरैः अस्त्रैश्च पुष्टानि तथा कोशपुष्टानि धनपूर्णानि दुर्गाणि धारयेत् आश्रयेत्॥ १२॥

**सहायपुष्टं यद्दुर्गं तत्तु श्रेष्ठतरं मतम्।**
**सहायपुष्टदुर्गेण विजयो निश्चयात्मकः॥ १३॥**

**अन्वयः**—सहायपुष्टं यद्दुर्गं तत्तु श्रेष्ठतरं मतम्। सहायपुष्टदुर्गेण विजयः निश्चयात्मकः॥ १३॥

**व्याख्या**—सहायपुष्टं—सहायैः = सहायकैः, पुष्टं = परिपूर्णम्, यत् = पूर्वोक्तप्रकारकम्, दुर्गम् = कोटः, तत्तु = तत्कोटस्तु, श्रेष्ठतरम् = उत्कृष्टतरम्, मतम् = कथितम्। सहायपुष्ट-दुर्गेण = सहायकपूर्णकोटेन, विजयः = जयः, निश्चयात्मकः = निश्चितो भवतीति भावः॥ १३॥

**हिन्दी**—अतः युद्धसहायक-सामग्रियों से भरा जो दुर्ग होता है वही श्रेष्ठतर माना जाता है। जिस राजा का किला उक्त सहायकों से भरा होता है, युद्ध में उसकी जीत निश्चित रूप से होती है॥ १३॥

**सहायेति**। सहायपुष्टं सहायैः पूर्णं यत् दुर्गं तत्तु श्रेष्ठतरं मतम्। सहायपुष्टदुर्गेण विजयः निश्चयात्मकः निश्चितः॥ १३॥

**यद्यत् सहायपुष्टं तु तत्सर्वं सफलं भवेत्।**
**परस्परानुकूल्यं तु दुर्गाणां विजयप्रदम्॥ १४॥**

**इति शुक्रनीतौ चतुर्थाध्याये दुर्गनिरूपणं नाम षष्ठं प्रकरणम्।**

---

**अन्वयः**—यत् यत् दुर्गं सहायपुष्टं तत् सर्वं सफलं भवेत्। दुर्गाणां तु परस्परानुकूल्यं विजयप्रदम्॥ १४॥

**व्याख्या**—यत् यत् दुर्गम् = यो हि कोटः, सहायपुष्टम् = सहायकैः परिपूर्णो भवति, तत् = कोटः, सर्वम् = सकलम्, सफलम् = सार्थकम्, भवेत् = स्यात्। दुर्गाणाम् = कोटानाम्, परस्परानुकूल्यम् = अन्योऽन्यसाहाय्यम्, विजयप्रदम् = जयलाभाय, भवति ॥ १४ ॥

**हिन्दी**—जो किला सहायकों से भरा होता है राजा के लिए वह लाभप्रद होता है। किलों का आपस में एक-दूसरे का सहायक होना विजयप्रद होता है ॥ १४ ॥

**इस प्रकार शुक्रनीति में चतुर्थ अध्याय में 'दुर्गनिरूपण' नामक षष्ठ प्रकरण की 'विमला' संस्कृत-हिन्दी व्याख्या समाप्त हुई ॥**

---

**यदिति**। यत् यत् दुर्गं सहायपुष्टं तत् सर्वं सफलं भवेत्। दुर्गाणां परस्परानुकूल्यम् अन्योऽन्यसाहाय्यं विजयप्रदं विजयावहं भवति ॥ १४ ॥

**इति श्रीजीवानन्दविद्यासागरविरचिता चतुर्थाध्यायस्य षष्ठप्रकरणव्याख्या समाप्ता।**

---

# चतुर्थाध्यायस्य सप्तमं प्रकरणम्

**दौर्गं सङ्क्षेपतः प्रोक्तं सैन्यं सप्तममुच्यते।**
**सेना शस्त्रास्त्रसंयुक्तमनुष्यादिगणात्मिका॥ १॥**

**अन्वयः**—दौर्गं सङ्क्षेपतः प्रोक्तम्, सप्तमं प्रकरणं सैन्यम् उच्यते। शस्त्रास्त्रसंयुक्तमनुष्यादिगणात्मिका सेना उच्यते॥ १॥

**व्याख्या**—दौर्गम् = दुर्गविषयकं प्रकरणम्, सङ्क्षेपतः = समासेन, प्रोक्तम् = निगदितम्, सप्तमम् = वर्त्तमानम्, प्रकरणम् = अध्यायः, सैन्यम् = सेनाविषयकम्, उच्यते = कथ्यते। **शस्त्रैः** = आयुधैः, अस्त्रैः = प्रहरणैश्च, संयुक्ताः = संवलिताः, ये मनुष्यादयः = मानवादयः, पदातिहस्त्यश्वरथाः, तेषां गणः = समूहः, तेषाम् आत्मा = जीवितम्, यस्याः तथोक्ताः, सेना = बलम्, उच्यते॥१॥

**हिन्दी**—इस प्रकार दुर्गनिरूपण नामक छठा अध्याय संक्षेप में वर्णन किया। अब इस सप्तम प्रकरण में सेना का निरूपण करता हूँ। हथियारबन्द सिपाहियों के पैदल, गजारोही, अश्वारोही तथा रथारोही को सेना कहा जाता है॥ १॥

**दौर्गमिति**। दौर्गं दुर्गविषयं प्रकरणं सङ्क्षेपतः प्रोक्तम्। सप्तमं प्रकरणं सैन्यं सेनासङ्क्रान्तम् उच्यते। शस्त्रैः अस्त्रैश्च संयुक्ता ये मनुष्यादयः पादातहस्त्यश्वरथा इत्यर्थः, तेषां गणः आत्मा यस्याः तथोक्ताः सेना उच्यते इति शेषः॥ १॥

**स्वगमान्यगमा चेति द्विधा सैव पृथक् त्रिधा।**
**दैव्यासुरी मानवी च पूर्वपूर्वा बलाधिका॥ २॥**

**अन्वयः**—सा स्वगमा अन्यगमा चेति द्विधा। पृथक् सैव दैवी आसुरी मानवी चेति त्रिधा, पूर्वपूर्वा बलाधिका॥ २॥

**व्याख्या**—सा = सेना, स्वगमा = स्वयं गन्त्री, अन्यगमा = वाहनगा, चेति, द्विधा = द्विप्रकारका, भवति, पृथक् = पुनश्च, सा एव = सैव सेना, दैवी = देवतासम्बन्धिनी, आसुरी = दानवी, मानवी = मानुषी, चेति, त्रिधा = त्रिविधा भवति, तासु पूर्वपूर्वा = आनुपूर्व्येण, बलाधिका = अधिकबलवती भवति॥ २॥

**हिन्दी**—सेना दो तरह की होती है—पदाति तथा सवारी से चलने वाली। पुनः इन दोनों के दैवी, दानवी और मानवी के रूप में तीन-तीन भेद हैं। ये तीनों पूर्वानुक्रम से अर्थात् मानवी से दानवी, दानवी से दैवी सेना अधिक शक्तिशालिनी होती है॥ २॥

**स्वगमेति**। सा स्वगमा अन्यगमा चेति द्विधा, पृथक् पुनश्च सा एव दैवी आसुरी मानवी चेति त्रिधा, तासु पूर्वपूर्वा बलाधिका अधिकबलशालिनीत्यर्थः, तथा च दैवी सर्वश्रेष्ठा, ततः आसुरी, ततश्च मानवीति भावः॥ २॥

**स्वगमा या स्वयं गन्त्री यानगाऽन्यगमा स्मृता।**
**पादातं स्वगमं चान्यद्रथाश्वगजगं त्रिधा॥ ३॥**

**अन्वयः**—या स्वयं गन्त्री सा स्वगमा, यानगा अन्यगमा स्मृता। यथा पादातं स्वगमम् अन्यत् रथाश्वगजगं त्रिधा॥ ३॥

**व्याख्या**—या = सेना, स्वयम् = आत्मनैव, गन्त्री = गमनं कुर्वती, सा = सेना, स्वगमा = स्वयं गन्त्री, यानगा—या सेना यानैः = वाहनैः, गच्छन्तीति सा, अन्यत् = यानगा भवति, स्मृतम् = कथितम्। यथा पादातम् = पदातिवर्गः, स्वगमम् = स्वयं पादाचारेण गच्छति, अन्यत् = अन्यगम्, गजाश्वरथगमिति, इति त्रिधा = त्रिप्रकारकम्॥ ९॥

**हिन्दी**—जो स्वयं गमन करने वाली सेना होती है, वह स्वगमा और जो दूसरों के द्वारा गमन करने वाली होती है, वह अन्यगमा कहलाती है। अन्यगमा हाथी घोड़ा और रथारोही होने के कारण तीन तरह की होती है॥ ९॥

**स्वगमेति**। या सेना स्वयं गन्त्री सा स्वगमा, यानगा अन्यगमा स्मृता। यथा पादातं पदातिवर्गः स्वगमं स्वयं पादचारेण गच्छतीत्यर्थः। अन्यत् अन्यगं रथाश्वगजगमिति त्रिधा तथा च केचित् रथैः, केचिदश्वैः केचिच्च गजैर्गच्छन्तीत्यर्थः॥ ९॥

**सैन्याद्विना नैव राज्यं न धनं न पराक्रमः।**
**बलिनो वशगाः सर्वे दुर्बलस्य च शत्रवः।**
**भवन्त्यल्पजनस्यापि नृपस्य तु न किं पुनः॥ ४॥**

**अन्वयः**—सैन्यात् विना राज्यं न, धनं न, पराक्रमः न। यदा सर्वे बलिनः वशगाः दुर्बलस्य च शत्रवः भवन्ति तदा अल्पजनस्य नृपस्यापि तु किं पुनः न? ॥ ४॥

**व्याख्या**—सैन्यात् = सैनिकात्, विना = परित्यज्य, राज्यम् = राष्ट्रम्, न = नहि, धनम् = वित्तम्, न, पराक्रमश्च = वीरताऽपि च, न = नहि, तिष्ठेत्। यदा सर्वे = सकलाः जनाः, बलिनः = शक्तिशालिनो जनस्य, वशगाः = वशवर्त्तिनी भवन्ति, तथा दुर्बलस्य = शक्तिहीनस्य, शत्रवः = अरयः, तदा अल्पजनस्य = अनधिकसैन्यवतः, नृपस्यापि = राज्ञोऽपि, किमिति प्रश्ने, पुनः = भूयः, न = नहि, शत्रवः = रिपवः, भवन्ति = जायन्ते, अपितु भवन्त्येवेति॥ ४॥

**हिन्दी**—सेना के बिना राज्य, धन और पराक्रम कुछ स्थिर नहीं रह सकता है। सभी लोग बलवानों के वशवर्त्ती एवं दुर्बलों के शत्रु होते ही हैं तो फिर थोड़ी सेना रखने वाले राजा के लोग क्या शत्रु नहीं होते हैं? अर्थात् होते ही हैं॥ ४॥

**सैन्यादिति**। सैन्यात् विना राज्यं न, धनं, न, पराक्रमश्च न तिष्ठेदित्यर्थः, यदा सर्वे जनाः बलिनः बलवतः जनस्य वशगाः वशवर्त्तिनः, दुर्बलस्य च शत्रवः भवन्ति, तदा अल्पजनस्य अनधिकसैन्यवतः नृपस्यापि किं पुनः न शत्रवो भवन्ति? अपितु भवन्त्येवेत्यर्थः॥ ४॥

**शारीरं हि बलं शौर्य्यबलं सैन्यबलं तथा।**
**चतुर्थमास्त्रिकबलं पञ्चमं धीबलं स्मृतम्।**
**षष्ठमायुर्बलं त्वेतैरुपेतो विष्णुरेव सः॥ ५॥**

**अन्वयः**—शारीरं हि बलं शौर्यबलं तथा सैन्यबलं चतुर्थम् आस्त्रिकबलं पञ्चमं धीबलं षष्ठम् आयुर्बलं स्मृतम्। एतैः उपेतः सः विष्णुः एवेति ॥५॥

**व्याख्या**—शारीरं = दैहिकं, हि, बलं = शक्तिः, शौर्यस्य = पराक्रमस्य, बलम्, तथा सैन्यस्य = सैनिकस्य च, बलं = सामर्थ्यम्, चतुर्थम् = तुरीयम्, आस्त्रिकस्य = अस्त्रधारिणः, बलं = सामर्थ्यम्, पञ्चमम्, धीबलं = बुद्धिबलं, षष्ठम्, आयुर्बलम् = जीवनसामर्थ्यम्, स्मृतम् = कथितम्। यस्तु, एतैः = पूर्वोक्तैः बलैः, उपेतः = समन्वितः, सः = नृपतिस्तु, साक्षात्, विष्णुः = जनार्दनः, एवेति निश्चयः॥५॥

**हिन्दी**—देह का, पराक्रम का, सेना का, हथियार का, बुद्धि का एवं आयु का- इस तरह ये छः प्रकार के बल कहे गये हैं। जिसमें ये सभी बल मौजूद हैं, वह साक्षात् विष्णु का स्वरूप है॥५॥

**शारीरमिति**। शारीरं बलं, शौर्य्यबलं स्ववीर्य्यबलं सैन्यबलं चतुर्थम् आस्त्रिकबलम् अस्त्रप्रयोगसामर्थ्यमित्यर्थः, पञ्चमं धीबलं बुद्धिबलं षष्ठम् आयुर्बलं जीवनसामर्थ्यं स्मृतम्। यस्तु एतैः बलैः उपेतः अन्वितः, सः विष्णुरेव॥५॥

**न बलेन विनाप्यल्पं रिपुं जेतुं क्षमाः सदा।**
**देवासुरनरास्त्वन्योपायैर्नित्यं भवन्ति हि॥६॥**

**अन्वयः**—बलेन विना अल्पमपि रिपुं जेतुं सदा न क्षमाः। हि देवासुरनराः अन्योपायैः तु एव नित्यं भवन्ति॥६॥

**व्याख्या**—बलेन = सैन्येन, विना = विहाय, अल्पमपि = तुच्छमपि, रिपुम् = शत्रुम्, जनाः, जेतुम् = विजेतुम्, सदा = सर्वदा, न = नहि, क्षमाः = शक्ताः, भवन्ति। हि = यतः, देवासुरनराः = सुरासुरमानवाः, अन्योपायैः = अपरसाधनैः, तु = इत्यवधारणे, एव = इति निश्चयेन, नित्यम् = शाश्वतम्, भवन्ति = जायन्ते॥६॥

**हिन्दी**—शक्ति के बिना लोग सामान्य दुश्मन को भी जीत नहीं सकते। क्योंकि देवता, दानव और मानव भी बल न रहने पर अन्य साधनों से शत्रुओं को जीतने के लिए नित्य प्रयत्नशील रहते हैं॥६॥

**नेति**। बलेन विना जनाः अल्पं क्षुद्रमपि रिपुं शत्रुं सदा जेतुं न क्षमाः न समर्थाः, हि यतः देवासुरनराः सुरदैत्यमानवाः अन्योपायैः स्वबलव्यतिरिक्तैः उपायैः सैन्यादिबलैः तु एव तुशब्दश्चावधारणे नित्यं भवन्ति उद्युञ्जते इत्यर्थः॥६॥

**बलमेव रिपोर्नित्यं पराजयकरं परम्।**
**तस्माद् बलमभेद्यं तु धारयेद्यत्नतो नृपः॥७॥**

**अन्वयः**—बलमेव रिपोः नित्यं परं पराजयकरम्। तस्मात् नृपः अभेद्यं बलमेव तु यत्नतः धारयेत्॥७॥

**व्याख्या**—बलमेव = सैन्यमेव, रिपोः = शत्रोः, नित्यम् = सततम्, परम् = उत्कृष्टम्, पराजयकरम् = पराजितुं समर्थः, तस्मात् = तेन कारणेन, नृपः = राजा, अभेद्यम् = रिपुदुर्धर्षम्, बलम् = सैन्यम्, यत्नतः = प्रयासपूर्वकेण, धारयेत् = धारणं कुर्यात्॥७॥

**हिन्दी**—शत्रु को पराजित करने के लिए मनुष्य का एकमात्र बल ही निरन्तर समर्थ

होता है। अतः प्रयासपूर्वक शत्रुओं के लिए दुर्भेद्य बल को राजा निरन्तर धारण करे ॥ ७ ॥

**बलमिति**। बलमेव रिपोः शत्रोः नित्यं परं श्रेष्ठं पराजयकरम्। तस्मात् नृपः अभेद्यं शत्रुदुर्धर्षं बलमेव यत्नतः धारयेत् ॥ ७ ॥

**सेनाबलं तु द्विविधं स्वीयं मैत्रं च तद् द्विधा।**
**मौलसाद्यस्कभेदाभ्यां सारासारं पुनर्द्विधा ॥ ८ ॥**

**अन्वयः**—सेनाबलं स्वीयं मैत्रञ्च द्विविधम्। तच्च मौलसाद्यस्कभेदाभ्यां द्विधा, पुनः सारम् असारञ्च द्विधा ॥ ८ ॥

**व्याख्या**—सेनाबलम् = सैन्यशक्तिः, स्वीयम् = स्वकीयम्, तथा मैत्रम् = मित्रबलम् द्विविधम् = प्रकारद्वयम्, तच्च, मौलसाद्यस्कभेदाभ्याम् = परम्पराप्राप्तसाम्प्रतिकाभ्यां भेदाभ्याम्, द्विधा = द्विप्रकारका, तदपि = तावुभावपि, सारम् = तत्त्वम्, असारम् = मूलतत्त्वविहीनञ्चेति, द्विधा = द्विविधेति भावः ॥ ८ ॥

**हिन्दी**—सैन्यशक्ति भी दो तरह की होती है—अपना सैन्यबल और मित्रों का सैन्यबल। ये भी परम्परागत एवं आधुनिक के भेद से दो तरह के होते हैं। पुनः इनका सार एवं असार के रूप में दो भेद होते हैं ॥ ८ ॥

**सेनाबलमिति**। सेनाबलं स्वीयं मैत्रञ्चेति द्विविधम्। तच्च मौलसाद्यस्कभेदाभ्यां क्रमागता-धुनिकभेदाभ्यां कियन्ति क्रमागतानि कियन्ति वा आधुनिकानीति विशेषाभ्यां द्विधा, तदपि पुनः सारम् असारञ्चेति द्विधा ॥ ८ ॥

**अशिक्षितं शिक्षितञ्च गुल्मीभूतमगुल्मकम्।**
**दत्तास्त्रादि स्वशस्त्रास्त्रं स्ववाहि दत्तवाहनम् ॥ ९ ॥**

**अन्वयः**—तत् अशिक्षितं शिक्षितञ्च गुल्मीभूतम् अगुल्मकं दत्तास्त्रादि स्वशस्त्रास्त्रं स्ववाहि दत्तवाहनम् ॥ ९ ॥

**व्याख्या**—तत् = पूर्वोक्तं, सैन्यबलम्, अशिक्षितम् = प्रशिक्षणविहीनम्, च = पुनः, शिक्षितम् = प्रशिक्षणप्राप्तम्, गुल्मीभूतम् = हस्त्यश्वादिसेनाविभागभेदयुक्तम्, अगुल्मकम् = सेनाविभाग-भेदरहितम्, दत्तास्त्रादि—दत्तानि = प्रदत्तानि, अस्त्राणि = आयुधानि, यस्मै तत्, स्वशस्त्रास्त्रम् = निजशस्त्रास्त्रसंयुतम्, स्ववाहि—स्वस्य = आत्मनः, वाहि = वाहनयुतम्, दत्तवाहनम्—दत्तम् = समर्पितम्, वाहनम् = यानम्, यस्मै तथाभूतमिति, अनेन प्रकारेण प्रत्येकं द्विविधम् ॥ ९ ॥

**हिन्दी**—इनमें प्रत्येक प्रशिक्षणरहित एवं प्रशिक्षणप्राप्त तथा अश्वारोही, गजारोही, रथारोही एवं पदाति के रूप में विभक्त सेना और अगुल्मक अर्थात् सर्वसम्मिलित सेना पुनः अपनी सवारी वाली सेना तथा दूसरों के द्वारा दी गई सवारी वाली सेना के भेदों से दो प्रकार की होती है ॥ ९ ॥

**अशिक्षितमिति**। किञ्च तत् सेनाबलम् अशिक्षितं, गुल्मीभूतम्, अगुल्मकं, दत्तास्त्रादि दत्तानि अस्त्रादीनि यस्मै तत्, स्वशस्त्रास्त्रं निजशस्त्रास्त्रयुक्तं, स्ववाहि निजवाहनान्वितं दत्तवाहनं दत्तं वाहनम् अश्वादि यस्मै तथाभूतमिति प्रत्येकं द्वैधीभावेन बहुविधमिति भावः ॥ ९ ॥

**सौजन्यात् साधकं मैत्रं स्वीयं भृत्या प्रपालितम्।**
**मौलं बह्वब्दानुबन्धि साद्यस्कं यत् तदन्यथा॥ १०॥**

**अन्वयः**—सौजन्यात् साधकं मैत्रं भृत्या प्रपालितं स्वीयं बह्वब्दानुबन्धि मौलं तदन्यथा यत् साद्यस्कम्॥ १०॥

**व्याख्या**—सौजन्यात् = सुजनतावशात्, साधकम् = परकार्यसहायकम्, सैन्यम्, मैत्रम् = मित्रसंज्ञकम्, भृत्या = वेतनेन, प्रपालितम् = पोषितम्, सैन्यम्, स्वीयम् = आत्मीयम्, बह्वब्दानुबन्धि—बहून् = कतिपयान्, अब्दान् = वर्षाणि, अनुबध्नाति = निबध्नाति, इति तथोक्तं सैन्यम्, मौलम् = मूलायत्वम्, तदन्यथा—तत् = तेषाम्, अन्यथा = भिन्नम्, सैन्यम्, साद्यस्कम् = सद्योभवत्वम्, नूतनमिति भावः॥ १०॥

**हिन्दी**—मित्रतावश युद्ध में साथ देने वाली सेना को मित्रसेना कहते हैं। वेतन पर पलने वाली सेना स्वीय अर्थात् निजी होती है। इसी तरह बहुत वर्षों से नियुक्त सेना को मौल तथा तत्काल नियुक्त सेना को साद्यस्क कहते हैं॥ १०॥

**सौजन्यादिति**। सौजन्यात् साधकं कार्य्यनिर्वाहकं सैन्यं मैत्रं, भृत्या वेतनेन प्रपालितं परिपालितं सैन्यं स्वीयम्। बहून् अब्दान् वत्सरान् अनुबध्नाति इति तथोक्तं सैन्यं मौलं मूलायतत्वादिति भावः, तदन्यथा तद्भिन्नम् अल्पदिननियुक्तमित्यर्थः, सैन्यं साद्यस्कं सद्यो भवत्वादिति भावः॥ १०॥

**सुयुद्धकामुकं सारमसारं विपरीतकम्।**
**शिक्षितं व्यूहकुशलं विपरीतमशिक्षितम्॥ ११॥**

**अन्वयः**—सुयुद्धकामुकं सारं विपरीतकम् असारं व्यूहकुशलं शिक्षितं विपरीतम् अशिक्षितम्॥ ११॥

**व्याख्या**—सुयुद्धकामुकम् = सुष्ठुतया योद्धुं, समुत्सुकं सैन्यम्, सारम्, विपरीतकम् = एतद्भिन्नं सैन्यम्, असारम् = साररहितम्, व्यूहकुशलम् = गुल्मरचनायां प्रवीणम्, शिक्षितम् = प्रशिक्षणप्राप्तसैन्यम्, विपरीतम् = तद्भिन्नम्, अशिक्षितं सैन्यं भवति॥ ११॥

**हिन्दी**—अच्छी तरह युद्ध के लिए तैयार सेना को सार तथा इससे भिन्न को असार और व्यूह रचना में प्रवीण सेना को शिक्षित, इससे भिन्न को अशिक्षित कहते हैं॥ ११॥

**सुयुद्धेति**। सुयुद्धकामुकं सुयुद्धे समुत्सुकं सैन्यं सारं विपरीतकं तद्भिन्नम् असारम् व्यूहेषु कुशलं निपुणं शिक्षितं, विपरीतम् अकुशलमित्यर्थः, अशिक्षितम्॥ ११॥

**गुल्मीभूतं साधिकारि स्वस्वामिकमगुल्मकम्।**
**दत्तास्त्रादि स्वामिना यत् स्वशस्त्रास्त्रमतोऽन्यथा॥ १२॥**

**अन्वयः**—साधिकारि गुल्भीभूतं स्वस्वाामिकम् अगुल्मकं स्वामिना यत् तत् दत्तास्त्रादि अतोऽन्यथा स्वशस्त्रास्त्रम्॥ १२॥

**व्याख्या**—साधिकारि—अधिकारिणा = सेनापतिना, सहितम् = युक्तम्, सैन्यम्, गुल्मीभूतम् = सेनाविभागभेदयुक्तं भवति, स्वस्वामिकम् = निजाधिकारस्थमर्थात् स्वामिकम्, स्वाधीनं सैन्यम् अगुल्मकम् = सेनाविभागादिभेदरहितं भवति, तथा, यत् = यस्मै, स्वामिना = सेनानायकेन,

अस्त्रादि दीयते, तत् = सैन्यम्, दत्तास्त्रादि = प्रदत्तायुधादि, अतः = एतत्, अन्यथा = भिन्नः, सैन्यम्, स्वशस्त्रास्त्रम् = निजायुधमिति कथ्यते ॥ १२ ॥

**हिन्दी**—सेनापति के साथ रहने वाली सेना को 'गुल्मीभूत' तथा सेनापति के बिना ही स्वतंत्र रूप से लड़ने वाली सेना को 'अगुल्मीभूत' कहते हैं। इसी तरह स्वामी ने जिसे हथियार दिया है, वह सेना 'दत्तास्त्रादि' तथा निजी हथियार से लड़ने वाली सेना को 'स्वशस्त्रास्त्र' कहते हैं ॥ १२ ॥

**गुल्मीभूतमिति**। साधिकारि सस्वामिकं सेनापतिसहितमित्यर्थः, सैन्यं गुल्मीभूतं, स्वस्वामिकं स्वाधीनमित्यर्थः, सैन्यम् अगुल्मकम्। स्वामिना यदित्यव्ययं यस्मै इत्यर्थः, अस्त्रादि दीयते इति शेषः, तत् दत्तास्त्रादि, अतः अन्यथा एतद्व्यतिरिक्तं सैन्यं स्वशस्त्रास्त्रम् ॥ १२ ॥

**कृतगुल्मं स्वयंगुल्मं तद्वच्च दत्तवाहनम्।**
**आरण्यकं किरातादि यत् स्वाधीनं स्वतेजसा ॥ १३ ॥**

**अन्वयः**—तद्वत् कृतगुल्मं स्वयंगुल्मं दत्तवाहनं यत् स्वतेजसा स्वाधीनं किरातादि तत् आरण्यकम् ॥ १३ ॥

**व्याख्या**—तद्वत् = तथैव, कृतगुल्मम् = राज्ञा सेनाध्यक्षेषु सैन्येषु निवेशितम्, स्वयं-गुल्मस्वयम् = निजेच्छया गुल्माध्यक्षो भूतम्, दत्तवाहनम् = नरपतिना प्रदत्तयानम्, यत् स्वतेजसा = निजपराक्रमेण, स्वाधीनम् = स्वतन्त्रम्, किरातादि = वनेचरादि, तत् = सैन्यम्, आरण्यकम् = आटवीम्, कथितम् ॥ १३ ॥

**हिन्दी**—इसी तरह कृतगुल्म अर्थात् राजा ने सेनापति से युक्त सेना में जिसकी गणना की हो तथा स्वयंगुल्म अर्थात् अपनी इच्छा से गुल्मनायक बना हो, सेना के नायक दत्तवाहन अर्थात् जिसे राजा के द्वारा वाहन प्रदत्त हो एवं अपने तेज से स्वाधीन बनी रहने वाली किरातों की सेना को आरण्यक कहते हैं ॥ १३ ॥

**कृतेति**। तद्वत् तथा कृतगुल्मं स्वामिना सेनापत्यधिष्ठितेषु सैन्येषु निवेशितं, स्वयं गुल्मं स्वेच्छया गुल्माधिपतीभूतमित्यर्थः, दत्तवाहनं पूर्वमुक्तम्। यत् स्वतेजसा स्वाधीनं किरातादि, तत् आरण्यकं सैन्यमित्यर्थः ॥ १३ ॥

**उत्सृष्टं रिपुणा वापि भृत्यवर्गे निवेशितम्।**
**भेदाधीनं कृतं शत्रोः सैन्यं शत्रुबलं स्मृतम्।**
**उभयं दुर्बलं प्रोक्तं केवलं साधकं न तत् ॥ १४ ॥**

**अन्वयः**—रिपुणा उत्सृष्टं भृत्यवर्गे निवेशितं वाऽपि शत्रोः भेदाधीनं कृतं सैन्यं शत्रुबलं स्मृतम्। उभयं दुर्बलं प्रोक्तं तत् केवलं साधकं नेति ॥ १४ ॥

**व्याख्या**—रिपुणा = शत्रुणा, उत्सृष्टं = परित्यक्तम्, भृत्यवर्गे = निजसैन्यदले, निवेशितम् = नियोजितम्, वाऽपि = किंवा, शत्रोः = रिपोः, भेदाधीनम्—भेदेन = विभेदकरणेन, अधीनम् = स्वायत्तम्, सैन्यम्, शत्रुबलम् = रिपुसैनिकम्, स्मृतम् = प्रोक्तम्। उभयम् = एतद्द्विप्रकारकं सैन्यम्, दुर्बलम् = अविश्वसनीयम्, प्रोक्तम् = कथितम्, तस्मात्, केवलम् = नाममात्रमेव सैन्यम्, तत् = शत्रुबलम्, साधकम् = समरकार्यनिर्वाहकम्, न = नास्त्येवेति ॥ १४ ॥

**हिन्दी**—जिसमें शत्रु के द्वारा निकाले गये सैनिकों को वेतन देकर अपनी सेना में रख

दिये गये हों अथवा जो शत्रु की सेना भेदनीति से अपने अधीन कर ली गई हो, उसे शत्रुबल कहते हैं। ये दोनों तरह की सेना दुर्बल अर्थात् अविश्वसनीय होती हैं। इन पर भरोसा रखकर युद्ध संचालित नहीं किया जा सकता है ॥ १४ ॥

**उत्सृष्टमिति।** रिपुणा शत्रुणा उत्सृष्टं त्यक्तं सत् भृत्यवर्गे सैन्यदले निवेशितं वापि अथवा शत्रोः भेदाधीनं भेदेन विच्छेदेन अधीनम् आयत्तं सैन्यं शत्रुबलं स्मृतम्। एतदुभयं सैन्यं दुर्बलं प्रोक्तं कथितम् अविश्वसनीयत्वादिति भावः, तस्मात् केवलं स्वसैन्यासमभिव्याहृतं तत् न साधकं न कार्य्यनिर्वाहकमित्यर्थः ॥ १४ ॥

**समैर्नियुद्धकुशलैर्व्यायामैर्नतिभिस्तथा ।**
**वर्द्धयेद् बाहुयुद्धार्थं भोज्यैः शारीरकं बलम् ॥ १५ ॥**

**अन्वयः**—समैः नियुद्धकुशलैः व्यायामैः नतिभिः बाहुयुद्धार्थं भोज्यैः शारीरकं बलं वर्द्धयेत् ॥१५ ॥

**व्याख्या**—समैः = समानबलैः, नियुद्धकुशलैः = युद्धप्रवीणैः, वीरैः, सह, बाहुयुद्धार्थम् = मलयुद्धाय, व्यायामैः = बलवर्द्धकश्रमैः, नतिभिः = गुरुजनप्रणतिभिः, तथा = तेनैव प्रकारेण, भोज्यैः = पौष्टिकाऽऽहारैः, शारीरकम् = दैहिकम्, बलम् = शक्तिम्, वर्द्धयेत् = संवर्द्धयेदिति ॥ १५ ॥

**हिन्दी**—मल्लयुद्ध में कुशल समान शक्ति वाले के साथ कुश्ती लड़ा कर तथा व्यायाम कराकर एवं गुरुजनों को प्रणाम कराकर, पौष्टिक आहार देकर बाहुयुद्ध के लिए सैनिकों के दैहिक बल को बढ़ाना चाहिए ॥ १५ ॥

**समैरिति।** समैः तुल्यबलैः नियुद्धकुशलैः सङ्ग्रामदक्षैः वीरैः सह बाहुयुद्धार्थं व्यायामैः अङ्गचालनाभिः, नतिभिः गुरुजनप्रणतिभिः तथा भोज्यैः बलकरैरन्नादिभिः शारीरकं बलं वर्द्धयेत् गुरुजनप्रणत्या तेषाम् आशीर्वादाद् बलवृद्धिरिति भावः ॥ १५ ॥

**मृगयाभिस्तु व्याघ्राणां शस्त्रास्त्राभ्यासतः सदा।**
**वर्द्धयेच्छूरसंयोगात् सम्यक् शौर्य्यबलं नृपः ॥ १६ ॥**

**अन्वयः**—नृपः व्याघ्राणां मृगयाभिः सदा शस्त्रास्त्राभ्यासतः तथा शूरसंयोगात् शौर्यबलं सम्यक् वर्द्धयेत् ॥ १६ ॥

**व्याख्या**—नृपः = राजा, व्याघ्राणाम् = शार्दूलादीनां हिंसकानां, मृगयाभिः = आखेटकादिभिः, सदा = सर्वदा, शस्त्रास्त्राणाम् = प्रहरणादीनाम्, अभ्यासतः = सततव्यवहारेण, तथा = तेनैव प्रकारेण, शूरसंयोगात्—शूराणाम् = वीराणाम्, संयोगात् = सम्पर्कात्, शौर्यबलम् = वीरत्वबलम्, सम्यक् = सुष्ठुतया, वर्द्धयेत् = संवर्द्धनं कुर्यात् ॥ १६ ॥

**हिन्दी**—और हमेशा व्याघ्रादि हिंसक जन्तुओं का शिकार, हथियार चलाने का अभ्यास एवं शूरवीरों की संगति से सैनिकों के शौर्यबल को राजा बढाये ॥ १६ ॥

**मृगयाभिरिति।** नृपः व्याघ्राणाम् उपलक्षणमेतत् हिंस्रजन्तूनामित्यर्थः, मृगयाभिः शरव्यकरणैः, सदा शस्त्रास्त्राणाम् अभ्यासतः पुनः पुनः चालनेन तथा शूराणां वीराणां संयोगात् संसर्गात् शौर्य्यबलं सम्यक् वर्द्धयेत् ॥ १६ ॥

**सेनाबलं सुभृत्या तु तपोऽभ्यासैस्तथास्त्रिकम्।**
**वर्द्धयेच्छास्त्रचतुरसंयोगाद्धीबलं सदा ॥ १७ ॥**

**अन्वयः**—सुभृत्या सेनाबलं तथा तपोऽभ्यासैः तु आस्त्रिकं सदा शस्त्रचतुरसंयोगात् धीबलं वर्द्धयेत् ॥ १७ ॥

**व्याख्या**—सुभृत्या = सुष्ठुवेतनदानेन, सेनाबलम् = सैन्यशक्तिम्, तथा = तेनैव प्रकारेण, तपोभिः = तपस्याभिः, अभ्यासैश्च = अनुशीलनैश्च, आस्त्रिकम् = आयुधप्रयोगशक्तिम्, तथा, सदा = सर्वदा, शास्त्राणाम् = धर्मग्रन्थानाम्, चतुराणाम् = कुशलानाम्, संयोगात् = सम्पर्कात्, धीबलम् = बुद्धिबलम्, वर्द्धयेत् = वर्द्धनं कुर्यात् ॥ १७ ॥

**हिन्दी**—अच्छा वेतन देकर सैन्यबल तथा तपस्या और अभ्यास से दिव्यास्त्रों का प्रयोग कर आयुधबल एवं शास्त्र तथा चतुर लोगों की संगति से सदा बुद्धिबल बढ़ाना चाहिए ॥ १७ ॥

**सेनाबलमिति**। सुभृत्या सुवेतनेन सेनाबलं, तपोभिः अभ्यासैश्च आस्त्रिकम् अस्त्रप्रयोगबलं तथा सदा शास्त्राणां चतुराणाञ्च संयोगात् संसर्गात् धीबलं बुद्धिबलं वर्द्धयेत् । । १७ ॥

**सत्क्रियाभिश्चिरस्थायि नित्यं राज्यं भवेद्यथा।**
**स्वगोत्रे तु तथा कुर्य्यात् तदायुर्बलमुच्यते।**
**यावद्गोत्रे राज्यमस्ति तावदेव स जीवति ॥ १८ ॥**

**अन्वयः**—यथा नित्यं सत्क्रियाभिः राज्यं चिरस्थायि भवेत् तथा स्वगोत्रे कुर्यात् तदेव आयुर्बलम् उच्यते। गोत्रे यावत् राज्यम् अस्ति सः तावदेव जीवति ॥ १८ ॥

**व्याख्या**—यथा = येन प्रकारेण, नित्यम् = सततम्, सत्क्रियाभिः = उत्कृष्टकर्मभिः, राज्यम् = राष्ट्रम्, चिरस्थायि = अशीघ्रनाशि, भवेत् = स्यात्, तथा = तेनैव रूपेण, स्वगोत्रे = निजान्वये, कुर्यात् = विदध्यात्, तत् = तदेव, आयुर्बलम् = जीवनशक्तिः, उच्यते = कथ्यते। यस्मात्, गोत्रे = स्वकीयान्वये, यावत् = यावत्कालपर्यन्तम्, राज्यम् = राष्ट्रम्, अस्ति = तिष्ठति, सः = असौ, तावदेव = तावत्कालपर्यन्तमेव, जीवति = स्थिरो भवति ॥ १८ ॥

**हिन्दी**—राजा को सतत अपने सत्कर्म से राज्य को अपनी सन्तान में चिरस्थायी करने का प्रयास करना चाहिए, इसी को 'आयुर्बल' कहते हैं। क्योंकि उसके वंश में जब तक राज्य रहता है तभी तक वह जीवित है ॥ १८ ॥

**सत्क्रियाभिरिति**। यथा नित्यं सततं सत्क्रियाभिः राज्यं चिरस्थायि भवेत् तथा स्वगोत्रं निजसन्ताने कुर्य्यात् तदेव आयुर्बलम् उच्यते, यस्मात् गोत्रे स्वसन्ताने यावत् राज्यम् अस्ति तिष्ठति, सः तावदेव तावत्कालपर्य्यन्तमित्यर्थः, जीवति ॥ १८ ॥

**चतुर्गुणं हि पादातमश्वतो धारयेत् सदा।**
**पञ्चमांशांस्तु वृषभानष्टांशांश्च क्रमेलकान् ॥ १९ ॥**
**चतुर्थांशान् गजानुष्ट्राद् गजार्द्धांश्च रथान् सदा।**
**रथात्तु द्विगुणं राजा बृहन्नालीकमेव च ॥ २० ॥**

**अन्वयः**—चतुर्थांशानिति राजा अश्वतः चतुर्गुणं पादातं पञ्चमांशान् वृषभान् तथा अष्टांशान् क्रमेलकान् उष्ट्रात् चतुर्थांशान् गजान् गजार्द्धान् रथान् तथा रथात् द्विगुणं बृहन्नालीकं सदा धारयेत् ॥ १९-२० ॥

**व्याख्या**—चतुर्थांशान् = तुरीयभागान्, राजा = नरपतिः, अश्वतः = अश्वारोहीसैन्यतः, चतुर्गुणम्, पादातम् = पदातिसैन्यम्, पञ्चमांशान् = पञ्चमभागान्, वृषभान् = बलदान्, तथा = तेनैव रूपेण, अष्टांशान् = अष्टमभागान्, क्रमेलकान् = दीर्घजङ्घान्, उष्ट्रात् = दासेरकात्, चतुर्थांशान् = तुरीयभागान्, गजान् = हस्तिनः, गजार्द्धान्—गजस्य = द्विरदस्य, अर्द्धान् = अर्द्धभागान्, रथान् = स्यन्दनान्, तथा रथात् = स्यन्दनात्, द्विगुणम् = द्विगुणितम्, बृहन्नालीकम् = शतघ्नीम्, सदा = सर्वदा, धारयेत् = धारणं कुर्यात् ॥ १९-२० ॥

**हिन्दी**—घुड़सवारों से चौगुनी पैदल सेना, घुड़सवारों का पाँचवाँ भाग बैल, आठवाँ हिस्सा ऊँट और ऊँटों का चौथा भाग हाथी, हाथी का आधा रथ और रथ का दूना तोप— इन्हें राजा सदैव अपनी सेना में रखे ॥ १९-२० ॥

**चतुर्गुणमिति**। चतुर्थांशानिति राजा अश्वतः अश्वसैन्यात् चतुर्गुणं पादातं पदातिसैन्यं, पञ्चमांशान् वृषभान्, तथा अष्टांशान् क्रमेलकान् उष्ट्रान् उष्ट्रात् उष्ट्रसैन्यात् चतुर्थांशान् गजान् गजार्द्धान् गजसैन्यात् अर्द्धसंख्यकान् रथान् तथा रथात् द्विगुणं बृहन्नालीकं बृहन्नालीकास्त्रसैन्यं सदा धारयेत् रक्षेत् ॥ १९-२० ॥

**पदातिबहुलं सैन्यं मध्याश्वं तु गजाल्पकम्।**
**तथा वृषोष्ट्रसामान्यं रक्षेन्नागाधिकं न हि ॥ २१ ॥**

**अन्वयः**—पदातिबहुलं मध्याश्वं गजाल्पकं तथा वृषोष्ट्रसामान्यं सैन्यं रक्षेत्, नागाधिकं न हि ॥ २१ ॥

**व्याख्या**– पदातिबहुलम् = बहुसंख्यकपदातिसैन्यम्, मध्याश्वम् = मध्यमस्तरीयं अश्वारोही-सैन्यम्, गजाल्पकम् = अल्पसंख्यकं गजारोहीसैन्यम्, तथा = तेन प्रकारेण, वृषोष्ट्रसामान्यम् = सामान्यसंख्यकं वृषारोही उष्ट्रारोही च, सैन्यम् = सैनिकम्, राजा, रक्षेत् = धारयेत्, नागाधिकम् = बहुसंख्यकं वाजञ्च, न = न हि, धारयेत् ॥ २१ ॥

**हिन्दी**—राजा की सेना में पैदल सिपाहियों की संख्या अधिक होनी चाहिए, अश्वारोहियों की मध्यम दर्जे की होनी चाहिए और गजारोहियों की संख्या सबसे कम होनी चाहिए, न कि इनकी संख्या अधिक हों ॥ २१ ॥

**पदातीति**। पदातिबहुलं बहुसंख्यकपदातिवर्गं मध्याश्वं मध्यविधसंख्यकतुरङ्गं गजाल्पकम् अल्यसंख्यकगजं तथा वृषोष्ट्रसामान्यं साधारणसंख्यकवृषोष्ट्रं सैन्यं रक्षेत् नागाधिकम् अधिकगजं न हि नैव रक्षेदित्यर्थः ॥ २१ ॥

**सवयः सारवेशोच्चशस्त्रास्त्रं तु पृथक् शतम्।**
**लघुनालिकयुक्तानां पदातीनां शतत्रयम् ॥ २२ ॥**
**अशीत्यश्वान् रथं चैकं बृहन्नालद्वयं तथा।**
**उष्ट्रान् दश गजौ द्वौ तु शकटौ षोडशर्षभान् ॥ २३ ॥**
**तथा लेखकषट्कं हि मन्त्रित्रितयमेव च।**
**धारयेन्नृपतिः सम्यग्वत्सरे लक्षकर्षभाक् ॥ २४ ॥**

**अन्वयः**—वत्सरे लक्षकर्षभाक् नृपतिः सवयः सारवेशोच्चशस्त्रास्त्रं च पृथक् शतं लघुनालिकयुक्तानां पदातीनां शतत्रयम् अशीत्यश्वान् एकं रथं बृहन्नालद्वयं दश उष्ट्रान्

द्वौ गजौ द्वौ शकटौ षोडश ऋषभान् लेखकषट्कं तथा मन्त्रित्रितयं सम्यक् धारयेत् ॥२२-२४॥

**व्याख्या**—वत्सरे = प्रतिवर्षे, लक्षकर्षभाक् = लक्षस्वर्णमुद्रागमवान्, नृपतिः = राजा, सवयः = तुल्यवयस्कम्, सारवेशम् = पराक्रमीप्रसाधनम्, उच्चानि = उत्कृष्टाणि, शस्त्राणि = आयुधानि, अस्त्राणि = प्रहरणानि, च यस्य तादृशम्, पृथक् = भिन्नम्, शतम् = शतसंख्यकम्, लघुनालिकयुक्तानाम् = नालास्त्रसैनिकानाम्, पदातीनाम् = पदगानाम्, शतत्रयम् = त्रिशतसंख्यकम्, अशीत्यश्वान् = अशीतिसंख्यकान् घोटकान्, एकम् = एकमात्रमेव, रथम् = स्यन्दनम्, बृहन्नालद्वयम् = द्वावेव शतघ्नीचालकौ गोलक्षेपकौ वेति, दश उष्ट्रान् = दशसंख्यकान् क्रमेलकान्, द्वौ गजौ = द्वौ द्विरदौ, द्वौ शकटौ = प्रवहणेऽपि द्वे, षोडशान् = षोडशसंख्यकान्, ऋषभान् = अनडुहः, लेखकषट्कम् = षट्संख्यकान् लिपिकारान्, तथा = अपि च, मन्त्रित्रितयम् = त्रीन् मन्त्रिणः, सम्यक् = सुष्ठुतया, धारयेत् = स्वायत्तीकुर्यात् ॥२२-२४॥

**हिन्दी**—जिस राजे की वार्षिक आय एक लाख मुद्रा हो वह एक ही उम्र के तरुणों को, जिनकी पोशाकें पराक्रमी हो, कद ऊँची हों ऐसे हथियारबन्द सौ जवानों की एक अलग टुकड़ी तैयार कर ले; तीन सौ बन्दूकयों की एक टुकड़ी अलग तैयार कर ले; अस्सी घोड़े, एक रथ, दो तोपची या गोलंदाज, दस ऊँट, दो हाथी, दो बैलगाड़ी, सोलह बैल, छः लेखक और तीन मंत्रियों के समूह को एक सेना के अन्दर ठीक ढंग से रखे ॥२२-२४॥

**सवय इत्यादि।** वत्सरे लक्षकर्षभाक् लक्षमुद्रागमवान् नृपतिः राजा सवयः समानवयस्कं सारवेशं कठिनपरिच्छदम् उच्चानि उन्नतानि शस्त्राणि अस्त्राणि यस्य तादृशं पृथक् विभिन्नं शतं शतसङ्ख्यापादातं लघुनालिकयुक्तानां क्षुद्रनालिकास्त्रधारिणां पदातीनां शतत्रयम्, अशीतिसंख्यकान् अश्वान् एकं रथं बृहन्नालद्वयं बृहन्नालिकास्त्रधारिणौ द्वौ, दश उष्ट्रान् द्वौ गजौ द्वौ शकटौ षोडश वृषभान् लेखकषट्कं षट् लेखकान् तथा मन्त्रित्रितयं त्रीन् मन्त्रिणः सम्यक् यथा तथा धारयेत् रक्षेत् ॥२२-२४॥

**सम्भारदानभोगार्थं धनं सार्द्धसहस्त्रकम्।**
**लेखकार्थे शतं मासि मन्त्र्यर्थे तु शतत्रयम्॥ २५ ॥**
**त्रिशतं दारपुत्रार्थे विद्वदर्थे शतद्वयम्।**
**साद्यश्वपदगार्थं हि राजा चतुःसहस्त्रकम्॥ २६ ॥**
**गजोष्ट्रवृषनालार्थं व्ययीकुर्य्याच्चतुःशतम्।**
**शेषं कोशे धनं स्थाप्यं राज्ञा सार्द्धसहस्त्रकम्॥ २७ ॥**

**अन्वयः**—राजा मासि सम्भारदानभोगार्थं सार्द्धसहस्रकं लेखकार्थे शतं मन्त्र्यर्थे शतत्रयं दारपुत्रार्थे त्रिशतं विद्वदर्थे शतद्वयं साद्यश्वपदगार्थं चतुःसहस्त्रकं गजोष्ट्रवृषनालार्थं चतुःशतं व्ययीकुर्यात्। राज्ञा शेषं सार्द्धसहस्रकं धनं कोशे स्थाप्यम् ॥२५-२७॥

**व्याख्या**—राजा = नृपः, मासि = प्रतिमासम्, सम्भारार्थम् = समाहरणार्थम्, दानार्थम् = उत्सर्जनार्थम्, च = पुनः, भोगार्थम् = निजोपभोगाय, सार्द्धसहस्रकम् = पञ्चदशशतम्, लेखकार्थे = लिपिकाराय, शतम् = मात्रैकशतम्, मन्त्र्यर्थे = मन्त्रिणां निमित्ते, शतत्रयम् = त्रिशतम्,

दारपुत्रार्थे = पत्नीपुत्रनिमित्तम्, त्रिशतम् = शतत्रयम्, विद्वदर्थे—विदुषाम् = विपश्चिताम्, अर्थे = निमित्ताय, शतद्वयम् = द्विशतम्, साद्यश्वपदगार्थम्—सादिनाम् = अश्वारोहिणाम्, अश्वानाम् = घोटकानाम्, पदगानाम् = पदातीनाम्, निमित्तम्, चतुःसहस्रकम् = चत्वारिंशच्छतम्, गजोष्ट्र-वृषनालार्थम्—गजानाम् = नागानाम्, उष्ट्राणाम् = दासेरकाणाम्, वृषाणाम् = वृषभाणाम्, नालानाम् = शतघ्नीचालकानाम्, निमित्तम्, चतुःशतम् = तुरीयशतम्, व्ययी कुर्यात् = व्ययं कर्त्तव्यम्, राज्ञा = नृपेण, शेषम् = अवशिष्टम्, सार्द्धसहस्रकम् = पञ्चदशशतम्, कोशे = भाण्डागारे, स्थाप्यम् = निःक्षेप्यम् ॥ २५-२७ ॥

**हिन्दी**—समाहरण, दान तथा आत्मभोग के लिए प्रतिमास डेढ़ हजार, प्रति लेखक सौ रुपये, मन्त्रियों के लिए तीन सौ, स्त्री-पुत्र के लिए तीन सौ, विद्वानों के सम्मानार्थ दो सौ, अश्वारोही एवं पैदल सिपाहियों के लिए चार हजार, ऊँट, बैल तथा बन्दूकची के लिए चार सौ रुपये प्रतिमास खर्च करे। शेष धन राजा राजकोष में सुरक्षित रख दे ॥ २५-२७ ॥

लक्षमुद्राणां व्ययनियममाह—**सम्भारेति**। राजा मासि प्रतिमासं सम्भारार्थं निजभोगार्थञ्च सार्द्धसहस्रकं पञ्चदशशतानि इत्यर्थः १५००, लेखकार्थे लेखकानां निमित्तं शतं १००, मन्त्रार्थे मन्त्रिणां निमित्तं शतत्रयं ३००, दारपुत्रार्थे स्त्रीपुत्रनिमित्तं त्रिशतं ३००, विद्वदर्थे विदुषां सम्मानार्थे शतद्वयं २००, साद्यश्वपदगार्थं सादिनाम् अश्वारोहिणाम् अश्वानां पदगानां पदातीनाञ्च निमित्तं चतुःसहस्रकं ४०००, गजानाम् उष्ट्राणां वृषाणां नालानां नालिकाख्यास्त्रधारिणां निमित्तं चतुःशतं ४०० व्ययीकुर्य्यात्। राज्ञा शेषम् अवशिष्टं सार्द्धसहस्रकं १५०० कोशे भाण्डारे स्थाप्यम् ॥ २५-२७ ॥

**प्रतिवर्षं स्ववेशार्थं सैनिकेभ्यो धनं हरेत् ॥ २८ ॥**

**अन्वयः**—प्रतिवर्षं स्ववेशार्थं सैनिकेभ्यः धनं हरेत् ॥ २८ ॥

**व्याख्या**—प्रतिवर्षम् = वर्षे वर्षे, स्ववेशार्थम् = निजनिजगणवेशार्थम्, सैनिकेभ्यः = रक्षापुरुषेभ्यः, धनम् = अर्थम्, हरेत् = दद्यादिति ॥ २८ ॥

**हिन्दी**—प्रतिवर्ष सेना के यूनिफार्म (गणवेश) के लिए सैनिकों को धन देना चाहिए ॥ २८ ॥

**प्रतिवर्षमिति**। प्रतिवर्षं वर्षे वर्षे स्ववेशार्थं निजनिजपरिच्छदार्थं सैनिकेभ्यः धनं हरेत् दद्यादित्यर्थः ॥ २८ ॥

**लोहसारमयश्चक्रसुगमो मञ्चकासनः।**
**स्वान्दोलायितरूढस्तु मध्यमासनसारथिः ॥ २९ ॥**
**शस्त्रास्त्रसन्धार्य्युदर इष्टच्छायो मनोरमः।**
**एवंविधो रथो राज्ञा रक्ष्यो नित्यं सदश्वकः ॥ ३० ॥**

**अन्वयः**—लोहसारमयः चक्रसुगमः मञ्चकासनः स्वान्दोलायितरूढः मध्यमासनसारथिः शस्त्रास्त्रसन्धार्य्युदरः इष्टच्छायः मनोरमः तथा सदश्वकः—एवंविधः रथः राज्ञा नित्यं रक्ष्यः ॥ २९-३० ॥

**व्याख्या**—लोहसारमयः = उत्तमलौहरचितः, चक्रसुगमः—चक्रैः = रथाङ्गैः, सुगमेन = अनायासेन, गच्छति = यातीति तथोक्तः, मञ्चकासनः—मञ्चकम् = खट्वा, इव आसनम् = उपवेशनप्रकारः, यस्मिन् सः = रथः, पर्यङ्कासनयुक्तः, स्वेन = आत्मना, आन्दोलायितः = असकृत्

कम्पायितः, रूढः = आरोही, यस्मिन् तथाभूतः, मध्यमम् = मध्यस्तरीयम्, आसनम् = उपवेशनम्, यस्य तादृशः, सारथिः = रथचालकः, यस्मिन् सः, शस्त्राणि = शत्रुघ्नानि, अस्त्राणि = प्रहरणानि, च, सन्धारयतीति = स्थापयतीति, तादृशम्, उदरम् = अभ्यन्तरम्, यस्य तथोक्तः, इष्टच्छायः = मनोऽनुकूलच्छायः, मनोरमः = मनोज्ञः, तथा सदश्वकः = श्रेष्ठघोटकान्वितः, एवंविधः = एतादृशः, रथः = स्यन्दनः, राज्ञा = नृपेण, नित्यम् = सततम्, रक्ष्यः = रक्षणीयः ॥ २९-३० ॥

**हिन्दी**—उत्कृष्ट लोहे का बना हुआ, अति सुगमता से घुमने वाले चक्के वाले, सुखपूर्वक पंलग की तरह बैठने वाली जगह वाला, जिसमें बैठने से देह स्वयं झूले की तरह हिचकोला खाये अर्थात् कमानीदार, जिसके अगले हिस्से के बीच में सारथी के बैठने की जगह हो, अनेक हथियारों से भीतरी भाग भरा पड़ा हो, अच्छे-अच्छे घोड़े जुते हों, ऐसा सुन्दर रथ राजा को हमेशा अपने पास रखना चाहिए ॥ २९-३० ॥

**लोहेति। शस्त्रेति।** लोहसारमयः उत्कृष्टलौहनिर्मितः, चक्रसुगमः चक्रैः सुखेन गच्छतीति तथोक्तः, मञ्चकम् आसनं यस्मिन् सः पर्य्यङ्कासनसहितः स्वेन आत्मना आन्दोलितः रूढः आरोही यस्मिन् तथाभूतः, मध्यमम् आसनं यस्य तादृशः सारथिर्यस्मिन् सः, शस्त्राणि अस्त्राणि च सन्धारयतीति तादृशम् उदरम् अभ्यन्तरं यस्य तथोक्तः इष्टच्छायः अभिलषितच्छायः मनोरथः तथा सदश्वकः उत्कृष्टाश्वसंयुतः एवंविधः रथः राज्ञा नित्यं सततं रक्ष्यः ॥ २९-३० ॥

**नीलतालुर्नीलजिह्वो वक्रदन्तो ह्यदन्तकः ।**
**दीर्घद्वेषी क्रूरमदस्तथा पृष्ठविधूनकः ॥ ३१ ॥**
**दशाष्टोननखो मन्दो भूविशोधनपुच्छकः ।**
**एवंविधोऽनिष्टगजो विपरीतः शुभावहः ॥ ३२ ॥**

**अन्वयः**—नीलतालुः नीलजिह्वः वक्रदन्तः वा अदन्तकः दीर्घद्वेषी क्रूरमदः तथा पृष्ठविधूनकः दशाष्टोननखः मन्दः भूविशोधनपुच्छकः एवंविधः गजः अनिष्टः विपरीतः शुभावहः ॥ ३१-३२ ॥

**व्याख्या**—नीलतालुः = कृष्णकाकुदः, नीलजिह्वः = कृष्णजिह्वः, वक्रदन्तः = कुटिलरदः, वा = अथवा, अदन्तकः = दन्तविहीनः, दीर्घद्वेषी = चिरस्थायि क्रोधः, क्रूरमदः = विशृङ्खलमदस्रावी, तथा पृष्ठविधूनकः = पृष्ठकम्पकः, दशाष्टोननखः—दशभिः अष्टाभिर्वा, ऊनाः = हीनाः, नखाः यस्य तादृशः, मन्दः = स्थिरगमनशीलः, भूविशोधनपुच्छकः—पुच्छेन = लाङ्गुलेन, भूमेः = पृथिव्याः, विशोधनकारी = सम्मार्जनकारी, एवंविधः = एतादृशः, गजः = हस्ती, अनिष्टः = अमङ्गलकरः, विपरीतः = पूर्वोक्तलक्षणविरुद्धः, शुभावहः = मङ्गलदायकः ॥ ३१-३२ ॥

**हिन्दी**—नीले तालु और जीभ वाला, टेढ़े दाँत वाला या फिर बिना दाँत के, देर तक गुस्सा रखने वाला, अनियमित मद चुलाने वाला, पीठ हिलाने वाला, अठारह से कम नाखून वाला, मन्दगति अर्थात् धीरे-धीरे चलने वाला तथा धरती तक लटकी लम्बी पूँछ वाला हाथी अनिष्ट फल देने वाला होता है और ऊपरवर्णित लक्षणों से भिन्न लक्षण वाला हाथी शुभ फल देने वाला होता है ॥ ३१-३२ ॥

**नीलेति। दशेति।** नीलतालुः नीलवर्णतालुदेशः, नीलजिह्वः, वक्रदन्तः वा अदन्तकः, दीर्घद्वेषी दीर्घकालस्थायिक्रोधः, क्रूरमदः विशृङ्खलमदवर्षी पृष्ठविधूनकः पृष्ठकम्पकः, दशाष्टोननखः दशभिः अष्टाभिर्वा ऊनाः नखाः यस्य तादृशः मन्दः अल्पगामी, भूविशोधनपुच्छकः पुच्छेन भूमेर्विशोधनकारीत्यर्थः, एवंविधः गजः अनिष्टः अशुभकरः, विपरीतस्तु शुभावहः ॥ ३१-३२ ॥

**भद्रो मन्द्रो मृगो मिश्रो गजो जात्या चतुर्विधः ॥ ३३ ॥**

**अन्वयः**—गजः भद्रः मन्द्रः मृगः मिश्रः इति जात्या चतुर्विधः ॥ ३३ ॥

**व्याख्या**—गजः = हस्ती, भद्रः = शिष्टः, मन्द्रः = मनोहरः गम्भीरो वा, मृगः = वन्यपशुः, मिश्रः = मिश्रितलक्षणयुक्तः, जात्या = जातिभेदेन, चतुर्विधः = चतुष्प्रकारको भवतीति ॥ ३३ ॥

**हिन्दी**—भद्र, मंद्र, मृग और मिश्र भेद से हाथी की चार प्रजातियाँ होती हैं ॥ ३३ ॥

**भद्र इति**। गजः भद्रः, मन्द्रः, मृगः, मिश्रः इति जात्या जातिभेदेन चतुर्विधः ॥ ३३ ॥

**मध्वाभदन्तः सबलः समाङ्गो वर्त्तुलाकृतिः।**
**सुमुखोऽवयवश्रेष्ठो ज्ञेयो भद्रगजः सदा ॥ ३४ ॥**

**अन्वयः**—मध्वाभदन्तः सबलः समाङ्गः वर्त्तुलाकृतिः सुमुखः अवयवश्रेष्ठः सदा भद्रगजः ज्ञेयः ॥ ४० ॥

**व्याख्या**—तत्र भद्रगजस्य लक्षणमाह- मध्वाभदन्तः- मधुनः = पुष्परसस्य दुग्धस्य वा, आभा = कान्तिरिव कान्तिः, ययोः तादृशौ, दन्तौ = रदनौ, यस्य तथोक्तः, सबलः = शक्तिसम्पनः, समाङ्गः—समानि = तुल्यानि, अङ्गानि = शरीरावयवानि, यस्य सः, वर्त्तुलाकृतिः = गोलाकारः, सुमुखः—सुष्ठु, मुखः = आननः, यस्य तादृशः गजः, अवयवश्रेष्ठः—अवयवेषु = शरीराङ्गेषु, अन्येभ्यः गजेभ्यः श्रेष्ठः = उत्कृष्टः, सदा = सर्वदा, भद्रगजः, ज्ञेयः = बोध्यः ॥ ३४ ॥

**हिन्दी**—शहद अथवा दूध की तरह कान्ति से युक्त दाँतों वाला, बलवान्, समतल अंगोंवाला, गोल आकारवाला, सुन्दर मुँह वाला, उत्कृष्ट शरीरावयवों वाले हाथी को सदैव 'भद्रगज' जानना चाहिए ॥ ३४ ॥

तत्र भद्रमाह- **मध्वाभेति**। मध्वाभदन्तः मधुनः आभा इव आभा ययोः तादृशौ दन्तौ यस्य तथोक्तः सबलः अतिबलान् समाङ्गः समानि न तु विसदृशानीत्यर्थः, अङ्गानि यस्य सः, वर्त्तुलाकृतिः सुगोलावयवः सुमुखः तथा अवयवेषु अङ्गेषु अन्येभ्यः श्रेष्ठः गजः सदा भद्रगजः ज्ञेयः ॥ ३४ ॥

**स्थूलकुक्षिः सिंहदृक् च बृहत्त्वग्गलशुण्डकः।**
**मध्यमावयवो दीर्घकायो मन्द्रगजः स्मृतः ॥ ३५ ॥**

**अन्वय**—स्थूलकुक्षिः सिंहदृक् बृहत्त्वग्गलशुण्डकः मध्यमावयवः दीर्घकायः मन्द्रगजः स्मृतः ॥ ३५ ॥

**व्याख्या**—स्थूलकुक्षिः = दीर्घोदरः, सिंहदृक् = वनराजदृष्टिः, बृहत्त्वग्गलशुण्डकः— बृहत्यः = विशालाः, त्वचा = चर्म, गलः = कण्ठः, शुण्डा = करश्च, यस्य तथोक्तः, मध्यमावयवः = मध्यस्तरीयशरीरावयवः, तथा दीर्घकायः = विशालदेहः, गजः, मन्द्रगजः, स्मृतः = कथितः ॥ ३४ ॥

**हिन्दी**—लम्बा पेट, आँखें सिंह की तरह, चमडा मोटा, गला और सूँढ लम्बी, शरीर के अङ्ग मध्यम दर्जे के और देह विशाल, ऐसे हाथी को 'मन्द्र' जानना चाहिए ॥ ३४ ॥

मन्द्रमाह—**स्थूलेति**। स्थूलकुक्षिः बृहदुदरः सिंहदृक् सिंहदृष्टिः बृहत्त्वग्गलशुण्डकः बृहत्यः त्वचः गलः शुण्डा च यस्य तथोक्तः मध्यमावयवः मध्यमशरीरः तथा दीर्घकायः गजः मन्द्रगजः स्मृतः ॥ ३५ ॥

**तनुकण्ठदन्तकर्णशुण्डः स्थूलाक्ष एव हि।**
**सुह्रस्वाधरमेढ्रस्तु वामनो मृगसंज्ञकः ॥ ३६ ॥**

**अन्वयः**—तनुकण्ठदन्तकर्णशुण्डः स्थूलाक्षः सुह्रस्वाधरमेढ्रः वामनः मृगसंज्ञकः ज्ञेयः ॥ ३६ ॥

**व्याख्या**—तनुकण्ठदन्तकर्णशुण्डः= कृशकण्ठदशनश्रवणशुण्डारः, स्थूलाक्षः= नतोन्नतनयनः, सुह्रस्वाधरमेढ्रः= अतिलघु अधस्तनः ओष्ठः उपस्थश्च, तथा वामनः= लघुकायः, गजः= हस्ती, मृगसंज्ञकः= मृगगजः, इति ज्ञेयः= ज्ञातव्य इति ॥ ३६ ॥

**हिन्दी**—जिसके गर्दन, दाँत, कान और सूँढ पतले हों; आँखें बेडौल, ओठ और लिंग बहुत छोटे तथा शरीर भी छोटा हो, उसे 'मृगगज' कहते हैं ॥ ३६ ॥

मृगमाह— **तन्विति**। तनुकण्ठदन्तकर्णशुण्डः क्षुद्रकण्ठदन्तकर्णशुण्डः स्थूलाक्षः स्थूलनेत्रः सुह्रस्वाधरमेढ्रः अतिक्षुद्राधरः अतिक्षुद्रोपस्थश्च तथा वामनः खर्वकायः गजः मृगसंज्ञकः मृगगज इति ख्यातः ॥ ३६ ॥

**एषां लक्ष्मैर्विमिलितो गजो मिश्र इति स्मृतः।**
**भिन्नं भिन्नं प्रमाणन्तु त्रयाणामपि कीर्त्तितम् ॥ ३७ ॥**

**अन्वयः**—एषां लक्ष्मैः विमिलितः गजः मिश्र इति स्मृतः। त्रयाणामपि प्रमाणं तु भिन्नं भिन्नं कीर्त्तितम् ॥ ३७ ॥

**व्याख्या**—एषाम्= पूर्वोक्तानां त्रयाणां गजानाम्, लक्ष्मैः= लक्षणैः, विमिलितः= विशिष्टरूपेण, मिलितम्= मिश्रितम्, गजः= करी, मिश्रगजः, इति स्मृतः= कथितः, त्रयाणामपि= भद्रादिगजानामपि, प्रमाणम्= उपपत्तिः, भिन्नं भिन्नं= पृथक् पृथक्, कीर्त्तितम्= कथितम् ॥३७ ॥

**हिन्दी**—इन सबों के कुछ-कुछ लक्षण जिसमें मिलते हों, उसे मिश्रगज समझना चाहिए। उक्त तीनों गजों के प्रमाण भी अलग-अलग बताये जा चुके हैं ॥ ३७ ॥

मिश्रमाह— **एषामिति**। एषां भद्रादीनां त्रयाणां लक्ष्मैः चिह्नैः विमिलितः विशेषेण मिलितः गजः मिश्रः इति स्मृतः। अन्येषां त्रयाणां गजानां प्रमाणं भिन्नं भिन्नं पृथक् पृथक् कीर्त्तितम् ॥३७ ॥

**गजमाने ह्यङ्गुलं स्यादष्टभिस्तु यवोदरैः।**
**चतुर्विंशत्यङ्गुलैस्तैः करः प्रोक्तो मनीषिभिः ॥ ३८ ॥**

**अन्वयः**—गजमाने अष्टभिः यवोदरैः अङ्गुलं स्यात्, तैः चतुर्विंशत्यङ्गुलैः मनीषिभिः करः प्रोक्तः ॥ ३८ ॥

**व्याख्या**—गजमाने—गजस्य= नागस्य, माने= मापने, अष्टभिः= अष्टाभिः, यवभिः= यवोदरैः= धान्यराजान्तरैः, अङ्गुलम्= अङ्गुलिमानम्, स्यात्= भवेत्, तैः= यवोदरैः, चतुर्विंशतिः= चतुरधिकविंशतिः, अङ्गुलैः= अङ्गुलिभिः, मनीषिभिः= विद्वद्भिः, करः= हस्तः, प्रोक्तः= कथितः ॥ ३८ ॥

**हिन्दी**—गजों को नापने के लिए आठ जौ की एक अंगुल और चौबीस अंगुल का एक हाथ विद्वानों ने माना है ॥ ३८ ॥

**गजमाने इति**। गजमाने हस्तिपरिमाणे अष्टभिः यवोदरैः अङ्गुलं स्यात्, तैः चतुर्विंशत्यङ्गुलैः मनीषिभिः करः प्रोक्तः ॥ ३८ ॥

सप्तहस्तोन्नतिर्भद्रे ह्यष्टहस्तप्रदीर्घता।
परिणाहो दशकर उदरस्य भवेत् सदा॥ ३९॥

**अन्वयः**—भद्रे सप्तहस्ता उन्नतिः अष्टहस्तप्रदीर्घता उदरस्य परिणाहः दशकरः सदा भवेत्॥ ३९॥

**व्याख्या**—भद्रे = भद्रगजे, सप्तहस्ता = सप्तहस्तपरिमिता, उन्नतिः = उच्चता भवति, अष्टहस्तप्रदीर्घता = अष्टहस्तमिताऽयामः, उदरस्य = मध्यभागस्य, परिणाहः = विस्तारः, दशकरः = दशहस्तः, सदा = सर्वदा, भवेत् = स्यात्॥ ३९॥

**हिन्दी**—भद्रगज की ऊँचाई सात हाथ, लम्बाई आठ हाथ और पेट का विस्तार दश हाथ होता है॥ ३९॥

**सप्तेति**। भद्रे हस्तिनि सप्तहस्ता उन्नतिः, अष्टहस्तप्रदीर्घता अष्टहस्ताः दीर्घता, उदरस्य परिणाहः विस्तारः दशकरः सदा भवेत्॥ ३९॥

प्रमाणं मन्द्रमृगयोर्हस्तहीनं क्रमादतः।
कथितं दैर्घ्यसाम्यन्तु मुनिभिर्भद्रमन्द्रयोः॥ ४०॥

**अन्वयः**—मन्द्रमृगयोः प्रमाणम् अतः क्रमात् हस्तहीनं तथा भद्रमन्द्रयोः दैर्घ्यसाम्यं मुनिभिः कथितम्॥ ४०॥

**व्याख्या**—मन्द्रमृगयोः = मन्द्रगजस्य मृगगजस्य च, प्रमाणम् = निदर्शनम्, अतः = अस्मात्, कारणात्, क्रमात् = अनुक्रमेण, हस्तहीनम् = करैकन्यूनम्, तथा भद्रमन्द्रयोः = भद्रगजस्य मन्द्रगजस्य, च, दैर्घ्यसाम्यम् = लम्बतातुल्यम्, मुनिभिः = ऋषिभिः, कथितम् = प्रोक्तम्॥४०॥

**हिन्दी**—मन्द्र और मृग गज की ऊँचाई का प्रमाण भद्रगज से क्रमशः एक-एक हाथ छोटी होती है। किन्तु मुनियों ने भद्र और मन्द्र की लम्बाई एक जैसी बतलायी है॥ ४०॥

**प्रमाणमिति**। मन्द्रमृगयोः गजयोः प्रमाणम् अतः भद्रगजात् क्रमात् क्रमेण हस्तहीनं तथा भद्रमन्द्रयोः दैर्घ्यसाम्यं मुनिभिः कथितम्॥ ४०॥

बृहद्भ्रूगण्डफालस्तु धृतशीर्षगतिः सदा।
गजः श्रेष्ठस्तु सर्वेषां शुभलक्षणसंयुतः॥ ४१॥

**अन्वयः**—बृहद्भ्रूगण्डफालः सदा धृतशीर्षगतिः शुभलक्षणसंयुतः गजः सर्वेषां श्रेष्ठः॥ ४१॥

**व्याख्या**—बृहद्भ्रूगण्डफालः = विशालचिल्लिकाकपोलदेशः, सदा = सर्वदा, धृतशीर्षगतिः = उत्कृष्टगमनकारी, शुभलक्षणसंयुक्तः = माङ्गलिकलक्षणसमन्वितः, गजः = हस्ती, सर्वेषाम् = सकलानाम्, हस्तिनाम्, श्रेष्ठः = उत्कृष्टः॥ ४१॥

**हिन्दी**—जिस हाथी के भौंह, कपोल तथा मस्तक विशाल हो, जिसकी चाल शीघ्र गति युक्त हो, जो समस्त शुभ लक्षणों से युक्त हो, वह हाथियों में सर्वश्रेष्ठ हाथी होता है॥ ४१॥

**बृहदिति**। बृहद्भ्रूगण्डफालः विशालभ्रूगण्डदेशः सदा धृतशीर्षगतिः गृहीतोत्कृष्टगतिः शुभलक्षणसंयुतः गजः सर्वेषां गजानां श्रेष्ठः॥ ४१॥

पञ्चयवाङ्गुलेनैव वाजिमानं पृथक् स्मृतम्॥ ४२॥

**अन्वयः**—पञ्चभिः यवैः अङ्गुलेन पृथक् वाजिमानं स्मृतम्॥ ४२॥

**व्याख्या**—पञ्चभिर्यवैः = पञ्चयवपरिमितैः, अङ्गुलेन = अङ्गुलियकेन करेण, पृथक् = भिन्नम्, वाजिनाम् = घोटकानाम्, मापम्, स्मृतम् = कथितम् ॥ ४२ ॥

**हिन्दी**—घोड़ों का माप हाथियों के माप से भिन्न होता है। इसमें पाँच जौ का एक हाथ होता है ॥ ४२ ॥

**पञ्चेति**। पञ्चभिर्यवैः अङ्गुलेन पृथक् वाजिमानम् अश्वपरिमाणं स्मृतम् ॥ ४२ ॥

**चत्वारिंशाङ्गुलमुखो वाजी यश्चोत्तमोत्तमः।**
**षट्त्रिंशदङ्गुलमुखो ह्युत्तमः परिकीर्तितः ॥ ४३ ॥**

**अन्वयः**—यः वाजी चत्वारिंशाङ्गुलमुखः सः उत्तमोत्तमः। षट्त्रिंशदङ्गुलमुखः वाजी उत्तमः परिकीर्त्तितः ॥ ४३ ॥

**व्याख्या**—यः = यथानिर्दिष्टः, वाजी = अश्वः, चत्वारिंशत् अङ्गुलानि परिमाणमस्येति तथोक्तम्, मुखम् = आननम्, यस्य तथाभूतः, सः = वाजी, उत्तमोत्तमः—उत्तमेषु = उत्कृष्टेषु, उत्तमः = उत्कृष्टः। षट्त्रिंशदङ्गुलमुखः घोटकस्तु, उत्तमः = श्रेष्ठः, परिकीर्त्तितः = कथितः ॥ ४३ ॥

**हिन्दी**—जिस घोड़े का मुख चालीस अंगुलि का होता है, वह घोड़ा अति उत्कृष्ट माना जाता है और जिसका मुँह छत्तीस अंगुली का होता है, वह उत्तम कहा गया है ॥ ४३ ॥

**चत्वारिंशेति**। यः वाजी अश्वः चत्वारिंशत् अङ्गुलानि परिमाणमस्येति तथोक्तं मुखं यस्य तथाभूतः, सः उत्तमोत्तमः अत्युत्तमः। षट्त्रिंशदङ्गुलमुखः वाजी उत्तमः परिकीर्त्तितः ॥ ४३ ॥

**द्वात्रिंशदङ्गुलमुखो मध्यमः स उदाहृतः।**
**अष्टाविंशत्यङ्गुलो यो मुखे नीचः प्रकीर्त्तितः ॥ ४४ ॥**

**अन्वयः**—द्वात्रिंशदङ्गुलमुखः यः वाजी सः मध्यमः उदाहृतः। यः मुखे अष्टाविंशत्यङ्गुलः सः नीचः प्रकीर्त्तितः ॥ ४४ ॥

**व्याख्या**—द्वात्रिंशदङ्गुलमुखः = द्वात्रिंशत् अङ्गुलानि परिमाणमस्येति तथोक्तम्, मुखम् = आननम्, यस्य तथाभूतः, यः वाजी = घोटकः, सः = अश्वः, मध्यमः = सामान्यः, उदाहृतः = प्रोक्तः। यश्च मुखे = आनने, अष्टाविंशत्यङ्गुलः, सः = वाजी, नीच = अधमः, प्रकीर्त्तितः = कथितः ॥ ४४ ॥

**हिन्दी**—बत्तीस अंगुल के मुख वाला घोड़ा मध्यम दर्जे का समझा जाता है और जिस घोड़े का मुँह अट्ठाइस अंगुल का होता है, वह अधम कोटि का घोड़ा माना जाता है ॥ ४४ ॥

**द्वात्रिंशदिति**। द्वात्रिंशदङ्गुलमुखः यः वाजी सः मध्यमः उदाहृतः कथितः। यश्च मुखे अष्टाविंशत्यङ्गुलः सः नीचः प्रकीर्त्तितः ॥ ४४ ॥

**वाजिनां मुखमानेन सर्वावयवकल्पना।**
**औच्चन्तु मुखमानेन त्रिगुणं परिकीर्त्तितम् ॥ ४५ ॥**

**अन्वयः**—वाजिनां मुखमानेन सर्वावयवकल्पना औच्चं तु मुखमानेन त्रिगुणं परिकीर्त्तितम् ॥ ४५ ॥

**व्याख्या**—वाजिनाम् = घोटकानाम्, मुखमानेन = आननमितेन, सर्वेषाम् = सकलानाम्, अवयवानाम् = अङ्गानाम्, कल्पना = विचारणा, कार्या, औच्चम् = आरोहः, तु, मुखमानेन—मुखस्य, मानेन = परिमाणेन, त्रिगुणम् = गुणत्रयम्, परिकीर्त्तितम् = कथितम् ॥ ४५ ॥

**हिन्दी**—घोड़ों के मुँह की माप के अनुसार ही देह के अन्य अङ्गों की माप की कल्पना करनी चाहिए। मुँह के माप की तिगुनी घोड़े की उँचाई होनी चाहिए ॥ ४५ ॥

**वाजिनामिति**। वाजिनाम् अश्वानां मुखमानेन मुखपरिमाणेन सर्वेषाम् अन्येषाम् अवयवानां कल्पना कार्य्या इति शेषः। औच्चन्तु उच्चता तु मुखमानेन मुखपरिमाणादित्यर्थः, करणविवक्षया तृतीया, त्रिगुणं परिकीर्त्तितम् ॥ ४५ ॥

**शिरोमणिं समारभ्य पुच्छमूलान्तमेव हि।**
**तृतीयांशाधिकं दैर्घ्यं मुखमानाच्चतुर्गुणम् ॥ ४६ ॥**

**अन्वयः**—शिरोमणिं समारभ्य पुच्छमूलान्तं दैर्घ्यं मुखमानात् तृतीयांशेन अधिकं चतुर्गुणम् ॥ ४६ ॥

**व्याख्या**—शिरोमणिम् = घोटकस्य लक्षणविशेषः चूडामणिः, समारभ्य = प्रारभ्य, पुच्छमूलान्तम् = पुच्छमूलपर्यन्तम्, दैर्घ्यम् = दीर्घता, मुखामानात्—मुखस्य = आननस्य, मानात् = परिमाणात्, तृतीयांशेन = भागत्रयेण, अधिकम् = अतिरिक्तम्, चतुर्गुणम्भवति ॥ ४६ ॥

**हिन्दी**—घोड़े के शिर पर उगे मणिचिह्नों से लेकर पूँछ के मूल भाग तक की लम्बाई मुँह के माप की तिगुनी से अधिक चौगुनी होनी चाहिए ॥ ४६ ॥

**शिरोमणिमिति**। शिरोमणिम् अश्वानां शिरस्थचिह्नविशेषमित्यर्थः, समारभ्य पुच्छमूलान्तं पुच्छमूलपर्य्यन्तं दैर्घ्यं मुखमानात् तृतीयांशेन अधिकं युक्तं चतुर्गुणम् ॥ ४६ ॥

**परिणाहस्तूदरस्य त्रिगुणस्त्र्यङ्गुलाधिकः।**
**साधारणमिदं मानमुच्यते विस्तरादथ ॥ ४७ ॥**

**अन्वयः**—उदरस्य परिणाहः तु त्र्यङ्गुलाधिकः त्रिगुणः। इदं मानं साधारणम्, अथ विस्तरात् उच्यते ॥ ४७ ॥

**व्याख्या**—उदरस्य = तुन्दस्य, परिणाहः = विस्तारः, तु, त्र्यङ्गुलाधिकः—अङ्गुलित्रयेण, अधिकम् = अतिरिक्तम्, त्रिगुणः = गुणत्रयम्, इदम् = एतत्, मानम् = परिमाणम्, साधारणम् = सामान्यम्, कथितम्, अथ = अनन्तरम्, विस्तरात् = विस्तारात्, उच्यते = कथ्यते ॥ ४७ ॥

**हिन्दी**—और पेट का फैलाव मुँह के माप से तीन अंगुल ज्यादा तिगुना होता है। यह घोड़ा की साधारण माप कही गई, इसके बाद विस्तारपूर्वक कहते हैं ॥ ४७ ॥

**परिणाह इति**। उदरस्य परिणाहः विस्तारस्तु त्र्यङ्गुलाधिकः अङ्गुलत्रयेण अधिकः युक्त त्रिगुणः। इदं मानं परिमाणं साधारणं सामान्यम् उक्तमिति शेषः, अथ विस्तरात् उच्यते कथ्यते ॥ ४७ ॥

**अष्टाविंशाङ्गुलमुखं पुरस्कृत्य यथा तथा।**
**शफोच्चं त्र्यङ्गुलं ज्ञेयं मणिबन्धोऽङ्गुलाधिकः ॥ ४८ ॥**

**अन्वयः**—अष्टाविंशाङ्गुलमुखं नीचं पुरस्कृत्य यथा शफोच्चं त्र्यङ्गुलं तथा मणिबन्धः अङ्गुलाधिकः ॥ ४८ ॥

**व्याख्या**—अष्टाविंशाङ्गुलमुखम् = मुखमानमष्टाविंशत्यङ्गुलम्, यस्याश्वस्य तत्, नीचम् = अधमम्, पुरस्कृत्य = आश्रित्य, शफानाम् = खुराणाम्, औच्चम् = उच्चता, त्र्यङ्गुलम् = अङ्गुलित्रयम्, तथा = तेनैव प्रकारेण, मणिबन्धः = शफोपरिभागः, अङ्गुलाधिकः = अङ्गुल्येकमेवाधिकम् अर्थात् चतुरङ्गुलं भवति ॥ ४८ ॥

**हिन्दी**—यदि अट्ठाईस अंगुल मुँह के माप वाला नीचसंज्ञक घोड़ा हो तो उसके खुर की ऊँचाई तीन अंगुल की होती है और खुर से ऊपर वाले भाग अर्थात् मणिबंध की ऊँचाई इससे एक अंगुल ज्यादा अर्थात् चार अंगुल की होती है ॥४८ ॥

**अष्टेति**। अष्टाविंशाङ्गुलमुखं नीचम् अश्वमित्यर्थः, पुरस्कृत्य अवलम्ब्य यथा शफानां खुराणाम् औच्चम् औन्नत्यं त्र्यङ्गुलम् अङ्गुलत्रयमितं, तथा मणिबन्धः खुरोपरिभागः अङ्गुलाधिकः त्र्यङ्गुलः चतुरङ्गुल इत्यर्थः ॥४८ ॥

**चतुर्हस्ताङ्गुला जङ्घा त्र्यङ्गुलं जानु कीर्त्तितम्।**
**चतुर्दशाङ्गुलावूरू कूर्परान्तः स्मृतौ बुधैः ॥४९ ॥**

**अन्वयः**—जङ्घा चतुर्हस्ताङ्गुला तथा जानु त्र्यङ्गुलं कीर्त्तितम्। कूर्परान्तम् ऊरू चतुर्दशाङ्गुलौ बुधैः स्मृतौ ॥४९ ॥

**व्याख्या**—जङ्घा = टक्किका, चतुर्हस्ताङ्गुला = तुरीयकराङ्गुलिमिता, तथा = तेनैव रूपेण, जानु = ऊरुपर्वन्, त्र्यङ्गुलम् = अङ्गुलित्रयमितम्, कीर्त्तितम् = कथितम्, कूर्परान्तम् = कपोणिपर्यन्तम्, ऊरू = जानुपरिभागः, चतुर्दशाङ्गुलौ, बुधैः = पण्डितैः, स्मृतौ = कथितौ ॥४९ ॥

**हिन्दी**—जंघा अर्थात् टखने से घुटने तक का भाग चार हाथों की अंगुलि प्रमाण की, जानु अर्थात् ऊरुपर्व या घुटना तीन अंगुलि की माप का कहा गया है। जानु के ऊपर के भाग से लेकर केहुनी तक चौदह अंगुलियों का पण्डितों ने कहा है ॥४९ ॥

**चतुरिति**। जङ्घा चतुर्हस्ताङ्गुला, तथा जानु त्र्यङ्गुलम् अङ्गुलत्रयमितं कीर्त्तितम्। कूर्परान्तं कपोणिपर्य्यन्तम् ऊरू चतुर्दशाङ्गुलौ बुधैः स्मृतौ ॥४९ ॥

**अष्टत्रिंशाङ्गुलं ज्ञेयं स्कन्धान्तं कूर्परादितः।**
**प्रत्यगूरू मुखसमौ जङ्घोना पादमानतः ॥५० ॥**

**अन्वयः**—इतः कूर्परात् स्कन्धान्तम् अष्टत्रिंशत्यङ्गुलं ज्ञेयम्। प्रत्यगूरू मुखसमौ, जङ्घा पादमानतः ऊनाः ॥५० ॥

**व्याख्या**—इतः = अस्मात् कूर्परात् प्रारभ्य, स्कन्धान्तम् = भुजमूलपर्यन्तम्, अष्टत्रिंशाङ्गुलम् = अष्टत्रिंशाङ्गुलिमितम्, ज्ञेयम् = बोध्यम्, प्रत्यगूरू = पश्चिमावूरू, मुखसमौ = मुखपरिमाण-समौ, जङ्घा = पश्चिमजङ्घा, पादमानतः = अपरजङ्घा चतुर्थमानात्, ऊना = हीना, बोध्येति ॥५० ॥

**हिन्दी**—केहुनी से लेकर कंधे तक घोड़े की ऊँचाई अड़तीस अंगुल की होती है और पीछे से दोनों ऊरू मुख के समान अट्ठाईस अंगुल प्रमाण के होते हैं। पीछे की जंघा चौथाई मान से कम की होती हैं ॥५० ॥

**अष्टेति**। इतः अस्मात् कूर्परात् आरभ्येति शेषः, स्कन्धान्तं स्कन्धपर्य्यन्तम् अष्टत्रिंशाङ्गुलम् अष्टत्रिंशाङ्गुलपरिमाणं ज्ञेयम्। प्रत्यगूरू पश्चिमावूरू मुखसमौ मुखपरिमाणसमौ अष्टाविंशाङ्गुलावित्यर्थः। जङ्घा प्रत्यग्जङ्घा इत्यर्थः, पादमानतः अपरजङ्घाः चतुर्थमानात् ऊना हीना इत्यर्थः ॥५० ॥

**प्रोक्तोच्चता चाथ दैर्घ्यमुच्यते शास्त्रसङ्गतम् ॥५१ ॥**

**अन्वयः**—उच्चता प्रोक्ता, अथ दैर्घ्यं शास्त्रसङ्गतम् उच्यते ॥५१ ॥

**व्याख्या**—उच्चता = अश्वस्यौन्नत्यम्, प्रोक्ता = कथिता, अथ = अनन्तरम्, दैर्घ्यम् = लम्बता, शास्त्रसङ्गतम् = शास्त्रविहितम्, उच्यते = कथ्यते ॥५१ ॥

**हिन्दी**—इस प्रकार अंगों की ऊँचाई का वर्णन किया गया, अब इनकी लम्बाई का शास्त्रसंगत वर्णन करते हैं ॥५१ ॥

**प्रोक्तेति**। उच्चता प्रोक्ता कथिता, अथ अनन्तरं दैर्घ्यम् उच्यते ॥५१ ॥

षष्ठांशेनाधिका ग्रीवा द्विगुणा सुप्रसारिता।
मुखतश्चोच्छ्रिता सार्द्धपादहीना तु पूर्वतः ॥५२ ॥

**अन्वयः**—सुप्रसारिता ग्रीवा दैर्घ्ये षष्ठांशेन अधिका द्विगुणा तथा पूर्वतः सार्द्धपादहीना उच्छ्रिता ॥५२ ॥

**व्याख्या**—सुप्रसारिता = अतिविस्तृता, ग्रीवा = कन्धरः, दैर्घ्ये = लम्बतायाम्, मुखतः = आननात्, षष्ठांशेन = षष्ठभागेन, अधिका = अतिरिक्तांशयुक्ता, द्विगुणा = द्विगुणिता, तथा पूर्वतः = मुखतः, सार्द्धपादहीना = अर्द्धेण सहैकपादहीना = ऊना, उच्छ्रिता = उन्नता, भवतीति भावः ॥५२ ॥

**हिन्दी**—विस्तृत गर्दन की लम्बाई में मुँह की अपेक्षा छठा भाग अधिक दुगुना होता है तथा मुँह से साढ़े चौथाई भाग कम ऊँचा होता है ॥५२ ॥

**षष्ठांशेनेति**। सुप्रसारिता सुविस्तृता ग्रीवा दैर्घ्ये मुखतः मुखात् षष्ठांशेन अधिका युक्ता द्विगुणा तथा पूर्वतः मुखत इत्यर्थः, सार्द्धपादहीना उच्छ्रिता उन्नता ॥५२ ॥

स्कन्धादि मुष्कमूलान्तं ग्रीवातुल्यन्तु तत्र हि।
द्व्यंशषष्ठं त्रिकं यावत् शेषमंसं प्रकल्पयेत् ॥४३ ॥

**अन्वयः**—तत्र स्कन्धादि मुष्कमूलान्तं ग्रीवातुल्यं त्रिकं यावत् शेषम् अंसं द्व्यंशषष्ठं प्रकल्पयेत् ॥४३ ॥

**व्याख्या**—तत्र = घोटकेषु, स्कन्धादि = शिरोमूलमारभ्य, मुष्कमूलान्तम् = अण्डकोषमूल-पर्यन्तम्, ग्रीवातुल्यम् = कन्धरासदृशम्, त्रिकम् = पृष्ठवंशाधोभागम्, यावत् = समस्तम्, शेषम् = अवशिष्टम्, अंसम् = स्कन्धम्, द्व्यंशषष्ठम् = भागद्वयं षष्ठभागतुल्यम्, प्रकल्पयेत् = चिन्तयेत् ॥५३ ॥

**हिन्दी**—घोड़ों में कन्धे से लेकर अण्डकोष के मूल भाग तक की लम्बाई गर्दन की तरह लम्बी होती है। रीढ़ के नीचले भाग तक बचे अंश कंधे की लम्बाई गर्दन के दो भाग के छठे भाग की तरह होती है ॥५३ ॥

**स्कन्धादीति**। तत्र अश्वेषु स्कन्धादि मुष्कमूलान्तम् अण्डकोषमूलपर्य्यन्तं ग्रीवातुल्यम्। त्रिकं पृष्ठवंशाधोभागं यावत् 'पृष्ठवंशाधरे त्रिकमि'त्यमरः। शेषम् अंसं स्कन्धं द्व्यंशषष्ठं प्रकल्पयेत् ॥५३ ॥

मुखार्द्धं पुच्छदण्डं च शिश्न आण्डौ तदर्द्धकौ।
कर्णः षडङ्गुलो दीर्घश्चतुःपञ्चाङ्गुलः क्वचित् ॥५४॥

**अन्वयः**—पुच्छदण्डं शिश्नश्च मुखार्द्धम्, आण्डौ तदर्द्धकौ, कर्णः षडङ्गुलः, क्वचित् दीर्घः चतुःपञ्चाङ्गुलः ॥५४ ॥

**व्याख्या**—पुच्छदण्डम् = लाङ्गुलदण्डम्, शिश्नश्च = लिङ्गञ्च, मुर्खार्द्धम्—मुखस्य = आननस्य, अर्द्धम् = अर्द्धभागमितम्, आण्डौ = मुष्कौ, तदर्द्धकौ, तस्य = शिश्नस्य, अर्द्धकौ = अर्द्धभागपरिमितौ, कर्णः = श्रोत्रम्, षडङ्गुलः = षडङ्गुलिपरिमितः, क्वचित् = कुत्रचित्, दीर्घः = श्रवणस्य दैर्घ्यम्, चतुःपञ्चाङ्गुलश्च = चतुरङ्गुलः वा पञ्चाङ्गुलः प्रोक्तः ॥५४॥

**हिन्दी**—घोड़े की पूँछ का डंडा और उनके लिंग की लम्बाई मुँह के लम्बाई की आधी होती है। दोनों अण्डकोषों की लम्बाई लिङ्ग के लम्बाई की आधी होती है। कान की लम्बाई छः अंगुल की होती है; कहीं-कहीं चार या पाँच अंगुल की भी कही गई है॥५४॥

**मुखार्द्धमिति**। पुच्छदण्डं शिश्नश्च मुखार्द्धं मुखस्य अर्द्धम् अर्द्धपरिमितम्। आण्डौ अण्डौ एव स्वार्थे ष्णप्रत्ययः। अण्डकोषौ तदर्द्धांशे शिश्नार्द्धपरिमितौ। कर्णः षडङ्गुलः, क्वचिद् दीर्घः कर्णस्य दैर्घ्यमित्यर्थः, चतुःपञ्चाङ्गुलः चतुरङ्गुलः पञ्चाङ्गुलश्च ॥५४॥

**परिणाहः शफस्योक्तो मुखार्द्धेनाङ्गुलाधिकः।**
**तदर्द्धो मणिबन्धस्य जङ्घायाः परिधिः स्मृतः ॥५५॥**

**अन्वयः**—शफस्य परिणाहः मुखार्द्धेन अङ्गुलाधिकः प्रोक्तः। मणिबन्धस्य जङ्घायाश्च परिधिः तदर्द्धः स्मृतः॥५५॥

**व्याख्या**—शफस्य = खुरस्य, परिणाहः = विस्तारः, मुखार्द्धेनाङ्गुलाधिकः—मुखस्य = आननस्य, अर्द्धेन = अर्द्धपरिमाणेन, अङ्गुलाधिकः = एकाङ्गुलातिरिक्तः, प्रोक्तः = कथितः, मणिबन्धस्य = पादमूलस्य, जङ्घायाश्च = ऊरोश्च, परिधिः = मण्डलम्, तदर्द्ध—तत् = तस्य, अर्द्धः = अर्द्धांशः, स्मृतः = कथितः॥५५॥

**हिन्दी**—खुर का फैलाव मुँह के माप का आधा परन्तु एक अंगुल ज्यादा होता है तथा पाद-मूल और जंघा का घेरा उसका आधा होता है॥५५॥

**परिणाहमिति**। शफस्य खुरस्य परिणाहः विस्तारः अङ्गुलाधिकः मुखार्द्धेन मुखार्द्धपरिमाणेन तुल्यः एकाङ्गुलाधिकमुखार्द्धपरिमाणतुल्यः। मणिबन्धस्य जङ्घायाश्च परिधिः वेष्टनं तदर्द्धः स्मृतः॥५५॥

**दशैकाङ्गुलपरिधी रम्योरोः कीर्त्तितो बुधैः।**
**पृष्ठोरुपरिधिर्मूले त्रिः षष्ठांशो मुखेषु च॥५६॥**

**अन्वयः**—रम्यस्य ऊरोः दशैकाङ्गुलपरिधिः बुधैः कीर्त्तितः। पृष्ठोरुपरिधिर्मूले त्रिः मुखेषु षष्ठांशः॥५६॥

**व्याख्या**—रम्यस्य = सुरूपस्य, ऊरोः = जङ्घायाः, दशैकाङ्गुलपरिधिः = एकादशाङ्गुलमित-वेष्टनम्, बुधैः = पण्डितैः, कीर्त्तितः = कथितः। पृष्ठस्य = पश्चिमस्य, ऊरोः = जङ्घायाः, परिधिः = वेष्टनं, मूले = आदौ, त्रिः = अङ्गुलित्रयमितः, मुखेषु = अग्रेषु, च = पुनः, षष्ठांशः = षष्ठभागः॥५६॥

**हिन्दी**—पण्डितों ने सुन्दर जंघा का घेरा ग्यारह अंगुल कहा है। पिछली जंघा का घेरा मूल भाग से तीन अंगुल और आगे से छः अंश का होता है॥५६॥

**दशेति**। रम्यस्य रमणीयस्य ऊरोः दशैकाङ्गुलपरिधिः एकादशाङ्गुलमितः परिधिः बुधैः

कीर्त्तितः। पृष्ठस्य पश्चिमस्य ऊरोः परिधिः मूले त्रिः अङ्गुलत्रयमितः, मुखेषु अग्रेषु च षष्ठांशः ॥५६ ॥

**बहिरन्तर्धनुःखण्डसदृशाः सरभोग्रजाः।**
**मणिबन्धमणेर्ज्ञेयः परिधिश्च नवाङ्गुलः।**
**अन्त्यजङ्घादिपरिधिर्विज्ञेयः पूर्ववद् बुधैः ॥५७॥**

**अन्वयः**—मणिबन्धस्य मणेः परिधिः नवाङ्गुलः च अन्त्यजङ्घादिपरिधिः पूर्ववत् बुधैः ज्ञेयः ॥५७ ॥

**व्याख्या**—मणिबन्धस्य = पादमूलस्य, मणिः = अश्वस्य चिह्नविशेषः, परिधिः = वेष्टनम्, नवाङ्गुलः = नवाङ्गुलिपरिमितः, तथा अन्त्यजङ्घादिपरिधिः = अन्तिमोरोर्वेष्टनम्, पूर्ववत् = पूर्वोक्तमिव, बुधैः = विपश्चितैः, ज्ञेयः = बोध्यः ॥५७ ॥

**हिन्दी**—मणिबन्ध के मणि का घेरा नौ अंगुल का होता है तथा अन्तिम जंघा आदि का घेरा पण्डितों को पूर्व की तरह ही जानना चाहिए ॥५७ ॥

**मणिबन्धेति**। मणिबन्धस्य मणेः चिह्नविशेषस्य परिधिः नवाङ्गुलः तथा अन्त्यजङ्घादिपरिधिः पूर्ववत् प्रथमवत् बुधैः ज्ञेयः ॥५७ ॥

**अथोर्वोरन्तरे चिह्नमङ्गुष्ठं पक्षमूलयोः ॥५८॥**

**अन्वयः**—ऊर्वोः अन्तरे पक्षमूलयोः चिह्नम् अङ्गुलम् ॥५८ ॥

**व्याख्या**—ऊर्वोः = जङ्घयोः, अन्तरे = मध्ये, पक्षमूलयोः = पार्श्वमूलयोः, चिह्नम् = लक्ष्म, अङ्गुष्ठम् = एकाङ्गुलिप्रमाणमितमिति ॥५८ ॥

**हिन्दी**—और दोनों जङ्घाओं के बीच पार्श्वमूल का चिह्न एक अङ्गुल का होता है ॥५८ ॥

**अथेति**। ऊर्वोः अन्तरे मध्ये पार्श्वमूलयोः चिह्नम् अङ्गुलम् अङ्गुलपरिमितम् ॥५८ ॥

**सार्द्धाङ्गुलं सटास्थानं ग्रीवोपरि सुविस्तृतम्।**
**शिरोमणिं समारभ्य दीर्घं स्कन्धान्तमुत्तमम् ॥५९॥**

**अन्वयः**—ग्रीवोपरि सुविस्तृतं शिरोमणिं समारभ्य स्कन्धान्तम् उत्तमं सटानां स्थानं सार्द्धाङ्गुलं दीर्घम् ॥५९ ॥

**व्याख्या**—ग्रीवोपरि—ग्रीवायाः = कण्ठस्य, उपरि = उपरिष्टात्, सुविस्तृतम् = अतिप्रसृतम्, शिरोमणिम् = मस्तकस्य चिह्नविशेषं चूडामणिं वा, समारभ्य = प्रारभ्य, स्कन्धान्तम् = स्कन्धपर्यन्तम्, उत्तमम् = श्रेष्ठम्, सटानाम् = जटानाम्, स्थानम् = स्थलम्, सार्द्धाङ्गुलम् = अर्द्धेन सहितैकाङ्गुलमितम्, दीर्घः = लम्बः, बोध्यः ॥५९ ॥

**हिन्दी**—गर्दन के ऊपर काफी फैले हुए शिरामणि से लेकर कन्धे तक उत्तम आयाल का स्थान डेढ अंगुल लम्बा होता है ॥५९ ॥

**सार्द्धाङ्गुलमिति**। ग्रीवाया उपरि सुविस्तृतं शिरोमणिं समारभ्य स्कन्धान्तं स्कन्धपर्य्यन्तम् उत्तमं सटानां जटानां स्थानं सार्द्धाङ्गुलं दीर्घः ॥५९ ॥

**अधोगमा सटा कार्य्या हस्तमात्रायता शुभा।**
**सार्द्धहस्ता द्विहस्ता वा पुच्छबालाः सुशोभनाः ॥६०॥**

**अन्वयः**—अधोगमा हस्तमात्रायता शुभा जटा कार्या। पुच्छबालाः सार्द्धहस्ताः वा द्विहस्ताः सुशोभनाः ॥ ६० ॥

**व्याख्या**—अधोगमा = अधस्ताल्लम्बमाना, हस्तमात्रायता = हस्तैकपरिमिता दीर्घा, शुभा = मङ्गलप्रदा, जटा = सटा, कार्या = सम्पादिता। पुच्छस्य = लाङ्गुलस्य, बालाः = केशाः, सार्द्धहस्ताः = अर्द्धेण सहितैकहस्ताः, वा = अथवा, द्विहस्ताः = करद्वयमिताः, सुशोभनाः = सुरम्याः कार्याः ॥ ६० ॥

**हिन्दी**—नीचे की ओर लटकती हुई हाथभर लम्बी सटा (आयाल) करनी चाहिए। साथ ही पूँछ के सुरम्य बाल डेढ़ या दो हाथ लम्बे होने चाहिए ॥ ६० ॥

**अधोगमेति**। अधोगमा अधोलम्बमाना हस्तमात्रायता हस्तमात्रदीर्घा शुभा जटा कार्या। पुच्छस्य बालाः केशाः सार्द्धहस्ताः वा द्विहस्ताः सुशोभनाः कार्य्या इति शेषः ॥ ६० ॥

**सप्ताष्टनवदशभिरङ्गुलैः कर्णदीर्घता।**
**तथा तद्विस्तृतिर्ज्ञेया त्र्यङ्गुला चतुरङ्गुला ॥ ६१ ॥**

**अन्वयः**—कर्णस्य दीर्घता सप्ताष्टनवदशभिः अङ्गुलैः तथा तद्विस्तृतिः त्र्यङ्गुला चतुरङ्गुला वा ज्ञेया ॥ ६१ ॥

**व्याख्या**—कर्णस्य = श्रोत्रस्य, दीर्घता = आयता, सप्ताष्टनवदशभिः = सप्तभिः अष्टभिः नवभिः वा दशभिः, अङ्गुलैः = अङ्गुलिमितैः, भवति, तथा तत् = तस्य, कर्णस्य = श्रवणस्य, विस्तृतिः = विस्तारः, त्र्यङ्गुला = अङ्गुलित्रयमिता, वा चतुरङ्गुला भवति, ज्ञेया = बोध्या ॥ ६१ ॥

**हिन्दी**—कान की लम्बाई सात, आठ, नौ या दश अंगुल की होनी चाहिए तथा इसकी चौड़ाई तीन या चार अंगुल की होनी चाहिए ॥ ६१ ॥

**सप्तेति**। कर्णस्य दीर्घता सप्तभिः अष्टभिः नवभिः दशभिर्वा अङ्गुलैः भवति। तथा तस्य कर्णस्य विस्तृतिः त्र्यङ्गुला अङ्गुलत्रयमिता वा चतुरङ्गुला अङ्गुलचतुष्टयमिता ज्ञेया ॥ ६१ ॥

**न स्थूला नापि चिपिटा ग्रीवा मयूरसन्निभा।**
**ग्रीवाग्रपरिधिस्तुल्यो मुखेनाधिकमुष्टिकः ॥ ६२ ॥**

**अन्वयः**—ग्रीवा मयूरसन्निभा न स्थूला नापि चिपिटा ग्रीवाग्रपरिधिः मुखेनाधिकमुष्टिकः तुल्यः ॥ ६२ ॥

**व्याख्या**—ग्रीवा = अश्वस्य कण्ठः, मयूरसन्निभा = बर्हिणः सदृशी, न = नहि, स्थूला = पीना, नापि, चिपिटा = सपाटा, भवति। ग्रीवाग्रस्य = कण्ठपुरोभागस्य, परिधिः = आवेष्टनः, मुखेन = आननपरिमाणेन, तुल्यः = सदृशः, च = पुनः, अधिकमुष्टिकम् = मुष्ट्यैकातिरिक्तमिति ॥ ६२ ॥

**हिन्दी**—और गला न अधिक मोटा हो और न अधिक सपाट प्रत्युत मोरकण्ठ के समान होना चाहिए। इसके अगले भाग का घेरा मुख के घेरे से एक अंगुल ज्यादा होना चाहिए ॥ ६२ ॥

**नेति**। ग्रीवा अश्वस्येति शेषः, मयूरसन्निभा शिखिसदृशी, न स्थूला, नापि चिपिटा चिपिटाकृतिः भवतीति शेषः। ग्रीवाग्रस्य परिधिः मुखेन मुखपरिमाणेन तुल्यः अधिकमुष्टिकश्च एकमुष्ट्यधिकमुखपरिमाणतुल्य इत्यर्थः ॥ ६२ ॥

ग्रीवामूलस्य परिधिर्द्विगुणो विदशाङ्गुलः।
तृतीयांशविहीनं तु सत्क्रोडं वक्ष ईरितम्॥ ६३॥

**अन्वयः**—ग्रीवामूलस्य परिधिः विदशाङ्गुलः द्विगुणः सत्क्रोडं वक्षः तृतीयांशेन विहीनम् ईरितम्॥ ६३॥

**व्याख्या**—ग्रीवामूलस्य = शिरोऽधोमूलस्य, परिधिः = वेष्टनम्, विदशाङ्गुलः = दशाङ्गुलो हीनः, द्विगुणः = मुखस्य द्विगुणितः, तथा सत्क्रोडम् = उत्कृष्टोत्सङ्गम्, वक्षः = उरप्रदेशम्, तृतीयांशेन = तृतीयभागेन, मुखस्य विहीनम् = रहितम्, ईरितम् = कथितम्॥ ६३॥

**हिन्दी**—गर्दन का घेरा मुँह के माप से दस अंगुल कम दूना होना चाहिए और उत्तम उत्संग वाली छाती का मान मुख-मान से तीन हिस्सा कम कहा गया है॥ ६३॥

**ग्रीवामूलस्येति**। ग्रीवामूलस्य परिधिः विदशाङ्गुलः दशाङ्गुलः हीनः द्विगुणः मुखस्येति शेषः। तथा सत्क्रोडम् उकृष्टोत्सङ्गं वक्षः वक्षःस्थलं तृतीयांशेन विहीनं मुखस्येति शेषः, ईरितम् उक्तम्॥ ६३॥

नेत्रोपरि परीणाहो मुखेनाष्टाङ्गुलाधिकः।
नासिकोपरि नेत्राधो मुखस्य परिधिस्तु यः।
तृतीयांशविहीनेन मुखेन सदृशो भवेत्॥ ६४॥

**अन्वयः**—नेत्रोपरि परीणाहः मुखेनाष्टाङ्गुलाधिकः, नासिकोपरि नेत्राधः मुखस्य यः परिधिः सः तृतीयांशविहीनेन मुखेन सदृशः भवेत्॥ ६४॥

**व्याख्या**—नेत्रस्य = नयनस्य, उपरि = उपरिष्टात्, परीणाहः = विस्तारः, मुखेन = आननेन, सदृशः = तुल्यः, अष्टाङ्गुलः = अङ्गुल्यष्टमितः, अधिकः = अतिरिक्तः, नासिकायाः = घ्राणेन्द्रियस्य, उपरि, नेत्राधः = नयनस्याधोभागे, मुखस्य = आननस्य, यः परिधिः = परिवेष्टनम्, सः तृतीयांशविहीनेन = भागत्रयरहितेन, मुखेन = आननमितेन, सदृशः = तुल्यः, भवेत् = स्यात्॥ ६४॥

**हिन्दी**—आँखों के ऊपर का फैलाव मुँह के माप से आठ अंगुल अधिक होता है। नाक के ऊपर और आँखों के नीचे जो मुँह का घेरा है वह मुँह के माप के समान होता है, किन्तु तृतीयांश कम ही होता है॥ ६४॥

**नेत्रोपरीति**। नेत्रस्य उपरि परिणाहः विस्तारः मुखेन सदृशः अष्टाङ्गुलाधिकश्च। नासिकोपरि नेत्राधः मुखस्य यः परिधिः, सः तृतीयांशविहीनेन मुखेन मुखपरिमाणेन सदृशः भवेत्॥ ६४॥

द्व्यङ्गुलं नेत्रविस्तृतिस्त्र्यङ्गुला तस्य दीर्घता।
अर्द्धाङ्गुलाधिका वापि विस्तृतिर्दीर्घताङ्गुला॥ ६५॥

**अन्वयः**—नेत्रस्य विस्तृतिः द्व्यङ्गुलं तस्य दीर्घता त्र्यङ्गुला वापि विस्तृतिः अर्द्धाङ्गुलाधिका दीर्घता च अङ्गुला॥ ६५॥

**व्याख्या**—नेत्रस्य = लोचनस्य, विस्तृतिः = विस्तारः, द्व्यङ्गुलम् = अङ्गुलिद्वयमितम्, तस्य = नेत्रस्य, दीर्घता = लम्बता, त्र्यङ्गुला = अङ्गुलित्रयमिता, वापि = अथवा, विस्तृतिः = विस्तारः, अर्द्धाङ्गुलाधिका = सार्द्धद्वयाङ्गुलाधिका, दीर्घता च = लम्बता च, अङ्गुला = अङ्गुल्यैकाधिकेति ज्ञेया॥ ६५॥

**हिन्दी**—आँखों के विस्तार का मान दो अंगुल तथा उसकी लम्बाई का मान तीन अंगुल का होता है। अथवा इनका विस्तार कई अंगुल तथा लम्बाई तीन अंगुली की होनी चाहिए॥ ६५॥

**द्व्यङ्गुलमिति**। नेत्रस्य विस्तृतिः द्व्यङ्गुलं तस्य नेत्रस्य दीर्घता त्र्यङ्गुला। वापि अथवा विस्तृतिः अर्द्धाङ्गुलाधिका, सार्द्धद्व्यङ्गुला इत्यर्थः, दीर्घता च अङ्गुला अङ्गुलाधिका त्र्यङ्गुला इत्यर्थः॥ ६५॥

**मुखतृतीयांशमेतदूर्वोर्मध्येऽन्तरं स्मृतम्।**
**नेत्राग्रयोरन्तरं तु पञ्चमांशं मुखस्य हि॥ ६६॥**

**अन्वयः**—ऊर्वोः मध्ये एतत् अन्तरं मुखतृतीयांशं तथा नेत्राग्रयोः अन्तरं तु मुखस्य पञ्चमांशं स्मृतम्॥ ६६॥

**व्याख्या**—ऊर्वोः = जङ्घयोः, मध्ये = अन्तराले, एतत्, अन्तरम् = भिन्नता, मुखस्य = आननस्य, तृतीयांशं = तृतीयभागम्, तथा नेत्राग्रयोः = लोचनस्याग्रभागयोः, अन्तरम् = पार्थक्यम्, मुखस्य = आननस्य, पञ्चमांशम् = पञ्चमभागम्, स्मृतम् = कथितम्॥ ६६॥

**हिन्दी**—जाँघों के बीच की यह भिन्नता मुँह के तृतीयांश के समान होती है तथा आँखों के दोनों अगले हिस्से का अन्तर मुँह के माप का पाँचवाँ भाग होना चाहिए॥ ६६।।

**मुखेति**। ऊर्वोः मध्ये एतत् अन्तरं मुखतृतीयाशं तथा नेत्राग्रयोः अन्तरन्तु मुखस्य पञ्चमांशं स्मृतम्॥ ६६॥

**कर्णयोरन्तरं तद्वत् कर्णनेत्रान्तरं तथा।**
**भूस्थयोः शफयोः प्रोक्तं यदेतत् कर्णसम्मितम्॥ ६७॥**

**अन्वयः**—कर्णयोः अन्तरं तद्वत् तथा कर्णनेत्रान्तरं तथा भूस्थयोः शफयोः यत् एतत् तत् कर्णसम्मितं प्रोक्तम्॥ ६७॥

**व्याख्या**—कर्णयोः = श्रवणयोः, अन्तरम् = दूरता, तद्वत् = तत्सदृशमेव, तथा = तेनैव प्रकारेण, कर्णनेत्रान्तरम् = श्रवणनयनयोः पार्थक्यम्, तथा = तेनैव प्रकारेण, भूस्थयोः = भूमिस्थितयोरुभयोः, शफयोः = खुरयोः, यत् पार्थक्यम्, एतत् = अन्तरम्, तत् कर्णसम्मितम् = श्रवणपरिमाणसदृशम्, प्रोक्तम्॥६७॥

**हिन्दी**—दोनों कानों की दूरी भी उसी तरह तथा कान और आँख की दूरी भी उसी तरह होती है। धरती पर मौजूद दोनों खुरों की जो दूरी है वह अन्तर कान के मान के समान है॥६७॥

**कर्णयोरिति**। कर्णयोः अन्तरं तद्वत् तथा कर्णनेत्रान्तरं तथा भूस्थयोः शफयोः यत् एतत् अन्तरमित्यर्थः, तत् कर्णसम्मितं कर्णपरिमाणतुल्यं प्रोक्तम्॥६७॥

**मणिनेत्रप्रान्तरञ्च भ्रुवोरन्तरमेव हि।**
**सक्थ्यङ्गुलं तृतीयांशं नासानेत्रान्तरं तथा॥ ६८॥**

**अन्वयः**—मणिनेत्रयोः प्रान्तरं भ्रुवोः अन्तरं तथा नासानेत्रयोः अन्तरं सक्थ्यङ्गुलं तृतीयांशम्॥ ६८॥

**व्याख्या**—मणिनेत्रयोः = मणिलोचनयोः, प्रान्तरम् = पार्थक्यम्, भ्रुवोः = भ्रूलतयोः, अन्तरम्

= दूरता, तथा = तेनैव प्रकारेण, नासानेत्रयोः = नासिकाचक्षुषोः, अन्तरम् = दूरता, सक्थ्नः = ऊरोः, अङ्गुलानाम्, तृतीयांशम् = तृतीयभागम्, बोध्यम् ॥ ६९ ॥

**हिन्दी**—मणि और आँखों की दूरी, दोनों भौंहों की दूरी तथा नाक और आँख का अन्तर जाँघ के अंगुलों का तीसरा भाग मानना चाहिए ॥ ६८ ॥

**मणीति**। मणिनेत्रयोः प्रान्तरम् अन्तरमित्यर्थः, भ्रुवोः अन्तरं तथा नासानेत्रयोरन्तरं सक्थ्नः ऊरोरङ्गुलानां तृतीयांशं ज्ञेयमिति शेषः ॥ ६८ ॥

**त्रिभागपूरणं प्रोथः सोष्ठश्च परिकीर्त्तितः ।**
**नासारन्ध्रान्तरं चैव तद्दैर्घ्यनवमांशकम् ॥ ६९ ॥**

**अन्वयः**—सोष्ठः प्रोथः त्रिभागपूरणं परिकीर्त्तितः तथा नासारन्ध्रयोः अन्तरं तयोः दैर्घ्य-नवमांशकम् ॥ ६९ ॥

**व्याख्या**—सोष्ठः—ओष्ठेन = अधरेण, सहितः = युक्तः, सोष्ठः, प्रोक्थः = मुखस्याग्रभागः, त्रिभागपूरणम् = मुखमितस्य तृतीयांशम्, परिकीर्त्तितः = कथितः, तथा = तेनैव रूपेण, नासारन्ध्रयोः = नासिकाछिद्रयोः, अन्तरम् = अन्तरालम्, तयोः = उभयोः, दैर्घ्यस्य = दीर्घतायाः, नवमांशकम् = नवमभागमिति बोध्यः ॥ ६९ ॥

**हिन्दी**—और होठों सहित थूथन मुँह की माप के तीसरे भाग की तरह लम्बी कही गई हैं तथा दोनों नाकों के पोरों का अन्तर उन दोनों की लम्बाई की माप का नौवाँ हिस्सा होता है ॥ ६९ ॥

**त्रिभागेति**। सोष्ठः ओष्ठसहितः प्रोथः मुखाग्रभागः त्रिभागपूरणः मुखस्य तृतीयांश इत्यर्थः परिकीर्त्तितः। तथा नासारन्ध्रयोरन्तरं तयोः दैर्घ्यस्य नवमांशकं ज्ञेयमिति शेषः ॥ ६९ ॥

**कायो नरार्द्धविस्तारस्त्रिके हृदयसम्मितः ।**
**चतुर्थांशं तु हृदयं बाहुमूलादधः स्मृतम् ॥ ७० ॥**

**अन्वयः**—कायः नरार्द्धविस्तारः त्रिके हृदयसम्मितः, तु हृदयं बाहुमूलात् अधः चतुर्थांशं स्मृतम् ॥ ७० ॥

**व्याख्या**—कायः = देहम्, नरार्द्धविस्तारः—नरस्य = मानवस्य, अर्द्धविस्तारः = अर्द्धप्रसृतिः, त्रिके = पृष्ठवंशाधोभागे, हृदयसम्मितः = वक्षःस्थलतुल्यविस्तारः इति, तु = तथा, हृदयम् = वक्षःस्थलम्, बाहुमूलात् = भुजमूलात्, अधः = अधोभागे, चतुर्थांशम् = चतुर्थभागम्, स्मृतम् = कथितम् ॥ ७० ॥

**हिन्दी**—देह मनुष्य-देह की लम्बाई का आधा और रीढ के नीचे का भाग छाती के फैलाव के समान होता है तथा हृदय बाहुमूल के नीचे एक चौथाई के बराबर होता है ॥ ७० ॥

**काय इति**। कायः शरीरं नरार्द्धविस्तारः मनुष्यार्द्धविस्तृतिः त्रिके पृष्ठवंशाधोभागे हृदयसम्मितः वक्षःसदृशः विस्तार इत्यर्थः। तथा हृदयं बाहुमूलात् अधः चतुर्थांशं स्मृतम् ॥ ७० ॥

**षष्ठांशमन्तरं बाह्वोर्हृत्समीपे प्रकीर्त्तितम् ।**
**अधरोष्ठोऽनुचिबुकं सार्द्धाङ्गुलमथोन्नतम् ॥ ७१ ॥**

**अन्वयः**—हृत्समीपे बाह्वोः अन्तरम् षष्ठांशं प्रकीर्त्तितम्। अधरोष्ठात् अथ अनुचिबुकं सार्द्धाङ्गुलम् उन्नतम् ॥ ७१ ॥

**व्याख्या**—हृत्समीपे = उरःसन्निहिते, बाह्वोः = भुजयोः, अन्तरम् = दूरता, षष्ठांशम् = षष्ठभागम्, प्रकीर्त्तितम् = कथितम्। अधरोष्ठात् = रदनच्छदाधःस्तनोष्ठात्, अथ = आरभ्य, अनुचिबुकम् = हनुपर्यन्तम्, सार्द्धाङ्गुलम् = अर्द्धसहितैकाङ्गुलम्, उन्नतम् = उच्चम्, ज्ञेयमिति शेषः॥ ७१॥

**हिन्दी**—होठ और होठ से लेकर ठुढी तक की ऊँचाई डेढ़ अंगुल होनी चाहिए तथा छाती के समीप दोनों बाहों की दूरी छठे भाग की तरह होनी चाहिए॥ ७१॥

**षष्ठांशमिति**। हृत्समीपे वक्षःसन्निधौ बाह्वोः भुजयोः अन्तरं षष्ठांशं प्रकीर्त्तितम्। अधरोष्ठादथ अनुचिबुकं सार्द्धाङ्गुलम् उन्नतम्॥ ७१॥

**शोभते चोन्नतग्रीवो नतपृष्ठः सदा हयः॥ ७२॥**

**अन्वयः**—उन्नतग्रीवः नतपृष्ठः हयः सदा शोभते॥ ७२॥

**व्याख्या**—उन्नतः = उद्गतः, ग्रीवा = कन्धरा, यस्यासौ, नतपृष्ठः = अवनतपश्चभागम्, हयः = अश्वः, सदा = सर्वदा, शोभते = शोभायमानो भवति॥७२॥

**हिन्दी**—घोड़ा सदैव ऊँची गर्दन तथा नीची पीठ वाला शोभता है॥७२॥

**शोभते इति**। उन्नतग्रीवः नतपृष्ठः हयः सदा शोभते॥ ७२॥

**यद्रूपं कर्त्तुमुद्युक्तस्तद् बिम्बं वीक्ष्य सर्वतः।**
**अदृष्ट्वा कस्य यद्रूपं न कर्त्तुं क्षमते हि तत्॥ ७३॥**

**अन्वयः**—यत् रूपं कर्त्तुम् उद्युक्तः सर्वतः वीक्ष्य तद्बिम्बं कस्य यत् तत् अदृष्ट्वा तत् कर्त्तुं न क्षमते॥ ७३॥

**व्याख्या**—यत् = यस्य, रूपम् = स्वरूपम्, कर्त्तुम् = रचयितुम्, उद्युक्तः = उद्यतः स्यात्, सर्वतः = सर्वतोभावेन, वीक्ष्य = अवलोक्य, तत् = तस्य, बिम्बम् = प्रतिकृतिम्, रचयेदिति भावः, कस्य = कस्यापि, यत् = रूपम्, तत् = आकृतिम्, अदृष्ट्वा = अनवलोक्य, तत् = तस्य, प्रतिबिम्बं कर्त्तुम् = विधातुम्, न = नहि, क्षमते = समर्थो भवति॥ ७३॥

**हिन्दी**—जिसकी आकृति बनाने के लिए जो तैयार हो, वह उसे हर ओर से देखकर ही उसकी आकृति का निर्माण करे। जिसका जो रूप हो, उसे बिना देखे कोई उसकी मूर्त्ति बनाने में समर्थ नहीं हो सकता है॥७३॥

**यदिति**। यस्य रूपम् आकृतिं कर्त्तुम् उद्युक्तः, सर्वतः वीक्ष्य तस्य बिम्बं प्रतिकृतिं कुर्य्यादिति शेषः, कस्य कस्यापीत्यर्थः, यत् रूपं तत् अदृष्ट्वा तत् प्रतिबिम्बं कर्त्तुं न क्षमते कोऽपीत्यर्थः॥ ७३॥

**शिल्पाग्रे वाजिनं ध्यात्वा कुर्य्यादवयवानतः।**
**दिशानया च विभूतेः सर्वमानानि वाजिनाम्॥ ७४॥**

**अन्वयः**—अतः शिल्पी अग्रे वाजिनं ध्यात्वा अवयवान् कुर्यात्। अनया दिशा वाजिनां विभूतेः सर्वाणि मानानि॥ ७४॥

**व्याख्या**—अतः = अस्मात् कारणात्, शिल्पी = चित्रकारः, अग्रे = सम्मुखे, वाजिनम् = अश्वम्, ध्यात्वा = ध्यानं कृत्वा, अवयवान् = शरीराङ्गान्, कुर्यात्। अनया दिशा = अनया रीत्या,

वाजिनाम् = घोटकानाम्, विभूतेः = ऐश्वर्यस्य, सर्वाणि = सकलानि, मानानि = परिमाणानि, विधेयानि इति ॥ ७४ ॥

**हिन्दी**—अतः मूर्त्तिकार पहले घोड़े का ध्यान कर पीछे उसके अङ्गों का निमार्ण करे। इसी ढंग से घोड़े के सामस्त अवयवों के सभी मानों की कल्पना करे ॥७४ ॥

**शिल्पीति**। अतः अस्मात् कारणात् शिल्पी अग्रे वाजिनम् अश्वं ध्यात्वा चिन्तयित्वा अवयवान् कुर्य्यात्। अनया दिशा रीत्या वाजिनां विभूतेः विभवस्य सर्वाणि मानानि परिमाणानि कार्य्याणीति शेषः ॥ ७४ ॥

**श्मश्रुहीनमुखः कान्तप्रगल्भोत्तुङ्गनासिकः।**
**दीर्घोद्धतग्रीवमुखो ह्रस्वकुक्षिखुरश्रुतिः ॥ ७५ ॥**
**तुरप्रचण्डवेगश्च हंसमेघसमस्वनः।**
**नातिक्रूरो नातिमृदुर्देवसत्त्वो मनोरमः।**
**सुकान्तिगन्धवर्णश्च सद्‌गुणभ्रमरान्वितः ॥ ७६ ॥**

**अन्वयः**—श्मश्रुहीनमुखः कान्तप्रगल्भोत्तुङ्गनासिकः दीर्घोद्धतग्रीवमुखः ह्रस्वकुक्षिखुरश्रुतिः तुरप्रचण्डवेगश्च हंसमेघसमस्वनः नातिक्रूरः नातिमृदुः देवसत्त्वः मनोरमः सुकान्तिगन्धवर्णश्च सद्‌गुणभ्रमरान्वितः ॥ ७५-७६ ॥

**व्याख्या**—श्मश्रुभिः = कूर्चैः, हीनम् = रहितम्, मुखम् = आननम्, यस्य तादृशः, कान्तः = मनोहरः, प्रगल्भः = चतुरः, तथा उत्तुङ्गा = उन्नता, नासिका = नासा, यस्य तथाभूतः, दीर्घा = लम्बायमाना, उद्धता = उग्रा विशिष्टा वा, ग्रीवा = कण्ठः यस्य तादृशम्, मुखम् = आननम्, यस्य तथोक्तः, ह्रस्वा = लघ्वी, कुक्षिः = उदरम्, खुराः = शफाः, श्रुतयः = श्रोत्राणि, यस्य सः, प्रचण्डवेगः = तीव्रगतिः, हंसस्य = मरालस्य, मेघस्य = जलदस्य, च, समस्वनः = सदृशध्वनिः, नातिक्रूरः = नातिनृशंसः, नातिमृदुः = नातिकोमलः, देवसत्त्वः = अलौकिकबलसम्पन्नः, मनोरमः = आकर्षकः, सुकान्तिगन्धवर्णः = अत्याकर्षकगन्धः, तथा वर्णः = स्वरूपः, यस्य तादृशः, सद्‌गुणेन = शुभगुणान्वितेन, भ्रमरस्य = आवर्त्तस्य, अन्वितः = मिलितः, तुरगः = अश्वः ॥७५-७६ ॥

**हिन्दी**—जिस घोड़े के मुँह पर दाढ़ी की तरह लट के बाल न हो, चेहरा आकर्षक हो, नाक सुन्दर और ऊँची हो, गर्दन और मुँह लम्बे हों, कुछ ऊपर की ओर उठे हों, पेट, खुर और कान छोटे हो, अति तीव्रगामी हो, हंस और मेघ की तरह आवाज हो, स्वभाव से न अत्यन्त क्रूर हो और न अधिक कोमल, देवताओं के घोड़ों की तरह प्रचण्ड वेगवान् एवं अतिपराक्रमी हो; ऐसा मनमोहक घोड़ा उत्तम होता है तथा इनकी कान्ति सुन्दर और अच्छे गुण एवं भौंरी भी होनी चाहिए ॥७५-७६ ॥

**श्मश्रुहीनेति। तुरगेति**। श्मश्रुभिः हीनं मुखं यस्य तादृशः, कान्तः सुन्दरः प्रगल्भः तथा उत्तुङ्गा उन्नता नासिका यस्य तथाभूतः, दीर्घा उद्धता उत्कण्ठा ग्रीवा यस्य तादृशं मुखं यस्य तथोक्तः ह्रस्वाः कुक्षिः उदरं खुराः श्रुतयः कर्णा यस्य सः प्रचण्डवेगः, हंसस्य मेघस्य च समस्वनः तुल्यध्वनिः नातिक्रूरः, नातिमृदुः देवसत्त्वः अलौकिकबलसम्पन्नः, शोभनाः कान्तिगन्धवर्णाः यस्य तादृशः सद्‌गुणेन भ्रमरेण आवर्त्तविशेषेण च अन्वितः तुरगः मनोरमः अतिहृद्यः ॥७५-७६ ॥

भ्रमरस्तु द्विधावर्त्ती वामदक्षिणभेदतः।
पूर्णोऽपूर्णः पुनर्द्वेधा दीर्घो ह्रस्वस्तथैव च॥ ७७॥

**अन्वयः**—वामदक्षिणभेदतः द्विधावर्त्ती भ्रमरः। स तु पूर्णः अपूर्णः तथा दीर्घः ह्रस्वः चेति पुनः द्वेधा॥ ७७॥

**व्याख्या**—वामदक्षिणभेदतः=वामवर्त्ती तथा दक्षिणवर्त्ती, भेदात्=प्रकारात्, द्विधा=द्विप्रकारः, आवर्त्तः=घोटकशरीरस्थरोमवर्त्तुलम्, भवति। पुनः=भूयः, सः पूर्णः=पूरितः, अपूर्णः=असम्भृतः, तथा दीर्घः=विस्तृतः, ह्रस्वः=लघुश्च, द्विधा=द्विप्रकारका भवति॥७७॥

**हिन्दी**—फिर घोड़े की देह वाली भौंरी बाँयी या दाँयी ओर घुमी होती है। यह पुनः पूर्ण या अपूर्ण तथा बड़ा या छोटा आकार के भेद से दो प्रकार का होता है॥७७॥

**भ्रमर इति**। वामदक्षिणभेदतः वामांशदक्षिणांशभेदात् द्विधा द्विप्रकारः आवर्त्तः घूर्णरूपचिह्नविशेषः भ्रमरः। स तु पूर्णः अपूर्णः तथा दीर्घः ह्रस्वश्चेति पुनर्द्विधा द्विविधः॥ ७७॥

स्त्रीपुंदेहे वामदक्षौ यथोक्तफलदौ क्रमात्।
न तथा विपरीतौ तु शुभाशुभफलप्रदौ॥ ७८॥

**अन्वयः**—वामदक्षौ स्त्रीपुंदेहे क्रमात् यथोक्तफलदौ विपरीतौ तु तथा शुभाशुभफलप्रदौ न॥७८॥

**व्याख्या**—वामदक्षौ=सव्यासव्यौ, तौ=भ्रमरौ, स्त्रीपुंदेहे=अश्वायाः अश्वस्य च शरीरे, घोटिकायाः वामांशे तुरगस्य च दक्षिणांशे स्थितौ भ्रमरौ, यथोक्तौ=पूर्वकथितौ, फलदौ=परिणामप्रदौ, विपरीतौ=तद्विरुद्धौ, तु तथा=तेन रूपेण, शुभाशुभफलप्रदौ=कल्याणाकल्याणपरिणामप्रदौ, न भवतः, यतो हि—'वामभागस्तु नारीणां पुंसां श्रेष्ठस्तु दक्षिणे' इति प्रामाण्यात्॥ ७८॥

**हिन्दी**—किन्तु ये भौंरियाँ तभी यथोक्त फल देने वाली होती हैं जब घोड़ी की बाँयी ओर तथा घोड़े की दाँई ओर घुमाव वाली हों। इसके विपरीत होने पर शुभ या अशुभ कोई फल नहीं मिलता॥ ७८॥

**स्त्रीति**। वामदक्षौ वामांशदक्षिणांशस्थितौ तौ भ्रमरौ स्त्रीपुंदेहे क्रमात् यथोक्तफलदौ अश्वाया वामांशे अश्वस्य दक्षिणांशे स्थिताविति भावः, 'वामभागस्तु नारीणां पुंसां श्रेष्ठस्तु दक्षिणः' इति वचनात् विपरीतौ तु तथा शुभाशुभफलप्रदौ न भवत इति शेषः॥ ७८॥

नीचोद्र्ध्वतिर्य्यङ्मुखतः फलभेदो भवेत्तयोः॥ ७९॥

**अन्वयः**—तयोः नीचोद्र्ध्वतिर्यङ्मुखतः फलभेदः भवेत्॥ ७९॥

**व्याख्या**—तयोः=पूर्वोक्तयोः भ्रमरयोः, नीचोद्र्ध्वतिर्यङ्मुखतः—नीचमुखतः=अधोमुखतः, ऊद्र्ध्वमुखतः=उन्नतमुखतः, तिर्यङ्मुखतः=वक्रस्वरूपात् च, फलभेदः—फलानाम्=परिणामानाम्, भेदः=प्रभेदः, भवेत्=स्यात्॥७९॥

**हिन्दी**—यदि ये भौंरियाँ नीची, ऊँची या टेढी झुकी हो तो तदनुसार फल में भी भेद होता है॥ ७९॥

**नीचेति**। तयोः भ्रमरयोः नीचाद्र्ध्वतिर्य्यङ्मुखतः निम्नमुखतः ऊद्र्ध्वमुखतः तिर्य्यङ्मुखतश्च फलभेदः फलानां प्रभेदः भवेत्॥७९॥

शङ्खचक्रगदापद्मवेदिस्वस्तिकसन्निभः ।
प्रासादतोरणधनुःसुपूर्णकलशाकृतिः ।
स्वस्तिकस्त्रङ्मीनखड्गश्रीवत्साभः शुभो भ्रमः ॥ ८० ॥

**अन्वयः**—शङ्खचक्रगदापद्मवेदिस्वस्तिकसन्निभः तथा प्रासादतोरणधनुःसुपूर्णकलशाकृतिः स्वस्तिकस्त्रङ्मीनखड्गश्रीवत्साभः भ्रमः शुभः ॥८० ॥

**व्याख्या**—शङ्खचक्रगदापद्मवेदिस्वस्तिकसन्निभः—शङ्खसदृशः = कम्बुतुल्यः, चक्रसन्निभः = चक्रतुल्यः, गदासन्निभः = लौहमयशस्त्रभेदतुल्यः, पद्मसन्निभः = कमलतुल्यः, वेदिसन्निभः = वेदितुल्यः, स्वस्तिकम् = माङ्गलिकचिह्नयुक्तम्, तथा = तेनैव रूपेण, प्रासादतोरणधनुःसुपूर्णकलशाकृतिः—प्रासादाकृतिः = हर्म्यसदृशः, तोरणाकृतिः = बहिर्द्वाराकारः, धनुषाकृतिः, सुपूर्णकलशाकृतिः = सुपूरितकलशतुल्यः, तथा = किञ्च, स्वस्तिकस्त्रक् = माङ्गलिका माला, तत्समः, मीनाकृतिः = मत्स्याकारः, खड्गाकृतिः = करवालरूपः, श्रीवत्सः = विष्णुवक्षःस्थदक्षिणावर्त्तरोमावलिः, तत्समः, भ्रमः = आवर्त्तः, शुभः = कल्याणप्रदः ॥८० ॥

**हिन्दी**—घोड़ों की भौंरी शंख, चक्र, गदा, पद्म, वेदी तथा स्वस्तिक के चिह्न की किंवा महल, राजद्वार, धनुष या पूर्णकलश के आकार की होती है। स्वस्तिक, माला, तलवार तथा श्रीवत्स के समान आकार वाली भौंरी शुभ मानी जाती है ॥ ८० ॥

भ्रमरस्यास्य आकृतिभेदं शुभकरत्वञ्च दर्शयति—**शङ्खेति**। शङ्खचक्रगदापद्मवेदिस्वस्तिकसन्निभः शङ्खसदृशः चक्रसदृशः गदासदृशः पद्मसदृशः वेदिसदृशः स्वस्तिकं माङ्गलिकद्रव्यभेदः तत्सदृशः तथा प्रासादतोरणधनुःसुपूर्णकलशाकृतिः हर्म्यसदृशः तोरणप्रभः धनुषा तुल्यः सुपूर्णकुम्भाकृतिः किञ्च स्वस्तिकस्त्रङ्मीनखड्गश्रीवत्साभः स्वस्तिकस्त्रक् माङ्गलिका माला, तत्समः मीनरूपः खड्गाकृतिः श्रीवत्सः मणिविशेषः, तत्समः भ्रमः भ्रमरः शुभः ॥ ८० ॥

नासिकाग्रे ललाटे च शङ्खे कण्ठे च मस्तके।
आवर्त्तो जायते येषां ते धन्यास्तुरगोत्तमाः ॥ ८१ ॥

**अन्वयः**—येषां नासिकाग्रे ललाटे शङ्खे कण्ठे च मस्तके आवर्त्तः जायते, ते तुरगोत्तमाः धन्याः ॥ ८१ ॥

**व्याख्या**—येषाम् = अश्वानाम्, नासिकाग्रे = नासाग्रभागे, ललाटे = भाले, शङ्खे = गण्डस्थले, कण्ठे = गलप्रदेशे, च = पुनः, मस्तके = शीर्षे, आवर्त्तः = भ्रमरी, जायते = भवति, ते = घोटकाः, तुरगोत्तमाः—तुरगेषु = तुरङ्गमेषु, उत्तमाः = उत्कृष्टाः भवन्ति ॥ ८१ ॥

**हिन्दी**—जिन घोड़ों की नाक के ऊपर ललाट, कनपटी, कण्ठ या माथे में भौंरी हो, वे अन्य घोड़ों में उत्कृष्ट माने जाते हैं ॥ ८१ ॥

**नासिकाग्रे इति**। येषां नासिकाग्रे, ललाटे, शङ्खे ललाटास्थि कर्णसमीपस्थास्थि वा कण्ठे मस्तके च आवर्त्तः भ्रमरचिह्नं जायते ते तुरगोत्तमाः धन्याः ॥ ८१ ॥

हृदि स्कन्धे गले चैव कटिदेशे तथैव च।
नाभौ कुक्षौ च पार्श्वाग्रे मध्यमाः सम्प्रकीर्त्तिताः ॥ ८२ ॥

**अन्वयः**—हृदि स्कन्धे गले कटिदेशे तथैव नाभौ कुक्षौ पार्श्वाग्रे मध्यमाः सम्प्रकीर्त्तिताः ॥८२ ॥

**व्याख्या**—हृदि = वक्षःस्थले, स्कन्धे = भुजमूले, गले = कण्ठे, कटिदेशे = मध्याङ्गे, तथैव = तेनैव प्रकारेण, नाभौ = उदरावर्त्ते, कुक्षौ = उदरे, पार्श्वाग्रे = पार्श्वयोः अग्रभागे, येषाम् = अश्वानाम्, आवर्त्तस्ते मध्यमाः = सामन्यस्तरीयाः घोटकाः, सम्प्रकीर्त्तिताः = कथिताः ॥८२ ॥

**हिन्दी**—जिन घोड़ों की छाती, कन्धा, गला, कमर, नाभि, पेट तथा बगल के अगले हिस्से में भौंरी होती हैं, वे मध्यम दर्जे के घोड़े कहे जाते हैं ॥ ८२ ॥

**हृदीति**। हृदि वक्षसि, स्कन्धे, गले, कटिदेशे, नाभौ, कुक्षौ, पार्श्वाग्रे च येषाम् आवर्त्तः ते मध्यमाः सम्प्रकीर्त्तिताः ॥ ८२ ॥

**ललाटे यस्य चावर्त्तद्वितयस्य समुद्भवः ।**
**मस्तके च तृतीयस्य पूर्णहर्षोऽश्व उत्तमः ॥ ८३ ॥**

**अन्वयः**—यस्य ललाटे आवर्त्तद्वितयस्य मस्तके च तृतीयस्य समुद्‌भवः सः पूर्णहर्षः अश्वः उत्तमः ॥ ८३ ॥

**व्याख्या**—यस्य = अश्वस्य, ललाटे = भाले, आवर्त्तद्वितयस्य = भ्रमरकद्वयस्य, मस्तके = शीर्षे च, तृतीयस्य = आवर्त्तस्य, समुद्‌भवः = उत्पत्तिः, सः = अश्वः, पूर्णहर्षः = सकलानन्दः, अश्वः = घोटकः, उत्तमः = उत्कृष्टो भवेत् ॥८३ ॥

**हिन्दी**—जिस घोड़े के ललाट पर दो भौंरियाँ हों तथा तीसरी माथे पर हो, वह घोड़ा पूरी खुशी देने वाला उत्तम कोटि का माना जाता है ॥८३ ॥

**ललाटे इति**। यस्य ललाटे आवर्त्तद्वितयस्य मस्तके च तृतीयस्य आवर्त्तस्य समुद्‌भवः, सः पूर्णहर्षः पूर्णहर्षवर्द्धकत्वात् पूर्णानन्दः अश्वः उत्तमः ॥८३ ॥

**पृष्ठवंशे यदावर्त्तो यस्यैकः सम्प्रजायते ।**
**स करोत्यश्वसङ्घातान् स्वामिनः सूर्य्यसंज्ञकः ॥ ८४ ॥**

**अन्वयः**—यदा यस्य पृष्ठवंशे एकः आवर्त्तः सम्प्रजायते, सः सूर्यसंज्ञकः स्वामिनः अश्वसङ्घातान् करोति ॥ ८४ ॥

**व्याख्या**—यदा = यत्र, यस्य = अश्वस्य, पृष्ठवंशे = कशेरुकायाम्, एकः = एकैव, आवर्त्तः = भ्रमिः, सम्प्रजायते = भवति, सः = असौ, सूर्यसंज्ञकः = सूर्य इत्याख्यः, अश्वो भवति, सोऽश्वः स्वामिनः = प्रभोः, अश्वसङ्घातान् = घोटकसमूहान्, करोति = अभिवर्द्धनं करोति ॥ ८४ ॥

**हिन्दी**—जिस घोड़े की रीढ़ पर एक भौंरी हो वह सूर्य नामक घोड़ा कहलाता है। यह घोड़ा अपने मालिक के घोड़ों को बढ़ाता है ॥ ८४ ॥

**पृष्ठवंशे इति**। यदा यस्य पृष्ठवंशे एकः आवर्त्तः सम्प्रजायते, सः सूर्य्यसंज्ञकः सूर्याख्यः अश्वः स्वामिनः अश्वसङ्घातान् अश्वसमूहान् करोति वर्द्धयति ॥ ८४ ॥

**त्रयो यस्य ललाटस्था आवर्त्तास्तिर्य्यगुत्तराः ।**
**त्रिकूटः स परिज्ञेयो वजिवृद्धिकरः सदा ॥ ८५ ॥**

**अन्वयः**—यस्य ललाटस्थाः त्रयः आवर्त्ताः तिर्यगुत्तराः सः त्रिकूटः सदा वाजिवृद्धिकरः ॥८५ ॥

**व्याख्या**—यस्य = घोटकस्य, ललाटस्थाः = भाले स्थिताः, त्रयः, आवर्ताः = भ्रमयः, तिर्यगुत्तराः = वक्रप्रधानाः, सः = असौ वाजी, त्रिकूटः = त्रिकूटसंज्ञकः, अश्वः, सदा = सर्वदा, वाजिनाम् = घोटकानाम्, वृद्धिकरः = वर्द्धकरो भवति ॥८५ ॥

हिन्दी—जिस घोड़े के ललाट में तीन भौंरियाँ हों और तिरछे मुँह वाली हों तो वह त्रिकूटसंज्ञक घोड़ा होता है। वह जिसके घर होता है, उसके घर सदा घोड़ों की वृद्धि होती है ॥ ८५ ॥

**त्रय इति**। यस्य ललाटस्थाः त्रयः आवर्त्ताः तिर्य्यगुत्तराः कुटिलप्रधानाः, सः त्रिकूटः त्रिकूटनामा अश्वः सदा वाजिनां वृद्धिकरः ॥८५ ॥

**एवमेव प्रकारेण त्रयो ग्रीवां समाश्रिताः।**
**समावर्त्ताः स वाजीशो जायते नृपमन्दिरे ॥ ८६ ॥**

**अन्वयः**—एवमेव प्रकारेण यस्य त्रयः समावर्ताः ग्रीवां समाश्रिताः स वाजीशः नृपमन्दिरे जायते ॥ ८६ ॥

**व्याख्या**—एवमेव प्रकारेण = अनेनैव रूपेण, यस्य = अश्वस्य, त्रयः समावर्त्ताः = भ्रमयः, ग्रीवाम् = गलप्रदेशे, समाश्रिताः = समुत्पन्नाः, सः = असौ, वाजीशः—वाजिनाम् = अश्वानाम्, ईशः = प्रभुः, घोटकोत्तम इति, नृपमन्दिरे = राजगृहे एव, जायते = तिष्ठतीति भावः ॥ ८६ ॥

**हिन्दी**—इसी तरह जिस घोड़े के गले में तानी भौंरियाँ हों, वह सर्वश्रेष्ठ घोड़ा कहलाता है। ऐसा घोड़ा राजमन्दिर में ही पाया जाता है ॥ ८६ ॥

**एवमिति**। एवम्प्रकारेण एव यस्य त्रयः समावर्त्ताः ग्रीवां समाश्रिताः ग्रीवायामुत्पन्ना इत्यर्थः, स वाजीशः अश्वश्रेष्ठः नृपमन्दिरे जायते भवति तिष्ठतीत्यर्थः ॥८६ ॥

**कपोलस्थौ यदावर्त्तौ दृश्येते यस्य वाजिनः।**
**यशोवृद्धिकरौ प्रोक्तौ राज्यवृद्धिकरौ मतौ ॥ ८७ ॥**

**अन्वयः**—यदा यस्य वाजिनः कपोलस्थौ द्वौ आवर्त्तौ दृश्येते तदा तस्य तौ यशोवृद्धिकरौ प्रोक्तौ ॥ ८७ ॥

**व्याख्या**—यदा = यस्मिन्, यस्य वाजिनः = अश्वस्य, कपोलस्थौ = गण्डस्थितौ, द्वौ, आवर्तौ = रोमचक्रे, दृश्येते = अवलोक्येते, तदा = तस्मिन् काले, तस्य = अश्वस्य, तौ = आवर्त्तौ, यशो-वृद्धिकरौ = कीर्त्तिसंवर्द्धकौ, प्रोक्तौ = कथितौ, तथा राज्यवृद्धिकरौ = समृद्धिसंवर्द्धकौ, मतौ = कथितौ ॥८७ ॥

**हिन्दी**—यदि किसी घोड़े के दोनों गालों पर दो भौरियाँ हों तो ये दोनों मालिक की कीर्त्ति एवं राज्य बढ़ाने वाली मानी गई हैं ॥ ८७ ॥

**कपोलस्थाविति**। यदा यस्य वाजिनः अश्वस्य कपोलस्थौ यौ आवर्त्तौ दृश्येते, तदा तस्य तौ आवर्त्तौ यशोवृद्धिकरौ प्रोक्तौ तथा राज्यवृद्धिकरौ मतौ ॥ ८७ ॥

**एको वाथ कपोलस्थो यस्यावर्त्तः प्रदृश्यते।**
**सर्वनामा स विख्यातः स इच्छेत् स्वामिनाशनम् ॥ ८८ ॥**

**अन्वयः**—अथवा यस्य एकः कपोलस्थः आवर्त्तः प्रदृश्यते सः सर्वनामा विख्यातः, स च स्वामिनाशनम् इच्छेत् ॥ ८८ ॥

**व्याख्या**—अथवा = वा, यस्य = अश्वस्य, एकः = मात्रैकः, कपोलस्थः = गण्डस्थले स्थितः, आवर्त्तः = रोमचक्रम्, प्रदृश्यते = अवलोक्यते, सः = अश्वः, सर्वनामा = 'सर्व' इत्याख्यः,

विख्यातः = लोके प्रसिद्धः, स च = अश्वः, स्वामिनाशनम्—स्वामिनः = प्रभोः, नाशनम् = विनाशम्, इच्छेत् = अभिलषेत् ॥८८॥

**हिन्दी**—अथवा–जिस घोड़े के एक गाल पर एक ही भौंरी हो, वह 'सर्व' नाम से जाना जाता है। यह घोड़ा अपने मालिक का विनाश चाहता है ॥ ८८ ॥

**एक इति**। अथ वा यस्य एकः कपोलस्थः आवर्त्तः प्रदृश्यते, स अश्वः सर्वनामा विख्यातः, स च स्वामिनाशनम् इच्छेत् ॥ ८८ ॥

**गण्डसंस्थो यदावर्त्तो वाजिनो दक्षिणाश्रितः।**
**स करोति महासौख्यं स्वामिनं शिवसंज्ञकः ॥ ८९ ॥**

**अन्वयः**—यदा यस्य वाजिनः गण्डसंस्थः आवर्त्तः दक्षिणाश्रितः सः शिवसंज्ञकः स्वामिनं महासौख्यं करोति ॥ ८९ ॥

**व्याख्या**—यदा = यस्मिन्काले, यस्य वाजिनः = यस्याश्वस्य, गण्डसंस्थः = कपोलस्थः, आवर्त्तः = भ्रमिः, दक्षिणाश्रितः = सव्येतरकपोलस्थितः, सः = अश्वः, शिवसंज्ञकः = शिवाख्यः, घोटकः, स्वामिनम् = स्वपतिम्, महासौख्यम् = अतिसुखिनम्, करोति = निष्पादयति ॥ ८९ ॥

**हिन्दी**—जिस घोड़े के दायें गाल पर एक भौंरी हो, वह 'शिव' नामक घोड़ा मालिक के लिए सदा सुखकारी होता है ॥ ८९ ॥

**गण्डेति**। यदा यस्य वाजिनः गण्डसंस्थः आवर्त्तः दक्षिणाश्रितः दक्षिणगण्डस्थित इत्यर्थः, सः शिवसंज्ञकः शिवाख्यः अश्वः स्वामिनं महासौख्यम् अतिसुखिनं करोति ।। ८९ ॥

**तद्वद्वामाश्रितः क्रूरः प्रकरोति धनक्षयम्।**
**इन्द्राक्षौ तावुभौ शस्तौ नृपराज्यविवृद्धिदौ ॥ ९० ॥**

**अन्वयः**—तद्वत् वामाश्रितः आवर्त्तः क्रूरः धनक्षयं प्रकरोति। तौ उभौ इन्द्राक्षौ शस्तौ नृपराज्य-विवृद्धिदौ ॥ ९० ॥

**व्याख्या**—तद्वत् = तथैव, वामाश्रितः = सव्यकपोलस्थः, आवर्त्तः = रोमचक्रम्, क्रूरः सन्, धनक्षयम् = धननाशम्, प्रकरोति = विदधाति। तौ उभौ = युगपदुभयकपोलस्थितौ, चेत्, इन्द्राक्षौ = एतदाख्यौ, शस्तौ = विख्यातौ, नृपस्य = राज्ञः, राज्यविवृद्धिदौ = राज्यवृद्धिकरौ स्तः ॥ ९० ॥

**हिन्दी**—इसी तरह बाँयी ओर गाल पर यदि घोड़े को भौंरी हो तो वह घोड़ा क्रूरसंज्ञक होता है तथा स्वामी के धन का विनाश करता है। यदि गण्डस्थल के दोनों और भौरियाँ पड़ी हों तो वह घोड़ा 'इन्द्र' नामक होता है। ऐसा घोड़ा उत्तम एवं राजा के राज्य की वृद्धि कराने वाला होता है ॥ ९० ॥

**तद्वदिति**। तद्वत् तथा वामाश्रितः वामगण्डस्थ इत्यर्थः, आवर्त्तः क्रूरः सन् धनक्षयं प्रकरोति। तौ उभौ युगपत् उभयगण्डस्थौ चेत् इन्द्राक्षौ शस्तौ कथितौ, नृपस्य राज्यवृद्धिदौ च ॥ ९० ॥

**कर्णमूले यदावर्त्तौ स्तनमध्ये तथापरौ।**
**विजयाख्यौ उभौ तौ तु युद्धकाले यशःप्रदौ ॥ ९१ ॥**

**अन्वयः**—यदा कर्णमूले आवर्त्तौ तथा स्तनमध्ये अपरौ तदा तौ विजयाख्यौ युद्धकाले यशःप्रदौ ॥ ९१ ॥

**व्याख्या**—यदा कर्णमूले—कर्णस्य = श्रवणस्य, मूले = मूलभागे, आवर्त्तौ = रोमचक्रे, स्तः, तदा = तेनैव रूपेण, स्तनमध्ये = कुचान्तराले, अपरौ = अन्यौ, द्वौ = उभौ, आवर्त्तौ = रोमवर्त्तुले, भवेताम्, तदा तौ, उभौ = द्वौ, विजयाख्यौ = विजयनाम्नि, युद्धकाले = समराङ्गणे, यशःप्रदौ = कीर्त्तिकरौ भवेताम् ॥ ९१ ॥

**हिन्दी**—जिस घोड़े के कान की जड़ में दो तथा स्तनों के बीच दो भौरियाँ हों, वे 'विजय' नाम के होते हैं। ये युद्धकाल में विजयी एवं यशस्वी बनाते हैं ॥ ९१ ॥

**कर्णमूले इति**। यदा कर्णमूले आवर्त्तौ तथा स्तनमध्ये अपरौ द्वौ आवर्त्तौ भवेतां तदा तौ उभौ विजयाख्यौ युद्धकाले यशःप्रदौ च ॥ ९१ ॥

**स्कन्धपार्श्वे यदावर्त्तौ स भवेत् पद्मलक्षणः।**
**करोति विविधान् पद्मान् स्वामिनः सततं मुखम्॥ ९२ ॥**

**अन्वयः**—यदा स्कन्धपार्श्वे आवर्त्तौ तदा सः अश्वः पद्मलक्षणः भवेत्। स च स्वामिनः विविधान् पद्मान् सततं सुखं करोति ॥ ९२ ॥

**व्याख्या**—यदा = यस्मिन् काले, स्कन्धपार्श्वे—स्कन्धयोः = अंसयोः, पार्श्वेः = समीपे, आवर्त्तौ = घोटकशरीरस्थरोमवर्तुले, भवेताम्, तदा = तस्मिन् काले, सः = अश्वः, पद्मलक्षणः = पद्माख्यः, भवेत् = स्यात्। स चाश्वः, स्वामिनः = प्रभोः, विविधान् = अनेकान्, पद्मान् = पद्मसंख्यकान् धनानि, तथा सततम् = निरन्तरम्, सुखम् = आनन्दम्, करोति = प्रददाति ॥ ९२ ॥

**हिन्दी**—कन्धे के दोनों ओर यदि भौंरियाँ हों तो वह घोड़ा 'पद्म' नामक होता है। ऐसा घोड़ा मालिक के सुख की वृद्धि और अनन्त धनराशि देने वाला होता है ॥ ९२ ॥

**स्कन्धपार्श्वे इति**। यदा स्कन्धयोः पार्श्वे आवर्त्तौ भवेतां तदा सः अश्वः पद्मलक्षणः पद्मनामा भवेत्, स च स्वामिनः विविधान् पद्मान् पद्मसंख्यकधनानि इत्यर्थः, तथा सततं सुखं करोति ॥ ९२ ॥

**नासामध्ये यदावर्त्त एको वा यदि वा त्रयम्।**
**चक्रवर्त्ती स विज्ञेयो वाजी भूपालसंज्ञकः ॥ ९३ ॥**

**अन्वयः**—यदा नासामध्ये एको वा आवर्त्तः यदि वा त्रयं सः वाजी भूपालसंज्ञकः चक्रवर्त्ती विज्ञेयः ॥ ९३ ॥

**व्याख्या**—यदा = यदि, नासामध्ये = नासिकायारन्तराले, एकः = मात्रैकः, वा = अथवा, आवर्त्तः = रोमचक्रम्, यदि = चेत्, वा = अथवा, त्रयम् = त्रिसंख्यकम्, आवर्त्तः = रोमवर्त्तुलम्, स्यात् = भवेत्, तदा सः = असौ, वाजी = अश्वः, भूपालसंज्ञकः = 'भूपालः' इत्याख्यः, चक्रवर्त्ती = अश्वानां सम्राट् इति, विज्ञेयः = विशेषेण बोध्यः ॥ ९३ ॥

**हिन्दी**—जिस घोड़े की नाक के बीच में एक या तीन भौंरी हो, वह 'भूपाल' नामक घोड़ा होता है तथा उसे अश्वसम्राट् जानना चाहिए ॥ ९३ ॥

**नासेति**। यदा नासायाः नासिकायाः मध्ये एको वा आवर्त्तः यदि वा त्रयम् आवर्त्तानामिति शेषः, स्यात् स वाजी भूपालसंज्ञकः भूपालाख्यचक्रवर्त्ती अश्वसम्राट् विज्ञेयः ॥ ९३ ॥

**कण्ठे यस्य महावर्त्तो एकः श्रेष्ठः प्रजायते।**
**चिन्तामणिः स विज्ञेयश्चिन्तितार्थसुखप्रदः ॥ ९४॥**

**अन्वयः**—यस्य कण्ठे एकः श्रेष्ठः महावर्त्तः प्रजायते सः चिन्तामणिः विज्ञेयः, चिन्तितार्थसुखप्रदः ॥ ९४ ॥

**व्याख्या**—यस्य = अश्वस्य, कण्ठे = गलप्रदेशे, एकः = मात्रैकः, श्रेष्ठः = उत्कृष्टः, महान् = विशालः, आवर्त्तः = रोमवर्त्तुलम्, प्रजायते = समुत्पन्नो भवति, सः = अश्वः, चिन्तामणिः = चिन्तामणिनामा, विज्ञेयः = बोध्यः, चिन्तितार्थसुखप्रदः = अभिलषितार्थेषु आनन्दप्रदो भवति ॥९४ ॥

**हिन्दी**—जिस घोड़े के गले में एक उत्कृष्ट बड़ी-सी भौंरी हो, वह घोड़ा 'चिन्तामणि' नाम से जाना जाता है। वह जिसके पास होता है, उसे समस्त अभिलषित वस्तु देता है ॥ ९४ ॥

**कण्ठे इति**। यस्य कण्ठे एकः श्रेष्ठः उत्कृष्टः महान् आवर्तः प्रजायते सः अश्वः चिन्तामणिः विज्ञेयः, चिन्तामणिनामा चिन्तितार्थेषु अभिलपितार्थेपु सुखप्रदः ॥ ९४ ॥

**शुल्काख्यौ भालकण्ठस्थौ आवर्त्तौ वृद्धिकीर्त्तिदौ ॥ ९५ ॥**

**अन्वयः**—भालकण्ठस्थौ आवर्त्तौ शुल्काख्यौ वृद्धिकीर्त्तिदौ ॥९५ ॥

**व्याख्या**—भालकण्ठस्थौ = ललाटगलदेशस्थितौ, आवर्त्तौ = रोमवर्त्तुले, शुल्काख्यौ = शुल्कनाम्नी, वृद्धिकीर्त्तिदौ = अभ्युदययशस्करौ भवतः ॥९५ ॥

**हिन्दी**—जिस घोड़े के ललाट और कण्ठ में दो भौंरियाँ होती हैं, वे दोनों शुल्कसंज्ञक होती हैं। ये घोड़े अभ्युदय एव कीर्त्ति देने वाले होते हैं ॥९५ ॥

**शुल्काविति**। भालकण्ठस्थौ कपालकण्ठवर्त्तिनौ आवर्त्तौ शुल्काख्यौ वृद्धिकीर्त्तिदौ अभ्युदययशस्करौ च ॥ ९५ ॥

**यस्यावर्त्तौ वक्त्रगतौ कुक्ष्यन्ते वाजिनो यदि।**
**स नूनं मृत्युमाप्नोति कुर्य्याद्वा स्वामिनाशनम् ॥ ९६ ॥**

**अन्वयः**—यदि यस्य वाजिनः वक्त्रगतौ कुक्ष्यन्ते च आवर्त्तः सः नूनं मृत्युमाप्नोति वा स्वामिनाशनं कुर्यात् ॥ ९६ ॥

**व्याख्या**—यदि = चेत्, यस्य = पूर्वोक्तस्य, वाजिनः = अश्वस्य, वक्त्रगतौ = मुखवर्त्तिनौ, कुक्ष्यन्ते = उदरस्थे, च = पुनः, आवर्त्तः = घोटकशरीरस्थरोममण्डलम्, सः = घोटकः, नूनम् = निश्चितम्, मृत्युम् = मरणम्, आप्नोति = प्राप्नोति, वा = अथवा, स्वामिनाशनम् = प्रभुविघातनम्, कुर्यात् = विदध्यात् ॥ ९६ ॥

**हिन्दी**—यदि किसी घोड़े के मुँह में या पेट के अन्तिम भाग में भौंरियाँ हों तो वह घोड़ा या तो स्वयं मरेगा या मालिक को ही ले डूबेगा ॥ ९६ ॥

**यस्येति**। यदि यस्य वाजिनः वक्त्रगतौ मुखवर्त्तिनौ तथा कुक्ष्यन्ते जठरप्रान्ते च आवर्त्तः, सः नूनं निश्चितं मृत्युमाप्नोति वा स्वामिघातनं कुर्य्यात् ॥ ९६ ॥

**जानुसंस्था यदावर्त्ताः प्रवासक्लेशकारकाः।**
**वाजिमेढ्रे यदावर्त्तो विजयश्रीविनाशनः ॥ ९७ ॥**

**अन्वयः**—यत् आवर्त्ताः जानुसंस्थाः ते प्रवासे क्लेशकारकाः। वाजिनः मेढ्रे यः आवर्त्तः सः विजयश्रीविनाशनः॥ ९७॥

**व्याख्या**—यत् = ये, आवर्त्ताः = रोमवर्त्तुलानि, जानुसंस्थाः = ऊरुसन्ध्यस्थले स्थिताः, ते प्रवासे = विदेशे, क्लेशकारकाः- यः क्लेशः = कष्टम्, तं कुर्वन्ति = निष्पादयन्ति इति तथोक्ताः, भवन्ति। वाजिनः = अश्वस्य यस्य मेढ्रे = लिङ्गे, यः आवर्त्तः = रोमभ्रमिः, सः = असौ, विजयश्रीः = जयनं लक्ष्मींश्च, विनाशनम् = विघातकम्भवति॥ ९७॥

**हिन्दी**—जिन घोड़ों के घुटनों पर भौंरियाँ हों, उनसे मालिक को परदेश में विशेष कष्ट होता है। जिस घोड़े के लिङ्ग पर भौंरी हो, वे मालिक की विजय और लक्ष्मी का विनाशक होता है।

**जान्विति**। यदावर्त्ताः ये आवर्त्ता जानुसंस्थाः, ते प्रवासे यः क्लेशः तं कुर्वन्तीति तथोक्ताः भवन्ति। वाजिनः मेढ्रे शिश्ने यः आवर्त्तः, सः विजयश्रीविनाशनः भवति॥ ९७॥

**त्रिकसंस्थो यदावर्त्तस्त्रिवर्गस्य प्रणाशनः।**
**पुच्छमूले यदावर्त्तो धूमकेतुरनर्थकृत्॥ ९८॥**

**अन्वयः**—यत् आवर्त्तः त्रिकसंस्थः सः त्रिवर्गस्य प्रणाशनः, पुच्छमूले यत् आवर्त्तः सः धूमकेतुः अनर्थकृत्॥ ९८॥

**व्याख्या**—यत् = यः, आवर्त्तः = घोटकशरीरस्थरोमवर्त्तुलम्, त्रिकसंस्थः = पृष्ठवंशे स्थितः, सः = असौ, त्रिवर्गस्य = धर्मार्थकामानाम्, प्रणाशनः = विघातकः, पुच्छमूले—पुच्छस्य = लाङ्गुलस्य, मूले = मूलभागे, यत् = यः, आवर्त्तः = रोममण्डलम्, सः = असौ, धूमकेतुः = धूमकेतुनामा, अनर्थकृत् = अनिष्टकारको भवति॥ ९८॥

**हिन्दी**—जिस घोड़े की रीढ की हड्डी के निचले भाग में भौंरी हो तो वह धर्म-अर्थ-काम का नाशक होता है। घोड़े के दुम के मूल में यदि भौंरी हो तो वह धूमकेतुसंज्ञक होता है तथा अनर्थकारी होता है॥ ९८॥

**त्रिकेति**। य आवर्त्तः त्रिकसंस्थः पृष्ठवंशाधोभागस्थः, सः त्रिवर्गस्य त्रयाणां वर्गः त्रिवर्गः तस्य धर्मार्थकामानामित्यर्थः प्रणाशनः। पुच्छमूले यः आवर्त्तः, सः धूमकेतुः धूमकेतुनामा अत एव अनर्थकृत् अनिष्टकारकः॥ ९८॥

**गुह्यपुच्छत्रिकावर्त्ती स कृतान्तो भयप्रदः॥ ९९॥**

**अन्वयः**—यः गुह्ये पुच्छे त्रिके च आवर्त्ती सः कृतान्तः भयप्रदः॥९९॥

**व्याख्या**—यः = घोटकः, गुह्ये = गुह्याङ्गे, पुच्छे = लाङ्गुले, त्रिके = पृष्ठाधारे, च = पुनः, आवर्त्ती = रोममण्डलवान् भवेत्, सः = असौ, कृतान्तः = कृतान्तसंज्ञकः, तथा भयप्रदः = भीतिकरो भवति॥ ९९॥

**हिन्दी**—जिस घोड़े की गुदा, पूँछ तथा रीढ की हड्डी के नीचले भाग में भौंरी हों, उसका नाम 'कृतान्त' है तथा वह अनर्थकारी होता है॥ ९९॥

**गुह्येति**। यः अश्वः गुह्ये मलद्वारे, पुच्छे, त्रिके च आवर्त्ती आवर्त्तवान् सः कृतान्तः कृतान्तनामा अत एव भयप्रदः॥ ९९॥

**मध्यदण्डा पार्श्वगमा सैव शतपदी कचे।**
**अतिदुष्टाङ्गुष्ठमिता दीर्घा दुष्टा यथा यथा॥ १००॥**

**अन्वयः**—पार्श्वगमा मध्यदण्डा अङ्गुष्ठमिता अतिदुष्टा सैव शतपदी कचे यथा यथा दीर्घा तथा तथा दुष्टा भवति ॥ १०० ॥

**व्याख्या**—पार्श्वगमा = उभयोः पार्श्वयोः गमनशीला, मध्यदण्डा = घोटकस्य मध्यदण्डाख्य-चिह्नविशेषः, अङ्गुष्ठमिता = अङ्गुल्यैकमिता, चेत् = यदि, अतिदुष्टा = अधिकक्रूरा, सैव, शतपदी = शतचरणा, कचे = केशे, वर्त्तमाना सती, यथा यथा दीर्घा = लम्बायमाना, तथा तथा दुष्टा = दुर्वृत्ता भवतीति भावः ॥ १०० ॥

**हिन्दी**—जिसकी पूँछ दोनों बगल की ओर आये और बीच में दण्डाकार चिह्न हो और वह एक अंगुल लम्बा हो तो उसे मध्यदण्ड या शतपदी कहते हैं। यह अतिदुष्ट मानी जाती है। फिर जैसे-जैसे यह बढती है इसकी दुष्टता भी बढ़ती जाती है ॥ १०० ॥

**मध्यदण्डेति**। पार्श्वगमा पार्श्ववर्त्तिनी मध्यदण्डा अश्वस्य तदाख्यचिह्नविशेष इत्यर्थः, अङ्गुष्ठमिता चेत् अतिदुष्टा, सैव शतपदी शतचरणा शतशाखा करे केशे वर्त्तमाना सती यथा यथा दीर्घा तथा तथा दुष्टा भवतीत्यर्थः ॥ १०० ॥

**अश्रुपातो हनुगण्डहृद्गलप्रोथवस्तिषु।**
**कटिशङ्खजानुमुष्ककुन्नाभिगुदेषु च।**
**दक्षकुक्षौ दक्षपादे त्वशुभो भ्रमरः सदा॥ १०१ ॥**

**अन्वयः**—हनुगण्डहृद्गलप्रोथवस्तिषु तथा कटिशङ्खजानुमुष्ककुन्नाभिगुदेषु भ्रमरः अश्रुपातः किञ्च दक्षकुक्षौ दक्षपादे च सदा अशुभः ॥१०१ ॥

**व्याख्या**—हनुगण्डहृद्गलप्रोथवस्तिषु—हनुः = चिबुकः, गण्डः = गल्लः, हृद् = वक्षःस्थलम्, गलः = ग्रीवा, प्रोथः = अश्वनासारन्ध्रम्, वस्तिः = नाभेरधोभागः मूत्राशयश्चेति, तेषु, तथा कटिशङ्खजानुमुष्ककुन्नाभिगुदेषु—कटिः = काञ्चीपदम्, शङ्खः = अश्वगण्डः, जानुः = ऊरुपर्व, मुष्कः = अण्डकोशः, ककुद् = अंसकूटः, नाभिः = तुन्दकूपी, गुदम् = मलद्वारम्, तेषु च भ्रमरः = घोटकशरीरस्थरोमवर्त्तुलम्, अश्रुपातः = क्रन्दनकारकः, किञ्च दक्षकुक्षौ = दक्षिणोदरे, दक्षपादे = सव्येतरचरणे च, सदा = सर्वदा, अशुभः = अकल्याणकरो भवति ॥ १०१ ॥

**हिन्दी**—यदि घोड़े की ठुड्डी, कनपटी, छाती, गला, थूथन, पेडू, कमर, कनपटी के समीप की जगह, घुटने, अण्डकोश, कंधे के मांसपिण्ड (डिल्ला या कुबर), ढोढी या तुन्गी एवं मलद्वार में भौंरी हो तो वह मालिक को रुलाने वाली होती है और दायें पेट या दायें पैर में भौंरी हो तो हमेशा अशुभ फल देने वाली हाती है ॥ १०१ ॥

**अश्रुपातेति**। हनुगण्डहृद्गलप्रोथवस्तिषु हनुः कपोलस्य उपरिभागः, गण्डः कपोलः, हृद् हृदयं, गलः कण्ठः, प्रोथः मुखाग्रभागः, वस्तिः नाभ्यधोभागः, तेषु तथा कटिशङ्खजानुमुष्ककुन्नाभिगुदेषु कटिः मध्यदेशः, शङ्खः ललाटास्थि, जानु, मुष्कः, ककुद्, नाभिः गुदम् अपानदेशः तेषु च भ्रमरः अश्रुपातः क्रन्दनकारकः, किञ्च दक्षकुक्षौ दक्षपादे च सदा अशुभः ॥ १०१ ॥

**गलमध्ये पृष्ठमध्ये उत्तरोष्ठेऽधरे तथा।**
**कर्णनेत्रान्तरे वामकुक्षौ चैव तु पार्श्वयोः।**
**ऊरुषु च शुभावर्त्तौ वाजिनामग्रपादयोः॥ १०२॥**

**अन्वयः**—वाजिनां गलमध्ये पृष्ठमध्ये उत्तरोष्ठे अधरे कर्णनेत्रयोः अन्तरे वामकुक्षौ पार्श्वयोः ऊरुषु तथा अग्रपादयोः शुभावर्त्तौ ॥१०२॥

**व्याख्या**—वाजिनाम् = घोटकानाम्, गलमध्ये = कण्ठस्यान्तरे, पृष्ठमध्ये = अश्वपृष्ठस्य मध्यभागे, उत्तरोष्ठे = ऊर्ध्वोष्ठे, अधरे = अधस्तने ओष्ठे, कर्णनेत्रयोः = श्रवणनयनयोः, अन्तरे = मध्ये, वामकुक्षौ = सव्योदरे, पार्श्वयोः = पार्श्वपक्षयोः, ऊरुषु = जानूपरिभागेषु, तथा = तेनैव प्रकारेण, अग्रपादयोः = सम्मुखस्थचरणयोः, आवर्त्तौ = रोममण्डले, शुभौ = मङ्गलदायकौ वा कल्याणकरौ भवतीत्यर्थः॥ १०२॥

**हिन्दी**—घोड़े के गले या पीठ के बीच में ऊपर या नीचे के होठ पर, कान और आँख के बीच में बाँये पेट पर, दोनों बगलों में, दोनों जंघाओं पर, दोनों अगले पावों में यदि भौंरियाँ हों तो अत्यधिक कल्याणकारी होती हैं॥ १०२॥

**गलमध्ये इति**। वाजिनाम् अश्वानां गलमध्ये, पृष्ठमध्ये, उत्तरोष्ठे, अधरे, कर्णनेत्रयोः अन्तरे मध्ये वामकुक्षौ पार्श्वयोः ऊरुषु तथा अग्रपादयोः सम्मुखस्थपादयोः शुभावर्त्तौ आवर्त्तौ शुभकरावित्यर्थः॥ १०२॥

**आवर्त्तौ सान्तरौ भाले सूर्य्यचन्द्रौ शुभप्रदौ।**
**मिलितौ तौ मध्यफलौ ह्यतिलग्नौ तु दुष्फलौ॥ १०३॥**

**अन्वयः**—भाले सान्तरौ आवर्त्तौ सूर्यचन्द्रौ शुभप्रदौ। हि तौ मिलितौ मध्यफलौ अतिलग्नौ दुष्फलौ॥ १०३॥

**व्याख्या**—भाले = मूर्धनि, सान्तरौ = अन्तरालेन सहितौ, आवर्त्तौ = रोमवर्त्तुले, सूर्यचन्द्रौ = सूर्यचन्द्राख्यौ, शुभप्रदौ = कल्याणकरौ भवतः। तौ = आवर्त्तौ, मिलितौ = समीपस्थौ, मध्यफलौ = सामान्यलाभकरौ भवतः, तथा अतिलग्नौ = अतिनिकटस्थौ, चेत् तदा, दुष्फलौ = अशुभफलदौ भवतः॥१०३॥

**हिन्दी**—घोड़ों के ललाट पर यदि कुछ दूरी पर दो भौंरियाँ हों तो वे सूर्य-चन्द्र नामवाली होती हैं। ये भौंरियाँ शुभफलदायी होती हैं। यदि थोड़ी सटी हों तो मध्यम फलदायी होती हैं और अत्यधिक सटी भौंरियाँ दुष्ट फल देनेवाली होती हैं॥ १०३॥

**आवर्त्ताविति**। भाले ललाटे सान्तरौ पृथक् स्थानस्थौ आवर्त्तौ सूर्य्यचन्द्रौ सूर्य्यचन्द्रनामानौ शुभप्रदौ भवतः। तौ मिलितौ अपृथक्स्थौ मध्यफलौ, अतिलग्नौ परस्परातिसन्निहितौ तु दुष्फलौ मन्दफलौ भवतः॥१०३॥

**आवर्त्तत्रितयं भाले शुभं चोद्ध्र्वन्तु सान्तरम्।**
**अशुभं चातिसंलग्नमावर्त्तद्वितयं तथा॥ १०४॥**

**अन्वयः**—भाले ऊद्ध्र्वं सान्तरम् आवर्त्तत्रितयं शुभम्। अतिसंलग्नम् आवर्त्तद्वितयं अशुभम्॥१०४॥

**व्याख्या**—भाले = ललाटे, उद्ध्र्वम् = उपरिमुखम्, सान्तरम् = पृथक्स्थानस्थम्, आवर्त्तत्रितयम् = त्रिसंख्यकानि रोमवर्त्तुलानि, शुभम् = शुभकरम्, तथा अतिसंलग्नम् = अतिसन्निकटवर्त्तिनम्, आवर्त्तद्वितयम् = द्विसंख्यकौ, आवर्त्तौ = रोममण्डले, अशुभम् = अशुभ-फलदं भवति॥१०४॥

**हिन्दी**—यदि घोड़े के ललाट में ऊपर की ओर मुख किये तीन भौंरियाँ अलग-अलग हो तों शुभ फलदायक होती हैं। वही दो भौंरियाँ यदि सटी हुई ललाट पर हों तो अशुभ फलदायक होती हैं॥ १०४॥

**आवर्त्तेति**। भाले ऊद्ध्र्वम् ऊद्ध्र्वमुखं सान्तरं पृथक्स्थम् आवर्त्तत्रितयं शुभम्। तथा अतिसंलग्नम् अतिसन्निहितम् आवर्त्तद्वितयम् अशुभम्॥ १०४॥

**त्रिकोणं त्रितयं भाले आवर्त्तानां तु दुःखदम्।**
**गलमध्ये शुभस्त्वेकः सर्वाशुभनिवारणः॥ १०५॥**

**अन्वयः**—भाले आवर्तानां त्रिकोणं त्रितयं दुःखदम्। गलमध्ये तु एकः शुभः सर्वाशुभनिवारणः॥१०५॥

**व्याख्या**—भाले = ललाटे, यदि आवर्त्तानाम् = रोमवर्त्तुलानाम्, त्रिकोणम् = त्रिकोणाकारम्, त्रितयम् = आवर्त्तत्रयम्, दुःखदम् = क्लेशकारकं भवति, गलमध्ये = कण्ठमध्ये, तु = यदि, एकः = मात्रैकः, आवर्त्तः = रोममण्डलम्, शुभः = शुभकरः, सर्वेषाम् = सकलानाम्, अशुभानाम् = अहितानाम्, निवारणः = अपसारणं भवति॥ १०५॥

**हिन्दी**—यदि घोड़े के ललाट में त्रिकोणाकार तीन भौंरियाँ हों तो वे दुःखदायी होती हैं और गले के बीच में यदि एक भौंरी हो तो वह शुभफल देने वाली तथा सभी तरह के अशुभ फलों को दूर करने वाली होती है॥ १०५॥

**त्रिकोणमिति**। भाले आवर्त्तानां त्रिकोणं त्रितयं त्रिकोणावर्त्तत्रयमित्यर्थः दुःखदम्। गलमध्ये तु एकः आवर्त्तः शुभः शुभकरः, सर्वेषाम् अशुभानां निवारणश्च भवति॥१०५॥

**अधोमुखः शुभः पादे भाले चोद्ध्र्वमुखो भ्रमः।**
**न चैवात्यशुभा पृष्ठमुखी शतपदी मता॥ १०६॥**

**अन्वयः**—पादे अधोमुखः भाले ऊद्ध्र्वमुखः भ्रमः शुभः। पृष्ठमुखी प्रत्यङ्मुखी शतपदी अत्यशुभा न च मता॥ १०६॥

**व्याख्या**—पादे = चरणे, अधोमुखः = नताननः, भाले = मूर्धनि, ऊद्ध्र्वमुखः = उन्नताननः, भ्रमः = आवर्त्तः, शुभः = कल्याणप्रदो भवति। पृष्ठमुखी = पश्चिमाङ्गोन्मुखी, प्रत्यङ्मुखी, अन्तर्मुखी, विरुद्धोन्मुखी वा, शतपदी = कर्णकीटी, अत्यशुभा = अत्यमङ्गला, न च = नैव, मता = कथिता॥१०६॥

**हिन्दी**—घोड़े के पैरों में अधोमुख तथा ललाट में ऊर्ध्वोन्मुख भौंरी होती है। पीठ की ओर मुख वाली या भीतर की ओर मुख वाली शतपदी भौंरी होती है। यह सदैव अशुभ फल देने वाली ही नहीं होती है॥ १०६॥

**अधोमुख इति**। पादे अधोमुखः, तथा भाले ऊद्ध्र्वमुखः भ्रमः आवर्त्तः शुभः। पृष्ठमुखी प्रत्यङ्मुखी शतपदी अत्यशुभा अत्यन्ताशुभकरी न च मता॥ १०६॥

**मेढ्रस्य पश्चाद् भ्रमरी स्तनी वाजी स चाशुभः।**
**भ्रमः कर्णसमीपे तु शृङ्गी चैकः स निन्दितः॥ १०७॥**

**अन्वयः**—यः वाजी मेढ्रस्य पश्चात् भ्रमरी वा स्तनी स च अशुभः कर्णसमीपे भ्रमः सः शृङ्गी स एकः निन्दितः॥ १०७॥

**व्याख्या**—यः वाजी = घोटकः, मेढ्रस्य = शिश्नस्य, पश्चात् = तदूद्ध्वम्, भ्रमरी = आवर्त्तवान्, वा = अथवा, स्तनी = कुचाकारचिह्नविशेषशाली, स चाश्वः, अशुभः = अमङ्गलकारी, कर्णसमीपे—कर्णस्य = श्रोत्रस्य, समीपे = पार्श्वे, यस्य भ्रमः = आवर्त्तः, सः = असौ, शृङ्गी = शृङ्गी इत्याख्यः, स चाश्वः, एकः = केवलः, निन्दितः = गर्हितः ॥१०७ ॥

**हिन्दी**—जिस घोड़े के लिङ्ग के पीछे भौंरी अथवा स्तन हो तो वह अमङ्गलकारी होता है तथा जिसके कान के समीप भौंरी होती है, वह घोड़ा एकशृङ्गी कहलाता है और निन्दित होता है ॥ १०७ ॥

**मेढ्रस्येति**। यः वाजी अश्वः मेढ्रस्य पश्चात् भ्रमरी भ्रमरवान् वा स्तनी स्तनाकारचिह्नविशेषशाली, स च अशुभः। कर्णसमीपे यस्य भ्रमः, स शृङ्गी, स च एकः केवलः निन्दितः ॥ १०७ ॥

**ग्रीवोद्ध्वपार्श्वे भ्रमरी ह्येकरश्मिः स चैकतः।**
**पादोद्ध्वमुखभ्रमरी कीलोत्पाटी स निन्दितः ॥ १०८ ॥**

**अन्वयः**—यः ग्रीवोद्ध्वपार्श्वे भ्रमरी एकतः एकरश्मिश्च पादोद्ध्वमुखभ्रमरी कीलोत्पाटी सः निन्दितः ॥ १०८ ॥

**व्याख्या**—यः, ग्रीवायाः = कन्धरायाः, ऊद्ध्वपार्श्वे = उपरिभागसमीपे, भ्रमरी = आवर्त्तवान्, एकतः = एकस्मिन् पार्श्वे, एकरश्मिः—एकः = केवलः, रश्मिः = एतदाख्यः चिह्नविशेषः, यस्य तथा- भूतस्य, पादोद्ध्वमुखभ्रमरी—पादानाम् = चरणानाम्, ऊर्ध्वे = उपरिभागे, मुखे = मूले, च, भ्रमरी = भ्रमरवान्, किञ्च कीलोत्पाटी--- कीलम् = शङ्कुम्, उत्पाटयति इति कीलोत्पाटी = एतदाख्यः, सः = असौ, निन्दितः = गर्हितः ॥ १०८ ॥

**हिन्दी**—जिस घोड़े की गर्दन के ऊपर बगल में भौंरी होती है वह एकरश्मि कहलाती है तथा निन्दित होती है। पैरों के ऊपर ऊर्ध्वमुख भौंरी कीलोत्पाटी कहलाती है तथा यह भी निन्दित होती है ॥ १०८ ॥

**ग्रीवेति**। यः ग्रीवाया ऊद्ध्वपार्श्वे भ्रमरी भ्रमरवान्, एकतः एकस्मिन् पार्श्वे एकरश्मिश्च एकः रश्मिः तदाख्यचिह्नविशेष इत्यर्थः, यस्य तथाभूतः तथा पादोद्ध्वमुखभ्रमरी पादानाम् ऊद्ध्वे अग्रे मुखे मूले च भ्रमरी किञ्च कीलोत्पाटी कीलं शङ्कुम् उत्पाटयतीति तथोक्तः, सः निन्दितः ॥ १०८ ॥

**शुभाशुभौ भ्रमौ यस्मिन् स वाजी मध्यमः स्मृतः।**
**मुखे पत्सु सितः पञ्चकल्याणोऽश्वः सदा मतः ॥ १०९ ॥**

**अन्वयः**—यस्मिन् भ्रमौ शुभाशुभौ सः वाजी मध्यमः स्मृतः। मुखे पत्सु सितः अश्वः पञ्च-कल्याणः मृतः ॥ १०९ ॥

**व्याख्या**—यस्मिन् = अश्वे, भ्रमौ = आवर्तौ, शुभाशुभौ = मङ्गलामङ्गलप्रदौ, सः = असौ, वाजी = घोटकः, मध्यमः = मध्यकोटिकः, स्मृतः = कथितः। यस्य = अश्वस्य, मुखे = आनने, पत्सु = चरणेषु, च, सितः = शुक्लवर्णः, सः = अश्वः, पञ्चकल्याणः = कल्याणप्रदः, सदा = सर्वदा, मतः = कथितः ॥ १०९ ॥

**हिन्दी**—जिस घोड़े में शुभ और अशुभ दोनों तरह की भौंरियाँ पाई जाती हैं, वह

मध्यम कोटि का घोड़ा होता है और जिसके मुख और चारों पैर सफेद होते हैं, वह सदा पंचकल्याण होता है॥ १०९ ॥

**शुभाशुभाविति**। यस्मिन् वाजिनि भ्रमौ शुभाशुभौ, स वाजी मध्यमः स्मृतः। यश्च मुखे पत्सु पादेषु च सितः श्वेतः, स अश्वः पञ्चकल्याणः पञ्चधा शुभकरः सदा मतः ख्यातः॥ १०९ ॥

**स एव हृदये स्कन्धे पुच्छे श्वेतोऽष्टमङ्गलः।**
**कर्णे श्यामः श्यामकर्णः सर्वतस्त्वेकवर्णभाक्।**
**तत्रापि सर्वतः श्वेतो मेध्यः पूज्यः सदैव हि॥ ११० ॥**

**अन्वयः**—स एव हृदये, स्कन्धे तथा पुच्छे श्वेतः, कर्णे च श्यामश्चेत् अष्टमङ्गलः श्यामकर्णः सर्वतः एकवर्णभाक्, तथापि सर्वतः श्वेतः सदैव हि मेध्यः पूज्यः॥ ११० ॥

**व्याख्या**—सः = असौ, एव अश्वः, हृदये = वक्षःस्थले, स्कन्धे = ग्रीवायाम्, तथा पुच्छे = लाङ्गुले, श्वेतः = सितवर्णः, कर्णे = श्रोत्रे च, श्यामः = कृष्णवर्णश्चेत्, तद् अष्टमङ्गलः = अष्टविध-मङ्गलदायको भवति, किञ्च श्यामकर्णः = कृष्णवर्णकर्णः, तथा सर्वतः = सकलशरीरे, एकवर्णभाक्, तत्राऽपि, सर्वतः = सकलशरीरावयवतः, श्वेतः = शुक्लवर्णश्चेत्, सदैव = सर्वदा, हि = इति निश्चयेन, मेध्यः = अश्वमेधयज्ञस्य योग्यः, अत एव पूज्यः = पूजनीयो भवेत्॥ ११० ॥

**हिन्दी**—उसी श्यामकर्ण घोड़े की छाती, कंधा और पूँछ में अगर सफेदी हो तो वह अष्ट-मंगल कहलाता है अर्थात् जहाँ रहता है वहाँ आठ तरह के मंगल का विधान करता है। जिस घोड़े का समस्त शरीर एकवर्ण आर केवल कान काला हो तो घोड़ा श्यामकर्ण कहलाता है। उसमें भी समस्त देह श्वेतवर्ण और केवल कान श्यामवर्ण हो तो वह घोड़ा अश्वमेध यज्ञ के योग्य होता है तथा सर्वदा पूज्य होता है॥ ११० ॥

**स इति**। स एव अश्वः हृदये स्कन्धे तथा पुच्छे श्वेतः, कर्णे च श्यामश्चेत् अष्टमङ्गलः अष्टमङ्गलजनकः। किञ्च श्यामकर्णः किन्तु सर्वतः सर्वस्मिन् अवयवे एकवर्णभाक्, तत्रापि सर्वतः श्वेतवर्णश्चेत् सदैव मेध्यः पूज्यः हिशब्दः अवधारणे॥ ११० ॥

**वैदूर्यसन्निभे नेत्रे यस्य स्तो जयमङ्गलः।**
**मिश्रवर्णस्त्वेकवर्णः पूज्यः स्यात् सुन्दरो यदि॥ १११ ॥**

**अन्वयः**—यस्य नेत्रे वैदूर्यसन्निभे स्तः सः मिश्रवर्णः जयमङ्गलः, यदि एकवर्णः सुन्दरः स्यात् तदा पूज्यः॥ १११ ॥

**व्याख्या**—यस्य = घोटकस्य, नेत्रे = लोचने, वैदूर्यसन्निभे = केतुरत्नतुल्ये, स्तः = भवतः, सः चेत्, मिश्रवर्णः = विविधवर्णः, तदा सः जयमङ्गलः = विजयकल्याणदायकः, भवति। तत्रापि, एकवर्णः = मात्रैकवर्णः, अथ च, सुन्दरः = मनोहरः, यदि = चेत्, स्यात् = भवेत्, तदा सोऽश्वः, पूज्यः = श्लाघ्यः॥१११ ॥

**हिन्दी**—जिस घोड़े की आँखें वैदूर्यमणि की तरह कालापन लिये श्वेत वर्ण की हों तो वह जयमंगल नामक घोड़ा सदैव विजय और मंगल देता है। कोई भी घोड़ा चितकबरा हो या एक वर्ण का हो, यदि देखने में वह सुन्दर हो तो पूज्य है॥ १११ ॥

**वैदूर्येति**। यस्य अश्वस्य नेत्रे नयने वैदूर्य्यसन्निभे वैदूर्य्यरत्नसदृशे स्तः भवतः, सः चेत्

मिश्रवर्णः नानावर्णः, तदा जयमङ्गलः जयमङ्गलसाधकः भवति। तत्रापि एकवर्णः अथ च सुन्दरः यदि स्यात् तदा पूज्यः॥ १११ ॥

**कृष्णपादो हरिर्निन्द्यस्तथा श्वेतैकपादपि।**
**रूक्षो धूसरवर्णश्च गर्दभाभोऽपि निन्दितः॥ ११२॥**

**अन्वयः**—कृष्णपादः श्वेतैकपाद् अपि हरिः निन्द्यः, किञ्च रूक्षः धूसरवर्णः गर्दभाभः अपि निन्दितः॥ ११२ ॥

**व्याख्या**—कृष्णपादः = श्यामवर्णचरणः, तथा श्वेतैकपात् = अश्वस्यैकचरणस्तु शुक्लवर्णः, तथा रूक्षवर्णः = अनाकर्षकवर्णः, धूसरवर्णः = आपाण्डुवर्णः, गर्दभाभः = रासभतुल्यवर्णः, अपि = चेत्, निन्दितः = गर्हितः॥११२ ॥

**हिन्दी**—जिस घोड़े के पैर काले हों अथवा एक ही पैर सफेद हो और रंग बेढ़ंग या गदहे की तरह धूसर वर्ण का हो तो वह बड़ा ही निन्दनीय होता है॥ ११२ ॥

**कृष्णपाद** इति। कृष्णपादः कृष्णवर्णचरणः तथा श्वेतैकपात् श्वेतवर्णैकचरणः अपि हरिः अश्वः निन्द्यः। किञ्च रूक्षवर्णः धूसरवर्णः तथा गर्दभाभः गर्दभसदृशवर्णः अपि निन्दितः॥ ११२ ॥

**कृष्णतालुः कृष्णजिह्वः कृष्णोष्ठश्च विनिन्दितः।**
**सर्वतः कृष्णवर्णो यः पुच्छे श्वेतः स निन्दितः॥ ११३॥**

**अन्वयः**—कृष्णतालुः कृष्णजिह्वः कृष्णोष्ठश्च विनिन्दितः। यः सर्वतः कृष्णवर्णः पुच्छे श्वेतः सः निन्दितः॥ ११३ ॥

**व्याख्या**—कृष्णतालुः = श्यामवर्णकाकुदम्, कृष्णजिह्वः = श्यामरसनः, तथा कृष्णोष्ठः = श्यामवर्णोष्ठः, विनिन्दितः = गर्हितः, यः = अश्वः, सर्वतः = सकलशरीरावयवतः, कृष्णवर्णः = श्यामवर्णः, किञ्च, पुच्छे = लाङ्गुले, श्वेतः = शुभ्रवर्णः, सः = असौ, निन्दितः = गर्हितः॥ ११३ ॥

**हिन्दी**—जिस घोड़े के तालु, जीभ और होठ काले हों तथा समस्त देह काली हो, किन्तु पूँछ सफेद हो तो वह निन्दित होता है॥ ११३ ॥

**कृष्णतालुरिति**। कृष्णतालुः कृष्णवर्णतालुदेशः कृष्णजिह्वः कृष्णवर्णरसनः तथा कृष्णोष्ठश्च विनिन्दितः। यश्च सर्वतः सर्वस्मिन् अवयवे कृष्णवर्णः किन्तु पुच्छे श्वेतः, सः निन्दितः॥ ११३ ॥

**उच्चैःपदन्यासगतिर्द्विपव्याघ्रगतिश्च यः।**
**मयूरहंसतित्तिरपारावतगतिश्च यः।**
**मृगोष्ट्रवानरगतिः पूज्यो वृषगतिर्हयः॥ ११४॥**

**अन्वयः**—यः उच्चैःपदन्यासगतिः यश्च द्विपव्याघ्रगतिः यश्च मयूरहंसतित्तिरपारावतगतिः मृगोष्ट्रवानरगतिः वृषगतिः हयः पूज्यः॥ ११४ ॥

**व्याख्या**—यः = अश्वः, उच्चैः = उन्नतैः, पदानाम् = चरणानाम्, न्यासः = निधानम्, यत्र तादृशी गतिर्यस्य तथोक्तः, यश्च = अश्वः, द्विपस्य = गजस्य, व्याघ्रस्य = शार्दूलस्य, च इव गतिर्यस्य तथाभूतः, तथा मयूरस्य = कलापिनः, वावर्षामदस्य, हंसस्य = मरालस्य, पारावतस्य = कपोतस्य, इव गतिर्यस्य, किञ्च यः = अश्वः, मृगस्य = हरिणस्य, उष्ट्रस्य = क्रमेलकस्य,

वानरस्य = मर्कटस्य, गतिर्यस्य तादृशः, तथा वृषस्य = बलीवर्दस्येव गतिर्यस्य तथाभूतः, हयः = वाजी, पूज्यः = पूजनीयो भवति ॥ ११४ ॥

**हिन्दी**—जो घोड़ा ऊँचा पैर उठा कर चलता हो या जिसकी चाल हाथी, सिंह, मयूर, हंस, तीतर, कबूतर, हिरण, ऊँट या बैल की तरह हो, वह घोड़ा पूजनीय होता है ॥ ११४ ॥

**उच्चैरिति**। यः उच्चैः पादानां न्यासा यत्र तादृशी गतिर्यस्य तथोक्तः, यश्च द्विपस्य हस्तिनः व्याघ्रस्य च इव गतिर्यस्य तथाभूतः, तथा मयूरस्य हंसस्य पारावतस्य इव गतिर्यस्य सः, किञ्च यः मृगस्य उष्ट्रस्य वानरस्येव गतिर्यस्य तादृशः तथा वृषस्येव गतिर्यस्य तथाभूतः हयः अश्वः पूज्यः ॥ ११४ ॥

**अतिभुक्तोऽतिपीतोऽपि यया सादी न पीड्यते।**
**श्रेष्ठा गतिस्तु सा ज्ञेया स श्रेष्ठस्तुरगो मतः ॥ ११५ ॥**

**अन्वयः**—सादी अतिभुक्तः तथा अतिपीतः अपि यया न पीड्यते सा गतिस्तु श्रेष्ठा ज्ञेया, सः तुरगस्तु श्रेष्ठः मतः ॥ ११५ ॥

**व्याख्या**—सादी = अश्वारोही, अतिभुक्तः = अतिजग्धः भक्षितो वा, अतिपीतः = कृताधिकपानम्, अपि = चेत्, यया = गत्या, न = नहि, पीड्यते = क्लिश्यते, सा = पूर्वोक्ता, गतिः = गमनम्, तु = किन्तु, श्रेष्ठा = उत्कृष्टा, ज्ञेया = बोध्या, सः = तादृग्गुणविशेषेण विभूषितः, तुरगः = घोटकः, श्रेष्ठः = घोटकेषूत्कृष्टः, मतः = ख्यातः ॥ ११५ ॥

**हिन्दी**—घोडे की वही चाल अच्छी चाल मानी जाती है जिससे काफी खा-पीकर भी सवारी करने पर भी सवार को किसी तरह की पीड़ा महसूस न हो और ऐसी ही चाला वाला घोड़ा उत्कृष्ट माना जाता है ॥ ११५ ॥

**अतिभुक्त इति**। सादी आरोही अतिभुक्तः अधिकाहारः तथा अतिपीतः अत्यधिकपानकारी अपि यया गत्या न पीड्यते क्लिश्यते सा गतिस्तु गमनमेव श्रेष्ठा ज्ञेया सः तादृशगतिशीलः तुरगः श्रेष्ठः मतः ॥ ११५ ॥

**सुश्वेतभालतिलको विद्धो वर्णान्तरेण च।**
**स वाजी दलभञ्जी तु यस्य सैवातिनिन्दितः ॥ ११६ ॥**

**अन्वयः**—यः सुश्वेतभालतिलकः यस्य सः वर्णान्तरेण विद्धः तथा दलभञ्जी सः च अतिनिन्दितः ॥ ११६ ॥

**व्याख्या**—सः = वाजी, सुश्वेतम् = सुष्ठुतया शुक्लवर्णम्, भाले = ललाटे, तिलकम् = चिह्नविशेषः, यस्य सः वर्णान्तरेण = सितातिरिक्तेन वर्णेन, विद्धः = मिश्रितः, तथा दलानाम् = घोटकवर्णानाम्, भञ्जी = भञ्जकः, सः किञ्च, यस्य च = जनस्य च, सः = अश्वः अस्ति, अतिनिन्दितः = अत्यन्तगर्हितो भवति, अत्र सैवेति आर्षप्रयोगः ॥ ११५ ॥

**हिन्दी**—जिस घोड़े के माथे पर सफेद तिलक अन्य रंगो से मिले हो, वह घोड़ा दलभंजी कहलाता है। वह घोड़ा और उसका मालिक दोनों निन्दित माने जाते हैं ॥ ११५ ॥

**सुश्वेतेति**। यः वाजी सुश्वेतं भाले तिलकं तिलकाकारचिह्नविशेषः यस्य सः वर्णान्तरेण श्वेतातिरिक्तेन वर्णेन विद्धः युक्तः तथा दलभञ्जी दलानाम् अश्वीयानां भङ्गकारकः सः किञ्च यस्य च सः वाजी अस्ति स च अतिनिन्दितः। सैवेति सन्धिरार्षः ॥ ११६ ॥

**संहन्याद्वर्णजान् दोषान् स्निग्धवर्णो भवेद् यदि।**
**बलाधिकश्च सुगतिर्महान् सर्वाङ्गसुन्दरः॥ ११७॥**

**अन्वयः**—यदि स्निग्धवर्णः बलाधिकः सुगतिः महान् सर्वाङ्गसुन्दरः च भवेत्, वर्णजान् दोषान् संहन्यात्॥ ११७॥

**व्याख्या**—यदि = चेत्, वाजी, स्निग्धवर्णः = मसृणवर्णकः, बलाधिकः = महाबलः, सुगतिः = सुष्ठुगमनशीलः, महान् = उन्नतः, तथा सर्वाङ्गेषु = सकलावयवेषु, सुन्दरः = कान्तः, भवेत् = स्यात्, तदा वर्णजान् = विपरीतवर्णोत्पन्नान्, दोषान् = दुर्गुणान्, संहन्यात् = सम्यक् प्रकारेण विनष्टं कुर्यात्॥ ११७॥

**हिन्दी**—घोड़ा यदि शक्तिशाली, अच्छी चाल वाला, ऊँचे कद का सर्वाङ्गसुन्दर मसृण वर्ण का हो तो रंग से उत्पन्न होने वाले समस्त दोषों को नष्ट कर देता है॥ ११७॥

**संहन्यादिति**। यदि अश्वः स्निग्धवर्णः बलाधिकः सुगतिः महान् तथा सर्वाङ्गेषु सुन्दरः भवेत् तदा वर्णजान् विरुद्धवर्णजातान् दोषान् संहन्यात् नाशयेत्॥ ११७॥

**नातिक्रूरः सदा पूज्यो भ्रमाद्यैरपि दूषितः॥ ११८॥**

**अन्वयः**—भ्रमाद्यैः दूषितोऽपि नातिक्रूरः सदा पूज्यः॥ ११८॥

**व्याख्या**—भ्रमाद्यैः = आवर्त्तचिह्नैः, दूषितोऽपि = कलुषितोऽपि, नातिक्रूरः = सुदर्शनः, अश्वः, सदा = सर्वदा, पूज्यः = श्लाघ्यो भवति॥ ११८॥

**हिन्दी**—कोई घोड़ा यदि सुदर्शन हो बदमाश न हो तो भौंरी के दोष से कलुषित रहने के बावजूद वह सदा श्लाघ्य होता है॥ ११८॥

**नेति**। भ्रमाद्यैः आवर्त्ताद्यैः चिह्नैः दूषितोऽपि नातिक्रूरः सौम्यदर्शनः अश्वः सदा पूज्यः॥ ११८॥

**वाजिनामत्यवहनात् सुदोषाः सम्भवन्ति हि।**
**कृशो व्याधिपरीताङ्गो जायतेऽत्यन्तवाहनात्॥ ११९॥**

**अन्वयः**—अत्यवहनात् वाजिनां सुदोषाः सम्भवन्ति, अत्यन्तवाहनात् कृशः व्याधिपरीताङ्गः जायते॥ ११९॥

**व्याख्या**—अत्यवहनात् = अत्यधिकवहनाभावे, वाजिनाम् = अश्वानाम्, सुदोषाः = अत्यधिकदोषाः, निश्चितम्, भवन्ति = जायन्ते, किञ्च, अत्यन्तवाहनात् = अत्यधिकवहनादपि, कृशः = दुर्बलः, तथा व्याधिपरीताङ्गः = रुग्णशरीरश्च, जायते = भवतीति॥ ११९॥

**हिन्दी**—यदि घोड़े अच्छे हों और अधिकतर सवारी न की जाय तो वे बिगड़ जाते हैं और अधिक सवारी करने से भी दुबले तथा रोगी हो जाते हैं। अतः क्षमतानुसार उन्हें सवारी में लेना चाहिए॥ ११९॥

**वाजिनामिति**। अत्यवहनात् अतिशयेन अवाहनात् वहनाभावात् वाजिनां सुदोषाः हि निश्चितं सम्भवन्ति। किञ्च अत्यन्तवहनात् कृशः व्याधिपरीताङ्गः रुग्णदेहश्च जायते॥ ११९॥

**अवाहितो भवेन्मन्दः सर्वकर्मसु निन्दितः।**
**अपोषितो भवेत् क्षीणो रोगी चात्यन्तपोषणात्॥ १२०॥**

**अन्वयः**—अवाहितः मन्दः सर्वकर्मसु निन्दितः भवेत्। अपोषितः क्षीणः च अत्यन्तपोषणात् रोगी भवति॥ १२०॥

**व्याख्या**—अवाहितः—न = नहि, वाहितः = स्थानान्तरे चालितः सन्, मन्दः = निस्तेजस्को भवति, सर्वकर्मसु—सर्वेषु = सकलेषु, कर्मसु = कृत्येषु, निन्दितः = कुत्सितः, भवेत् = स्यात्, किञ्च, अपोषितः = पौष्टिकभोजनाभावे, क्षीणः = दुर्बलः, तथा अत्यन्तपोषणात् = अत्यधिकाहारप्रदानात्, रोगी = रुग्णः, भवेत् = स्यात्॥१२०॥

**हिन्दी**—और बिना सवारी के भी घोड़ा सुस्त हो जाता है तथा बिना पौष्टिक आहार के कमजोर हो जाता है और अधिक पौष्टिक आहार देकर सवारी नहीं करने से भी घोड़ा रोगी हो जाता है॥ १२०॥

**अवाहित इति**। अवाहितः एकान्तं न वाहितः मन्दः जडः, सर्वकर्मसु निन्दितश्च भवेत्। किञ्च अपोषितः अपालितः क्षीणः दुर्बलः कृश इत्यर्थः, तथा अत्यन्तपोषणात् अत्याहारदानात् रोगी भवेत्॥ १२०॥

**सुगतिर्दुर्गतिर्नित्यं शिक्षकस्य गुणागुणैः॥ १२१॥**

**अन्वयः**—शिक्षकस्य गुणागुणैः नित्यं सुगतिः दुर्गतिश्च भवेत्॥१२१॥

**व्याख्या**—वाजी, शिक्षकस्य = प्रशिक्षणदातुः, गुणागुणैः = गुणदोषैः, नित्यम् = निरन्तरम्, सुगतिः—शोभनं गतिः = गमनम्, यस्यासौ, दुर्गतिः = मन्दगमनम्, भवेत्॥ १२१॥

**हिन्दी**—घोड़े की चाल अच्छी या बुरी होने का कारण उसका प्रशिक्षक होता है। क्योंकि हमेशा वह जैसी चाल सिखलाता है वैसे ही वह चलता है॥ १२१॥

**सुगतिरिति**। अश्वः शिक्षकस्य गुणागुणैः गुणदोषैः नित्यं सततं सुगतिः सुन्दरगमनः दुर्गतिः मन्दगमनश्च भवेत्॥ १२१॥

**जान्वधश्चलपादः स्यादृजुकायः स्थिरासनः।**
**तुलाधृतखलीनः स्यात् काले देशे सुशिक्षकः॥ १२२॥**

**अन्वयः**—यः जान्वधः चलपादः ऋजुकायः स्थिरासनः काले देशे तुलाधृतखलीनः सुशिक्षकः स्यात्॥ १२२॥

**व्याख्या**—यः जान्वोः = वाजिनः, ऊरुपर्वणः, अधः = नीचैः, चलौ = चञ्चलौ, पादौ = चरणौ, यस्य सः, ऋजुकायः = कोमलशरीरः, तथा स्थिरम् = अचलम्, आसनम् = उपवेशनम्, यस्य तादृशः, स्यात् = भवेत्, तथा काले = समये, देशे = स्थानविशेषे, तुलया = सादृश्येन, धृतम् = गृहीतम्, खलीनम् = अश्वताडनी, येन तादृशः स्यात्, सः सुशिक्षकः = सुन्दरवाजिविनेता स्यात्॥ १२२॥

**हिन्दी**—घोड़े को चाल सिखाने वाला सवार घुटनों से नीचे पैर को हिलाते हुए देह को ढीला छोड़कर सीधा स्थिर आसन से बैठ कर संतुलित लगाम को थामे॥ १२२॥

**जान्विति**। यः जान्वोः अश्वस्येति भावः, अधः निम्नदेशे चलौ पादौ यस्य सः ऋजुपादः सरलशरीरः तथा स्थिरं निश्चलम् आसनं यस्य तादृशः स्यात् तथा काले समये देशे स्थानभेदे तुलया साम्येन धृतं खलीनं कविका येन तादृशः स्यात् सः सुशिक्षकः॥ १२२॥

**मृदुना नातितीक्ष्णेन कशाघातेन ताडयेत्।**
**ताडयेन्मध्यघातेन स्थाने स्वश्वं सुशिक्षकः ॥ १२३ ॥**

**अन्वयः**—सुशिक्षकः मृदुना नातितीक्ष्णेन कशाघातेन ताडयेत्। मध्यघातेन नातिमृदुना स्थाने स्वश्वं ताडयेत् ॥ १२३ ॥

**व्याख्या**—सुशिक्षकः = सुवाजिविनेता, मृदुना = कोमलेन, नातितीक्ष्णेन = नातिकठोरेण, कशाघातेन = कशया ताडनेन, स्वश्वम् = शोभनं वाजिनम्, ताडयेत् = ताडनं कुर्यात्, किञ्च मध्यघातेन = मध्यप्रहारेण, स्थाने = मर्मादिरहितशरीरावयवे, स्वश्वम् = शोभनं घोटकम्, ताडयेत् = प्रहारं कुर्यात् ॥ १२३ ॥

**हिन्दी**—समय और स्थान के अनुसार न अतिकोमल और न अतिकठोर चाबुक से घोड़े को मार कर चाल सिखलाये। सुन्दर सिखलाने वाला घोड़े के मार्मिक अङ्ग को छोड़कर चाबुक की हलकी चोट से चाल सिखलाये ॥१२३ ॥

**मृदुनेति**। सुशिक्षकः मुदुना कोमलेन नातितीक्ष्णेन कशाघातेन स्वश्वं शोभनम् अश्वं ताडयेत्। किञ्च मध्यघातेन नातिमृदुना नातिक्रूरेण च प्रहारेण इत्यर्थः, स्थाने मर्मादिव्यतिरिक्ते अवयवे इत्यर्थः स्वश्वं ताडयेत् ॥१२३ ॥

**हेषिते कक्षयोर्हन्यात् स्खलिते पक्षयोस्तथा।**
**भीते कर्णान्तरे चैव ग्रीवासून्मार्गगामिनि ॥ १२४ ॥**

**अन्वयः**—हेषिते कक्षयोः तथा स्खलिते पक्षयोः भीते कर्णान्तरे च उन्मार्गगामिनि ग्रीवासु हन्यात् ॥ १२४ ॥

**व्याख्या**—हेषिते = हेषिते, शब्दविशेषं कृते सति, कक्षयोः = पादमूलयोः, तथा, स्खलिते = पतिते वा विचलिते, पक्षयोः = कुक्षयोः, भीते = भयाक्रान्ते, कर्णान्तरे = श्रोत्रयोर्मध्ये, च = पुनः, उन्मार्गगामिनि = कुपथागामिनि, ग्रीवासु = गलप्रदेशेषु हन्यात् = प्रहारं कुर्यात् ॥१२४ ॥

**हिन्दी**—ज्यादा हिनहिनाने पर पादमूल में, फिसलने पर दोनों बगलों में, भड़कने पर दोनों कानों के बीच तथा बेराह चलने पर कन्धे पर मारना चाहिए ॥ १२४ ॥

**हेषिते इति**। हेषिते हेषा अश्वस्य शब्दविशेषः सा अस्य जाता इति हेषितः तस्मिन् इतोऽस्य जाते इति इतच्प्रत्ययः। हेषाशब्दं कुर्वति सति कक्षयोः स्खलिते पादस्खलने पक्षयोः पार्श्वयोः, भीते सति कर्णान्तरे कर्णमध्ये, तथा उन्मार्गगामिनि कुपथगे सति ग्रीवासु हन्यात् प्रहरेत् ॥ १२४ ॥

**कुपिते बाहुमध्ये च भ्रान्तचित्ते तथोदरे।**
**अश्वः सन्ताड्यते प्राज्ञैर्नान्यस्थानेषु कर्हिचित् ॥१२५ ॥**

**अन्वयः**—कुपिते बाहुमध्ये च भ्रान्तचित्ते उदरे अश्वः सन्ताड्यते, प्राज्ञैः कर्हिचित् अन्यस्थानेषु नेति ॥ १२५ ॥

**व्याख्या**—कुपितं = क्रुद्धे सति, बाहुमध्ये = अग्रिमचरणयोर्मध्ये, च = पुनः, भ्रान्तचित्ते = प्रमदितमनसि, उदरे = कुक्षौ, सन्ताड्यते = सम्यक् प्रकारेण हन्यते, प्राज्ञैः = बुद्धिमद्भिः, कर्हिचित् = कदाचित्, अन्यस्थानेषु = उपरिवर्णितस्थानव्यतिरिक्तेषु, नेति = न ताडयेत् ॥ १२५ ॥

**हिन्दी**—दोनों अगले पैरों को उठा कर खड़े होने पर अगले पैरों के बीच में और भ्रान्तचित्त होने पर पेट में बुद्धिमान् सवार मारे। इससे भिन्न स्थानों में कभी भी न मारे ॥ १२५ ॥

**कुपिते इति**। प्राज्ञैः विज्ञैः जनैः कुपिते सति बाहुमध्ये तथा भ्रान्तचित्ते उद्भ्रान्तचेतसि सति उदरे अश्वः सन्ताड्यते सम्यक् आहन्यते, कर्हिचित् कदाचित् अन्यस्थानेषु न॥१२५॥

**अथवा हेषिते स्कन्धे स्खलिते जघनान्तरम्।**
**भीते वक्षःस्थलं हन्याद् वक्त्रमुन्मार्गगामिनि।**
**कुपिते पुच्छसङ्घाते भ्रान्ते जानुद्वयं तथा॥१२६॥**

**अन्वयः**—अथवा हेषिते स्कन्धे स्खलिते जघनान्तरं भीते वक्षःस्थलम् उन्मार्गगामिनि वक्त्रं कुपिते पुच्छसङ्घातं तथा भ्रान्ते जानुद्वयं हन्यात्॥१२६॥

**व्याख्या**—अथवा = वा, हेषिते = हेषा, वाजिनः शब्दविशेषः, सा अस्य जाता इति हेषितः, तस्मिन् 'इतोऽस्य जाते' इत्यनेन इतच्प्रत्ययः, तेन हेषिते सति, स्कन्धे = ग्रीवायाम्, स्खलिते = विचलिते सति, जघनान्तरम् = नितम्बमध्यम्, भीते = भयाक्रान्ते, सति, वक्षःस्थलम् = ऊरुप्रदेशम्, उन्मार्गगामिनि = कुमार्गगामिनि, वक्त्रं = मुखम्, कुपिते = क्रुद्धे सति, पुच्छसङ्घातम् = पुच्छे हननं वा पुच्छसमूहम्, तथा भ्रान्ते = उद्भ्रान्ते सति, जानुद्वयम् = ऊरुपर्वणी, हन्यात् = ताडयेत्॥१२६॥

**हिन्दी**—अथवा अधिक हिनहिनाने पर कन्धे में, फिसलने पर जाँघों के बीच, डरने पर छाती में, गलत राह पकड़ने पर मुँह में, गुस्साने पर दुम में तथा चित्तभ्रमित होने पर दोनों जानुओं के बीच में प्रहार करे॥१२६॥

**अथवेति**। अथवा किंवा हेषिते सति स्कन्धे स्खलिते सति जघनान्तरं जघनमध्यं, भीते सति वक्षःस्थलम्, उन्मार्गगामिनि सति वक्त्रं मुखं कुपिते सति पुच्छसङ्घातं, तथा भ्रान्ते जानुद्वयं हन्यात्॥१२६॥

**नासकृत् ताडयेदश्वमकाले च विदेशके।**
**अकालस्थानघातेन वाजिदोषान् वितन्वते॥१२७॥**

**अन्वयः**—अकाले विदेशके असकृत् अश्वं न ताडयेत्। अकालस्थानघातेन वाजिदोषान् वितन्वते॥१२७॥

**व्याख्या**—अकाले = असमये, विदेशके = अस्थाने, असकृत् = वारंवारम्, अश्वम् = घोटकम्, न = नहि, ताडयेत् = प्रहारं कुर्यात्। यतः, अकालस्थानघातेन = असमयस्थानप्रहारेण, वाजिदोषान् = अश्वदुर्गुणान्, वितन्वते = विस्तारं कुर्वन्ति॥१२७॥

**हिन्दी**—घोड़े को बार-बार असमय कुठांव में नहीं मारना चाहिए, क्योंकि ऐसा करने से घोड़े में दुर्गुणों की वृद्धि होती है॥१२७॥

**नेति**। अकाले असमये विदेशके अस्थाने च असकृत् पुनः पुनः अश्वं न ताडयेत् यतः अकालस्थानघातेन असमयस्थानप्रहारेण वाजिदोषान् वितन्वते विस्तारयन्ति जनयन्ति इत्यर्थः॥१२७॥

**तावद् भवन्ति ते दोषा यावज्जीवत्यसौ हयः।**
**दुष्टं दण्डेनाभिभवेन्नारोहेद्दण्डवर्जितः॥१२८॥**

**अन्वयः**—यावत् असौ हयः जीवति तावत् ते दोषाः भवन्ति। दुष्टं दण्डेन अभिभवेत्, दण्डवर्जितः न आरोहेत्॥१२८॥

**व्याख्या**—यावत् = यावत्कालपर्यन्तम्, असौ = सः, हयः = वाजी, जीवति = जीवनं धारयति, तावत् = तावत्कालपर्यन्तम्, ते = पूर्वोक्ताः, दोषाः = दुर्गुणाः, भवन्ति = सन्त्येव। दुष्टम् = क्रूरं घोटकम्, दण्डेन = प्रहारेण, अभिभवेत् = वशं नयेत्, तथा दण्डवर्जितः = आघातरहितः, अश्वम्, न = नहि, आरोहेत् = आरोहणं कुर्यात् ॥ १२८ ॥

**हिन्दी**—और वे दोष घोड़े में तब तक बने रहते हैं जब तक वह घोड़ा जिन्दा रहता है। दुष्ट घोड़े को मार-मारकर वशवर्त्ती बना ले, बिना दण्ड दिये दुष्ट घोड़े पर सवार नहीं होना चाहिए ॥१२८ ॥

**तावदिति**। यावत् असौ हयः अश्वः जीवति तावत् ते दोषाः वाजिदोषाः भवन्ति। दुष्टम् अश्वं दण्डेन अभिभवेत् तथा दण्डवर्जितः कशारहितः न आरोहेत् ॥ १२८ ॥

**गच्छेत् षोडशमात्राभिरुत्तमोऽश्वो धनुःशतम्।**
**यथा यथा न्यूनगतिरश्वो हीनस्तथा तथा ॥ १२९ ॥**

**अन्वयः**—उत्तमोऽश्वः षोडशमात्राभिः धनुःशतं गच्छेत्। अश्वः यथा यथा न्यूनगतिः तथा तथा हीनः भवेत् ॥ १२९ ॥

**व्याख्या**—उत्तमः = उत्कृष्टः, अश्वः = हयः, षोडशमात्राभिः = पूर्णमानैः, धनुःशतम् = चतुःशतहस्तम्, गच्छेत् = गमयेत्। अश्वः, यथा यथा = येन प्रकारेण, न्यूनगतिः = हीनगमनम्, तथा तथा = तेनैव प्रकारेण, हीनः = अधमः, भवेत् = स्यात् ॥ १२९ ॥

**हिन्दी**—उत्तम घोड़ा सोलह मात्रा का उच्चारण करते-करते चार सौ हाथ की दूरी तय कर लेता है। इस अनुपात में उसकी गति जैसे-जैस कम होती है उसी अनुपात में वह घोड़ा हीन होता है ॥ १२९ ॥

**गच्छेदिति**। उत्तमः अश्वः षोडशमात्राभिः पूर्णमानैरित्यर्थः, धनुःशतं चतुःशतहस्तं गच्छेत् एकप्रयत्नेनेति भावः। अश्वः यथा यथा न्यूनगतिः, तथा तथा हीनः भवेत् ॥ १२९ ॥

**सहस्रचापप्रमितं मण्डलं गतिशिक्षणे।**
**उत्तमं वाजिनो मध्यं नीचमर्द्धं तदर्द्धकम् ॥ १३० ॥**

**अन्वयः**—वाजिनः गतिशिक्षणे सहस्रचापप्रमितं मण्डलम् उत्तमम्, तदर्द्धं मध्यं, तदर्द्धकं नीचम् ॥ १३० ॥

**व्याख्या**—वाजिनः = हयस्य, गतिशिक्षणे = गमनशिक्षायाम्, सहस्रचापप्रमितम् = चतुःसहस्रहस्तमितम्, मण्डलम् = भ्रमणाय गोलाकारम्, उत्तमम् = उत्कृष्टम्, अर्द्धम् = पञ्चशतहस्तपरिमितम्, मध्यमम् = मध्यमानम्, तदर्द्धम् = पञ्चाशदधिकशतद्वयहस्तम्, नीचम् = अधमम् ॥ १३० ॥

**हिन्दी**—चाल सिखाने में घोड़े के लिए एक मण्डल का प्रमाण चार हजार हाथ का होता है, जो उत्तम कहलाता है। उसका आधा पाँच सौ हाथ का मण्डल मध्यम दर्जे के घोड़े के लिए होता है और उसका आधा दो सौ पचास हाथ का मण्डल अधम माना गया है ॥ १३० ॥

**सहस्रेति**। वाजिनः अश्वस्य गतिशिक्षणे गतिशिक्षायां सहस्रचापप्रमितं चतुःसहस्रहस्तमितं मण्डलं मण्डलाकारेण भ्रमणम् उत्तमं श्रेष्ठम् अर्द्धं पञ्चशतहस्तमितं मध्यम्, तदर्द्धकं पञ्चाशदधिकशतद्वयहस्तं नीचम् ॥ १३० ॥

**अल्पं शतधनुः प्रोक्तमत्यल्पं च तदर्द्धकम् ॥ १३१ ॥**

**अन्वयः**—शतधनुः अल्पं तथा तदर्द्धकम् अत्यल्पं प्रोक्तम् ॥ १३१ ॥

**व्याख्या**—शतधनुः = चतुःशतहस्तमितम्, मण्डलम्, अल्पम् = लघुः, तदर्द्धकम् = पञ्चाशदधिकशतद्वयमितम्, अत्यल्पम् = अतितुच्छम्, प्रोक्तम् = कथितम् ॥ १३१ ॥

**हिन्दी**—और चार सौ हाथ का मण्डल छोटा तथा उसका आधा अतितुच्छ होता है ॥ १३१ ॥

**अल्पमिति**। शतधनुः चतुःशतहस्तमितं मण्डलमिति शेषः, अल्पं तथा तदर्द्धकं द्विशतहस्तमितम् अत्यल्पं प्रोक्तम् ॥ १३१ ॥

**शतयोजनगन्ता स्याद् दिनैकेन यथा हयः ।**
**गतिं संवर्द्धयेन्नित्यं तथा मण्डलविक्रमैः ॥ १३२ ॥**

**अन्वयः**—हयः यथा दिनैकेन शतयोजनगन्ता स्यात्, नित्यं मण्डलविक्रमैः तथा गतिं संवर्द्धयेत् ॥ १३२ ॥

**व्याख्या**—हयः = वाजी, यथा = येन प्रकारेण, दिनैकेन = एकेनैव दिवसेन, शतयोजनगन्ता = योजनशतं गन्तुं समर्थः, स्यात् = भवेत्, नित्यम् = प्रतिदिनम्, मण्डलविक्रमैः—मण्डलस्य = गोलाकारभ्रमणस्य, विक्रमैः = शौर्यैः, तथा = तदनुकूला, गतिम् = वेगम्, संवर्द्धयेत् = एधेत, संवर्द्धनं कुर्यात् वेति ॥ १३२ ॥

**हिन्दी**—घोड़ा एक दिन में सौ याजन अर्थात् दो सौ कोस की दूरी तय करे; इसके लिए उसे प्रतिदिन मैदान में चक्कर लगवाकर उसके दौड़ने की शक्ति बढानी चाहिए ॥ १३२ ॥

**शतेति**। हयः अश्वः यथा दिनैकेन एकेन दिनेन शतयोजनगन्ता स्यात्, नित्यं सततं मण्डलविक्रमैः मण्डलाकारभ्रमणैः तथा गतिं संवर्द्धयेत् ॥ १३२ ॥

**सायं प्रातश्च हेमन्ते शिशिरे कुसुमागमे ।**
**सायं ग्रीष्मे तु शरदि प्रातरश्वं वहेत् सदा ॥ १३३ ॥**

**अन्वयः**—हेमन्ते शिशिरे कुसुमागमे च सायं प्रातश्च ग्रीष्मे तु सायं शरदि तु प्रातः अश्वं सदा वहेत् ॥ १३३ ॥

**व्याख्या**—हेमन्ते = हिमागमे ऋतौ, शिशिरे = शीतऋतौ, कुसुमागमे = वसन्ततौ, सायम् = सन्ध्याकाले, च = पुनः, प्रातः = प्रभाते, ग्रीष्मे = निदाघकाले तु, सायम् = सन्ध्यासमये, शरदि = वर्षावसानकाले, तु, प्रातः = प्रभातवेलायाम्, सदा = सर्वदा, अश्वम् = घोटकम्, वहेत् = प्रशिक्षयेत् ॥ १३३ ॥

**हिन्दी**—हेमन्त, शिशिर तथा वसन्त ऋतु में शाम-सुबह, ग्रीष्म ऋतु में सायंकाल तथा शरद् ऋतु में प्रातःकाल सदा घोड़े को शिक्षा देनी चाहिए ॥ १३३ ॥

**सायमिति**। हेमन्ते, शिशिरे, कुसुमागमे वसन्ते च सायं प्रातश्च, ग्रीष्मे तु सायं शरदि तु प्रातः, सदा सर्वस्मिन् दिने अश्वं वहेत् ॥ १३३ ॥

**वर्षासु न वहेदीषत्तथा विषमभूमिषु ॥ १३४ ॥**

**अन्वयः**—वर्षासु तथा विषमभूमिषु ईषत् न वहेत् ॥ १३४ ॥

**व्याख्या**—वर्षासु = वर्षाऋतौ, तथा = पुनः, विषमभूमिषु = उच्चावच्चस्थानेषु, ईषद् = अल्पमपि, न = नहि, वहेत् = अश्वं चालयेदिति ॥ १३४ ॥

**हिन्दी**–वर्षा ऋतु में तथा विषम भूमि में घोड़े को थोड़ा भी नहीं दौड़ाना चाहिए ॥ १३४ ॥

**वर्षास्विति**। वर्षासु तथा विषमभूमिषु उन्नतानतप्रदेशेषु ईषत् अल्पमपि न वहेत् अश्वमिति शेषः ॥ १३४ ॥

**सुगत्याग्निर्बलं दार्ढ्यमारोग्यं वर्द्धते हरेः ॥ १३५ ॥**

**अन्वयः**—सुगत्या हरेः अग्निः बलं दार्ढ्यम् आरोर्ग्यम् वर्द्धते ॥ १३५ ॥

**व्याख्या**—सुगत्या = सुष्ठुगमनेन, अग्नेः = जठराग्नेः, बलम् = शक्तिम्, दार्ढ्यम् = स्थैर्यम्, आरोग्यम् = नैरुज्यम्, च, वर्द्धते = वृद्धिं गच्छति ॥ १३५ ॥

**हिन्दी**—घाड़े की सुन्दर चाल से उसकी पाचन शक्ति, शरीर की दृढता और आरोग्य की वृद्धि होती है ॥ १३५ ॥

**सुगत्येति**। सुगत्या शोभनेन गमनेन हरेः अश्वस्य अग्निः, बलं दार्ढ्यं शरीरकाठिन्यञ्च वर्द्धते ॥ १३५ ॥

**भारमार्गपरिश्रान्तं शनैश्चङ्क्रामयेद्धयम्।**
**स्नेहं सम्पाययेत् पश्चाच्छर्करासक्तुमिश्रितम् ॥ १३६ ॥**

**अन्वयः**—भारमार्गपरिश्रान्तं हयं शनैः चङ्क्रामयेत्, पश्चात् शर्करासक्तुमिश्रितं स्नेहं सम्पाययेत् ॥ १३६ ॥

**व्याख्या**—भारेण = भारवहनेन, तथा मार्गेण = अध्वगमनेन, च परिश्रान्तम् = क्लान्तम्, हयम् = घोटकम्, शनैः = मन्दं मन्दम्, चङ्कामयेत् = भ्रामयेत्, पश्चात् = तदनन्तरम्, शर्करा = गुडचूर्णम्, सक्तुमिश्रितम्—सक्तुभिश्च मिश्रितम् = संसृष्टः, स्नेहम् = तैलभेदं घृतं वा, सम्पाययेत् = पाययेत् ॥ १३६ ॥

**हिन्दी**—भार ढोने तथा राह चलने से थके घोड़े को पहले धीरे-धीरे टहलाये, फिर उसे शक्कर और सत्तू मिलाकर घी पिलाये ॥ १३६ ॥

**भारेति**। भारेण मार्गेण अध्वगमनेन च परिश्रान्तं हयम् अश्वं शनैः मन्दं मन्दं चङ्क्रामयेत् पुनः पुनः भ्रामयेत् पश्चात् चङ्क्रमणानन्तरं शर्कराभिः सक्तुभिश्च मिश्रितं स्नेहं तैलभेदं सम्पाययेत् ॥ १३६ ॥

**हरिमन्थांश्च माषांश्च भक्षणार्थं मकुष्ठकान्।**
**शुष्कानार्द्रांश्च मांसानि सुस्विन्नानि प्रदापयेत् ॥ १३७ ॥**

**अन्वयः**—भक्षणार्थं हरिमन्थान् माषान् मकुष्ठकान् शुष्कान् आर्द्रान् सुस्विन्नानि मांसानि प्रदापयेत् ॥ १३७ ॥

**व्याख्या**—भक्षणार्थम् = भोजनाय, हरिमन्थान् = चणकान्, माषान् = कुरुविन्दान्, मकुष्ठ-कान् = वन्यमुद्गान्, शुष्कान् = विरसान्, आर्द्रान् = क्लिन्नान्, सुस्विन्नानि = सुपक्वानि, मांसानि च, प्रदापयेत् = दद्यात् ॥ १३७ ॥

**हिन्दी**—और घोड़े को खाने के लिए चने, उडद तथा मोठ अर्थात् वनमूंग सूखे पानी में भिंगोया हुआ दे और ठीक से पके मांस भी खिलाये ॥ १३७ ॥

**हरीति**। किञ्चेति चार्थः भक्षणार्थं हरिमन्थान् चणकान् माषान् मकुष्ठकान् वन्यमुद्गान् शुष्कान् आर्द्रान् आर्द्रकान् सुस्विन्नानि सुपक्वानि मांसानि च प्रदापयेत् ॥ १३६ ॥

**यद्यत्र स्खलितं गात्रं तत्र दण्डं न पातयेत्।**
**नावतारितपल्याणं हयं मार्गसमागतम्।**
**दत्त्वा गुडं सलवणं बलसंरक्षणाय च ॥ १३८ ॥**

**अन्वयः**—यदि अत्रापि स्खलितं गात्रं तत्र दण्डं न पातयेत्। अवतारितपल्याणं मार्गसमागतं हयं बलसंरक्षणाय सलवणं गुडं दत्त्वा न प्रहरेत् ॥ १३८ ॥

**व्याख्या**—यदि = चेत्, अत्राऽपि = चिकित्सितेऽपि, गात्रम् = शरीरम्, स्खलितम् = पतितम्, तत्र = तस्मिन्स्थाने, दण्डम् = अश्वताडनीम्, न = नहि, पातयेत् = निपातयेत्, अवतारितम् = नामितम्, पल्याणम् = पर्याणम्, यस्य तथोक्तम्, मार्गसमागतम् = समागतस्य दूरवर्त्मनः, हयम् = घोटकम्, तथा बलसंरक्षणाय = शक्तिसंवर्द्धनाय, सलवणम् = लवणसहितम्, गुडम् = शर्कराम्, दत्त्वा कशाघातं न कुर्यात् ॥ १३८ ॥

**हिन्दी**—यदि घोड़े को किसी अङ्ग में मोच लग जाय तो उस जगह चाबुक नहीं मारना चाहिए। राह चलकर आये थके घोड़े की पीठ से बिना जीन उतारे उसकी ताकत बढ़ाने के लिए उसे नमक मिला कर गुड़ पिलाना चाहिए ॥ १३८ ॥

**यदीति**। यदि अपिरत्राध्याहार्य्यः अत्रापि चिकित्सतेऽपीत्यर्थः, मात्रं स्खलितं श्लथीभूतम् अस्ति, तदा तत्र दण्डं न पातयेत्। किञ्च अवतारितं नामितं पल्याणं पृष्ठास्तरणं यस्य तथोक्तं मार्गसमागतं पथः समायातं हयं तथा बलसंरक्षणाय सलवणं गुडं दत्त्वा न प्रहरेदिति शेषः ॥ १३८ ॥

**गतस्वेदस्य शान्तस्य सुरूपमुपतिष्ठतः।**
**मुक्तपृष्ठादिबन्धस्य खलीनमवतारयेत् ॥ १३९ ॥**

**अन्वयः**—गतस्वेदस्य शान्तस्य सुरूपम् उपतिष्ठतः मुक्तपृष्ठादिबन्धस्य खलीनं अवतारयेत् ॥ १३९ ॥

**व्याख्या**—गतस्वेदस्य = विगतघर्मस्य, शान्तस्य = स्वस्थचित्तस्य, सुरूपम् = स्वाभाविकावस्थायाम्, उपतिष्ठतः = स्थितस्य, मुक्तपृष्ठादिबन्धस्य = पल्ययनमुक्तपृष्ठस्य, अश्वस्य, खलीनम् = अवक्षेपणीम्, अवतारयेत् = उन्मोचयेत् ॥ १३९ ॥

**हिन्दी**—जब घोड़े का पसीना सूख जाय और घोड़ा शान्त होकर अपनी स्वाभाविक स्थिति में आ जाय तब उसकी पीठ से जीन खोलकर मुँह से लगाम निकाल ले ॥ १३९ ॥

**गतस्वेदस्येति**। गतस्वेदस्य विगतघर्मस्य शान्तस्य सुरूपं शोभनं यथा तथा उपतिष्ठतः स्थितस्य मुष्कपृष्ठादिषु बन्धो यस्य तादृशस्य अश्वस्य खलीलं कविकाम् अवतारयेत् भ्रंशयेत् ॥ १३९ ॥

**मर्दयित्वा तु गात्राणि पांशुमध्ये विवर्त्तयेत्।**
**स्नानपानावगाहैश्च ततः सम्यक् प्रपोषयेत् ॥ १४० ॥**

**अन्वयः**—गात्राणि मर्दयित्वा पांशुमध्ये विवर्त्तयेत्। ततः स्नानपानावगाहैः च सम्यक् प्रपोषयेत् ॥ १४० ॥

**व्याख्या**—गात्राणि = शरीराणि, मर्दयित्वा = मर्दनं कृत्वा, पांशुमध्ये = धूलिमध्ये, विववर्त्तयेत् = सहसा विलुण्ठयेत्, ततः = तत्पश्चात्, स्नानपानावगाहैः—स्नानेन = आप्लवेन, पानेन = पीत्या, च = पुनः, अवगाहनेन = जले प्रविश्य विलोडनेन, सम्यक् = सुष्ठुतया, प्रपोषयेत् = पालयेत् ॥ १४० ॥

**हिन्दी**—और घोड़े को खरहरा कर के धूल में लोटने को छोड़ दे। फिर उसे बहलाकर, पानी पिला कर और पानी मैं तैराकर तरोताजा कर दे ॥ १४० ॥

**मर्दयित्वेति**। अथ गात्राणि मर्दयित्वा पांशुमध्ये धूलिमध्ये विवर्त्तयेत् उद्गण्ठयेत् ततः अनन्तरं स्नानपानावगाहैः स्नानेन पानेन अवगाहनेन च सम्यक् पोषयेत् पुष्टिं नयेत् ॥ १४० ॥

**सर्वदोषहरोऽश्वानां मद्यजङ्गलयोः रसः।**
**शक्त्या सम्पाययेत् क्षीरं घृतं वा वारि सक्तुकम् ॥ १४१ ॥**

**अन्वयः**—मद्यजङ्गलयोः रसः सर्वदोषहरः शक्त्या क्षीरं घृतं वा वारि सक्तुकं सम्पाययेत् ॥ १४१ ॥

**व्याख्या**—मद्यजङ्गलयोः—मद्यस्य = मदिरायाः, जङ्गलस्य = वन्यजीवानां मांसस्य, रसः = सारः, सर्वदोषहरः—सर्वेषाम् = सकलानाम्, दोषाणाम् = रक्तपित्तादिविकाराणाम्, हरः = विनाशकः, शक्त्या = सामर्थ्यानुसारेण, क्षीरम् = दुग्धम्, घृतम् = आज्यम्, वा = अथवा, वारि = जलम्, सक्तुकम् = सक्तुयुतम्, सम्पाययेत् = सम्यक् प्रकारेण पानं कारयेत् ॥१४ ॥

**हिन्दी**—घोड़ों के लिए शराब तथा जंगली जीवों के मांस का रस पिलाना हर तरह के दोषों को मिटाने वाला है। अपनी शक्ति के अनुसार दूध, घी या पानी में सत्तू घोलकर पिलाना चाहिए ॥ १४१ ॥

**सर्वेति**। मद्यजङ्गलयोः सुरायाः जङ्गलस्य मांसस्य च रसः सर्वेषां दोषाणां हरः नाशकः शान्तिकर इत्यर्थः। किञ्च शक्त्या शक्त्यनुसारेण क्षीरं दुग्धं घृतं वा ससक्तुकं सक्तुसहितं वारि वा सम्पाययेत् ॥ १४१ ॥

**अन्नं भुक्त्वा जलं पीत्वा तत्क्षणाद्वाहितो हयः।**
**उत्पद्यन्ते तदाश्वानां कासश्वासादिका गदाः ॥ १४२ ॥**

**अन्वयः**—अन्नं भुक्त्वा जलं पीत्वा हयः तत्क्षणात् वाहितः तदा अश्वानां कासश्वासादिकाः गदाः उत्पद्यन्ते ॥ १४२ ॥

**व्याख्या**—अन्नम् = भक्ष्यपदार्थम्, भुक्त्वा = खादित्वा, जलम् = सलिलम्, पीत्वा = पानं कृत्वा, हयः = वाजी, तत्क्षणात् = तस्मादेव कालात्, वाहितः = आरोहितः, चेत्, तदा, अश्वानाम् = घोटकानाम्, कासश्वासादिकाः = एतदाख्याः, गदाः = रोगाः, उत्पद्यन्ते = उत्पन्ना भवन्ति ॥१४२ ॥

**हिन्दी**—यदि दाना खिलाने के बाद पानी पिला कर उसी समय घोड़े पर सवारी की जाय तो उससे घोड़े को खाँशी और दमे की बीमारी हो जाती है ॥ १४२ ॥

**अन्नमिति**। अन्नं भुक्त्वा जलं पीत्वा स्थित इति शेषः, हयः अश्वः तत्क्षणात् वाहितः भवति चेत् तदा अश्वस्य कासश्वासादिकाः गदाः रोगाः उत्पद्यन्ते ॥ १४२ ॥

**यवाश्च चणकाः श्रेष्ठा मध्या माषा मकुष्ठकाः।**
**नीचा मसूरा मुद्गाश्च भोजनार्थं तु वाजिनः ॥ १४३ ॥**

**अन्वयः**—वाजिनः भोजनार्थं यवाः चणकाः श्रेष्ठाः, माषाः मकुष्ठकाः मध्याः, मसूराः मुद्गाश्च नीचाः भवन्ति ॥ १४३ ॥

**व्याख्या**—वाजिनः = घोटकस्य, भोजनार्थम् = भक्षणाय, यवाः = प्रवेटाः, चणकाश्च, श्रेष्ठाः = उत्तमाः, माषाः = कुरुविन्दाः, मकुष्ठकाः = वन्यमुद्गाः, मध्याः = मध्यमस्तरीयाः, मसूराः = मसूरकाः, मुद्गाश्च, नीचाः = अधमाः भवन्ति ॥ १४३ ॥

**हिन्दी**—घोड़ों के भोजन के लिए जौ और चना देना उत्तम हैं, उड़द और मोठ मध्यम तथा मसूर और मूँग देना अधम हैं ॥ १४३ ॥

**यवा इति**। वाजिनः अश्वस्य भोजनार्थं यवाः चणकाश्च श्रेष्ठाः माषाः मकुष्ठकाः वन्यमुद्गाः मध्याः मसूराः मुद्गाश्च नीचाः अधमाः ॥ १४३ ॥

**गतयः षड्विधा धारास्कन्दितं रेचितं प्लुतम्।**
**धौरीतकं वल्गितञ्च तासां लक्ष्म पृथक् पृथक् ॥ १४४ ॥**

**अन्वयः**—गतयः षड्विधाः—धारा, आस्कन्दितम्, रेचितम्, प्लुतम्, धौरीतकं, वल्गितं च। तासां लक्ष्म पृथक् पृथक् ॥ १४४ ॥

**व्याख्या**—वाजीनाम्, गतयः = गमनानि, षड्विधाः = षट्प्रकारकाः भवन्ति, धारा = वेगयुक्तगमनम्, आस्कन्दितम् = आकुञ्चिताभ्याम् अग्रपादाभ्यामुत्प्लुत्य गमनम्, रेचितम् = ईषदुत्प्लुत्या खण्डगमनम्, प्लुतम् = पादैश्चतुभिरुत्प्लुत्य मृगवद्गमनम्, धौरीतकम् = आकुञ्चिताभ्यां पद्भ्यां सुव्यक्तद्रुतगमनम्, च = पुनः, वल्गितम् = मयूर इव उन्नतग्रीवस्तथा दोलायितार्द्धदेहस्य कुञ्चिताभ्यां पद्भ्यां गमनम्। तासाम् = गतीनाम्, लक्ष्म = लक्षणं, पृथक् पृथक् = भिन्नं भिन्नम्, उच्यते इति शेषः ॥ १४४ ॥

**हिन्दी**—धारा, आस्कन्दित, रेचित, प्लुत, धौरीतक और वल्गित—इन छः भेदों से घोड़े का गतिभेद माना गया है। अब इनके लक्षण अलग-अलग कहते हैं ॥ १४४ ॥

**गतय इति**। अश्वानां गतयः षड्विधाः, धारा १। आस्कन्दितं २। रेचितं ३। प्लुतं ४। धौरीतकं ५। वल्गितञ्च ६। तासां गतीनां लक्ष्म लक्षणं पृथक् पृथक् विभिन्नमित्यर्थः ॥ १४४ ॥

**धारागतिः सा विज्ञेया यातिवेगतरा मता।**
**पार्ष्णितोदातिनुदितो यस्यां भ्रान्तो भवेद्धयः ॥ १४५ ॥**

**अन्वयः**—या अतिवेगतरा मता, यस्यां पार्ष्णितोदातिनुदितः भ्रान्तः भवेत्, सा धारा गतिः विज्ञेया ॥ १४५ ॥

**व्याख्या**—या = गतिः, अतिवेगतरा = अत्यधिकवेगशालिनी, मता = ज्ञाता, यस्याम् = गत्याम्, घोटकः, पार्ष्णिभ्याम् = पादमूलाभ्याम्, तोदेन = आघातेन, अतिनुदितः = विशिष्टरूपेण प्रेरितः सन्, भ्रान्तः = चक्रवच्चालः, भवेत् = स्यात्, सा = गतिः, धारा गतिः = इत्याख्या, विज्ञेया = ज्ञातव्या ॥ १४५ ॥

**हिन्दी**—सवार की एडी की चोट से प्रेरित होकर जो घोड़ा अत्यन्त वेग से दौड़ लगाये, उस गति को धारागति कहते हैं ॥ १४५ ॥

**धारेति**। या गतिः अतिवेगतरा अतिवेगवती मता, यस्याञ्च हयः पार्ष्णिभ्यां तोदेन प्रहारेण अतिनुदितः अतिप्रेरितः सन् भ्रान्तः भवेत् सा धारा विज्ञेया ॥ १४५ ॥

**आकुञ्चिताग्रपादाभ्यामुत्प्लुत्योत्प्लुत्य या गतिः।**
**आस्कन्दिता च सा ज्ञेया गतिविद्भिस्तु वाजिनाम्॥ १४६॥**

**अन्वयः**—आकुञ्चिताभ्याम् अग्रपादाभ्याम् उत्प्लुत्य उत्प्लुत्य या गतिः सा वाजिनां विद्भिः आस्कन्दिता ज्ञेया॥ १४६॥

**व्याख्या**—आकुञ्चिताभ्याम् = सङ्कोचिताभ्याम्, अग्रपादाभ्याम् = द्वाभ्यामग्रचरणाभ्याम्, उत्प्लुत्य उत्प्लुत्य = उत्पत्य उत्पत्य, या = गतिः, साः = गतिः, वाजिनाम् = अश्वानाम्, विद्भिः = ज्ञातृभिः, आस्कन्दिता = एतदाख्या, ज्ञेया = बोद्धव्या॥ १४६॥

**हिन्दी**—जो घोड़े अगले पैरों को सिकोड़ते हुए उछल-उछल कर दौड़े, उस घोड़े की गति को घोड़े की चाल के जानकार 'आस्कन्दित' कहते हैं॥ १४६॥

**आकुञ्चितेति**। आकुञ्चिताभ्याम् अग्रपादाभ्याम् उत्प्लुत्य उत्प्लुत्य या गतिः सा वाजिनां गतिविद्भिः आस्कन्दिता च ज्ञेया॥ १४६॥

**ईषदुत्प्लुत्य गमनमखण्डं रेचितं हि तत्।**
**पादैश्चतुर्भिरुत्प्लुत्य मृगवत् सा प्लुता गतिः॥ १४७॥**

**अन्वयः**—ईषत् उत्प्लुत्य अखण्डं गमनं यत् तत् रेचितं, या चतुर्भिः पादैः उत्प्लुत्य मृगवत् गतिः सा प्लुता॥ १८७॥

**व्याख्या**—ईषत् = अल्पम्, उत्प्लुत्य = उत्पत्य, अखण्डम् = क्रमिकम्, यत् = गमनम्, तत्, रेचितम् एतदाख्यम्, तथा या = गतिः, चतुर्भिः, पादैः = चरणैः, उत्पलुत्य = उत्पत्य, मृगवत् = हरिण इव, गतिः = गमनम्, सा = गतिः, प्लुता = एतदाख्या, स्मृता = कथिता॥ १४७॥

**हिन्दी**—थोड़ा उछल कर लगातार चलने वाली घोड़े की गति को 'रेचित' कहते हैं तथा चारों पैरों से हिरण की तरह चौकड़ी भर कर चलने वाली घोड़े की चाल को 'प्लुत' कहते हैं॥ १४७॥

**ईषदिति**। ईषत् उत्प्लुत्य अखण्डं क्रमिकं गमनं यत् तत् हि रेचितम्। या चतुर्भिः पादैः उत्प्लुत्य मृगवत् गतिः सा प्लुता॥ १४७॥

**असंवलितपद्भ्यां तु सुव्यक्तं गमनं तुरम्।**
**धौरीतकं च तज्ज्ञेयं रथसंवाहने वरम्॥ १४८॥**

**अन्वयः**—असंवलितपद्भ्यां यत् सुव्यक्तं तुरं गमनं तत् धौरीतकं ज्ञेयम्, तत् रथसंवाहने वरम्॥ १४०॥

**व्याख्या**—अंसवलितपद्भ्याम् = असङ्कोचिताभ्याम्, पद्भ्याम् = चरणाभ्याम्, यत् सुव्यक्तम् = सुस्पष्टम्, तुरम् = द्रुतम्, गमनम् = गतिः, तत् धौरीतकम् = एतदाख्यम्, ज्ञेयम् = बोध्यम्, तत्, रथसंवाहने = स्यन्दनसंवाहने, वरम् = श्रेष्ठम्, ज्ञेयम्॥ १४०॥

**हिन्दी**—जो घोड़ा बिना अगले पैरों को मोड़े तेज गति से दौडे वह रथ में जोतने योग्य धौरीतक गति वाला जानना चाहिए॥ १४८॥

**असंवलितेति**। असंवलिताभ्याम् अकुञ्चिताभ्यां पद्भ्यां यत् सुव्यक्तं तुरं द्रुतं गमनं तत् धौरीतकं ज्ञेयं, तत्तु रथसंवाहने वरं श्रेष्ठम्॥ १४८॥

प्रसंवलितपद्भ्यां यो मयूरो धृतकन्धरः।
दोलायितशरीरार्द्धकायो गच्छति वल्गितम्॥ १४९॥

**अन्वयः**—मयूरः धृतकन्धरः दोलायितशरीरार्द्धकायः प्रसंवलितपद्भ्यां यः गच्छति सः वल्गितम्॥ १४९॥

**व्याख्या**—मयूरः = शिखी, इव यः = अश्वः, धृतकन्धरः = उन्नतग्रीवः, तथा दोलायितः = विचलितः, शरीस्य = देहस्य, अर्द्धकायः = भागार्द्धः, यस्य तथाभूतः सन्, प्रसंवलिताभ्याम् = कुञ्चिताभ्याम्, पद्भ्याम् = चरणाभ्याम्, यत् गच्छति = चलति, तत् वल्गितम् = एतदाख्यं कथितमिति शेषः॥ १४९॥

**हिन्दी**—अगले दोनों पैरों को सिकोड़े हुए, मयूर की तरह गर्दन ऊपर उठाये, आधी देह को हिंडोले की तरह हिलाते हुए जो घोड़ा दौडता है, उस चाल को वल्गित कहते हैं॥ १४९॥

**प्रसंवलितेति**। मयूरः इव यः अश्वः धृरकन्धरः उन्नतग्रीवः तथा दोलायितः शरीरस्य अर्द्धकायः अर्द्धभागः यस्य तथाभूतः सन् प्रसंवलिताभ्यां कुञ्चिताभ्यां पद्भ्यां यत् गच्छति तत् वल्गितम्॥ १४९॥

परिणाहो वृषमुखादुदरे तु चतुर्गुणः।
सककुत् त्रिगुणोच्चन्तु सार्द्धत्रिगुणदीर्घता॥ १५०॥

**अन्वयः**—वृषस्य मुखात् उदरे परिणाहः चतुर्गुणः सककुत् त्रिगुणोच्चं सार्द्धत्रिगुण-दीर्घता॥ १५०॥

**व्याख्या**—वृषस्य = बलीवर्दस्य, मुखात् = आननात्, उदरे = तुन्दे, परिणाहः = कुक्षिविस्तारः, चतुर्गुणः, सककुत् = अंसकुटसहितम्, त्रिगुणम् = त्रिगुणात्मकम्, मुखादिति, उच्चम् = उन्नतम्, सार्द्धत्रिगुणदीर्घता = मुखादुदरस्य दीर्घता = लम्बता, अर्द्धेण सहिता त्रिगुणा ज्ञेया॥ १५०॥

**हिन्दी**—बैल के मुँह के माप से चार गुना अधिक पेट का माप और बैल की पीठ पर के टिल्ले पेट सहित मुँह से तीन गुना ऊँचा तथा पेट की लम्बाई साढ़े तीन गुना अधिक होनी चाहिए॥ १५०॥

सम्प्रति वृषस्य विवरणमाचष्टे- **परिणाह इति**। वृषस्य मुखात् उदरे परिणाहः उदरविस्तार इत्यर्थः, चतुर्गुणः। सककुत् ककुत्सहितम् उदरं त्रिगुणं मुखादिति शेषः, उच्चम् उन्नतम्। सार्द्धत्रिगुणदीर्घता मुखात् उदरस्य दीर्घता सार्द्धत्रिगुणा॥ १५०॥

सप्ततालो वृषः पूज्यो गुणैरेभिर्युतो यदि॥ १५१॥

**अन्वयः**—सप्ततालः वृषः यदि एभिः गुणैः युतः पूज्यः॥ १५१॥

**व्याख्या**- सप्ततालः = परिमाणविशेषः, सप्त तालाः परिमाणमस्येति सप्ततालः, वृषः = वृषभः, यदि = चेत्, एभिः = वक्ष्यमाणैः, गुणैः, युतः = सहितः, भवेत् = स्यात्, तदा, श्रेष्ठः = पूज्यो भवेदिति॥ १५१॥

**हिन्दी**—सात ताल प्रमाण ऊँचा होते हुए भी निम्नलिखित गुणों से युक्त यदि बैल हो तो वह बैल उत्तम होता है॥ १५१॥

**सप्तताल इति।** सप्ततालः तालः परिमाणविशेषः सप्ततालाः परिमाणमस्येति सप्ततालः वृषः यदि एभिर्वक्ष्यमाणैः गुणैः युतः भवेत् तदा पूज्यः॥१५१॥

**न स्थायी न च वै मन्दः सुवोढा स्वङ्गसुन्दरः।**
**नातिक्रूरः सुपृष्ठश्च वृषभः श्रेष्ठ उच्यते॥१५२॥**

**अन्वयः**–यः वृषभः न स्थायी न च मन्दः सुवोढा स्वङ्गसुन्दरः नातिक्रूरः सुपृष्ठः वृषभः श्रेष्ठः उच्यते॥१५२॥

**व्याख्या**—यो हि, वृषभः=बलीवर्दः, न=नहि, स्थायी=गतिविच्छेदकः, न च मन्दः=सलसगतिशीलः, सुवोढा=सुवहनशीलः, स्वङ्गसुन्दरः=सुपुष्टशरीरावयवैः रुचिरः, नातिक्रूरः=नातिनिर्दयः, सुपृष्ठश्च=पश्चिमाङ्गसुन्दरः, वृषभः=वृषः, श्रेष्ठः=उत्तमः, उच्यते=कथ्यते॥१५२॥

**हिन्दी**—जो चलते-चलते रुकने वाला न हो, जो धीरे-धीरे न चलता हो, जो अत्यन्त क्रूर न हो, वहने में अच्छा हो, जिसकी पीठ अच्छी हो, जिसकी देह के समस्त अंग-प्रत्यंग सुपुष्ट एवं आकर्षक हो; बैलों में ऐसा बैल श्रेष्ठ होता है॥१५२॥

गुणानाह– **नेति।** यः वृषः न स्थायी न स्थितिशीलः, न च मन्दः मृदुः, सुवोढा सुवाहकः, स्वङ्गसुन्दरः शोभनाङ्गतया सुन्दर इत्यर्थः, नातिक्रूरः नातितीक्ष्णः सुपृष्ठश्च सः वृषभश्रेष्ठः वृषभेषु श्रेष्ठः उच्यते॥१५२॥

**त्रिंशद्योजनगन्ता वा प्रत्यहं भारवाहकः।**
**नवतालश्च सुदृढः सुमुखोष्ट्रः प्रशस्यते॥१५३॥**

**अन्वयः**—त्रिंशद्योजनगन्ता प्रत्यहं भारवाहकः वा नवतालः सुदृढः सुमुखोष्ट्रः प्रशस्यते॥१५३॥

**व्याख्या**—विंशत्यधिकशतक्रोशगमनशीलः, प्रत्यहम्=प्रतिदिनम्, भारवाहकः=भारवाही, नवतालः=नवतालोन्नतः, सुदृढः=अतिबलिष्ठः, सुमुखः=सुवदनम्, उष्ट्रः=महाग्रीवः, प्रशस्यते=प्रशंसनीयो भवति॥१५३॥

**हिन्दी**—प्रतिदिन १२० कोश चलने वाला, वजन ढोने वाला, साढ़े चार हाथ ऊँचा, मजबूत कद-काठी और सुन्दर मुँह वाला ऊँट प्रशंसनीय होता है॥१५३॥

उष्ट्रमाह– **त्रिंशदिति।** त्रिंशद्योजनगन्ता विंशत्यधिकशतक्रोशगामी प्रत्यहं भारवाहकः भारवहनशीलः नवतालः नवतालपरिमितः सुदृढः कठिनशरीरः सुमुखः उष्ट्रः प्रशस्यते॥१५३॥

**शतमायुर्मनुष्याणां गजानां परमं स्मृतम्।**
**मनुष्यगजयोर्बाल्यं यावद्विंशतिवत्सरम्॥१५४॥**

**अन्वयः**—मनुष्याणां गजानाञ्च परमम् आयुः शतं स्मृतम्। मनुष्यगजयोः बाल्यं विंशतिवत्सरं यावत्॥१५४॥

**व्याख्या**—मनुष्याणाम्=नराणाम्, च=पुनः, गजानाम्=हस्तिनाम्, परमायुः=जीवनकालः, शतम्=शतवर्षपर्यन्तम्, स्मृतम्=कथितम्। मनुष्यगजयोः=नरहस्तिनोः, बाल्यञ्च=शैशवञ्च, विंशतिः, वत्सरम्=वर्षम्, यावत्=पर्यन्तमिति ज्ञेयम्॥१५४॥

**हिन्दी**—आदमी और हाथी का जीवनकाल सौ साल का होता है और उनका बचपन बीस साल तक माना जाता है ॥ १५४ ॥

**शतमिति**। मनुष्याणां गजानाञ्च परमम् आयुः जीवनकालः शतं शतवर्षं स्मृतम्। मनुष्यगजयोः बाल्यञ्च विंशतिवत्सरं यावत् विंशतिवर्षपर्य्यन्तमित्यर्थः ॥ १५४ ॥

**नृणां हि मध्यमं यावत् षष्टिवर्षं वयः स्मृतम्।**
**अशीतिवत्सरं यावद्गजस्य मध्यमं वयः ॥ १५५ ॥**

**अन्वयः**—नृणां मध्यमं वयः षष्टिवर्षं यावत् स्मृतम्। गजस्य मध्यमं वयः अशीतिवत्सरं यावत् ॥ १५५ ॥

**व्याख्या**—नृणाम् = नराणाम्, मध्यमम् = मध्यभागः, वयः = अवस्था, षष्टिवर्षम् = षष्टिवत्सरम्, यावत् = पर्यन्तम्, तथा गजस्य = हस्तिनः, मध्यमं वयः = प्रौढावस्था, अशीतिवत्सरम् = अशीतिवर्षम्, यावत् = पर्यन्तम्, बोध्यम् ॥ १५५ ॥

**हिन्दी**—मानव की प्रौढावस्था साठ साल तक तथा हाथी की प्रौढावस्था अस्सी साल की मानी गई है ॥ १५५ ॥

**नृणामिति**। नृणां मानवानां मध्यमं वयः षष्टिवर्षं यावत् तथा गजस्य अशीतिवत्सरं यावत् मध्यमं वयः स्मृतम् ॥ १५५ ॥

**चतुस्त्रिंशत्तु वर्षाणामश्वस्यायुः परं स्मृतम्।**
**पञ्चविंशतिवर्षं हि परमायुर्वृषोष्ट्रयोः ॥ १५६ ॥**

**अन्वयः**—अश्वस्य परमायुः वर्षाणां चतुस्त्रिंशत् तथा वृषोष्ट्रयोः परमायुः पञ्चविंशतिवर्षं स्मृतम् ॥ १५६ ॥

**व्याख्या**—अश्वस्य = घोटकस्य, परमायुः = जीवनकालः, वर्षाणाम् = वत्सराणाम्, चतुःत्रिंशत् = चतुरधिकत्रिंशत्वर्षपरिमितम्, स्मृतम् = कथितम्। तथा वृषोष्ट्रयोः—वृषस्य = बलीवर्दस्य, च = पुनः, उष्ट्रस्य = महाङ्गस्य, परमायुः = जीवनकालः, पञ्चविंशतिवर्षम् = पञ्चाधिकविंशतिवर्षपर्यन्तम्, स्मृतम् = कथितम् ॥ १५६ ॥

**हिन्दी**—घोड़े की परमायु चौंतीस वर्ष की मानी गई है तथा बैल और ऊँट की परमायु पच्चीस वर्ष तक की ही मानी गई है ॥ १५६ ॥

**चतुस्त्रिंशदिति**। अश्वस्य परम् आयुः वर्षाणां चतुस्त्रिंशत् चतुस्त्रिंशद्वर्षमित्यर्थः, तथा वृषोष्ट्रयोः वृषस्य उष्ट्रस्य च परमायुः पञ्चविंशतिवर्षं स्मृतम् ॥ १५६ ॥

**बाल्यमश्ववृषोष्ट्राणां पञ्चमं वत्सरं मतम्।**
**मध्यं यावत् षोडशाब्दं वार्द्धक्यन्तु ततः परम् ॥ १५७ ॥**

**अन्वयः**—अश्ववृषोष्ट्राणां बाल्यं पञ्चमं वत्सरं, मध्यं षोडशाब्दं यावत्, ततः परं वार्द्धक्यं मतम् ॥ १५७ ॥

**व्याख्या**—अश्वस्य = वाजिनः, वृषस्य = बलीवर्दस्य, उष्ट्रस्य = क्रमेलकस्य च, बाल्यम् = शैशवम्, पञ्चमं वत्सरम् = पञ्चवर्षपर्यन्तम्, मध्यम् = तारुण्यम्, षोडशाब्दम् = षोडवर्षपर्यन्तम्, ततः परम् = तत्पश्चात्, वार्द्धक्यम् = वृद्धावस्था, स्मृतम् = कथितम् ॥ १५७ ॥

**हिन्दी**—घोड़ा, बैल और ऊँटों का बचपन पाँच साल तक होता है, जवानी सोलह तक होती है और इसके बाद वृद्धावस्था आ जाती है ॥ १५७ ॥

**बाल्यमिति**। अश्ववृषोष्ट्राणाम् अश्वानां वृषाणाम् उष्ट्राणाञ्च बाल्यं शैशवं पञ्चमं वत्सरं यावत्, मध्यं यौवनमित्यर्थः, षोडशाब्दं यावत् ततः परं वार्द्धक्यं स्मृतम् ॥ १५७ ॥

**दन्तानामुद्गमैर्वर्णैरायुर्ज्ञेयं वृषाश्वयोः ॥ १५८ ॥**

**अन्वयः**—दन्तानाम् उद्गमैः वर्णैश्च वृषाश्वयोः आयुः ज्ञेयम् ॥ १५८ ॥

**व्याख्या**—दन्तानाम् = दशनानाम्, उद्गमैः = जननैः, वर्णैश्च = स्वरूपैश्च, वृषस्य = बलीवर्दस्य, अश्वस्य = हयस्य च, आयुः = वयः, ज्ञेयम् = बोध्यम् ॥ १५८ ॥

**हिन्दी**—बैल तथा घोड़े की उम्र का ज्ञान उनके दाँत निकलने तथा दाँतों के रंग-रूप से किया जाता है ॥। १५८ ॥

**दन्तानामिति**। दन्तानाम् उद्गमैः जननैः वर्णैश्च वृषाश्वयोः वृषस्य अश्वस्य च आयुः ज्ञेयम् ॥ १५८ ॥

**अश्वस्य षट् सिता दन्ताः प्रथमाब्दे भवन्ति हि।**
**कृष्णलोहितवर्णास्तु द्वितीयेऽब्दे ह्यधोगताः ॥ १५९ ॥**

**अन्वयः**—अश्वस्य प्रथमाब्दे षट् सिताः दन्ताः भवन्ति। कृष्णलोहितवर्णाः तु द्वितीये अब्दे अधोगताः हि ॥ १५९ ॥

**व्याख्या**—अश्वस्य = घोटकस्य, प्रथमाब्दे = प्रथमवर्षे, षट् सिताः = श्वेतवर्णाः षट्, दन्ताः = रदनाः, भवन्ति = जायन्ते, द्वितीये अब्दे = पुनः द्वितीयवर्षे, कृष्णलोहितवर्णाः = श्यामरक्तरङ्गाः, दन्ताः, अधोगताः = निम्नगामिनः, हि इति निश्चयेन, भवन्ति = जायन्ते ॥ १५९ ॥

**हिन्दी**—पहले वर्ष घोड़े के ऊपरी भाग में छः सफेद दाँत निकलते हैं और दूसरे साल में काले लाल मिले रंग के छः दाँत नीचे निकलते हैं ॥ १५९ ॥

**अश्वस्येति**। अश्वस्य प्रथमाब्दे जननप्रथमवत्सरे षट् सिता श्वेतवर्णाः दन्ताः भवन्ति। द्वितीये अब्दे कृष्णलोहितवर्णाः अधोगताः निम्नगामिनः भवन्ति हिशब्दश्चावधारणार्थः ॥ १५९ ॥

**तृतीयेऽब्दे तु सन्दंशौ क्रमात् कृष्णौ षडब्दतः।**
**तत्पार्श्ववर्त्तिनौ तौ तु चतुर्थे पुनरुद्गतौ ॥ १६० ॥**

**अन्वयः**—तृतीयेऽब्दे सन्दंशौ षडब्दतः क्रमात् कृष्णौ, चतुर्थे तु तत् पार्श्ववर्त्तिनौ तौ पुनः उद्गतौ ॥ १६० ॥

**व्याख्या**—तृतीयेऽब्दे = तृतीयवर्षे तु, सन्दंशौ = द्वे रदने, षडब्दतः = षड्वर्षपर्यन्तम्, क्रमात् = क्रमशः, कृष्णौ = श्यामवर्णौ भवतः, तथा चतुर्थे = तुरीये, वर्षे, तत् = तयोः रदनयोः, पार्श्ववर्त्तिनौ = समीपस्थितौ, तौ = दन्तौ, पुनः = भूयः, उद्गतौ = जातौ ॥ १६० ॥

**हिन्दी**—तीसरे साल में दो दाँत छः साल तक क्रमशः काले हो जाते हैं और चौथे साल उन दोनों दाँतों के बगल में और दो दाँत निकल आते हैं ॥ १६० ॥

**तृतीये इति**। तृतीये अब्दे वत्सरे तु सन्दंशौ, दशनौ च षडब्दतः षड्वर्षपर्यन्तं क्रमात् कृष्णौ भवतः। चतुर्थे तु वर्षे तयोः दशनयोः पार्श्ववर्त्तिनौ तौ दशनौ पुनः उद्गतौ भवत इति शेषः ॥ १६० ॥

अन्त्यौ द्वौ पञ्चमाब्दे तु सन्दंशौ पुनरुद्गतौ।
मध्यपार्श्वान्तगौ द्वौ द्वौ क्रमात् कृष्णौ षडब्दतः ॥ १६१ ॥

**अन्वयः**—पञ्चमाब्दे अन्त्यौ द्वौ सन्दंशौ पुनरुद्गतौ, मध्यपार्श्वान्तगौ द्वौ द्वौ षडब्दतः क्रमात् कृष्णौ ॥ १६१ ॥

**व्याख्या**—पञ्चमाब्दे = पञ्चमे वर्षे, अन्त्यौ = अन्ते समुत्पन्नौ, द्वौ = उभौ, सन्दंशौ = सुष्ठुदशनौ, पुनः = भूयः, उद्गतौ = समुत्पन्नौ, भवतः, मध्यपार्श्वान्तगौ = मध्ये समुत्पन्नौ तथा पार्श्वान्तभागे जातौ द्वौ द्वौ रदनौ, षडब्दतः = षड्वर्षपर्यन्तम्, क्रमात् = अनुक्रमात्, कृष्णौ = श्यामवर्णौ जातौ ॥ १६१ ॥

**हिन्दी**—पाँचवें साल के अन्त में फिर दो दाँत निकल आते हैं। छः साल के भीतर क्रमशः बीच के तथा पार्श्ववर्त्ती अन्तिम दो-दो दाँत काले हो जाते हैं ॥ १६१ ॥

**अन्त्याविति**। पञ्चमाब्दे पञ्चमवर्षे अन्त्यौ अन्तेभवौ द्वौ सन्दंशौ पुनरुद्गतौ भवतः। मध्यपार्श्वान्तगौ मध्यपार्श्वयोः अन्तगौ द्वौ द्वौ दशनौ षडब्दतः षड्वर्षं यावत् क्रमात् कृष्णौ भवतः ॥ १६१ ॥

नवमाब्दात् क्रमात् पीतौ तौ सितौ द्वादशाब्दतः।
दशपञ्चाब्दतस्तौ तु काचाभौ क्रमशः स्मृतौ ॥ १६२ ॥

**अन्वयः**—तौ क्रमात् नवमाब्दात् पीतौ, ततः द्वादशाब्दतः सितौ, ततः दशपञ्चाब्दतः तौ क्रमशः काचाभौ स्मृतौ ॥ १६२ ॥

**व्याख्या**—तौ = दशनौ, क्रमात् = क्रमशः, नवमाब्दात् = नवमवर्षात्, पीतौ = पीतवर्णौ, जातौ, ततः = तत्पश्चात्पुनः द्वादशाब्दतः = द्वादशवर्षं यावत् तौ दशनौ, सितौ = श्वेतवर्णौ भवतः, ततश्च = तत्पश्चात्, दशपञ्चाब्दतः = पञ्चदशवर्षात्, तौ = दन्तौ, क्रमशः = अनुक्रमात्, काचाभौ = स्फटिक इव समुज्ज्वलौ, स्मृतौ = कथितौ ॥ १६२ ॥

**हिन्दी**—नौवें साल से वे दोनों दाँत क्रमशः पीले रंग के, उसके बाद पुनः बारहवें साल में सफेद रंग के हो जाते हैं। फिर पन्द्रहवें साल तक वे दोनों काँच की तरह उज्ज्वल हो जाते हैं ॥ १६२ ॥

**नवामाब्दादिति**। तौ दशनौ क्रमात् नवमाब्दात् पीतौ, ततः पुनः द्वादशाब्दतः सितौ श्वेतौ। ततश्च दशपञ्चाब्दतः पञ्चदशवर्षात् तौ क्रमशः काचाभौ काचवदुज्ज्वलौ स्मृतौ ॥ १६२ ॥

अष्टादशाब्दतस्तौ हि मध्वाभौ भवतः क्रमात्।
शङ्खाभौ चैकविंशाब्दाच्चतुर्विंशाब्दतः सदा॥
छिद्रं सञ्चलनं पातो दन्तानाञ्च त्रिके त्रिके ॥ १६३ ॥

**अन्वयः**—तौ अष्टादशाब्दतः क्रमात् मध्वाभौ भवतः। ततः एकविंशाब्दात् शङ्खाभौ भवतः। ततः चतुर्विंशाब्दतः त्रिके त्रिके क्रमात् दन्तानां छिद्रं सञ्चलनं पातश्च भवति ॥ १६३ ॥

**व्याख्या**—पुनश्च, तौ = दशनौ, अष्टादशाब्दतः = अष्टाधिकदशवत्सरात्, क्रमात् = क्रमशः, मध्वाभौ = मधु इव कान्तिसम्पन्नौ भवतः। ततश्च = तत्पश्चात्, एकविंशाब्दात् = एकाधिकविंशतिवर्षात्, शङ्खाभौ = शङ्खसदृशौ भवतः। ततः = तत्पश्चात्, चतुर्विंशाब्दतः =

चतुरधिकविंशत्यब्दात्, त्रिके त्रिके = तृतीये तृतीये वर्षे, क्रमात् = अनुक्रमात्, दन्तानाम् = दशनानाम्, छिद्रम् = विवरम्, सञ्चलनम् = वेपनं कम्पनञ्चेति, पातः = पतनञ्च भवति ॥ १६३ ॥

**हिन्दी**—फिर अठारहवें साल तक उन दानों दाँतों का रंग मधु की तरह रक्ताभ हो जाता है। पुनः इक्कीसवें साल तक उनका रंग शंख की तरह सफेद हो जाता है। फिर चौबीसवें साल तक तीन-तीन दाँतों में पहले छेद होता है, फिर हिलने लगते हैं और बाद में उनका टूट कर गिरना शुरू हो जाता है ॥ १६३ ॥

**अष्टादशाब्दत इति**। पुनश्च तौ अष्टादशाब्दतः अष्टादशवर्षात् क्रमात् मध्वाभौ मधुसदृशौ भवतः। ततश्च एकविंशाब्दात् शङ्खाभौ भवतः। ततः चतुर्विंशाब्दतः त्रिके त्रिके तृतीये तृतीये वर्षे क्रमात् दन्तानां छिद्रं, सञ्चलनं पातश्च भवति ॥ १६३ ॥

**प्रोथे सुवलयस्तिस्रः पूर्णायुर्यस्य वाजिनः।**
**यथा यथा तु हीनास्ता हीनमायुस्तथा तथा ॥ १६४ ॥**

**अन्वयः**—यस्य वाजिनः पूर्णायुः तस्य प्रोथे तिस्रः सुवलयः ताः यथा यथा हीनाः तथा तथा हीनमायुः ॥ १६४ ॥

**व्याख्या**—यस्य = पूर्वोक्तस्य, वाजिनः = हयस्य, पूर्णायुः = जीवनकालसमाप्तप्रायः, तस्य = अश्वस्य, प्रोथे = अश्वस्य लम्बास्याग्रे, तिस्रः = त्रिसंख्यकाः, सुवलयः = सुरेखाः, जायन्ते, ताः = वलयः, यथा यथा = येन प्रकारेण, हीनाः = वियुक्ताः, तथा तथा = तेनैव रूपेण, आयुः = वयः, हीनम् = क्षीणम्, भवन्ति ॥ १६४ ॥

**हिन्दी**—जिस घोड़े के थूथन में तीन रेखाएँ ऊभरी हों, उसे पूर्णायु माने और इन रेखाओं में जैसे-जैसे कमी हो वैसे-वैसे ही क्षीण आयु मानना चाहिए ॥ १६४ ॥

**प्रोथे इति**। यस्य वाजिनः अश्वस्य पूर्णायुः आयुः पूर्णमित्यर्थः, तस्य प्रोथे मुखाग्रे तिस्रः सुवलयः सुष्ठु वलयः रेखाविशेषाः भवन्तीत्यर्थः। ताः रेखाः यथा यथा हीनाः, तथा तथा आयुः हीनं भवति ॥ १६४ ॥

**जानूत्पाता त्वोष्ठवाद्यो धूतपृष्ठो जलासनः।**
**गतिमध्यासनः पृष्ठपाती पश्चाद्गमोर्द्ध्वपात् ॥ १६५ ॥**
**सर्पजिह्वश्चर्क्षकान्तिर्भीरुरश्वोऽतिनिन्दितः ।**
**सच्छिद्रभालतिलकी निन्द्य आश्रयकृत्तथा ॥ १६६ ॥**

**अन्वयः**—जानूत्पाता ओष्ठवाद्यः धूतपृष्ठः जलासनः गतिमध्यासनः पृष्ठपाती पश्चाद्गमः उद्र्ध्वपात् सर्पजिह्वः ऋक्षकान्तिः भीरुः अश्वः अतिनिन्दितः तथा सच्छिद्रभालतिलकी आश्रयकृत् अश्वः निन्द्यः ॥ १६५-१६६ ॥

**व्याख्या**—जानूत्पाता—जानूनि = ऊरुपर्वाणि, उत्पाति = उत्क्षिपति, इति जानूत्पाता = जानूत्क्षेपणकारी, ओष्ठवाद्यः—ओष्ठेन = अधरेण, वाद्यः = वादयिता, ओष्ठवाद्यः = अधरवादकः, धूतपृष्ठः = कम्पितपृष्ठदेशः, जलासनः = सलिलस्थाने स्थितः, गतिमध्यासनः = गमनान्तराले स्थितिशीलः, पृष्ठपाती = पृष्ठात्पातयालुः, पश्चाद्गमः = अनुगमनकारी, ऊर्ध्वपात् = उत्क्षिप्तपाद, सर्पजिह्वः—सर्पस्य = नागस्य इव, जिह्वा = रसना, यस्य सः = नागजिह्वः, ऋक्षकान्तिः—

ऋक्षस्य = भल्लुकस्य, इव कान्तिः = आभा, यस्यासौ, भीरुः = भीतः, अश्वः = घोटकः, अतिनिन्दितः = अत्यन्तगर्हितः, तथा = तेनैव प्रकारेण, सच्छिद्रभालतिलकी—सच्छिद्रम् = रन्ध्रेण सहितम्, भाले = ललाटे, यत् तिलकम् = तिलकचिह्नयुक्तः, आश्रयकृत्—आश्रयम् = स्वामिनम्, कृन्तति = कर्त्तनं करोतीति तथोक्तः स्वामिहन्ता, अश्वः = हयः, निन्द्यः = निन्दनीयो भवति ॥ १६५-१६६ ॥

**हिन्दी**—जाँघों को हिलाने वाला, होठों को बजाने वाला, पीठ कँपाने वाला, पानी में या चलते-चलते बैठ जाने वाला, पीठ पर से सवार को गिराने वाला, पीछे की ओर खिसकने वाला, पैरों को ऊपर की ओर फेंकने वाला, साँप की तरह जीभ लपलपाने वाला, भालू की तरह कान्ति वाला और डरपोक घोड़ा अत्यन्त निन्दनीय होता है। इसी तरह जिस घोड़े के माथे में छेद वाला तिलक चिह्न हो, वह भी निन्दनीय तो होता ही है, साथ ही अपने आश्रयदाता का ही नाश कर देता है ॥ १६५-१६६ ॥

**जानूत्पाता इति। सर्पजिह्व इति।** जानूनि उत्पाति उत्क्षिपतीति जानूत्पाता जानूत्क्षेपणशीलः ओष्ठवाद्यः ओष्ठेन वाद्यकारकः, धूतपृष्ठः कम्पितपृष्ठदेशः, जलासनः जलस्थानस्थितः गतिमध्यासनः गतिमध्ये गमनमध्ये आसनम् उपवेशनं यस्य सः गच्छन् गच्छन् स्थितिशील इत्यर्थः, पृष्ठपाती पृष्ठपातकः पश्चाद्गमः पश्चाद्गमनशीलः उद्‌र्ध्वपाद् उत्क्षिप्तचरणः, सर्पस्येव जिह्वा यस्य सः, ऋक्षकान्तिः भल्लूकप्रभः, तथा भीरुः अश्वः अतिनिन्दितः। तथा सच्छिद्रभालतिलकी सच्छिद्रं सरन्ध्रं भाले यत् तिलकं तिलकाकृतिचिह्नविशेषः तद्विशिष्टः आश्रयकृत् आश्रयं कृन्तति छिनत्तीति तथोक्तः आश्रयध्वंसकारकः अश्वः निन्द्यः ॥ १६५-१६६ ॥

**वृषस्याष्टौ सिता दन्ताश्चतुर्थेऽब्देऽखिलाः स्मृताः।**
**द्वावन्त्यौ पतितोत्पन्नौ पञ्चमेऽब्दे हि तस्य वै ॥ १६७ ॥**

**अन्वयः**—वृषस्य चतुर्थेऽब्दे अखिलाः सिताः अष्टौ दन्ताः स्मृताः। तस्य पञ्चमेऽब्दे अन्त्यौ द्वौ वै पतितोत्पन्नौ ॥ १६७ ॥

**व्याख्या**—वृषस्य = बलीवर्दस्य, चतुर्थे = तुरीये, अब्दे = वर्षे, अखिलाः = समग्राः, सिताः = श्वेतवर्णाः, अष्टौ दन्ताः = दशनाः, जाताः, इति स्मृताः = कथिताः। तस्य = वृषभस्य, पञ्चमेऽब्दे = पञ्चमे वर्षे, अन्त्यौ = अन्तिमौ, द्वौ = उभौ, दन्तौ, पतित्वा = स्खलित्वा, पुनः उत्पन्नौ = समुद्भूतौ भवतः, हि, इत्यवधारणे, वै इति निश्चये ॥ १६७ ॥

**हिन्दी**—चार साल की उम्र तक बैलों के सभी सफेद दाँत निकल आते हैं और पाँचवें साल अन्तिम दो दाँत गिरकर फिर निकल आते हैं ॥ १६७ ॥

**वृषस्येति।** वृषस्य चतुर्थे अब्दे अखिलाः समग्राः सिताः श्वेतवर्णाः अष्टौ दन्ताः स्मृताः। तस्य पञ्चमे अब्दे वर्षे अन्त्यौ चरमौ द्वौ दन्तौ पतितोत्पन्नौ पतित्वा पुनरुत्पन्नौ भवत इत्यर्थः, हिशब्दः अवधारणार्थः, वैशब्दश्च पादपूरणार्थः ॥ १६७ ॥

**षष्ठे तूपान्त्यौ भवतः सप्तमे तत्समीपगौ।**
**अष्टमे पतितोत्पन्नौ मध्यमौ दशनौ खलु ॥ १६८ ॥**

**अन्वयः**—षष्ठे तु उपान्त्यौ दशनौ भवतः, सप्तमे तत्समीपगौ मध्यमौ दशनौ, अष्टमे खलु पतितोत्पन्नौ ॥ १६८ ॥

**व्याख्या**—षष्ठे तु = षष्ठे वर्षे, उपान्त्यौ = अन्तिमदन्तपार्श्वस्थितौ, द्वौ दशनौ = रदनौ, भवतः = जातौ, सप्तमे = सप्तमवर्षे, तत् = तस्य, समीपगौ = पार्श्वस्थितौ, मध्यमौ = मध्ये स्थितौ, दशनौ = रदनौ, जातौ, अष्टमे वर्षे, खलु = निश्चयेन, पतित्वा = स्खलित्वा, पुनरुत्पन्नौ = जाताविति ॥१६८ ॥

**हिन्दी**—छठे साल में बैलों के अन्तिम दो दाँत, सातवें साल उसके पास के दो दाँत तथा आठवें साल में बीच के दो दाँत गिरकर उग आते हैं॥१६८॥

**षष्ठे इति**। षष्ठे तु वर्षे उपान्त्यौ अन्त्यसमीपस्थौ दशनौ भवतः। सप्तमे वर्षे तयोः दशनयोः समीपगौ समीपस्थौ अपरौ दशनौ भवतः। मध्यमौ दशनौ अष्टमे वर्षे खलु निश्चितं पतितोत्पन्नौ पतित्वा पुनरुत्पन्नौ भवतः॥१६८॥

**कृष्णपीतसितारक्तशङ्खच्छायौ द्विके द्विके।**
**क्रमादब्दे च भवतश्चलनं पतनं ततः॥१६९॥**

**अन्वयः**—ततः द्विके द्विके अब्दे तौ क्रमात् कृष्णपीतसितारक्तशङ्खच्छायौ, ततः चलनं पतनं भवतः॥१६९॥

**व्याख्या**—ततः = अष्टमवत्सरात् परम्, द्विके द्विके = द्वितीये द्वितीये, अब्दे = वर्षे, तौ = रदनौ, क्रमात् = क्रमशः, कृष्णपीतसितारक्तशङ्खच्छायौ—कृष्णप्रभौ = श्यामवर्णौ, पीतप्रभौ = पीतवर्णौ, सितप्रभौ = श्वेतरङ्गौ, आरक्तप्रभौ = रक्तवर्णौ, तथा शङ्खप्रभौ = शङ्खवर्णौ, भवतः, ततः = तत्पश्चात्, चलनम् = कम्पमानम्, पश्चात् पतनम् = भञ्जनम्, दशानानां भवन्ति॥१६९॥

**हिन्दी**—आठ साल के बाद दो-दो वर्ष के अन्तराल में क्रमशः दो-दो दाँत काले, पीले, सफेद, लाल तथा शंख रंग के हो जाते हैं। इसके बाद वे हिलने लगते हैं और अन्त में टूटकर गिर जाते हैं॥१६९॥

**कृष्णेति**। ततः अष्टमाब्दात् परं द्विके द्विके द्वितीये द्वितीये वर्षे दशमे द्वादशे इत्यादावित्यर्थः, तौ दशनौ क्रमात् कृष्णपीतसितारक्तशङ्खच्छायौ कृष्णप्रभौ, पीतप्रभौ, सितप्रभौ आरक्तप्रभौ तथा शङ्खप्रभौ भवतः। ततः अनन्तरं चलनं पश्चात् पतनं दन्तानामिति शेषः भवति॥१६९॥

**उष्ट्रस्योक्तप्रकारेण वयोज्ञानन्तु वा भवेत्॥१७०॥**

**अन्वयः**—उक्तप्रकारेण उष्ट्रस्य तु वयसः वयोज्ञानं वा भवेत्॥१७०॥

**व्याख्या**—उक्तप्रकारेण = पूर्वोक्तरीत्या, उष्ट्रस्य = दीर्घाङ्गस्य, तु = अपि, वयसः = अवस्थायाः, ज्ञानम् = बोधः, वा = अवधारणार्थः, भवेत् = जायेत॥१७०॥

**हिन्दी**—उसी तरह ऊँटों की उम्र का भी पता चलता है॥१७०॥

**उष्ट्रस्येति**। उक्तप्रकारेण अश्वोक्तरीत्या उष्ट्रस्य तु उष्ट्रस्यापि तुशब्दोऽप्यर्थः। वयसः जीवनकालस्य ज्ञानं भवेत् वाशब्दश्चावधारणार्थः॥१७०॥

**प्रेरकाकर्षकमुखोऽङ्कुशो गजविनिग्रहे।**
**हस्तिपकैर्गजस्तेन विनेयः सुगमाय हि॥१७१॥**

**अन्वयः**—प्रेरकम् आकर्षकं मुखोऽङ्कुशः गजविनिग्रहे हस्तिपकैः सुगमाय तेन गजः विनेयः॥१७१॥

**व्याख्या**—प्रेरकम् = प्रोत्साहकम्, आकर्षकम् = आकर्षम्, मुखम् = आननम्, यस्य तथाभूतस्य, अङ्कुशः = शृणिः, गजानाम् = हस्तिनाम्, विनिग्रहे = नियन्त्रणे, स्मृतः, हस्तिपकैः = गजाजीवैः, सुगमाय = सुष्ठुतया गमनाय, तेन = अङ्कुशेन, गजः = करी, विनेयः = दण्डनीयः ॥ १७१ ॥

**हिन्दी**—हाथी को प्रोत्साहित करने वाले सुन्दर मुख वाले खिंचाव युक्त नुकीले, टेढे अंकुश से महावत हाथी को अच्छे ढंग से चलने को विनेय बनाये ॥ १७१ ॥

**प्रेरकेति**। प्रेरकं सञ्चालकम् आकर्षकम् आकर्षतुल्यं मुखं यस्य तादृशः अङ्कुशः गजानां विनिग्रहे दमने दमनार्थमित्यर्थः, स्मृत इति शेषः, हस्तिपकैः गजपालकैः सुगमाय सुगमनाय तेन अङ्कुशेन गजः विनेयः दण्ड्यः ॥ १७१ ॥

**खलीनस्योद्ध्र्वखण्डौ द्वौ पार्श्वगौ द्वादशाङ्गुलौ।**
**तत्पार्श्वान्तर्गताभ्यान्तु सुदृढाभ्यां तथैव च ॥ १७२ ॥**
**वारकाकर्षखण्डाभ्यां रज्ज्वर्थवलयैर्युतौ।**
**एवंविधखलीनेन वशीकुर्य्यात्तु वाजिनम् ॥ १७३ ॥**

**अन्वयः**—खलीनस्य पार्श्वगौ द्वादशाङ्गुलौ द्वौ ऊद्ध्र्वखण्डौ तत्पार्श्वान्तर्गताभ्यां तथा सुदृढाभ्यां वारकाकर्षखण्डाभ्यां रज्ज्वर्थवलयैः युतौ एवंविधेन खलीनेन तु वाजिनं वशीकुर्यात् ॥ १७२-१७३ ॥

**व्याख्या**—खलीनस्य = अश्वक्षेपण्यः, पार्श्वगौ = समीपस्थौ, द्वादशाङ्गुलौ = द्वयाधिक-दशाङ्गुलौ, द्वौ = उभौ, ऊद्ध्र्वखण्डौ = खलीनस्योपरिखण्डद्वौ, तत् = तयोः, पार्श्वान्तर्गताभ्याम् = समीपाभ्यन्तर्गताभ्याम्, तथा सुदृढाभ्याम् = सुस्थिराभ्याम्, वारकौ = अवरोधकौ, यौ आकर्षखण्डौ = आकर्षाकृतिखण्डौ, ताभ्याम्, तथा रज्ज्वर्थवलयैः = दामनिमित्तकरकैः, युतौ = कार्यौ, एवंविधेन = अनेन रूपेण, खलीनेन = कविकया, अश्वम् = घोटकम्, वशीकुर्यात् = वशमानयेत् ॥ १७२-१७३ ॥

**हिन्दी**—घोड़े की लगाम के ऊपर दो खण्ड होते हैं। लौहनिर्मित ये दोनों खण्ड मुँह के दोनों बगल तक होते हैं। इनकी माप बारह अंगुल होती है। दोनों ओर के खण्ड मजबूत एवं खींचने योग्य होते हैं। इनमें रस्सी फँसाने के लिए दोनों ओर दो कड़े लगे रहते हैं। इन्हें आवश्कतानुसार सवार खींचते हुए घोड़े को अपने वशवर्त्ती बनाता है ॥ १७२-१७३ ॥

**खलीनस्येति**। खलीनस्य कविकायाः पार्श्वगौ पार्श्ववर्त्तिनौ द्वादशाङ्गुलौ द्वौ ऊद्ध्र्वण्डौ तयोः पार्श्वान्तर्गताभ्यां तथा सुदृढाभ्यां कठिनाभ्यां वारकाकर्षखण्डाभ्यां वारकौ निवारकौ यौ आकर्षखण्डौ आकर्षकृतिखण्डौ ताभ्यां तथा रज्ज्वर्थवलयैः रज्जुनिमित्तवलयैः युतौ कार्य्याविति शेषः। एवंविधेन खलीनेन कविकया वाजिनम् अश्वं वशीकुर्य्यात् दमयेत् ॥ १७२-१७३ ॥

**नासिकाकर्षरज्ज्वा तु वृषोष्ट्रं विनयेद् भृशम्।**
**तीक्ष्णाग्रीयः सप्तफालः स्यादेषां मलशोधने ॥ १७४ ॥**

**अन्वयः**—नासिकाकर्षरज्ज्वा वृषोष्ट्रं भृशं विनयेत्। एषां मलशोधने तीक्ष्णाग्रीयः सप्तफालः स्यात् ॥ १७४ ॥

**व्याख्या**—नासिकाकर्षरज्ज्वा—नासिकायाम् = नासायाम्, या आकर्षा = बलात् दिशा-विशेषे नयनी रज्जुः, तथा वृषोष्ट्रम्—वृषम् = वृषभम्, उष्ट्रञ्च = महाङ्गञ्च, भृशम् = अत्यर्थम्, विनयेत् = दण्डयेत्। एषाम् = वृषोष्ट्राणाम्, मलशोधने = अपस्करनिर्मलीकरणे, तीक्ष्णम् = तीव्रम्, अग्रम् = अग्रभागम्, यस्य सः एव तीक्ष्णाग्रीयः, सप्तफालः = सप्तकृषिकः, स्यात् = भवेत् ॥ १७४ ॥

**हिन्दी**—नाक में नाथ पहनाकर बैल तथा ऊँट को वश में लाना चाहिए। इनके मल-मूत्रों की सफाई के लिए सतफारा नुकीले औजार का प्रयोग करना चाहिए ॥ १७४ ॥

**नासिकेति**। नासिकाकर्षरज्ज्वा नासिकायां या आकर्षा आकर्षणी रज्जुः तया वृषोष्ट्रं वृषम् उष्ट्रञ्च भृशम् अत्यर्थं विनयेत् दण्डयेत्। एषां वृषोष्ट्राणां मलशोधने दोषनिराकरणे तीक्ष्णम् अग्रं यस्य स एव तीक्ष्णाग्रीयः सप्तफालः दण्डविशेषः स्यात् ॥ १७४ ॥

**सुताडनैर्विनेया हि मनुष्याः पशवः सदा।**
**सैनिकास्तु विशेषेण न ते वै धनदण्डतः ॥ १७५ ॥**

**अन्वयः**—मनुष्याः पशवश्च सदा सुताडनैः विनेयाः। सैनिकास्तु विशेषेण न ते धनदण्डतः वै ॥ १७५ ॥

**व्याख्या**—मनुष्याः = नराः, पशवश्च = लोमलाङ्गुलवज्जीवाश्च, सदा = सर्वदा, सुताडनैः = उपयुक्तदण्डैः, विनेयाः = दण्डनीयाः। सैनिकास्तु = आयुधिकास्तु, विशेषेण = विशिष्टरूपेण, विनेयाः = दमनीयाः, यतः ते = सैनिकाः, धनदण्डतः = अर्थदण्डेन, न = नहि, विनेयाः = दमनीयाः भवन्ति ॥ १७५ ॥

**हिन्दी**—मनुष्य और पशु को सदैव ताड़ना देकर दमन करना चाहिए। सैनिकों को विशेष रूप से दण्डित करना चाहिए, क्योंकि अर्थदण्ड से उन्हें दण्डित नहीं किया जा सकता ॥ १७५ ॥

**सुताडनैरिति**। मनुष्याः पशवश्च सदा सुताडनैः उपयुक्तदण्डैरित्यर्थः, सदा विनेयाः दमनीयाः सैनिकास्तु विशेषेण सुताडनैः विनेया इति यतः ते सैनिकाः धनदण्डतः अर्थदण्डेन न विनेया भवन्ति वैशब्दः अवधारणार्थः ॥ १७५ ॥

**अनूपे तु वृषाश्वानां गजोष्ट्राणान्तु जङ्गले।**
**साधारणे पदातीनां निवेशाद्रक्षणं भवेत् ॥ १७६ ॥**

**अन्वयः**—अनूपे तु वृषाश्वानां जङ्गले गजोष्ट्राणां साधारणे पदातीनां निवेशात् रक्षणं भवेत् ॥ १७६ ॥

**व्याख्या**—अनूपे तु = जलप्रायप्रदेशे तु, वृषाश्वानाम्—वृषाणाम् = वृषभाणाम्, अश्वानाम् = घोटकानाञ्च, जङ्गले = वन्यप्रदेशे, गजोष्ट्राणाम्—गजानाम् = हस्तिनाम्, उष्ट्राणाम् = क्रमेलकानाम्, तथा साधारणे = स्थितिविधायिके सामान्यस्थाने, पदातीनाम् = पदगानाम्, निवेशात् = स्थापनात्, रक्षणम् = गोपनम्, भवेत् = स्यात् ॥ १७६ ॥

**हिन्दी**—पानी की सुविधा वाले क्षेत्र में बैलों तथा घोड़ों को, जंगली क्षेत्र में ऊँटों और हाथियों को तथा सामान्य क्षेत्र में पैदल सैनिकों को रखने से उनका संरक्षण होता है ॥ १७६ ॥

**अनूपे इति।** अनूपे सजलदेशे वृषाणाम् अश्वानाञ्च, जाङ्गले जङ्गलमये देशे गजानाम् उष्ट्राणाञ्च, तथा साधारणे सर्वथा स्थितिविधायके इत्यर्थः, स्थाने पदातीनां निवेशात् स्थापनात् रक्षणं भवेत् ॥ १७६ ॥

**शतं शतं योजनान्ते सैन्यं राष्ट्रे नियोजयेत् ॥ १७७ ॥**

**अन्वयः**—राष्ट्रे योजनान्ते शतं शतं सैन्यं नियोजयेत् ॥ १७७ ॥

**व्याख्या**—राज्ये, योजनान्ते = प्रतिचतुष्क्रोशान्ते, शतं शतम् = शतसंख्यकम्, सैन्यम् = आयुधिकम्, नियोजयेत् = स्थापयेत् ॥ १७७ ॥

**हिन्दी**—राज्य में प्रति चार कोश पर सौ-सौ सैनिकों की टुकड़ियों को रखना चाहिए ॥ १७७ ॥

**शतमिति।** राष्ट्रे राज्ये योजनान्ते प्रतिचतुष्क्रोशान्ते शतं शतं सैन्यं नियोजयेत् स्थापयेत् ॥१७७ ॥

**गजोष्ट्रवृषभाश्वाः प्राक् श्रेष्ठाः सम्भारवाहनैः ।**
**सर्वेभ्यः शकटाः श्रेष्ठा वर्षाकालं विना स्मृताः ॥ १७८ ॥**

**अन्वयः**—प्राक् गजोष्ट्रवृषभाश्वाः सम्भारवाहने श्रेष्ठाः। वर्षाकालं विना सर्वेभ्यः शकटाः श्रेष्ठाः स्मृताः ॥ १७८ ॥

**व्याख्या**—प्राक् = सर्वप्रथमम्, गजोष्ट्रवृषभाश्वाः—गजाः = हस्तिनः, उष्ट्राः = क्रमेलकाः, वृषभाः = बलीवर्दाः, अश्वाश्च = हयाश्च, सम्भारवाहने—सम्भाराणाम् = वस्तुजातानाम्, वाहने = नयने, श्रेष्ठाः = उत्कृष्टाः, वर्षाकालम् = घनकालम्, विना = विहाय, सर्वेभ्यः = सकलेभ्यः, शकटाः = प्रवहणाः, श्रेष्ठाः, स्मृताः = कथिताः ॥ १७८ ॥

**हिन्दी**—सर्वप्रथम हाथी, बैल, घोड़े सामग्री ढोने में श्रेष्ठ होते हैं। वर्षाकाल छोड़कर अन्य सभी समय के लिए सामान ढोने के लिए बैलगाड़ी ही ठीक होती है ॥ १७८ ॥

**गजेति।** प्राक् प्रथमं सम्भारवाहने सम्भाराणां सामग्रीणां वाहने विषये गजाः उष्ट्राः वृषभाः अश्वाश्च श्रेष्ठाः। वर्षाकालं विना शकटाः सर्वेभ्यः वाहकेभ्य इत्यर्थः, श्रेष्ठाः स्मृताः ॥ १७८ ॥

**न चाल्पसाधनो गच्छेदपि जेतुमरिं लघुम्।**
**महतात्यन्तसाद्यस्कबलेनैव सुबुद्धियुक् ॥ १७९ ॥**

**अन्वयः**—अल्पसाधनः लघुमपि अरिं जेतुं न गच्छेत्। सुबुद्धियुक् महता अत्यन्तसाद्यस्कबलेन एव ॥ १७९ ॥

**व्याख्या**—अल्पसाधनः = स्तोकबलः सन्, लघुमपि = तुच्छमपि, अरिम् = रिपुम्, जेतुम् = विजेतुम्, न = नहि, गच्छेत् = व्रजेत्। सुबुद्धियुक् = सुष्ठुबुद्धिसम्पन्नः, राजा, महता = बृहता, अत्यन्तेन = अमितेन, साद्यस्कबलेन—साद्यस्केन = शीघ्रभाविना, बलेन = सैन्येन, एव गच्छेत्, यानस्य औचित्यात् ॥ १७९ ॥

**हिन्दी**—सेना की छोटी टुकड़ी से अति क्षुद्र शत्रु को भी जीता नहीं जा सकता। अतः अत्यन्त प्रबल सेना के साथ ही यान-बल की सहायता से राजा को चढ़ाई करनी चाहिए ॥ १७९ ॥

नेति। अल्पसाधनः अल्पबलः सन् लघुमपि क्षुद्रमपि अरिं शत्रुं जेतुं न गच्छेत्। सुबुद्धियुक् सुप्राज्ञः नृपः महता बहुना अत्यन्तसाद्यस्कबलेन एव अत्यन्तेन प्रबलेन साद्यस्कबलेन पूर्वोक्तेन तु मौलेन तस्य प्रबलारिषु यानस्यौचित्यादिति भावः, बलेन सैन्येन एव गच्छेदित्यर्थः॥ १७९ ॥

**अशिक्षितमसारञ्च साद्यस्कं तूलवच्च तत्।**
**युद्धं विनान्यकार्य्येषु योजयेत् मतिमान् सदा॥ १८०॥**

**अन्वयः**—मतिमान् अशिक्षितम् असारञ्च साद्यस्कं तूलवत् तद्बलं युद्धं विना अन्यकार्येषु सदा योजयेत्॥ १८० ॥

**व्याख्या**—मतिमान् = बुद्धिमान् राजा, अशिक्षितम् = सैन्यशिक्षारहितम्, असारञ्च = निःसारञ्च, साद्यस्कम् = आधुनिकं सैन्यम्, तूलवत्—तूलेन = कार्पासेन, वत् = इव, अत्यन्त-लघुरिति, तत् = पूर्वोक्तं साद्यस्कम्, बलम् = सैन्यम्, युद्धम् = सङ्गरम्, विना = विहाय, अन्य-कार्येषु = अपरकृत्येषु, सदा = सर्वदा, योजयेत् = नियोजयेत्॥ १८० ॥

**हिन्दी**—बुद्धिमान् राजा अप्रशिक्षित, इसीलिए निस्सार रूई की तरह अतितुच्छ नवनियुक्त सैनिकों को युद्ध में भेजने की अपेक्षा किसी दूसरे काम में लगाये॥ १८० ॥

**अशिक्षितमिति**। मतिमान् बुद्धिमान् नृपः अशिक्षितम् असारं साद्यस्कम् आधुनिकं बलं तूलवत् तुलेन तुल्यम् अतिलघु इत्यर्थः। तत् बलं युद्धं विना अन्यकार्य्येषु सदा योजयेत्॥१८०॥

**विकर्त्तुं यततेऽल्पोऽपि प्राप्ते प्राणात्ययेऽनिशम्।**
**न पुनः किन्तु बलवान् विकारकरणक्षमः॥ १८१॥**

**अन्वयः**—प्राणात्यये प्राप्ते अल्पोऽपि विकर्तुम् अनिशं यतते किन्तु बलवान् विकारकरणक्षमः न पुनः॥ १८१ ॥

**व्याख्या**—प्राणात्यये = प्राणसंशये, प्राप्ते = समुपस्थिते सति, अल्पः = स्वल्पो जनः, विकर्त्तुम् = विपरीतमाचरितुम्, अपि = चेत्, अनिशम् = अहर्निशम्, यतते = प्रयत्नं कुरुते, किन्तु, बलवान् = शक्तिशाली जनः, विकारकरणक्षमः = विपरीताचरणे समर्थः, अपि, न पुनः = तथा कर्त्तुं न यतते॥१८१ ॥

**हिन्दी**-क्षुद्रबलसम्पन्न सेना प्राणसंकट उपस्थित होने पर विपरीत आचरण करने के लिए सदा तत्पर हो जाती है। किन्तु शक्तिशाली सेना कभी विपरीत आचरण नहीं करती है॥१८१ ॥

**विकर्त्तुमिति**। प्राणात्यये जीवनविनाशे प्राप्ते उपस्थिते सति अल्पः क्षुद्रः जनः विकर्त्तुं विपरीतमाचरितुम् अपि अनिशं सततं यतते, किन्तु बलवान् विकारकरणक्षमः विपरीताचरणक्षमः अपि न पुनः नैव विपरीतमाचरितुं यतते इत्यर्थः॥ १८१ ॥

**अपि बहुबलोऽशूरो न स्थातुं क्षमते रणे।**
**किमल्पसाधनाशूरः स्थातुं शक्तोऽरिणा समम्?॥ १८२॥**

**अन्वयः**—बहुबलोऽपि अशूरः रणे स्थातुं न क्षमते। अल्पसाधनः अशूरः अरिणा समं स्थातुं किं शक्तः॥ १८२ ॥

**व्याख्या**—बहुबलोऽपि = शक्तिसम्पन्नोऽपि, अशूरः = वीरत्वविहीनो जनः, रणे = युद्धे, स्थातुम् = योद्धुम्, न = नहि, क्षमते = समर्थो भवति। अल्पसाधनः = स्वल्पबलः, अथ च,

अशूरः = अपराक्रमी जनः, अरिणा = शत्रुणा, समम् = सह, स्थातुम् = योद्धुम्, किम्, शक्तः = समर्थः? न शक्तो भवतीति भावः ॥ १८२ ॥

**हिन्दी**—अधिक बलसम्पन्न रहने के बावजूद भी पराक्रमविहीन जन रणाङ्गण में नहीं टिक सकता है। तब अल्पशक्तिसम्पन्न पराक्रमहीन जन शत्रु के साथ युद्ध के मैदान में क्या टिक सकता है? अर्थात् कभी नहीं ॥ १८२ ॥

**अपीति**। बहुबलः अपि अशूरः अपराक्रमी जनः रणे स्थातुं न क्षमते न शक्नोति। अल्पसाधनः अल्पबलः अथ च अशूरः जनः अरिणा शत्रुणा समं सह स्थातुं किं शक्तः? न समर्थ इत्यर्थः ॥ १८२ ॥

**सुसिद्धाल्पबलः शूरो विजेतुं क्षमते रिपुम्।**
**महान् सुसिद्धबलयुक् शूरः किं न विजेष्यति? ॥ १८३ ॥**

**अन्वयः**—सुसिद्धाल्पबलः शूरः रिपुं विजेतुं क्षमते। महान् सुसिद्धबलयुक् शूरः किं न विजेष्यति? ॥ १८३ ॥

**व्याख्या**—सुसिद्धम् = सुष्ठुप्रशिक्षितम्, अल्पम् = अल्पसंख्यकम्, बलम् = सैन्यम्, यस्य तथोक्तस्य, शूरः = पराक्रमी जनः, रिपुम् = शत्रुम्, विजेतुम् = पराजितं कर्तुम्, क्षमते = शक्यते, महान् = अतिविक्रान्तः, सुसिद्धबलयुक् = सुष्ठुप्रशिक्षितसैन्ययुक्, शूरः = पराक्रमी, किम् = कथम्, न = नहि, विजेष्यति = विजयी भविष्यति, अपितु भविष्यत्येव ॥ १८३ ॥

**हिन्दी–जब सुप्रशिक्षित सेना की छोटी टुकड़ी की सहायता से वीर प्रुरुष शत्रुओं पर विजय प्राप्त कर सकता है तो विशाल प्रशिक्षित सेना लेकर वीर पुरुष क्या नहीं जीत सकता? ॥ १८३ ॥**

**सुसिद्धेति**। सुसिद्धं सुशिक्षितम् अल्पं बलं यस्य यथोक्तः शूरः विक्रान्तः जनः रिपुं विजेतुं क्षमते। महान् प्रबलः सुसिद्धबलयुक् सुशिक्षितबलशाली शूरः किं कथं न विजेष्यति? अपि तु जेष्यत्येवेत्यर्थः ॥ १८३ ॥

**मौलशिक्षितसारेण गच्छेद्राजा रणे रिपुम्।**
**प्राणात्ययेऽपि मौलं न स्वामिनं त्यक्तुमिच्छति ॥ १८४ ॥**

**अन्वयः**—राजा मौलशिक्षितसारेण रणे रिपुं गच्छेत्। मौलं प्राणात्ययेऽपि स्वामिनं त्यक्तुं न शक्यते ॥ १८४ ॥

**व्याख्या**—राजा = नृपः, मौलशिक्षितसारेण—मौलेन = मूलायातेन, शिक्षितसारेण = सुप्रशिक्षितेषु मध्ये सुस्थिरेण बलेन, रणे = समरभूमौ, रिपुम् = शत्रुम्, जेतुम् = विजेतुम्, गच्छेत् = व्रजेत्, यस्मात्, मौलम् = पुरातनम्, बलम् = सैन्यम्, प्राणात्ययेऽपि = जीवनसङ्कटेऽपि, स्वामिनम् = भूभृतम्, त्यक्तुम् = परिहर्तुम्, न = नहि, इच्छति = वाञ्छति ॥ १८४ ॥

**हिन्दी**—अपनी पुरानी प्रशिक्षित सेना के साथ शत्रुविजय के लए राजा को समरभूमि के लिए प्रस्थान करना चाहिए। क्योंकि प्रणसंकट के समय भी पुरानी प्रशिक्षित सेना राजा का साथ नहीं छोडना चाहती। १८४ ॥

**मौलेति** राजा मौलेन मूलायातेन शिक्षितसारेण शिक्षितेषु मध्ये सारेण स्थिरतरेण बलेन रणे रिपुं गच्छेत् शत्रुं प्रति यायात्। यस्मात् मौलं बलं प्राणात्ययेऽपि स्वामिनं त्यक्तुं न इच्छति ॥ १८४ ॥

**वाग्दण्डपरुषेणैव भृतिह्रासेन भीतितः।**
**नित्यं प्रवासायासाभ्यां भेदोऽवश्यं प्रजायते॥ १८५॥**

**अन्वयः**—वाग्दण्डपरुषेणैव भृतिह्रासेन भीतितः नित्यं प्रवासायासाभ्यां भेदः अवश्यं प्रजायते॥ १८५॥

**व्याख्या**—वाग्दण्डपरुषेणैव = कठोरवचनेन कठोरदण्डेन च एव, भृतिह्रासेन = न्यूनवेतन-करणेन, भीतितः = भयाक्रान्तकरणेन, नित्यम् = सततम्, प्रवासेन = विदेशस्थित्या, आयासेन = परिश्रमेण च, अवश्यम् = निश्चितमेव, भेदः = भङ्गः, सैन्येषु, प्रजायते = भवत्येवेति॥ १८५॥

**हिन्दी**—हमेशा कठोर वचन से, कठोर दण्ड से, वेतन की कटौती से, भयभीत करने से, निरन्तर परदेश में भेजते रहने से तथा कठोर मेहनत कराने से निश्चय ही सेना में फूट डाली जा सकती है॥ १८५॥

**वागिति**। वाग्दण्डपरुषेण वाक्पारुष्येण दण्डपारुष्येण चेत्यर्थः, भृतिह्रासेन वेतनलघूकरणेन भीतितः भयप्रदर्शनेन, नित्यं प्रवासायासाभ्यां विदेशस्थित्या परिश्रमेण चेत्यर्थः, अवश्यं भेदः भङ्गः बलानामिति शेषः प्रजायते॥ १८५॥

**बलं यस्य तु सम्भिन्नं मनागपि जयः कुतः?।**
**शत्रोः स्वस्यापि सेनाया अतो भेदं विचिन्तयेत्॥ १८६॥**

**अन्वयः**—यस्य बलं सम्भिन्नं मनागपि जयः कुतः? अतः शत्रोः स्वस्यापि सेनायाः भेदं विचिन्तयेत्॥ १८६॥

**व्याख्या**—यस्य = नृपस्य, बलम् = सैन्यम्, सम्भिन्नम् = भेदमुपगतम्, तस्य नृपस्य, मनागपि = स्तोकमपि, जयम् = विजयम्, कुतः = न कुतोऽपीत्यर्थः, अतः = अनेन कारणेन, शत्रोः = रिपोः, स्वस्यापि = आत्मनोऽपि, सेनायाः = बलस्य, भेदः = भङ्गः, विचिन्तयेत् = विविच्य कार्यं चिन्तयेत्॥ १८६॥

**हिन्दी**—जिसकी सेना में भेद हो, उसे थोड़ी भी विजय कहाँ? अतः अपनी तथा दुश्मन की सेना में भेद के सम्बन्ध में सदैव सतर्क होकर विचार करना चाहिए॥ १८६॥

**बलमिति**। यस्य बलं सम्भिन्नं सम्यक् भेदं प्राप्तं तस्य मनाक् अपि अल्पोऽपि जयः कुतः? न कुतोऽपि तस्य जयो भवतीत्यर्थः। अतः अस्मात् कारणात् शत्रोः स्वस्यापि आत्मनोऽपि सेनायाः भेदं विचिन्तयेत् यथा शत्रोर्बलभङ्गः स्यात् आत्मनो न तथा विविच्य व्यवहरे-दित्यर्थः॥ १८६॥

**यथा हि शत्रुसेनाया भेदोऽवश्यं भवेत्तथा।**
**कौटिल्येन प्रदानेन द्राक् कुर्य्यात् नृपतिः सदा॥ १८७॥**

**अन्वयः**—यथा शत्रुसेनायाः अवश्यं भेदो भवेत् तथा नृपतिः सदा कौटिल्येन प्रदानेन द्राक् शत्रुसैन्यं कुर्यात्॥ १८७॥

**व्याख्या**—यथा = येन रूपेण, शत्रुसेनायाः = रिपुबलस्य, अवश्यम् = निश्चितरूपेण, भेदम् = भङ्गम्, भवेत् = जायेत, तथा नृपतिः = राजा, सदा = सर्वदा, कौटिल्येन = कुटिलत्वेन, प्रदानेन = धनदानेन, द्राक् = त्वरितमेव, शत्रुसैन्यम् = रिपुबलम्, तथा कुर्यात् = विधेयात्॥१८७॥

**हिन्दी**—जैसे भी हो शत्रुसेना में फूट पैदा हो—इसके लिए कूटनीति से अथवा धनादि देकर शत्रुसेना में फूट डालने का राजा को शीघ्र प्रयास करना चाहिए ॥ १८७ ॥

**यथेति**। यथा येन प्रकारेण शत्रुसेनायाः अवश्यं भेदः भवेत् नृपतिः सदा कौटिल्येन कापट्येन प्रदानेन अर्थदानेन द्राक् झटिति शत्रुसैन्यं तथा कुर्य्यात् ॥ १८७ ॥

**सेवयात्यन्तप्रबलं नत्या चारिं प्रसाधयेत्।**
**प्रबलं मानदानाभ्यां युद्धैर्हीनबलं तथा।**
**मैत्र्या जयेत् समबलं भेदैः सर्वान् वशं नयेत्॥ १८८ ॥**

**अन्वयः**—अत्यन्तप्रबलम् अरिं सेवया नत्या च प्रबलम् अरिं मानदानाभ्यां तथा हीनबलम् अरिं युद्धैः प्रसाधयेत्; किञ्च समबलम् अरिं भेदैः सर्वान् वशं नयेत् ॥ १८८ ॥

**व्याख्या**—अत्यन्तप्रबलम् = अतिबलवन्तम्, अरिम् = शत्रुम्, सेवया = सुश्रूषया, नत्या = प्रणत्या, च = पुनः, प्रबलम् = प्रकर्षबलसम्पन्नम्, अरिम् = शत्रुम्, मानदानाभ्याम् = सम्मानधनदानाभ्याम्, तथा = तेनैव प्रकारेण, हीनबलम् = अल्पबलयुक्तम्, अरिम् = शत्रुम्, युद्धैः = समरैः, प्रसाधयेत् = वशं नयेत्, किञ्च समबलम् = समानशक्तिशालिनम्, अरिम् = रिपुम्, भेदैः = मनोभङ्गकरणैः, सर्वान् = सकलान्, वशम् = वशवर्त्तिनम्, नयेत् = कुर्यात् ॥ १८८ ॥

**हिन्दी**—अपने से अत्यधिक बलवान् शत्रु को परिचर्या और विनम्रता प्रदर्शित कर, साधारण बलवान् शत्रु को कुछ देकर तथा उनके प्रति सम्मान प्रकट कर, हीनबल वाले शत्रु को युद्ध में पराजित कर और समान बलशाली शत्रु को दोस्ती का हाथ बढ़ाकर तथा फूट डाल कर हर तरह से अनुकूल बनाना चाहिए ॥ १८८ ॥

**सेवयेति**। अत्यन्तप्रबलम् अरिं सेवया नत्या च, प्रबलम् अरिं मानदानाभ्यां तथा हीनबलं दुर्बलम् अरिं युद्धैः प्रसाधयेत् वशीकुर्य्यात्। किञ्च मैत्र्या सौजन्येन समबलम् अरिं भेदैः मनोभङ्गकरणैः सर्वान् वशं नयेत् वशीकुर्य्यात् ॥ १८८ ॥

**शत्रुसंसाधनोपायो नान्यः सुबलभेदतः।**
**तावत् परो नीतिमान् स्याद्यावत् सुबलवान् स्वयम्।**
**मित्रं तावच्च भवति पुष्टाग्नेः पवनो यथा॥ १८९ ॥**

**अन्वयः**—सुबलभेदतः अन्यः शत्रुसंसाधनोपायः न यावत् स्वयं सुबलवान् तावत् परः नीतिवान् स्यात्, पुष्टाग्नेः पवनः यथा तावत् मित्रं भवति ॥ १८९ ॥

**व्याख्या**—सुबलानाम् = प्रशिक्षितसैन्यबलानाम्, भेदतः = मनोभङ्गात्, अन्यः = अपरः, शत्रूणाम् = अरीणाम्, संसाधने = वशीकरणे, उपायः = शत्रुविजययुक्तिः, न = नास्ति, यावत् = यावत्कालपर्यन्तम्, स्वयम् = आत्मना, सुबलवान् = प्रशिक्षितसैन्यसम्पन्नः, भवेत् = स्यात्, तावत् = तावत्कालपर्यन्तमेव, परः = रिपुः, नीतिमान् = नीतिसम्पन्नः, स्यात् = भवेत्, किञ्च पुष्टाग्नेः— पुष्टस्य = प्रज्ज्वलितस्य, अग्नेः = वह्नेः, पवनः = वायुः, इव = यथा, मित्रम् = सहायकम्, भवति ॥१८९ ॥

**हिन्दी**—प्रशिक्षित सेना में फूट डालने के सिवा उन्हें जीतने का अन्य कोई साधन नहीं है। जब तक प्रशिक्षित सेना से राजा बलवान् रहता है तब तक वह नीतिमान् बना रहता है

और तभी तक उसके सभी मित्र बने रहते हैं; ठीक उसी तरह जैसे प्रज्ज्वलित आग के लिए पवन मित्र का काम करता है ॥ १८९ ॥

**शत्रुसंसाधनोपाय इति**। सुबलानां सुशिक्षितसैन्यानां भेदतः भेदात् अन्यः शत्रूणां संसाधने वशीकरणे उपायः न अस्तीति शेषः। यावत् स्वयं सुबलवान् सुशिक्षितबलसम्पन्नः भवेत् तावत् परः शत्रुः नीतिमान् स्यात्। किञ्च पुष्टाग्नेः पुष्टस्य वृद्धिं गतस्य अग्नेः पवनः यथा पवन इव तावत् मित्रं भवति ॥ १८९ ॥

**त्यक्तं रिपुबलं धार्य्यं न समूहसमीपतः।**
**पृथक् नियोजयेत् प्राग्वा युद्धार्थं कल्पयेच्च तत्।**
**मैत्र्यमारात् पृष्ठभागे पार्श्वयोर्वा बलं न्यसेत् ॥ १९० ॥**

**अन्वयः**—त्यक्तं रिपुबलं समूहसमीपतः न धार्यम्, तत् प्राक् रिपुबलं पृथक् नियोजयेत् युद्धार्थं कल्पयेच्च। किञ्च मैत्र्यम् आरात् पृष्ठभागे पार्श्वयोः वा बलं न्यसेत् ॥ १९० ॥

**व्याख्या**—त्यक्तम् = रिपुणा विसृष्टम्, रिपुबलम् = शत्रुसैन्यम्, समूहसमीपतः = निजसैन्यसमक्षम्, न = नहि, धार्य्यम् = ग्राह्यम्, तच्च = रिपुबलम्, प्राक् = एकान्ते, स्थापनीयमिति शेषः, रिपुबलम् = शत्रुसैन्यम्, पृथक् = भिन्नम्, नियोजयेत् = नियुक्तं कुर्यात्, युद्धार्थम् = समरनिमित्ताय, कल्पयेत् = भावयेत्, किञ्च मैत्र्यम् = सौहार्द्रम्, आरात् = समीपे, निजसम्मुखे इत्यर्थः, पृष्ठभागे = पश्चाद्देशे, पार्श्वयोः = पार्श्वपक्षभागयोः, बलम् = शत्रुसैन्यम्, न्यसेत् = स्थापयेत् ॥ १९० ॥

**हिन्दी**—फोड़ ली गई शत्रुसेना को अपनी सैनिक-छावनी में रहने की जगह न दे, किन्तु युद्ध के समय उस टुकड़ी को अपनी सेना के अग्रभाग में लड़ने के लिए नियुक्त करे। जो सेना मित्रभावसम्पन्न हो, उसे समराङ्गण में अपनी सेना के समीप पीछे या बगल में लड़ने के लिए रखनी चाहिए ॥ १९० ॥

**त्यक्तमिति**। त्यक्तं शत्रुणेति शेषः, रिपोः शत्रोः बलं समूहसमीपतः साधारणसमक्षं न धार्य्यं न ग्रहणीयम्। तच्च प्राक् एकान्ते गृहीतमिति शेषः, रिपुबलं पृथक् नियोजयेत् युद्धार्थं कल्पयेच्च किञ्च मित्रम् आरात् समीपे आत्मसम्मुखे इत्यर्थः, पृष्ठभागे पार्श्वयोर्वा बलम् अपरसैन्यं न्यसेत् ॥१९० ॥

**अस्यते क्षिप्यते यत्तु मन्त्रयन्त्राग्निभिश्च तत्।**
**अस्त्रं तदन्यतः शस्त्रमसिकुन्तादिकञ्च यत् ॥ १९१ ॥**

**अन्वयः**—यत्तु मन्त्रयन्त्राग्निभिः वा अस्यते क्षिप्यते तत् अस्त्रम्, तदन्यतः यत् असिकुन्तादिकं तत् शस्त्रम् ॥ १९२ ॥

**व्याख्या**—यत्तु = आयुधम्, मत्रयन्त्राग्निभिः—मन्त्रेण = गोप्येन, यन्त्रेण = आयुधाद्यधिष्ठानेन, अग्निना = वह्निना, वा, अस्यते = निःसार्यते, वा = अथवा, क्षिप्यते = प्रक्षिप्यते, तत् = बाणकुन्तादिकं, क्षेपणायुधम् अस्त्रम् इत्याख्यम्, तदन्यतः = तद्भिन्नम्, यत् अस्यादिकम्, तत् = आयुधम्, शस्त्रम् = शस्त्राख्यमिति ॥ १९१ ॥

**हिन्दी**—मंत्र, यंत्र या आग के द्वारा जो हथियार फेंककर चलाया जाय उसे अस्त्र तथा इससे भिन्न जिन्हें हाथ में रखकर प्रहार किया जाय उसे शस्त्र कहते हैं ॥ १९१ ॥

**अस्यते इति**। यत्तु मन्त्रयन्त्राग्निभिः मन्त्रेण यन्त्रेण अग्निना वा अस्यते निःसार्य्यते वा क्षिप्यते तत् अस्त्रं तदन्यतः तद्भिन्नं यत् असिकुन्तादिकं तत् शस्त्रम् ॥ १९१ ॥

**अस्त्रन्तु द्विविधं ज्ञेयं नालिकं मान्त्रिकं तथा ॥ १९२ ॥**

**अन्वयः**—अस्त्रं द्विविधं ज्ञेयम्—नालिकं तथा मान्त्रिकम् ॥ १९२ ॥

**व्याख्या**—अस्त्रम् = क्षेपणायुधम्, द्विविधम् = द्विप्रकारकम्, ज्ञेयम् = बोध्यम्, नालिकम् = गुलिकास्त्रम्, मान्त्रिकम् = मन्त्रसञ्चालितास्त्रञ्च ॥ १९२ ॥

**हिन्दी**—अस्त्र दो तरह के होते हैं—एक तोप या बन्दूक, दूसरा मंत्रसंचालित आयुध ॥ १९२ ॥

**अस्त्रमिति**। अस्त्रं द्विविधं ज्ञेयं नालिकं तथा मान्त्रिकम् ॥ १९२ ॥

**यदा तु मान्त्रिकं नास्ति नालिकं तत्र धारयेत्।**
**सह शस्त्रेण नृपतिर्विजयार्थन्तु सर्वदा ॥ १९३ ॥**

**अन्वयः**—यदा तु मान्त्रिकं नास्ति तत्र नृपतिः सर्वदा विजयार्थं शस्त्रेण सह नालिकं धारयेत् ॥ १९३ ॥

**व्याख्या**—यदा = यस्मिन् काले, मान्त्रिकं = मन्त्रप्रयोज्यम्, आयुधम्, नास्ति = न विद्यते, तत्र = तदा, नृपतिः = राजा, विजयार्थम् = विजयाय, सर्वदा = सततम्, शस्त्रेण = प्रहरणेन सह, नालिकम् = आग्नेयास्त्रम्, धारयेत् = धारणं कुर्यात् ॥ १९३ ॥

**हिन्दी**—राजा सर्वदा विजयप्राप्ति के लिए मंत्रसंप्रेषित हथियार के अभाव में आग्नेयास्त्र अवश्य धारण करे ॥ १९३ ॥

**यदेति**। यदा तु मान्त्रिकं मन्त्रप्रयोज्यं न अस्ति, तत्र तदा नृपतिः विजयार्थं सर्वदा शस्त्रेण सह नालिकं धारयेत् ॥ १९३ ॥

**लघुदीर्घाकारधाराभेदैः शस्त्रास्त्रनामकम्।**
**प्रथयन्ति नवं भिन्नं व्यवहाराय तद्विदः ॥ १९४ ॥**

**अन्वयः**— तद्विदव्यवहाराय लघुदीर्घाकारधाराभेदैः शस्त्रास्त्रनामकं नवं भिन्नं प्रथयन्ति ॥ १९४ ॥

**व्याख्या**—तद्विदः = शस्त्रज्ञाः, व्यवहाराय = प्रयोगार्थम्, लघुदीर्घाकारधाराभेदैः—लघवः = अल्पाः, दीर्घाः = विशालाः, महान्तः = विशिष्टाः, ये आकाराः = स्वरूपाः, तेषां धाराभेदाः = प्रयोगरीतिविशेषाः, तैः, शस्त्रास्त्रनामकम्—शस्त्राणाम् = प्रहरणानाम्, अस्त्राणाम् = आयुधानाम्, नामानि, नवम् = नूतनम्, भिन्नम् = विशेषितम्, यथा स्यात् तथा, प्रथयन्ति = कथयन्ति ॥ १९४ ॥

**हिन्दी**—हथियारों के जानकार लोगों व्यवहार के लिए छोटे-बड़े आकारों के धारा अर्थात् प्रयोग करने की रीति विशेष के भेद से शस्त्रास्त्र के नामों में नये-नये भेद बतलाये हैं ॥ १९४ ॥

**लघ्विति**। तद्विदः शस्त्रज्ञाः जनाः व्यवहाराय लघुदीर्घाकारधाराभेदैः लघवः क्षुद्राः दीर्घाः महान्तः ये आकाराः अवयवाः तेषां धाराभेदाः प्रयोगरीतिविशेषाः तैः शस्त्रास्त्रनामकं शस्त्राणाम् अस्त्राणाञ्च नामानीत्यर्थः, नवं नूतनं भिन्नं विशेषितं यथा तथा प्रथयन्ति प्रकाशयन्ति ॥ १९४ ॥

**नालिकं द्विविधं ज्ञेयं बृहत्क्षुद्रविभेदतः ॥ १९५ ॥**

**अन्वयः**—नालिकं बृहत्क्षुद्रविभेदतः द्विविधं ज्ञेयम् ॥ १९५ ॥

व्याख्या—नालिकम् = आग्नेयास्त्रम्, बृहत्क्षुद्रविभेदतः = गुरुलघुभेदात्, द्विविधम् = प्रकारद्वयम्, ज्ञेयम् = बोध्यम् ॥ १९५ ॥

**हिन्दी**—आग्नेयास्त्र तोप और बन्दूक के भेद से दो प्रकार का होता है ॥ १९५ ॥

**नालिकमिति**। नालिकम् अस्त्रं बृहत्क्षुद्रविभेदतः गुरुलघुभेदादित्यर्थः, द्विविधं ज्ञेयं बृहन्नालिकं क्षुद्रनालिकञ्चेत्यर्थः ॥ १९५ ॥

**तिर्य्यगूर्द्ध्वच्छिद्रमूलं नालं पञ्चवितस्तिकम्।**
**मूलाग्रयोर्लक्ष्यभेदितिलविन्दुयुतं सदा ॥ १९६ ॥**
**यन्त्राघाताग्निकृद् ग्रावचूर्णधृक्कर्णमूलकम्।**
**सुकाष्ठोपाङ्गबुध्नञ्च मध्याङ्गुलविलान्तरम् ॥ १९७ ॥**
**स्वान्तेऽग्निचूर्णसन्धातृ शलाकासंयुतं दृढम्।**
**लघुनालिकमप्येतत् प्रधार्य्यं पत्तिसादिभिः ॥ १९८ ॥**

**अन्वयः**—तिर्यगूर्ध्वछिद्रमूलं पञ्चवितस्तिकं मूलाग्रयोर्लक्ष्यभेदि सदा तिलविन्दुयुतं यन्त्राघाताग्निकृत् ग्रावचूर्णधृक् कर्णमूलकं सुकाष्ठोपाङ्गबुध्नञ्च मध्याङ्गुलविलान्तरं स्वान्तेऽग्निचूर्णसन्धातृ शलाकासंयुतं दृढम् एतत् लघुनालिकमपि पत्तिसादिभिः प्रधार्यम् ॥१९६-१९८ ॥

**व्याख्या**—तिर्यक् = वक्रम्, ऊर्ध्वम् = उपरिष्टात्, छिद्रम् = विवरम्, मूले = शिफे, यस्य तत्, पञ्चवितस्तिकम् = सार्द्धद्वयहस्तमितम्, मूलाग्रयोः—मूले = ब्रध्ने, अग्रे = अग्रभागे च, लक्ष्यभेदि = वेध्यभेदकम्, यत् तिलविन्दु = तिललवः, तेन युतम् = समन्वितम्, यन्त्रस्य = यन्त्रकारस्य, आघातेन = प्रहारेण, अग्निकृत् = वह्न्युद्दीपकम्, यत् ग्रावस्य = प्रस्तरखण्डस्य, चूर्णम् = क्षोदः, तस्य धृक् = धारकः, कर्णमूलम् = मूलस्य कर्णभागे स्थितम्, यस्य तादृशम्, सुकाष्ठस्य = सुष्ठुदारुणः, उपाङ्गे = अङ्गसमीपे, बुध्नम् = मूलम्, यस्य तत्, मध्यम् = मध्यमम्, अङ्गुलविलम् = अङ्गुलिमितविस्तृतछिद्रम्, अन्तरे = मध्ये, यस्य तत्, स्वान्ते—स्वस्य = आत्मनः, अन्ते = अभ्यन्तरे, अग्निचूर्ण-सन्धातृ—अग्निचूर्णम् = स्फोटकचूर्णम्, तस्य सन्धातृ = सम्यग्रूपेण धारकम्, शलाकया = धातु- निर्मितयष्टिकया, संयुतम् = समन्वितम्, दृढम् = सुस्थिरम्, नालम् = गुलिकास्त्रम्, एतत् = पूर्वोक्तम् आग्नेयास्त्रम्, लघुनालिकमपि = गुलिकास्त्रमपि, पत्तिभिः = पदातिभिः, सादिभिश्च = अश्वारोहिभिश्च, प्रधार्यम् = सन्धार्यमिति ॥ १९६-१९८ ॥

**हिन्दी**—लकड़ी के कुन्दे में लगी लोहे की लम्बी नली ऐसी हो जिसकी जड़ में तिरछा ऊपर की ओर तक छेद हो और वह ढाई हाथ लम्बी हो तथा इसके मूल एवं अग्रभाग में लक्ष्य बेंधने में सहायक के रूप में एकतिल विन्दु अर्थात् मक्खी लगी हो। इस आयुध से आबाद होने पर आग पैदा करने वाला बारुद मूल के किसी भाग में भरा हो। हाथ से पकड़ने वाला मूल भाग सुन्दर काठ का बना हो। बाल का छेद एक अंगुल चौड़ा हो, इसमें बारुद भरी जाती हों। इसके साथ बारुद भरने की मजबूत एक शलाका लगी हो। इस यंत्र को बन्दूक कहते हैं। पैदल एवं घड़सवारों को इन्हें साथ रखना चाहिए ॥ १९६-१९८ ॥

**तिर्य्यगित्यादि**। तिर्य्यक् वक्रम् ऊद्‌र्ध्व छिद्रं मूले यस्य तत्, पञ्चवितस्तिकं सार्द्धद्विहस्तं मूलाग्रयोः मूले अग्रे च लक्ष्यभेदि लक्ष्यभेदकं यत् तिलविन्दु तेन युतं, यन्त्रस्य आघातेन अग्निकृत्

अग्न्युद्दीपकं यत् ग्रावचूर्णं प्रस्तरचूर्णं तस्य धृक् धारकः कर्णमूलं यस्य तादृशं सुकाष्ठस्य उपाङ्गे अङ्गसमीपे अवयवप्रान्ते इत्यर्थः, बुध्नं मूलं यस्य तत्, मध्यम् अङ्गुलबिलम् अन्तरे यस्य तत् स्वान्ते स्वस्य अन्ते अग्निचूर्णसन्धातृ अग्निचूर्णं (बारुद इति प्रसिद्धः) तस्य सन्धातृ धारकं शलाकया संयुतं दृढं कठिनं नालं (बन्दुक) इति प्रसिद्धम् । एतत् लघुनालिकमपि पत्तिभिः पादातैः सादिभिश्च सन्धार्य्यम् ॥ १९६-१९८ ॥

**यथा यथा तु त्वक्सारं यथा स्थूलबिलान्तरम् ।**
**यथा दीर्घं बृहद्गोलं दूरभेदि तथा तथा ॥ १९९ ॥**

**अन्वयः**—त्वक्सारं यथा यथा तु यथा स्थूलबिलान्तरं यथा दीर्घं बृहद्गोलं तथा तथा दूरभेदि ॥ १९९ ॥

**व्याख्या**—त्वक्सारम् = फलकपत्रम्, यथा यथा = येन येन रूपेण, यथा च स्थूलम् = बृहत्, बिलम् = छिद्रम्, अन्तरे = अभ्यन्तरे, यस्य तथोक्तम्, यथा वा दीर्घम् = विशालम्, गोलञ्च = गौलाकारपिण्डञ्च, तथा तथा = तेनैव रूपेण, दूरभदि = दूरस्थलक्ष्यभेदनं करोति ॥ १९९ ॥

**हिन्दी**—चदरा की मोटाई के अनुसार नाल की लम्बाई तथा छेद का आकार बड़ा होगा। इसी तरह गोले का आकार जितना बड़ा होगा तोप की मार उतनी दूर तक होगी ॥ १९९ ॥

**यथेति**। त्वक्सारं वंशः यथा यथा, यथा च स्थूलं बृहत् बिलं रन्ध्रम् अन्तरे यस्य तथोक्तं, यथा वा दीर्घं बृहत् गोलञ्च, तथा तथा दूरभेदि दूरस्थलक्ष्यभेदकं भवति ॥ १९९ ॥

**मूलकीलभ्रमाल्लक्ष्यसमसन्धानभाजि यत् ।**
**बृहन्नालिकसंज्ञं तत् काष्ठबुध्नविनिर्मितम् ।**
**प्रवाह्यं शकटाद्यैस्तु सुयुक्तं विजयप्रदम् ॥ २०० ॥**

**अन्वयः**—यत् मूलकीलभ्रमात् लक्ष्यसमसन्धानभाजि काष्ठबुध्नविनिर्मितं तत् बृहन्नालिकसंज्ञं शकटाद्यैः प्रवाह्यं सुयुक्तं विजयप्रदम् ॥ २०० ॥

**व्याख्या**—यत् = पूर्वोक्तरूपं त्वक्सारम्, मूले = ब्रध्ने, कीलः = शङ्कुः, भ्रमात् = घूर्णनात्, लक्ष्यस्य = वेध्यस्य, समम् = अनुरूपम्, यत् सन्धानम् = अभिषवः, तत् भजते इति, तथाभूतः काष्ठस्य दारुणः, यत् बुध्नम् = मूलम्, तेन विनिर्मितम् = रचितम्, तत् बृहन्नालिकसंज्ञम् = बृहन्नालिकनाम, शकटाद्यैः = यानाद्यैः, प्रवाह्यम् = प्रवहनीयम्, सुयुक्तम् = सुष्ठुतया प्रयुक्तम्, विजयप्रदम् = युद्धजयाय भवति ॥ २०० ॥

**हिन्दी**—और जिसके मूल भाग में लगी हुई कील को घुमाने से वह लक्ष्य के अनुरूप गोले को फेंकने वाली होती है, उसका मूलभाग काठ का बना होता है। वह गाड़ी से ढोया जा सकता है। यदि उसका उचित रूप से प्रयोग किया जाय तो युद्ध में विजय निश्चित रूप से होती है ॥२०० ॥

**मूलेति**। यत् पूर्वोक्तरूपं त्वक्सारं मूले यः कीलः शङ्कुः तस्य भ्रमात् भ्रमणात् लक्ष्यस्य समं योग्यम् अनुरूपमित्यर्थः, यत् सन्धानं तत् भजते इति तथाभूतं काष्ठस्य यत् बुध्नं मूलं ग्रन्थिरित्यर्थः तेन विनिर्मितं तत् बृहन्नालिकसंज्ञं बृहन्नालिकं नाम (कामान्) इति भाषा। शकटाद्यैः प्रवाह्यं प्रवहनीयं बहुभारवत्त्वात् न मनुष्येण नापि हस्तिप्रभृतिभिः पशुभिरिति भावः, सुयुक्तं सुप्रयुक्तिमित्यर्थः, विजयप्रदं जयसाधनं भवति ॥ २०० ॥

सुवर्चिलवणात् पञ्च पलानि गन्धकात् पलम्।
अन्तर्धूमविपक्वार्कस्नुह्याद्यङ्गारतः पलम्॥ २०१॥
शुद्धात् सङ्ग्राह्य सञ्चूर्ण्य सम्मील्य प्रपुटेद्रसैः।
स्नुह्यर्काणां रसोनस्य शोषयेदातपेन च।
पिष्ट्वा शर्करवच्चैतदग्निचूर्णं भवेत् खलु॥ २०२॥

**अन्वयः**—सुवर्चिलवणात् पञ्चपलानि गन्धकात् पलम् अन्तर्धूमविपक्वार्कस्नुह्याद्यङ्गारतः शुद्धात् पलं संग्राह्य सञ्चूर्ण्य तथा सम्मील्य स्नुह्यर्काणां रसैः प्रपुटेत्। ततश्च रसोनस्य आतपेन शोषयेत्। अनन्तरं शर्करवच्चैतदग्निचूर्णं खलु भवेत्॥ २०१-२०२॥

**व्याख्या**—सुवर्चिलवणात् = विक्षारलवणात्, पञ्चपलानि = विंशतोलकानि, गन्धकात् = गन्धाश्मनः, पलम् = चतुस्तोलकानि, तथा अन्तर्धूमः = सधूमः, अग्निः = वह्निः, तेन विपक्वाः = दग्धाः, ये अर्काः = मन्दाराः, स्नुह्यादयः = सिजवृक्षादयश्च, तेषाम् अङ्गारात् = दग्धकाष्ठात्, शुद्धात् = अविमिश्रात्, पलम् = चतुस्तोलकमितम्, संग्राह्य = सम्यग्रूपेण नीत्वा, सञ्चूर्ण्य = सम्यक् प्रकारेण चूर्णं कृत्वा, तथा सम्मील्य = सम्यक्प्रकारेण मिश्रणं कृत्वा, स्नूहीनाम् = अर्कादीनाम्, रसैः = द्रवैः, प्रपुटेत् = पुटपाकं कुर्यात्, ततश्च, रसोनस्य = उग्रगन्धस्य, पाकेन = पाचनेन, आतपेन = तापनेन, शोषयेत् = शुष्कं कुर्यात्, अनन्तरम्, शर्करवत् = बालुकेव, एतत् = पूर्वोक्तं सकलम्, पिष्ट्वा = चूर्णीकृत्वा, यत् लब्धम्, तत् खलु अग्निचूर्णम् = स्फोटकचूर्णम्, भवेत् = स्यात्॥ २०१-२०२॥

**हिन्दी**—सोड़ा बीस तोला, गन्धक चार तोला, आक तथा थूहर आदि के धुआँ के साथ जले हुए कोयले शुद्ध चार तोला लेकर सबों को मिलाकर बारीक बुकनी बना ले। फिर आक, थूहर तथा लहसुन के रस में पका ले। फिर धूप में सुखाकर चूर्ण बना ले। बालू की तरह बुकनी बारुद कहलाती है॥ २०१-२०२॥

अग्निचूर्णं निरूपयति- **सुवर्चिलवणादिति**। सुवर्चिलवणात् (सोरा) इति प्रसिद्धात् पञ्च पलानि कषचतुष्टयपरिमाणानि, गन्धकात् पलं कर्षचतुष्टयमितं गन्धकमित्यर्थः, तथा अन्तर्धूमः सधूमः अग्निः तेन विपक्वा दग्धाः ये अर्काः आकन्देति प्रसिद्धा वृक्षाः स्नुह्यादयः सिजवृक्षादयश्च तेषाम् अङ्गारात् शुद्धात् अविमिश्रादित्यर्थः, पलं सङ्ग्राह्य सम्यक् गृहीत्वा सञ्चूर्ण्य तथा सम्मील्य मिश्रयित्वा स्नूहीनाम् अर्काणाञ्च रसैः प्रपुटेत पचेत्। ततश्च रसोनस्य पाकेन क्षीणरसस्य कर्म्मणि षष्ठी आतपेन शोषयेत्। अनन्तरं शर्करवत् एतत् पिष्ट्वा चूर्णयित्वा यत् लब्धमिति शेषः, तत् खलु अग्निचूर्णं भवेत्॥ २०१-२०२॥

सुवर्चिलवणाद्भागाः षड्वा चत्वार एव वा।
नालास्त्रार्थाग्निचूर्णे तु गन्धाङ्गारौ तु पूर्ववत्॥ २०३॥

**अन्वयः**—सुवर्चिलवणात् षड् वा चत्वारः एव भागाः गन्धाङ्गारौ पूर्ववत् नालास्त्रार्थाग्निचूर्णे तु॥ २०३॥

**व्याख्या**—सुवर्चिलवणात् = विक्षारात्, षट्पलानि = चतुर्विंशतितोलकानि, वा = अथवा, चत्वारः = षोडशतोलकानि, एव भागाः = अंशाः, नियोक्तव्याः, गन्धाङ्गारौ = गन्धाश्मनः,

दग्धकाष्ठखण्डानि च, पूर्ववत् = यथा पूर्वपलमिति, नालास्त्रार्थाग्निचूर्णे—नालास्त्राणाम् = गुलिकास्त्राणाम्, अर्थे = निमित्ते, यत् अग्निचूर्णम् = स्फोटकचूर्णं नियोक्तव्यम् ॥ २०३ ॥

**हिन्दी**—अथवा बन्दूक के लिए जो बारुद बनाई जाती हैं उसमें सोड़ा चौबीस तोला अथवा सोलह तोला दिया जा सकता है। शेष गन्धक या अंगार की मात्रा पहले जैसे ही हो सकती है ॥ २०२ ॥

**सुवर्चीति**। नालास्त्राणामर्थे निमित्ते यत् अग्निचूर्णं तस्मिन् सुवर्चिलवणात् षट् वा चत्वार एव वा भागाः नियोक्तव्या इत्यर्थः, गन्धाङ्गारौ गन्धकानि अङ्गाराश्च इत्यर्थः, पूर्ववत् पलपरिमितावित्यर्थः ॥ २०३ ॥

**गोलो लोहमयो गर्भघुटिकः केवलोऽपि वा।**
**सीसस्य लघुनालार्थे ह्यन्यधातुभवोऽपि वा ॥ २०४ ॥**

**अन्वयः**—लघुनालार्थे केवलोऽपि लोहमयः गोलः गर्भघुटिकः वा सीसस्य वा अन्यधातुमयः ॥ २०४ ॥

**व्याख्या**—लघुनालार्थे = गुलिकास्त्रनिमित्ते, केवलोऽपि = अमिश्रितोऽपि, लोहमयः = लोहनिर्मितम्, गोलः = गुटिका, गर्भघुटिकः = अन्तर्भागस्थितगुटिका, वा = अथवा, सीसस्य = काचस्य, गुटिका, वा = अथवा, अन्यधातुमयः = अन्यधातुनिर्मितगुटिका गाह्यः ॥ २०४ ॥

**हिन्दी**—तोप का गोला लोहे का या उसके भीतर छाटी-छोटी गोलियाँ भरी रहती हैं, दोनों तरह के होते हैं और बन्दूक के लिए सीसे की या अन्य धातु की बनी हुई बडी गोलियाँ या छर्रे होते हैं ॥ २०४ ॥

**गोल इति**। लघुनालार्थे क्षुद्रनालास्त्रनिमित्तं केवलः अविमिश्र इत्यर्थः, लोहमयः गोलः गर्भघुटिकः अथवा सीसस्य गर्भघुटिकः अपि वा अन्यधातुमयः गर्भघुटिकः ग्राह्य इति शेषः ॥ २०४ ॥

**लोहसारमयं वापि नालास्त्रं त्वन्यधातुजम्।**
**नित्यसम्मार्जनस्वच्छमस्त्रपातिभिरावृतम् ॥ २०५ ॥**

**अन्वयः**—नालास्त्रं लोहसारमयं वा अन्यधातुजं नित्यसम्मार्जनस्वच्छमस्त्रपातिभिः आवृतम् ॥ २०५ ॥

**व्याख्या**—नालास्त्रम् = आग्नेयास्त्रम्, लोहसारमयम् = लोहपिण्डनिर्मितम्, वा = अथवा, अन्यधातुजम् = अन्यखनिजनिर्मितम्, चेत्, नित्यसम्मार्जनेन = सततपरिष्करणेन, स्वच्छम् = निर्मलम्, तथा अस्त्रपातिभिः = आयुधधारकैः शूरैः, आवृतम् = परिवृतं विधेयम् ॥ २०५ ॥

**हिन्दी**—तोप या बन्दूक फौलाद या अन्य धातु के बनाये जाते हैं। उन्हें नित्य झाड़-पोंछ कर स्वच्छ बनाये रखना चाहिए। इसके आस-पास इसे चलाने वाले रहते हैं।

**लोहसारमयमिति**। नालास्त्रं लोहसारमयं वा अन्यधातुजं चेत् नित्यसम्मार्जनेन सततपरिष्करणेन स्वच्छं तथा अस्त्रपातिभिः अस्त्रक्षेपिभिः वीरैः आवृतं कार्य्यमिति शेषः ॥ २०५ ॥

**अङ्गारस्यैव गन्धस्य सुवर्चिलवणस्य च।**
**शिलाया हरितालस्य तथा सीसमलस्य च ॥ २०६ ॥**
**हिङ्गुलस्य तथा कान्तरजसः कर्पूरस्य च।**
**जतोर्नील्याश्च सरलनिर्य्यासस्य तथैव च ॥ २०७ ॥**

समन्यूनाधिकैरंशैरग्निचूर्णान्यनेकशः ।
कल्पयन्ति च तद्विद्याश्चन्द्रिकाभादिमन्ति च ॥ २०८ ॥

**अन्वयः**—अङ्गारस्य गन्धस्य च सुवर्चिलवणस्य शिलायाः हरितालस्य तथा सीसमलस्य हिङ्गुलस्य कान्तरजसः च कर्पूरस्य जतोः नील्याश्च सरलनिर्यासस्य समन्यूनाधिकैः अंशैः अनेकशः, चन्द्रिकाभादिमन्ति अग्निचूर्णानि तद्विद्याः जनाः कल्पयन्ति ॥ २०६-२०७ ॥

**व्याख्या**—अङ्गारस्य = दग्धकाष्ठस्य, गन्धस्य = गन्धाश्मनः, सुवर्चिलवणस्य = विक्षारस्य, शिलायाः = नैपाल्यः, हरितालस्य = चित्रगन्धस्य, सीसमलस्य = सीसकिट्टकस्य, हिङ्गुलस्य = बाह्लीकस्य, कान्तरजसः = कान्तिसारलौहस्य, कर्पूरस्य = सिताङ्गस्य, जतोः = लाक्षायाः, नील्याः = सालरसस्य, तथा सरलनिर्यासस्य = सर्जरसस्य, समैः = समभागैः, न्यूनैः = अल्पैः, अधिकैः = विशेषैश्च यथोक्तैः, अंशैः, अनेकशः = नानाविधानि, अग्निचूर्णानि = स्फोटकचूर्णानि, तत् = तस्य, विद्याः = विशेषज्ञाः, जनाः = लोकाः, कल्पयन्ति = भावयन्ति ॥ २०६-२०७ ॥

**हिन्दी**—कोयला, गन्धक, सोड़ा, मैनसिल, हरताल, सीसे का जमा हुआ मैल, हींग, बढिया लोहा, कपूर, लाख, राल तथा देवदारु का गोंद—इन सबों के समान, कम या ज्यादा भाग मिलाकर बनाने से अनेक तरह की बारुद उसके जानकार लोग बनाते हैं। इसे जलाने पर चाँदनी की तरह स्वच्छ प्रकाश निकलता है ॥ २०६-२०८ ॥

पुनश्च अग्निचूर्णानि निरूपयति—अङ्गारस्येत्यादि। अङ्गारस्य, गन्धस्य गन्धकस्य, सुवर्चिलवणस्य, शिलायाः प्रस्तरस्य, हरितालस्य, सीसमलस्य हिङ्गुलस्य, कान्तरजसः लोहचूर्णस्य, कर्पूरस्य, जतोः, नील्याः तथा सरलनिर्य्यासस्य सर्जरसस्य समैः न्यूनैः अधिकैश्च यथोक्तैः अंशैः अनेकशः बहुविधानि चन्द्रिकाभादिमन्ति ज्योत्स्नाप्रभादियुक्तानि अग्निचूर्णानि तद्विद्याः तेषु विद्या येषां तादृशाः तद्भिज्ञा इत्यर्थः, जनाः कल्पयन्ति ॥ २०६-२०८ ॥

क्षिपन्ति चाग्निसंयोगाद्गोलं लक्ष्य सुनालगम् ॥ २०९ ॥

**अन्वयः**—अग्निसंयोगात् सुनालगं गोलं लक्ष्यं क्षिपन्ति ॥ २०९ ॥

**व्याख्या-अग्निसंयोगात् = दहनवर्त्तिसम्पर्कात्, सुनालगम्—सुनालात् = शतघ्न्याः, गच्छतीति तादृशम्, गोलम् = गर्भघुटिकम्, लक्ष्ये = वेध्ये, क्षिपन्ति = क्षेपणं कुर्वन्ति द्विशेषज्ञाः ॥ २०९ ॥**

**हिन्दी**—तोपची बारुद में पलीते लगाकर लक्ष्य की ओर गोले फेंकते हैं ॥ २०९ ॥

**क्षिपन्तीति**। अग्निसंयोगात् सुनालगं सुनालात् गच्छतीति तादृशं गोलं गोलाकारं गर्भघुटिकं लक्ष्ये लक्षणीये अरौ इति शेषः, क्षिपन्ति तद्विद्या इति शेषः ॥ २०९ ॥

नालास्त्रं शोधयेदादौ दद्यात्तत्राग्निचूर्णकम्।
निवेशयेत्तद्दण्डेन नालमूले यथा दृढम् ॥ २१० ॥

**अन्वयः**—आदौ नालास्त्रं शोधयेत्, तत्र अग्निचूर्णं दद्यात्। नालमूले दण्डेन यथा दृढं निवेशयेत् ॥ २१० ॥

**व्याख्या**—आदौ = प्रथमम्, नालास्त्रम् = स्फोटकास्त्रम्, शोधयेत् = परिष्कुर्यात्, तत्र = तस्मिन् स्थाने, अग्निचूर्णम् = स्फोटकद्रव्यम्, दद्यात् = स्थापयेत्, नालमूले = आग्नेयास्त्रमूलभागे, दण्डेन = शलाकया, यथा = येन प्रकारेण, दृढम् = सुस्थिरम्, यथा भवेत् तथा, तत् = पूर्वोक्तम्, अग्निचूर्णम् = स्फोटकचूर्णम्, निवेशयेत् = प्रवेशयेत् ॥ २१० ॥

**हिन्दी**—पहले तोप या बन्दूक की नली साफ कर उसमें लोहे की मजबूत शलाका से बारुद ठूँस-ठूँस कर भर दे। फिर नालमूल में गोले या गोली रख दे ॥ २१० ॥

**नालास्त्रमिति**। आदौ नालास्त्रं शोधयेत् परिष्कुर्य्यात्, ततः तत्र अग्निचूर्णकं पूर्वोक्तं दद्यात्, नालमूले दण्डेन यथा दृढं दृढं यथा तथेत्यर्थः, तत् अग्निचूर्णं निवेशयेत् प्रवेशयेत् ॥ २१० ॥

**ततः सुगोलकं दद्यात् ततः कर्णेऽग्निचूर्णकम्।**
**कर्णचूर्णाग्निदानेन गोलं लक्ष्ये निपातयेत्॥ २११ ॥**

**अन्वयः**—ततः सुगोलकं दद्यात्, ततश्च कर्णे अग्निचूर्णं दद्यात्। कर्णचूर्णग्निदानेन गोलं लक्ष्ये निपातयेत् ॥ २११ ॥

**व्याख्या**—ततः = स्फोटकचूर्णनिवेशनानन्तरम्, सुगोलकम् = लौहपिण्डम्, दद्यात् = स्थापयेत्, ततश्च, कर्णे = कर्णभागे, अग्निचूर्णकं दद्यात्, तत्पश्चात् कर्णे चूर्णाग्निः = कर्णस्थाग्निचूर्णे, अग्निदानेन = दहनवर्त्तिकया वह्निप्रदानेन, लक्ष्ये = शरव्ये, गोलम् = लौहसीसपिण्डं वा, निपातयेत् = क्षिपेत् ॥ २११ ॥

**हिन्दी**—इसके बाद तोप या बन्दूक के बगल के छेद में बारुद भरकर उसमें आग लगाकर गोला या गोली लक्ष्य साधकर उस पर चला दे ॥ २११ ॥

**तत इति**। ततः अग्निचूर्णनिवेशनानन्तरं तत्र सुगोलकं, ततश्च कर्णे अग्निचूर्णकं दद्यात्। अनन्तरं कर्णे चूर्णाग्निदानेन कर्णस्थाग्निचूर्णे अग्निदानेन लक्ष्ये गोलं निपातयेत् ॥ २११ ॥

**लक्ष्यभेदी यथा बाणो धनुर्ज्याविनियोजितः।**
**भवेत् तथा तु सन्धाय द्विहस्तश्च शिलीमुखः॥ २१२ ॥**

**अन्वयः**—यथा बाणः धनुर्ज्याविनियोजितः लक्ष्यभेदी भवेत्, तथा सन्धाय द्विहस्तश्च शिलीमुखः कार्यः ॥ २१२ ॥

**व्याख्या**—यथा = येन प्रकारेण, बाणः = शरः, धनुर्ज्याविनियोजितः = धनुषो विक्षिप्तः सन्, लक्ष्यभेदी = शरव्यभेदनकारी, भवेत् = स्यात्, तथा = तेनैव रूपेण, सन्धाय = लक्ष्यसन्धानं कृत्वा, द्विहस्तः = हस्तद्वयपरिमितः, शिलीमुखः = शरः कुर्यात् ॥ २१२ ॥

**हिन्दी**—धनुष की डोरी पर ऐसा निशाना साधकर बाण चलाये कि लक्ष्य का भेदन अवश्य हो और बाण की लम्बाई दो हाथ की होनी चाहिए ॥ २१२ ॥

**लक्ष्यभेदीति**। यथा बाणः धनुर्ज्याविनियोजितः धनुषो विक्षिप्त इत्यर्थः, सन् लक्ष्यभेदी भवेत् तथा सन्धाय द्विहस्तः हस्तद्वयमितः शिलीमुखः बाणः कार्य्य इति शेषः ॥ २१२ ॥

**अष्टाश्रा पृथुबुध्ना तु गदा हृदयसम्मिता।**
**पट्टीशः स्वसमो हस्तबुध्नश्चोभयतोमुखः॥ २१३ ॥**

**अन्वयः**—पृथुबुध्ना अष्टाश्रा हृदयसम्मिता गदा पट्टीशः स्वसमः हस्तबुध्नः उभयतोमुखः स्यात् ॥ २१३ ॥

**व्याख्या**—पृथुबुध्ना = मूले स्थूला, अष्टाश्रा = अष्टकोणा, हृदयसम्मिता = वक्षःस्थलपर्यन्तोन्नतः, गदा = लोहमयशस्त्रभेदः, कार्या, पट्टीशः = क्षुरोपमतीक्ष्णधारः लौहदण्डः, 'पट्टीशः

लौहदण्डो यस्तीक्ष्णधारः क्षुरोपमः' (वैजयन्ती)। स्वसमः= निजतुल्यः, हस्तबुध्नः= हस्तप्रमाणः, उभयतोमुखः = मूलाग्रजमुखः कार्यः॥ २१३ ॥

**हिन्दी**—मूल भाग जिसका मोटा हो, आठ पहल वाली, छाती तक ऊँची गदा बनाये तथा अपने बराबर ऊँची दोनों ओर तेज धार वाली जिसे बीच में से हाथ से पकड़ा जाय ऐसा पट्टीश शस्त्र बनाये ॥ २१३ ॥

**अष्टेति**। पृथुबुध्ना स्थूलमूलदेशा अष्टाश्रा अष्टकोणा हृदयसम्मिता वक्षःस्थलसमाना गदा कार्य्या इति शेषः। पट्टीशः अस्त्रविशेषः स्वसमः क्षेप्तृसमपरिमाणः हस्तबुध्नश्च हस्तप्रमाणः वा, उभयतोमुखः मूलाग्रमुखः कार्य्य इति शेषः॥ २१३ ॥

**ईषद्वक्रश्चैकधारो विस्तारे चतुरङ्गुलः।**
**क्षुरप्रान्तो नाभिसमो दृढमुष्टिः सुचन्द्ररुक्॥ २१४॥**

**अन्वयः**—एकधारः ईषद्वक्रः विस्तारे चतुरङ्गुलः क्षुरप्रान्तः नाभिसमः दृढमुष्टिः सुचन्द्ररुक्॥ २१४ ॥

**व्याख्या**—एकधारः= अस्त्रविशेषः, ईषद्वक्रः= किञ्चित्कुटिलः, विस्तारे= परिणाहे, चतुरङ्गलः = अङ्गुलचतुष्टयप्रमाणः, क्षुरप्रान्तः= अस्त्रभेदः, नाभिसमः= निपातने नाभिपर्यन्तप्रमाणः, दृढमुष्टिः = सुस्थिरमुष्टिः, सुचन्द्ररुक्= सुन्दरराशिप्रभः, कार्यः॥ २१४ ॥

**हिन्दी**—एक ओर धार वाली, कुछ टेढ़ी, चार अंगुल चौड़ी, छुरे की तरह तेज धार वाली, नाभी तक ऊँची, मजबूत मूठ वाली तथा चाँद की तरह चमकने वाली तलवार होती है ॥२१४ ॥

**ईषदिति**। एकधारः अस्त्रविशेषः ईषद्वक्रः, विस्तारे चतुरङ्गुलः, अङ्गुलचतुष्टयप्रमाणः, क्षुरप्रान्तः अस्त्रभेदः नाभिसमः क्षेप्तृनाभिपर्य्यन्तपरिमाणः दृढमुष्टिः तथा सुचन्द्ररुक् शोभनचन्द्रप्रभः कार्य्य इति शेषः॥ २१४ ॥

**खड्गः प्रासश्चतुर्हस्तदण्डबुध्नः क्षुराननः।**
**दशहस्तमितः कुन्तः फालाग्रः शङ्कुबुध्नकः॥ २१५॥**

**अन्वयः**—खड्गः प्रासश्च चतुर्हस्तदण्डबुध्नः क्षुराननः कुन्तः दशहस्तमितः फालाग्रः शङ्कुबुध्नक॥ २१५ ॥

**व्याख्या**—खड्गः= करवालः, प्रासश्च= कुन्तश्च, चतुर्हस्तदण्डबुध्नः= तुरीयहस्तदण्ड-प्रमाणः, क्षुराननः—क्षुरः= खुरः, इव आननम्= मुखम्, यस्यासौ, कुन्तः= भल्लः, दशहस्तमितः= दशहस्तपरिमितः, फालाग्रः—फालस्य= कुशिलस्य, अग्रम्= अग्रभागम्, यस्य तथाभूतः, तथा शङ्कु- बुध्नकः= शङ्कुतुल्यः, यथा स्यात् तथेति॥ २१५ ॥

**हिन्दी**—चार हाथ लम्बे डंडे के आगे छुरे के समान तेज धार वाला बर्च्छी नामक हथियार होता है और दश हाथ लम्बे डंडे के आगे तेज धार वाला फाल कील के सहारे जिसमें लगा होता है उसे भाला कहते हैं॥ २१५ ॥

**खड्ग इति**। खड्गः प्रासश्च अस्त्रभेदः चतुर्हस्तदण्डबुध्नः चतुर्हस्तदण्डप्रमाणः क्षुराननः क्षुरवत् आननं यस्य सः। कुन्तः दशहस्तमितः फालाग्रः फालस्य लाङ्गुलमुखवर्त्तिनो लौहस्य इव अग्रं यस्य तथाभूतः, तथा शङ्कुबुध्नकः शङ्कुसदृश इत्यर्थः॥ २१५ ॥

**चक्रं षड्ढस्तपरिधि क्षुरप्रान्तं सुनाभियुक्।**
**त्रिहस्तदण्डस्त्रिशिखो लोहरज्जुः सुपाशकः ॥ २१६ ॥**

**अन्वयः**—चक्रं षड्ढस्तपरिधि क्षुरप्रान्तं सुनाभियुक् सुपाशकः त्रिहस्तदण्डः त्रिशिखः लोहरज्जुः ॥ २१६ ॥

**व्याख्या**—चक्रम् = चक्राकारायुधम्, षड्ढस्तपरिधिः—षड्हस्तम् = हस्तषड्कम्, परिधि = वेष्टनम्, यस्य तत्, क्षुरप्रान्तम्—क्षुरः = खुर इव, प्रान्तम् = अग्रभागम्, यस्य तत् तथा, सुनाभियुक् = सुष्ठुमध्यसमन्वितम्, सुपाशकः = सुजालकः, त्रिहस्तदण्डः = हस्तत्रयदण्डयुतः, त्रिशिखः = शिखरत्रयसमन्वितम्, तथा लोहरज्जुः = लोहतारसंयुक्तो भवति ॥ २१६ ॥

**हिन्दी**—जिसके घेरे की लम्बाई छः हाथ की हो तथा इसके गोल आकार का अगला हिस्सा छुरे की तरह तेज धार वाला हो और बीच का भाग सुन्दर एवं सुदृढ़ हो, ऐसे हथियार को 'चक्र' कहते हैं। पाश नामक शस्त्र का डंडा तीन हाथ लम्बा होता है तथा इसके तीन छोर लोहे के मजबूत तार से घिरे होते हैं ॥ २१६ ॥

**चक्रमिति**। चक्रं चक्राकारः अस्त्रविशेषः षड्ढस्तपरिधि हस्तषट्कवेष्टनं क्षुरस्येव प्रान्तं यस्य तत्, तथा सुनाभियुक् सुमध्यमित्यर्थः। सुपाशकः पाशनामा अस्त्रविशेषः त्रिहस्तदण्डः हस्तत्रयमितः दण्डाकृतिश्च इत्यर्थः, त्रिशिखः शिखात्रययुतः तथा लोहरज्जुः लौहतारवान् ।। २१६ ॥

**गोधूमसम्मितस्थूलपत्रं लोहमयं दृढम्।**
**कवचं सशिरस्त्राणमूद्ध्र्वकायविशोभनम् ॥ २१७ ॥**

**अन्वयः**—गोधूमसम्मितस्थूलपत्रं दृढं लोहमयं सशिरस्त्राणम् ऊद्ध्र्वकायविशोभनं कवचम् ॥ २१७ ॥

**व्याख्या**—गोधूमसम्मितस्थूलपत्रम्—गोधूमेन = निस्तुषेण, सम्मितम् = सदृशम्, स्थूलम् = पीवरम्, पत्रम् = आवरणम्, यस्य तथाभूतस्य, लोहमयम् = लौहनिर्मितम्, दृढम् = सुस्थिरम्, सशिरस्त्राणम् = शिरसंरक्षकसहितम्, ऊर्ध्वकायविशोभनम् = मस्तकशोभाजनकम्, कवचम् = सन्नाहः कार्यः ॥ २१७ ॥

**हिन्दी**—गेहूँ के बराबर मोटे लोहे के चदरे से बने या मजबूत शरीर की रक्षा के लिए बने आवरण को कवच कहते हैं। शिर की रक्षा के लिए सुन्दर ढंग से बने टोप भी इसके साथ लगे होते हैं, इसे कवच कहा जाता है ॥ २१७ ॥

**गोधूमेति**। गोधूमेन सम्मितं तुल्यं स्थूलं पत्रं यस्य तत् लोहमयं दृढं कठिनं सशिरस्त्राणं शिरस्त्राणसहितम् ऊद्ध्र्वकायविशोभनम् ऊद्ध्र्वदेहशोभाजनकं कवचं कार्य्यमिति शेषः ॥ २१७ ॥

**तीक्ष्णाग्रं करजं श्रेष्ठं लोहसारमयं दृढम् ॥ २१८ ॥**

**अन्वयः**—तीक्ष्णाग्रं लोहसारमयं दृढं करजं श्रेष्ठम् ॥ २१८ ॥

**व्याख्या**—तीक्ष्णाग्रम् = सुष्ठुधारयुक्तम्, लौहसारमयम् = उत्कृष्टलोहनिर्मितम्, दृढम् = शक्तिसम्पन्नम्, करजम् = नखतुल्यास्त्रविशेषः, श्रेष्ठः = उत्तमो भवति ॥ २१८ ॥

**हिन्दी**—इस्पात के बने मजबूत नाखून की तरह नुकीले तेज धार वाले हथियार को 'करज' अर्थात् बघनखा कहते हैं ॥ २१८ ॥

**तीक्ष्णाग्रं** सुधारं लोहसारमयम् उत्कृष्टलोहमयं दृढं करजम् अस्त्रविशेषः कार्य्यमिति शेषः ॥२१८ ॥

**यो वै सुपुष्टसम्भारस्तथा षड्गणमन्त्रवित्।**
**बह्वस्त्रसंयुतो राजा योद्धुमिच्छेत् स एव हि।**
**अन्यथा दुःखमाप्नोति स्वराज्याद्भ्रश्यतेऽपि च॥ २१९॥**

**अन्वयः**—यः वै राजा सुपुष्टसम्भारः षड्गुणमन्त्रवित् तथा बहुभिः अस्त्रैः संयुतः स एव हि योद्धुम् इच्छेत्, अन्यथा दुःखम् आप्नोति च स्वराज्यात् भ्रश्यते॥ २१९॥

**व्याख्या**—यः = यत्, वै = इति निश्चयेन, राजा = नृपः, सुपुष्टसम्भारः = वस्तुजातैः परिपुष्टः, षड्गुणमन्त्रवित्—षड्गुणाः = सन्धिविग्रहादिकगुणाः—सन्धिविग्रहयानासनसंश्रयद्वैधीभावाः षड्गुणाः, मन्त्राश्च, तान् वेत्ति = जानातीति तथोक्तम्, तथा बहुभिः = अनेकैः, अस्त्रैः = आयुधैः, संयुतः = समन्वितः, सः = असौ राजा एव, योद्धुम् = युद्धं कर्त्तुम्, इच्छेत् = अभिलषेत्, अन्यथा = इतरथा समरकरणे, दुःखम् = कष्टम्, आप्नोति = प्राप्नोति, स्वराज्यात् = निजराष्ट्रात्, भ्रश्यते = भ्रष्टो भवति॥ २१९॥

**हिन्दी**—जो राजा युद्ध के लिए उपयुक्त साधनों से सम्पन्न और समयानुसार सन्धि, विग्रह, यान, आसन, संश्रय एवं द्वैधीभाव—इन छः गुणों एवं मन्त्रणाओं का जानकार एवं बहुविध आयुधों से युक्त हो, उसे ही युद्ध की इच्छा करनी चाहिए। अन्यथा युद्ध करने पर वह खुद तो दुःख पाता ही है राज्य से भी हाथ धोना पड़ता है॥ २१९॥

**य इति**। यः राजा सुपुष्टसम्भारः परिपुष्टसामग्रीकः, षड्गुणमन्त्रवित् षट् गुणाः सन्ध्यादयः 'सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः। षट् गुणाः' इत्यमरः। मन्त्राश्च तान् वेत्तीति तथोक्तः तथा बहुभिः अस्त्रैः संयुतः, स एव योद्धुम् इच्छेत्, अन्यथा युद्धकरणे दुःखम् आप्नोति, स्वराज्यात् भ्रश्यते च विच्युतः भवति च॥ २१९॥

**आबिभ्रतोः शत्रुभावमुभयोः संयतात्मनोः।**
**अस्त्राद्यैः स्वार्थसिद्ध्यर्थं व्यापारो युद्धमुच्यते॥ २२०॥**

**अन्वयः**—शत्रुभावम् आबिभ्रतोः संयतात्मनोः उभयोः स्वार्थसिद्ध्यर्थम् अस्त्राद्यैः व्यापारः युद्धम् उच्यते॥ २२०॥

**व्याख्या**—शत्रुभावम् = पारस्परिकशत्रुता, आबिभ्रतोः = धारयतोः, संयतात्मनोः = नियतात्मनोः, उभयोः = द्वयोः, स्वार्थसिद्ध्यर्थम् = आत्मप्रयोजननिष्पादनाय, अस्त्राद्यैः = आयुधादिभिः, व्यापारः = कार्यम्, युद्धम् = समरम्, उच्यते = कथ्यते॥ २२०॥

**हिन्दी**—परस्पर वैरभाव रखते हुए संयतात्मक होकर दो व्यक्ति हथियारों का संचालन करते हुए स्वार्थसिद्धि के लिए जो काम करते हैं, उसे युद्ध कहते हैं॥ २२०॥

**आबिभ्रतोरिति**। शत्रुभावम् आबिभ्रतोः धारयतोः संयतात्मनोः निश्चलमनसो उभयोः स्वार्थसिद्ध्यर्थम् अस्त्राद्यैः व्यापारः युद्धम् उच्यते॥ २२०॥

**मन्त्रास्त्रैर्दैविकं युद्धं नालाद्यस्त्रैस्तथाऽऽसुरम्।**
**शस्त्रबाहुसमुत्थन्तु मानवं युद्धमीरितम्॥ २२१॥**

**अन्वयः**—मन्त्रास्त्रैः दैविकं तथा नालाद्यस्त्रैः आसुरं शस्त्रबाहुसमुत्थं मानवं युद्धम् ईरितम् ॥ २२१ ॥

**व्याख्या**—मन्त्राद्यैः = मन्त्रादिप्रयुक्तैः, अस्त्रैः = आयुधैः, कृतयुद्धस्य नाम, दैविकम् = अमानवीम्, तथा = नालाद्यस्त्रैः = आग्नेयाद्यायुधैः, कृतयुद्धम्, आसुरम् = असुरसम्बन्धिनम्, शस्त्रबाहुसमुत्थम्—शस्त्रैः = खड्गादिभिः, बाहुभिश्च = दोर्दण्डैश्च, समुत्थम् = जातयुद्धम्, मानवम् = मनुष्यकृतम्, युद्धम्, ईरितम् = कथितम् ॥ २२१ ॥

**हिन्दी**—जिस युद्ध में मन्त्र द्वारा आयुध संचालित हो, उसे दैवी तथा जिसमें आग्नेयास्त्र प्रयुक्त हो, उसे आसुरी एवं तलवार प्रभृति शस्त्रों का बाहों से जो युद्ध किया जाय, उसे मानवी युद्ध कहते हैं ॥ २२१ ॥

**मन्त्रास्त्रैरिति**। मन्त्रास्त्रैर्दैविकं, नालादिभिः अस्त्रैः आसुरं शस्त्रबाहुसमुत्थं शस्त्रैः तलवारादिभिः बाहुभिश्च समुत्पन्नं मानवं युद्धम् ईरितम् उक्तम् ॥ २२१ ॥

**एकस्य बहुभिः सार्द्धं बहूनां बहुभिश्च वा।**
**एकस्यैकेन वा द्वाभ्यां द्वयोर्वा तद्भवेत् खलु ॥ २२२ ॥**

**अन्वयः**—तत् एकस्य बहुभिः सार्द्धं वा बहूनां बहुभिः एकस्य एकेन वा द्वयोः द्वाभ्यां खलु भवेत् ॥ २२२ ॥

**व्याख्या**—तत् = समरम्, एकस्य = जनस्यैकस्य, बहुभिः = अनेकजनैः, सार्द्धम् = सह, वा = अथवा, एकस्य = एकमात्रजनस्य, एकेन = एकमात्रेण जनेन, सार्द्धम् = सह, वा = अथवा, द्वयोः = उभयोः, द्वाभ्याम् = उभाभ्याम्, सार्द्धम् = सह, खलु = निश्चयेन, भवेत् = स्यात् ॥ २२२ ॥

**हिन्दी**—और यह युद्ध कभी एक का अनेकों के साथ अथवा बहुतों का बहुतों के साथ, एक का एक के साथ अथवा दो का दो के साथ होता है ॥ २२२ ॥

**एकस्येति**। तत् युद्धम् एकस्य बहुभिः सार्द्धं सह, बहूनां बहुभिश्च, सार्द्धम् एकस्य एकेन सार्द्धं द्वयोः द्वाभ्यां वा सार्द्धं खलु निश्चितं भवेत् ॥ २२२ ॥

**कालं देशं शत्रुबलं दृष्ट्वा स्वीयबलं ततः।**
**उपायान् षड्गुणं मन्त्रं भवेच्च युद्धकामुकः ॥ २२३ ॥**

**अन्वयः**—कालं देशं शत्रुबलं स्वीयबलम् उपायान् षड्गुणं मन्त्रं च दृष्ट्वा युद्धकामुकः भवेत् ॥ २२३ ॥

**व्याख्या**—कालम् = समयम्, देशम् = स्थानम्, शत्रुबलम् = रिपुशक्तिम्, स्वीयबलम् = आत्मशक्तिः, उपायान् = सामदानादिशत्रुविजययुक्तीः, सामदानभेददण्डमित्युपायचतुष्टयम्, षड्गुणम् = सन्धिविग्रहादिकं षड्गुणम्, सन्धिविग्रहयानासनसंश्रयद्वैधीभावाः षड्गुणाः, मन्त्रम् = मन्त्रणाशक्तिः, दृष्ट्वा = विचार्य, युद्धकामुकः = सङ्ग्रामेच्छुकः, भवेत् = स्यात् ॥ २२३ ॥

**हिन्दी**—देश, काल, आत्मशक्ति, शत्रुशक्ति, सामदानादिक उपाय, सन्धि-विग्रहादिक षड्गुण और मंत्रणाशक्ति पर अच्छी तरह विचार कर लेने के बाद ही युद्ध में प्रवृत्त हो ॥ २२३ ॥

**कालमिति**। कालं समयं देशं स्थानं शत्रुबलं स्वीयबलम् उपायान् सामादीन् 'सामदानभेददण्डमित्युपायचतुष्टयमि'त्यमरः। षड्गुणं सन्ध्यादिकं मन्त्रञ्च दृष्ट्वा समीक्ष्य युद्धकामुकः सङ्ग्रामार्थी भवेत् ॥ २२३ ॥

**शरद्धेमन्तशिशिरकालो युद्धेषु चोत्तमः।**
**वसन्तो मध्यमो ज्ञेयोऽधमो ग्रीष्मः स्मृतः सदा॥ २२४॥**

**अन्वयः**—युद्धेषु शरद्धेमन्तशिशिरकालश्च उत्तमः, वसन्तः मध्यमः ज्ञेयः, ग्रीष्मस्तु सदा अधमः स्मृतः॥ २२४॥

**व्याख्या**—युद्धेषु = सङ्गरेषु, शरद् = वर्षान्तः, हेमन्तः = हिमागमः, शिशिरकालश्च = शीतकालश्च, उत्तमः = उत्कृष्टः, वसन्तः = ऋतुराजः, मध्यमः = मध्यः, ज्ञेयः = बोध्यः, ग्रीष्मस्तु = तपनकालस्तु, सदा = सर्वदा, अधमः = हीनसमयः, स्मृतः = कथितः॥ २२४॥

**हिन्दी**—युद्ध के लिए उपयुक्त समय शरद्, हेमन्त और शिशिर कहा गया है। वसन्त ऋतु का समय मध्यम वर्ष का तथा ग्रीष्म ऋतु को अधम काल कहा गया है॥ २२४॥

**शरदिति**। युद्धेषु शरत् हेमन्तः शिशिरकालश्च उत्तमः, वसन्तः मध्यमः ज्ञेयः, ग्रीष्मस्तु सदा अधमः स्मृतः॥ २२४॥

**वर्षासु न प्रशंसन्ति युद्धं साम स्मृतं तदा॥ २२५॥**

**अन्वयः**—वर्षासु युद्धं न प्रशंसन्ति, तदा साम स्मृतः॥ २२५॥

**व्याख्या**—वर्षासु = मेघागमेषु, युद्धम् = समरम्, न = नहि, प्रशंसन्ति = प्रशंसनीयो भवति, तदा = तस्मिन्काले, साम = सन्धिरेव, स्मृतम् = कथितम्॥ २२५॥

**हिन्दी**—वर्षाऋतु में युद्ध करना सर्वथा अप्रशंसनीय है, उस समय तो किसी भी तरह दुश्मनों से सन्धि करना ही कहा गया है॥ २२५॥

**वर्षास्विति**। वर्षासु युद्धं न प्रशंसन्ति, तदा वर्षास्वित्यर्थः, साम सन्धिः स्मृतम्॥ २२५॥

**युद्धसम्भारसम्पन्नो यदाधिकबलो नृपः।**
**मनोत्साही सुशकुनोत्पाती कालस्तदा शुभः॥ २२६॥**

**अन्वयः**—यदा नृपः युद्धसम्भारसम्पन्नः अधिकबलः मनोत्साही तदा सुशकुनोत्पाती शुभः कालः॥ २२६॥

**व्याख्या**—यदा = यस्मिन्काले, नृपः = राजा, युद्धसम्भारसम्पन्नः = समरोपयुक्तसाधनसम्पन्नः, अधिकबलः = अत्यधिकशक्तिसम्पन्नः, मनोत्साही—मनसा = चित्तेन, उत्साही = साहसी, अत्र सन्धिरार्षः, तदा = तस्मिन्काले, सुशकुनोत्पाती—सुशकुनानाम् = सुष्ठुलक्षणानाम्, उत्पातः = समु- दयः, यस्मिन् तथाभूतः, अत एव शुभः = शुभलक्षणः, कालः = युद्धस्य समय इति ज्ञेयम्॥ २२६॥

**हिन्दी**—जब राजा के पास युद्धोपयोगी सामग्रियों की पूर्णता हो, अधिक शक्तिसम्पन्न हो और मन में युद्ध के लिए उत्साहित हो तथा अच्छे शकुन दिखाई पड़ते हों तो उस समय युद्ध में प्रवृत्त होना शुभ फलदायक होता है॥ २२६॥

**युद्धेति**। यदा नृपः युद्धसम्भारसम्पन्नः सङ्ग्रामसामग्रीपरिपुष्टः अधिकबलः मनोत्साही उत्साहान्वितमनाः सन्धिरत्रार्षः। तदा सुशकुनोत्पाती सुशकुनानां सुलक्षणानाम् उत्पातः उत्पतनम् उदय इत्यर्थः, यस्मिन् तथाभूतः अत एव शुभः सुमङ्गलः कालः सङ्ग्रामस्येति शेषः॥ २२६॥

**कार्येऽत्यावश्यके प्राप्ते कालो नो चेद्यदा शुभः।**
**विधाय हृदि विश्वेशं गेहे भक्त्या न्वियात् तदा॥ २२७॥**

**अन्वयः**—यदा शुभः कालः नो चेत् अत्यावश्यके कार्ये प्राप्ते हृदि गेहे विश्वेशं भक्त्या विधाय नु इयात् ॥ २२७ ॥

**व्याख्या**—यदा = यस्मिन्काले, शुभः = माङ्गलिकः, कालः = समयः, चेत् = यदि, न = नहि, किञ्च, अत्यावश्यके = अत्यावश्यककर्त्तव्ये, कार्ये = कर्मणि, प्राप्ते = उपस्थिते, हृदि = चित्तस्वरूपे, गेहे = गृहे, विश्वेशम् = परमात्मानम्, भक्त्या = भक्तिपूर्वकेन, विधाय = संस्थाप्य, नु = नूनम्, इयात् = व्रजेत् ॥ २२७ ॥

**हिन्दी**—यदि किसी अत्यावश्यक कार्यवश युद्ध करना अनिवार्य हो जाय और उस समय यदि शुभफलद समय उपस्थित न हो तो हृदय रूपी घर में भक्तिपूर्वक भगवान् का ध्यान कर युद्ध के लिए सन्नद्ध हो जाय ॥ २२७ ॥

**कार्य्ये इति**। यदा चेत् यदि शुभः कालः नो प्राप्यते इत्यर्थः, तदा अत्यावश्यके कार्य्ये प्राप्ते आपतिते हृदि हृदयरूपे गेहे विश्वेशं भक्त्या विधाय नु निधाय इयात् गच्छेत् सङ्ग्रामायेति शेषः ॥ २२७ ॥

**न कालनियमस्तत्र गोस्त्रीविप्रविनाशने ॥ २२८ ॥**

**अन्वयः**—गोस्त्रीविप्रविनाशने तत्र न कालनियमः ॥ २२८ ॥

**व्याख्या**—गोस्त्रीविप्रविनाशने—गवाम् = धेनूनाम्, स्त्रीणाम् = नारीणाम्, वा = अथवा, विप्राणाम् = ब्राह्मणानाम्, विनाशने = विध्वंसने, तत्र = तस्मिन् समरे, न = नहि, कालनियमः = समयविचारः, अर्थात् पूर्वोक्तकार्ये समुपस्थिते सर्वस्मिन्नेव काले युद्धाय सन्नद्धो भवेत् ॥ २२८ ॥

**हिन्दी**—गाय, औरत और ब्राह्मणों का विनाश यदि उपस्थित हो जाय तो उन्हें बचाने के निमित्त युद्ध करने में किसी प्रकार कालनियम का विचार नहीं करना चाहिए ॥ २२८ ॥

**नेति**। गोस्त्रीविप्रविनाशने गवां स्त्रीणां विप्राणां वा विनाशने सति तत्र युद्धे न कालनियमः सर्वस्मिन्नेव काले सङ्ग्रामाय यायादिति भावः ॥ २२८ ॥

**यस्मिन् देशे यथाकालं सैन्यव्यायामभूमयः ।**
**परस्य विपरीताश्च स्मृतो देशः स उत्तमः ॥ २२९ ॥**

**अन्वयः**—यस्मिन् देशे यथाकालं सैन्यव्यायामभूमयः परस्य विपरीताः सः देशः उत्तमः स्मृतः ॥ २२९ ॥

**व्याख्या**—यस्मिन् = यत्र, देशे = स्थाने, यथाकालम् = यथावसरम्, सैन्यानाम् = बलानाम्, व्यायामभूमयः = सैन्यशिक्षाभ्यासस्थानानि, सन्तीति शेषः, तथा = तेनैव रूपेण, परस्य = रिपोः, विपरीताः = विरुद्धाः, सः = तत्, देशः = स्थानम्, उत्तमः = श्रेष्ठः, स्मृतः = कथितः ॥ २२९ ॥

**हिन्दी**—जिस स्थान पर समयानुसार सैनिकों को कवायद कराने के लिए योग्य भूमि हो और वह दुश्मनों को विपरीत पड़े तो वही स्थान युद्ध के लिए चुनना उत्तम होता है ॥ २२९ ॥

**यस्मिन्निति**। यस्मिन् देशे यथाकालं समये समये इत्यर्थः, सैन्यानां व्यायामभूमयः रणव्यापारशिक्षाभ्यासस्थानानि सन्तीति शेषः, तथा परस्य शत्रोः विपरीताः न सन्तीति भावः, सः देशः उत्तमः स्मृतः ॥ २२९ ॥

**आत्मनश्च परेषां च तुल्यव्यायामभूमयः।**
**यत्र मध्यम उद्दिष्टो देशः शास्त्रविचिन्तकैः ॥ २३० ॥**

**अन्वयः**—यत्र आत्मनः परेषां तुल्यव्यायामभूमयः देशः शास्त्रविचिन्तकैः मध्यमः उद्दिष्टः ॥ २३० ॥

**व्याख्या**—यत्र = यस्मिन् स्थाने, आत्मनः = स्वस्य, परेषाम् = अन्येषां शत्रूणाम्, तुल्याः = समानाः, व्यायामभूमयः = प्रशिक्षणस्थानानि सन्ति, सः = असौ, देशः = स्थानम्, शास्त्रविचिन्तकैः = शास्त्रज्ञैः, मध्यमः = सामान्यः, उद्दिष्टः = कथितः ॥ २३० ॥

**हिन्दी**—और जहाँ अपने तथा दुश्मन की सेना के लिए समान रूप से कवायद के लिए उपयुक्त स्थान उपलब्ध हो, वह शास्त्रज्ञों की दृष्टि में मध्यम दर्जे का रणक्षेत्र कहा गया है ॥ २३० ॥

**आत्मन इति।** यत्र यस्मिन् देशे आत्मनः परेषां शत्रूणाञ्च तुल्याः समानाः व्यायामभूमयः सन्तीति शेषः, स देशः शास्त्रविचिन्तकैः मध्यमः उद्दिष्टः कथितः ॥ २३० ॥

**अरातिसैन्यव्यायामसुपर्य्याप्तमहीतलः ।**
**आत्मनो विपरीतश्च स वै देशोऽधमः स्मृतः ॥ २३१ ॥**

**अन्वयः**—यः देशः वै अरातिसैन्यव्यायामसुपर्याप्तमहीतलः आत्मनः विपरीतश्च सः अधमः स्मृतः ॥ २३१ ॥

**व्याख्या**—यः = यत्, देशः = राष्ट्रः, अरातिसैन्यानाम् = रिपुबलानाम्, व्यायामेषु = सेना-व्यायामेषु, सुपर्याप्तम् = सूपयुक्तम्, महीतलम् = क्रीडाक्षेत्रं रणक्षेत्रं वा, यस्मिन् तथाभूतः, आत्मनः = स्वस्य, विपरीतश्च = विरुद्धश्च, सः = देशः, अधमः = हीनः, स्मृतः = कथितः ॥ २३१ ॥

**हिन्दी**—जहाँ शत्रुसेना को व्यायाम करने के लिए पर्याप्त समतल भूखण्ड हो तथा अपने लिए ठीक उसके विपरीत स्थित हो– वह क्षेत्र युद्ध के लिए अधम कहा जाता है ॥ २३१ ॥

**अरातीति।** यः देशः अरातिसैन्यानां शत्रुबलानां व्यायामेषु सुपर्य्याप्तं महीतलं यस्मिन् तथाभूतः, आत्मनः विपरीतश्च न तथेत्यर्थः, सः अधमः स्मृतः ॥ २३१ ॥

**स्वसैन्यात् तु तृतीयांशहीनं शत्रुबलं यदि।**
**अशिक्षितमसारं वा साद्यस्कं स्वजयाय वै ॥ २३२ ॥**

**अन्वयः**—यदि शत्रुबलं स्वसैन्यात् तृतीयांशहीनम् अशिक्षितम् असारं वा साद्यस्कं वै स्वजयाय ॥ २३२ ॥

**व्याख्या**—यदि = चेत्, शत्रुबलम् = रिपुसैन्यम्, स्वसैन्यात्—स्वस्य = आत्मनः, सैन्यात् = बलात्, तृतीयांशहीनम् = भागत्रयहीनम्, अशिक्षितम् = प्रशिक्षणविहीनम्, असारम् = साररहितम्, वा = अथवा, साद्यस्कम् = नवनियोजितम्, तदा, वै इति निश्चयेन, स्वजयाय—स्वस्य = आत्मनः, जयाय = विजयाय, भवति ॥ २३२ ॥

**हिन्दी**—यदि अपनी सेना से तीन चौथाई कम दुश्मन की सेना हो, वह भी अप्रशिक्षित, सारहीन एवं नवनियुक्त हो तो अपनी विजय निश्चित है ॥ २३२ ॥

**स्वेति।** यदि शत्रुबलं स्वसैन्यात् तृतीयांशहीनम् अशिक्षितम असारं वा साद्यस्कम् आधुनिकं तदा वै निश्चितं स्वस्य जयाय भवतीति शेषः ॥ २३२ ॥

**पुत्रवत् पालितं यत् तु दानमानविवर्द्धितम्।**
**युद्धसम्भारसम्पन्नं स्वसैन्यं विजयप्रदम्॥ २३३॥**

**अन्वयः**—यत्तु स्वसैन्यं पुत्रवत् पालितं दानेन मानेन विवर्धितं युद्धसम्भारैः सम्पन्नं तत् विजयप्रदम्॥ २३३॥

**व्याख्या**—यत् = बलम्, तु = बलार्थे, स्वसैन्यम्—स्वस्य = आत्मनः, सैन्यम् = बलम्, पुत्रवत् = सुत इव, पालितम् = पोषितम्, दानेन = किमपि यथावसरं प्रदानेन, मानेन = आदरेण, विवर्द्धितम् = विशेषेण वृद्धिं प्रापितम्, युद्धसम्भारैः = सङ्ग्रामसामग्रीभिः, सम्पन्नम् = परिपुष्टम्, तत् = सैन्यम्, विजयप्रदम् = विजयाय भवति॥ २३३॥

**हिन्दी**—यदि अपनी सेना बेटे की तरह पालित हो, दान-मान से सम्मानित हो, युद्धसामग्री से परिपुष्ट हो तो विजय निश्चित होती है॥ २३३॥

**पुत्रवदिति**। यत्तु स्वसैन्यं पुत्रवत् पालितं दानेन मानेन च विवर्द्धितं विशेषतः वृद्धिं प्रापितं तथा युद्धसम्भारैः युद्धसामग्रीभिः सम्पन्नं युक्तं तत् विजयप्रदं जयावहम्॥ २३३॥

**सन्धिं च विग्रहं यानमासनं च समाश्रयम्।**
**द्वैधीभावं च संविद्यान्मन्त्रस्यैतांस्तु षड्गुणान्॥ २३४॥**

**अन्वयः**—सन्धिं विग्रहं यानम् आसनं समाश्रयं द्वैधीभावं च एतान् तु मन्त्रस्य षड्गुणान् संविद्यात्॥ २३४॥

**व्याख्या**—सन्धिम् = मैत्रीकरणम्, राज्यरक्षायाः गुणविशेषः, अन्योऽन्यसहकारित्वेन नियमबन्धम्, विग्रहम् = परस्परविरुद्धाचरणेन समासाङ्गविश्लेषणम्, यानम् = शत्रुं प्रति प्रस्थानम्, आसनम् = शत्रुदुर्गादीनवरुध्य स्थितिः, समाश्रयम् = एकेन पीडितस्य शक्तिशालिनं शरणापन्नम्, द्वैधीभावम् = स्वस्वार्थसिद्धये उपायविशेषः, एतान् = पूर्वोक्तान्, मन्त्रस्य = मन्त्रणायाः, षड्गुणान् = षडुपायान्, संविद्यात् = सम्यक् प्रकारेण जानीयादिति॥ २३४॥

**हिन्दी**—युद्धकाल उपस्थित होने पर विरोधी राजा के साथ मेल-जोल कर लेने को सन्धि, विपरीत आचरण से विरोध प्रकट करने को विग्रह, दुश्मन पर चढ़ाई करने को यान, दुश्मन के किले को घेर कर रहना आसन, किसी से पीड़ित होने पर दूसरे उससे प्रबल का शरणगत होना समाश्रय तथा फूट डालकर विजय पाना—इन छः मंत्रणा के गुणों का बोध होना चाहिए॥ २३४॥

**सन्धिमिति**। सन्धिं परस्परसाहाय्यार्थं हस्त्यश्वादिदानेन आवाभ्यामन्योऽस्य उपकर्त्तव्यमित्येवं विग्रहे नियमबन्धं, विग्रहं विरुद्धाचरणाधिक्येन वैरभावं, यानं शत्रुं प्रति गमनम् आसनम् उपेक्षणं, समाश्रयम् एकेन पीडितस्य अपरप्रबलतराश्रयणं, द्वैधीभावं स्वार्थसिद्धये स्वबलस्य द्वैधीकरणम् एतान् मन्त्रस्य षड्गुणान् संविद्यात् सम्यक् जानीयात्॥ २३४॥

**याभिः क्रियाभिर्बलवान् मित्रतां याति वै रिपुः।**
**सा क्रिया सन्धिरित्युक्ता विमृशेत् तां तु यत्नतः॥ २३५॥**

**अन्वयः**—बलवान् रिपुः याभिः क्रियाभिः मित्रतां वै याति सा क्रिया सन्धिः इति उक्ता। तां तु यत्नतः विमृशेत्॥ २३५॥

**व्याख्या**–बलवान् = बलशालिन्, रिपुः = शत्रुः, याभिः = पूर्वोक्ताभिः, क्रियाभिः = व्यापारैः, वै इति निश्चयेन, मित्रताम् = सख्यम्, याति = प्राप्नोति, पूर्वोक्ताः, क्रिया = कर्म, सन्धिः = मिलनम्, इति = एव, उक्ता = कथिता, ताम् = क्रियाम्, तु, यत्नतः = प्रयासेन, विमृशेत् = विचारयेत् ॥२३५ ॥

**हिन्दी**—अतिशक्तिशाली शत्रु भी जिस काम से मित्र बन जाय उसे सन्धि कहते हैं। इस के लिए सतत प्रयास करना चाहिए॥२३५ ॥

**याभिरिति**। बलवान् रिपुः याभिः क्रियाभिः अनुष्ठानैः वै निश्चितं मित्रतां याति प्राप्नोति सा सन्धिः इति उक्ता, तां क्रियां यत्नतः विमृशेत् विवेचयेत् ॥२३५ ॥

**विकर्षितः सन् वाधीनो भवेच्छत्रुस्तु येन वै।**
**कर्मणा विग्रहस्तं तु चिन्तयेन्मन्त्रिभिर्नृपः ॥ २३६ ॥**

**अन्वयः**—येन कर्मणा शत्रुः विकर्षितः सन् अधीनो भवेत् तं विग्रहं नृपः मन्त्रिभिः सह चिन्तयेत् ॥ २३६ ॥

**व्याख्या**—येन = विहितेन, कर्मणा = क्रियया, शत्रुः = रिपुः, विकर्षितः = विशेषेण पीडितः सन्, वा = अथवा, अधीनः = वशवर्त्ती, भवेत् = स्यात्, तम् = कर्म, विग्रहम् = विरुद्धाचरणम्, नृपः = राजा, मन्त्रिभिः = सचिवैः, सह = साकम्, चिन्तयेत् = विचारयेत् ॥ २३६ ॥

**हिन्दी**—जिस काम से शत्रु पीडित होकर अधीनता कबूल कर ले, उसे विग्रह कहते हैं। अपने मंत्रियों के साथ विचार कर राजा को विग्रह करना चाहिए॥२३६ ॥

**विकर्षित इति**। येन कर्मणा व्यापारेण शत्रुः विकर्षितः पीडितः अधीनः वा अधीन एव वाशब्दः अवधारणार्थः। भवेत् तं विग्रहं नृपः मन्त्रिभिः सह चिन्तयेत् ॥ २३६ ॥

**शत्रुनाशार्थगमनं यानं स्वाभीष्टसिद्धये।**
**स्वरक्षणं शत्रुनाशो भवेत् स्थानात् तदासनम् ॥ २३७ ॥**

**अन्वयः**—स्वाभीष्टसिद्धये शत्रुनाशार्थगमनं यानम्। स्थानं स्वरक्षणं शत्रुनाशः भवेत् तत् आसनम् ॥ २३७ ॥

**व्याख्या**—स्वाभीष्टसिद्धये—स्वस्य = आत्मनः, अभीष्टसिद्धये = अभिलषितसाफल्याय, तथा, शत्रुनाशार्थगमनम् = रिपुविनाशाय प्रस्थानम्, यानम् = गमनम्, तथा स्थानात् = यस्माद-वस्थानात्, स्वरक्षणम्—स्वस्य = आत्मनः, रक्षणम् = त्राणम्, शत्रुनाशश्च = रिपुविध्वंसश्च, भवेत् = स्यात्, तत् = स्थितिः, आसनम् = शत्रुदुर्गादीनवरुध्य स्थितिः ॥ २३७ ॥

**हिन्दी**—अपनी मनोवांछित वस्तु की सिद्धि के लिए तथा शत्रुओं के विनाशार्थ चढ़ाई को यान कहते हैं। जहाँ पड़े रहने से आत्मरक्षा एवं शत्रुविनाश की संभावना हो, उसे आसन कहते हैं ॥ २३७ ॥

**शत्रुनाशार्थमिति**। स्वस्य अभीष्टसिद्धये स्वमनोरथसाधनाय शत्रुनाशार्थगमनं यानम्। स्थानात् यस्मात् अवस्थानात् उपेक्षणादित्यर्थः, स्वरक्षणं शत्रुनाशश्च भवेत् तत् आसनम् ॥ २३७ ॥

**यैर्गुप्तो बलवान् भूयाद् दुर्बलोऽपि स आश्रयः।**
**द्वैधीभावः स्वसैन्यानां स्थापनं गुल्मगुल्मतः ॥ २३८ ॥**

**अन्वयः**—दुर्बलोऽपि यैः गुप्तः बलवान् भूयात् स आश्रयः। स्वसैन्यानां गुल्मगुल्मतः स्थापनं द्वैधीभावः॥२३८॥

**व्याख्या**—दुर्बलोऽपि = निर्बलोऽपि, यैः = सशक्तैः, गुप्तः = रक्षितः सन्, बलवान् = शक्तिशालिन्, भूयात् = भवेत्, सः = असौ, आश्रयः = शरणस्थलम्, स्वसैन्यानाम्—स्वस्य = आत्मनः, सैन्यानाम् = बलानाम्, गुल्मः = सैन्यविभागतः स्थापनम्, द्वैधीभावः = उपायविशेषो भवति॥२३८॥

**हिन्दी**—शक्तिहीन भी जिस शक्तिशाली की शरण में जाकर शक्तिसम्पन्न बन जाता हो, उस प्रबल राजा को आश्रय कहते हैं। अपनी सेना को टुकड़ियों में बाँटकर रखने की स्थिति को द्वैधीभाव कहते हैं॥२३८॥

**यैरिति**। दुर्बलोऽपि यैः गुप्तः रक्षितः सन् बलवान् भवेत् तेषामाश्रयणं समाश्रयः। स्वसैन्यानां गुल्गुल्मतः प्रतिगुल्मं स्थापनं द्वैधीभावः॥२३८॥

**बलीयसाभियुक्तस्तु नृपोऽनन्यप्रतिक्रियः।**
**आपन्नः सन्धिमन्विच्छेत् कुर्वाणः कालयापनम्॥२३९॥**

**अन्वयः**—बलीयसा अभियुक्तः अनन्यप्रतिक्रियः अत एव आपन्नः नृपः कालयापनं कुर्वाणः सन्धिम् अन्विच्छेत्॥२३९॥

**व्याख्या**—बलीयसा = बलवता वा प्रबलेन, नृपेण, अभियुक्तः = आक्रान्तः, अनन्यप्रतिक्रियः = अन्योपायशून्यः, अत एव आपन्नः = विपद्ग्रस्तः, नृपः = राजा, कालयापनम् = समयक्षेपणम्, कुर्वाणः = उपयुक्तसमयप्रतीक्षमाणः, सन्, सन्धिम् = राज्यरक्षार्थमैत्रीकरणम्, अन्विच्छेत् = अन्वेषणं कुर्यात्॥२३९॥

**हिन्दी**—किसी बलवान् शत्रु से आक्रमित होकर विपत्ति में घिरा प्रतिकारशून्य असहाय राजा अपने अच्छे समय की प्रतीक्षा करते हुए उससे सन्धि कर ले॥२३९॥

**बलीयसेति**। बलीयसा अतिबलवता अभियुक्तः आक्रान्तः अनन्यप्रतिक्रियः अन्यप्रतिकाररहितः अत एव आपन्नः आपद्गतः नृपः कालयापनं कुर्वाणः कालं प्रतीक्षमाणः सन् सन्धिम् अन्विच्छेत् कुर्य्यादित्यर्थः॥२३९॥

**एक एवोपहारस्तु सन्धिरेष मतो हितः।**
**उपहारस्य भेदास्तु सर्वेऽन्ये मैत्रवर्जिताः॥२४०॥**

**अन्वयः**—एक एव हितः उपहारः एषः सन्धिः मतः। मैत्रवर्जिताः सर्वे अन्ये भेदाः तु उपहारस्य॥२४०॥

**व्याख्या**—एकः = केवलः, एव, हितः = हितसाधकः, उपहारः = उपायनम्, एषः, सन्धिः = मैत्रीकरणम्, मतः = सिद्धान्तः, मैत्रवर्जिताः = मित्रतां परिहार्य, सर्वे = सकलाः, अन्ये = अपरे सम्मेलनप्रकाराः, उपहारस्य = उपदायाः, भेदाः = प्रकाराः एव॥२४०॥

**हिन्दी**—ऐसी स्थिति में भेंट देकर सन्धि करना ही हितकर है। मित्रता को छोड़कर सन्धि के जो भी अन्य तरीके हैं वे सभी इसी भेंट के भेद हैं॥२४०॥

**एक इति**। एकः केवलः हितः हितकरः उपहारः उपदा एव एषः सन्धिः मतः। मैत्रवर्जिताः मैत्रं विना इत्यर्थः, सर्वे अन्ये सम्मेलनप्रकारा इत्यर्थः, उपहारस्य भेदास्तु विशेषा एव॥२४०॥

**अभियोक्ता बलीयस्त्वादलब्ध्वा न निवर्त्तते।**
**उपहारादृते तस्मात् सन्धिरन्यो न विद्यते॥ २४१॥**

**अन्वयः**—अभियोक्ता बलीयस्त्वात् अलब्ध्वा न निवर्त्तते, तस्मात् उपहारात् ऋते अन्यः सन्धिः न विद्यते॥ २४१॥

**व्याख्या**—अभियोक्ता = आक्रामकः, प्रबलः राजा, बलीयस्त्वात् = शक्तिसम्पन्नत्वात्, अलब्ध्वा = किमपि अप्राप्य, न = नहि, निवर्त्तते = जहाति, तस्मात् = तेन हेतुना, उपहारात् = उपायनात्, ऋते = विहाय, अन्यः = अपरः, सन्धिः = मैत्रीकरणम्, न = नहि, विद्यते = अस्ति॥ २४१॥

**हिन्दी**—आक्रमणकारी राजा यदि अत्यधिक बलशाली हो तो बिना उपहार पाये वह लौट नहीं सकता है। अतः उपहार को छोड़कर कोई अन्य साधन सन्धि के लिए नहीं है।। २४१॥

**अभियोक्तेति**। अभियोक्ता आक्रमणकारी प्रबलः राजा बलीयस्त्वात् प्रबलत्वात् अलब्ध्वा उपहारमिति शेषः, न निवर्त्तते, तस्मात् उपहारात् ऋते विना अन्यः सन्धिः न विद्यते॥ २४१॥

**शत्रोर्बलानुसारेण उपहारं प्रकल्पयेत्।**
**सेवां वापि च स्वीकुर्य्याद्दद्यात् कन्यां भुवं धनम्॥ २४२॥**

**अन्वयः**—शत्रोर्बलानुसारेण उपहारं प्रकल्पयेत्, तथाहि सेवां वा स्वीकुर्यात् वा कन्यां भुवं वा धनं दद्यात्॥ २४२॥

**व्याख्या**—शत्रोः = रिपोः, बलानुसारेण = यथाशक्तिम्, उपहारम् = उपायनम्, प्रकल्पयेत् = चिन्तयेत्, तथाहि—कुत्रचित्, सेवाम् = परिचर्या वा, स्वीकुर्यात् = दासत्वमङ्गीकुर्यात्, अथवा = वा, कन्याम् = दुहितरम्, भुवम् = **धरित्रीम्**, **वा** = अथवा, धनम् = सम्पदम्, दद्यात् = प्रयच्छेत्। २४२॥

**हिन्दी**—शत्रु की शक्ति के अनुसार उसके उपहार की कल्पना की जाती है। उपहार में उसकी दासता कबूल करनी पड़ती है अथवा अपनी कुमारी बेटी या राज्य का कोई भाग अथवा धन देना पड़ता है॥ २४२॥

**शत्रोरिति**। शत्रोः बलानुसारेण यथाबलमित्यर्थः, उपहारं प्रकल्पयेत्, तथाहि कुत्रचित् सेवां दासभावं वा स्वीकुर्य्यात् अथवा कन्यां भुवं भूमिं वा धनं दद्यात्॥ २४२॥

**स्वसामन्तांश्च सन्धीयात् मन्त्रेणान्यजयाय वै।**
**सन्धिः कार्य्योऽप्यनार्य्येण सम्प्राप्योत्सादयेद्धि सः॥२४३॥**

**अन्वयः**—नृपः अन्यजयाय मन्त्रेण स्वसामन्तान् सन्धीयात्। अनार्येणाऽपि सन्धिः कार्यः, हि सः सम्प्राप्य उत्सादयेत्॥ २४३॥

**व्याख्या**—नृपः, अन्यजयाय = अपररिपुविजयाय, मन्त्रेण = विचारचातुर्येण, स्वसामन्तान्—स्वस्य = आत्मनः, सामन्तान् = गणाधिपतीन्, सन्धीयात् = सन्धिं कुर्यात्, किञ्च, अनार्येण = क्षुद्राशयेनापि, सन्धिः = मैत्रीकरणम्, कार्यः = सम्पादनीयो विधेयो वेति, हि = यतः, सः = दुष्टः, सम्प्राप्य = सुयोगमुपलभ्य, उत्सादयेत् = पीडयेत्॥ २४३॥

**हिन्दी**—शत्रुओं को जीतने के लिए पार्श्ववर्त्ती सामन्तों के साथ विचार-विमर्श कर सन्धि कर ले। दुर्जन के साथ भी सन्धि कर लेनी चाहिए, क्योंकि ऐसा नहीं करने से मौका मिलते ही वह तंग कर सकता है॥ २४३॥

**स्वेति**। नृपः अन्यजयाय अपरशत्रुजयार्थं मन्त्रेण मन्त्रकौशलेन स्वस्य सामन्तान् अधीनस्थनृपान् सन्धीयात्। किञ्च अनार्य्येण दुर्जनेनापि सन्धिः कार्य्यः, हि यतः सः अनार्य्यः सम्प्राप्य सुयोगमिति भावः, उत्सादयेत् उत्सन्नं कुर्य्यादित्यर्थः॥ २४३ ॥

**सङ्घातवान् यथा वेणुर्निविडैः कण्टकैर्वृतः।**
**न शक्यते समुच्छेत्तुं वेणुः सङ्घातवांस्तथा॥ २४४॥**

**अन्वयः**—यथा निविडैः कण्टकै वृतः सङ्घातवान् वेणुः समुच्छेत्तुं न शक्यते, तथा सङ्घातवान् वेणुः॥ २४४ ॥

**व्याख्या**—यथा = येन प्रकारेण, निविडैः = सघनैः, कण्टकैः = द्रुमनखैः, वृतः = परिवृतः, सङ्घा- तवान् = समूहवान्, वेणुः = वंशवृक्षः, समुच्छेत्तुम् = कर्त्तितुम्, न = नहि, शक्यते = समर्थो भवति, तथा = तेनैव रूपेण, सङ्घातवान् = सहायतासम्पन्नो नृपः, कोऽपि, समुच्छेत्तुम् = विनाशितुम्, न शक्यते॥ २४४ ॥

**हिन्दी**—जिस तरह अपनी ही डालियों में एक-दूसरे से उलझे बाँसों के झुरमुट से एक बाँस को काट कर या उखाड़ कर निकालना आसान नहीं होता है; उसी तरह चारों ओर से सहायतासम्पन्न राजा को पराजित करना आसान नहीं होता है॥ २४४ ॥

**सङ्घातवानिति**। यथा निविडैः घनैः कण्टकैः वृतः सङ्घातवान् समूहात्मकः वेणुः वंशः समुच्छेत्तुं नैव शक्यते तथा सङ्घातवान् नृपश्च समुच्छेत्तुं न शक्यते अतो नृपेण स्वबलविरोधो न कर्त्तव्य इति भावः॥ २४४ ॥

**सन्धिश्चातिबले युद्धं साम्ये यानन्तु दुर्बले।**
**सुहृद्भिराश्रयः स्थानं दुर्गाभिभजनं द्विधा॥ २४५॥**

**अन्वयः**—अतिबले सन्धिः, साम्ये युद्धं, दुर्बले यानं, सुहृद्भिः आश्रयः स्थानं तथा दुर्गाभिभजनं द्विधा॥ २४५ ॥

**व्याख्या**—अतिबले = अत्यन्तशक्तिशालिने, सन्धिः = मैत्रीकरणम्, साम्ये = तुल्यबले, युद्धम् = समरम्, दुर्बले = अबले, रिपौ, यानम् = आक्रमणम्, सुहृद्भिः = मित्रैः, सह, आश्रयः = अवष्टम्भः, स्थानम् = अवस्थितिः वा आसनम्, तथा दुर्गाभिभजनम्—दुर्गे = कोटे, विभज्य = विभाजनं कृत्वा, द्विधा = खण्डद्वये सैन्यस्थापनं कर्त्तव्यम्॥ २४५ ॥

**हिन्दी**—अत्यन्त शक्तिशाली राजा के साथ सन्धि, समान बलशालियों के साथ युद्ध, दुर्बलों पर आक्रमण, मित्र राजाओं के साथ आसन तथा किले के भीतर दो खण्डो में बाँट कर सैन्य-टुकडियों की स्थापना करनी चाहिए॥ २४५ ॥

**सन्धिरिति**। अतिबले अतिप्रबले शत्रौ सन्धिः साम्ये तुल्यकक्षतायां, युद्धं दुर्बले शत्रौ यानं युद्धार्थम् आक्रमणं, सुहृद्भिः आश्रयः स्थानम् आसनं तथा दुर्गाभिभजनं दुर्गे विभज्य द्विधा सैन्यस्थापनं कर्त्तव्यमिति शेषः॥ २४५ ॥

**बलिना सह सन्धाय भये साधारणे यदि।**
**आत्मानं गोपयेत् काले बह्वमित्रेषु बुद्धिमान्॥ २४६॥**

**अन्वयः**—यदि बह्वमित्रेषु तथा साधारणे भये यः बलिना सह सन्धाय काले आत्मानं गोपयेत् सः बुद्धिमान्॥ २४६ ॥

**व्याख्या**—यदि = चेत्, बहुषु = अनेकेषु, अमित्रेषु = रिपुषु सत्सु, तथा = तेनैव रूपेण, साधारणे = सामान्ये, भये = त्रासे, सति, यः = राजा, बलिना = शक्तिशालिना, सह = साकम्, सन्धाय = मैत्रीं विधाय, काले = समये, आत्मानम् = स्वम्, गोपयेत् = रक्षेत्, सः = असौ, बुद्धिमान् = धीमान् भवति ॥ २४६ ॥

**हिन्दी**—यदि किसी राजा को एक साथ अनेक दुश्मनों का समान रूप से भय हो तो उनमें सर्वाधिक शक्तिशाली से संधि कर आत्मरक्षा करनी चाहिए ॥ २४६ ॥

**बलिनेति**। यदि बहुषु अमित्रेषु शत्रुषु सत्सु तथा साधारणे भये सति यः बलिना प्रबलेन सह सन्धाय मिलित्वा काले समये आत्मानं गोपयेत् रक्षेत् सः बुद्धिमान् ॥ २४६ ॥

**बलिना सह योद्धव्यमिति नास्ति निदर्शनम्।**
**प्रतिवातं न हि घनः कदाचिदपि सर्पति॥ २४७॥**

**अन्वयः**—बलिना सह न योद्धव्यम् इति निदर्शनम् अस्ति। हि घनः कदाचिदपि प्रतिवातं न सर्पति ॥ २४७ ॥

**व्याख्या**—बलिना = शक्तिशालिना, सह = साकम्, न = नहि, योद्धव्यम् = युद्धं कर्त्तव्यम्, इति = अत्र, निदर्शनम् = उदाहरणम्, अस्ति = भवति। हि = तथाहि, घनः = मेघः, कदाचिदपि, प्रतिवातम् = प्रतिकूलपवनम्, न = नहि, सर्पति = व्रजति ॥ २४७ ॥

**हिन्दी**—अपने से अधिक बलशाली के साथ युद्ध नहीं करना चाहिए। उदाहरणस्वरूप हम कह सकते हैं कि प्रतिकूल हवा की दिशा में बादल भी नहीं जाता है ॥ २४७ ॥

**बलिनेति**। बलिना प्रबलेन सह न योद्धव्यम् इति अत्र निदर्शनं दृष्टान्तः अस्ति, हि तथाहि घनः मेघः कदाचिदपि प्रतिवातं प्रतिकूलं वायुम् अथवा वातं प्रति न सर्पति न गच्छति ॥ २४७ ॥

**बलीयसि प्रणमतां काले विक्रमतामपि।**
**सम्पदो न विसर्पन्ति प्रतीपमिव निम्नगाः ॥ २४८ ॥**

**अन्वयः**—बलीयसि प्रणमतां तथा काले विक्रमतामपि सम्पदः निम्नगाः इव प्रतीपं न विसर्पन्ति ॥ २४८ ॥

**व्याख्या**—बलीयसि = सबलतरे, प्रणमताम् = प्रणामं कुर्वताम्, तथा काले = समये, विक्रमतामपि = पराक्रमतामपि, राज्ञाम्, सम्पदः = विभवाः, निम्नगाः = नद्यः, इव = यथा, प्रतीपम् = विरुद्धम्, न = नहि, विसर्पन्ति = चलन्ति ॥ २४८ ॥

**हिन्दी**—जो अपने से अधिक शक्तिशाली राजा के सामने सिर झुका कर समय की प्रतीक्षा करते हैं और अनुकूल समय पाकर उससे युद्ध करते हैं; ऐसे राजे की सम्पदा उनसे कभी अलग नहीं हटतीं। जैसे नदियाँ कभी विपरीत दिशा में प्रवाहित नहीं होती हैं ॥ २४८ ॥

**बलीयसीति**। बलीयसि बलवत्तरे प्रणमतां तथा काले समये विक्रमतां जनानां सम्पदः निम्नगाः नद्य इव प्रतीपं प्रतिकूलं न विसर्पन्ति न गच्छन्तीत्यर्थः ॥ २४८ ॥

**राजा न गच्छेद्विश्वासं सन्धितोऽपि हि बुद्धिमान्।**
**अद्रोहसमयं कृत्वा वृत्रमिन्द्रः पुरावधीत् ॥ २४९ ॥**

**अन्वयः**—बुद्धिमान् राजा सन्धितोऽपि हि विश्वासं न गच्छेत्। पुरा इन्द्रः अद्रोहसमयं कृत्वा वृत्रम् अवधीत् ॥ २४९ ॥

**व्याख्या**—बुद्धिमान् = धीमान्, राजा = नृपतिः, सन्धितोऽपि = मैत्रीकृतोऽपि, हि इति निश्चयेन, विश्वासम् = प्रत्ययः, न = नहि, गच्छेत् = व्रजेत्। पुरा = प्राचीनकाले, इन्द्रः = शचीपतिः, अद्रोहसमयम्—परस्परम् द्रोहम् = अनिष्टम्, न करोमीत्येवंरूपम्, समयम् = नियमबन्धं, कृत्वा, वृत्रम् = एतदाख्यदानवम्, अवधीत् = वधमकरोत् ॥ २४९ ॥

**हिन्दी**—ज्ञानी राजा दुश्मन के साथ सन्धि होने के बावजूद उस पर विश्वास नहीं करता। प्राचीन काल में परस्पर द्रोह न करने की प्रतिज्ञा के बावजूद इन्द्र ने वृत्र का वध कर दिया ॥ २४९ ॥

**राजेति**। बुद्धिमान् राजा सन्धितोऽपि कृतसन्धिरपि विश्वासं न गच्छेत् हिशब्दः अवधारणार्थः। पुरा पूर्वस्मिन् काले इन्द्रः अद्रोहसमयं परस्परं द्रोहम् अनिष्टमित्यर्थः, न करोमीत्येवंरूपं समयं नियमबन्धं कृत्वा वृत्रम् अवधीत् ॥ २४९ ॥

**आपन्नोऽभ्युदयाकाङ्क्षी पीड्यमानः परेण वा।**
**देशकालबलोपेतः प्रारभेत च विग्रहम्॥ २५० ॥**

**अन्वयः**—परेण पीड्यमानः आपन्नः देशकालबलोपेतः अभ्युदयाकाङ्क्षी विग्रहं च प्रारभेत ॥ २५० ॥

**व्याख्या**—परेण = शत्रुणा, पीड्यमानः = क्लेश्यमानः, अत एव आपन्नः = विपद्ग्रस्तः, नृपः = राजा, देशकालबलोपेतः = स्थानसमयशक्तिपरिपुष्टः, सन्, अभ्युदयाकाङ्क्षी = शुभावसराभिलाषी, विग्रहम् = समरम्, प्रारभेत = प्रारम्भं कुर्यात् ॥ २५० ॥

**हिन्दी**—जो राजा विपत्ति में घिरकर दूसरों से पीड़ित होते हुए भी पुनः यदि अपना अभ्युदय चाहता हो तो देश, काल और उपयुक्त बल मिलते ही युद्ध प्रारम्भ कर दे ॥ २५० ॥

**आपन्न इति**। परेण पीड्यमानः अत एव आपन्नः आपद्ग्रस्तः नृपः देशकालबलोपेतः समयस्थानबलपरिपुष्टः सन् अभ्युदयाकाङ्क्षी अभ्युदयार्थमित्यर्थः, विग्रहं युद्धं प्रारभेत च ॥ २५० ॥

**प्रहीनबलमित्रन्तु दुर्गस्थं शत्रुमागतम्।**
**अत्यन्तविषयासक्तं प्रजाद्रव्यापहारकम्।**
**भिन्नमन्त्रिबलं राजा पीडयेत् परिवेष्टयन्॥ २५१ ॥**

**अन्वयः**—राजा प्रहीनबलमित्रं तु दुर्गस्थम् अत्यन्तविषयासक्तं प्रजाद्रव्यापहारकं भिन्नमन्त्रिबलम् आगतं शत्रुं परिवेष्टयन् पीडयेत् ॥ २५१ ॥

**व्याख्या**—राजा = नृपः, प्रहीनबलमित्रम् = सैन्यसुहृद्हीनम्, दुर्गस्थम् = दुर्गगतम्, अत्यन्तविषयासक्तम् = अतिभोगपरायणम्, प्रजानाम् = जनानाम्, धनापहारकम् = धनलुण्ठकम्, भिन्नमन्त्रिबलम्—भिन्नम् = भेदं गतम्, मन्त्रिबलम् = मन्त्रणाशक्तिः, यस्य तादृशम्, आगतम् = प्राप्तम्, शत्रुम् = रिपुम्, परिवेष्टयन् = संवलयन्, पीडयेत् = पराजयेत् ॥ २५१ ॥

**हिन्दी**—सैन्यशक्ति एवं मित्रबल से हीन, अपने ही दुर्ग में घिरा, अत्यन्त विषयासक्त, प्रजा के धन को लूटने वाले, फूट डाले गये मंत्री एवं सैन्यशक्ति वाले दुश्मनों को घेर कर पराजित करना चाहिए ॥ २५१ ॥

**प्रहीनेति**। राजा प्रहीनबलमित्रं दुर्गस्थं दुर्गतम् अत्यन्तविषयासक्तम् अतिव्यसनिनं प्रजानां धनापहारकं भिन्नमन्त्रिबलं भिन्नं भेदं गतं मन्त्रिबलं यस्य तादृशम् आगतम् उपस्थितं शत्रुं परिवेष्टयन् पीडयेत् हन्यादित्यर्थः॥ २५१ ॥

**विग्रहः स च विज्ञेयो ह्यन्यश्च कलहः स्मृतः॥ २५२॥**

**अन्वयः**—स च विग्रहः विज्ञेयः अन्यश्च कलहः स्मृतः॥ २५२ ॥

**व्याख्या**—सः = पूर्ववर्णितः, च = पुनः, विग्रहः = आक्रमणम्, विज्ञेयः = बोध्यः, अन्यश्च = तद्भिन्नश्च, कलहः = विवादः, स्मृतः = कथितः॥ २५२ ॥

**हिन्दी**—पूर्वोक्त ढंग के आक्रमण को विग्रह जानना चाहिए, इससे भिन्न तो केवल कलह होता है॥ २५२ ॥

**विग्रह इति**। स च विग्रहः विज्ञेयः, अन्यस्तु तद्व्यतिरिक्तस्तु कलहः स्मृतः॥ २५२ ॥

**बलीयसात्यल्पबलः शूरेण न च विग्रहम्।**
**कुर्य्याद्धि विग्रहे पुंसां सर्वनाशः प्रजायते॥ २५३॥**

**अन्वयः**—अत्यल्पबलः बलीयसा शूरेण सह विग्रहं न कुर्यात्। हि पुंसां सर्वनाशः प्रजायते॥ २५३ ॥

**व्याख्या**—अत्यल्पबलः = हीनसैन्यो नृपः, बलीयसा = बलवत्तरेण, शूरेण = वीरेण, रिपुना, सह, विग्रहम् = कलहम्, न = नहि, कुर्यात् = विदध्यात्। हि = यस्मात् तथा सति, विग्रहे = युद्धे, पुंसाम् = नृणाम्, सर्वनाशः = समूलोच्छेदः, प्रजायते = भवति॥ २५३ ॥

**हिन्दी**—कमजोर सैन्यबल वाले दुर्बल राजा को प्रबल शक्तिशाली वीर राजा के साथ युद्ध बिलकुल नहीं करना चाहिए। ऐसा करने वाले का सर्वनाश हो जाता है॥ २५३ ॥

**बलीयसेति**। अत्यल्पबलः राजा बलीयसा शूरेण शत्रुणा सह विग्रहं न च कुर्य्यात्। हि यस्मात् तथा सति विग्रहे पुंसां सर्वनाशः प्रजायते॥ २५३ ॥

**एकार्थाभिनिवेशित्वं कारणं कलहस्य वा।**
**उपायान्तरनाशे तु ततो विग्रहमाचरेत्॥ २५४॥**

**अन्वयः**—एकार्थाभिनिवेशित्वं कलहस्य कारणं वा तु उपायान्तरनाशे ततः विग्रहम् आचरेत्॥ २५४ ॥

**व्याख्या**—एकार्थाभिनिवेशित्वम् = द्रव्यस्यैकस्य प्राप्त्यर्थं पक्षद्वयस्याभिलाषित्वम्, कलहस्य = विवादस्य, कारणम् = हेतुः, वा इत्यवधारणे, तु = तस्मात्, उपायान्तरनाशे = अन्योपायाभावे, सति, विग्रहम् = युद्धम्, आचरेत् = कुर्यात्॥ २५४ ॥

**हिन्दी**—युद्ध का कारण किसी एक ही वस्तु के लिए दो व्यक्तियों का समान आग्रह होता हो अथवा युद्धशान्ति के लिए जब कोई उपाय शेष न रह जाय, तभी युद्ध करना चाहिए॥२५४॥

**एकेति**। एकार्थाभिनिवेशित्वम् एकद्रव्याभिलाषित्वं कलहस्य कारणं वा हेतुरेव वाशब्दश्चावधारणार्थः। तस्मात् उपायान्तरनाशे गत्यन्तराभावे सति विग्रहम् आचरेत्॥ २५४ ॥

**विगृह्य सन्धाय तथा सम्भूयाथ प्रसङ्गतः।**
**उपेक्षया च निपुणैर्यानं पञ्चविधं स्मृतम्॥ २५५॥**

**अन्वयः**—निपुणैः यानं पञ्चविधं स्मृतम्। यथा विगृह्य यानं सन्धाय यानं सम्भूय यानम् अथ वा प्रसङ्गतः किंवा उपेक्षया यानम् ॥ २५५ ॥

**व्याख्या**—निपुणैः = चतुरैः जनैः, यानम् = शत्रुं प्रति प्रयाणम्, पञ्चविधम् = पञ्चधा, स्मृतम् = कथितम्, यथा = येन प्रकारेण, विगृह्य = बलात्कारेण गृहीत्वा, शत्रुं प्रति गमनम्, सन्धाय यानम् = शत्रुभिः सह सन्धिं विधायाक्रमणं सन्धाययानम्, सम्भूययानम् = शक्तिशौर्ययुतैः, शत्रुं प्रति गमनं सम्भूययानम्, अथवा = वा, प्रसङ्गतः = अन्यत्र प्रस्थितः प्रसङ्गादन्यत्राक्रमणं प्रसङ्गयानम्, किंवा उपेक्षया = उपेक्षापूर्वकेण गमनम् ॥ २५५ ॥

**हिन्दी**—विद्वानों ने पाँच प्रकार के यानों का उल्लेख किया है। जैसे—विगृह्ययान, संधाययान, संभूययान, प्रसङ्गयान तथा उपेक्षायान ॥ २५५ ॥

**विगृह्येति**। निपुणैः विज्ञैः जनैः यानं शत्रुं प्रति गमनं पञ्चविधं स्मृतं यथा विगृह्ययानं सन्धाययानं सम्भूययानम् अथवा प्रसङ्गतः छलतः यानं किंवा उपेक्षया यानम् ॥ २५५ ॥

**विगृह्य याति हि यदा सर्वाञ्छत्रुगणान् बलात्।**
**विगृह्ययानं यानज्ञैस्तदाचार्य्यैः प्रचक्ष्यते ॥ २५६ ॥**

**अन्वयः**—यदा बलात् सर्वान् शत्रुगणान् विगृह्य याति तत् यानज्ञैः आचार्यैः विगृह्ययानं प्रचक्ष्यते ॥ २५६ ॥

**व्याख्या**—यदा = यस्मिन् काले, बलात् = हठात्, सर्वान् = सकलान्, शत्रुगणान् = अरिवर्गान्, विगृह्य = विशेषेण विग्रहेण पराजित्य, याति, तत् यानम् = आक्रमणम्, यानज्ञैः = यानविशेषज्ञैः, आचार्यैः = गुरुभिः, विगृह्ययानम्, प्रचक्ष्यते = कथ्यते ॥ २५६ ॥

**हिन्दी**—जब कोई राजा जबरदस्ती युद्ध का कोई कारण बतलाकर शत्रुसमूहों पर आक्रमण कर देता है तो यानविशेषज्ञ राजनीति के आचार्य उसे विगृह्ययान कहते हैं ॥ २५६ ॥

**विगृह्येति**। यदा बलात् बलमाश्रित्य सर्वान् शत्रुगणान् विगृह्य विग्रहेण पराजित्य याति, तत् यानं यानज्ञैः आचार्य्यैः गुरुभिः विगृह्ययानं प्रचक्ष्यते ॥ २५६ ॥

**अरिमित्राणि सर्वाणि स्वमित्रैः सर्वतो बलात्।**
**विगृह्य चारिभिर्गन्तुं विगृह्यगमनन्तु वा ॥ २५७ ॥**

**अन्वयः**—सर्वाणि अरिमित्राणि सर्वतः स्वमित्रैः बलात् विगृह्य चारिभिः गन्तुं यत् गमनं तत् विगृह्यगमनं वा ॥ २५७ ॥

**व्याख्या**—सर्वाणि = सकलानि, अरिमित्राणि—अरेः = शत्रोः, मित्राणि = सुहृदः, सर्वतः = सर्वैः, स्वमित्रैः—स्वस्य = आत्मनः, मित्रैः = सुहृद्भिः, करणभूतैः, बलात् = शक्तिपूर्वकात्, विगृह्य = गृहीत्वा, अरिभिः = शत्रुभिः सह, गन्तुम् = विग्रहीतुम्, यत् गमनम् = प्रस्थानम्, तत् विगृह्यगमनं वेति ॥ २५७ ॥

**हिन्दी**—अथवा कुछ आचार्यों के मत से शत्रुओं को अपने चारों ओर से लड़ाकर उन्हें थकाकर अपने मित्रबल के साथ उन पर बलात् आक्रमण करना विगृह्यगमन कहलाता है ॥ २५७ ॥

**अरीति**। सर्वाणि अरिमित्राणि शत्रोः मित्राणि सर्वतः सर्वैः स्वमित्रैः आत्मबन्धुभिः करणभूतैः बलात् विगृह्य अरिभिः सह गन्तुं विग्रहीतुमित्यर्थः, यत् गमनं तत् विगृह्यगमनं वा ॥ २५७ ॥

**सन्धायान्यत्र यात्रायां पार्ष्णिग्राहेण शत्रुणा।**
**सन्धायगमनं प्रोक्तं तज्जिगीषोः फलार्थिनः ॥ २५८ ॥**

**अन्वयः**—अन्यत्र यात्रायां पार्ष्णिग्राहेण शत्रुणा सन्धाय फलार्थिनः जिगीषोः यत् यानं तत् सन्धायगमनं प्रोक्तम् ॥ २५८ ॥

**व्याख्या**– अन्यत्र = अन्यस्मिन् रिपौ, यात्रायाम् = रणक्षेत्रप्रयाणे, पार्ष्णिग्राहेण = स्वपृष्ठभागस्थितप्रतिवेशिशत्रुभिः सह, सन्धाय = सन्धिं विधाय, फलार्थिनः = परिणामेच्छुकानाम्, जिगीषोः = विजयेच्छुकस्य राज्ञः, यत् यानम् = गमनम्, तत् सन्धाय = सन्धिं विधाय, गमनम् = आक्रमणम्, प्रोक्तम् = कथितम् ॥ २५८ ॥

**हिन्दी**—विजय चाहने वाले राजा को विशेष फल की इच्छा रखने वाले विद्वान् अन्यत्र किसी शत्रु पर चढ़ाई करने के समय उसके पूर्व अपने पृष्ठभाग स्थित पड़ोसी शत्रु राजा के साथ सन्धि करके चढ़ाई करने को सन्धायगमन कहते हैं ॥ २५८ ॥

**सन्धायेति**। अन्यत्र अन्यस्मिन् शत्रौ यात्रायां युद्धयात्रायां पार्ष्णिग्राहेण पृष्ठानुधाविना शत्रुणा सह सन्धाय मिलित्वा फलार्थिनः जिगीषोः यत् यानं तत् सन्धायगमनं प्रोक्तम् ॥ २५८ ॥

**एको भूपो यदैकत्र सामन्तैः साम्परायिकैः।**
**शक्तिशौर्य्ययुतैर्यानं सम्भूयगमनं हि तत्॥ २५९ ॥**

**अन्वयः**—एकः भूपः शक्तिशौर्ययुतैः साम्परायिकैः सामन्तैः एकत्र यत् यानं तत् सम्भूयगमनं हि ॥ २५९ ॥

**व्याख्या**—एकः = केवलः, भूपः = नृपः, शक्तिशौर्ययुतैः = बलवीर्यसमन्वितैः, साम्परायिकैः = युद्धकुशलैः, सामन्तैः = गणाधिपतिभिः, सह, एकत्र = एकस्मिन् रिपौ, यत् यानम् = गमनम्, तत् = गमनम्, सम्भूयगमनम्, हि इति निश्चयेन ॥ २५९ ॥

**हिन्दी**—यदि कोई राजा अकेला शक्ति और शूरता से सम्पन्न, युद्ध करने में माहिर सामन्तों के साथ मिलकर किसी एक दुश्मन पर चढ़ाई करे तो उसे सम्भूयगमन कहते हैं ॥२५९ ॥

**एक इति**। एकः भूपः शक्तिशौर्ययुतैः साम्परायिकैः सङ्ग्रामनिपुणैः सामन्तैः अधीनस्थराजवर्गैः सह एकत्र एकस्मिन् शत्रौ यत् यानं तत् सम्भूययानं हि ॥ २५९ ॥

**अन्यत्र प्रस्थितः सङ्गादन्यत्रैव च गच्छति।**
**प्रसङ्गयानं तत् प्रोक्तं यानविद्भिश्च मन्त्रिभिः ॥ २६० ॥**

**अन्वयः**—अन्यत्र प्रस्थितः सङ्गात् यत् अन्यत्र एव च गच्छति तत् यानविद्भिः च प्रसङ्गयानं प्रोक्तम् ॥ २६० ॥

**व्याख्या**—अन्यत्र = अपरत्र, प्रस्थितः = चलितः, नृपः = राजा, सङ्गात् = प्रसङ्गवशात् छलाद्वा, यत् अन्यत्र = अपरस्मिन् स्थाने, गच्छति = आक्रमणं करोति, तत्, यानविद्भिः = यानविशेषज्ञैः, मन्त्रिभिः = सचिवैः, प्रसङ्गयानम्, प्रोक्तम् = कथितम् ॥ २६० ॥

**हिन्दी**—दूसरी जगह किसी राजा पर चढाई करने के लिए चल चुकने पर रास्ते में यदि प्रसंगवश किसी अन्य राजा पर चढ़ाई करना पड़े तो उसे यानविशेषज्ञ मन्त्रिगण प्रसङ्गयान कहते हैं ॥ २६० ॥

**अन्यत्रेति**। अन्यत्र प्रस्थितः नृपः सङ्गात् प्रसङ्गात् छलादित्यर्थः, यत् अन्यत्र गच्छति तत् यानविद्भिः मन्त्रिभिः प्रसङ्गयानं प्रोक्तम् ॥ २६० ॥

**रिपुं यातस्य बलिनः सम्प्राप्य विकृतं फलम्।**
**उपेक्ष्य तस्मिन् तद्यानमुपेक्षायानमुच्यते ॥ २६१ ॥**

**अन्वयः**—रिपुं यातस्य बलिनः विकृतं फलं सम्प्राप्य तस्मिन् उपेक्ष्य यत् यानं तत् उपेक्षायानम् उच्यते ॥ २६१ ॥

**व्याख्या**—रिपुम् = शत्रुम्प्रति, यातस्य = आक्रमतः, बलिनः = शक्तिशालिनः नृपस्य, विकृतम् = विरुद्धम्, फलम् = परिणामम्, सम्प्राप्य = उपलभ्य, तस्मिन्, उपेक्ष्य = अवहेलनं कृत्वा, यत् यानम् = गमनम्, तत् = आक्रमणम्, उपेक्षायानम्, उच्यते = कथ्यते ॥ २६१ ॥

**हिन्दी**—जो शत्रु पराजित होकर विपन्नावस्था में पड़ गया हो तो उसकी स्थिति की उपेक्षा कर उस पर चढ़ाई कर दी जाय तो उसे उपेक्षायान कहते हैं ॥ २६१ ॥

**रिपुमिति**। रिपुं शत्रुं प्रति यातस्य गतस्य आक्रमतः बलिनः बलवतः नृपस्य विकृतं विपरीतं फलं पराजयरूपमित्यर्थः, सम्प्राप्य तस्मिन् उपेक्ष्य यत् यानं गमनं स्वनगर्य्यामिति शेषः, निवर्त्तनमिति भावः, तत् उपेक्षायानम् उच्यते ॥ २६१ ॥

**दुर्वृत्तेऽप्यकुलीने तु बलं दातरि रज्यते।**
**हृष्टं कृत्वा स्वीयबलं पारितोष्यप्रदानतः ॥ २६२ ॥**
**नायकः पुरतो यायात् प्रवीरपुरुषावृतः।**
**मध्ये कलत्रं कोशश्च स्वामी फल्गु च यद्धनम्।**
**ध्वजिनीञ्च सदोद्युक्तः स गोपायेद्दिवानिशम् ॥ २६३ ॥**

**अन्वयः**—दुर्वृत्ते अपि अकुलीने दातरि बलं रज्यते, तस्मात् पारितोष्यप्रदानतः स्वीयबलं हृष्टं कृत्वा नायकः प्रवीरपुरुषैः आवृतः पुरतः यायात्। मध्ये कलत्रं कोशश्च स्वामी फल्गु च यद्धनं तत्, सः सदोद्युक्तः दिवानिशं ध्वजिनीं गोपायेत् ॥ २६२-२६३ ॥

**व्याख्या**—दुर्वृत्तेऽपि = दुश्चरित्रेऽपि, अकुलीने = असत्कुलजेऽपि राजनि, दातरि = दानशीले सति, बलम् = सैन्यम्, रज्यते = अनुरक्तम्भवति, तस्मात्, पारितोष्यप्रदानतः = पारितोषिकप्रदानेन, स्वीयबलम् = निजसैन्यम्, हृष्टम् = सन्तुष्टम्, कृत्वा = विधाय, नायकः = सेनानायकः, प्रवीरपुरुषैः = श्रेष्ठवीरपुरुषैः, आवृतः = परिवृतः सन्, पुरतः = अग्रतः, यायात् = व्रजेत्। मध्ये = तन्मध्ये, कलत्रम् = नारीवर्गः, कोशः = आकरः, स्वामी = अधिपतिः, फल्गु = साधारणधनम्, तत् यायात्। सः = सेनापतिः, सदोद्युक्तः—सदा = सर्वदा, उद्युक्तः = उद्योगे निरतः सन्, दिवानिशम् = अहर्निशम्, ध्वजिनीम् = सेनाम्, गोपायेत् = संरक्षणं कुर्यात् ॥ २६२-२६३ ॥

**हिन्दी**—राजा चाहे दुराचारी हो या अकुलीन हो, किन्तु यदि वह दाता हो तो सेना उससे संतुष्ट रहती है। अतः पुरस्कारों से प्रसन्न अपनी सेना और वीर योद्धाओं से घिरा राजा अपनी सेना के आगे रहे, फिर सेनानायक शत्रु पर चढ़ाई करे। सेना के बीच में स्त्रीवर्ग, खजाना एवं साधारण धन रखकर इनकी और अपनी सेना की दिन-रात सावधानीपूर्वक सेनानायक रक्षा करे ॥ २६२-६३ ॥

**दुर्वृत्ते इति। नायक इति।** दुर्वृत्ते दुराचारेऽपि अकुलीने असंद्वशप्रसूतेऽपि राजनि दातरि दानशीले सति बलं रज्यते अनुरक्तं भवति, तस्मात् पारितोष्यप्रदानतः पुरष्कारदानेन स्वीयबलं हृष्टं सन्तुष्टं कृत्वा नायकः सेनापतिः प्रवीरपुरुषैः आवृतः सन् पुरतः अग्रतः यायात् गच्छेत् मध्ये कलत्रं स्त्रीवर्गः कोशः द्रव्यसमूहः स्वामी प्रभुः यच्च फलगु सारं धनं तत् यायात्। सः नायकः सदोद्युक्तः सदा उद्योगी सन् दिवानिशं ध्वजिनीं गोपायेत् रक्षेत् ॥ २६२-२६३ ॥

**नद्यद्रिवनदुर्गेषु यत्र यत्र भयं भवेत्।**
**सेनापतिस्तत्र तत्र गच्छेद् व्यूहकृतैर्बलैः ॥ २६४ ॥**

**अन्वयः**—नद्यद्रिवनदुर्गेषु यत्र यत्र भयं भवेत् तत्र तत्र सेनापतिः व्यूहकृतैः बलैः गच्छेत् ॥ २६४ ॥

**व्याख्या**—नदीषु = सरित्सु, अद्रिषु = पर्वतेषु, वनेषु = अरण्येषु, दुर्गेषु = दुर्गमस्थानेषु च, यत्र यत्र = यस्मिन् यस्मिन् स्थाने, भयम् = त्रासम्, भवेत् = स्यात्, तत्र तत्र = तस्मिन् तस्मिन् स्थाने, सेनापतिः = सेनानायकः, व्यूहकृतैः = सम्पादितिसैन्यविन्यासैः, गच्छेत् = व्रजेत् ॥ २६४ ॥

**हिन्दी**—रास्ते में नदी, पहाड़, जंगल या दुर्गम स्थान के कारण जहाँ-जहाँ डर की संभावना हो, वहाँ-वहाँ सेनानायक सेना को व्यूह बनाकर आगे बढे ॥ २६४ ॥

**नदीति।** नदीषु अद्रिषु वनेषु दुर्गेषु दुर्गमस्थानेषु च यत्र यत्र भयं भवेत् सेनापतिः व्यूहकृतैः कृतव्यूहैः बलैः तत्र तत्र गच्छेत् ॥ २६४ ॥।

**यायाद् व्यूहेन महता मकरेण पुरोभये।**
**श्येनेनोभयपक्षेण सूच्या वा धीरवक्त्रया ॥ २६५ ॥**

**अन्वयः**—पुरोभये महता मकरेण व्यूहेन उभयपक्षेण श्येनेन धीवक्त्रया वा सूच्या व्यूहेन यायात् ॥ २६५ ॥

**व्याख्या**—पुरः = अग्रे, भये = त्रासे, समुपस्थिते सति, महता = विशालेन, मकरेण = ग्राहेण, व्यूहेन = सैन्यविन्यासेन, उभयपक्षेण = पक्षद्वययुक्तेन, श्येनेन = कपोतारिणा, व्यूहेन, वा = अथवा, धीरवक्त्रया = गभीराननेन, सूच्या = सूचीमुखमिव तीव्रेण, व्यूहेन = सैन्यविन्यासेन, यायात् = गच्छेत् ॥ २६५ ॥

**हिन्दी**—यदि आगे से भय की संभावना हो तो बड़े मगर के आकार की व्यूहरचना कर चले अथवा दो पाँख वाले बाज पक्षी की तरह अथवा नुकीली सूई के आकार की व्यूह-रचना कर चले ॥ २६५ ॥

**यायादिति।** पुरः अग्रे भये उपस्थिते सति महता मकरेण व्यूहेन, उभयपक्षेण श्येनेन व्यूहेन वा धीरवक्त्रया धीरमुखया सूच्या व्यूहेन यायात् ॥ २६५ ॥

**पश्चाद्भये तु शकटं पार्श्वयोर्वज्रसंज्ञिकम्।**
**सर्वतः सर्वतोभद्रं चक्रं व्यालमथापि वा।**
**यथादेशं कल्पयेद्वा शत्रुसेनाविभेदकम् ॥ २६६ ॥**

**अन्वयः**—पश्चात् भये शकटं पार्श्वयोः वज्रसंज्ञिकं, सर्वतः भये सर्वतोभद्रं चक्रम् अथवा व्यालं शत्रुसेनाविभेदकं व्यूहं यथादेशं कल्पयेत् ॥ २६६ ॥

**व्याख्या**—पश्चात् = पृष्ठभागे, भये = त्रासे सम्भवति, शकटमयानाकारम्, पार्श्वयोः = पार्श्वभागयोः, भये = भीतौ, आपतिते, वज्रसंज्ञिकम् = वज्राख्यम्, सर्वतः = चतुर्दिक्, भये = त्रासे, समुपस्थिते, चक्रम् = चक्राकारम्, अथवा व्यालम् = सर्पाख्यम्, वर्त्तुलम्, शत्रुसेनाविभेदकम् = रिपुबलभञ्जकम्, व्यूहम् = सैन्यसंस्थापनम्, यथाप्रदेशम् = देशानुरूपम्, वा = विकल्पेन, कल्पयेत् = रचयेत् ॥ २६६ ॥

**हिन्दी**—पीछे से यदि भय की आशंका हो तो शकटाकार व्यूह की रचना कर, दोनों बाजू की ओर से भय की संभावना में वज्रव्यूह तथा चारों ओर से भय की आंशका में चक्रव्यूह अथवा सर्पाकार व्यूह की रचना करनी चाहिए अथवा देशानुसार शत्रुसेना को विनष्ट करने वाली व्यूहरचना करनी चाहिए ॥ २६६ ॥

**पश्चादिति**। पश्चात् भये सम्भवति शकटं शकटाकारं पार्श्वयोः भये आपतिते वज्रसंज्ञिकं वज्राख्यं सर्वतः भये उपस्थिते सर्वतोभद्रं चक्रम् अथवा व्यालं शत्रुसेनाविभेदकं शत्रुबलभञ्जकं व्यूहं यथाप्रदेशं कल्पयेद्वा रचयेदेव ॥ २६६ ॥

**व्यूहरचनसङ्केतान् वाद्यभाषासमीरितान्।**
**स्वसैनिकैर्विना कोऽपि न जानीयात् तथाविधान् ॥ २६७ ॥**

**अन्वयः**—स्वसैनिकैः विना कोऽपि वाद्यभाषासमीरितान् तथाविधान् व्यूहरचनसङ्केतान् न जानीयात् ॥ २६७ ॥

**व्याख्या**—स्वसैनिकैः = निजबलैः, विना = विहाय, कोऽपि = जनः, वाद्यध्वनिना = वाद्यध्वनिविशेषेण, समीरितान् = सूचितान्, तथाविधान् = तद्रूपान्, व्यूहरचनानाम् = सैन्यस्थापनानाम्, सङ्केतान् = इङ्गितानि, न = नहि, जानीयात् = सङ्केतग्रहणं कुर्यात् ॥ २६७ ॥

**हिन्दी**—और बाजा बजाने के ढंग से किये गये व्यूह की रचना के संकेत ऐसे हों जिन्हें अपनी सेना के अलावा दूसरा कोई सैनिक न जानता हो ॥ २६७ ॥

**व्यूहेति**। स्वसैनिकैः विना कोऽपि जनः वाद्यभाषया समीरितान् वाद्यध्वनिविशेषसूचितान् तथाविधान् व्यूहरचनानां सङ्केतान् न जानीयात् ॥ २६७ ॥

**नियोजयेच्च मतिमान् व्यूहान् नानाविधान् सदा ॥ २६८ ॥**

**अन्वयः**—मतिमान् नानाविधान् व्यूहान् सदा नियोजयेत् ॥ २६८ ॥

**व्याख्या**—मतिमान् = बुद्धिमान् राजा, नानाविधान् = अनेकविधान्, व्यूहान् = सैन्यविन्यासान्, सदा = सर्वस्मिन् समये, नियोजयेत् = नियुक्तं कुर्यात् ॥ २६८ ॥

**हिन्दी**—इस तरह बुद्धिमान् राजा सदा अनेक प्रकार की व्यूहरचना में सैनिकों को रखे ॥२६८ ॥

**नियोजयेदिति**। मतिमान् भूपः नानाविधान् व्यूहान् सदा सर्वस्मिन् समये नियोजयेच्च ॥२६८ ॥

**अश्वानाञ्च गजानाञ्च पदातीनां पृथक् पृथक्।**
**उच्चैः संश्रावयेद् व्यूहसङ्केतान् सैनिकान् नृपः ॥ २६९ ॥**

**अन्वयः**—नृपः अश्वानां च गजानां च पदातीनां पृथक् पृथक् सैनिकान् व्यूहसङ्केतान् उच्चैः संश्रावयेत् ॥ २६९ ॥

**व्याख्या**—नृपः = राजा, अश्वानाम् = घोटकानाम्, गजानाम् = हस्तिनाम्, पदातीनाम् = पदगामिनां सैन्यानाम्, पृथक् पृथक् = भिन्नं भिन्नम्, सैनिकान् = सैन्यम्, व्यूहसङ्केतान् = सैन्यविन्यासेङ्गितान्, उच्चैः = उन्नतैः, संश्रावयेत् ॥ २६९ ॥

**हिन्दी**—अश्वारोही, गजारोही एवं पैदल सैनिकों को अलग-अलग बुलाकर राजा व्यूह-रचना के संकेतों को ठीक से समझा दे ॥ २६९ ॥

**अश्वानामिति**। नृपः अश्वानां गजानां पदातीनाञ्च पृथक् पृथक् सैनिकान् व्यूहसङ्केतान् उच्चैः यथा तथा संश्रावयेत् ॥ २६९ ॥

**वामदक्षिणसंस्थो वा मध्यस्थो वाग्रसंस्थितः।**
**श्रुत्वा तान् सैनिकैः कार्य्यमनुशिष्टं यथा तथा ॥ २७० ॥**

**अन्वयः**—वामदक्षिणसंस्थः वा मध्यस्थः वा अग्रसंस्थितः सैनिकैः तान् श्रुत्वा यथा अनुशिष्टं तथा कार्यम् ॥ २७० ॥

**व्याख्या**—वामदक्षिणसंस्थः—वामसंस्थः = सव्ये स्थितः, दक्षिणसंस्थः = वामेतरे स्थितः, वा = अथवा, मध्ये = केन्द्रे, स्थितः, वा = अथवा, अग्रतः = पुरतः, स्थितः = संस्थः अस्तु, किञ्च तैः तैः सैनिकैः = सेनाचरैः, तान् = पूर्वोक्तसङ्केतान्, श्रुत्वा = आकर्ण्य, यथा = येन प्रकारेण, अनुशिष्टम् = उपदिष्टम्, तथा = तेनैव प्रकारेण, कार्यम् = अनुष्ठेयम् ॥ २७० ॥

**हिन्दी**—बायें, दायें, बीच तथा अगले भाग में स्थित सैनिक उन संकेतों को सुनकर जैसा उन्हें समझाया गया हो वैसा ही काम करें ॥ २७० ॥

**वामेति**। सैनिकपुरुषः वामदक्षिणसंस्थः वामसंस्थः वा दक्षिणसंस्थः वा मध्यस्थः अथवा अग्रतः स्थितः अस्तु किन्तु तैः तैः सैनिकैः तान् सङ्केतान् श्रुत्वा यथा अनुशिष्टं कर्त्तुं सङ्केतितं तथा कार्य्यम्।

**सम्मीलनं प्रसरणं परिभ्रमणमेव च।**
**आकुञ्चनं तथा यानं प्रयाणमपयानकम् ॥ २७१ ॥**
**पर्य्यायेण च साम्मुख्यं समुत्थानञ्च लुण्ठनम्।**
**संस्थानं चाष्टदलवच्चक्रवद्गोलतुल्यकम् ॥ २७२ ॥**
**सूचीतुल्यं शकटवदर्द्धचन्द्रसमन्तु वा।**
**पृथग्भवनमल्पाल्पैः पर्य्यायैः पङ्क्तिवेशनम् ॥ २७३ ॥**
**शस्त्रास्त्रयोर्धारणञ्च सन्धानं लक्ष्यभेदनम्।**
**मोक्षणञ्च तथास्त्राणां शस्त्राणां परिघातनम् ॥ २७४ ॥**
**द्राक् सन्धानं पुनः पातो ग्रहो मोक्षः पुनः पुनः।**
**स्वगूहनं प्रतीघातः शस्त्रास्त्रपदविक्रमैः ॥ २७५ ॥**
**द्वाभ्यां त्रिभिश्चतुर्भिर्वा पङ्क्तितो गमनं ततः।**
**तथा प्राग्भवनं चापसरणं तूपसर्जनम् ॥ २७६ ॥**

**अन्वयः**—सम्मीलनं प्रसरणं परिभ्रमणम् आकुञ्चनं यानं प्रयाणम् अपयानकं पर्य्यायेण च साम्मुख्यं समुत्थानं लुण्ठनम् अष्टदलवत् संस्थानं चक्रवत् गोलतुल्यकं सूचीतुल्यं शकटवत् वा

अर्द्धचन्द्रसमं वा पृथक् भवनम् अल्पाल्पैः पर्यायैः पङ्क्तिवेशनं शस्त्रास्त्रयोः धारणं सन्धानम् लक्ष्यभेदनम् अस्त्राणां मोक्षणं शस्त्राणां परिघातनं प्राक् सन्धानं पुनः पातः ग्रहः मोक्षः स्वगूहनं शस्त्रास्त्रपदविक्रमैः प्रतीघातः द्वाभ्यां त्रिभिः चतुर्भिः वा पङ्क्तितः गमनं तथा प्राग्भवनम् अपसरणं तथा उपसर्जनम् ॥ २७१-२७६ ॥

**व्याख्या**—सम्मीलनम् = सम्मिश्रणम्, संयुक्तं वा, प्रसरणम् = वितति:, परिभ्रमणम् = विचरणम्, आकुञ्चनम् = सङ्कोचनम्, यानम् = गमनम्, प्रयाणम् = प्रस्थानम्, अपयानकम् = पश्चाद्गमनम्, पर्यायेण = पर्यायक्रमेण, साम्मुख्यम् = सम्मुखे गमनम्, समुत्थानम् = उत्थानम्, लुण्ठनम् = लोटनम्, अष्टदलवत् = अष्टदलकमलमिव, संस्थानम् = स्थितिः, चक्रवत् = चक्राकारमिव, गोलतुल्यकम् = गोलाकारेणोत्थापनम्, वेष्टनं वा, सूचीतुल्यम् = सूचीसदृशम्, शकटवत् = यानाकारमिव, वा = अथवा, अर्द्धचन्द्रसमम् = अर्द्धचन्द्राकारमिव, पृथक् = विभिन्नम्, भवनम् = वर्चनम्, अल्पाल्पैः = अतिस्वल्पैः, पर्यायैः = आनुपूर्व्यैः, पङ्क्तिवेशनम्—पङ्क्तिषु = श्रेणीषु, वेशनम् = प्रवेशनम्, शस्त्रास्त्रयोः = आयुधानाम्, धारणम् = सज्जीकरणम्, सन्धानम् = चापे बाणयोजनम्, लक्ष्यभेदनम् = वेध्यवेधनम्, अस्त्राणाम् = आयुधानाम्, मोक्षणम् = निक्षेपः, शस्त्राणाम् = आयुधविशेषाणाम्, परिघातनम् = परिक्षेपणं प्रहरणं वा, द्राक् = झटिति, सन्धानम् = अभिषवः, पुनः = भूयोभूयः, पातः = पतनम्, ग्रहः = ग्रहणम्, मोक्षः = मोचनम्, स्वगूहनम्—स्वस्य = आत्मनः, गूहनम् = रक्षणम्, शस्त्रास्त्रपदविक्रमैः—शस्त्रैः = आयुधैः, अस्त्रैः = प्रहरणैः, पदविक्रमैः = पदातीनां पराक्रमैः, प्रतीघातः = प्रतिप्रहारः, द्वाभ्याम् = उभाभ्याम्, त्रिभिः = त्रिसंख्यकैः, चतुर्भिः = चतुसंख्यकैः, वा = अथवा, पङ्क्तितः = श्रेणीबद्धेन, गमनम्, तथा = तेनैव प्रकारेण, प्राग्भवनम् = पुरोवर्त्तनम्, अपसरणम् = पुरतः पलायनम्, तथा उपसर्जनम् = समीपगमनञ्चेति ॥ २२७१-२७६ ॥

**हिन्दी**—संकेतानुसार कभी सबों को इकट्ठा हो जाना, फैल जाना, चारों ओर घूम जाना, सिकुड़ जाना, धीरे-धीरे बढ़ना, तेज चलना, पीछे हटना, एक-एक कर सामने आना, खड़े हो जाना, लौटना, अष्टकुल कमल की तरह व्यूह बना कर खड़ा होना या चक्राकार गोल बाँधकर खड़ा होना, कभी सूई तो कभी शकट या अर्द्धचन्द्राकार व्यूह बनाकर खड़ा होना, पर्याय-क्रम से थोड़ी सेना की टुकड़ी बनाकर अलग-अलग हो जाना या कतार बनाकर बैठ जाना, आयुध धारण कर लक्ष्य का संधान एवम् उसका भेदन करना, हथियारों से पैंतरा बदल कर प्रहार करना, जल्दी से धनुष पर बाण चढ़ाना, छोड़ना, फिर तीर खींचना और छोड़ना; बार-बार ऐसा करते हुए अपने को प्रतिघात से बचाना, अस्त्र-शस्त्रों का पैंतरा बदल कर प्रयोग करना, कभी दो, तीन या चार की पंक्ति बनाकर चलना, आवश्यकतानुसार आगे बढना, पीछे हटना या यथास्थान पहले की तरह खड़ा रहना, आगे बढना, पीछे हटना या समीप जाकर आक्रमण करना—सैनिकों को ये सारी बातें संकतानुसार करनी चाहिए ॥ २७१-२७६ ॥

व्यूहस्थदैनिककार्य्याण्याह—**सम्मीलनमित्यादि**। सम्मीलनं प्रसरणं परिभ्रमणम् आकुञ्चनं यानं प्रयाणम् अपयानकं पर्य्यायेण साम्मुख्यं समुत्थानं लुण्ठनम् अष्टदलवत् संस्थानं चक्रवत् गोलतुल्यकं गोलाकारेण वेष्टनमित्यर्थः, सूचीतुल्यं शकटवत् शकटाकारं वा अर्द्धचन्द्रसमं पृथक् विभिन्नं भवनं वर्त्तनम् अल्पाल्पैः पर्य्यायैः पङ्क्तिवेशनं पङ्क्तिषु प्रवेशनं शस्त्रास्त्रयोः धारणं सन्धानं लक्ष्यभेदनम् अस्त्राणां मोक्षणं निक्षेपः शस्त्राणां परिघातनं शस्त्रैः प्रहरणमित्यर्थः, द्राक् झटिति

सन्धानं पुनः पुनः पातः पतनं ग्रहः ग्रहणं मोक्षः त्यागः स्वस्य आत्मनः गूहनं रक्षणं शस्त्रास्त्रपदविक्रमैः शस्त्रैः अस्त्रैः पदविक्रमैश्च प्रतीघातः द्वाभ्यां त्रिभिः चतुर्भिर्वा पङ्क्तितः पङ्क्तिक्रमेण गमनम्। तथा प्राग्भवनं पुरोवर्त्तनम् अपसरणं पुरतः पलायनं तथा उपसर्जनं समीपगमनञ्च ॥ २७१-२७६ ॥

**अपसृत्यास्त्रसिद्ध्यर्थमुपसृत्य विमोक्षणे।**
**प्राग्भूत्वा मोचयेदस्त्रं व्यूहस्थः सैनिकः सदा॥ २७७॥**

**अन्वयः**—व्यूहस्थः सैनिकः अस्त्रसिद्ध्यर्थम् अपसृत्य विमोक्षणे उपसृत्य प्राग्भूत्वा सदा अस्त्रं मोचयेत् ॥ २७७ ॥

**व्याख्या**—व्यूहस्थः = सैन्यविन्यासमध्यस्थितसेनाचरः, अस्त्रसिद्ध्यर्थम् = आयुधसञ्चालन-सौकर्यार्थम्, अपसृत्य = अपसरणं कृत्वा, विमोक्षणे = अस्त्रत्यागे, उपसृत्य = समीपं गत्वा, तथा प्राग् = पुरः गत्वा, सदा = सर्वदा, अस्त्रम् = प्रहरणम्, मोचयेत् = त्यागं कुर्यात् ॥ २७७ ॥

**हिन्दी**—व्यूहस्थ सैनिक को हथियार चलाने की सुविधा के लिए पीछे हटकर, पास जाकर सामने से हथियार चलाना चाहिए ॥ २७७ ॥

**अपसृत्येति**। व्यूहस्थः विन्यस्तबलमध्यवर्ती सैनिकः अस्त्रसिद्ध्यर्थम् अपसृत्य विमोक्षणे अस्त्रत्यागे उपसृत्य समीपं गत्वा तथा प्राग् अग्रगो भूत्वा सदा अस्त्रं मोचयेत् ॥ २७७ ॥

**आसीनः स्याद्विमुक्तास्त्रः प्राग्वा चापसरेत् पुनः।**
**प्रागासीनं तूपसृतो दृष्ट्वा स्वास्त्रं विमोचयेत्।**
**एकैकशो द्विशो वापि सङ्घशो बोधितो यथा॥ २७८॥**

**अन्वयः**—विमुक्तास्त्रः आसीनः स्यात् वा प्राक् अपसरेत्, तु उपसृतः। प्रागासीनं दृष्ट्वा यथा बोधितः तथा एकैकशः द्विशः वा सङ्घशः स्वास्त्रं विमोचयेत् ॥ २७८ ॥

**व्याख्या**—विमुक्तास्त्रः = विमोचितायुधः, सैनिकः, आसीनः = उपविष्टः, स्यात् = भवेत्, वा = अथवा, प्राक् = अग्रे, अपसरेत् = अपसरणं कुर्यात्, पुनश्च = भूयश्च, उपसृतः = समीपं गच्छतः सन्, प्राक् आसीनम् = उपविष्टम्, रिपुम्, दृष्ट्वा = अवलोक्य, यथा = येन प्रकारेण, बोधितः = उपदिष्टः, तथा एकैकशः = एकम् एकं कृत्वा, द्विशः वा, अथवा सङ्घशः = सामूहिकरूपेण बहुशः, स्वस्य = आत्मनः, अस्त्रम् = प्रहरणम्, मोचयेत् = त्यजेत् ॥ २७८ ॥

**हिन्दी**—सैनिक हथियार चलाने के बाद बैठ जाये अथवा आगे की ओर बढ जाये, आगे बैठे शत्रु को देखकर उसके पास जाकर अपने आयुध का प्रयोग करे। एक-एक, दो-दो या समूह रूप में पूर्वसंकेतित ढंग से सैनिक चले ॥ २७८ ॥

**आसीन इति**। विमुक्तास्त्रः विक्षिप्तास्त्रः सैनिकः आसीनः उपविष्टः स्यात् वा अथवा प्राक् अपसरेत्। पुनश्च उपसृतः सन्निहितः सन् प्राक् आसीनं रिपुं दृष्ट्वा यथा बोधितः सङ्केतितः तथा एकैकशः द्विशः वा सङ्घशः बहुशः स्वस्य आत्मनः अस्त्रं विमोचयेत् विक्षिपेत् ॥ २७८ ॥

**क्रौञ्चानां खे गतिर्यादृक् पङ्क्तिशः सम्प्रजायते।**
**तादृक् सञ्चारयेत् क्रौञ्चव्यूहं देशबलं यथा॥ २७९॥**

**अन्वयः**—खे क्रौञ्चानां यादृक् पङ्क्तिशः गतिः सम्प्रजायते तादृक् देशबलं क्रौञ्चव्यूहं सञ्चारयेत् ॥ २७९ ॥

**व्याख्या**—खे = आकाशे, क्रौञ्चानाम् = कुञ्चानाम्, यादृक् = यत् सदृशम्, पङ्क्तिशः = श्रेणीबद्धेन, गतिः = गमनम्, जायते = भवति, देशबलम् = स्थानीयबलानुसारेण, कौञ्चव्यूहम् = क्रौञ्चाख्यसैन्यसंस्थानम् सञ्चारयेत् = विन्यसेत् ॥ २७९ ॥

**हिन्दी**—आकाश में जैसे बगुले पंक्तिबद्ध होकर चलते हैं, उसी प्रकार क्रौञ्चव्यूह की रचना कर सैनिक स्थानीय बल के अनुसार आगे बढ़ें ॥ २७९ ॥

क्रौञ्चव्यूहमाह- **क्रौञ्चानामिति**। खे आकाशे कौञ्चानां बकानां यादृक् पङ्क्तिशः पङ्क्तिक्रमेण गतिः जायते, देशबलं स्थानीयबलं यथा स्थानीयबलानुसारेण इत्यर्थः, क्रौञ्चव्यूहं तादृक् यथा तथा सञ्चारयेत् विन्यसेत् ॥ २७९ ॥

**सूक्ष्मग्रीवं मध्यपुच्छं स्थूलपक्षन्तु पङ्क्तितः ।**
**बृहत्पक्षं मध्यगलपुच्छं श्येनं मुखे तनु ॥ २८० ॥**

**अन्वयः**—सूक्ष्मग्रीवं मध्यपुच्छं स्थूलपक्षं पङ्क्तितः बृहत्पक्षं मध्यगलपुच्छं मुखे तनु श्येनम् ॥ २८० ॥

**व्याख्या**—सूक्ष्मग्रीवम्—सूक्ष्मा = क्षीणा, ग्रीवा = कण्ठः, यस्य तत्, मध्ये = मध्यमे, पुच्छः = लाङ्गुलभागः, स्थूलपक्षम्—स्थूलौ = पीनौ, पक्षौ = पक्षभागौ, यस्य तथाभूतस्य तम्, पङ्क्तितश्च, मुखे = मुखभागे, तनु = सूक्ष्मम्, श्येनम् = श्येनव्यूहं भवति ॥ २८० ॥

**हिन्दी**—जिसके दोनों बगल के भाग विशाल हों तथा गले का भाग पतला हो, पूँछ वाला भाग मध्यम हो एवं मुखभाग पतला हो, ऐसी सैनिकों का पंक्ति को श्येनव्यूह कहा जाता है ॥ २८० ॥

श्येनव्यूहमाह—**सूक्ष्मेति**। सूक्ष्मा ग्रीवा यस्य तत् मध्ये पुच्छं यस्य तथोक्तं स्थूलौ विशालौ पक्षौ यस्य तथाभूतं पङ्क्तितश्च बृहत्पक्षं दीर्घपार्श्वं मध्ये गले च पुच्छं यस्य तादृशं तथा मुखे तनु सूक्ष्मं स्वल्पमित्यर्थः, श्येनं श्येनव्यूह इत्यर्थः ॥ २८० ॥

**चतुष्पात् मकरो दीर्घस्थूलवक्त्रद्विरोष्ठकः ।**
**सूची सूक्ष्ममुखो दीर्घसमदण्डान्तरन्ध्रयुक् ॥ २८१ ॥**

**अन्वयः**—चतुष्पात् दीर्घस्थूलवक्त्रद्विरोष्ठकः मकरः सूक्ष्ममुखः दीर्घसमदण्डान्तरन्ध्रयुक् सूची ॥ २८१ ॥

**व्याख्या**—चतुष्पात् = चतुष्पदः, दीर्घम् = लम्बम्, स्थूलम् = पीनम्, मुखम् = आननम्, यस्य तादृशः, द्विरोष्ठकः = अधरद्वयसंयुक्तः, मकरः = मकराकृतिः, ग्राह इव आकृतिर्यस्य तथाभूतः मकर-व्यूहः, सूक्ष्ममुखः = साग्राननः, तथा दीर्घस्य = लम्बस्य, दण्डस्य = लगुडस्य, अन्ते = अन्तिमभागे, रन्ध्रयुक्तः = छिद्रसमन्वितः, सूचीव्यूहः = व्यधनीव्यूहः, इति ख्यात इति ॥ २८१ ॥

**हिन्दी**—जिसके चार भाग में चार चरण हों, लम्बा और मोटा मुँह वाला हिस्सा हो, उसमें नीचे-ऊपर दो होठ भाग हों, ऐसी पंक्ति में स्थित सेना को मकरव्यूह कहा जाता है। फिर जिसका अगला भाग सूई की तरह नुकीला हो तथा बीच का हिस्सा समान रूप से डंडे की तरह लम्बा हो और अन्त अर्थात् मूल भाग में छेद हो, ऐसी सेना की पंक्ति को सूचीमुखव्यूह कहते हैं ॥ २८१ ॥

चक्रव्यूहश्चैकमार्गो ह्यष्टधा कुण्डलीकृतः।
चतुर्दिक्ष्वष्टपरिधिः सर्वतोभद्रसंज्ञकः ॥ २८२ ॥
अमार्गश्चाष्टवलयी गोलकः सर्वतोमुखः।
शकटः शकटाकारो व्यालो व्यालाकृतिः सदा ॥ २८३ ॥

**अन्वयः**—अष्टधा कुण्डलीकृतः एकमार्गः चक्रव्यूहः। चतुर्दिक्षु अष्टपरिधिः अमार्गः अष्टवलयी गोलकः सर्वतोमुखः सर्वतोभद्रसंज्ञकः। शकटः शकटाकारः, व्यालः सदा व्यालाकृतिः ॥ २८२-२८३ ॥

**व्याख्या**—अष्टधा = अष्टप्रकारकः, कुण्डलीकृतः = वर्त्तुलाकारेण वेष्टितः, एक एव = मात्रैकः, मार्गः = पन्थाः, यस्य तथाभूतः, व्यूहः = सैन्यसंरचना, चक्रव्यूहः = चक्रव्यूहाख्यो भवति। चतुर्दिक्षु = परितः, अष्टपरिधिः = अष्टधा मण्डलीकृतः, अमार्गः = पथहीनः, अष्टवलयी = अष्टमण्डलयुतः, गोलकः = गोलाकारः, सर्वतः = अभितः, मुखम् = आननम्, यस्य तादृशः, व्यूहः = सैन्यविन्यासः, सर्वतोभद्रः इति ख्यातः, शकटः = यानः, शकटस्येव = यानस्येव, आकारः = स्वरूपः, यस्य सः शकटव्यूह इति, व्यालः = सर्पः, व्यालस्येव = नागस्येव, आकृतिः = आकारः, यस्य सः व्यालव्यूही नाम्ना ख्यातः ॥ २८२-२८३ ॥

**हिन्दी**—जो व्यूह चक्के की तरह गोल हो तथा बीच में आठ खण्डों में बँटा हुआ हो तथा उसकी आकृति वर्तुलाकार हो एवं उसमें घुसने का एक ही रास्ता हो, उसे 'चक्रव्यूह' कहते हैं। जिस व्यूह के चारों ओर आठ पहलू में सेना विभक्त हो तो उसे 'सर्वतोभद्र' व्यूह कहा जाता है। अथवा—सभी ओर जिसके मुँह हों तथा आठ गोलाकार पंक्तियों से बना हो तथा उसमें घुसने की कोई राह न हो, तो उसे भी सर्वतोभद्रव्यूह ही कहा जाता है। गाड़ी की तरह सैन्य-संरचना को शकटव्यूह एवं सर्पाकार सैन्य-संरचना को व्यालव्यूह कहा जाता है ॥२८३-२८३ ॥

चक्रसर्वतोभद्रशकटव्यालव्यूहान् निर्वक्ति—**चक्रेति**। **अमार्ग इति**। अष्टधा कुण्डलीकृतः वेष्टितः एक एव मार्गः पन्थाः यस्य तथाभूतः व्यूहः चक्रव्यूहः। चतुर्दिक्षु अष्टपरिधिः अष्टधा कुण्डलीकृत इत्यर्थः, अमार्गः अपथः अष्टवलयी वेष्टनाष्टकयुतः गोलकः मण्डलाकृतिः सर्वतोमुखः व्यूहः सर्वतोभद्रसंज्ञकः सर्वतोभद्र इति प्रसिद्धः। शकटः शकटस्येव आकारः यस्य सः। व्यालः सदा व्यालस्येव सर्पस्येव आकृतिर्यस्य तथाभूतः ॥ २८२-२८३ ॥

सैन्यमल्पं बृहद्वापि दृष्ट्वा मार्गं रणस्थलम्।
व्यूहैर्व्यूहेन व्यूहाभ्यां सङ्करेणापि कल्पयेत् ॥ २८४ ॥

**अन्वयः**—सैन्यम् अल्पं वा बृहत् दृष्ट्वा व्यूहेन व्यूहाभ्यां वा व्यूहैः सङ्करेणापि मार्गं रणस्थलं कल्पयेत् ॥ २८४ ॥

**व्याख्या**—सैन्यम् = बलम्, अल्पम् = स्तोकम्, वा = अथवा, बृहत् = विशालः, इति दृष्ट्वा = अवलोक्य, व्यूहेन = सैन्यसंस्थानेन, व्यूहाभ्याम् = सैन्यसंरचनाभ्याम्, वा = अथवा, व्यूहैः, सङ्करेणापि = मिश्रितेनाऽपि, मार्गम् = पन्थानम्, रणस्थलम् = युद्धभूमिः, कल्पयेत् = संरचयेत् ॥ २८४ ॥

**हिन्दी**—सेना की कमी या अधिकता राह तथा रणभूमि को देखकर एक, दो या अनेक व्यूहों की संरचना की कल्पना की जा सकती है ॥ २८४ ॥

**सैन्यमिति।** सैन्यम् अल्पं वा बृहत् अधिकं दृष्ट्वा व्यूहेन व्यूहाभ्यां वा व्यूहैः सङ्करेणापि व्यूढेन अव्यूढे च सैन्येन मार्गं रणस्थलञ्च कल्पयेत् ॥ २८४ ॥

**यन्त्रास्त्रैः शत्रुसेनाया भेदो येभ्यः प्रजायते।**
**स्थलेभ्यस्तेषु सन्तिष्ठेत् ससैन्यो ह्यासनं हि तत्॥ २८५ ॥**

**अन्वयः**—येभ्यः स्थलेभ्यः यन्त्रास्त्रैः शत्रुसेनायाः भेदः प्रजायते, ससैन्यः तेषु सन्तिष्ठेत् तत् हि आसनम् ॥ २८५ ॥

**व्याख्या**—येभ्यः स्थलेभ्यः = येभ्यः स्थानेभ्यः, यन्त्रास्त्रैः = नालिकास्त्रैः, शत्रुसेनायाः = रिपुबलस्य, भेदः = भेदनम्, प्रजायते = सम्भवति, ससैन्यः = सेनासहितः सन्, तेषु = स्थलेषु, सन्तिष्ठेत् = स्थितो भवेत्, तत् हि = तदेव हि, आसनम् = स्थितिः कुर्यात् ॥ २८५ ॥

**हिन्दी**—जहाँ से शत्रुसेना पर तोप, गोली आदि चलाकर उसे छिन्न-भिन्न किया जा सके, वहाँ सेना के साथ राजा के टिकने को आसन कहते हैं ॥ २८५ ॥

**यन्त्रास्त्रैरिति।** येभ्यः स्थलेभ्यः यन्त्रास्त्रैः नालिकास्त्रैः शत्रुसेनायाः भेदः प्रजायते सम्भवति, ससैन्यः सन् तेषु स्थलेषु सन्तिष्ठेत् तत् हि तदेव आसनम् ॥ २८५ ॥

**तृणान्नजलसम्भारा ये चान्ये शत्रुपोषकाः।**
**सम्यङ्निरुध्य तान् यत्नात् परितश्चिरमासनात्॥ २८६ ॥**
**विच्छिन्नवीवधासारं प्रक्षीणयवसेन्धनम्।**
**विगृह्यमाणप्रकृतिं कालेनैव वशं नयेत्॥ २८७ ॥**

**अन्वयः**—तृणान्नजलसम्भाराः ये च अन्ये शत्रुपोषकाः चिरम् आसनात् परितः यत्नात् तान् सम्यक् निरुद्ध्य विच्छिन्नवीवधासारं प्रक्षीणयवसेन्धनं विगृह्यमाणप्रकृतिं कालेन एव वशं नयेत् ॥ २८६-२८७ ॥

**व्याख्या**—तृणानि = शादाः, अन्नानि = धान्यानि, जलानि = सलिलानि, सम्भाराः = अन्यावश्यकवस्तूनि, च = पुनः, ये अन्ये = अपरे, शत्रुपोषकाः—शत्रूणाम् = रिपूणाम्, पोषकाः = पालकाः, चिरम् = दीर्घकालपर्यन्तम्, आसनात् = अवस्थानात्, परितः = चतुर्दिक्, यत्नात् = प्रयत्नपूर्वकात्, तान् = रिपुसंरक्षकान्, सम्यक् = सुष्ठुतया, निरुद्ध्य = अवरुद्ध्य, विच्छिन्नाः = विशिलष्टाः, वीवधाः = अन्नादिसङ्ग्रहाः, आसाराः = मित्रबलसंरक्षणाः, यस्मिन् तं, प्रक्षीणानि = क्षयं गतानि, यवसानि = शादाः, इन्धनानि = काष्ठानि, च यस्मिन् तथोक्तम्, तथा विगृह्यमाणाः = युद्धव्यासक्ताः, प्रकृतयः = प्रजाः, यस्य तादृशम्, देशम् = राष्ट्रम्, कालेन = समयक्रमेण, वशम् = अधीनम्, नयेत् = प्रापयेत् ॥ २८६-२८७ ॥

**हिन्दी**—घास, अनाज, पानी प्रभृति आवश्यक सामग्री तथा शत्रुसेना के लिए अन्य उपयोगी वस्तुओं को आसन में घेरा डालकर बहुत दिनों तक चारों ओर से राजा रोक कर शत्रुसेना तक न पहुँचने दे। शत्रुसेना के यातायात को अवरुद्ध कर घास तथा जलाने की लकड़ी समाप्त हो जाने पर प्रजा में भेद उत्पन्न कर थोड़े ही दिनो में शत्रु को वशवर्त्ती बनाया जा सकता है ॥२८६-२८७ ॥

**तृणेति। विच्छिन्नेति।** तृणानि अन्नानि जलानि सम्भाराः प्रयोजनीयद्रव्याणि च ये च अन्ये शत्रुपोषकाः शत्रूणां पोषणकारिणः चिरं दीर्घकालं व्याप्य आसनात् अवस्थानात् परितः

सर्वतः यत्नात् तान् शत्रुपोषकान् सम्यक् निरुध्य विच्छिन्ना निरुद्धाः वीवधाःधान्यादिसङ्ग्रहाः आसाराः सुहृद्बलसम्पाताः यस्मिन् तं प्रक्षीणानि यवसानि तृणानि इन्धनानि काष्ठानि च यस्मिन् तथोक्तं तथा विगृह्यमाणाः सङ्ग्रामव्यासक्ताः प्रकृतयो यस्य तादृशं देशं कालेन वशं नयेत् ॥ २८६-२८७ ॥

**अरेश्च विजिगीषोश्च विग्रहे हीयमानयोः।**
**सन्धाय यदवस्थानं सन्धायासनमुच्यते ॥ २८८ ॥**

**अन्वयः**—विग्रहे हीयमानयोः अरेः विजिगीषोः सन्धाय यत् अवस्थानं तत् सन्धायासनम् उच्यते ॥ २८८ ॥

**व्याख्या**—विग्रहे = समरे, हीयमानयोः = क्षीणबलयोः, अरेः = रिपोः, विजिगीषोः = विजयेच्छुकयोः, सन्धाय = परस्परं सन्धिं विधाय, यत् अवस्थानम् = आसनम्, तत सन्धायासनम्, उच्यते = कथ्यते ॥ २८८ ॥

**हिन्दी**—जब विजय चाहने वाले आक्रमणकारी शत्रु एवं आक्रमित राजा दोनों लड़ते-लड़ते थक जाय तब उन दोनों के आपस में सन्धि कर अपनी-अपनी जगह पर डटे रहने को सन्धायासन कहते हैं ॥ २८८ ॥

**अरेरिति**। विग्रहे युद्धे हीयमानयोः अरेः शत्रोः विजिगीषोश्च सन्धाय परस्परं सन्धिं कृत्वा यत् अवस्थानं तत् सन्धायासनम् उच्यते ॥ २८८ ॥

**उच्छिद्यमानो बलिना निरुपायप्रतिक्रियः।**
**कुलोद्भवं सत्यमार्य्यमाश्रयेत बलोत्कटम् ॥ २८९ ॥**

**अन्वयः**—बलिना उच्छिद्यमानः निरुपायप्रतिक्रियः कुलोद्भवम् आर्यं बलोत्कटं नृपम् आश्रयेत् ॥ २८९ ॥

**व्याख्या**—बलिना = शक्तिशालिना रिपुणा, उच्छिद्यमानः = उत्पाट्यमाणः, अत एव, निरुपायप्रतिक्रियः = प्रतिकारविहीनः सन्, कुलोद्भवम् = कुलीनम्, आर्यम् = सत्यप्रतिज्ञम्, बलोत्कटम् = प्रकर्षबलशालिनम्, नृपम् = भूपम्, आश्रयेत् = आश्रयग्रहणं कुर्यात् ॥ २८९ ॥

**हिन्दी**—जब किसी शक्तिशाली राजा द्वारा राज्य विनष्ट की स्थिति में आ जाय तो किसी कुलीन, दृढप्रतिज्ञ, शक्तिशाली अन्य राजा की शरण लेनी चाहिए ॥ २८९ ॥

**उच्छिद्यमान इति**। बलिना बलवता अरिणा उच्छिद्यमानः अत एव निरुपायप्रतिक्रियः गत्यन्तरहीनः सन् कुलोद्भवं कुलीनम् आर्य्यं साधु बलोत्कटम् अतिप्रबलं नृपम् आश्रयेत ॥ २८९ ॥

**विजिगीषोस्तु साह्यार्थाः सुहृत्सम्बन्धिबान्धवाः।**
**प्रदत्तभृतिका ह्यन्ये भूपा अंशप्रकल्पिताः।**
**सैवाश्रयस्तु कथितो दुर्गाणि च महात्मभिः ॥ २९० ॥**

**अन्वयः**—विजिगीषोः साह्यार्थाः ये सुहृत्सम्बन्धिबान्धवाः प्रदत्तभृतिकाः, अन्ये भूपाः अंशप्रकल्पिताः महात्मभिः सैवाश्रयः कथितः दुर्गाणि च ॥ २९० ॥

**व्याख्या**—विजिगीषोः = विजयेच्छुकस्य नृपस्य, साह्यार्थाः = सहायाः, ये सुहृदः = मित्राणि, सम्बन्धिनः = सगोत्राः, बान्धवाः = कुटुम्बिनः, प्रदत्तभृतिकाः = दत्तवेतनाः, अन्ये = अपरे भूपाः

सहायकाः, अंशप्रकल्पिताः= विजितराज्यनियतभागलब्धेच्छुकाः, विपत्काले महात्मभिः= महाशयैः, सः= असौ सहायादिः, एव आश्रयः= शरणस्थलम्, च= पुनः, दुर्गाणि= कोटानि च, शरणस्थानानि भवन्ति ॥ २९० ॥

**हिन्दी**—विजय के लिए चढ़ाई करने वाले राजा की सहायता के लिए उनके मित्र, संबन्धी, बन्धु, जीविका पाने वाले लोग अथवा ऐसे राजे जो विजित राज्य से प्राप्त धन में हिस्सा की इच्छा रखते हों– ये सभी इनके आश्रय में चले जाय अथवा किसी सुदृढ दुर्ग का आश्रय ग्रहण कर लें ॥ २९० ॥

**विजिगीषोरिति**। विजिगीषोः नृपस्य साह्यार्थाः सहायाः ये सुहृदः सम्बन्धिनः बान्धवाश्च प्रदत्तभृतिकाः दत्तवेतनाः। अन्ये भूपाः साहाय्यकारिण इत्यर्थः, अंशप्रकल्पिताः विजयलब्धधनम् अंशेन गृह्णीयुरित्यर्थः, आपत्काले महात्मभिः उन्नताशयैः स सहायादिः एव आश्रयः कथितः तथा दुर्गाणि च आश्रयस्थानानि आपत्सु इत्यर्थः ॥ २९० ॥

**अनिश्चितोपायकार्य्यः समयानुचरो नृपः।**
**द्वैधीभावेन वर्त्तेत काकाक्षिवदलक्षितम्।**
**प्रदर्शयेदन्यकार्यमन्यमालम्बयेच्च वा ॥ २९१ ॥**

**अन्वयः**—अनिश्चितोपायकार्यः समयानुचरः नृपः काकाक्षिवत् अलक्षितं द्वैधीभावेन वर्त्तेत। कदाचित् अन्यकार्यं प्रदर्शयेत् वा अन्यम् आलम्बयेत् ॥ २९१ ॥

**व्याख्या**—अनिश्चितम्= अनिर्धारितम्, उपायस्य= साधनस्य, कार्यम्= कृत्यम्, यस्य सः, अत एव समयानुचरः= कालप्रतीक्षमाणनृपः, काकाक्षिवत्—काकस्य= वायसस्य, अक्षिवत्= नेत्रमिव, अलक्षितम्= अन्यैरतर्कितम्, यथा तथा, द्वैधीभावेन= उभयपक्षीयव्यवहारेण, वर्त्तेत, कदाचित् अन्यकार्यम्= अपरकृत्यम्, प्रदर्शयेत्= प्रदर्शनं कुर्यात्, वा= अथवा, अन्यम्= अपरम्, आलम्बयेत्= अवलम्बनं कुर्यात् ॥ २९१ ॥

**हिन्दी**—समयानुसार काम करने वाला राजा शत्रुसंकट से बचने का जब तक कोई उपाय निश्चित न कर ले तब तक कौवे की एक आँख की तरह राजा दोनों ओर का काम करे। दिखाने के लिए अन्य कार्य तथा करे कुछ और ॥ २९१ ॥

**अनिश्चितेति**। अनिश्चितम् उपायस्य कार्य्यं यस्य सः अत एव समयानुचरः समयं प्रतीक्षमाण-नृपः काकाक्षिवत् काकस्य नेत्रमिव अलक्षितम् अन्यैरतर्कितं यथा तथा द्वैधीभावेन वर्त्तेत, काकस्य एकमेव नेत्रम् उभयनेत्रकार्य्यकारकं किन्तु केनापि न लक्ष्यते तद्वदिति भावः। तथा च कदाचित् अन्यकार्य्यं प्रदर्शयेत् कदाचिद् वा अन्यम् आलम्बयेच्च ॥ २९१ ॥

**सदुपायैश्च सन्मन्त्रैः कार्य्यसिद्धिरथोद्यमैः।**
**भवेदल्पजनस्यापि किं पुनर्नृपतेर्न हि? ॥ २९२ ॥**

**अन्वयः**—अल्पजनस्य सदुपायैः सन्मन्त्रैः अथ उद्यमैः कार्यसिद्धिः भवेत्, नृपतेः पुनः किं न हि ॥ २९२ ॥

**व्याख्या**—अल्पजनस्य= सामान्यालोकस्यापि, सदुपायैः= सत्साधनैः, सन्मन्त्रैः= सद्विचारैरुत्कृष्टमन्त्रबलैर्वा, उद्यमैः= अध्यवसायैः, कार्यसिद्धिः= मनोरथपूर्त्तिः, भवेत्= स्यात्। नृपतेः= राज्ञः, पुनः= भूयः, किं न हि कार्यसिद्धिर्भवेदर्थाद् भवत्येवेति ॥ २९२ ॥

**हिन्दी**—जब कि सामान्य व्यक्ति के भी अच्छे उपाय और अच्छी सलाह तथा चेष्टा से काम में सफलता मिलती हो तो फिर राजा का पूछना ही क्या? ॥ २९२ ॥

**सदुपायैरिति**। अल्पजनस्य इतरस्यापि सदुपायैः सन्मन्त्रैः उत्कृष्टमन्त्रबलैः अथवा उद्यमैः चेष्टाभिः कार्य्यसिद्धिः भवेत्। नृपतेः पुनः किं न हि कार्य्यसिद्धिर्भवेत्? अपितु भवेदेवेत्यर्थः ॥ २९२ ॥

**उद्योगेनैव सिध्यन्ति कार्य्याणि न मनोरथैः।**
**न हि सुप्तमृगेन्द्रस्य निपतन्ति गजा मुखे ॥ २९३ ॥**

**अन्वयः**—उद्योगेन एव कार्याणि सिद्ध्यन्ति, न मनोरथैः। हि सुप्तमृगेन्द्रस्य मुखे गजाः न निपतन्ति ॥ २९३ ॥

**व्याख्या**—उद्योगेन = चेष्टया, एव, कार्याणि = मनोरथानि, सिद्ध्यन्ति = सफलतां यान्ति, न केवलं मनोरथैः = वाञ्छाभिः, सुप्तमृगेन्द्रस्य = प्रसुप्तसिंहस्य, मुखे = आनने, गजाः = हस्तिनः, न = नहि, निपतन्ति = आगच्छन्ति ॥ २९३ ॥

**हिन्दी**—उद्योग करने पर ही किसी भी काम में सफलता मिलती है, न केवल मनोरथ से। क्योंकि सोये हुए सिंह के मुँह में स्वयं हाथी आकर नहीं गिरते ॥ २९३ ॥

**उद्योगेनेति**। उद्योगेन चेष्टया एव कार्य्याणि सिध्यन्ति, मनोरथैः न, हि तथाहि गजाः सुप्तस्य सिंहस्य मुखे न हि निपतन्ति ॥ २९३ ॥

**अयोऽभेद्यमुपायेन द्रवतामुपनीयते।**
**लोकप्रसिद्धमेवैतद्वारि वह्नेर्नियामकम् ॥ २९४ ॥**

**अन्वयः**—अभेद्यम् अयः उपायेन द्रवताम् उपनीयते। एतच्च लोकप्रसिद्धं वारि वह्नेः नियामकम् ॥ २९४ ॥

**व्याख्या**—अभेद्यम् = अखण्डनीयम्, अयः = लोहम्, उपायेन = साधनेन, द्रवताम् = तरलताम्, नीयते = प्राप्यते। एतच्च, लोकप्रसिद्धम् = लोके विख्यातम्, यत्, वारि = सलिलम्, वह्नेः = अग्नेः, नियामकम् = निरोधको भवति ॥ २९४ ॥

**हिन्दी**—ठोस लोहे को भी उपाय से पिघलाया जाता है। लोक में प्रसिद्ध है कि आग को भी पानी से बुताया जाता है ॥ २९४ ॥

**अय इति**। अभेद्यम् अयः लौहम् उपायेन द्रवताम् उपनीयते प्राप्यते, एतच्च लोकप्रसिद्धं यत् वारि जलं वह्नेः नियामकं निवारकम् ॥ २९४ ॥

**उपायोपगृहीतेन तैनेतत् परिशोष्यते।**
**उपायेन पदं मर्ध्नि न्यस्यते मत्तहस्तिनाम् ॥ २९५ ॥**

**अन्वयः**—उपायोपगृहीतेन तेन एतत् परिशोष्यते। उपायेन मत्तहस्तिनां मूर्ध्नि पदं न्यस्यते ॥ २९५ ॥

**व्याख्या**—उपायोपगृहीतेन = साधनस्यावलम्बनेन, तेन = अग्निना, च, एतत् = जलम्, परिशोष्यते = सर्वतोभावेन शुष्कतां नीयते, उपायेन = उद्यमेन, मत्तहस्तिनाम्—मत्तानाम् = प्रमत्तानाम्, हस्तिनाम् = गजानाम्, मूर्ध्नि = मस्तके, पदम् = चरणम्, न्यस्यते = उपस्थाप्यते ॥ २९५ ॥

**हिन्दी**—किन्तु यदि उपाय का अवलम्बन किया जाय तो वही आग उलटे पानी को सुखा देने वाली हो जाती है। उपाय से ही मतवाले हाथी के माथे पर पैर रखा जा सकता है ॥२९५॥

**उपायोपगृहीतेनेति**। उपायोपगृहीतेन तेन वह्निना च एतत् वारि परिशोष्यते परिशेषं नीयते। उपायेन मत्तानां दन्तिनां मूर्ध्नि पदं न्यस्यते ॥ २९५ ॥

**उपायेषूत्तमो भेदः षड्गुणेषु समाश्रयः।**
**कार्य्यौ द्वौ सर्वदा तौ तु नृपेण विजिगीषुणा॥ २९६॥**

**अन्वयः**—उपायेषु भेदः षड्गुणेषु समाश्रयः उत्तमः, विजिगीषुणा तौ द्वौ सर्वदा कार्यौ ॥२९६॥

**व्याख्या**—उपायेषु = उद्यमेषु, भेदः = उपजापः, षड्गणेषु = सामदानादिषु, मध्ये, तथा समाश्रयः = बलवतामाश्रयग्रहणम्, उत्तमः = श्रेष्ठः, विजिगीषुणा = विजयाभिलाषिणा भूपतिना, तौ = पूर्वोक्तौ, द्वौ = भेदसमाश्रयौ, तु, सर्वदा = सततम्, कार्यौ = अनुष्ठेयौ ॥ २९६ ॥

**हिन्दी**—विजयाभिलाषी राजा के लिए शत्रुसेना के बीच फूट डालना तथा सन्धि आदि षड्गुणों से बलवान् आश्रयदाता की शरण लेना उत्तम उपाय है॥२९६॥

**उपायेष्विति**। उपायेषु सामादिषु मध्ये भेदः तथा षड्गुणेषु मध्ये समाश्रयः उत्तमः श्रेष्ठः। विजिगीषुणा नृपेण तौ द्वौ भेदसमाश्रयौ तु सर्वदा कार्य्यौ ॥ २९६ ॥

**ताभ्यां विना नैव कुर्य्यात् युद्धं राजा कदाचन॥ २९७॥**

**अन्वयः**—राजा ताभ्यां विना युद्धं कदाचन नैव कुर्यात् ॥ २९७ ॥

**व्याख्या**—राजा = नृपः, ताभ्याम् = पूर्वोक्ताभ्यां भेदमाश्रयाभ्याम्, विना = विहाय, युद्धम् = समरम्, कदाचन = कस्यामपि अवस्थायाम्, नैव, कुर्यात् = प्रारम्भं कुर्यात् ॥ २९७ ॥

**हिन्दी**—भेद और समाश्रय का सहारा लिये बिना किसी भी स्थिति में राजा युद्ध न करे॥२९७॥

**ताभ्यामिति**। राजा ताभ्यां भेदसमाश्रयाभ्यां विना युद्धं कदाचन नैव कुर्य्यात् ॥ २९७ ॥

**परस्परं प्रातिकूल्यं रिपुसेनपमन्त्रिणाम्।**
**भवेद्यथा तथा कुर्य्यात् तत्प्रजायाश्च तत् स्त्रियाः॥ २९८॥**

**अन्वयः**—रिपुसेनपमन्त्रिणां तत् प्रजायाः तत् स्त्रियाः यथा परस्परं प्रातिकूल्यं भवेत् तथा कुर्यात् ॥ २९८ ॥

**व्याख्या**—रिपूणाम् = शत्रूणाम्, ये सेनपाः = सेनानायकाः, मन्त्रिगणाश्च = सचिववर्गाश्च, तेषां तथा, तत् = तेषाम्, प्रजायाश्च = जनानां मध्ये, तथा तत् = तेषाम्, स्त्रियाः = नार्यश्च, यथा = येन प्रकारेण, परस्परम् = अन्योऽन्यम्, प्रातिकूल्यम् = प्रतिकूलताम्, भवेत् = स्यात्, तथा = तेन प्रकारेण, कुर्यात् = विदध्यात् ॥ २९८ ॥

**हिन्दी**—जिस तरह दुश्मन के सेनापति एवं मन्त्रियों के बीच अनबन हो जाय तथा शत्रुओं की प्रजा एव रानियों के बीच किंवा सेनानायक एवं मन्त्रियों का अपनी सन्तान या स्त्रियों के बीच मतभेद हो जाय, ऐसा काम करना चाहिए॥२९८॥

**परस्परमिति**। रिपूणां ये सेनपाः सेनापतयः मन्त्रिणश्च तेषां तथा तेषां प्रजायाश्च तथा तेषां स्त्रियाश्च यथा परस्पर प्रातिकूल्यं मनोभङ्गः भवेत् तथा कुर्य्यात् ॥ २९८ ॥

उपायान् षड्गुणान् वीक्ष्य शत्रोः स्वस्यापि सर्वदा।
युद्धं प्राणात्यये कुर्य्यात् सर्वस्वहरणे सति॥ २९९॥

**अन्वयः**—शत्रोः स्वस्यापि उपायान् षड्गुणान् सर्वदा वीक्ष्य प्राणात्यये तथा सर्वस्वहरणे सति युद्धं कुर्यात्॥ २९९॥

**व्याख्या**—शत्रोः = रिपोः, स्वस्यापि = आत्मनोऽपि, उपायान् = सामदानादीन्, तथा षड्-गुणान् = सन्धिविग्रहादीन्, सर्वदा = सततम्, वीक्ष्य = अनुचिन्त्य, प्राणात्यये = प्राणविनाशकाले, सर्वस्वहरणे = सर्वधनापहरणकाले, आपतिते सति = समुपस्थिते सति, युद्धम् = समरम्, कुर्यात् = निष्पादयेत्॥ २९९॥

**हिन्दी**—पहले दुश्मन और अपने बीच सामादि उपाय तथा सन्धि आदि षड्गुणों में जो उचित हो उसी का अवलम्बन करे। किन्तु प्राणसंकट या सर्वस्व अपहरण की स्थिति सामने आ जाय तभी युद्ध करे॥ २९९॥

**उपायानिति**। शत्रोः स्वस्य आत्मनः अपि उपायान् सामादीन् तथा षट् गुणान् सन्ध्यादीन् सर्वदा वीक्ष्य प्राणात्यये तथा सर्वस्वहरणे आपतिते सति युद्धं कुर्य्यात्॥ २९९॥

स्त्रीविप्राभ्युपपत्तौ च गोविनाशेऽपि ब्राह्मणैः।
प्राप्ते युद्धे क्वचिन्नैव भवेदपि पराङ्मुखः॥ ३००॥

**अन्वयः**—स्त्रीविप्राभ्युपपत्तौ ब्राह्मणैः गोविनाशेऽपि च प्राप्ते युद्धे क्वचित् पराङ्मुखः नैव भवेत्॥ ३००॥

**व्याख्या**—स्त्रीणाम् = नारीणाम्, विप्राणाम् = ब्राह्मणानाम्, अभ्युपपत्तौ = अनुग्रहार्थम्, तथा ब्राह्मणैः = विप्रैः सह, गोविनाशेऽपि = धेनुसंहारेऽपि उपस्थिते, प्राप्ते = आपतिते, युद्धे = समरे, क्वचित् = कदाचित्, पराङ्मुखः = विमुखः, नैव = नास्त्येव, भवेत् = स्यात्॥ ३००॥

**हिन्दी**—नारी एवं ब्राह्मणों पर अनुग्रह करने के लिए अथवा गो-ब्राह्मण का विनाश उपस्थित होने पर उनकी रक्षा के लिए ठने युद्ध से कभी भी विमुख नहीं होना चाहिए॥ ३००॥

**स्त्रीति**। स्त्रीणां विप्राणाञ्च अभ्युपपत्तौ अनुग्रहार्थं तथा ब्राह्मणैः सह गोविनाशे गोब्राह्मणविनाशे इत्यर्थः, उपस्थिते इत्यर्थः, प्राप्ते युद्धे आपतिते सङ्ग्रामे क्वचित् कदाचित् पराङ्मुखः नैव भवत्॥ ३००॥

युद्धमुत्सृज्य यो याति स देवैर्हन्यते भृशम्॥ ३०१॥

**अन्वयः**—यः युद्धम् उत्सृज्य याति सः देवैः भृशं हन्यते॥ ३०१॥

**व्याख्या**—यः = राजा, युद्धम् = सङ्ग्रामम्, उत्सृज्य = परित्यज्य, याति = गच्छति, सः = राजा, देवैः = देवताभिः, भृशम् = अत्यर्थम्, हन्यते = विनश्यते॥ ३०१॥

**हिन्दी**—ऐसी स्थिति में युद्ध का मेदान छोड़कर जो राजा भाग जाता है, उसका देवगण शीघ्र सर्वनाश करते हैं॥ ३०१॥

**युद्धमिति**। यः युद्धम् उत्सृज्य याति पलायते, सः देवैः भृशम् अत्यर्थं हन्यते॥ ३०१॥

समोत्तमाधमैः राजा त्वाहूतः पालयन् प्रजाः।
न निवर्त्तेत सङ्ग्रामात् क्षत्रधर्ममनुस्मरन्॥ ३०२॥

**अन्वयः**—प्रजाः पालयन् राजा समोत्तमाधमैः आहूतः क्षत्रधर्मम् अनुस्मरन् सङ्ग्रामात् न निवर्त्तेत ॥ ३०२ ॥

**व्याख्या**—प्रजाः = जनाः, पालयन् = रक्षयन्, राजा = भूपः, समैः = तुल्यैः, उतमैः = उत्कृष्टैः, वा = अथवा, अधमैः = नीचैः, अरिभिः, आहूतः = आकारितः सन्, क्षत्रधर्मम् = क्षत्रियाणां कर्त्तव्यम्, अनुस्मरन् = ध्यायन्, सङ्ग्रामात् = युद्धात्, न = नहि, निवर्त्तेत = परावर्त्तेत ॥ ३०२ ॥

**हिन्दी**—प्रजा का पालन करते हुए राजा को यदि समान, अधिक या कम बलशाली दुश्मन ललकार दे तो फिर क्षत्रधर्म का स्मरण करते हुए उसे युद्ध से नहीं लौटना चाहिए ॥ ३०२ ॥

**समेति**। प्रजाः पालयन् राजा समैः समानैः उत्तमैः उत्कृष्टैः वा अधमैः शत्रुभिः आहूतः सन् क्षत्रधर्मम् अनुस्मरन् सङ्ग्रामात् न निवर्त्तेत ॥ ३०२ ॥

**राजानञ्चावियोद्धारं ब्राह्मणञ्चाप्रवासिनम्।**
**भूमिरेतौ निर्गिलति सर्पो विलशयानिव ॥ ३०२ ॥**

**अन्वयः**—सर्पः विलशयान् इव भूमिः अवियोद्धारं राजानम् अप्रवासिनं ब्राह्मणञ्च, एतौ निर्गिलति ॥ ३०२ ॥

**व्याख्या**—सर्पः = विषधरः, विलशयान् = गर्त्तेशयान्, इव = यथा, भूमिः = पृथ्वी, अवियोद्धारम् = सङ्ग्रामविमुखम्, राजानम् = नृपम्, अप्रवासिनम् = प्रवासविमुखम्, ब्राह्मणम् = विप्रम्, एतौ = द्वौ, निर्गिलति = विनाशयति ॥ ३०२ ॥

**हिन्दी**—विल में रहने वाले जीवों को जैसे साँप निगल जाता है वैसे ही संग्राम से विमुख राजे तथा प्रवास से विमुख ब्राह्मणों को यह धरती निगल जाती है ॥ ३०२ ॥

**राजानमिति**। सर्पः विलशयान् गर्त्तेशयान् इव भूमिः अवियोद्धारं युद्धविमुखं राजानम् अप्रवासिनं ब्राह्मणञ्च एतौ निर्गिलति नाशयतीत्यर्थः ॥ ३०२ ॥

**ब्राह्मणस्यापि चापत्तौ क्षत्रधर्मेण वर्त्ततः।**
**प्रशस्तं जीवितं लोके क्षत्रं हि ब्रह्मसम्भवम् ॥ ३०४ ॥**

**अन्वयः**—आपत्तौ क्षत्रधर्मेण वर्त्ततः ब्राह्मणस्यापि जीवितं लोके प्रशस्तम्। हि क्षत्रं ब्रह्मसम्भवम् ॥ ३०४ ॥

**व्याख्या**—आपत्तौ = विपदि, स्ववृत्त्याभावे, क्षत्रधर्मेण = राजन्यवृत्तिमवलम्ब्य, वर्त्ततः = जीवतः, ब्राह्मणस्यापि = विप्रस्यापि, जीवितम् = जीवनम्, लोके = संसारे, प्रशस्तम् = प्रशंसनीयम्। हि = यतः, क्षत्रम् = क्षत्रियम्, ब्रह्मसम्भवम् = विप्रोत्पन्नमेव ॥ ३०४ ॥

**हिन्दी**—विपत्तिकाल में जीविका का अभाव होने पर क्षत्रिय धर्म का अनुसरण करते हुए ब्राह्मणों का जीवित रहना भी संसार में उत्तम माना जाता है। क्योंकि क्षत्रियों की उत्पत्ति भी ब्राह्मणों से ही मानी गई है ॥ ३०४ ॥

**ब्राह्मणस्येति**। आपत्तौ आपदि स्ववृत्त्यनुपपत्तौ इत्यर्थः, क्षत्रधर्मेण क्षत्रियवृत्तिमाश्रित्य इत्यर्थः, वर्त्ततः जीवतः ब्राह्मणस्यापि जीवितं लोके प्रशस्तं, हि यतः क्षत्रं ब्रह्मसम्भवं ब्रह्मोत्पन्नम् अतः ब्राह्मणस्य तत् कर्मकरणं न विरुद्धमिति भावः ॥ ३०४ ॥

अधर्मः क्षत्रियस्यैष यच्छय्यामरणं भवेत्।
विसृजन् श्लेष्मपित्तानि कृपणं परिदेवयन्॥ ३०५॥
अविक्षतेन देहेन प्रलयं योऽधिगच्छति।
क्षत्रियो नास्य तत् कर्म प्रशंसन्ति पुराविदः॥ ३०६॥

**अन्वयः**—शय्यायां मरणं भवेत् एषः क्षत्रियस्य अधर्मः। श्लेष्मपित्तानि विसृजन् कृपणं परिदेवयन् अविक्षतेन देहेन प्रलयं यः अधिगच्छति पुराविदः अस्य तत् कर्म न प्रशंसन्ति॥ ३०५-३०६॥

**व्याख्या**—शय्यायाम् = पर्यङ्के, यत् मरणम् = मृत्युः, भवेत् = स्यात्, एषः क्षत्रियस्य, अधर्मः = पापः। यः = क्षत्रियः, श्लेष्माणि = कफाः, पित्तानि = पलज्वलाः, विसृजन् = परित्यजन्, तथा कृपणम् = कदर्यम्, परिदेवयन् = विलपन् सन्, अविक्षतेन = अखण्डितेन, देहेन = शरीरेण, प्रलयम् = लयं गच्छति, पुराविदः = इतिहासविदः, अस्य = क्षत्रियस्य, तत् = पूर्वोक्तम्, कर्म = शय्यामरणरूपं कृत्यम्, न = नहि, प्रशंसन्ति = प्रशंसनीयो भवति॥ ३०५-३०६॥

**हिन्दी**—बिछावन पर पड़े-पड़े, देह से कफ और पित्त को देह से अलग करते हुए दीन-हीन की तरह रोते-कलपते क्षत्रियों के लिए मरना अधर्म है। शरीर के क्षत-विक्षत हुए बिना जो क्षत्रिय मरता है, इतिहासकार उसकी प्रशंसा नहीं करते॥ ३०५-३०६॥

**अधर्म इति। अविक्षतेनेति।** शय्यायां मरणं भवेत् इति यत् एषः क्षत्रियस्य अधर्मः। यः क्षत्रियः श्लेष्मपित्तानि श्लेष्माणि पित्तानि च विसृजन् त्यजन् तथा कृपणं परिदेवयन् विलपन् सन् अविक्षतेन देहेन प्रलयं नाशं गच्छति, पुराविदः इतिहासज्ञाः पण्डिताः अस्य क्षत्रियस्य तत् कर्म शय्यामरणरूपं न प्रशंसन्ति॥ ३०५-३०६॥

न गेहे मरणं शस्तं क्षत्रियाणां विना रणात्।
शौण्डीराणामशौण्डीरमधर्मं कृपणं हि तत्॥ ३०७॥

**अन्वयः**—क्षत्रियाणां रणात् विना गेहे मरणं न शस्तम्। हि शौण्डीराणां तत् कृपणम् अशौण्डीरम् अधर्मम्॥ ३०७॥

**व्याख्या**—क्षत्रियाणाम् = राजन्यानाम्, रणात् = सङ्ग्रामात्, विना = विहाय, गेहे = गृहे, मरणम् = निधनम्, न = नहि, शस्तम् = प्रशस्तम्। हि = यतः, शौण्डीराणाम् = अभिमानिनां क्षत्रियाणाम्, तत् = पूर्वोक्तम्, कृपणम् = दीनम्, आचरणम्, अशौण्डीरम् = स्वाभिमानविनष्टकरम्, अधर्मम् = पापकरञ्च भवति॥ ३०७॥

**हिन्दी**—एक क्षत्रिय का जंग के मैदान से अलग घर में मरण प्रशंसनीय नहीं होता है। क्योंकि एक स्वाभिमानी वीर की वैसी दीन एवं कायर की मौत पाप समझा गया है॥ ३०७॥

**नेति।** रणात् विना गृहे मरणं न शस्तं न प्रशस्तम्। हि यतः शोण्डीराणां गर्वशालिनां क्षत्रियाणां तत् कृपणं दीनम् आचरणम् अशौण्डीरं गर्वक्षयकरम् अधर्मं पापकरञ्च॥ ३०७॥

रणेष्वकदनं कृत्वा ज्ञातिभिः परिवारितः।
शस्त्रास्त्रैः सुविनिर्भिन्नः क्षत्रियो वधमर्हति॥ ३०८॥

**अन्वयः**—क्षत्रियः ज्ञातिभिः परिवारितः रणेषु अकदनं कृत्वा शस्त्रास्त्रैः सुविनिर्भिन्नः वधम् अर्हति ॥ ३०८ ॥

**व्याख्या**—क्षत्रियः = राजन्यः, ज्ञातिभिः = बान्धवैः, परिवारितः = निवारितः सन्, रणेषु = युद्धेषु, अकदनम् = अहननम्, कृत्वा = विधाय, शस्त्रास्त्रैः = प्रहरणैः, क्षतविक्षतैः, वधम् = हननम्, अर्हति = योग्यो भवति ॥ ३०८ ॥

**हिन्दी**—यदि क्षत्रिय युद्ध में दुश्मनों को मार न सके तो उसका बन्धुओं के साथ क्षत-विक्षत देह से युद्ध में मारा जाना ही उचित है ॥ ३०८ ॥

**रणेष्विति**। क्षत्रियः ज्ञातिभिः स्वगणैः परिवारितः सन् रणेषु सङ्ग्रामेषु अकदनं शत्रोरदलनं कृत्वा शस्त्रास्त्रैः सुविनिर्भिन्नः सुविक्षतः सन् वधम् अर्हति ॥ ३०८ ॥

आहवेषु मिथोऽन्योऽन्यं जिघांसन्तो महीक्षितः।
युद्ध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः ॥ ३०८ ॥

**अन्वयः**—आहवेषु मिथः अन्योऽन्यं जिघांसन्तः परं शक्त्या युद्ध्यमानाः अपराङ्मुखाः स्वर्गं यान्ति ॥ ३०८ ॥

**व्याख्या**—आहवेषु = सङ्ग्रामेषु, मिथः = एकान्ते, अन्योऽन्यम् = परस्परम्, जिघांसन्तः = हन्तुमिच्छन्तः, परम् = अत्यन्तम्, शक्त्या = बलेन, युद्ध्यमानाः = युद्धं कुर्वाणाः, अपराङ्मुखाः = विमुखाः, स्वर्गम् = देवलोकम्, यान्ति = व्रजन्ति ॥ ३०९ ॥

**हिन्दी**—क्षत्रिय राजे युद्ध के मैदान में एक-दूसरे पर घात लगाकर अन्तिम क्षण तक लड़ते हैं और युद्धभूमि से पीछे हटे बिना लड़ मिटते हैं तथा वे स्वर्ग जाते हैं ॥ ३०९ ॥

**आहवेष्विति**। आहवेषु युद्धेषु मिथः एकान्ते अन्योऽन्यं परस्परम् जिघांसन्तः हन्तुमिच्छन्तः परम् अत्यर्थं शक्त्या युध्यमानाः अपराङ्मुखाः अनिवृत्ताः स्वर्गं यान्ति ॥ ३०९ ॥

भर्त्तुरर्थे च यः शूरो विक्रमेद्वाहिनीमुखे।
भयान्न विनिवर्त्तेत तस्य स्वर्गो ह्यनन्तकः ॥ ३१० ॥

**अन्वयः**—यः शूरः अर्थे वाहिनीमुखे विक्रमेत् भयात् न निवर्त्तेत, तस्य अनन्तकः स्वर्गः हि ॥ ३१० ॥

**व्याख्या**—यः = पुरुषः, शूरः = वीरः, भर्त्तुः = स्वामिनः, अर्थे = निमित्तम्, वाहिनीमुखे = सैन्यानामग्रे, विक्रमेत् = पराक्रमं कुर्यात्, भयात् = भीत्याः, न = नहि, निवर्तेत = विमुखो भवेत्, तस्य = राज्ञः, अन्तकः = अन्तहीनः, स्वर्गः = नाकः, मिलति ॥ ३१० ॥

**हिन्दी**—जो वीर पुरुष डरे बिना विक्रमपूर्ण सेना के आगे रहकर स्वामी के निमित्त लड़ मिटता है, उसे अनन्त काल तक स्वर्ग मिलता है ॥ ३१० ॥

**भर्त्तुरिति**। यः शूरः वीरः भर्त्तुः स्वामिनः अर्थे निमित्तं वाहिनीमुखे सेनानामग्रे विक्रमेत् भयात् न निवर्त्तेत च, तस्य अनन्तकः अक्षयः स्वर्गः हिशब्दचावधारणार्थकः ॥ ३१० ॥

आहवे निहतं शूरं न शोचेत कदाचन।
निर्मुक्तः सर्वपापेभ्यः पूतो याति सुलोकताम् ॥ ३११ ॥

**अन्वयः**—आहवे निहतं शूरं कदाचन न शोचेत। सर्वपापेभ्यः निर्मुक्तः पूतः सन् सुलोकतां याति ॥ ३११ ॥

**व्याख्या**—आहवे = सङ्ग्रामे, निहतं = मृतम्, शूरं = वीरं, कदाचन = कदापि, न = नहि, शोचेत = चिन्तेत। यतः, सः = असौ, सर्वपापेभ्यः = सकलेभ्यः अधर्मेभ्यः, निर्मुक्तः = मुक्तः सन्, पूतः सन् = पवित्रो भूत्वा, सुलोकताम् = पुण्यलोके, याति = प्रयाति ॥ ३११ ॥

**हिन्दी**—युद्ध में मारे गये वीरों के लिए कभी भी शोक नहीं मनाना चाहिए, क्योंकि वह सब पापों से छूटकर पवित्र होने के कारण सुन्दर लोक पाता है ॥ ३११ ॥

**आहवे इति**। आहवे युद्धे निहतं शूरं कदाचन न शोचेत, यतः सः सर्वपापेभ्यः निर्मुक्तः रणकर्मणेति भावः, अत एव पूतः सन् सुलोकतां पुण्यवतां लोकमित्यर्थः, याति प्राप्नोति ॥ ३११ ॥

**वराप्सरःसहस्राणि शूरमायोधने हतम्।**
**त्वरमाणाः प्रधावन्ति मम भर्त्ता भवेदिति ॥ ३१२ ॥**

**अन्वयः**—वराप्सरःसहस्राणि त्वरमाणाः आयोधने हतं शूरम् अयं मम भर्त्ता भवेत् इति प्रधावन्ति ॥ ३१२ ॥

**व्याख्या**—वराप्सरःसहस्राणि—वराणाम् = उत्तमानाम्, अप्सरसाम् = स्वर्वेश्यानां, सहस्राणि = दशाधिकशतानि, त्वरमाणाः = सत्वराः, सत्यः, आयोधने = सङ्ग्रामे, हतम् = मृतम्, शूरम् = वीरम्, अयं = एषः, ममः = मदीयः, भर्त्ता = स्वामी, भवेत् = स्यात्, इति = इत्थं, प्रधावन्ति = व्रजन्ति ॥ ३१२ ॥

**हिन्दी**—युद्ध में वीरता के साथ लड़कर मरे हुए योद्धा की ओर हजारों अप्सराएँ तेजी से दौड़ पड़ती हैं और चाहती हैं कि वह हमारा पति बने ॥ ३१२ ॥

**वरेति**। वराणां श्रेष्ठानाम् अप्सरसां सहस्राणि त्वरमाणाः सत्वराः सत्यः आयोधने युद्धे हतं शूरम् अयं मम भर्त्ता भवेदिति प्रधावन्ति ॥ ३१२ ॥

**मुनिभिर्दीर्घतपसा प्राप्यते यत् पदं महत्।**
**युद्धाभिमुखनिहतैः शूरैस्तद् द्रागवाप्यते ॥ ३१३ ॥**

**अन्वयः**—मुनिभिः दीर्घतपसा यत् महत् पदं प्राप्यते तत् युद्धाभिमुखनिहतैः शूरैः द्राक् अवाप्यते ॥ ३१४ ॥

**व्याख्या**—मुनिभिः = ऋषिभिः, दीर्घतपसा—दीर्घेण = महता, तपसा = तपस्यया, यत्, महत् = श्रेष्ठं, पदं = स्थानं, प्राप्यते = लभते, तत् = पदं, युद्धाभिमुखनिहतैः—युद्धे = सङ्ग्रामे, अभिमुखं = सम्मुखम्, यथा स्यात् तथा, निहतैः = मृतैः, शूरैः = वीरैः, द्राक् = झटिति, अवाप्यते = लभते ॥ ३१३ ॥

**हिन्दी**—यति-मुनि लम्बी तपस्या के बाद जिस उत्तम लोक को प्राप्त करते हैं, लड़ाई के मैदान में आमने-सामने लड़कर मारे गये शूरमा शीघ्र ही उस स्थान को पा लेते हैं ॥ ३१३ ॥

**मुनिभिरिति**। मुनिभिः दीर्घेण महता तपसा यत् महत्पदं प्राप्यते, तत् युद्धाभिमुखनिहतैः युद्धे अभिमुखं यथा तथा निहतैः शूरैः द्राक् झटिति अवाप्यते प्राप्यते ॥ ३१३ ॥

**एतत्तपश्च पुण्यञ्च धर्मश्चैव सनातनः।**
**चत्वार आश्रमास्तस्य यो युद्धे न पलायते ॥ ३१४ ॥**

**अन्वयः**—यः युद्धे न पलायते तत् एतत् तपः पुण्यं धर्मं च सनातनः, तस्य चत्वारः आश्रमाः ॥ ३१४ ॥

**व्याख्या**—यः = पुरुषः, युद्धे = सङ्ग्रामे, न = नहि, पलायते = पलायनं कुरुते, तत्त् = तत्, एतत् = सङ्ग्रामात् अपलायनम्, तपः = तपश्चरणम्, पुण्यं = धर्मं, सनातनः = शाश्वतः, धर्मः, तथा चत्वारः = चतुःसंख्यकाः, आश्रमाः = ब्रह्मचर्यादयः, तज्जनितधर्मानुष्ठानम् इत्यर्थः ॥ ३१४ ॥

**हिन्दी**—जो लड़ाई के मैदान से नहीं भागता है उसके लिए वही तप, पुण्य, सनातन धर्म तथा चारों आश्रमों के अनुकूल धर्माचरण होता है ॥ ३१४ ॥

**एतदिति**। यः युद्धे न पलायते, तत्तत् एतत् युद्धादपलायनमित्यर्थः, तपः तपश्चरणं पुण्यं सनातनः नित्यः धर्मः तथा चत्वारः आश्रमाः चतुराश्रमजनितधर्मानुष्ठानमित्यर्थः ॥ ३१४ ॥

**न हि शौर्य्यात् परं किञ्चित् त्रिषु लोकेषु विद्यते।**
**शूरः सर्वं पालयति शूरे सर्वं प्रतिष्ठितम् ॥ ३१५ ॥**

**अन्वयः**—त्रिषु लोकेषु शौर्यात् परं किञ्चित् न हि विद्यते। यतः शूरः सर्वं जनं पालयति शूरे च सर्वं प्रतिष्ठितम् ॥ ३१५ ॥

**व्याख्या**—त्रिषु लोकेषु = त्रिलोकेषु, शौर्यात् = वीर्यात्, परम् = विशिष्टम्, किञ्चित् = किमपि, न हि = नैव, विद्यते = अस्ति। यतः, शूरः = वीरः, सर्वम् = सकलम्, जनम् = लोकम्, पालयति = पोषयति, शूरे = वीरे, च = पुनः, सर्वम् = सकलम्, प्रतिष्ठितम् = स्थापितम् ॥ ३१५ ॥

**हिन्दी**—वीरता से बढ़कर कोई वस्तु उत्तम नहीं है। क्योंकि वीर व्यक्ति ही सबों का पालन करता है और वीर में ही सब कुछ प्रतिष्ठित है ॥ ३१५ ॥

**नेति**। त्रिषु लोकेषु शौर्य्यात् परं किञ्चित् न हि विद्यते, यतः शूरः सर्वं जनं पालयति, शूरे च सर्वं प्रतिष्ठितम् ॥ ३१५ ॥

**चराणामचरा अन्नमदंष्ट्रा दंष्ट्रिणामपि।**
**अपाणयः पाणिमतामन्नं शूरस्य कातराः ॥ ३१६ ॥**

**अन्वयः**—चराणाम् अचराः अन्नं, दंष्ट्रिणाम् अदंष्ट्राः, अन्नं, पाणिमताम् अपाणयः तथा शूरस्य कातराः अन्नम् ॥ ३१६ ॥

**व्याख्या**—चराणाम् = मानवादीनाम्, अचराः = जडाः वृक्षादयः, अन्नम् = भक्ष्यम्, दंष्ट्रिणाम् = सिंहव्याघ्रादीनाम्, अदंष्ट्रा = गोमहीष्यादयः, अन्नम्, पाणिमताम् = करवताम्, अपाणयः = करहीनाः, अन्नम्, तथा, शूरस्य = वीरस्य, कातराः = दीनाः, अन्नम् ॥ ३१६ ॥

**हिन्दी**—चर के लिए अचर भक्ष्य हैं, दाँत वाले जीवों के लिए अदन्त पशु भक्ष्य हैं, हाथ-पैर वाले जीवों के लिए बिना हाथ-पैर वाले जीव तथा वीरों के लिए कायर व्यक्ति भक्ष्य होते हैं ॥ ३१६ ॥

**चराणामिति**। चराणां गोमनुष्यादीनाम् अचराः व्रीहियवादयः अन्नं, दंष्ट्रिणां व्याघ्रादीनाम् अदंष्ट्राः गवादयः अन्नं, पाणिमतां हस्तवताम् अपाणयः पाणिरहिताः अन्नं, तथा शूरस्य वीरस्य कातराः दुर्बलाः अन्नम् ॥ ३१६ ॥

**द्वाविमौ पुरुषौ लोके सूर्य्यमण्डलभेदिनौ।**
**परिव्राड्योगयुक्तो यो रणे चाभिमुखं हतः ॥ ३१७ ॥**

**अन्वयः**—यः योगयुक्तः परिव्राड् यश्च रणे अभिमुखं हतः, इमौ द्वौ पुरुषौ लोके सूर्यमण्डलभेदिनौ भवतः॥ ३१७॥

**व्याख्या**—यः = पुरुषः, योगयुक्तः = योगसम्पनः, परिव्राट् = संन्यासी, यश्च = पुनः, यः पुरुषः, रणे = सङ्ग्रामे, अभिमुखम् = सम्मुखम्, हतः = मृतः, इमौ = एतौ, द्वौ = उभौ, पुरुषौ = जनौ, लोके = संसारे, सूर्यमण्डलभेदिनौ = सूर्यमण्डलादपि उत्कृष्टस्थानं प्राप्तकर्त्तारौ, भवतः = स्तः॥ ३१७॥

**हिन्दी**—योगी और संन्यासी तथा युद्ध में आमने-सामने लड़कर मरने वाला वीर पुरुष; ये दोनों ही संसार में सूर्यलोक का भेदन करने वाले होते हैं॥ ३१७॥

**द्वाविति**। यः योगयुक्तः योगी परिव्राट् चतुर्थाश्रमी यश्च रणे अभिमुखं हतः, इमौ द्वौ पुरुषौ लोके जगति सूर्य्यमण्डलभेदिनौ भवतः सूर्य्यलोकादपि उत्कृष्टं लोकं प्राप्नुत इत्यर्थः॥ ३१७॥

**आत्मानं गोपयेच्छक्तो वधेनाप्याततायिनः।**
**सुविद्यब्राह्मणगुरोर्युद्धे श्रुतिनिदर्शनात्॥ ३१८॥**

**अन्वयः**—श्रुतिनिदर्शनात् युद्धे आततायिनः सुविद्यब्राह्मणगुरोरपि वधेन आत्मानं गोपयेत्॥ ३१८॥

**व्याख्या**—श्रुतिनिदर्शनात् = स्मृतिवचनात्; यथा—'गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्। आततायिनमायान्तं हन्यादेवाविचारयन्'॥ इति। (मनुस्मृतौ) शक्तः = बलवान् जनः समर्थो वा, युद्धे = सङ्ग्रामे, आततायिनः = वधोद्यतस्य; तद्यथा—'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्रदारापहारी च षडेते आततायिनः'॥ सुविद्यस्य = विद्यावतः, ब्राह्मणस्य = विप्रस्य, गुरोः = आचार्यस्य, अपि, वधेन = हननेन, आत्मानं = स्वम्, गोपयेत् = रक्षेत्॥ ३१८॥

**हिन्दी**—संग्राम में सशक्त व्यक्ति आत्मरक्षा के लिए वधोद्यत विद्वान् ब्राह्मण हो या गुरु उसकी हत्या कर देनी चाहिए। यह श्रुति-स्मृतिसम्मत बातें हैं॥ ३१८॥

**आत्मानमिति**। श्रुतिनिदर्शनात् वेदवचनात् शक्तः शक्तिमान् जनः युद्धे आततायिनः वधोद्यतस्य 'आततायी वधोद्यतः' इत्यमरः। सुविद्यस्य ब्राह्मणस्य गुरोरपि वधेन आत्मानं गोपयेत् रक्षेत्। उक्तञ्च मनुना—'गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्। आततायिनमायान्तं हन्यादेवा-विचारयन्'॥ इति। आततायनिश्च उक्ताः यथा—'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्रदारापहारी च षडेते आततायिनः'॥ इति॥ ३१८॥

**आचार्य्या वै कारुणिकाः प्राज्ञाश्चापापदर्शिनः।**
**नैते महाभये प्राप्ते सम्प्रष्टव्याः कथञ्चन॥ ३१९॥**

**अन्वयः**—महाभये प्राप्ते कारुणिकाः अपापदर्शिनः प्राज्ञाः आचार्याः—एते कथञ्चन न सम्प्रष्टव्याः वै॥ ३१९॥

**व्याख्या**—महाभये = विनाशकाले, प्राप्ते = उपस्थिते सति, कारुणिकाः = कृपावन्तः दया-लवो वा, अपापदर्शिनः = पापरहिताः, प्राज्ञाः = प्रकर्षज्ञानवन्तः, आचार्याः = गुरवः, एते, कथञ्चन = कदापि, न = नहि, सम्प्रष्टव्याः = प्रश्नं न कर्त्तव्याः, वै = इति निश्चयेन॥ ३१९॥

**हिन्दी**—शत्रुसंकट उपस्थित हो जाने पर दयालु, निष्पाप आचार्यों से प्रतिकार का उपाय कभी नहीं पूछना चाहिए॥३१९॥

**आचार्य्या इति**। महाभये प्राप्ते उपस्थिते सति कारुणिकाः दयावन्तः अपापदर्शिनः निष्पापाः प्राज्ञाः आचार्य्याः गुरवश्च एते कथञ्चन न सम्प्रष्टव्याः तेषु पृष्टेषु प्रतीकारस्य असम्भवादिति भावः॥३१९॥

**प्रासादेषु विचित्रेषु गोष्ठीषूपवनेषु च।**
**कथा विचित्राः कुर्वाणाः पण्डितास्तत्र शोभनाः॥३२०॥**

**अन्वयः**—विचित्रेषु प्रासादेषु गोष्ठीषु उपवनेषु विचित्राः कथाः कुर्वाणाः पण्डिताः तत्र शोभनाः॥३२०॥

**व्याख्या**—विचित्रेषु = आश्चर्यजनकेषु, प्रासादेषु = राजभवनेषु, गोष्ठीषु = परिषत्सु, तथा उपवनेषु = उद्यानेषु, विचित्राः = विलक्षणाः, कथाः = वार्त्ताः, कुर्वाणाः, पण्डिताः = विज्ञजनाः, तत्र = तस्मिन् स्थानेषु, शोभनाः = कान्तिं लभन्ते॥३२०॥

**हिन्दी**—विलक्षण राजभवनों में, सभा-समितियों में तथा प्रमोदवनों में बैठकर ज्ञानीजन कथा कहते हुए शोभा पाते हैं॥३२०॥

**प्रासादेष्विति**। विचित्रेषु प्रासादेषु राजभवनेषु गोष्ठीषु सभासु तथा उपवनेषु विनोदनस्थानेषु इति भावः। विचित्राः कथाः कुर्वाणाः पण्डिताः तत्र तेषु तेषु प्रदेशेषु इत्यर्थः, शोभनाः शोभां प्राप्नुवन्ति इत्यर्थः॥३२०॥

**बहून्याश्चर्य्यरूपाणि कुर्वाणा जनसंसदि।**
**ईड्यास्ते चोपसन्धाने पण्डितास्तत्र शोभनाः॥३२१॥**

**अन्वयः**—जनसंसदि बहून्याश्चर्यरूपाणि कुर्वाणाः उपसन्धाने ते च पण्डिताः ईड्याः तत्र शोभनाः॥३२१॥

**व्याख्या**—जनसंसदि– जनानाम् = लोकानाम्, संसदि = सभासु, बहूनि = अधिकानि, आश्चर्यरूपाणि = विलक्षणकार्याणि, कुर्वाणाः = सम्पाद्यमाणाः, उपसन्धाने = तत्त्वनिर्णये, ते च पण्डिताः = सुधयः, ईड्याः = पूजनीयाः, तत्र = तस्मिन् विषये, शोभनाः = कान्तिसम्पन्नाः भवन्ति॥३२१॥

**हिन्दी**—जनसभा में बहुत सारे आश्चर्यजनक कार्यों के सम्पादन में दक्ष तथा तत्त्वनिर्णय करने में प्रशंसित पंडितगण शोभा पाते हैं॥३२१॥

**बहूनीति**। जनसंसदि जनानां सभासु बहूनि आश्चर्यरूपाणि कर्माणीत्यर्थः, कुर्वाणाः उपसन्धाने तत्त्वनिर्णये ते च पण्डिताः ईड्याः पूज्याश्च तत्र विषये शोभनाः॥३२१॥

**परेषां विवरज्ञाने मनुष्यचरितेषु च।**
**हस्त्यश्वरथचर्य्यासु खरोष्ट्राजाविकर्मणि॥३२२॥**
**गोधनेषु प्रतोलीषु स्वयंवरमुखेषु च।**
**अन्नसंस्कारदोषेषु पण्डितास्तत्र शोभनाः॥३२३॥**

**अन्वयः**—परेषां विवरज्ञाने मनुष्यचरितेषु हस्त्यश्वरथचर्यासु खरोष्ट्राजाविकर्मणि गोधनेषु प्रतोलीषु स्वयंवरमुखेषु च अन्नसंस्कारदोषेषु ये पण्डिताः तत्र शोभनाः॥३२२-३२३॥

**व्याख्या**—परेषां = रिपूणाम्, विवरज्ञाने = छिन्द्रावबोधे, मनुष्याणाम् = नराणाम्, चरितेषु = चरित्रेषु, च = पुनः, हस्तिनाम् = गजानाम्, अश्वानां = घोटकानां, रथानाञ्च = स्यन्दनानाम्, चर्यासु = प्रक्रियासु, खराणां = वैशाखनन्दनानाम्, उष्ट्राणाम् = क्रमेलकानाम्, अजानाम् = छागानाम्, अवीनां = मेषानां, कर्मणि = कार्याणि, गोधनेषु = धेनुधनेषु, प्रतोलीषु = रथ्यासु, स्वयंवरमुखेषु = स्वयंवरकृत्येषु, तथा अन्नसंस्कारदोषेषु = पाकप्रक्रियाजन्यदोषेषु, ये पण्डिताः = विज्ञाः, ते = तत्र, तस्मिन् विषयेषु, शोभनाः = शोभासम्पन्नाः भवन्ति ॥ ३२२-३२३ ॥

**हिन्दी**—दुश्मनों के दोष जानने में मनुष्यों के चरित्र हाथी, घोड़े और रथ सम्बन्धी गदहा, ऊँट, बकरी, भेड़ संबंधी कामों को जानने में एवं गोधन, गली, स्वयंवर तथा रसोई बनाने संबंधी दोषों को जानने में जो विशेषज्ञ हैं, उनकी शोभा उन्हीं विषयों में होती है ॥ ३२२-३२३ ॥

**परेषामिति । गोधनेष्विति ।** परेषां शत्रूणां विवरज्ञाने छिद्रावबोधे, मनुष्याणां चरितेषु, हस्तिनाम् अश्वानां रथानाञ्च चर्य्यासु प्रक्रियासु, खराणां गर्दभानाम् उष्ट्राणाम् अजानाम् अवीनां मेषाणाञ्च कर्मणि, गोधनेषु प्रतोलीषु रथ्यासु, स्वयंवरमुखेषु स्वयंवरप्रभृतिषु तथा अन्नसंस्कारदोषेषु रन्धनविषयकदोषेषु ये पण्डिताः निपुणाः ते तत्र तेषु तेषु विषयेषु शोभनाः शोभां प्राप्नुवन्तीत्यर्थः ॥ ३२२-३२३ ॥

**पण्डितान् पृष्ठतः कृत्वा परेषां गुणवादिनः ।**
**अरेश्चित्तगुणान् ज्ञात्वा न सैन्ये भङ्गशङ्कया ।**
**विधीयतां तथा नीतिर्यथा वध्यो भवेत् परः ॥ ३२४ ॥**

**अन्वयः**—परेषां गुणवादिनः पण्डितान् पृष्ठतः कृत्वा अरेः चित्तगुणान् ज्ञात्वा भङ्गशङ्कया तथा नीतिः विधीयतां यथा परः वध्यः भवेत् ॥ ३२४ ॥

**व्याख्या**—परेषाम् = रिपूणाम्, गुणवादिनः = गुणप्रशंसकाः, पण्डितान् = विदुषः, पृष्ठतः कृत्वा = समुपेक्ष्य, अरेः = रिपोः, चित्तगुणान् = मनोभावान्, ज्ञात्वा = अवबुध्य, भङ्गशङ्कया = युद्धात् सैन्यभङ्गो मा भूदिति, शङ्कया = सन्दिग्धत्वेन, तथा = तेन प्रकारेण, नीतिः = रणकौशलम्, विधीयताम् = क्रियताम्, यथा = येन प्रकारेण, परः = शत्रुः, वध्यः = हन्तव्यः, भवेत् = स्यात् ॥ ३२४ ॥

**हिन्दी**—शत्रुओं के गुणप्रशसंकों की अवहेलना कर, दुश्मनों के मनोभावों की जानकारी लेकर युद्ध में सेना के पैर उखड जायेंगे—इसकी चिन्ता छोड़कर ऐसी नीति का सहारा लेना चाहिए ताकि दुश्मन मारा जा सके ॥ ३२४ ॥

**पण्डितानामिति ।** परेषां शत्रूणां गुणवादिनः गुणपक्षपातिनः पण्डितान् पृष्ठतः कृत्वा अविगणय्य इत्यर्थः, अरेः शत्रोः चित्तगुणान् मनोभावान् ज्ञात्वा भङ्गशङ्कया रणात् भग्नो मा भूदिति शङ्कया अभिप्रायेण तथा नीतिः विधीयतां यथा परः शत्रु वध्यः भवेत् ॥ ३२४ ॥

**आततायित्वमापन्नो ब्राह्मणः शूद्रवत् स्मृतः ।**
**नाततायिवधे दोषो हन्तुर्भवति कश्चन ॥ ३२५ ॥**

**अन्वयः**—आततायित्वम् आपन्नः ब्राह्मणः शूद्रवत् स्मृतः । आततायिवधे हन्तुः कश्चन दोषः न भवति ॥ ३२५ ॥

**व्याख्या**—आततायित्वम् = वधोद्यतभावम्, आपन्नम् = प्राप्तम्, ब्राह्मणः = विप्रः, शूद्रवत् = वृषल इव, स्मृतः = कथितः। आततायिनः = वधोद्यतब्राह्मणस्य, वधे = हनने, हन्तुः = हननकर्त्तुः, कश्चन = किमपि, दोषः = पापः, न = नहि, भवति ॥ ३२५ ॥

**हिन्दी**—आततायी ब्राह्मण शूद्र की तरह कहा गया है। अतः ऐसे आततायी ब्राह्मण को मारने में मारने वाले को कोई दोष नहीं है ॥ ३२५ ॥

**आततायित्वमिति**। आततायित्वम् आततायिभावमापन्नः प्राप्तः वधोद्यत इत्यर्थः, ब्राह्मणः शूद्रवत् स्मृतः ॥ ३२५ ॥

**उद्यम्य शस्त्रमायान्तं भ्रूणमप्याततायिनम्।**
**निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेत् ॥ ३२६ ॥**

**अन्वयः**—शस्त्रम् उद्यम्य आयान्तम् आततायिनं भ्रूणं निहत्य भ्रूणहा न स्यात्, अहत्वा भ्रूणहा भवेत् ॥ ३२६ ॥

**व्याख्या**—शस्त्रम् = आयुधम्, उद्यम्य = उत्थाप्य, आयान्तम् = आक्रमन्तम्, आततायिनम् = वधोद्यतम्, भ्रूणम् = बालकमपि, निहत्य = हननं कृत्वा, भ्रूणहा = शिशुहन्ता, न = नहि, स्यात् = भवेत्, अहत्वा = तमनिहत्य, भ्रूणहा = शिशुहन्ता, भवेत् ॥ ३२६ ॥

**हिन्दी**—हथियार उठाकर मारने के लिए आते हुए बालक की हत्या कर देने पर भी भ्रूणहा नहीं कहा जा सकता है, प्रत्युत ऐसे आततायी बालक को नहीं मारने से ही भ्रूणहत्या के पाप का भागी समझा जाता है ॥ ३२६ ॥

**उद्यम्येति**। शस्त्रम् उद्यम्य आयान्तम् आततायिनं भ्रूणं बालकमपि निहत्य भ्रूणहा न स्यात् अहत्वा तु भ्रूणहा भवेत् ॥ ३२६ ॥

**उद्यतेषुमथो दृष्ट्वा ब्राह्मणं क्षत्रबन्धुवत्।**
**यो हन्यात् समरे क्रुद्धं युध्यन्तमपलायितम्।**
**ब्रह्महत्या न तस्य स्यादिति धर्मेषु निश्चयः ॥ ३२७ ॥**

**अन्वयः**—यः समरे उद्यतेषुं क्रुद्धं क्षत्रबन्धुवत् युध्यन्तम् अपलायितं ब्राह्मणं दृष्ट्वा हन्यात् तस्य ब्रह्महत्या न स्यात्; धर्मेषु इति निश्चयः ॥ ३२७ ॥

**व्याख्या**—यः = पुरुषः, समरे = सङ्ग्रामे, उद्यतेषुम् = उत्थापितास्त्रं, क्रुद्धम् = अतिकुपितं, क्षत्रबन्धुवत् = क्षत्रियमिव, युध्यन्तम् = रणं कुर्वन्तम्, अपलायितम् = पलायनं विना, ब्राह्मणं = विप्रं, दृष्ट्वा = अवलोक्य, हन्यात् = हननं कुर्यात्, तस्य = जनस्य, ब्रह्महत्या = विप्रहननदोषः, न = नहि, स्यात् = भवेत्, धर्मेषु = धर्मग्रन्थेषु, इति = एवम्, निश्चयः = निर्णयः ॥ ३२७ ॥

**हिन्दी**—लड़ाई के मैदान में क्षत्रियों की तरह डटकर मुकाबला करते हुए हथियार उठाये अत्यन्त कुपित ब्राह्मण की जो हत्या कर देता है, उसे ब्रह्महत्या का पाप नहीं लगता; यह धर्मशास्त्र का सिद्धान्त है ॥ ३२७ ॥

**उद्यतेषुमिति**। यः समरे उद्यतेषुम् उद्यतास्त्रं क्रुद्धं क्षत्रबन्धुवत् क्षत्रियमिव युध्यन्तम् अपलायितं ब्राह्मणं दृष्ट्वा हन्यात्, तस्य ब्रह्महत्या न स्यात्, धर्मेषु धर्मशास्त्रेषु इति निश्चयः ॥ ३२७ ॥

**अपसरति यो युद्धाज्जीवितार्थी नराधमः।**
**जीवन्नेव मृतः सोऽपि भुङ्क्ते राष्ट्रकृतं त्वघम् ॥ ३२८ ॥**

**अन्वयः**—यः नराधमः जीवितार्थी सन् युद्धात् अपसरति, सोऽपि जीवन्नेव मृतः राष्ट्रे कृतम् अघं तु भुङ्क्ते ॥ ३२८ ॥

**व्याख्या**—यः = जनः, नराधमः = पापीपुरुषः, जीवितार्थी = जीवनाभिलाषी सन्, युद्धात् = रणात्, अपसरति = पलायते, सोऽपि = असावपि, जीवन्नेव = जीवितेऽपि, मृतः = हतः सन्, राष्ट्रे = देशे, कृतम् = निष्पादितम्, अघम् = पापम्, तु, भुङ्क्ते = भक्षणं कुरुते ॥ ३२८ ॥

**हिन्दी**—जान बचाने के लिए मैदान छोड़कर भागने वाला नराधम जिन्दा रहकर भी मरा हुआ है। ऐसा आदमी राष्ट्र में किये गये सम्पूर्ण पाप को अकेले भोगता है ॥ ३२८ ॥

**अपसरति इति**। यः नराधमः जीवितार्थी सन् युद्धात् अपसरति सः जीवन्नेव मृतः सन् राष्ट्रे राज्ये कृतम् अघं पापं भुङ्क्ते ॥ ३२८ ॥

मित्रं वा स्वामिनं त्यक्त्वा निर्गच्छति रणाच्च यः।
सोऽन्ते नरकमाप्नोति सजीवो निन्द्यतेऽखिलैः ॥३२९ ॥

**अन्वयः**—यः मित्रं स्वामिनं त्यक्त्वा रणात् निर्गच्छति च सः अन्ते नरकम् आप्नोति, सजीवः अखिलैः निन्द्यते ॥ ३२९ ॥

**व्याख्या**—यः = सैनिकः, मित्रं = सुहृदम्, वा = अथवा, स्वामिनम् = प्रभुम्, त्यक्त्वा = विहाय, रणात् = सङ्ग्रामात्, निर्गच्छति = निस्सरति, च = पुनः, सः = असौ, अन्ते = अन्तिमकाले, नरकम् = निरयम्, आप्नोति = प्राप्नोति, सजीवः = जीवन्नपि, अखिलैः = सकलैः लोकैः, निन्द्यते = निन्दनीयो भवति ॥ ३२९ ॥

**हिन्दी**—लड़ाई के मैदान में जो अपने मित्र और मालिक को छोड़कर पीठ दिखाता है, वह मरणोपरान्त तो नरक जाता ही है, जिन्दा रहकर भी सबकी निन्दा का पात्र होता है ॥ ३२९ ॥

**मित्रमिति**। यः मित्रं वा स्वामिनं त्यक्त्वा रणात् निर्गच्छति पलायते, सः अन्ते देहावसाने नरकम् आप्नोति, सजीवः जीवन् सन् अखिलैः समस्तैः लोकैः निन्द्यते च ॥ ३२९ ॥

मित्रमापद्गतं दृष्ट्वा सहायं न करोति यः।
अकीर्त्तिं लभते सोऽत्र मृतो नरकमृच्छति ॥ ३३० ॥

**अन्वयः**—यः मित्रम् आपद्गतं दृष्ट्वा सहायं न करोति, सः अत्र अकीर्त्तिं लभते, मृतश्च नरकम् ऋच्छति ॥ ३३० ॥

**व्याख्या**—यः = जनः, मित्रम् = सुहृदम्, आपद्गतम् = विपन्नम्, दृष्ट्वा = अवलोक्य, सहायम् = साहाय्यम्, न = नहि, करोति = सम्पादयति, सः = असौ, अत्र = अस्मिन् लोके, अकीर्त्तिम् = अयशम्, लभते = प्राप्नोति, मृतश्च = उपरतश्च, नरकम् = निरयम्, ऋच्छति = प्राप्नोति ॥३३० ॥

**हिन्दी**—जो व्यक्ति विपत्ति में गिरे अपने मित्र को देखकर भी उसकी सहायता नहीं करता है, वह जिन्दा रहकर संसार में निन्दित होता है और मरने पर सीधे नरक में जाता है ॥ ३३० ॥

**मित्रमिति**। यः मित्रम् आपद्गतं विपन्नं दृष्ट्वा सहायं साहाय्यं न करोति, स अत्र इहलोके अकीर्त्तिं लभते, मृतश्च नरकम् आप्नोति ॥ ३३० ॥

**विश्रम्भाच्छरणं प्राप्तं यः सन्त्यजति दुर्मतिः ।**
**स याति नरके घोरे यावदिन्द्राश्चतुर्दशः ॥ ३३१ ॥**

**अन्वयः**—यः दुर्मतिः विश्रम्भात् शरणं प्राप्तं सन्त्यजति, सः चतुर्दशः इन्द्राः यावत् घोरे नरके याति ॥ ३३१ ॥

**व्याख्या**—यः = जनः, दुर्मतिः = दुष्टबुद्धिः, विश्रम्भात् = विश्वासात्, शरणम् = आश्रयम्, प्राप्तम् = आगतं जनम्, सन्त्यजति = परित्यागं करोति, सः = असौ पुरुषः, यावत् कालपर्यन्तम्, चतुर्दशः = चत्वार्यधिकदशः, इन्द्राः = सुरपतयः, तिष्ठन्ति तावत् कालपर्यन्तम्, घोरे = भयङ्करे, नरके = अतिमलिनस्थाने, याति = व्रजति ॥ ३३१ ॥

**हिन्दी**—जो दुर्बुद्धि विश्वासपूर्वक शरण में आये व्यक्ति को लौटा देता है, वह जब तक चौदह इन्द्र बदलते हैं तब तक घोर नरक में निवास करता है ॥ ३३१ ॥

**विश्रम्भादिति** । यः दुर्मतिः विश्रम्भात् विश्वासात् शरणं प्राप्तं जनं सन्त्यजति सः यावत् चतुर्दश इन्द्राः तिष्ठन्तीति शेषः, तावत्कालमित्यर्थः, घोरे नरके याति गच्छति ॥ ३३१ ॥

**सुदुर्वृत्तं यदा क्षत्रं नाशयेयुस्तु ब्राह्मणाः ।**
**युद्धं कृत्वापि शस्त्रास्त्रैर्न तदा पापभागिनः ॥ ३३२ ॥**

**अन्वयः**—यदा तु ब्राह्मणाः शस्त्रास्त्रैः युद्धं कृत्वापि सुदुर्वृत्तं क्षत्रं नाशयेयुः तदा ते पापभागिनः न ॥ ३३२ ॥

**व्याख्या**—यदा = यस्मिन् काले, तु = किन्तु, ब्राह्मणाः = विप्राः, शस्त्रास्त्रैः = प्रहरणैः, युद्धं = समरम्, कृत्वा = सम्पाद्य, अपि = चेत्, सुदुर्वृत्तम् = अतिदुराशयम्, क्षत्रम् = राजन्यम्, नाशयेयुः = विनष्टं कुर्युः, तदा ते, पापभागिनः = अधर्मभागिनः, न = नहि, भवन्ति ॥ ३३२ ॥

**हिन्दी**—युद्ध के मैदान में हथियारों से सुसज्जित ब्राह्मण यदि किसी दुराचारी क्षत्रिय की हत्या करते हैं, तो वे पाप के भागीदार नहीं होते ॥ ३३२ ॥

**सुदुर्वृत्तमिति** । यदा तु ब्राह्मणाः शस्त्रास्त्रैः युद्धं कृत्वा सुदुर्वृत्तम् अतिदुराशयं क्षत्रं क्षत्रियं नाशयेयुः तदा ते पापभागिनः न भवन्तीत्यर्थः ॥ ३३२ ॥

**हीनं यदा क्षत्रकुलं नीचैर्लोकैः प्रपीड्यते ।**
**तदापि ब्राह्मणा युद्धे नाशयेयुस्तु तान् द्रुतम् ॥ ३३३ ॥**

**अन्वयः**—यदा तु हीनं क्षत्रकुलं नीचैः लोकैः प्रपीड्यते, तदापि ब्राह्मणाः युद्धे तान् द्रुतं नाशयेयुः ॥ ३३३ ॥

**व्याख्या**—यदा = यस्मिन् काले, हीनम् = अधमम्, क्षत्रकुलम् = क्षत्रियवंशम्, नीचैः = अधमैः, लोकैः = जनैः, प्रपीड्यते = अभिभूयते, तदापि = तस्मिन्नपि काले, ब्राह्मणाः = विप्राः, युद्धे = रणे, तान् = नीचान्, द्रुतम् = त्वरितम्, नाशयेयुः = विनाशयेयुः ॥ ३३३ ॥

**हिन्दी**—जब क्षत्रियों को कमजोर समझ कर नीच लोग उसे पीड़ित करने लगे तो युद्ध में उन नीचों को विनष्ट करना ब्राह्मणों का कर्त्तव्य होता है ॥ ३३३ ॥

**हीनमिति** । यदा तु हीनं क्षत्रकुलं नीचैः अधमैः लोकैः प्रपीड्यते अभिभूयते, तदापि ब्राह्मणाः युद्धे तान् नीचान् लोकान् द्रुतं शीघ्रं नाशयेयुः ॥ ३३३ ॥

**उत्तमं मान्त्रिकास्त्रेण नालिकास्त्रेण मध्यमम्।**
**शस्त्रैः कनिष्ठं युद्धन्तु बाहुयुद्धं ततोऽधमम्॥ ३३४॥**

**अन्वयः**—मान्त्रिकास्त्रेण युद्धम् उत्तमं, नालिकास्त्रेण मध्यमं, शस्त्रैः कनिष्ठं, बाहुयुद्धं तु ततः अधमम्॥३३४॥

**व्याख्या**—मान्त्रिकास्त्रेण = मन्त्रसिद्धायुधेन, युद्धम् = रणम्, उत्तमम् = श्रेष्ठम्, नालिकास्त्रेण = आग्नेयास्त्रेण, युद्धम्, मध्यमम् = सामान्यम्, शस्त्रैः = प्रहरणैः, युद्धम्, कनिष्ठम् = अधमम्, बाहुयुद्धम् = मल्लयुद्धम्, तु, ततोऽपि = अधमादपि, अधमं भवति॥३३४॥

**हिन्दी**—मंत्रसिद्ध आयुधों से युद्ध उत्तम होता है, आग्नेयास्त्रों से किया गया युद्ध मध्यम कोटि का होता है, सामान्य हथियारों से किया गया युद्ध कनिष्ठ होता है तथा बाहुबल से किया गया युद्ध अधम से भी अधम होता है॥३३४॥

**उत्तममिति**। मान्त्रिकास्त्रेण मन्त्रसिद्धेन अस्त्रेण युद्धम् उत्तमं नालिकास्त्रेण मध्यमं शस्त्रैः कनिष्ठम् अधमं बाहुयुद्धन्तु ततः अधमादपि अधमम्॥३३४॥

**मन्त्रेरितमहाशक्तिबाणाद्यैः　शत्रुनाशनम्।**
**मान्त्रिकास्त्रेण तद्युद्धं सर्वयुद्धोत्तमं स्मृतम्॥ ३३५॥**

**अन्वयः**—मन्त्रेरितमहाशक्तिबाणाद्यैः यत् शत्रुनाशनं तत् मान्त्रिकास्त्रेण युद्धं सर्वयुद्धोत्तमं स्मृतम्॥३३५॥

**व्याख्या**—मन्त्रेण = मन्त्रशक्तिना, ईरितैः = प्रेरितैः, यत् महाशक्तिबाणाद्यैः = मन्त्रशक्तिसम्पन्नशराद्यैः, शत्रूणाम् = रिपूणाम्, नाशनम् = विध्वंसनम्, तत् मान्त्रिकास्त्रेण = मन्त्रबलप्रयुक्तायुधेन, युद्धम् = समरम्, सर्वेषु = सकलेषु, युद्धेषु = रणेषु, उत्तमम् = उत्कृष्टम्, स्मृतम् = कथितम्॥३३५॥

**हिन्दी**—मंत्रो से अभिषिक्त महाशक्तिशाली बाण आदि हथियारों का प्रयोग कर जिस युद्ध में शक्तियों का विनाश किया जाता है, उस युद्ध को मान्त्रिकास्त्र युद्ध कहते हैं तथा यह युद्ध सभी युद्धों में सर्वश्रेष्ठ माना जाता है॥३३५॥

मन्त्रयुद्धमाह-**मन्त्रेति**। मन्त्रेण ईरितैः महाशक्तिबाणाद्यैः यत् शत्रूणां नाशनं तत् मान्त्रिकास्त्रेण युद्धं तच्च सर्वेषु युद्धेषु उत्तमं श्रेष्ठं स्मृतम्॥३३५॥

**नालाग्निचूर्णसंयागाल्लक्ष्ये गोलनिपातनम्।**
**नालिकास्त्रेण तद्युद्धं महात्रासकरं रिपोः॥ ३३६॥**

**अन्वयः**—नालेन अग्निचूर्णसंयोगात् लक्ष्ये गोलनिपातनं तत् नालिकास्त्रेण युद्धं रिपोः महात्रासकरम्॥३३६॥

**व्याख्या**—नालेन = लोहवलयेन, अग्निचूर्णसंयोगात् = स्फोटकचूर्णसम्पर्कात्, लक्ष्ये = शरव्ये, यत् गोलनिपातनम् = गोलाकारज्वलल्लौहपिण्डनिक्षेपम्, तत् नालिकास्त्रेण युद्धम् = आग्नेयास्त्रेण रणम्, रिपोः = शत्रोः, महात्रासकरम् = अतिभयप्रदं भवति॥३३६॥

**हिन्दी**—तोप या बन्दूकों के द्वारा लक्ष्य पर गोले फेंक कर जिसमें युद्ध किया जाता है वह युद्ध शत्रुओं के लिए अति भयंकर होता है॥३३६॥

नालयुद्धमाह– **नालेति**। नालेन अग्निचूर्णसंयोगात् लक्ष्ये लक्षणीये शत्रौ यत् गोलनिपातनं गोलाकारज्वलल्लौहपिण्डनिक्षेपणं तत् नालिकास्त्रेण युद्धं तच्च रिपोः शत्रोः महात्रासकरम् अतिभयङ्करमित्यर्थः ॥ ३३६ ॥

**कुन्तादिशस्त्रसङ्घातै रिपूणां नाशनञ्च यत्।**
**शस्त्रयुद्धन्तु तज्ज्ञेयं नालास्त्राभावतः सदा ॥ ३३७ ॥**

**अन्वयः**—कुन्तादिशस्त्रसङ्घातैः यत् रिपूणां नाशनं च तत् शस्त्रयुद्धं नालास्त्राऽभावतः सदा ज्ञेयम् ॥ ३३७ ॥

**व्याख्या**—कुन्तादीनाम् = प्रासादीनाम्, शस्त्राणाम् = आयुधानाम्, सङ्घातैः = समूहैः, यत्, रिपूणाम् = अरीणाम्, नाशनम् = विध्वंसनम्, तत् शस्त्रयुद्धम् = आयुधसङ्ग्रामम्, सदा = सर्वदा, नालास्त्राणाम् = आग्नेयास्त्राणाम्, अभावतः = सत्ताऽभावे, ज्ञेयम् = बोध्यम् ॥ ३३७ ॥

**हिन्दी**—जिस लड़ाई में आग्नेयास्त्र का अभाव होता है, केवल आयुधों से युद्ध किया जाता है, उसे आयुधयुद्ध कहा जाता है ॥ ३३७ ॥

शस्त्रयुद्धमाह– **कुन्तेति**। कुन्तादीनां शस्त्राणां सङ्घातैः समूहैः यत् रिपूणां शत्रूणां नाशनं तत् शस्त्रयुद्धं सदा नालास्त्राणाम् अभावतः ज्ञेयं नालास्त्रासद्भावे तैरेव योद्धव्यमिति भावः ॥ ३३७ ॥

**कर्षणैः सन्धिमर्माणां प्रतिलोमानुलोमतः।**
**बन्धनैर्घातनं शत्रोर्युक्त्या तद् बाहुयुद्धकम् ॥ ३३८ ॥**

**अन्वयः**—युक्त्या शत्रोः सन्धिमर्माणां कर्षणैः प्रतिलोमानुलोमतः बन्धनैः यत् घातनं तत् बाहुयुद्धम् ॥ ३३८ ॥

**व्याख्या**—युक्त्या = चातुर्येण, शत्रोः = रिपोः, सन्धिमर्माणाम् = दैहिकग्रन्थीनां मर्माणां च, कर्षणैः = उत्पीडनैः, प्रतिलोमानुलोमतः—प्रतिलोमेन = विपरीतेन, अनुलोमतः = स्वाभाविकगत्या च, तथा बन्धनैः = बाहुभिः, कर्षणैः, यत् घातनम् = हननम्, तत् = युद्धम्, बाहुयुद्धम् = मल्लयुद्धम्, कथितम् ॥ ३३८ ॥

**हिन्दी**—चालाकी से देह की जोड़ वाली जगह तथा मर्मस्थान में पीड़ा पहुँचाने के लिए उलटा-सीधा बाँहों को बाँहों से बाँधकर जिसमें लड़ाई की जाती है, उसे बाहुयुद्ध कहते हैं ॥३३९ ॥

बाहुयुद्धमाह– **कर्षणैरिति**। युक्त्या कौशलेन शत्रोः सन्धिमर्माणां सन्धीनां शरीरग्रन्थीनां मर्माणाञ्च कर्षणैः प्रपीडनैः प्रतिलोमानुलोमतः प्रतिलोमेन अस्वाभाविकरीत्या अनुलोमतः स्वभावगत्या च तथा बन्धनैः बाहुभिरिति शेषः, यत् घातनं नाशनं तत् बाहुयुद्धकम् ॥ ३३८ ॥

**वामपाणिकचोत्पीडा भूमौ निष्पेषणं बलात्।**
**मूर्ध्नि पादप्रहरणं जानुनोदरपीडनम् ॥ ३३९ ॥**
**मालूराकारया मुष्ट्या कपाले दृढताडनम्।**
**कफोणिपातोऽप्यसकृत् सर्वतस्तलताडनम्।**
**छलेन युद्धे भ्रमणं नियुद्धं स्मृतमष्टधा ॥ ३४० ॥**

**अन्वयः**—नियुद्धम् अष्टधा स्मृतम्। यथा—वामपाणिकचोत्पीडा, बलात् भूमौ निष्पेषणं, मूर्ध्नि, पादप्रहरणं, जानुना उत्पीडनं, मालूराकारया मुष्ट्या कपोले दृढताडनम्, असकृत् कफोणिपातः, सर्वतः तलेन ताडनं तथा छलेन युद्धे भ्रमणम्॥ ३३९-३४०॥

**व्याख्या**—नियुद्धम् = समरम्, अष्टधा = अष्टप्रकारकम्, स्मृतम् = कथितम्, यथा— वामपाणिना = दक्षिणेतरहस्तेन, कचानाम् = केशानाम्, उत्पीडा = संगृह्य उत्पीडनम्, बलात् = हठात्, भूमौ = पृथिव्याम्, निष्पेषणम् = मर्दनम्, मूर्ध्नि = मस्तके, पादप्रहरणम् = चरणाघातः, जानुना = ऊरुना, उदरपीडनम् = कुक्षिघातनम्, मालूरः = बिल्वफलं, तस्येव, आकारः = आकृतिः, यस्याः तादृश्या, मुष्ट्या = मुष्टिकया, कपोले = गण्डस्थले, दृढताडनम् = कठोराघातः, असकृत् = भूयोभूयः, कफोण्याः = कूर्परयोः, पातः = पृथिव्यां बलात् पातनम्, सर्वतः = सर्वतोभावेन, तलेन = चपेटेन, ताडनम् = प्रहरणम्, तथा छलेन = प्रपञ्चेन, शत्रूणाम्, युद्धे = सङ्ग्रामे, भ्रमणम् = गतागतम्॥ ३३९-३४०॥

**हिन्दी**—बाहुयुद्ध आठ प्रकार का होता है; जैसे— बायें हाथ से बाल पकड़ना, जबर्दस्ती धरती पर पटक कर रगड़ना, माथे पर पैर से चोट करना, घुटने से पेट को दबाना, बेल की तरह मजबूत मुक्के से गाल पर चोट करना, बार-बार केहुनी को बलपूर्वक धरती पर घसीटना, थप्पड़ मारना, कपटपूर्वक शत्रुओं की कमजोर जगहों को देखने के लिए मैदान में घुमाना॥ ३३९-३४०॥

नियुद्धं निरूपयति- **वामेत्यादि**। नियुद्धम् अष्टधा अष्टप्रकारं स्मृतम्। यथा—वामपाणिना वामहस्तेन कचानां केशानाम् उत्पीडा उत्पीडनं धारणमित्यर्थः १, बलात् भूमौ निष्पेषणं दलनं २, मूर्ध्नि शिरसि पादप्रहरणं पदाघातः ३, जानुना उदरपीडनं ४, मालूरः श्रीफलं तस्येव आकारः यस्याः तादृश्या मुष्ट्या कपोले गण्डे दृढताडनं कठिनप्रहारः ५, असकृत् पुनः पुनः कफोण्याः कूर्परयोः पातः भूतले बलात् पातनं ६, सर्वतः सर्वैः प्रकारैः तलेन चपेटेन ताडनं प्रहारः ७, तथा छलेन कापट्येन शत्रूणां रन्ध्रार्थितयेति शेषः, युद्धे भ्रमणम् ८॥ ३३९-३४०॥

**चतुर्भिः क्षत्रियं हन्यात् पञ्चभिः क्षत्रियाधमम्।**
**षड्भिर्वैश्यं सप्तभिस्तु शूद्रं सङ्करमष्टभिः।**
**शत्रुष्वेतानि युञ्जीत न मित्रेषु कदाचन॥ ३४१॥**

**अन्वयः**—चतुर्भिः क्षत्रियं, पञ्चभिः क्षत्रियाधमं, षड्भिः वैश्यं, सप्तभिः तु शूद्रम्, अष्टभिः सङ्करम् हन्यात्। एतानि शत्रुषु युञ्जीत मित्रेषु कदाचन न॥ ३४१॥

**व्याख्या**—चतुर्भिः = नियुद्धप्रकारैः, क्षत्रियम् = क्षत्रम्, प्रयोक्तव्यम्, पञ्चभिः = प्रकारैः, क्षत्रियाधमम् = नीचक्षत्रियम्, षड्भिः वैश्यम् = वणिजम्, सप्तभिः, शूद्रम् = वृषलम्, अष्टभिः सङ्करम् = वर्णसङ्करजातिम्, हन्यात् = घातं कुर्यात्। एतानि = अष्टविधानि नियुद्धानि, शत्रुषु = रिपुषु, युञ्जीत = प्रयुञ्ज्यात्, मित्रेषु = सुहृत्सु, कदाचन = कथमपि, न = नहि, प्रयुञ्ज्यात्॥ ३४१॥

**हिन्दी**—उक्त आठ प्रकार के बाहुयुद्धों के प्रहारों में से चार से क्षत्रियों को, पाँच से नीच क्षत्रियों को, छः से वैश्यों को, सात से शूद्रों को और आठ से संकीर्ण जाति वाले को मारे। इन प्रहारों का प्रयोग दुश्मनों के लिए करे, मित्रों के लिए कदापि नहीं॥ ३४१॥

**चतुर्भिरिति**। चतुर्भिः नियुद्धप्रकारैरिति सर्वत्र शेषः, क्षत्रियं पञ्चभिः क्षत्रियाधमम् अधमक्षत्रियं,

षड्भिः वैश्यं सप्तभिः शूद्रम् अष्टाभिस्तु सङ्करं सङ्कीर्णजातिम् अम्बष्ठादिकं हन्यात्। एतानि अष्टविधानि नियुद्धानि शत्रुषु युञ्जीत प्रयुञ्ज्यात् मित्रेषु कदाचन न॥३४१॥

**नालास्त्राणि पुरस्कृत्य लघूनि च महान्ति च।**
**तत्पृष्ठगांश्च पादातान् गजाश्वान् पार्श्वयोः स्थितान्।**
**कृत्वा युद्धं प्रारभेत भिन्नामात्यबलारिणा॥३४२॥**

**अन्वयः**—लघूनि च महान्ति नालास्त्राणि पुरस्कृत्य पादातान् तत्पृष्ठगान् तथा गजाश्वान् च पार्श्वयोः स्थितान् कृत्वा भिन्नामात्यबलारिणा युद्धं प्रारभेत॥३४२॥

**व्याख्या**—लघूनि = अल्पभारवत्वानि, च = पुनः, महान्ति = महत्तराणि, नालास्त्राणि = आग्नेयास्त्राणि, पुरस्कृत्य = अग्रे कृत्वा, पादातान् = पदगतान्, तत्पृष्ठगान्— तेषाम् = आग्नेयास्त्राणाम्, पृष्ठगामिनः, गजाश्वान् = गजवाहिनः अश्वारोहिणश्च, पार्श्वयोः = उभयोः पक्षयोः, स्थितान्, कृत्वा = विधाय, भिन्नानि = भेदगतानि, अमात्याः = मन्त्रिणः, बलानि = सैन्यानि, च = पुनः, यस्य, तादृशेन, अरिणा = शत्रुणा, सह, युद्धम् = सङ्ग्रामम्, प्रारभेत = प्रारम्भं कुर्यात्॥३४२॥

**हिन्दी**—छोटे-बड़े तोप-बन्दूकों को सेना के आगे रखकर तथा पैदल सेना को पीछे एवं गजारोही और अश्वारोहियों को सेना के दोनों ओर रखकर जिसके मंत्रियों और सेना के बीच फूट पड़ गई हो, ऐसे दुश्मन पर आक्रमण कर दे॥३४२॥

**नालास्त्राणीति**। लघूनि च महान्ति च नालास्त्राणि पूर्वोक्तानि पुरस्कृत्य अग्रे कृत्य पादातान् पदातिवर्गान् तत्पृष्ठगान् तेषां नालास्त्राणां पृष्ठगामिनः तथा गजाश्वान् गजबलानि अश्वबलानि च पार्श्वयोः स्थितान् कृत्वा भिन्नानि भेदं गतानि अमात्याः बलानि च यस्य तादृशेन अरिणा शत्रुणा सह युद्धं प्रारभेत॥३४२॥

**साम्मुख्येन प्रपातेन पार्श्वाभ्यामपयानतः।**
**युद्धानुकूलभूमेस्तु यावल्लाभस्तथाविधम्।**
**सैन्यार्द्धांशेन प्रथमं सेनपैर्युद्धमीरितम्॥३४३॥**

**अन्वयः**—युद्धानुकूलभूमेः यावल्लाभः तथाविधं यथा साम्मुख्येन प्रपातेन च पार्श्वाभ्याम् अपयानतः सेनपैः सैन्यानाम् अर्धांशेन सह प्रथमं युद्धम् ईरितम्॥३४३॥

**व्याख्या**—युद्धानुकूलभूमेः = रणोपयुक्तस्थानस्य, यावल्लाभः = यादृशी प्राप्तिः, तथाविधम् = तादृशम्, यथा, साम्मुख्येन = सम्मुखेन वा पार्श्वारस्वाभ्याम् उभाभ्यां पक्षाभ्याम्, प्रपातेन = आक्रमणेन च, सेनपैः = सेनापतिभिः, सैन्यानाम् = बलानाम्, अर्द्धांशेन = अर्धभागेन, सह, प्रथमम् = प्राथमिकम्, युद्धम् = सङ्ग्रामम्, ईरितम्॥३४३॥

**हिन्दी**—युद्ध के लिए अनुकूल भूमि जहाँ मिले वहाँ उसी के अनुसार कभी सामने से और कभी अगल-बगल से हमला करके या कभी पीछे हटकर सबसे पहले सेनापति अपनी आधी सेना के साथ लेकर युद्ध प्रारम्भ करे, ऐसा कहा गया है॥३४३॥

**सामुख्येनेति**। युद्धानुकूलभूमेः सङ्ग्रामोपयोगिस्थानस्य यावल्लाभः यादृशः लाभः, तथाविधं तादृशं तथा यथा साम्मुख्येन पार्श्वाभ्यां वा प्रापातेन अपयानतः अपसरणेन च सेनपैः सेनापतिभिः सैन्यानाम् अर्द्धांशेन सह प्रथमं युद्धम् ईरितं कथितम्॥३४३॥

**अमात्यगोपितैः पश्चादमात्यैः सह तद्भवेत्।**
**नृपसङ्गोपितैः पश्चात् स्वतः प्राणात्यये च तत्॥ ३४४॥**

**अन्वयः**—पश्चात् अमात्यगोपितैः अमात्यैः सह तत् भवेत्, पश्चात् नृपसङ्गोपितैः तैः ततश्च प्राणात्यये स्वतः॥ ३४४॥

**व्याख्या**—पश्चात् = तदनन्तरम्, अमात्यैः = मन्त्रिभिः, गोपितैः = रक्षितैः, सैन्यैः, अमात्यैः = शत्रूणां मन्त्रिभिः सह, तत् = युद्धम्, भवेत् = स्यात्, पश्चात् = तत्पश्चात्, अमात्यनाशे, नृप-सङ्गोपितैः = भूपसंरक्षितैः, तैः = बलैः, सङ्ग्रामं भवेत्, प्राणात्यये = प्राणविनाशकाले, स्वतः = राजा स्वयम्, युद्धं कुर्यात्॥ ३४४॥

**हिन्दी**—उसके बाद मंत्रियों के अधीन रहने वाली सेना का शत्रुमंत्री के साथ युद्ध होना चाहिए। उसके बाद राजा के अधीन रहने वाली सेना के साथ युद्ध होना चाहिए और प्राणविनाश की स्थिति में राजा स्वयं रणक्षेत्र में उतरे॥ ३४४॥

**अमात्यगोपितैरिति**। पश्चात् अमात्यैः गोपितैः रक्षितैः सैन्यैः अमात्यैः शत्रूणामिति शेषः, सह तत् युद्धं भवेत्। पश्चात् अमात्यनाशे इत्यर्थः, नृपसङ्गोपितैः राजरक्षितैः तैः सैन्यैः युद्धं भवेत् ततश्च प्राणात्यये प्राणनाशसङ्कटे स्वतः स्वयम् अन्येन अगुप्तैरपीत्यर्थः, तत् युद्धं भवेत्॥ ३४४॥

**दीर्घाध्वनि परिश्रान्तं क्षुत्पिपासाहितश्रमम्।**
**व्याधिदुर्भिक्षकरकैः पीडितं दस्युविद्रुतम्॥ ३४५॥**
**पङ्कपांशुजलस्कन्नं व्यस्तं श्वासातुरं तथा।**
**प्रसुप्तं भोजने व्यग्रमभूयिष्ठमसंस्थितम्॥ ३४६॥**
**घोराग्निभयवित्रस्तं वृष्टिवातसमाहतम्।**
**एवमादिषु जातेषु व्यसनैश्च समाकुलम्।**
**स्वसैन्यं साधु रक्षेत्तु परसैन्यं विनाशयेत्॥ ३४७॥**

**अन्वयः**—दीर्घाध्वनि परिश्रान्तं क्षुत्पिपासाहितश्रमं तं व्याधिदुर्भिक्षकरकैः पीडितं दस्युविद्रुतं पङ्कपांशुजलस्कन्नं व्यस्तं तथा श्वासातुरं प्रसुप्तं भोजने व्यग्रम् अभूयिष्ठम् असंस्थितं घोराग्निभयवित्रस्तं वृष्टिवातसमाहतम् एवमादिषु जातेषु व्यसनैः समाकुलं स्वसैन्यं साधु रक्षेत्, तु परसैन्यं विनाशयेत्॥ ३४५-३४७॥

**व्याख्या**—दीर्घाध्वनि—दीर्घे = आयते, अध्वनि = मार्गे, परिश्रान्तम् = अतिक्लान्तम्, क्षुधा = क्षुधया विभुक्ष्या, पिपासया = तृष्णया, आहितः = जनितः, श्रमः = क्लान्तिः, यस्य तथाविधम्, व्याधिभिः = रुग्भिः, दुर्भिक्षैः = अकालैः, करकैः = शिलावृष्टिभिः, च पीडितम् = क्लेशितम्, दस्युभिः = तस्करैः, विद्रुतम् = आक्रान्तम्, पङ्कैः = कर्दमैः, पांसुभिः = रजोभिः, जलैश्च = सलिलैश्च, स्कन्नम् = क्लिन्नम्, व्यस्तम् = उद्विग्नम्, तथा = तेनैव प्रकारेण, श्वासातुरम्—श्वासेन = अधिकश्रमजन्यदीर्घनिःश्वासेन, आतुरम् = अतिव्यग्रम्, प्रसुप्तम् = निद्रितम्, भोजने = अशने, व्यग्रम् = दुःखितम्, अभूयिष्ठम् = अत्यल्पसंख्यकम्, असंस्थितम् = दुर्गतम्, वा, घोरेण = भयङ्करेण, अग्निना = वह्निना, भयेन = भीत्या, वित्रस्तम् = अतिभयाकुलम्, वृष्टिवातसमाहतम्—वृष्टिभिः = वर्षाभिः, वातैश्च = पवनैश्च, समाहतम् = अत्याकुलितम्,

एवमादिषु = इत्थम्भूतेषु, जातेषु = घटनासु, व्यसनैः = विपद्‌भिः, समाकुलम् = अतिव्याकुलम्, स्वसैन्यम् = आत्मबलम्, साधु = सुष्ठुतया, रक्षेत् = रक्षां कुर्य्यात्, परसैन्यं तु = शत्रुबलं तु, विनाशयेत् = विनाशं कुर्य्यात् ॥ ३४५-३४७ ॥

**हिन्दी**—दूर से राह चलकर आने के कारण थकी हुई, भूख-प्यास के मारे परेशान, रोग, अकाल तथा ओलों की मार से पीड़ित, बटमारों से लूटी गई, कीचड़, धूल तथा पानी से लथ-पथ व्याकुल, हाँफती हुई, सोई हुई, खाने में संलग्न सेना की कोई छोटी टुकड़ी दुर्गतिग्रस्त, भयंकर आग की लपटों से डरी हुई, वर्षा तथा आँधी से घबड़ायी हुई, ऐसी-ऐसी दुर्घटनाओं से अत्यन्त व्याकुल बनी हुई अपनी सेना की रक्षा तो करनी ही चाहिए, परन्तु दुश्मन की सेना की अगर यह स्थिति हो तो उसे विनष्ट कर देना चाहिए ॥ ३४५-३४७ ॥

**दीर्घाध्वनीत्यादि**। दीर्घाध्वनि दीर्घे मार्गे परिश्रान्तं क्लान्तं क्षुधा पिपासया च आहितः जनितः श्रमः क्लान्तिर्यस्य तादृशं व्याधिभिः पीडाभिः दुर्भिक्षैः अकालैः करकैः शिलावृष्टिभिश्च पीडितं दस्युभिः विद्रुतम् आक्रान्तं पङ्कैः कर्दमैः पांशुभिः रजोभिः जलैश्च स्कन्नं क्लिन्नं व्यस्तम् उद्विग्नं श्वासातुरं श्वासेन परिश्रमजनितेन दीर्घनिश्वासेन आतुरं कातरं प्रसुप्तं निद्रितं भोजने व्यग्रं क्षुधितमित्यर्थः, अभूयिष्ठं स्वल्पसंख्यकम् असंस्थितं दुर्गतं चञ्चलं वा घोरेण भीषणेन वित्रस्तं भीतं वृष्टिभिर्वातैश्च समाहतम् आकुलितम् एवमादिषु जातेषु घटनासु व्यसनैः वियद्‌भिः समाकुलं स्वसैन्यं साधु सम्यक् रक्षेत् परसैन्यन्तु विनाशयेत् ॥ ३४५-३४७ ॥

**बलस्य व्यसनानीह यान्युक्तानि मनीषिभिः।**
**मुख्यो भेदो हि तेषान्तु पापिष्ठो विदुषां मतः ॥ ३४८ ॥**

**अन्वयः**—मनीषिभिः इह यानि बलस्य व्यसनानि उक्तानि तेषां भेदः मुख्यः पापिष्ठः विदुषां मतः ॥ ३४८ ॥

**व्याख्या**—मनीषिभिः = पण्डितैः, इह = शास्त्रे, यानि, बलस्य = सैन्यस्य, व्यसनानि = दुर्गुणाः, उक्तानि = कथितानि, तेषां मध्ये, तेषाम् = सैन्यानाम्, भेदः = अन्योऽन्यमनोमालिन्यम्, मुख्यः = प्रमुखः, पापिष्ठः = अतिपापः, विदुषाम् = विपश्चिताम्, मतः = विचारः ॥ ३४८ ॥

**हिन्दी**---शास्त्र में विद्वानों ने जितने सेना के विषय में दुःखदायक उपायों को बताया है, उनमें भेद अर्थात् परस्पर फूट डालने को ही मुख्य एवं अत्यन्त पापपूर्ण पंडितों ने माना है ॥३४८ ॥

**बलस्येति**। मनीषिभिः विद्वद्‌भिः इह शास्त्रे यानि बलस्य व्यसनानि दोषाः उक्तानि, तेषां मध्ये तेषां भेदः परस्परं विच्छेदः मुख्यः श्रेष्ठः, पापिष्ठः अतिपापैः विदुषां पण्डितानां मतश्च ॥

**भिन्ना हि सेना नृपतेर्दुःसन्देहा भवत्युत।**
**मौला हि पुरुषव्याघ्र ! किमु नानासमुत्थिता ॥ ३४९ ॥**

**अन्वयः**—हे पुरुषव्याघ्र ! नृपतेः नानासमुत्थिता सेना भिन्ना इह दुःसन्देहा भवति, मौला सेना किमुत ॥ ३४९ ॥

**व्याख्या**—हे पुरुषव्याघ्र = हे नरशार्दूल ! नृपतेः = राज्ञः, नानासमुत्थिता = अनेकविध-समागता, सेना = बलम्, भिन्ना = भेदं, गता, इह = अस्मिन् संसारे, दुःसन्देहा = अतिदुःखदा, भवति = याति, उत = प्रत्युत, मौला = प्राचीना प्रशिक्षिता, सेना = सैन्यम्, किमुत = किमु वक्तव्यम् ॥ ३४९ ॥

**हिन्दी**—हे नरश्रेष्ठ! इस संसार में फूट डाली गई नई सेना भी राजा के लिए दुःखदायिनी बन सकती है तो फिर यदि उसकी प्रशिक्षत सेना के बीच फूट डाली जाय तो ऐसे राजा के दुःख के बारे में क्या कहा जा सकता है॥ ३४९॥

**भिन्नेति**। हे पुरुषव्याघ्र! नृपतेः नानासमुत्थिता विविधप्रकारेण समागता सेना भिन्ना भेदं गता सती इह दुःखदा भवति, मौला सेना किमुत? दुःखदेति किं वक्तव्यमित्यर्थः॥ ३४९॥

**उपायान् षड्गुणान् मन्त्रं शत्रोः स्वस्यापि चिन्तयेत्।**
**धर्मयुद्धैः कूटयुद्धैर्हन्यादेव रिपुं सदा॥ ३५०॥**

**अन्वयः**—शत्रोः स्वस्यापि उपायान् षड्गुणान् मन्त्रं च चिन्तयेत्, तथा धर्मयुद्धैः कूटयुद्धैः वा सदा रिपुं हन्यात्॥ ३५०॥

**व्याख्या**—शत्रोः = रिपोः, स्वस्यापि = आत्मनोऽपि, उपायान् = सामदानादीन्, षड्गुणान् = सन्धिविग्रहादीन्, मन्त्रञ्च = विचारणाञ्च, चिन्तयेत् = विचारयेत्, तथा धर्मयुद्धैः = धर्मसंग्रामैः, वा = अथवा, कूटयुद्धैः = कपटप्रबन्धसङ्ग्रामैः, सदा = सर्वदा, रिपुम् = शत्रुम्, हन्यात् = मारयेत्॥ ३५०॥

**हिन्दी**—राजा हमेशा दुश्मनों के द्वारा अथवा अपने द्वारा किये गये सामादि उपायों की तथा संधि-विग्रह आदि छः गुणों एवं मन्त्रणा का ध्यान रखता हुआ धर्मयुद्ध से या कूटयुद्ध से जैसे भी हो शत्रु का विनाश करे॥ ३५०॥

**उपायानिति**। शत्रोः स्वस्य आत्मनः अपि उपायान् सामादीन् षड्गुणान् सन्ध्यादीन् मन्त्रञ्च चिन्तयेत् तथा धर्मयुद्धैः कूटयुद्धैर्वा सदा रिपुं हन्यादेव॥ ३५०॥

**याने सपादभृत्या तु स्वभृत्यान् वर्द्धयन् नृपः।**
**स्वदेहं गोपयेत् युद्धे चर्मणा कवचेन च॥ ३५१॥**

**अन्वयः**—नृपः याने स्वभृत्यान् सपादभृत्या वर्धयन् युद्धे चर्मणा कवचेन स्वदेहं गोपयेत्॥

**व्याख्या**—नृपः = राजा, याने = प्रयाणकाले, स्वभृत्यान् = निजसेवकान्, सपादभृत्या = चतुर्थांशाधिकेन वेतनेन, वर्धयन् = अनुरञ्जयन्, युद्धे = समरे, चर्मणा = फलकेन, कवचेन = शरीरत्राणेन, स्वदेहम् = आत्मशरीरम्, गोपयेत् = रक्षेत्॥ ३५१॥

**हिन्दी**—शत्रु के ऊपर चढ़ाई करने के समय अपने सैनिकों की तनख्वाह में एक चौथाई वेतन-वृद्धि कर लड़ाई के मैदान में ढाल और कवच से अपने शरीर की रक्षा करे॥ ३५१॥

**याने इति**। नृपः याने युद्धयात्रायां स्वभृत्यान् सपादभृत्या चतुर्थांशाधिकया भृत्या वेतनेन वर्द्धयन् रञ्जयन् युद्धे चर्मणा ढाल इति भाषाप्रसिद्धेन कवचेन शरीरत्राणेन परिच्छदविशेषेण स्वदेहं गोपयेत् रक्षेत्॥ ३५१॥

**पाययित्वा मदं सम्यक् सैनिकान् शौर्यवर्द्धनम्।**
**उत्तेजितांश्च निर्द्वैधान् वीरान् युद्धे नियोजयेत्॥ ३५२॥**

**अन्वयः**—सैनिकान् शौर्यवर्धनं मदं सम्यक् पाययित्वा उत्तेजितान् तथा निर्द्वैधान् वीरान् युद्धे नियोजयेत्॥ ३५२॥

**व्याख्या**—सैनिकान् = सैन्यान्, शौर्यवर्धनम् = वीर्यवृद्धिकरम्, मदम् = सुराम्, सम्यक् =

सुष्ठुतया, पाययित्वा = पानं कारयित्वा, उत्तेजितान् = प्रेरितान्, तथा निर्द्वैधान् = निःसंशयान्, वीरान् = शूरान्, युद्धे = सङ्ग्रामे, नियोजयेत् = नियुक्तं कुर्यात् ॥ ३५२ ॥

**हिन्दी**—अपने सैनिकों को वीरता बढाने वाली शराब पिलाकर उन्हें प्रेरित करने के बाद मरने का जिन्हें कोई भय न हो, ऐसे वीरों को लड़ने के लिए युद्ध में नियुक्त करे ॥३५२ ॥

**पाययित्वेति**। सैनिकान् शौर्य्यवर्द्धनं वीर्य्यवृद्धिकरं मदं सुरां सम्यक् पाययित्वा उत्तेजितान् कृत्वेति शेषः, तथा निर्द्वैधान् निःसंशयान् वीरान् युद्धे नियोजयेत् ॥ ३५२ ॥

**नालिकास्त्रेण खड्गाद्यैः सैनिकः पातयेदरीन्।**
**कुन्तेन सादी बाणेन रथगो गजगोऽपि च ॥ ३५३ ॥**

**अन्वयः**—सैनिकः नालिकास्त्रेण खड्गाद्यैश्च सादी कुन्तेन रथगः तथा गजगः बाणेन अरीन् पातयेत् ॥ ३५३ ॥

**व्याख्या**—सैनिकः = पदातिः, नालिकास्त्रेण = आग्नेयास्त्रेण, च = पुनः, खड्गाद्यैः = करवालाद्यैः, सादी = अश्वारोही, कुन्तेन = फलकेन, रथगः = रथारोही, तथा गजगः = गजारोही, बाणेन = शरेण, अरीन् = शत्रून्, पातयेत् = घातयेत् ॥ ३५३ ॥

**हिन्दी**—पैदल सिपाही तोप, बन्दूक एवं तलवार से, घुड़सवार भाले से, रथी एवं गजारोही सैनिक बाण से शत्रुओं पर प्रहार करें ॥ ३५३ ॥

**नालिकास्त्रेणेति**। सैनिकः पदातिः नालिकास्त्रेण खड्गाद्यैश्च सादी अश्वारूढः कुन्तेन रथगः तथा गजगः गजारूढश्च बाणेन अरीन् पातयेत् ॥ ३५३ ॥

**गजो गजेन यातव्यस्तुरगेण तुरङ्गमः।**
**रथेन च रथो योज्यः पत्तिना पत्तिरेव च।**
**एकेनैकश्च शस्त्रेण शस्त्रमस्त्रेण वास्त्रकम् ॥ ३५४ ॥**

**अन्वयः**—गजेन गजः तुरगेण तुरङ्गमः यातव्यः। रथेन रथः पत्तिना पत्तिः योज्यः। एकेन एकः शस्त्रेण शस्त्रम् अस्त्रेण अस्त्रकम् ॥ ३५४ ॥

**व्याख्या**—गजेन = गजारोहिणा, गजः = गजारोही शत्रुः, तथा तुरगेण = अश्वारोहिणा, तुरङ्गमः = अश्वारूढः शत्रुः, यातव्यः = योद्धव्यः, रथेन = रथिना, रथः = रथारूढः शत्रुः, पत्तिना = पदगामिना, पत्तिः = पदगामी शत्रुः, योज्यः = योजनीयः, तथा एकेन = मात्रैकवीरेण, एकः = अद्वितीयः, योज्यः, शस्त्रेण = प्रहरणेन, शस्त्रम् = शस्त्रधारी, अस्त्रेण = अस्त्रधारीवीरेण, अस्त्रकम् = अस्त्रधारिणम्, अवरोधनीयमिति ॥ ३५४ ॥

**हिन्दी**—गजारोही गजारोही से, अश्वारोही अश्वारोही से, रथी रथी से, पैदल पैदल से युद्ध करे और अकेला अकेले से, शस्त्र वाला शस्त्रधारी से तथा अस्त्र वाला अस्त्र वाले के साथ युद्ध करे ॥ ३५४ ॥

**गज इति**। गजेन गजारूढेन गजः गजारूढः रिपुः, तथा तुरगेण अश्वारूढेन तुरङ्गमः अश्वारूढः रिपुः यातव्यः योद्धव्यः। रथेन रथिना इत्यर्थः, रथः रथी पत्तिना पदातिना पत्तिः पदातिः रिपुः योज्यः योजनीयः। तथा एकेन वीरेण एकः योज्यः शस्त्रेण शस्त्रम् अस्त्रेण च अस्त्रकं निवारणीयमिति शेषः ॥३५४ ॥

न च हन्यात् स्थलारूढं न क्लीबं न कृताञ्जलिम्।
न मुक्तकेशमासीनं न तवास्मीति वादिनम्॥ ३५५॥
न सुप्तं न विसन्नाहं न नग्नं न निरायुधम्।
नायुद्ध्यमानं पश्यन्तं युद्ध्यमानं परेण च॥ ३५६॥
पिबन्तं न च भुञ्जानमन्यकार्य्याकुलं न च।
न भीतं न परावृत्तं सतां धर्ममनुस्मरन्॥ ३५७॥

**अन्वयः**—सतां धर्मम् अनुस्मरन् स्थलारूढं न क्लीबं न कृताञ्जलिं न मुक्तकेशं न आसीनं न तवास्मीति वादिनं न सुप्तं न विसन्नाहं न नग्नं निरायुधं न अयुद्ध्यमानं न पश्यन्तं न परेण युद्ध्यमानं न पिबन्तं व भुञ्जानं न अन्यकार्येषु आकुलं न भीतं न परावृत्तं न च हन्यात्॥ ३५५-२५७॥

**व्याख्या**—सताम् = सज्जनानाम्, धर्मम् = धर्मयुद्धम्, अनुस्मरन् = स्मरणं कुर्वन्, जनः, स्थलारूढम् = भयाक्रान्तेन कमपि स्थलमाश्रितम्, न = नहि, क्लीबम् = नपुंसकम्, न = नहि, कृताञ्जलिम् = बद्धाञ्जलिपुटम्, न = नहि, मुक्तकेशम्—मुक्तम् = स्खलितम्, केशम् = कचबन्धनम्, यस्य तम्, न = नहि, आसीनम् = उपविष्टम्, न = नहि, तव = भवतः, अस्मि = अहं भवामि, इति वादिनम् = एवं कथयन्तम्, न = नहि, सुप्तम् = निद्रितम्, न = नहि, विसन्नाहम् = अबद्धपरिकरम्, न = नहि, नग्नम् = वस्त्रहीनम्, न = नहि, निरायुधम् = प्रहरणरहितम्, न = नहि, अयुद्ध्यमानम् = युद्धं न कुर्वाणम्, न = नहि, पश्यन्तम् = पश्यकम् अथवा दर्शकम्, न = नहि, परेण = अन्येन सह, युद्ध्यमानम् = युद्धं कुर्वाणम्, न = नहि, पिबन्तम् = किमपि पानं क्रियमाणम्, न = नहि, भुञ्जानं = भोजनं क्रियमाणम्, न = नहि, अन्यकार्येषु = भिन्नकर्मसु, आकुलम् = व्यस्तम्, न = नहि, भीतम् = भयाक्रान्तम्, न = नहि, परावृत्तम् = विमुखञ्च, न = नहि, हन्यात्॥

**हिन्दी**---सज्जनों के धर्मयुद्ध का ख्याल रखते हुए सैनिक किसी भगेडू को तथा हिजड़ा, हाथ जोड़े हुए, खुले बाल वाले, बैठे हुए, 'मैं आपके अधीन हूँ' ऐसा कहने वाले, सोये हुए, लड़ाई योग्य कपड़े न पहने हुए, नंगे, निहत्थे, नहीं लड़ते हुए, दर्शक, पानी पीते हुए या खाते हुए, किसी काम में व्यस्त, डरे हुए तथा युद्ध के मैदान से भागे सिपाहियों पर प्रहार नहीं करना चाहिए॥ ३५५-३५७॥

**नेत्यादि**। सतां साधूनां धर्मं युद्धधर्ममनुस्मरन् जनः स्थलारूढं भयेन कमपि देशम् आश्रितं न, क्लीबं न, कृताञ्जलिं बद्धाञ्जलिपुटं न, मुक्तकेशं स्खलितं केशबन्धं न, आसीनम् उपविष्टं न, तथा तव अस्मि अहं तव अधीनः भवामीति वादिनं, सुप्तं निद्रितं न, विसन्नाहम् अबद्धपरिकरं न, नग्नं न, निरायुधं न आयुधरहितं न, अयुध्यमानं न, पश्यन्तं दर्शकं न, परेण अन्येन सह युध्यन्तंन, पिबन्तं न, भुञ्जानं न, अन्यकार्य्येषु आकुलं न, भीतं न, परावृत्तं विमुखञ्च न हन्यात्॥३५५-३५७॥

वृद्धो बालो न हन्तव्यो नैव स्त्री केवलो नृपः।
यथायोग्यं तु संयोज्यं निघ्नन् धर्मो न हीयते॥३५८॥

**अन्वयः**—वृद्धः बालः न हन्तव्यः तथा स्त्री केवलः नृपः न हन्तव्यः। यथायोग्यं तु संयोज्यं निघ्नन् धर्मः न हीयते॥ ३५८॥

**व्याख्या**—वृद्धः = जराजीर्णः, बालः = बालकश्च, न = नहि, हन्तव्यः = घातव्यः, तथा, स्त्री = नारीलोकः, केवलः = निःसहायः, नृपः = राजा, नैव = कथमपि नहि, तु = किन्तु, यथायोग्यम् = योग्यतानुसारेण, संयोज्य = मिलित्वा, निघ्नन् = हनन्, जनः, धर्मः = धर्मात्, न = नहि, हीयते = क्षीयते ॥ ३५८ ॥

**हिन्दी**—वृद्ध, बालक, औरत तथा असहाय राजा को नहीं मारना चाहिए। योग्यतानुसार व्यवहार करके उन्हें अपने अधीन कर लेना धर्मच्यूत नहीं कहा जा सकता ॥ ३५८ ॥

**वृद्ध इति**। वृद्धः बालः शिशुश्च न, तथा स्त्री स्त्रीलोकः तथा केवलः निःसहायः नृपश्च न हन्तव्यः। यथायोग्यं संयोज्य वीरभावेन मिलित्वा निघ्नन् जनः धर्मात् न हीयते ॥ ३५८ ॥

**धर्मयुद्धे तु कूटे वै न सन्ति नियमा अमी।**
**न युद्धं कूटसदृशं नाशनं बलवद्रिपोः ॥ ३५९ ॥**

**अन्वयः**—धर्मयुद्धे तु अमी नियमाः वै सन्ति, कूटे न। बलवतः रिपोः कूटसदृशं युद्धं नाशनं न अस्ति ॥ ३५९ ॥

**व्याख्या**—धर्मयुद्धे = धर्मिकयुद्धे, अमी = पूर्वोक्ताः, नियमाः = व्यवहाराः, वै = निश्चयेन, बोद्धव्याः, सन्ति = भवन्ति, कूटे = कपटयुद्धे, अमी नियमाः न सन्ति। बलवतः = शक्तिशालिनः, रिपोः = शत्रोः, कूटसदृशम् = कूटयुद्धतुल्यम्, नाशनम् = विनष्टकरणोपायः, अन्यः न अस्ति ॥३५९ ॥

**हिन्दी**—ऊपर बनाये गये नियम केवल धर्मयुद्ध के लिए हैं, कूटयुद्ध के लिए नहीं। बलवान् शत्रु को विनष्ट करने के लिए कूटयुद्ध के अलावा कोई दूसरा उपाय भी नहीं है ॥ ३५९ ॥

**धर्मयुद्धे इति**। धर्मयुद्धे तु पूर्वोक्तनियमः बोद्धव्य इति शेषः, कूटे कपटमध्ये तु युद्धे अमी नियमाः न सन्ति। बलवतः रिपोः शत्रोः कूटयुद्धसदृशं नाशनं नाशोपायः न अस्तीति शेषः ॥३५९ ॥

**रामकृष्णेन्द्रादिदेवैः कूटमेवादृतं पुरा।**
**कूटेन निहतो बालिर्यवनो नमुचिस्तथा ॥ ३६० ॥**

**अन्वयः**—पुरा रामकृष्णेन्द्रादिदेवैश्च कूटमेव आदृतम्। कूटेन बालिः, यवनः तथा नमुचिः निहतः ॥ ३६० ॥

**व्याख्या**—पुरा = प्राचीनकाले, रामेण = दशरथपुत्रेण, कृष्णेन = वासुदेवेन, इन्द्रादिदेवैश्च = सुरपतिप्रभृतिभिः देवैः, कूटमेव = कपटयुद्धमेव, आदृतम् = अङ्गीकृतम्, यथा कूटेन = कपट-युद्धेन, रामेण, बालिः = वानरराजः, निहतः = मारितः, कृष्णेन, यवनः = यवनासुरः, निहतः, इन्द्रेण, नमुचिः = एतदाख्यदैत्यः निहतः ॥ ३६० ॥

**हिन्दी**—प्राचीन काल में राम, कृष्ण तथा इन्द्रादि देवताओं ने भी बलवान् असुरों के साथ लड़ने में कूटयुद्ध का ही आश्रय लिया था और कूटयुद्ध के द्वारा ही उन सबों ने क्रमशः बालि, कालयवन तथा नमुचि नामक दैत्य का विनाश किया था ॥ ३६० ॥

**रामेति**। पुरा पूर्वस्मिन् काले रामेण कृष्णेन इन्द्रादिदेवैश्च कूटमेव आदृतं यथा कूटेन कपटेन युद्धेन बालिः निहतः रामेणेति शेषः, यवनः निहतः कृष्णेनेति शेषः, नमुचिः निहतः इन्द्रेणेति शेषः ॥ ३६० ॥

प्रफुल्लवदनेनैव तथा कोमलया गिरा।
अङ्गीकृतापराधेन सेवादाननतिस्तवैः ॥ ३६१ ॥
उपकारैः स्वाशयेन दिव्यैर्विश्वासयेत् परम्।
क्षुरधारेण मनसा रिपोश्छिद्रं सुलक्षयेत्॥ ३६२ ॥

**अन्वयः**—प्रफुल्लवदनेन तथा कोमलया गिरा अङ्गीकृतापराधेन सेवादाननतिस्तवैः उपकारैः स्वाशयेन दिव्यैः परं विश्वासयेत् । परन्तु क्षुरधारेण मनसा रिपोः छिद्रं सुलक्षयेत् ॥ ३६१-३६२ ॥

**व्याख्या**—प्रफुल्लेन = प्रसन्नेन, वदनेन = मुखेन, तथा कोमलया = मधुरया, गिरा = वाचा, अङ्गीकृतेन = स्वीकृतेन, अपराधेन = दोषेन, सेवया = सुश्रूषया, दानेन = प्रदानेन, नत्या = अवतनभावेन, स्तवेन = स्तुत्या, उपकारैः = उपकृतैः, स्वाशयेन = शोभनविचारेण, दिव्यैः = शपथैः, परम् = रिपुम्, विश्वासयेत् = विश्वासमानयेत्, परन्तु, क्षुरधारेण = असिधारेण, मनसा = चित्तेन, रिपोः = शत्रोः, छिद्रम् = दोषम्, सुलक्षयेत् = सुष्ठुतया अवलोकयेत् ॥ ३६१-३६२ ॥

**हिन्दी**—खुशमिजाज होकर मीठी वाणी से, अपना अपराध कबूल करने से, सेवा से, कुछ देने से, झुककर प्रणाम करने से, प्रशंसा करने से, उपकार करने से, अच्छा भावप्रदर्शन करने से तथा शपथ खाने से शत्रु का विश्वास जीत ले और भीतर मन में तलवार की धार के समान दुश्मन के विनाश का अवसर ढूँढ़ता रहे, ताकि मौका मिलते ही उसे मार गिराये ॥३६१-३६२

**प्रफुल्लेति। उपकारैरिति**। प्रफुल्लेन प्रसन्नेन वदनेन, कोमलया गिरा वाचा, अङ्गीकृतेन स्वीकृतेन अपराधेन दोषेण, सेवया दानेन नत्या प्रणामेन स्तवेन गुणकीर्तनेन उपकारैः हितानुष्ठानैः स्वाशयेन सुष्ठुभावेन आशयेन तथा दिव्यैः शपथैः परं शत्रुं विश्वासयेत् परन्तु क्षुरधारेण मनसा रिपोः शत्रोः छिद्रं दोषं सुलक्षयेत् ॥३६१-३६२ ॥

अवमानं पुरस्कृत्य मानं कृत्वा तु पृष्ठतः।
स्वकार्य्यं साधयेत् प्राज्ञः कार्य्यध्वंसो हि मूर्खता॥ ३६३ ॥

**अन्वयः**—प्राज्ञः अवमानं पुरस्कृत्य पृष्ठतः मानं कृत्वा स्वकार्यं साधयेत् । हि कार्यध्वंसः एव मूर्खता भवति ॥ ३६३ ॥

**व्याख्या**—प्राज्ञः = बुद्धिमान् व्यक्तिः, अवमानम् = अपमानम्, पुरस्कृत्य = अग्रे कृत्वा, पृष्ठतः = पश्चात्, मानम् = सम्मानम्, कृत्वा अर्थात् मानापमानम् अविगणय्य, स्वकार्यम् = स्वकीयकृत्यम्, साधयेत् = सम्पादयेत् । हि = यतः, कार्यध्वंसः = कार्यविनाशः, एव मूर्खता = अज्ञता, भवति ॥ ३६३ ॥

**हिन्दी**—बुद्धिमान् व्यक्ति अपने मानापमान की चिन्ता किये बिना अपना काम पूरा करता है। क्योंकि काम बिगाड़ना सबसे बड़ी मूर्खता होती है ॥ ३६३ ॥

**अवमानमिति**। प्राज्ञः पण्डितः जनः अवमानं पुरस्कृत्य अग्रेकृत्य स्वीकृत्येत्यर्थः, पृष्ठतः पश्चात् मानं कृत्वा मानमविगणय्य इत्यर्थः, स्वकार्य्यं साधयेत्, हि यतः कार्य्यध्वंस एव मूर्खता भवति ॥ ३६३ ॥

मञ्चासीनः शतानीकः सेनाकार्य्यं विचिन्तयन्।
सदैव व्यूहसङ्केतवाद्यशब्दान्तवर्त्तिनः ॥ ३६४ ॥
सञ्चरेयुः सैनिकाश्च राजराष्ट्रहितैषिणः।

**भेदितां शत्रुणा दृष्ट्वा स्वसेनां घातयेच्च ताम्॥ ३६५॥**

**अन्वयः**—मञ्चासीनः शतानीकः सेनाकार्य्यं विचिन्तयन् राजराष्ट्रहितैषिणः सैनिकाः व्यूहसङ्केतवाद्यशब्दान्तवर्त्तिनः सदैव सञ्चरेयुः। ततश्च शत्रुणा भेदितां स्वसेनां दृष्ट्वा तां घातयेत्॥ ३६४-३६५॥

**व्याख्या**—मञ्चासीनः= उच्चासनासीनः, शतानीकः= शतसंख्यकसेनापरिवृतः राजा, सेना-कार्यम्= बलानां कृत्यम्, विचिन्तयन्= चिन्तां कुर्वन्, राजराष्ट्रहितैषिणः= नृपदेशशुभेच्छुकाः, सैनिकाः= सुविश्वस्ता इति, व्यूहस्य= सेनारचनायाः, यः सङ्केतवाद्यशब्दः= वाद्ययन्त्रस्येङ्गितशब्दः, तस्य, अन्तेवर्त्तिनः= तदनुसारेण, सदैव= सर्वदा, सञ्चरेयुः= इतस्ततः भ्रमणं कुर्युः। ततश्च, शत्रुणा = रिपुणा, भेदिताम्= मनोमालिन्यं गताम्, स्वसेनां= स्वबलाम्, दृष्ट्वा= अवलोक्य, ताम्= स्वसेनाम्, घातयेत्= विनष्टं कुर्य्यात्॥ ३६४-३६५॥

**हिन्दी**—सैकड़ों सेना के स्वामी राजा किसी ऊँचे आसन पर बैठकर अपनी सेना के कामों का अनुचिन्तन करे। सैन्यव्यूह के वाद्ययन्त्रों के द्वारा दिये गये संकेतों के अनुसार उसके भीतर रहकर काम करते हुए राजा राष्ट्र की हितैषी सेनाओं के बीच घूमता रहे। यदि यह समझे कि उसकी सेना में शत्रुओं ने फूट डाल दी है तो उस विद्रोही सेना को वह तुरन्त विनष्ट करदे॥

**मञ्चेति। सञ्चरेयुरिति**। मञ्चासीनः पर्य्यङ्कगतः शतानीकः शतसंख्यकसेनापरिवृतः राजा सेनाकार्य्यं सेनानां कार्य्यम् अनुरागापरागजनितमित्यर्थः, विचिन्तयेत्। राजराष्ट्रहितैषिणः सैनिकाः सुविश्वस्ता इति भावः, व्यूहस्य यः सङ्केतवाद्यशब्दः तस्य अन्ते वर्त्तिनः तदनुसारिण इत्यर्थः, सदा सञ्चरेयुः अपरक्तसैनिककार्य्यानुसन्धानार्थमिति भावः, ततश्च शत्रुणा भेदितां स्वसेनां दृष्ट्वा तां स्वसेनां घातयेच्च नाशयेदपि॥ ३६४-३६५॥

**प्रत्यग्रे कर्मणि कृते यौधैर्दद्याद्धनं च तान्।**
**पारितोष्यञ्चाधिकारं क्रमतोऽर्हं नृपः सदा॥ ३६६॥**

**अन्वयः**—योधैः प्रत्यग्रे कर्मणि कृते नृपः सदा तान् क्रमतः अर्हं पारितोष्यं धनम् अधिकारञ्च दद्यात्॥ ३६६॥

**व्याख्या**—योधैः= सैनिकैः, प्रत्यग्रे= अभिनवे, कर्मणि= कृत्ये, कृते सति= सम्पादिते सति, नृपः= राजा, सदा= सर्वदा, तान्= योद्धान्, क्रमतः= यथाक्रमम्, अर्हम्= योग्यम्, परितोष्यम् = पारितोषिकम्, धनम्= वित्तम्, अधिकारञ्च= स्वत्वञ्च, दद्यात्= प्रयच्छेत्॥ ३६६॥

**हिन्दी**—राजा सैनिकों द्वारा कोई नया उत्कृष्ट पराक्रम संबंधी काम किये जाने पर उन्हें योग्य पारितोषिक रूप में धन तथा अधिकार प्रदान करे॥ ३६६॥

**प्रत्यग्रे इति**। योधैः प्रत्यग्रे अभिनवे कर्मणि कृते सति नृपः सदा तान् योधान् तान् इति कर्मविवक्षया द्वितीया तेभ्यः इत्यर्थः, क्रमतः यथाक्रमम् अर्हं योग्यं पारितोष्यं धनम् अधिकारञ्च दद्यात्॥ ३६६॥

**जलान्नतृणसंरोधैः शत्रून् सम्पीड्य यत्नतः।**
**पुरस्ताद्विषमे देशे पश्चात् हन्यात्तु वेगवान्॥ ३६७॥**

**अन्वयः**—वेगवान् पुरस्तात् जलान्नतृणसंरोधैः यत्नतः शत्रून् सम्पीड्य पश्चात् विषमे देशे हन्यात्॥ ३६६॥

**व्याख्या**—वेगवान् = क्षिप्रः सन्, पुरस्तात् = अग्रतः, जलानाम् = सलिलानाम्, अन्नानाम् = धान्यानाम्, तृणानाम् = शादानाम्, संरोधैः = सुष्ठु अवरोधैः, यत्नतः = प्रयासपूर्वकेण, शत्रून् = रिपून्, सम्पीड्य = सम्यक्प्रकारेण क्लेशं दत्त्वा, विषमे देशे = कठिनरणभूमौ, हन्यात् = घातयेत् ॥ ३६७ ॥

**हिन्दी**—पहले पानी, अग्नि, घास आदि को शत्रुसेना के पास जाने से रोककर प्रयत्नपूर्वक उसे कष्ट पहुँचाये। बाद में रणभूमि में शत्रुसेना पर वेग के साथ आक्रमण कर उसे विनष्ट कर दे ॥ ३६७ ॥

**जलेति**। वेगवान् त्वरावान् सन् पुरस्तात् अग्रतः जलानाम् अन्नानां तृणानाञ्च संरोधैः सम्यक् निरोधैः यत्नतः शत्रून् सम्पीड्य पश्चात् विषमे देशे रणभूमौ इत्यर्थः हन्यात् ॥ ३६७ ॥

**कूटस्वर्णमहादानैर्भेदयित्वा द्विषद्बलम्।**
**नित्यविश्रम्भसंसुप्तं प्रजागरकृतश्रमम् ॥ ३६८ ॥**
**विलोभ्यापि परानीकमप्रमत्तो विनाशयेत्।**
**तत्सहायबलं नैव व्यसनाप्तमपि क्वचित् ॥ ३६९ ॥**

**अन्वयः**—कूटस्वर्णमहादानैः द्विषद्बलं विलोभ्य भेदयित्वा नित्यविश्रम्भसंसुप्तं प्रजागरकृतश्रमं शत्रुभयात् निद्रारहितं परानीकं विनाशयेत्। व्यसनाप्तम् अपि तस्य सहायबलं क्वचित् नैव विनाशयेत् ॥ ३६८-३६९ ॥

**व्याख्या**—कूटानाम् = कृतिमानाम्, स्वर्णानाम् = कनकानाम्, महादानैः = बहुलप्रदानैः, द्विषताम् = शत्रूणाम्, बलम् = सैन्यम्, विलोभ्य = विशेषेण प्रलोभ्य, अप्रमत्तः = स्वयं पूर्णसावधानः सन्, भेदयित्वा = भेदं कृत्वा, नित्यविश्रम्भेन = विश्वासेन, संसुप्तम् = प्रजागरेण कृतः श्रमः, येन तम्, शत्रुभयात् = रिपुत्रासात्, निद्रारहितम्, परस्य = रिपोः, अनीकम् = सैन्यम्, विनाशयेत् = विनाशं कुर्य्यात्। व्यसनाप्तम् = व्यसनेषु आसक्तम् अपि, तस्य = शत्रोः, सहायबलम् = सहायकसैन्यम्, क्वचित् = कदाचित्, नैव = कथमपि नहि विनाशयेत् ॥ ३६८-३६९ ॥

**हिन्दी**--शत्रु की सेना को नकली सोने के सिक्के देकर उन्हें प्रलोभित कर फूट डालकर अपने में मिला ले। इसके बाद दुश्मन की सेना को दुश्मनों के द्वारा भय का संदेह न मानकर बेखबर सोई हुई अथवा अधिक जगे रहने के कारण थकी हई देखकर अपने बड़ी सावधानी के साथ इनका विनाश कर दे और शत्रु की सहायता में आई हुई किसी मित्र की सेना को व्यसन में डूबी हुई देखकर भी उसे विनष्ट नकरे, प्रत्युत उनकी मदद कर उन्हें अपनी सेना में मिला ले ॥ ३६८-३६९ ॥

**कूटेति। विलोभ्येति**। कूटानां स्वर्णानां महादानैः बहुकृत्रिमस्वर्णदानैरित्यर्थः, द्विषतां शत्रूणां बलं विलोभ्य विशेषेण लोभयित्वा अप्रमत्तः स्वयं सावधानः सन् भेदयित्वा शत्रुतः विच्छिद्य नित्यविश्रम्भेण विश्वासेन संसुप्तं प्रजागरेण कृतः श्रमः येन तं शत्रुभयात् निद्रारहितं परस्य शत्रोः अनीकं सैनिकं विनाशयेत्। व्यसनाप्तं कामादिष्वासक्तम् अपि तस्य सहायबलं क्वचित् कदाचित् नैव विनाशयेदित्यर्थः ॥ ३६८-३६९ ॥

**स्वसमीपतरं राज्यं नान्यस्माद् ग्राहयेत् क्वचित् ॥ ३७० ॥**

**अन्वयः**—अन्यस्मात् क्वचित् स्वसमीपतरं राज्यं न ग्राहयेत् ॥ ३७० ॥

**व्याख्या**—अन्यस्माद् = रिपोः, अत्र कर्मणि पञ्चमी आर्षः प्रयोगः, क्वचित् = कदाचित्, स्वस्य = आत्मनः, समीपतरम् = निकटतरम्, राज्यम् = राष्ट्रम्, न = नहि, ग्राहयेत् = आक्रमेत् ॥ ३७० ॥

**हिन्दी**—अपने पड़ोसी राज्य को दूसरों के द्वारा किसी भी स्थिति में हड़पने न दे, बल्कि उसे मदद पहुँचाकर अपनी ओर मिलाये रखे ॥ ३७० ॥

**स्वेति।** अन्यस्मात् शत्रोरिति कर्मणि पञ्चमी आर्षा इति बोध्या क्वचित् कदाचित् स्वस्य आत्मनः समीपतरं निकटस्थं राज्यं न ग्राहयेत् तथात्वे शत्रोर्निकटवर्तिन्या महानर्थसम्भव इति भावः ॥३७० ॥

**क्षणं युद्धाय सज्जेत क्षणं चापसरेत् पुनः।**
**अकस्मान्निपतेद् दूराद्दस्युवत् परितः सदा ॥ ३७१ ॥**

**अन्वयः**—क्षणं युद्धाय सज्जेत, क्षणं पुनः अपसरेत् तथा अकस्मात् दूरात् परितः दस्युवत् सदा निपतेत् ॥ ३७१ ॥

**व्याख्या**—क्षणम् = पलमात्रे, युद्धाय = रणाय, सज्जेत = तत्परो भवेत्, क्षणञ्च = पलमात्रे, पुनः, अपसरेत् = रणात् पश्चाद्गामी भवेत्, तथा, अकस्मात् = हठात्, दूरात् = दूरप्रदेशात्, परितः = चतुर्दिक्, दस्युवत् = लुण्ठक इव, सदा = सर्वदा, निपतेत् = आक्रमेत् ॥ ३७१ ॥

**हिन्दी**—एक क्षण में युद्ध के लिए तैयार हो जाय और फिर पल भर में युद्ध से विरत हो जाय और पुनः दूर से एकाएक लूटेरों की तरह दुश्मन पर धावा बोल दे ॥ ३७१ ॥

**क्षणमिति।** क्षणं युद्धाय सज्जेत उद्युञ्जीत, क्षणञ्च पुनः अपसरेत् रणादिति शेषः, तथा अकस्मात् सहसा दूरात् परितः समन्तात् दस्युवत् सदा निपतेच्च ॥ ३७१ ॥

**रूप्यं हेम च कुप्यञ्च यो यज्जयति तस्य तत्।**
**दद्यात् कार्य्यानुरूपञ्च हृष्टो योधान् प्रहर्षयन् ॥ ३७२ ॥**

**अन्वयः**—यः रूप्यं हेम च कुप्यं यत् जयति, हृष्टः योधान् कार्यानुरूपं प्रहर्षयन् तत् तस्य दद्यात् ॥ ३७२ ॥

**व्याख्या**—यः = नरः, रूप्यम् = रजतम्, हेम = कनकम्, कुप्यम् = द्रव्यविशेषम्, जयति = विजयेन प्राप्नोति, नृपतिः, हृष्टः = प्रसन्नः सन्, कार्यानुरूपम् = यदा कार्यं तथा, योधान् = आयुधिकान्, प्रहर्षयन् = प्रसन्नं कुर्वन्, तत् = विजयेन प्राप्तं धनम्, अर्जकस्य, दद्यात् = प्रयच्छेत् ॥ ३७२ ॥

**हिन्दी**—जब कभी कोई सैनिक चाँदी, सोना या अन्य द्रव्य जीतकर लाये तो राजा अन्य सैनिकों को भी खुश करता हुआ प्रसन्न मन से उनके काम के अनुसार उन्हें धन दे ॥ ३७२ ॥

**रूप्यमिति।** यः पुरुषः रूप्यं रजतं हेम स्वर्णं तथा कुप्यं स्वर्णरौप्यव्यतिरिक्तं यत् द्रव्यं जयति जयेन अर्जयतीत्यर्थः, राजा हृष्टः सन् कार्य्यानुरूपं यथाकार्य्यं योधान् सैनिकान् प्रहर्षयन् तत् द्रव्यं तस्य अर्जकस्येत्यर्थः दद्यात् ॥ ३७२ ॥

**विजित्य च रिपूनेवं समादद्यात् करं तथा।**
**राज्यांशं वा सर्वराज्यं नन्दयीत ततः प्रजाः ॥ ३७३ ॥**

**अन्वयः**—एवं रिपून् विजित्य करं तथा राज्यांशं वा सर्वराज्यं समादद्यात्। ततः प्रजाः नन्दयीत ॥ ३७३ ॥

**व्याख्या**—एवम् = अनेन प्रकारेण, रिपून् = अरीन्, विजित्य = पराजित्य, करम् = राजस्वम्, राज्यांशम्—राज्यस्य = विजितराज्यस्य, अंशम् = भागम्, वा = अथवा, सर्वम् = सकलम्, राज्यम् = रिपुराष्ट्रम्, समादद्यात् = अपहरणं कुर्य्यात्। ततः = तत्पश्चात्, प्रजाः = तत्रत्या जनाः, नन्दयीत = रक्षणं कुर्यात्, आर्षोऽयं प्रयोगः ॥ ३७३ ॥

**हिन्दी**—इस तरह कोई राजा अपने शत्रु राजा को जीतकर उसकी योग्यता के अनुसार उसकी राजस्व वसूल करे तथा कभी उसके राज्य का आधा हिस्सा या पूरा राज्य ही दखल कर ले। इसके बाद उसकी प्रजा को हर हालत में प्रसन्न रखने की चेष्टा करे ॥ ३७३ ॥

**विजित्येति**। एवम्प्रकारेण रिपून् शत्रून् विजित्य करं राज्यांशं राज्यस्य विजितस्येति शेषः, अंशं कियन्तमिति भावः, वा सर्वं समस्तं राज्यं शत्रुराज्यं समादद्यात् गृह्णीयात्, ततः ग्रहणानन्तरं प्रजाः तत्रत्याः नन्दयीत रञ्जयेत्, नन्दयीत इति आर्षोऽयं प्रयोगः ॥ ३७३ ॥

**तूर्य्यमङ्गलघोषेण स्वकीयं पुरमाविशेत्।**
**तत्प्रजाः पुत्रवत् सर्वाः पालयीतात्मसात्कृताः ॥ ३७४ ॥**

**अन्वयः**—ततः तूर्यम् अस्य मङ्गलघोषेण स्वकीयं पुरम् आविशेत्। तथा आत्मसात्कृताः तत्प्रजाः सर्वाः पुत्रवत् पालयीत ॥ ३७४ ॥

**व्याख्या**—ततः = तत्पश्चात्, तूर्यम् = शृङ्गवाद्यम्, अस्य, मङ्गलघोषेण = शुभदनादेन, स्वकीयम् = आत्मानम्, पुरम् = नगरम्, आविशेत् = प्रवेशं कुर्यात्। तथा, आत्मसात्कृताः = अधीनीकृताः, सर्वाः = सकलाः, तस्य = रिपोः, प्रजाः = जनाः, पुत्रवत् = स्वकीयसन्तान इव, पालयीत = रक्षां कुर्यात्, प्रयोगोऽयं आर्षः ॥ ३७४ ॥

**हिन्दी**—इसके बाद तुरही के मङ्गलमय शब्द के साथ अपनी राजधानी में विजयी राजा प्रवेश करे। अपने अधीन बना ली गई शत्रु की सारी प्रजा का अपने पुत्र की तरह पालन करे ॥ ३७४ ॥

**तूर्य्येति**। ततः तूर्य्यं वाद्यविशेषः तस्य मङ्गलघोषेण माङ्गलिकध्वनिना स्वकीयं पुरम् आविशेत् प्रविशेत् तथा आत्मसात्कृताः अधीनीकृताः सर्वाः तस्य शत्रोः प्रजाः पुत्रवत् पालयीत पालयेदित्यर्थः, पालयीत इति आर्षोऽयं प्रयोगः ॥ ३७४ ॥

**नियोजयेन्मन्त्रिगणमपरे मन्त्रचिन्तने।**
**देशे काले च पात्रे च ह्यादिमध्यावसानतः ॥ ३७५ ॥**

**अन्वयः**—मन्त्रिगणम् अपरे मन्त्रचिन्तने देशे च काले पात्रे च आदिमध्यावसानतः नियोजयेत् ॥ ३७५ ॥

**व्याख्या**—मन्त्रिगणम् = अमात्यवर्गः, अपरे = अपरस्मिन्, मन्त्रचिन्तने = विचारणीयविषये, देशे = स्थाने, काले = समये, पात्रे = व्यक्तिविशेषे, तथा, आदौ = प्रथमे, मध्ये = अन्तराले, अवसाने = अन्ते च, नियोजयेत् = नियुक्तं कुर्यात् ॥ ३७५ ॥

**हिन्दी**—देश, काल तथा पात्र में एवं आदि, मध्य तथा अन्त में मन्त्रिवर्ग के लिए प्राचीन मन्त्रियों को हटाकर उनकी जगह नया मन्त्रिमण्डल नियुक्त कर दे ॥ ३७५ ॥

**नियोजयेदिति**। मन्त्रिगणम् अपरे अन्यस्मिन् मन्त्रचिन्तने विषये देशे काले पात्रे तथा आदौ मध्ये अवसाने च नियोजयेत् ॥ ३७५ ॥

भवेन्मन्त्रफलं कीदृगुपायेन कथन्त्विति।
मन्त्र्याद्यधिकृतः कार्य्यं युवराजाय बोधयेत्॥ ३७६ ॥

**अन्वयः**—मन्त्र्याद्यधिकृतः युवराजाय मन्त्रफलं कीदृक् उपायेन भवेत् तत् कथं वा इति सर्वं कार्यं बोधयेत् ॥ ३७६ ॥

**व्याख्या**—मन्त्र्यादिषु = अमात्यप्रभृतिपु, अधिकृतः = अधिकारसम्पन्नो जनः, युवराजाय = राजकुमाराय, मन्त्रफलम् = चिन्तनपरिणामम्, कीदृक् = किंविधम्, केन उपायेन = साधनेन, भवेत् = स्यात्, तत्, कथम् = केन प्रकारेण, वा = अथवा, इति, सर्वम् = सकलम्, कार्यम् = सुविचारित-विषयम्, बोधयेत् = ज्ञापयेत् ॥ ३७६ ॥

**हिन्दी**—किस उपाय से विचार का कैसा परिणाम होगा, इन सबों पर विचार करने के लिए नियुक्त मंत्री अथवा अधिकारी किसी काम को सबसे पहले युवराज के सामने पेश करे ॥३७६ ॥

**भवेदिति**। मन्त्र्यादिषु सचिवादिषु अधिकृतः जनः युवराजाय मन्त्रफलं कीदृक् केन उपायेन भवेत् तत्, कथं वा इति सर्वं कार्य्यं मन्त्रितविषयं बोधयेत् ज्ञापयेत् ॥ ३७६ ॥

पश्चाद्राज्ञे तु तैः साकं युवराजो निवेदयेत्।
राजा संशासयेदादौ युवराजं ततस्तु सः ॥ ३७७ ॥
युवराजो मन्त्रिगणान् राजाग्रे तेऽधिकारिणः ।
सदसत् कर्म राजानं बोधयेद्धि पुरोहितः ॥ ३७८ ॥

**अन्वयः**—पश्चात् युवराजः तैः साकं राज्ञे निवेदयेत् । राजा आदौ युवराजं ततः सः युवराजः मन्त्रिगणान् संशासयेत् । ते च अधिकारिणः राजाग्रे सत् असत् कर्म बोधयेयुः, ततः पुरोहितः राजानं हि बोधयेत् ॥ ३७७-३७८ ॥

**व्याख्या**—पश्चात् = ततः, युवराजः = राजकुमारः, तैः = सचिवादिषु, अधिकृतैः पुरुषैः, साकम् = सह, राज्ञे = नृपाय, निवेदयेत् = कथयेत् । राजा = नृपः, आदौ = अग्रतः, युवराजम् = राज-कुमारम्, ततः = तत्पश्चात्, सः = असौ, युवराजः = राजकुमारः, मन्त्रिगणान् = अमात्यवर्गान्, संशासयेत् = समुपदिशेत् । ते च अधिकारिणः, राजाग्रे = नृपतिनिकटे, सत् = तथ्यम्, असत् = अतथ्यम्, कर्म = कार्यम्, बोधयेयुः, ततः = तत्पश्चात्, पुरोहितः = पुरोधा, राजानम् = नृपम्, हि = निश्चयेन, बोधयेत् = सकलं निवेदयेत् ॥ ३७७-३७८ ॥

**हिन्दी**—इसके बाद उन सबों को साथ लेकर युवराज उसी काम के विषय में राजा से निवेदन करे। राजा उस पर पहले युवराज के पास अपना मन्तव्य लिखकर भेजे, इसके बाद युवराज मंत्रियों को राजा का वह आदेश सुनावे। सभी अधिकारी वर्ग जो कुछ भला या बुरा काम हो, राजा के सामने उपस्थित होकर पुरोहित के माध्यम से राजा से निवेदित करे ॥३७७-७८ ॥

**पश्चादिति। युवराज इति**। पश्चात् युवराजः तैः मन्त्र्यादिषु अधिकृतैः पुरुषैः साकं सह राज्ञे निवेदयेत् मन्त्रितविषयमिति शेषः। राजा आदौ अग्रतः युवराजं, ततः सः युवराजः मन्त्रिगणान् संशासयेत् सम्यक् उपदिशेत् । ते च अधिकारिणः राजाग्रे राजसमीपे सत् असच्च कर्म बोधयेयुरिति शेषः, ततः पुरोहितः राजानं बोधयेत् सर्वमिति शेषः ॥ ३७७-३७८ ॥

**ग्रामाद्बहिः समीपे तु सैनिकान् धारयेत् सदा।**
**ग्राम्यसैनिकयोर्न स्यादुत्तमर्णाधमर्णता ॥ ३७९ ॥**

**अन्वयः**—ग्रामात् बहिः समीपे सदा सैनिकान् धारयेत्। ग्राम्यसैनिकयोः उत्तमर्णाधमर्णता न स्यात् ॥ ३७९ ॥

**व्याख्या**—ग्रामात् = पुरात्, बहिः = बाह्यप्रदेशे, वा = अथवा, समीपे = निकटे, सदा = सर्वदा, सैनिकान् = योद्धान्, धारयेत् = स्थापयेत्। ग्राम्यसैनिकयोः = नगरवासीजन-आयुधिक-पुरुषयोः, उत्तमर्णाधमर्णता = धन-आदानप्रदानव्यवहारः, न = नहि, स्यात् = भवेत् ॥ ३७९ ॥

**हिन्दी**—राजा हमेशा सैनिक-छावनी गाँव से बाहर या गाँव के समीप बनाये। साथ ही उसे इस बात पर ध्यान रखना चाहिए कि ग्रामीण और सैनिकों के बीच ऋण का आदान-प्रदान न हो ॥३७९ ॥

**ग्रामादिति**। ग्रामात् बहिः बाह्यप्रदेशे समीपे वा सदा सैनिकान् धारयेत् रक्षेत्। ग्राम्यसैनिकयोः ग्रामवासिजनसैनिकपुरुषयोः उत्तमर्णाधर्मर्णता ऋणदानव्यवहारः न स्यात् तथात्वे भूयाननिष्टपातः स्यादिति भावः ॥ ३७९ ॥

**सैनिकार्थन्तु पण्यानि सैन्ये सन्धारयेत् पथक्।**
**नैकत्र वासयेत् सैन्यं वत्सरन्तु कदाचन ॥ ३८० ॥**

**अन्वयः**—सैनिकार्थं पण्यानि सैन्ये पृथक् सन्धारयेत्, तु तथा वत्सरं सैन्यं कदाचन एकत्र न वासयेत् ॥ ३८० ॥

**व्याख्या**—सैनिकार्थम् = सैनिकानां निमित्तम्, पण्यानि = क्रयवस्तूनि, सैन्ये = सेनाविशेषे, पृथक् = भिन्नम्, सन्धारयेत् = स्थापनं कुर्यात्, तथा वत्सरम् = वर्षपर्यन्तम्, सैन्यम्, एकत्र = एकस्मिन् स्थाने, न = नहि, वासयेत् = स्थापयेत् ॥ ३८० ॥

**हिन्दी**—सैनिकों की आवश्यक वस्तुओं की खरीद-बिक्री के लिए छावनी के ही भीतर बाजार की व्यवस्था होनी चाहिए। वर्ष भर से अधिक किसी सेना को एक स्थान पर नहीं रखना चाहिए ॥ ३८० ॥

**सैनिकार्थमिति**। सैनिकार्थं सेनानां निमित्तं पण्यानि विक्रयद्रव्याणि सैन्ये सेनानिवेशे पृथक् सन्धारयेत् स्थापयेत्। ग्रामवासिसाधारण्ये सर्वदा विसंवादसम्भावनादिति भावः। तथा वत्सरं व्याप्य सैन्यम् एकत्र एकस्मिन् स्थाने न वासयेत् ॥ ३८० ॥

**सेनासहस्रं सज्जं स्यात् क्षणात् संशासयेत् तथा।**
**संशासयेत् स्वनियमान् सैनिकानष्टमे दिने ॥ ३८१ ॥**

**अन्वयः**—यथा सेनासहस्रं क्षणात् सज्जं स्यात् तथा संशासयेत्, तथा अष्टमे दिने सैनिकान् स्वनियमान् संशासयेत् ॥ ३८१ ॥

**व्याख्या**—यथा, सेनासहस्रम् = सहस्रसंख्यकं बलम्, क्षणात् = पलमात्रात्, सज्जम् = उद्यतम्, स्यात् = भवेत्, तथा = तेनैव प्रकारेण, संशासयेत् = सम्यग्रूपेण प्रशिक्षयेत्, तथा = अष्टमे दिने = सप्ताहान्ते अथवा अपराह्णे, सैनिकान् = आयुधिकान्, स्वस्य = आत्मनः, नियमान् = नियतनियमान्, संशासयेत् = प्रशिक्षयेत् ॥ ३८१ ॥

**हिन्दी**—हजारों सेना की एक टुकड़ी आदेश मिलते ही एक क्षण में युद्ध के लिए तैयार हो जाय, ऐसी शिक्षा देनी चाहिए। साथ ही सप्ताह में एक दिन अथवा सायंकाल प्रतिदिन उन्हें अपनी नियत शिक्षा देनी चाहिए॥ ३८१ ॥

**सेनेति**। यथा सेनासहस्रं क्षणात् सज्जं स्यात् तथा संशासयेत् सम्यक् शिक्षयेत्। तथा अष्टमे दिने दिनस्य अष्टमे भागे इत्यर्थः, अपराह्णसमये इति यावत् सैनिकान् स्वस्य नियमान् संशासयेत् सम्यक् उपदिशेच्च॥ ३८१ ॥

**चण्डत्वमाततायित्वं राजकार्य्ये विलम्बनम्।**
**अनिष्टपेक्षणं राज्ञः स्वधर्मपरिवर्जनम्॥ ३८२ ॥**
**त्यजन्तु सैनिका नित्यं सल्लापमपि वा परैः।**
**नृपाज्ञया विना ग्रामं न विशेयुः कदाचन॥ ३८३ ॥**
**स्वाधिकारिगणस्यापि ह्यपराधं दिशन्तु नः।**
**मित्रभावेन वर्त्तध्वं स्वामिकृत्ये सदाखिलैः॥ ३८४ ॥**
**सूज्ज्वलानि च रक्षन्तु शस्त्रास्त्रवसनानि च।**
**अन्नं जलं प्रस्थमात्रं पात्रं बह्वन्नसाधकम्॥ ३८५ ॥**
**शासनादन्यथाचारान् विनेष्यामि यमालयम्।**
**भेदायितान् रिपुधनं गृहीत्वा दर्शयन्तु माम्॥ ३८६ ॥**

**अन्वयः**—सैनिकाः नित्यं चण्डत्वम्, आततायित्वं, राजकार्ये विलम्बनं, राज्ञः अनिष्टस्य उपेक्षणं, स्वधर्मस्य परिवर्जनम् अपि वा परैः सल्लापं त्यजन्तु। नृपाज्ञया विना कदाचन ग्रामं न विशेयुः। स्वाधिकारिगणस्यापि अपराधं नः दिशन्तु। अखिलैः स्वामिकृत्ये मित्रभावेन सदा वर्त्तध्वम्। सूज्ज्व- लानि शस्त्रास्त्रवसनानि च शासनात् अन्नं जलं प्रस्थमात्रं बह्वन्नसाधकं पात्रं रक्षन्तु। अन्यथाचारान् यमालयं विनेष्यामि तथा रिपुधनं गृहीत्वा भेदायितान् मां दर्शयन्तु॥ ३८२-३८६ ॥

**व्याख्या**—सैनिकाः, नित्यम् = सततम्, चण्डत्वम् = क्रूरत्वम्, आततायित्वम् = क्रूरकर्म-कारित्वम्, राजकार्ये—राज्ञः = नृपस्य, कार्ये = कृत्ये, विलम्बनम् = वेलातिक्रमणम्, राज्ञः = नृपस्य, अनिष्टस्य = अहितस्य, उपेक्षणम् = औदासीन्यम्, स्वधर्मस्य—स्वस्य = आत्मनः, धर्मस्य = कर्त्तव्यस्य, परिवर्जनम् = परित्यजनम्, अपि = चेत्, वा = अथवा, परैः = रिपुभिः, सल्लापम् = सुष्ठुवार्तालापम्, त्यजन्तु = परिहरन्तु। नृपाज्ञया—नृपस्य = भूपस्य, आज्ञया = आदेशेन, विना = विहाय, कदाचन = कथमपि, ग्रामम् = पुरम्, न = नहि, विशेयुः = प्रवेशं कुर्युः। स्वाधिकारि- गणस्यापि = सेनाधिकारे नियुक्तस्य अपि, अपराधम् = दोषम्, नः = अस्मभ्यम्, दिशन्तु = निर्देशं कुर्वन्तु। अखिलैः = सकलैः, बलैः, स्वामिकृत्ये = प्रभुकार्ये, मित्रभावेन = सख्यभावेन, सदा = सर्वदा, वर्त्तध्वम् = निर्वहध्वम्। सूज्ज्वलानि = समुज्ज्वलानि, शस्त्राणि = प्रहरणानि, अस्त्राणि = आयुधानि, वसनानि = वस्त्राणि, च = पुनः, शासनात् = मम आदेशेन, अन्नम् = भक्ष्यम्, जलम् = पेयम्, प्रस्थमात्रम् = सेटकपरिमितम्, बहूनाम् = अत्यधिकानाम्, अन्नानाम् = भोज्यपदार्थानाम्, साधकम् = उपयोगिनम्, पात्रम् = स्थालीम् इति, रक्षन्तु = गोपयन्तु। अन्यथाचारान्—अन्यथा = इतरथा, आचरन्ति = व्यवहरन्ति, तान्, यमालयम् =

मृत्युलोकम्, विनेष्यामि = प्रापयिष्यामि, तथा, रिपुधनम् = शत्रुसम्पदम्, गृहीत्वा = नीत्वा, भेदायितान् = भेदं प्रापितान् सैनिकान्, माम् = अस्मान्, दर्शयन्तु = निर्दिशन्तु, तामपि यमालयं नेष्यामि इति ॥ ३८२-३८६ ॥

**हिन्दी**—अतिक्रुद्ध होना, आततायी का काम करना, राजकीय काम में देर लगाना, राजा के अनिष्ट होने की उपेक्षा करना, अपने धर्म को छोड़ देना, दुश्मनों के साथ बातचीत करना– ये सभी काम सैनिकों को हमेशा के लिए छोड़ देने चाहिए। राजा के हुक्म पाये बिना किसी गाँव में कभी भी प्रवेश न करें और अपने अधिकारी के द्वारा किये गये अपराधों को राजा से कहें। राजा के किसी भी काम को आपस में सभी मिलकर मित्रभाव से पूरा करें। अपने हथियार, वस्त्र और पात्रों को साफ-सुथरा रखें और अपने पास कम-से-कम एक-एक सेर अन्न और जल जरूर रखें। साथ में पकाने-खाने के लिए बर्तन-वासन भी रखें। मेरे इन आदेशों के विपरीत आचरण करने वाले सैनिकों को मैं यमपुरी भेज दूँगा और जो शत्रु से धन लेकर उनसे मिल गये हों उन सैनिकों को मुझे दिखालाओं, ताकि मैं उन्हें भी मौत के घाट उतार दूँगा ॥ ३८२-३८६ ॥

संशासनान्याह—**चण्डत्वमित्यादि**। सैनिकाः नित्यं सततं चण्डत्वम् उग्रत्वम् आततायित्वं राजकार्य्यविलम्बनं राज्ञः अनिष्टस्य उपेक्षणं स्वधर्मस्य परिवर्जनं परित्यागम् अपि वा अथवा परैः शत्रुभिः सल्लापं सदालापं त्यजन्तु। नृपस्य आज्ञया विना कदाचन ग्रामं न विशेयु प्रविशेयुः। स्वाधिकारिगणस्य सेनाधिकारे नियुक्तस्य अपराधं दोषं नः अस्मभ्यं दिशन्तु। अखिलैः समस्तैः सैन्यैः स्वामिनः कृत्ये कार्य्ये मित्रभावेन वर्त्तध्वं यूयमिति शेषः। सूज्ज्वलानि अत्युज्ज्वलानि शस्त्राणि अस्त्राणि वसनानि वस्त्राणि च तथा शासनात् मम आज्ञया इत्यर्थः, अन्नं जलं प्रस्थमात्रं प्रस्थपरिमितं बहूनाम् अन्नानां साधकं पात्रं स्थालीमित्यर्थः रक्षन्तु। अन्यथाचारान् ये अन्यथा आचरन्ति तानित्यर्थः, यमालयं विनेष्यामि प्रापयिष्यामि। तथा रिपुधनं गृहीत्वा भेदायितान् भेदं प्रापितान् सैनिकान् मां दर्शयन्तु तानपि यमालयं नेष्यामि ॥ ३८२-३८६ ॥

**सैनिकैरभ्यसेन्नित्यं व्यूहाद्यनुकृतिं नृपः।**
**तथायनेऽयने लक्ष्यमस्त्रपातैर्विभेदयेत् ॥ ३८७ ॥**

**अन्वयः**—नृपः सैनिकैः व्यूहाद्यनुकृतिं नित्यम् अभ्यसेत्, तथा अयने अयने अस्त्रपातैः लक्ष्यं विभेदयेत् ॥ ३८७ ॥

**व्याख्या**—नृपः = राजा, सैनिकैः = आयुधिकैः, व्यूहादीनाम् = सैन्यरचनाप्रभृतीनाम्, अनुकृतिम् = अनुसरणम्, नित्यम् = सततम्, अभ्यसेत् = अभ्यासं कुर्यात्, तथा, अयनेऽयने = प्रतिषाण्मासिकम्, अस्त्राणाम् = आयुधानाम्, पातैः = पतनैः, लक्ष्यम् = शरव्यम्, विभेदयेत् = भेदनं कुर्यात् ॥ ३८७ ॥

**हिन्दी**—राजा प्रतिदिन सैनिकों से व्यूहरचना का अभ्यास कराये तथा प्रत्येक छः महीने पर चाँदमारी (लक्ष्य-भेदन) का अभ्यास सैनिकों से कराये ॥ ३८७ ॥

**सैनिकैरिति**। नृपः सैनिकैः व्यूहादीनाम् अनुकृतिं नित्यम् अभ्यसेत् तथा अयने अयने प्रति षाण्मासिकमित्यर्थः, अथवा गतिविशेषे गतिविशेषे, अस्त्राणां पातैः लक्ष्यं विभेदयेत् ॥ ३८७ ॥

सायं प्रातः सैनिकानां कुर्य्यात् सङ्गणनं नृपः।
जात्याकृतिवयोदेशग्रामवासान् विमृश्य च॥ ३८८॥

**अन्वयः**—नृपः सायं प्रातः सैनिकानां जात्याकृतिवयोदेशग्रामवासान् विमृश्य च सङ्गणनं कुर्य्यात्॥ ३८८॥

**व्याख्या**—नृपः = राजा, सायं = सन्ध्याकाले, प्रातः = प्रभाते, सैनिकानाम् = बलानां वा आयुधिकानाम्, जातिम् = वर्णम्, आकृतिः = स्वरूपम्, वयः = अवस्था, देशम् = स्थानविशेषम्, ग्रामम् = पुरम्, वासम् = निवासम्, विमृश्य = विविच्य, सङ्गणनम् = सम्यक्प्रकारेण गणनाम्, कुर्यात् = विदध्यात्॥ ३८८॥

**हिन्दी**—राजा प्रतिदिन शाम-सुबह सैनिकों की सही-सही गिनती कराये। गिनती में प्रत्येक सैनिकों की जाति, स्वरूप, उम्र, देश, गाँव और निवासस्थान के सम्बन्ध में पूरी जानकारी भी होनी चाहिए॥ ३८८॥

**सायमिति**। नृपः सायं प्रातः सैनिकानां जातिम् आकृतिं वयः, देशं ग्रामं वासं वासस्थानञ्च विमृश्य विविच्य सङ्गणनं संख्यां कुर्य्यात्॥ ३८८॥

कालं भृत्यवधिं देयं दत्तं भृत्यस्य लेखयेत्।
कति दत्तं हि भृत्येभ्यो वेतनं पारितोषिकम्।
तत्प्राप्तिपत्रं गृह्णीयाद्दद्याद्वेतनपत्रकम्॥ ३८९॥

**अन्वयः**—भृत्यस्य भृत्यवधिं कालं तथा देयं दत्तं कति दत्तं वेतनं पारितोषिकम् इति लेखयेत्। तत्प्राप्तिपत्रं गृह्णीयात् च वेतनपत्रकं दद्यात्॥ ३८९॥

**व्याख्या**—भृत्यस्य = सैनिकस्य, भृतेः = वेतनस्य, अवधिम् = सीमारूपम्, कालम् = समयम्, तथा, भृत्येभ्यः, देयम् = दातुं योग्यम्, कति, दत्तम् = प्रदत्तम्, वेतनं = भृतिः, पारितोषिकम् = पुरस्कारम्, कति = कियत्, इति = इत्थम्, लेखयेत् = लिपिबद्धं कुर्यात्, तत् = तेषाम्, प्राप्तिपत्रम् = अधिगतपत्रं वा स्वीकृतिपत्रम्, गृह्णीयात् = स्वीकुर्यात्, तथा, वेतनपत्रकम् = भृतिप्राप्तिपत्रम्, दद्यात् = समर्पयेत्॥ ३८९॥

**हिन्दी**—नौकरी प्रारम्भ की मासिक या वार्षिक वेतन पाने की रसीद, दिये गये वेतन की रसीद–इन सबों को विचार कर लिख ले। सेवकों को कितना वेतन या इनाम दिया गया है, इसकों पाने के लिए लिखे गये आदेशपत्र को लेकर उसके वेतन या पारितोषिक चुकता कर देने की रसीद दे दे॥ ३८९॥

**कालमिति**। भृत्यस्य भृतेः अवधिं सीमारूपं कालं तथा भृत्येभ्यः देयं, दत्तं कति दत्तं वेतनं पारितोषिकञ्च कति इत्येतत् लेखयेत्। लेखयित्वा तेषां प्राप्तिपत्रं गृह्णीयात् वेतनपत्रञ्च दद्यात्॥ ३८९॥

सैनिकाः शिक्षिता ये ये तेषु पूर्णा भृतिः स्मृता।
व्यूहाभ्यासे नियुक्ता ये तेष्वर्द्धां भृतिमावहेत्॥ ३९०॥

**अन्वयः**—ये ये सैनिकाः शिक्षिताः तेषु पूर्णा भृतिः स्मृता। व्यूहाभ्यासे नियुक्ताः तेषु अर्धां भृतिम् आवहेत्॥ ३९०॥

**व्याख्या**—ये ये सैनिकाः = ये ये योद्धारः, शिक्षिताः = प्रशिक्षणप्राप्ताः, तेषु = सैनिकेषु, पूर्णा = सम्पूर्णा, भृतिः = वेतनम्, स्मृता = कथिता; अर्थात् प्रशिक्षिकाः सैनिकाः पूर्णवेतनमर्हन्ति। ये = सैनिकाः, व्यूहानाम् = सैन्यरचनानाम्, अभ्यासे = प्रशिक्षणे, नियुक्ताः = नियोजिताः, तेषु = सैनिकेषु, अर्धाम् = अर्धभागमेव, भृतिम् = वेतनम्, आवहेत् = दद्यात् ॥ ३९० ॥

**हिन्दी**—जो सैनिक प्रशिक्षण प्राप्त कर चुके हों, उन्हें पूर्ण वेतन देना चाहिए। प्रशिक्षण में संलग्न सैनिकों को आधा वेतन देना चाहिए ॥ ३९० ॥

**सैनिका इति**। ये ये सैनिकाः शिक्षिताः तेषु भृत्येषु पूर्णा भृतिः वेतनं स्मृता ते पूर्णवेतनमर्हन्तीत्यर्थः। ये व्यूहानाम् अभ्यासे शिक्षायां नियुक्ताः तेषु अर्द्धां भृतिम् आवहेत् दद्यात् ते सैनिकाः पूर्णभृतेरर्द्धमर्हन्तीत्यर्थः ॥ ३९० ॥

**असत्कर्त्राश्रितं सैन्यं नाशयेच्छत्रुयोगतः ॥ ३९१ ॥**

**अन्वयः**—असत्कर्त्राश्रितं सैन्यं शत्रुयोगतः नाशयेत् ॥ ३९१ ॥

**व्याख्या**—असन्तम् = दुष्टम्, कर्त्तारम् = राजानम्, आश्रितम् = अवलम्बितम्, सैन्यम्, शत्रुयोगतः = रिपुसम्पर्केन, नाशयेत् = विनष्टं कुर्यात्, राजेति शेषः ॥ ३९१ ॥

**हिन्दी**—शत्रु से मिलकर जो सेना राजा की बुराई करे, उसे नष्ट कर देना चाहिए ॥ ३९१ ॥

**असदिति**। असन्तम् अभद्रं कर्त्तारं स्वामिनम् आश्रितं सैन्यं शत्रुयोगतः शत्रुयोगेन नाशयेत् प्रभुमिति शेषः ॥ ३९१ ॥

**नृपस्यासद्गुणरताः के गुणद्वेषिणो नराः।**
**असद्गुणोदासीनाः के हन्यात् तान् विमृशन् नृपः।**
**सुखासक्तांस्त्यजेद् भृत्यान् गुणिनोऽपि नृपः सदा ॥ ३९२ ॥**

**अन्वयः**—के नराः असद्गुणरताः? के वा नृपस्य गुणद्वेषिणः? के च असद्गुणोदासीनाः? नृपः विमृशन् तान् हन्यात्। किञ्च नृपः गुणिनोऽपि भृत्यान् सदा सुखासक्तान् त्यजेत् ॥ ३९२ ॥

**व्याख्या**—के नराः = जनाः, असद्गुणेषु = दुष्टगुणेषु, रताः = निरताः, वा = अथवा, के नृपस्य = राज्ञः, गुणद्वेषिणः = प्रकृतिविरोधिनः, के च असद्गुणेषु = दोषेषु, उदासीनाः = विरक्ताः, नृपः = राजा, विमृशन् = विचारयन्, तान् = विरोधिनः, हन्यात् = घातयेत्। किञ्च, नृपः = राजा, गुणिनोऽपि, भृत्यान् = सेवकान्, सदा = सर्वदा, त्यजेत् = त्यागं कुर्यात् ॥ ३९२ ॥

**हिन्दी**—राजा के दुर्गुणों के प्रति कौन सेवक रुचि रखता है और कौन उनके अच्छे गुणों के विरोधी हैं? कौन राजा के असद्गुणों में प्रवृत्ति रहने पर उनकी उपेक्षा करते हैं? इनका ठीक से विचार कर राजा इन्हें समाप्त कर दे। साथ ही गुणवान् नौकरों को भी, जो सदैव सुख में डूबे हों, उन्हें निकाल दे ॥ ३९२ ॥

**नृपस्येति**। के नराः असद्गुणेषु रताः के वा नृपस्य गुणद्वेषिणः, के च असद्गुणेषु उदासीनाः उपेक्षमाणाः, नृपः विमृशन् विचारयन् तान् हन्यात्। किञ्च नृपः गुणिनोऽपि भृत्यान् सदा सुखेषु आसक्तान् त्यजेत् ॥ ३९२ ॥

**सुखान्तलोकविश्वस्ता योज्यास्त्वन्तःपुरादिषु।**
**धार्य्याः सुखान्तविश्वस्ता धनादिव्ययकर्मणि ॥ ३९३ ॥**

**अन्वयः**—सुखान्तलोकविश्वस्ताः अन्तःपुरादिषु योज्याः। सुखान्तविश्वस्ताः च जनाः धनादिव्ययकर्मणि धार्याः॥ ३९३ ॥

**व्याख्या**—सुष्ठु अन्तःकरणाः, लोकेषु = संसारेषु, विश्वस्ताः = विश्वसनीयाः जनाः, अन्तःपुरादिषु = हर्म्येषु, योज्याः = नियोक्तव्याः। सुखान्ताः = स्थिरचित्ताः, विश्वस्ताश्च = विश्वासापन्नाश्च जनाः, धनादीनाम् = अर्थादीनाम्, व्ययकर्मणि = धननिर्गमकार्येषु, धार्याः = नियोक्तव्याः॥ ३९३ ॥

**हिन्दी**—अच्छे विचार वाले विश्वसनीय व्यक्तियों को रनिवास में तथा व्ययादि कार्यों में नियुक्त करना चाहिए॥ ३९३ ॥

**सुखान्तेति**। सुखान्ताः सदन्तःकरणाः लोकेषु जगत्सु विश्वस्ताः जनाः अन्तःपुरादिषु योज्याः नियोक्तव्याः। तथा सुखान्ताः विश्वस्ताश्च जनाः धनादीनां व्ययकर्मणि धार्य्याः नियोज्याः॥ ३९३ ॥

**तथा हि लोकविश्वस्तो राजकृत्ये नियुज्यते।**
**अन्यथा योजितास्ते हि परिवादाय केवलम्॥ ३९४॥**

**अन्वयः**—तथा हि लोकविश्वस्तः राजकृत्ये नियुज्यते। अन्यथा ते हि योजिताः केवलं परिवादाय॥ ३९४ ॥

**व्याख्या**—तथा हि = एवं सति, लोकेषु = जगत्सु, विश्वस्तः = विश्वसनीयो जनः, राजकृत्ये = नृपकर्मणि, नियुज्यते = नियुक्तो भवति। अन्यथा = इतरथा, ते = पूर्वोक्ताः, हि = यतः, अविश्वस्ताः = अविश्वसनीयाः जनाः, योजिताः = नियुक्ताः, केवलम् = मात्रम्, परिवादाय = निन्दार्थमेव भवति॥ ३९४ ॥

**हिन्दी**—लोक में जो विश्वासपात्र हैं उन्हें ही राजकीय सेवा में नियोजित करना चाहिए। इसके अतिरिक्त अविश्वस्त लोगों की नियुक्ति से मात्र निन्दा होती है, काम कुछ नहीं सधता॥ ३९४ ॥

**तथेति**। तथा हि लोकेषु विश्वस्तो जनः राजकृत्ये राजकार्य्ये नियुज्यते। ते हि अन्यथा अविश्वस्ताः योजिताः जनाः केवलं परिवादाय निन्दायै भवन्तीति भावः॥ ३९४ ॥

**शत्रुसम्बन्धिनो ये ये भिन्ना मन्त्रिगणादयः।**
**नृपदुर्गुणतो नित्यं हृतमाना गणाधिकाः।**
**स्वकार्य्यसाधका ये तु सुभृत्या पोषयेच्च तान्॥ ३९५॥**

**अन्वयः**—ये ये शत्रुसम्बन्धिनः भिन्नाः मन्त्रिगणादयः ये च गणाधिकाः नृपस्य दुर्गुणतः नित्यं हृतमानाः स्वकार्यसाधकाः तान् सुभृत्या पोषयेत्॥ ३९५ ॥

**व्याख्या**—ये ये = जनाः, शत्रुसम्बन्धिनः = रिपुसम्पर्किणः, भिन्नाः = भेदं गताः, मन्त्रिगणादयः = अमात्यप्रभृतयः, ये च, गणाधिकाः = दलश्रेष्ठाः, नृपस्य = राज्ञः, शत्रोः, दुर्गुणतः = दोषेण, नित्यम् = प्रतिपलम्, हृतमानाः = सम्मानविहीनाः, अथ च स्वकार्यसाधकाः—स्वस्य = आत्मनः, कार्याणाम् = कृत्यानाम्, साधकाः = सम्पन्नाः, तान् = जनान्, सुभृत्या = सुन्दरवेतनदानेन, पोषयेत् = पालयेत्॥ ३९५ ॥

**हिन्दी**—दुश्मनों के मंत्री, जो फोड़कर मिलाये गये हों अथवा दुश्मन राजा के दुर्गुणों से

जो लोग अधिक गुणवान् हों परन्तु उनका सम्मान छीन लिया गया हो तथा जिनसे अपना काम सधता हो, ऐसे लोगों को अच्छा वेतन देकर राजा को उन्हें पालना चाहिए॥ ३९५॥

**शत्रुसम्बन्धिन इति।** ये ये शत्रुसम्बन्धिनः भिन्नाः विच्छेदं गताः, मन्त्रिगणादयः ये च गणाधिकाः दलश्रेष्ठाः नृपस्य शत्रोः दुर्गुणतः दोषेण नित्यं सततं हृतमानाः मानभ्रष्टाः अथ च स्वस्य आत्मनः राज्ञ इति यावत् कार्य्यसाधकाः, तान् सुभृत्या उत्कृष्टवेतनेन पोषयेत्॥ ३९५।।

**लोभेनासेवनाद्भिन्नास्तेष्वर्द्धां भृतिमावहेत्।**
**शत्रुत्यक्तान् सुगुणिनः सुभृत्या पालयेन्नृपः॥ ३९६॥**

**अन्वयः**—ये च लोभेन असेवनात् भिन्नाः नृपः तेषु अर्द्धां भृतिम् आवहेत्। शत्रुत्यक्तान् सुगुणिनः सुभृत्या पालयेत्॥ ३९६॥

**व्याख्या**—ये च = सेवकाः, लोभेन = अतिलिप्सया, असेवनात् = सेवाकार्यम् उपेक्षणात्, भिन्नाः = रिपुं परित्यज्य समागताः, नृपः = राजा, तेषु = जनेषु, अर्द्धाम् = पूर्णवेतनात् अर्द्धभागं, भृतिम् = वेतनम्, आवहेत् = प्रयच्छेत्, तथा शत्रुत्यक्तान् = रिपुपरित्यक्तान्, अथ च सुगुणिनः = सुष्ठुगुणवन्तः जनान्, सुभृत्या = सुष्ठुवेतनदानेन, पालयेत् = पोषयेत्॥ ३९६॥

**हिन्दी**—धन के लोभ से राजकाज की उपेक्षा करने वाले शत्रु के सेवकों को आधा वेतन देकर अपने यहाँ नियुक्त कर ले तथा दुश्मन के यहाँ जो गुणवान् सेवक हों उनमें फूट डालकर अपने पक्ष में मिलाकर उन्हें अच्छा वेतन देकर अपने यहाँ रख लेना चाहिए॥ ३९६॥

**लोभेनेति।** ये च लोभेन अधिकप्राप्त्याशया असेवनात् सेवायाम् उपेक्षणादित्यर्थः, भिन्नाः शत्रुतः विच्छिन्नाः नृपः तेषु अर्द्धां भृतिं पूर्णभृतेरर्द्धमित्यर्थः, आवहेत् दद्यात्। तथा शत्रुत्यक्तान् अथ च सुगुणिनः जनान् सुभृत्या सुवेतनेन पालयेत्॥ ३९६॥

**परराष्ट्रे हृते दद्याद् भृतिं भिन्नावधिं तथा।**
**दद्यादर्द्धां तस्य पुत्रे स्त्रियै पादमितां किल॥ ३९७॥**

**अन्वयः**—परराष्ट्रे हृते भिन्नावधिं भृतिं दद्यात्। तथा तस्य पुत्रे अर्धां स्त्रियै पादमितां भृतिं किल दद्यात्॥ ३९७॥

**व्याख्या**—परराष्ट्रे = रिपुराज्ये, हृते = स्वायत्तीकृते सति, भिन्नावधिम् = राज्यापहरणवधिम्, भृतिं = पालनोपयोगि धनं, दद्यात् = प्रयच्छेत्, तथा = तेनैव प्रकारेण, तस्य = शत्रुराज्ञः, पुत्रे = सुते, अर्धाम् = नृपतः अर्द्धभागम्, स्त्रियै = शत्रुपत्न्यै, पादमितां = चतुर्थांशम्, भृतिम् = वेतनम्, किल = निश्चयेन, दद्यात् = प्रयच्छेत्॥ ३९७॥

**हिन्दी**—पराजित राजा का राज्य यदि अपने राज्य में मिला ले तो वैसी स्थिति में पराजित राजा को पराजित काल से लेकर जीवन-यापन के लिए वेतन निर्धारित कर दे। राजा के वेतन का आधा भाग उसके बेटे को तथा वेतन की चौथाई उसकी पत्नी को निश्चित रूप से निर्धारित कर दे॥ ३९७॥

**परराष्ट्रे इति।** परराष्ट्रे शत्रुराज्ये हृते आत्मसात्कृते सति भिन्नावधिं राज्यहरणदिवसावधिं भृतिं भरणोपयोगिधनं दद्यात् तथा तस्य पुत्रे अर्द्धां स्त्रियै पादमितां चतुर्थभागरूपां भृतिं किल निश्चितं दद्यात्॥ ३९७॥

**हृतराज्यस्य पुत्रादौ सद्‌गुणे पादसम्मितम्।**
**दद्याद्वा तद्राज्यतस्तु द्वात्रिंशांशं प्रकल्पयेत्॥ ३९८॥**

**अन्वयः**—हृतराज्यस्य सद्‌गुणे पुत्रादौ पादसम्मितं दद्यात्। वा तु तद्राज्यतः द्वात्रिंशांशं प्रकल्पयेत्॥३९८॥

**व्याख्या**—हृतराज्यस्य—हृतम् = आत्मसात्कृतम्, राज्यम् = राष्ट्रम्, तस्य = रिपोः, सद्‌गुणे = सद्‌गुणसम्पन्ने, पुत्रादौ = सुतादौ, तस्य = राज्यस्य, पादसम्मितम् = चतुर्थांशपरिमितं, दद्यात् = प्रयच्छेत्, वा = अगुणशालिनि तु, द्वात्रिंशांशम् = द्वात्रिंशभागम्, प्रकल्पयेत् = समर्पयेत्॥३९८॥

**हिन्दी**—पराजित राजा के बेटे यदि सद्‌गुणसम्पन्न हों तो उनके जीविकार्थ उनसे छीने गये राज्य का चौथा भाग उन्हें दे। किन्तु यदि उनके बेटे गुणवान् न हों तो उन्हें केवल अपहृत राज्य का बत्तीसवाँ भाग ही देना चाहिए॥३९८॥

**हृतेति**। हृतं राज्यं यस्य तस्य शत्रोः सद्‌गुणे सुगुणशालिनि पुत्रादौ तस्य राज्यस्य पादसम्मितं चतुर्थभागमित्यर्थः, दद्यात् वा एव वाशब्दः अवधारणार्थः, अगुणशालिनि तु द्वात्रिशांशं प्रकल्पयेत् दद्यादित्यर्थः॥३९८॥

**हृतराज्यस्य निचितं कोशं भोगार्थमाहरेत्॥ ३९९॥**

**अन्वयः**—हृतराज्यस्य निचितं कोशं भोगार्थम् आहरेत्॥३९९॥

**व्याख्या**—हृतराज्यस्य = रिपोः अपहृतराष्ट्रस्य, निचितम् = सञ्चितम्, कोशम् = धनागारं, स्वस्य, भोगार्थम् = उपभोगहेतवे, आहरेत् = गृह्णीयात्॥३९९॥

**हिन्दी**—शत्रु के अपहृत राज्य में उसके द्वारा संचित जो खजाना है. उसे विजयी राजा अपने उपभोग के लिए रख ले॥३९९॥

**हृतेति**। हृतराज्यस्य शत्रोः निचितं सञ्चितं कोशं धनं स्वस्य भोगार्थम् आहरेत् गृह्णीयात्॥३९९॥

**कौसीदं वा तद्धनस्य पूर्वोक्तार्द्धं प्रकल्पयेत्।**
**तद्धनं द्विगुणं यावन्न तदूर्ध्वं कदाचन॥ ४००॥**

**अन्वयः**—वा तत् धनस्य कौसीदं पूर्वोक्तम् अर्धं यावत् तत् धनं द्विगुणं तावत् प्रकल्पयेत्, कदाचन तत् ऊर्ध्वं न॥४००॥

**व्याख्या**—वा = अथवा, तत् = तस्य नृपस्य, धनस्य = सञ्चितकोशस्य, कौसीदम् = वृद्धि-धनम्, पूर्वोक्तम् = प्राक्कथितम्, अर्धम् = अर्धभागं, यावत् = कालावधि, तद् धनं द्विगुणं भवेत्, तावत् = अवधिपर्यन्तं, प्रकल्पयेत् = विचारयेत्, कदाचन = कथमपि, तस्मात् = पूर्वोक्तधनात्, ऊर्ध्वम् = उपरि, न = नहि, दद्यात्॥४००॥

**हिन्दी**—अथवा पराजित राजा के संचित कोश का आधा धन का सूद उसे तब तक देता रहे जब तक सूद की रकम मूल धन से दूनी न हो जाय। इससे ऊपर बिलकुल देना बन्द कर दे॥४००॥

**कौसीदमिति**। वा अथवा तद्धनस्य तस्य निचितकोशस्य इत्यर्थः, कौसीदं वृद्धिस्वरूपं

पूर्वोक्तम् अर्द्धं यावत् तत् धनं द्विगुणं भवेत् तावत्कालपर्य्यन्तं कल्पयेत् कदाचन तस्मात् ऊर्द्ध्वं न द्वैगुण्यादधिकं नेत्यर्थः॥४००॥

**स्वमहत्त्वद्योतनार्थं हृतराज्यान् प्रधारेयत्।**
**प्राङ्मानैर्यदि सद्वृत्तान् दुर्वत्तास्तु प्रपीडयेत्॥४०१॥**

**अन्वयः**—हृतराज्यान् यदि स्वमहत्त्वद्योतनार्थं प्राङ्मानैः सद्वृत्तान् धारयेत्, दुर्वत्तांस्तु प्रपीडयेत्॥४०१॥

**व्याख्या**—हृतराज्यान् = पराजितरिपून्, यदि = चेत्, सद्वृत्तान् = सदाचारनिरतान्, तदा, स्वस्य = आत्मनः, महत्त्वद्योतनार्थम् = माहात्म्यप्रकटनार्थम्, प्राङ्मानैः = पूर्ववत् राजोचितैः, मानैः = समादरैः, धारयेत् = स्थापितं कुर्यात्, दुर्वृत्तान् = दुराचारान्, तु = किन्तु, प्रपीडयेत् = दुःखयेत्॥४०१॥

**हिन्दी**—यदि पराजित राजा सदाचारी हो तो अपनी महत्ता प्रदर्शित करने के लिए सर्वप्रथम उसके साथ सम्मानपूर्वक व्यवहार करना चाहिए। किन्तु यदि वह दुराचारी हो तो उसे हर तरह से सताना चाहिए॥४०१॥

**स्वेति।** हृतराज्यान् शत्रून् यदि सद्वृत्तान् सदाचारान् स्वस्य माहात्म्यद्योतनार्थं निजमहिमप्रकटनार्थं प्राङ्मानैः पूर्ववत् राजोचितैः मानैः सम्मानैः धारयेत् स्थापयेत् दुर्वृत्तांस्तु प्रपीडयेत्॥४०१॥

**अष्टधा दशधा वापि कुर्य्याद् द्वादशधापि वा।**
**यामिकार्थमहोरात्रं यामिकान् वीक्ष्य नान्यथा॥४०२॥**

**अन्वयः**—यामिकान् वीक्ष्य यामिकार्थम् अहोरात्रम् अष्टधा दशधा वा द्वादशधापि कुर्यात्, अन्यथा न॥४०२॥

**व्याख्या**—यामिकान् = प्रहरिणः, वीक्ष्य = अवलोक्य, यामिकार्थम् = प्रहरिणां निमित्तम्, अहोरात्रम् = दिवानिशम्, अष्टधा = अष्टखण्डेषु विभज्य, दशधा = दशखण्डे विभज्य, वा = अथवा, द्वादशधापि = द्वादशखण्डेऽपि विभज्य, कुर्यात् = प्रहरार्थं नियोजयेत्, अन्यथा = इतरथा, न = नहि॥४०२॥

**हिन्दी**—पहरेदारों की संख्या देखकर तदनुसार उनके लिए दिन-रात को आठ, दश या बारह खण्डों में विभाजित कर उस पर उनकी ड्यूटी लगा दे, दूसरे ढंग से बिलकुल नहीं॥४०२॥

**अष्टधेति।** यामिकान् प्रहरिणः वीक्ष्य विचार्य्य यामिकार्थं प्रहरिणां निमित्तम् अहोरात्रम् अष्टधा दशधा अथवा द्वादशधा कुर्य्यात् विभजेदित्यर्थः, अन्यथा न, यामिकानामेव दिवाविभागस्य आवश्यकत्वादिति भावः॥४०२॥

**आदौ प्रकल्पितानंशान् भजेयुर्यामिकास्तथा।**
**आद्यः पुनस्त्वन्तिमांशं स्वपूर्वांशं ततोऽपरे॥४०३॥**

**अन्वयः**—यामिकाः आदौ तथा प्रकल्पितान् अंशान् भजेयुः। किञ्च आद्यः अन्तिमांशं ततः अपरे पुनः स्वपूर्वांशम्॥४०३॥

**व्याख्या**—यामिकाः = प्रहरिणः, आदौ = प्रथमतः, तथा = तेनैव प्रकारेण, प्रकल्पितान् = यथानिर्दिष्टान्, अंशान् = भागान्, भजेयुः = गृह्णीयुः, किञ्च, आद्यः = प्रथमः प्रहरी, अन्तिमांशम् = अवशिष्टभागम्, ततः = तत्पश्चात्, अपरे = अन्ये, पुनः यामिकाः, स्वपूर्णांशम् = निजपूर्वभागम्, गृह्णीयुः ॥ ४०३ ॥

**हिन्दी**—पहले नियत किये गये समय-विभाग के अनुसार पहरेदार पहरा दे। यह विभाजन ऐसा हो कि पहले भाग पर पहरा देने वाला ही अन्तिम खण्ड पर भी पहरा दे। बीच के भाग पर दूसरे का पहरा होना चाहिए ॥ ४०३ ॥

**आदाविति**। यामिकाः प्रहरिणः आदौ अग्रतः तथा तेन प्रकारेण प्रकल्पितान् निर्दिष्टान् अंशान् भजेयुः गृह्णीयुः। किञ्च आद्यः प्रथमः यामिकः अन्तिमांशं शेषभागं ततः आद्यात् अपरे अन्ये यामिका स्वपूर्वांशं निज-निजपूर्वभागं भजेयुरिति शेषः ॥ ४०३ ॥

पुनर्वा योजयेत् तद्वदाद्येऽन्त्यं चान्तिमे ततः।
स्वपूर्वांशं द्वितीयेऽह्नि द्वितीयादिक्रमागतम् ॥ ४०४ ॥

**अन्वयः**—पुनश्च आद्ये अन्त्यं तद्वत् तथा अन्तिमे वा आद्यं तथा द्वितीये अह्नि द्वितीयादिक्रमागतं स्वपूर्वांशं योजयेत् ॥ ४०४ ॥

**व्याख्या**—पुनश्च = भूयश्च, आद्ये = प्रथमे यामिके, अन्त्यम् = अन्तिमम्, तद्वत् = तेनैव प्रकारेण, अन्तिमे = अवशिष्टे शेषे वा यामिके, आद्यम् = अग्र्यम्, तथा द्वितीये अह्नि = अपरस्मिन् दिने, द्वितीयादिक्रमागतम् = अपरानुपूर्वीयक्रमेण, स्वस्य = आत्मनः, पूर्वांशम् = पूर्वभागे स्थितम्, योजयेत् = नियुक्तं कुर्यात् ॥ ४०४ ॥

**हिन्दी**—इसी तरह फिर पहला तथा अन्तिम भाग करके पहले का क्रम बदल दे। दूसरे दिन वह अपने पूर्वभाग पर पहरा दे और जो अन्तिम भाग पर पहरा देता था, उसे फिर पहले भाग पर चक्रानुक्रम से नियुक्त कर दे ॥ ४०४ ॥

**पुनरिति**। पुनश्च आद्ये यामिके अन्त्यं तद्वत् तथा अन्तिमे शेषे यामिके वा आद्यं तथा द्वितीये अह्नि द्वितीयादिक्रमागतं स्वपूर्वांशं योजयेत् ॥ ४०४ ॥

चतुर्भ्यस्त्वधिकान् नित्यं यामिकान् योजयेद्दिने।
युगपद्योजयेद् दृष्ट्वा बहून् वा कार्य्यगौरवम् ॥ ४०५ ॥

**अन्वयः**—दिने चतुर्भ्यः अधिकान् यामिकान् योजयेत् वा कार्यगौरवं दृष्ट्वा युगपत् बहून् योजयेत् ॥ ४०५ ॥

**व्याख्या**—दिने = दिवसे, चतुर्भ्यः, अधिकान् = विशेषान्, यामिकान् = प्रहरिणः, नित्यम् = प्रतिदिनम्, योजयेत् = नियुञ्ज्यात्, वा = अथवा, कार्यगौरवम्—कार्यस्य = कृत्यस्य, गौरवम् = महत्त्वम्, दृष्ट्वा = अवलोक्य, युगपत् = एकस्मिन्नेव काले, बहून् = अत्यधिकान्, प्रहरिणः, योजयेत् = नियुञ्ज्यात् ॥ ४०५ ॥

**हिन्दी**—काम की गुरुता देखकर एक स्थान पर एक दिन में चार से अधिक पहरेदारों को भी नियुक्त किया जा सकता है ॥ ४०५ ॥

**चतुर्भ्य इति**। दिने चतुर्भ्यः अधिकान् यामिकान् नित्यं प्रत्यहं योजयेत् नियुञ्ज्यात्, वा अथवा कार्य्यगौरवं दृष्ट्वा युगपत् एककालं बहून् यामिकान् योजयेत् ॥ ४०५ ॥

**चतुरूनान् यामिकांस्तु कदा नैव नियोजयेत्॥ ४०६ ॥**

**अन्वयः**—कदापि चतुरूनान् यामिकान् नैव नियोजयेत् ॥ ४०६ ॥

**व्याख्या**—कदापि = कथमपि, चतुरूनान् = चतुर्भ्यः अल्पान्; एकम्, द्वौ त्रीन् वा, यामिकान् = प्रहरिणः, नैव = नास्त्येव, नियोजयेत् = नियुञ्ज्यात् ॥ ४०६ ॥

**हिन्दी**—चार से कम पहरेदारों को कहीं भी काम पर नहीं लगाना चाहिए ॥ ४०६ ॥

**चतुरूनानिति**। कदापि चतुरूनान् चतुर्भ्यः हीनान् एकं द्वौ त्रीन् वेत्यर्थः, यामिकान् नैव नियोजयेत् ॥ ४०६ ॥

**यद्रक्ष्यमुपदेश्यं यदादेश्यं यामिकाय तत्।**
**तत् समक्षं हि सर्वं स्याद्यामिकोऽपि च तत्तथा॥ ४०७ ॥**

**अन्वयः**—यत् रक्ष्यं यच्च उपदेश्यं तत् यामिकाय आदेश्यम्। हि सर्वं तत् समक्षं स्यात्, यामिकोऽपि तत् तथा ॥ ४०७ ॥

**व्याख्या**—यत् = वस्तु, रक्ष्यम् = रक्षणीयम्, यच्च = विषयम्, उपदेश्यम् = उपदेष्टुं योग्यम्, तत् = विषयम्, यामिकाय = प्रहरिणे, आदेश्यम् = आज्ञापितव्यम्। हि = यतः, सर्वम् = प्रजानां सकलं कार्यम्, तत् = तस्य प्रहरिणः, समक्षम् = सम्मुखम्, स्यात् = भवेत्, तस्मात् यामिकोऽपि = प्रहरी अपि, तत् = सकलं कार्यम्, तथा = शिक्षेत ॥ ४०७ ॥

**हिन्दी**—जो वस्तु रक्षा करने लायक हो अथवा किसी को समझाने योग्य हो तो उसके लिए भी पहरेदारों को ही आदेश देना चाहिए। क्योंकि सारे काम पहरेदारों के सामने ही होते हैं। अतः वह भी उसे उस विषय में जानकारी रहने के बाद वैसा ही करने को कहेगा ॥४०७ ॥

**यदिति**। यत् रक्ष्यं रक्षणीयं यच्च उपदेश्यं शिक्षणीयं तत् यामिकाय आदेश्यम् उपदेष्टव्यं, हि यतः सर्वं प्रजानां कार्य्यं तत् समक्षं तस्य यामिकस्य समक्षं प्रत्यक्षं स्यात् तस्मात् यामिकोऽपि तत् सर्वं तथा शिक्षेतेति शेषः ॥ ४०७ ॥

**कीलकोष्ठे तु स्वर्णादि रक्षेन्नियमितावधि।**
**स्वांशान्ते दर्शयेदन्ययामिकन्तु यथार्थकम्॥ ४०८ ॥**

**अन्वयः**—यामिकः नियमितावधि स्वर्णादि कीलकोष्ठे रक्षेत्। स्वांशान्ते अन्ययामिकं यथार्थकं तत् दर्शयेत् ॥ ४०८ ॥

**व्याख्या**—यामिकः, नियमितावधि = निर्धारितसमयपर्य्यन्तं, स्वर्णादि = कनकादि धनम्, यत् स्वस्वामिकम् अस्वामिकं वा, कीलकोष्ठे = तालकेन निरुद्धप्रकोष्ठे, रक्षेत्। ततः, स्वस्य = आत्मनः, अंशान्ते = प्रहरिकालस्यावसाने, अन्ययामिकम् = स्वपदे उपस्थितं प्रहरिणम्, यथार्थकम् = यथा-स्थितिम्, तत् = सकलम्, दर्शयेत् = दर्शयित्वा समर्पयेत् ॥ ४०८ ॥

**हिन्दी**—निश्चित समय तक तालाबन्द कमरे में रखे हुए सोने आदि धन की रक्षा जो पहरेदार करता है, पहरा बदलने पर उस रक्षणीय वस्तु की स्थिति अर्थात् ताला-कुण्डी दिखाकर दूसरे पहरेदार को अपना काम सौंप देना चाहिए ॥ ४०८ ॥

**कीलेति**। यामिकः नियमितावधि निर्द्धारितकालं यावत् स्वर्णादि यत् अस्वामिकं वा सस्वामिकं चोरितादिप्राप्तमिति भावः, कीलकोष्ठे कीलस्य आश्रयस्तम्भस्य कोष्ठे मध्ये रक्षेत्।

ततः स्वस्य अंशान्ते प्रहरिकालस्य अंशावसाने अन्ययामिकं स्वपदे उपस्थितमिति शेषः, यथार्थकं तत् सर्वं दर्शयेत् दर्शयित्वा बोधयेत् इत्यर्थः ॥ ४०८ ॥

**क्षणे क्षणे यामिकानां कार्य्यं दूरात् सुबोधनम् ॥ ४०९ ॥**

**अन्वयः**—क्षणे क्षणे दूरात् सुबोधनं यामिकानां कार्यम् ॥ ४०९ ॥

**व्याख्या**—क्षणे क्षणे = प्रतिक्षणम्, दूरात् = आरात्, सुबोधनम् = प्रजानां जागरणसम्पादनम्, यामिकानाम् = प्रहरिणाम्, कार्यम् = कृत्यमस्ति ॥ ४०९ ॥

**हिन्दी**—पहरेदारों का यह कर्त्तव्य होता है कि दूर से ही प्रतिक्षण वह सबों को सावधान करते रहे ॥ ४०९ ॥

**क्षणे इति**। क्षणे क्षणे दूरात् सुबोधनं प्रजानां सतर्कतासम्पादनं यामिकानां कार्य्यम् ॥ ४०९ ॥

**सत्कृतान् नियमान् सर्वान् यदा सम्पालयेन्नृपः।**
**तदैव नृपतिः पूज्यो भवेत् सर्वेषु नान्यथा ॥ ४१० ॥**

**अन्वयः**—नृपः यदा सत्कृतान् सर्वान् नियमान् सम्पालयेत् तदैव नृपतिः सर्वेषु पूज्यः भवेत्, अन्यथा न ॥ ४१० ॥

**व्याख्या**—नृपः = राजा, यदा = यस्मिन्काले, सत्कृतान् = शोभनान् कृत्यान्, सर्वान् = सकलान्, नियमान् = व्यवस्थाः, सम्पालयेत् = पालनं कुर्यात्, तदैव = तस्मिन्नेवावस्थायाम्, नृपतिः = भूपः, सर्वेषु = जगत्सु, पूज्यः = श्रेष्ठः, भवेत् = स्यात्, अन्यथा = इत्थं विहाय, न = नहि ॥ ४१० ॥

**हिन्दी**—राजा जब सुन्दर ढंग से सभी नियमों का अच्छी तरह पालन करता है तभी वह सभी लोगों के बीच आदरणीय होता है, अन्यथा नहीं ॥ ४१० ॥

**सत्कृताननिति**। नृपः यदा सत्कृतान् शोभनान् सर्वान् नियमान् सम्पालयेत्, तदैव नृपतिः सर्वेषु जगत्सु पूज्यः भवेत् अन्यथा न ॥ ४१० ॥

**यस्यास्ति नियतं कर्म नियतः सद्ग्रहो यदि।**
**नियतोऽसद्ग्रहत्यागो नृपत्वं सोऽश्नुते चिरम् ॥ ४११ ॥**

**अन्वयः**—यस्य नियतं कर्म तथा नियतः सद्ग्रहः तथा असद्ग्रहत्यागः नियतः, सः चिरं नृपत्वम् अश्नुते ॥ ४११ ॥

**व्याख्या**—यस्य = नृपस्य, नियतम् = निश्चितम्, सततम्, कर्म = कर्त्तव्यम्, तथा = यदि, नियतः = निधारितः, सत्सु = सुन्दरविषयेषु, ग्रहः = आग्रहः, तथा = तेनैव रूपेण, असत्सु = अनर्गलविषयेषु, ग्रहत्यागः = उपेक्षाभावः, नियतः = सुस्थिरः, सः = असौ राजा, चिरम् = बहुकालपर्यन्तम्, नृपत्वम् = राजपदत्वम्, अश्नुते = उपभुज्यते ॥ ४११ ॥

**हिन्दी**—जिस राजा का हर काम हर समय नियमित होता है तथा सुन्दर विषयों में जिसकी रुचि और दुर्वत्तों के प्रति अरुचि रहती है, वह राजा या वैसा ही राजा बहुत दिनों तक अपने राजपद का उपभोग करता है ॥ ४११ ॥

**यस्येति**। यस्य नियतं सततं कर्म कार्य्याभिनिवेशः तथा यदि नियतः सत्सु विषयेषु ग्रहः आदरः, तथा असत्सु विषयेषु ग्रहत्यागः अनादरः नियतः, सः चिरं नृपत्वं राजत्वम् अश्नुते प्राप्नोति ॥ ४११ ॥

**यस्यानियमितं कर्म साधुत्वं वचनं त्वपि।**
**सदैव कुटिलः सख्युः स्वपदाद् द्राग्विनश्यति॥४१२॥**

**अन्वयः**—यस्य कर्म साधुत्वं तथा वचनम् अनियमितं सदैव कुटिलं, सः सख्युः स्वपदात् द्राक् विनश्यति॥४१२॥

**व्याख्या**—यस्य = नृपस्य, कर्म = कार्यम्, साधुत्वम् = सुष्ठु भवति, तथा वचनम् = तस्य नृपस्य कथनम्, अनियमितम् = अव्यवस्थितम्, सदैव = सर्वदा, कुटिलम् = वक्रम्, सः = असौ राजा, सख्युः = सुहृदः, स्वपदात्—स्वस्य = आत्मनः, पदात् = नृपत्वात्, द्राक् = झटिति, विनश्यति = विनष्टो भवति॥४१२॥

**हिन्दी**—जिस राजा का काम सुन्दर हो किन्तु बातें अव्यवस्थित हों, सदैव कुटिल हो, वह राजा शीघ्र ही अपने मित्र एवं राज्य से भ्रष्ट हो जाता है॥४१२॥

**नापि व्याघ्रगजाः शक्ता मृगेन्द्रं शासितुं यथा।**
**न तथा मन्त्रिणः सर्वे नृपं स्वच्छन्दगामिनम्॥४१३॥**
**निर्भृताधिकृतास्तेन निःसारत्वं हि तेष्वतः।**
**गजो निबध्यते नैव तूलभारसहस्रकैः॥४१४॥**

**अन्वयः**—यथा व्याघ्रगजाः मृगेन्द्रं शासितुं न शक्ताः तथा तेन निर्भृताधिकृताः सर्वे मन्त्रिणः स्वच्छन्दगामिनं नृपं न। अतः तेषु निःसारत्वं तूलभारसहस्रकैः गजः नैव निबध्यते॥४१३-४१४॥

**व्याख्या**—यथा, व्याघ्राः = शार्दूलाः, च = पुनः, गजाः = हस्तिनः, मृगेन्द्रम् = सिंहम्, शासितुम् = शासनं कर्त्तुम्, न = नहि, शक्ताः = समर्थाः भवन्ति, तथा, तेन = नृपेण, निर्भृताः—निःशेषेण, भृताः = पालिताः, अधिकृताः = हस्तगताः, सर्वे = सकलाः, मन्त्रिणः = अमात्याः, स्वच्छन्दगामिनम् = स्वेच्छाचारिणम्, तं नृपं शासितुं न समर्थाः भवन्ति। अतः = अनेन कारणेन, तेषु = अमात्येषु, निःसारत्वम् = सारहीनत्वम्, तूलानाम् = कार्पासानाम्, भारसहस्रकैः = सहस्रैरपि भारैः, गजः = हस्ती, नैव = नास्त्येव, निबध्यते = बन्धनं गच्छति॥

**हिन्दी**—जैसे बाघ और हाथी सिंह पर शासन नहीं कर सकते, उसी तरह सभी मंत्री और अधिकारी गण स्वेच्छाचारी राजा के ऊपर शासन नहीं कर सकते। क्योंकि वे मंत्री तथा अधिकारीगण उसी राजा से पालित तथा पदारूढ़ होते हैं। राजा के सामने शासन करने में वे निस्तेज हैं; ठीक उसी तरह जैसे हजारों भार रूई की पूनी हाथी को नहीं बाँध सकती॥

**नापीति**। यथा व्याघ्रा गजाश्च मृगेन्द्रं सिंहं शासितुं न शक्ताः, तथा तेन नृपेण निर्भृताः निःशेषेण भृताः अधिकृताः भृत्याः सर्वे मन्त्रिणः स्वच्छन्दगामिनं स्वेच्छाचारिणं तं नृपं शासितुं न शक्ता इत्यर्थः। अतः अस्मात् कारणात् तेषु मन्त्रिषु निःसारत्वम् अक्षमत्वमित्यर्थः, राज्ञः स्वेच्छाचारित्वात् मन्त्रिणामक्षमत्वं सुतरामायातमिति भावः। तूलानां कार्पासानां भारसहस्रकैः सहस्रैरपि भारैरित्यर्थः गजः नैव निबध्यते॥४१३-४१४॥

उद्धर्त्तुं द्रागगजः शक्तः पङ्कलग्नं गजं बली।
नीतिभ्रष्टनृपं त्वन्यनृप उद्धरणक्षमः ॥ ४१५ ॥

**अन्वयः**—बली गजः पङ्कलग्नं गजं द्राक् उद्धर्तु शक्तः, तु अन्यनृपः नीतिभ्रष्टनृपम् उद्धरणक्षमः ॥ ४१५ ॥

**व्याख्या**—बली = शक्तिशाली, गजः = हस्ती, पङ्कलग्नम् = पङ्के पतितम्, गजम् = हस्तिनम्, द्राक् = शीघ्रमेव, उद्धर्तुम् = पङ्कात् समुद्धर्तुम्, शक्तः = समर्थः, तु = तथा, अन्यनृपः = शक्तिशाली अन्य राजा, नीतिभ्रष्टम् = कुमार्गगामिनम्, नृपम् = राजानम्, उद्धरणक्षमः = उद्धर्तुं समर्थः ॥ ४१५ ॥

**हिन्दी**—कीचड़ में फँसे हाथी को जैसे कोई शक्तिशाली हाथी ही निकाल सकता है, उसी तरह नीतिभ्रष्ट राजा को कोई शक्तिशाली राजा ही उद्धार कर सकता है ॥ ४१५ ॥

**उद्धर्तुमिति**। बली प्रबलः गजः पङ्कलग्नं कर्दमपतितं गजं द्राक् झटिति उद्धर्तुं शक्तः। तु तथेत्यर्थः, अन्यनृपः नीतिभ्रष्टं नृपम् उद्धरणक्षमः अत्र नृपमिति कृद्योगे षष्ठ्यभाव आर्षः ॥ ४१५ ॥

बलवन्नृपभृत्येऽल्पेऽपि श्रीस्तेजो यथा भवेत्।
न तथा हीननृपतौ तन्मन्त्रिष्वपि नो तथा ॥ ४१६ ॥

**अन्वयः**—बलवन्नृपभृत्ये अल्पेऽपि यथा श्रीः तेजश्च भवेत् हीननृपतौ तथा न; तस्य मन्त्रिष्वपि तथा नो भवेत् ॥ ४१६ ॥

**व्याख्या**—बलवतः = शक्तिशालिनः, नृपस्य = राज्ञः, भृत्ये = सेवके, अल्पेऽपि = क्षुद्रेऽपि, यथा श्रीः = कान्तिः, तेजः = प्रभावः, भवेत्, हीननृपतौ = शक्तिहीने भूपे, तथा, न = नहि, तस्य = नृपस्य, मन्त्रिष्वपि = अमात्येष्वपि, तथा = तेन रूपेण, नो भवेत् ॥ ४१६ ॥

**हिन्दी**—बलवान् राजा के साधारण नौकर-चाकर में भी जो तेज और ओज दीख पड़ता है, वह शक्तिहीन राजा में या उनके मन्त्रियों में उपलब्ध नहीं होता ॥ ४१६ ॥

**बलवदिति**। बलवतः नृपस्य भृत्ये अल्पे क्षुद्रेऽपि यथा श्रीः तेजश्च भवेत् हीननृपतौ दुर्बले राजनि न तस्य मन्त्रिषु अपि तथा नो भवेदित्यर्थः ॥ ४१६ ॥

बहूनामैकमत्यं हि नृपतेर्बलवत्तरम्।
बहुसूत्रकृतो रज्जुः सिंहाद्याकर्षणक्षमः ॥ ४१७ ॥

**अन्वयः**—बहूनाम् ऐकमत्यं नृपतेः अपि बलवत्तरं हि। बहुसूत्रकृतः रज्जुः सिंहाद्याकर्षणक्षमः ॥ ४१७ ॥

**व्याख्या**—बहूनाम् = अत्यधिकानाम्, जनानाम्, ऐकमत्यम् = एकमतम्, नृपतेः = भूपतेः अपि, बलवत्तरम् = अधिकबलशालिनम्, हि = निश्चयेन। तथाहि—बहुसूत्रकृतः—बहुभिः = अनेकैः, सूत्रैः = तन्तुभिः, कृतः = रचितः, रज्जुः = दाम, सिंहादीनाम् = मृगेन्द्रादीनाम्, आकर्षणे = आनयने, क्षमः = समर्थो भवति ॥ ४१७ ॥

**हिन्दी**—बहुमत की ताकत राजा से अधिक होती है, क्योंकि अनेक तन्तुओं से बनी मोटी रस्सी सिंह आदि जैसे बलवान् जन्तुओं को भी खींच लाने में

समर्थ होती है ॥४१७॥

**बहूनामिति**। बहूनाम् ऐकमत्यं नृपतेः राज्ञः अपि बलवत्तरम् अधिकबलवत् हि। तथा हि बहुसूत्रकृतः बहूभिः सूत्रैः निर्मितः रज्जुः सिंहादीनाम् आकर्षणे क्षमः शक्तः॥४१७॥

**हीनराज्यो दुष्टभृत्यो न सैन्यं धारयेद् बहु।**
**कोशवृद्धिं सदा कुर्य्यात् स्वपुत्राद्यभिवृद्धये॥४१८॥**

**अन्वयः**—हीनराज्यः दुष्टभृत्यः बहुसैन्यं न धारयेत्। स्वपुत्राद्यभिवृद्धये सदा कोशवृद्धिं कुर्यात्॥४१८॥

**व्याख्या**—हीनराज्यः—हीनम् = क्षुद्रम्, राज्यम् = राष्ट्रम्, यस्य सः तथा दुष्टः = दुर्वृत्तः, भृत्यः = सेवकः, यस्य तादृशः, राजा, बहुसैन्यम् = अत्यधिकबलम्, न = नहि, धारयेत् = रक्षेत्। स्वपुत्राद्यभिवृद्धये—स्वस्य = आत्मनः, पुत्रादीनाम् = सुतादीनाम्, अभिवृद्धये = अभ्युदयाय, सदा = सर्वदा, कोशवृद्धिम् = धनानाम् अभिवर्द्धनं, कुर्यात् = विद्यात्॥४१८॥

**हिन्दी**—छोटे राज्य वाला एवं दुष्ट सेवक वाला छोटा राजा अपने पास बहुत अधिक सेना न रखे। बल्कि वह सदा अपनी सन्तान आदि के अभ्युदय के लिए खजाने में धन-दौलत बढ़ाता रहे॥४१८॥

**हीनेति**। हीनं राज्यं यस्य सः तथा दुष्टः भृत्यः यस्य तादृशः नृपः बहुसैन्यं न धारयेत्, स्वस्य आत्मनः पुत्रादीनाम् अभिवृद्धये अभ्युदयाय सदा कोशवृद्धिं धनवृद्धिं कुर्य्यात्॥४१८॥

**क्षुधया निद्रया सर्वमशनं शयनं शुभम्।**
**भवेद्यथा तथा कुर्य्यादन्यथाशु दरिद्रकृत्॥४१९॥**

**अन्वयः**—सर्वम् अशनं शयनं च यथा शुभं भवेत् तथा कुर्यात्। अन्यथा क्षुधया निद्रया च आशु दरिद्रकृत्॥४१९॥

**व्याख्या**—सर्वम् = सकलम्, अशनम् = भोजनम्, शयनम् = सुप्तिम्, च, यथा = येन प्रकारेण, शुभम् = कल्याणप्रदम्, भवेत् = स्यात्, तथा = तेनैव प्रकारेण, कुर्यात् = निष्पादयेत्। अन्यथा = इतरथा, क्षुधया = बुभुक्षया, निद्रया = सुप्तया, च, आशु = शीघ्रम्, दरिद्रकृत् = निर्धनताजनकं भवेत्॥४१९॥

**हिन्दी**—जब भूख लगे तब भोजन और जब नींद लगे तब सोना, ये सब राजा के लिए कल्याणकारी होते हैं। नहीं तो खाने और सोने से दरिद्रता शीघ्र आ धमकती है॥४१९॥

**क्षुधयेति**। सर्वम् अशनं भोजनं शयनञ्च यथा शुभं भवेत् तथा कुर्य्यात्, अन्यथा क्षुधया निद्रया च आशु शीघ्रं दरिद्रकृत् दारिद्र्यजनकं भवेदित्यर्थः॥४१९॥

**दिशानया व्ययं कुर्य्यान्नृपो नित्यं न चान्यथा।**
**धर्म्मनीतिविहीना ये दुर्बला अपि वै नृपाः।**
**सुधर्म्मबलयुग्राज्ञा दण्ड्यास्ते चौरवत् सदा॥४२०॥**

**अन्वयः**—नृपः अनया दिशा नित्यं व्ययं कुर्यात्, अन्यथा न। ये नृपाः दुर्बलाः तथा धर्मनीति-विहीनाः ते सुधर्मबलयुग्राज्ञा सदा चौरवत् दण्ड्याः॥४२०॥

**व्याख्या**—नृपः = राजा, अनया = पूर्वोक्तया, दिशा = रीत्या, नित्यम् = प्रतिदिनम्, व्ययम्

= धनस्य निर्गमनम्, कुर्यात् = निष्पादयेत्, अन्यथा = भिन्नप्रकारेण, न = नहि। ये = पूर्वोक्ताः, नृपाः = राजानः, दुर्बलाः = शक्तिहीनाः, तथा, धर्मेण = पुण्यकर्मणा, नीत्या = सुव्यवस्थया, च = पुनः, विहीनाः = रहिताः, ते = सर्वे, सुधर्मबलयुजा = सुष्ठुकर्मशक्तिसंयुक्तेन, राज्ञा = नृपेण, सदा = सर्वदा, चौरवत् = तस्कर इव, दण्ड्याः = दण्डनीयाः ॥४२०॥

**हिन्दी**—इस तरह राजा को खर्च करना चाहिए कि वह शीघ्र दरिद्र न हो जाय, इससे भिन्न ढंग से खर्च नहीं करना चाहिए। जो राजे दुर्बल तथा धर्म और नीति से रहित हैं, उन्हें धर्म तथा बल युक्त राजा हमेशा चोर की तरह दण्ड दे ॥४२०॥

**दिशेति**। नृपः अनया दिशा रीत्या नित्यं व्ययं कुर्य्यात् अन्यथा न। ये नृपाः दुर्बलाः तथा धर्मेण नीत्या च विहीनाः ते सुधर्मबलयुजा राज्ञा सदा चौरवत् दण्ड्याः। अपि वै शब्दः पादपूरणार्थः ॥४२०॥

**सर्वधर्मावनान्नीचनृपोऽपि श्रेष्ठतामियात्।**
**उत्तमोऽपि नृपो धर्म्मनाशनान्नीचतामियात् ॥४२१॥**

**अन्वयः**—नीचनृपोऽपि सर्वधर्मावनात् श्रेष्ठताम् इयात्, तथा उत्तमोऽपि नृपः धर्मनाशनात् नीचताम् इयात् ॥४२१॥

**व्याख्या**—नीचनृपोऽपि = अधमभूपोऽपि, सर्वेषाम् = अखिलानाम्, धर्माणाम् = पुण्यानाम्, अवनात् = पालनात् रक्षणाच्च, श्रेष्ठताम् = उच्चपदताम्, इयात् = गच्छेत्, तथा उत्तमोऽपि = उत्कृष्टोऽपि, नृपः = राजा, धर्मनाशनात् = पुण्यविनाशनात्, नीचताम् = अधमताम्, इयात् = प्राप्नुयात् ॥४२१॥

**हिन्दी**—सम्पूर्ण राजधर्मों का पालन करता हुआ नीच राजा भी श्रेष्ठता को प्राप्त करता है और उत्तम कोटि का राजा भी राजधर्मों की रक्षा न करने के कारण नीच हो जाता है ॥४२१॥

**सर्वेति**। नीचनृपोऽपि सर्वेषां धर्माणाम् अवनात् रक्षणात् श्रेष्ठताम् इयात् प्राप्नुयात् तथा उत्तमोऽपि नृपः धर्मनाशनात् नीचताम् इयात् ॥४२१॥

**धर्माधर्मप्रवृत्तौ तु नृप एव हि कारणम्।**
**स हि श्रेष्ठतमो लोके नृपत्वं यः समाप्नुयात् ॥४२२॥**

**अन्वयः**—नृपः एव धर्माधर्मप्रवृत्तौ हि कारणम्। यः नृपत्वं समाप्नुयात् लोके सः हि श्रेष्ठतमः ॥४२२॥

**व्याख्या**—नृप एव = राजा एव, धर्मस्य = पुण्यकर्मणः, अधर्मस्य = पापकर्मणः, प्रवृत्तौ = रुचौ, कारणम् = हेतुः, हि = निश्चयेन, यः = राजा, नृपत्वम् = राजत्वम्, समाप्नुयात् = प्राप्नुयात्, लोके = संसारे, सः = असौ, हि = एव, श्रेष्ठतमः = उत्कृष्टः ॥४२२॥

**हिन्दी**—लोगों की धर्म तथा अधर्म में रुचि होने का कारण राजा ही होता है अर्थात् राजा के धार्मिक या अधर्मी होने का प्रभाव प्रजा पर भी पड़ता है। अतः वही सर्वश्रेष्ठ होता है, जो राजपद को प्राप्त होता है ॥४२२॥

**धर्मेति**। नृपः एव धर्मस्य अधर्मस्य च प्रवृत्तौ कारणं हि। यः नृपत्वं समाप्नुयात् लोके जगति स हि स एव श्रेष्ठतमः ॥४२२॥

मन्वाद्यैरादृतो योऽर्थस्तदर्थो भार्गवेण वै।
द्वाविंशतिशतं श्लोका नीतिसारे प्रकीर्त्तिताः॥४२३॥

**अन्वयः**—यः अर्थः मन्वाद्यैः आदृतः, भार्गवेण वै तदर्थः आदृतः द्वाविंशतिशतं श्लोकाः नीतिसारे प्रकीर्त्तिताः॥४२३॥

**व्याख्या**—यः= विशिष्टः, अर्थः= विषयः, मन्वाद्यैः= मनुप्रभृतिभिः, आदृतः= समादृतः, भार्गवेण= शुक्राचार्येण, तदर्थः—तत्= तस्य मानवधर्मस्य, अर्थः= विषयः, आदृतः= सङ्कलितः, द्वाविंशतिशतम्= द्वयाधिकविंशतिशतम्, श्लोकाः नीतिसारे, प्रकीर्त्तिताः= सङ्कलिताः॥४२३॥

**हिन्दी**—राजनीति के जिन विषयों को मन्वादि स्मृतियों में मान्यता दी गई है, उन्हीं विषयों को शुक्राचार्य ने दो हजार दो सौ श्लोकों में नीतिसार में कहा है॥४२३॥

**मन्वाद्यैरिति**। यः अर्थः विषयः मन्वाद्यैः मनुप्रभृतिभिः आदृतः भार्गवेण भृगुणा च तदर्थः तस्य मानवधर्मस्य अर्थः आदृतः, तदर्थसङ्कलिताः द्वाविंशतिशतं श्लोकाः नीतिसारे प्रकीर्त्तिताः निबद्धाः मयेति शेषः॥४२३॥

शुक्रोक्तनीतिसारं यश्चिन्तयेदनिशं सदा।
व्यवहारधुरं वोढुं स शक्तो नृपतिर्भवेत्॥४२४॥

**अन्वयः**—यः शुक्रोक्तनीतिसारम् अनिशं चिन्तयेत् सः सदा व्यवहारधुरं वोढुं शक्तः भवेत्॥४२४॥

**व्याख्या**—यः= राजा, शुक्रेण= भार्गवेण, उक्तम्= कथितम्, नीतिसारम्= एतदाख्य-ग्रन्थम्, अनिशम्= अहर्निशम्, चिन्तयेत्= विचारयेत्, सः= राजा, सदा= सर्वदा, व्यवहारधुरम्= राजकार्यभारम्, वोढुम्= वहनकर्त्तुम्, शक्तः= समर्थो भवेत्॥४२४॥

**हिन्दी**—जो राजा शुक्राचार्य-निर्मित नीतिसार का निरन्तर चिन्तन करता है, वही राजा राजकार्य के भार को वहन करने में समर्थ होता है॥२२४॥

**शुक्रेति**। यः नृपतिः शुक्रेण उक्तं नीतिसारम् अनिशं चिन्तयेत् सः सदा व्यवहारधुरं राजकार्य्यभारं वोढुं शक्तः भवेत्॥२२४॥

न कवेः सदृशी नीतिस्त्रिषु लोकेषु विद्यते।
काव्यैव नीतिरन्या तु कुनीतिर्व्यवहारिणाम्॥४२५॥

**अन्वयः**—त्रिषु लोकेषु कवेः सदृशी नीतिः न विद्यते, तस्मात् काव्यैव नीतिः, अन्या तु व्यवहारिणां कुनीतिः॥४२५॥

**व्याख्या**—त्रिषु लोकेषु= त्रिलोके, कवेः= शुक्रस्य, सदृशी= तुल्या, नीतिः= नयः, न= नहि, विद्यते= अस्ति, तस्मात्, काव्यैव= शुक्ररचितैव, नीतिः= नयः अस्ति, अन्या= तद्भिन्ना, तु, व्यवहारिणाम्= कार्यार्थिणाम्, कुनीतिः= कुत्सिता नीतिः॥४२५॥

**हिन्दी**—शुक्राचार्य द्वारा विरचित नीति की तरह कोई दूसरी नीति त्रिलोक में नहीं है। वस्तुतः व्यवहार करने वालों के लिए नीति तो शुक्रनीति ही है, इससे भिन्न नीति तो कुनीति है॥४२५॥

**नेति।** त्रिषु लोकेषु कवेः शुक्रस्य सदृशी नीतिः न विद्यते, तस्मात् काव्यैव कविकृतैव शुक्रकृतैव इत्यर्थः नीतिः। अन्या तु तद्भिन्ना तु व्यवहारिणां कुनीतिः ॥४२५ ॥

**नाश्रयन्ति च ये नीतिं मन्दभाग्यास्तु ते नृपाः।**
**कातर्य्याद्धनलोभाद्वा स्युर्वै नरकभाजनाः ॥४२६ ॥**

**इति शुक्रनीतौ चतुर्थाध्यायस्य सेनानिरूपणं नाम सप्तमं प्रकरणम्।**
**इति चतुर्थोऽध्यायः समाप्तः।**

---

**अन्वयः**—ये कातर्यात् धनलोभात् वा नीतिं न आश्रयन्ति, ते नृपाः मन्दभाग्याः नरकभाजनाः स्युः वै ॥४२६ ॥

**व्याख्या**—ये = राजानः, कातर्यात् = भयविह्वलात्, धनलोभात् = अर्थलिप्सया, वा = अथवा, नीतिम् = नयम्, न = नहि, आश्रयन्ति = अवलम्बयन्ति, ते नृपाः, मन्दभाग्याः = हतभाग्याः, नरकभाजनाः = निरयभागिनः, स्युः = भवेयुः, वै = इति निश्चयेन ॥४२६ ॥

**हिन्दी**—जो राजे कायरता या धन के लोभ से नीति का अवलम्बन नहीं करते हैं, वे निश्चय ही अभागे हैं तथा मरने पर नरकगामी होते हैं ॥२२६ ॥

**इस प्रकार शुक्रनीति में चतुर्थ अध्याय में 'सेनानिरूपण' नामक सप्तम प्रकरण की 'विमला' संस्कृत-हिन्दी व्याख्या समाप्त हुई।**

---

नेति। ये नृपाः कातर्य्यात् अक्षमत्वात् धनलोभाद्वा नीतिं न आश्रयन्ति ते मन्दभाग्याः नरकभाजनाः स्युः, वैशब्दः अवधारणार्थः निश्चितं नरकं गच्छन्तीत्यर्थः ॥४२६ ॥

**इति श्रीजीवानन्दविद्यासागरविरचिता चतुर्थाध्यायस्य सप्तमप्रकरणव्याख्या समाप्ता।**

---

# पञ्चमोऽध्यायः

**नीतिशेषं खिले वक्ष्ये ह्यखिलं शास्त्रसम्मतम्।**
**सप्ताङ्गानान्तु राज्यस्य हितं सर्वजनेषु वै॥ १ ॥**

**अन्वयः**—खिले राज्यस्य सप्ताङ्गानां सर्वजनेषु हितं शास्त्रसम्मतम् अखिलं नीतिशेषं वक्ष्ये॥ १ ॥

**व्याख्या**—खिले = परिशिष्टभागे, राज्यस्य = राष्ट्रस्य, सप्तानाम् = सप्तसंख्यकानाम्, अङ्गानाम् = अवयवानाम्, सर्वजनेषु = सकललोकेषु, हितम् = लाभकरम्, शास्त्रसम्मतम् = शास्त्रीयविचारानुकूलम्, अखिलम् = सम्पूर्णम्, नीतिशेषम् = अवशिष्टां नीतिम्, वक्ष्ये = वदिष्यामि॥ १ ॥

**हिन्दी**—परिशिष्ट रूप इस खिलनीति-निरूपण में राज्य के सात अंगों के तथा सबों के लिए हितकर शास्त्रसम्मत बची हुई नीति का वर्णन करता हूँ॥ १ ॥

**नीतिशेषमिति**। खिले परिशिष्टे अंशे राज्यस्य सप्तानाम् अङ्गानां सर्वजनेषु च विषयेषु हितं हितकरं शास्त्रसम्मतम् अखिलं समस्तं सङ्क्षिप्तमित्यर्थः, नीतिशेषम् अवशिष्टां नीतिं वक्ष्ये कथयिष्यामि॥ १ ॥

**शतसंवत्सरान्तेऽपि करिष्याम्यात्मसाद्रिपुम्।**
**इति सञ्चिन्त्य मनसा रिपोश्छिद्राणि लक्षयेत्॥ २ ॥**

**अन्वयः**—शतसंवत्सरान्तेऽपि रिपुम् आत्मसात् करिष्यामि, इति मनसा सञ्चिन्त्य रिपोः छिद्राणि लक्षयेत्॥ २ ॥

**व्याख्या**—शतसंवत्सरान्तेऽपि = शताधिकवर्षव्यतीतेऽपि, कदाचित्, रिपुम् = अरिम्, आत्मसात् = आत्माधीनम्, करिष्यामि = सम्पादयिष्यामि, इति = इत्थम्, मनसा = चित्तेन, सञ्चिन्त्य = विचार्य, रिपोः = शत्रोः, छिद्राणि = दोषाणि, लक्षयेत् = अवलोकयेत्॥ २ ॥

**हिन्दी**—सौ साल के बाद भी शायद मैं अपने दुश्मन को अधीन कर लूँगा, ऐसा सोचकर स्थिर चित्त से दुश्मन के दुर्गुणों को ढूँढता रहे॥ २ ॥

**शतेति**। शतसंवत्सराणाम् अन्तेऽपि कदाचिदपीत्यर्थः, रिपुं शत्रुम् आत्मसात् करिष्यामि इति मनसा सञ्चिन्त्य रिपोः शत्रोः छिद्राणि लक्षयेत्॥ २ ॥

**राष्ट्रभृत्यविशङ्की स्याद्धीनमन्त्रबलो रिपुः।**
**युक्त्या तथा प्रकुर्वीत सुमन्त्रबलयुक् स्वयम्॥ ३ ॥**

**अन्वयः**—स्वयं सुमन्त्रबलयुक् नृपः यथा रिपुः राष्ट्रभृत्यविशङ्की तथा हीनमन्त्रबलः स्यात् युक्त्या तथा प्रकुर्वीत॥ ३ ॥

**व्याख्या**—स्वयम् = आत्मनः, सुमन्त्रबलयुक् = सन्ध्यादिषड्गुणजन्यमन्त्रणा तथा सेनायुक्तः, नृपः, यथा = येन प्रकारेण, रिपुः = शत्रुः, राष्ट्रेषु = राज्येषु, भृत्येषु = सेवकेषु च, विशङ्की = विशिष्टशङ्कायुक्तः, तथा = तेनैव रूपेण, हीनम् = नीचम्, मन्त्रः = मन्त्रिणः, बलञ्च = सेनाञ्च, यस्य तादृशः, स्यात् = भवेत्, युक्त्या = युक्तिपूर्वकेन, तथा = तदनुरूपम्, प्रकुर्वीत = सम्पादयेत् ॥ ३ ॥

**हिन्दी**—स्वयं सुन्दर विचार या मन्त्रणा से युक्त रहकर ऐसा उपाय करे कि दुश्मन अपनी सेना पर सन्देह करने लगे और सेना तथा मंत्री से हीन बन जाय ॥ ३ ॥

**राष्ट्रेति**। स्वयं सुमन्त्रबलयुक् नृपः यथा रिपुः राष्ट्रेषु भृत्येषु च विशङ्की सन्देहवान् तथा हीनं मन्त्रः बलञ्च यस्य तादृशः स्यात् युक्त्या कौशलेन तथा प्रकुर्वीत ॥ ३ ॥

**सेवया वा वणिग्वृत्त्या रिपुराष्ट्रं विमृश्य च।**
**दत्ताभयं सावधानो व्यसनासक्तचेतसम् ॥ ४ ॥**
**मार्जारलुब्धबकवत् सन्तिष्ठन् नाशयेदरिम् ॥ ५ ॥**

**अन्वयः**—सावधानः सेवया वा वणिग्वृत्त्या रिपुराष्ट्रं विमृश्य मार्जारलुब्धबकवत् सन्तिष्ठन् दत्ताभयं व्यसनासक्तचेतसम् अरिं नाशयेत् ॥ ४-५ ॥

**व्याख्या**—सावधानः = दत्तावधानो राजा, सेवया = सुश्रूषया, वा = अथवा, वणिग्वृत्त्या = वाणिज्यव्याजेन, रिपोः = अरेः, राष्ट्रम् = राज्यम्, विमृश्य = सम्यक् प्रकारेणावलोक्य, मार्जारः = बिलाडः, तद्वत् = तत्सदृशः, लुब्धबकवत् = व्याधबक इव, सन्तिष्ठन्, दत्ताभयम्—दत्तम् = प्रदत्तम्, अभयम् = अभयदानम्, यस्मै तादृशम्, व्यसनेषु = भोगविलासादिषु, आसक्तचेतसम् = संलग्नचित्तम्, अरिम् = रिपुम्, नाशयेत् = विनष्टं कुर्यात् ॥ ४-५ ॥

**हिन्दी**—सावधान होकर मनोनुकूल आचरण या व्यापार के बहाने दुश्मन के राज्य को ठीक से देखकर बिलाड, बहेलिया और बगुले की तरह सावधान होकर दुश्मन को निर्भय रहने का विश्वास दिलाकर रास-रंग में लिप्त दुश्मन को मौका पाते ही विनष्ट कर दे ॥ ४-५ ॥

**सेवयेति**। **मार्जारेति**। सावधानः नृपः सेवया आनुगत्येन वा वणिग्वृत्त्या वाणिज्यव्याजेन रिपोः शत्रोः राष्ट्रं विमृश्य समीक्ष्य मार्जारः बिडालः तद्वत् लुब्धबकवच्च सन्तिष्ठन् दत्ताभयं दत्तम् अभयं यस्मै तादृशं पूर्वम् अभयं दत्त्वा इत्यर्थः, व्यसनेषु कामादिषु आसक्तचेतसम् आक्रान्तचित्तं निर्भयत्वात् राज्यरक्षणे अव्यग्रतया भोगरतमिति भावः, अरिं शत्रुं नाशयेत् ॥ ४-५ ॥

**सेनां युद्धे नियुञ्जीत प्रत्यनीकविनाशिनीम्।**
**न युञ्ज्याद्रिपुराष्ट्रस्थां मिथः स्वद्वेषिणीं न च ॥ ६ ॥**

**अन्वयः**—प्रत्यनीकविनाशिनीं सेनां युद्धे नियुञ्जीत। रिपुराष्ट्रस्थां न मिथः स्वद्वेषिणीं न च युञ्ज्यात् ॥ ६ ॥

**व्याख्या**—प्रत्यनीकविनाशिनीम् = रिपुबलविध्वंसिनीम्, सेनाम् = वाहिनीम्, युद्धे = युद्धकाले, नियुञ्जीत = नियुक्तं कुर्वीत, रिपुराष्ट्रस्थाम् = शत्रुराज्यनिवासिनीम्, सेनाम्, न = नहि, नियुञ्जीत। मिथः = एकान्ते, स्वस्य = आत्मनः, द्वेषिणीम् = विरोधिनीम्, न = नहि, युञ्ज्यात् = नियुञ्ज्यात् ॥ ६ ॥

**हिन्दी**—शत्रुसेना को नष्ट करने वाली सेना की नियुक्ति संग्राम में करनी चाहिए। शत्रु-राज्य में रहने वाली या एकान्त में विरोध करने वाली सेना को नियुक्त न करे॥६॥

**सेनामिति**। प्रत्यनीकविनाशिनीं शत्रुसैन्यनाशिनीं सेनां युद्धे नियुञ्जीत, रिपुराष्ट्रस्थां शत्रुराज्यवासिनीं सेनां न, मिथः रहसि स्वस्य आत्मनः द्वेषिणीं विद्वेषकारिणीञ्च सेनां न युञ्ज्यात्॥६॥

**न नाशयेत् स्वसेनान्तु सहसा युद्धकामुकः।**
**दानमानैर्वियुक्तोऽपि न भृत्या भूपतिं त्यजेत्।**
**समये शत्रुसान्नैव गच्छेज्जीवधनाशया॥७॥**

**अन्वयः**—युद्धकामुकः सहसा स्वसेनां न नाशयेत्। भृत्या दानमानैर्वियुक्तोऽपि भूपतिं न त्यजेत्। जीवधनाशया समये शत्रुसात् नैव गच्छेत्॥७॥

**व्याख्या**—युद्धकामुकः = सङ्ग्रामलिप्सुः, सहसा = हठात्, स्वसेनाम्—स्वस्य = आत्मनः, सेनाम् = अनीकम्, न = नहि, नाशयेत् = विनष्टङ्कुर्यात्। तथा भृत्या = वेतनेन, दानमानैः—दानेन = प्रदानेन, मानेन = सम्मानेन, च, वियुक्तः = विरहितः, अपि = चेत्, भूपतिम् = राजानम्, न त्यजेत् = परित्यागं न कुर्यात्, तथा जीवधनाशया = जीविकार्थधनलिप्सया, शत्रुसात् = रिपोरधीनताम्, न = नहि, भवेत् = स्यात्॥७॥

**हिन्दी**—युद्धप्रेमी राजा अकारण अपनी सेना को लड़ाई में झोंक कर विनष्ट न करे। सैनिक भी दान-सम्मान तथा वेतन न मिलने पर अपने स्वामी का साथ समय आने पर न छोड़े। जीविका के लिए धन की आशा में शत्रु राजा की अधीनता कबूल न करे॥७॥

**नेति**। युद्धकामुकः रणप्रियः सन् सहसा स्वस्य आत्मनः सेनां न नाशयेत् तथा भृत्यः दानेन मानेन च वियुक्तः विरहितः अपि भूपतिं स्वामिनं न त्यजेत्। तथा जीवधनाशया जीवनोपयोगि धनप्रत्याशया शत्रुसात् नैव गच्छेत् शत्रोरधीनो न भवेदित्यर्थः॥७॥

**मेघोदकैस्तु या पुष्टिः सा किं नद्यादिवारितः?।**
**प्रजापुष्टिर्नृपद्रव्यैस्तथा किं धनिनां धनात्?॥८॥**

**अन्वयः**—मेघोदकैः या पुष्टिः सा नद्यादिवारितः किम्? यथा नृपस्य द्रव्यैः प्रजानां पुष्टिः तथा धनिनां धनात् पुष्टिः किम्?॥८॥

**व्याख्या**—मेघोदकैः = वर्षाजलैः, या पुष्टिः = संवर्द्धनम्, शस्यानामिति शेषः, सा पुष्टिः, नद्यादीनाम् = सरितादीनाम्, वारितः = सलिलैः, किमिति प्रश्ने, स्यात् = भवेत्, नैवेत्यर्थः, यथा = येन प्रकारेण, नृपस्य = राज्ञः, द्रव्यैः = धनैः, प्रजानाम् = जनानाम्, पुष्टिः = पोषणम्, भवेत्, तथा धनिनाम् = धनसम्पन्नजनानाम्, धनात् = द्रव्यात्, किमिति प्रश्ने, भवेत्? नास्त्येवेति॥८॥

**हिन्दी**—वर्षा के जल से फसलों का जैसा संवर्द्धन होता है नदीजल के सिंचन से क्या वैसा संभव है? ठीक उसी तरह प्रजा का पोषण राजा के धन से जैसा होता है क्या वैसा किसी धनी के धन से संभव है? अर्थात् नहीं॥८॥

**मेघोदकैरिति**। मेघोदकैः वारिदजलैः या पुष्टिः शस्यानामिति शेषः, सा नद्यादीनां वारितः जलैः किं स्यात्? नैवेत्यर्थः। यथा नृपस्य द्रव्यैः राजप्रसादलब्धैरिति भावः, प्रजानां पुष्टिः धनिनां धनात् तथा पुष्टिः किं? नैवेत्यर्थः॥८॥

**दर्शयन् मार्दवं नित्यं महावीर्य्यबलोऽपि च।**
**रिपुराष्ट्रे प्रविश्यादौ तत्कार्य्ये साधको भवेत्॥ ८॥**

**अन्वयः**—महावीर्यबलोऽपि नित्यं मार्जवं दर्शयन् रिपुराष्ट्रे प्रविश्य आदौ तस्य कार्यसाधकः भवेत्॥ ९॥

**व्याख्या**—महावीर्यबलोऽपि = प्रचण्डवीरत्वसैन्यसम्पनोऽपि राजा, नित्यम् = अनवरतम्, मार्दवम् = मृदुत्वम्, दर्शयन् = प्रदर्शयन्, रिपुराष्ट्रे = शत्रुराज्ये, प्रविश्य = प्रवेशं कृत्वा, आदौ = प्रथमम्, तस्य = शत्रोः, कार्य्यसाधकः = कर्त्तव्यपालकः = भवेत् = स्यात्॥ ९॥

**हिन्दी**—अत्यन्त पराक्रमी और शक्तिशाली सेना के रहते हुए भी अपने को अतिकोमल दिखलाते हुए शत्रुराष्ट्र में हमेशा प्रवेश कर उसका कार्यसाधक बने॥ ९॥

**दर्शयन्निति**। महावीर्य्यबलः अपि नित्यं सततं मार्दवं मृदुतां दर्शयन् रिपुराष्ट्रे शत्रुराज्ये प्रविश्य आदौ प्रथमं तस्य रिपोः कार्य्यसाधकः कार्य्यनिर्वाहकः भवेत्॥ ९॥

**सञ्जातबद्धमूलस्तु तद्राज्यमखिलं हरेत्।**
**अथ तद् द्विष्टदायादान् सेनपानंशदानतः।**
**तद्राज्यस्य वशीकुर्य्यान्मूलमुन्मूलयन् बलात्॥ १०॥**

**अन्वयः**—अथ सञ्जातबद्धमूलः तु बलात् मूलम् उन्मूलयन् अखिलं तस्य राज्यं हरेत्। तथा तस्य द्विष्टान् दायादान् सेनपान् तत् राज्यस्य अंशदानतः वशीकुर्यात्॥ १०॥

**व्याख्या**—अथ = अनन्तरम्, सञ्जातम् = समुत्पन्नम्, बद्धमूलः—बद्धम् = सुदृढम्, मूलम् = ब्रध्नः, यस्य तादृशः, बलात् = सैन्यात्, मूलम् = आदिभागम्, उन्मूलयन् = उत्पाटयन्, अखिलम् = सर्वम्, तस्य = शत्रोः, राज्यम् = राष्ट्रम्, हरेत् = अपहरेत्। रिपोः = शत्रोः, द्विष्टान् = विद्वेषिणः, दायादान् = गोत्रजान्, अंशदानतः = अंशप्रदानेन, वशीकुर्यात् = आत्माधीनं कुर्यात्॥ १०॥

**हिन्दी**—उसके बाद यहाँ जब हर तरह से अपनी जड़ जम जाय, तब शत्रु के समस्त राज्य पर अधिकार जमा ले। शत्रु के दुश्मन, दायाद तथा सेनापतियों को राज्य का कुछ भाग देकर उन्हें अपने अधीन कर ले॥ १०॥

**सञ्जातेति**। अथ सञ्जातम् उत्पन्नं बद्धं दृढं मूलं यस्य तादृशः तत्र विशेषेण प्रतिपन्नः सन्नित्यर्थः, बलात् मूलम् उन्मूलयन् निरस्यन् अखिलं समस्तं तस्य राज्यं हरेत्, तथा तस्य रिपोः द्विष्टान् विद्वेषिणः दायादान् ज्ञातीन् सेनपान् सेनापतींश्च तद्राज्यस्य अंशदानतः अंशप्रदानेन वशीकुर्य्यात्॥ १०॥

**तरोः सङ्क्षीर्णमूलस्य शाखाः शुष्यन्ति वै यथा।**
**सद्यः केचिच्च कालेन सेनपाद्याः पतिं विना॥ ११॥**

**अन्वयः**—यथा सङ्क्षीणमूलस्य तरोः शाखाः वै शुष्यन्ति तथा सेनपाद्याः पतिं विना सद्यः केचिच्च कालेन शुष्यन्ति॥ ११॥

**व्याख्या**—यथा = येन प्रकारेण, सङ्क्षीणमूलस्य = शुष्कब्रध्नस्य, तरोः = वृक्षस्य, शाखाः = विटपाः, शुष्यन्ति = शुष्कतां यान्ति, तथा सेनपाद्याः = सेनापतिप्रभृतयः, पतिम् = राजानम्, विना =

विहाय, सद्यः = तत्क्षणात्, केचिच्च = अपरे च, कालेन = समयान्तरेण, शुष्यन्ति = विनाशं प्राप्नुवन्ति ॥ ११ ॥

**हिन्दी**—जैसे जड़ कट जाने पर पेड़ की डालें सूख जाती हैं, वैसे ही राजा के बिना सेनापति आदि भी कुछ उसी क्षण और कुछ कालान्तर में शक्तिहीन हो जाते हैं ॥ ११ ॥

**तरोरिति**। यथा सङ्क्षीणमूलस्य शुष्कमूलस्य तरोः शाखाः शुष्यन्ति वै शोषं प्राप्नुवन्त्येव तथा सेनपाद्याः सेनापतिप्रभृतयः पतिं स्वामिनं विना सद्यः तत्क्षणात्, केचिच्च कालेन शुष्यन्तीत्यर्थः ॥ ११ ॥

**राज्यवृक्षस्य नृपतिर्मूलं स्कन्धाश्च मन्त्रिणः।**
**शाखाः सेनाधिपाः सेनाः पल्लवाः कुसुमानि च।**
**प्रजाः फलानि भूभागा बीजं भूमिः प्रकल्पिता ॥ १२ ॥**

**अन्वयः**—नृपतिः राज्यवृक्षस्य मूलं, मन्त्रिणः स्कन्धाः, सेनाधिपाः शाखाः, सेनाः पल्लवाः, प्रजाः कुसुमानि, भूभागाः फलानि, भूमिः बीजं प्रकल्पिता ॥ १२ ॥

**व्याख्या**—नृपतिः = राजा, राज्यवृक्षस्य = राज्यरूपीतरोः मूलम् = ब्रध्नः, मन्त्रिणः = अमात्याः, स्कन्धाः = स्तम्भाः, सेनाधिपाः = सेनापतयः, शाखाः = विटपाः, सेनाः = अनीकाः, पल्लवाः = पत्राणि, प्रजाः = जनाः, कुसुमानि = पुष्पाणि, भूभागाः = राजस्वम्, फलानि, भूमिः = पृथ्वी, बीजम् = रोहिः, प्रकल्पिता = कथिता ॥ १२ ॥

**हिन्दी**—राज्य रूपी वृक्ष की जड़ राजा होता है, तना मंत्री लोग, डालें सेनापतिगण, पत्तें सेना, फूल प्रजा, फल धरती से प्राप्त होने वाले कर एवं बीज राज्य की भूमि कही गई है ॥ १२ ॥

**राज्यवृक्षस्येति**। नृपतिः राज्यवृक्षस्य मूलं, मन्त्रिणः स्कन्धाः, सेनाधिपाः शाखाः, सेनाः पल्लवाः, प्रजाः कुसुमानि, भूभागाः फलानि, भूमिः बीजं प्रकल्पिता कथिता ॥ १२ ॥

**विश्वस्तान्यनृपस्यापि न विश्वासं समाप्नुयात्।**
**नैकान्ते न गृहे तस्य गच्छेदल्पसहायवान् ॥ १३ ॥**

**अन्वयः**—विश्वस्तान्यनृपस्य विश्वासं न समाप्नुयात्। तस्य गृहे वा एकान्ते अल्पसहायवान् न गच्छेत् ॥ १३ ॥

**व्याख्या**—विश्वस्तछेस्यापि = प्रत्ययवतोऽपि, अन्यनृपस्य = प्रतिकूलराज्ञः, विश्वासम् = प्रत्ययम्, न = नहि, समाप्नुयात् = विश्वसेत्। तस्य = शत्रोः नृपतेः, गृहे = सदने, वा = अथवा, एकान्ते = रहसि, अल्पसहायवान् = न्यूनसहायकैः सह, न = नहि, गच्छेत् = व्रजेत् ॥ १३ ॥

**हिन्दी**—अपने व्यवहार से अपने को विश्वस्त प्रमाणित करने वाले शत्रु राजा का विश्वास नहीं करना चाहिए। थोड़े सहायकों के साथ न तो एकान्त में उससे मिले और न तो घर पर ही उसके जाय ॥ १३ ॥

**विश्वस्तेति**। विश्वस्तस्यापि अन्यनृपस्य प्रतिकूलनृपतेः विश्वासं न समाप्नुयात् शत्रौ नृपे नैव विश्वसेदित्यर्थः। तस्य प्रतिनृपस्य गृहे वा एकान्ते निर्जने देशे अल्पसहायवान् न गच्छेत् ॥ १३ ॥

स्ववेशरूपसदृशान् निकटे रक्षयेत् सदा।
विशिष्टचिह्नगुप्तः स्यात् समयेऽन्यादृशो भवेत्॥ १४॥

**अन्वयः**—सदा निकटे स्ववेशरूपसदृशान् रक्षयेत्। विशिष्टचिह्नगुप्तः स्यात् तथा समये अन्यादृशः भवेत्॥ १४॥

**व्याख्या**—सदा = सर्वदा, निकटे = समीपे, स्वस्य = आत्मनः, वेशेन = वस्त्रेण, रूपेण च, सदृशान् = तुल्यान्, जनान् = लोकान्, रक्षयेत् = रक्षेत्, स्वयम्, विशिष्टचिह्नगुप्तः = गुप्तराजचिह्नम्, तथा, समये = यथावसरे, अन्यादृशः = जनसामान्यतुल्यः, भवेत् = स्यात्॥ १४॥

**हिन्दी**—राजा को चाहिए कि अपने साथ कुछ ऐसे लोगों को रखे जो आकृति और वेश-भूषा की दृष्टि से राजा की तरह ही हो। अपनी पहचान छिपाने के लिए अपना राजचिह्न गुप्त रखे तथा समय आने पर अपना वेश बदल कर जनसामान्य की तरह बनने की कला भी जाने॥ १४॥

**स्वेति**। सदा निकटे स्वस्य आत्मनः वेशेन परिच्छदेन रूपेण च सदृशान् जनान् रक्षेत् तथात्वे व्यक्तिग्रहो न स्यादिति भावः, स्वयं विशिष्टम् अन्यविलक्षणं चिह्नं राजचिह्नमित्यर्थः गुप्तं यस्य तथाभूतः स्यात् तथा समये समयविशेषे इत्यर्थः, अन्यादृशः सामान्यजनसदृशः भवेत्॥ १४॥

वेश्याभिश्च नटैर्मद्यैर्गायकैर्मोहयेदरिम्॥ १५॥

**अन्वयः**—वेश्याभिः नटैः मद्यैः गायकैश्च अरिं मोहयेत्॥ १५॥

**व्याख्या**—वेश्याभिः = गणिकाभिः, नटैः = नर्तकैः, मद्यैः = मदिराभिः, गायकैश्च = गेष्णैश्च, अरिम् = रिपुम्, मोहयेत् = अनुरञ्जयेत्॥ १५॥

**हिन्दी**—वेश्याओं, नर्तकों, सुराओं और गायकों से दुश्मन को मोह लें॥ १५॥

**वेश्याभिरिति**। वेश्याभिः नटैः नर्त्तकैः मद्यैः सुराभिः गायकैश्च अरिं शत्रुं मोहयेत् मुग्धं कुर्य्यात्॥ १५॥

सुवस्त्राभरणैर्नैव न कुटुम्बेन संयुतः।
विशिष्टचिह्नितो भीतो युद्धे गच्छेन्न वै क्वचित्॥ १६॥

**अन्वयः**—सुवस्त्राभरणैः कुटुम्बेन संयुतः न विशिष्टचिह्नितः भीतश्च न क्वचित् युद्धे गच्छेत्॥ १६॥

**व्याख्या**—सुवस्त्राभरणैः = सुष्ठुवस्त्राभूषणैः, तथा, कुटुम्बेन, संयुतः = परिवारेण सहितः, न = नहि, विशिष्टचिह्नितः—विशिष्टम् = अन्यजनभिन्नम्, यत् चिह्नम् = लक्ष्म, तदस्य जातमिति तथाभूतः न, भीतश्च = भयाक्रान्तश्च, न = नहि, क्वचित् = कदाचित्, युद्धे = सङ्ग्रामे, गच्छेत् = व्रजेत्॥ १६॥

**हिन्दी**—किसी भी लड़ाई के मैदान में सुन्दर वस्त्र और अलंकारों से सज-धज कर या अपने परिवार के साथ नहीं जाना चाहिए॥ १६॥

**सुवस्त्रेति**। सुवस्त्राभरणैः शोभनवसनालङ्कारैः तथा कुटुम्बेन परिवारेण संयुतः न, विशिष्टचिह्नितः विशिष्टम् अन्यविलक्षणं यत् चिह्नं तदस्य जातमिति तथाभूतः न, भीतश्च न क्वचित् कदाचित् युद्धे गच्छेत्॥ १६॥

क्षणं नासावधानः स्याद् भृत्यस्त्रीपुत्रशत्रुषु।
जीवन् सन् स्वामितो पुत्रे न देयाप्यखिला क्वचित्॥ १७॥
स्वभावसद्गुणे यस्मान्महानर्थमदावहा।
विष्ण्वाद्यैरपि नो दत्ता स्वपुत्रे स्वाधिकारता॥ १८॥

**अन्वयः**—जीवन् सन् क्षणमपि भृत्यस्त्रीपुत्रशत्रुपु असावधानः न स्यात्। स्वभावसद्गुणेऽपि पुत्रे क्वचित् अखिला स्वामिता न देया, यस्मात् सा महानर्थमदावहा। तस्मात् विष्ण्वाद्यैः स्वपुत्रे स्वाधिकारता न दत्ता॥ १७-१८॥

**व्याख्या**—जीवन् = समर्थः सन्, क्षणमपि = पलमात्रमपि, भृत्यस्त्रीपुत्रशत्रुषु—भृत्येषु = सेवकेषु, स्त्रीषु = पत्नीषु, पुत्रेषु = तनयेषु, च = पुनः, शत्रुषु = रिपुषु, असावधानः = अनवधानम्, न = नहि, स्यात् = भवेत्, स्वभावसद्गुणेऽपि = प्रकृत्या विवेकशीलेऽपि, पुत्रे = सुते, क्वचित् = कदाचित्, अखिला = समग्रा, स्वामिता = प्रभुता, न = नहि, देया = समर्प्या, यस्मात् सा शक्तिः, महानर्थमदावहा—महान्तम् = अत्यधिकम्, अनर्थम् = अनिष्टम्, मदम् = प्रमादश्च, आवहति = आनयति, इति तथोक्ता = अत्यनिष्टकारिणी प्रमादोत्पादिनी च। तस्मात् विष्ण्वाद्यैः = विष्णुप्रभृतिभिरपि, स्वपुत्रे = निजात्मजे, स्वाधिकारता—स्वस्य = आत्मनः, अधिकारता = प्रभुता, न = नहि, दत्ता = प्रदत्ता॥ १७-१८॥

**हिन्दी**—नौकर, पत्नी, पुत्र और शत्रु के प्रति एक पल भी असावधानी न बरते। जीवित रहते हुए किसी भी स्थिति में अपना सारा अधिकार बेटे को न सौंपे। स्वभाव से विवेकशील बेटे को भी अपना सारा अधिकार सौंप देना उनके लिए अति अनिष्टकर एवं मदोत्पादक होता है। इसीलिए विष्णु प्रभृति देवगण ने भी अपने बेटे को सारा अधिकार कभी नहीं दिया॥ १७-१८॥

**क्षणमपि। स्वभावेति।** जीवन् शक्त इत्यर्थः, सन् क्षणमपि भृत्यस्त्रीपुत्रशत्रुषु भृत्येषु स्त्रीषु पुत्रेषु शत्रुषु च असावधानः न स्यात्। किञ्च स्वभावसद्गुणेऽपि पुत्रे क्वचित् कदाचित् अखिला सम्पूर्णा स्वामिता प्रभुता न देया, यस्मात् सा महानर्थमदावहा महान्तम् अनर्थं मदञ्च आवहतीति तथोक्ता महानर्थकारिणी मदवर्द्धनी च। तस्मात् विष्ण्वाद्यैः विष्णुप्रभृतिभिरपि स्वपुत्रे स्वाधिकारता स्वस्य अधिकारः तस्य भावः स्वस्वाम्यं नो दत्ता॥ १७-१८॥

स्वायुषः स्वल्पशेषे तु सत्पुत्रे स्वाम्यमादिशेत्।
नाराजकं क्षणमपि राष्ट्रं धर्त्तुं क्षमाः किल।
युवराजादयः स्वाम्यलोभचापलगौरवात्॥ १९॥

**अन्वयः**— स्वायुषः स्वल्पशेषेतु सत्पुत्रे स्वाम्यम् आदिशेत्। युवराजादयः स्वाम्यलोभचापलगौरवात् अराजकं राष्ट्रं क्षणमपि धर्तुं न किल क्षमाः॥ १९॥

**व्याख्या**—स्वायुषः—स्वस्य = आत्मनः, आयुषः = जीवनकालस्य, स्वल्पशेषे = अत्यन्ताल्पावशिष्टे, सत्पुत्रे = विवेकीसुते, स्वाम्यम् = स्वप्रभुत्वम्, आदिशेत् = समर्पयेत्, युवराजादयः = राजकुमारप्रभृतयः, स्वाम्यलोभेन = अधिकारलिप्सया, यद् यत्, चापलम् = चञ्चलता, तत् = तस्य, गौरवात् = सम्मानात्, अराजकम् = राजरहितम्, राष्ट्रम् = राज्यम्, क्षणमपि = एकपलमपि, धर्त्तुम् = धारणं कर्त्तुम्, किल = नैव, क्षमाः = समर्थाः भवन्ति॥ १९॥

**हिन्दी**—अपनी आयु जब शेष होती नजर आये तो अपने सपूतों को राज्य का समस्त भार सौंप दे। क्योंकि अधिकार-लोभ से होने वाली चंचलता की अधिकता से युवराज आदि के बिना राजा राज्य क्षण भर भी सँभालने में समर्थ नहीं हो सकतें ॥ १९ ॥

**स्वेति**। स्वस्य आत्मनः आयुषः जीवनकालस्य स्वल्पशेषे अत्यल्पावशेषे सति सत्पुत्रे सुपुत्रे स्वाम्यम् आदिशेत् अर्पयेत्। युवराजादयः स्वाम्यलोभेन यत् यत् चापलं चाञ्चल्यं तस्य गौरवात् अतिशय्यात् अराजकं राजरहितं राष्ट्रं क्षणमपि धर्त्तुं ग्रहीतुं शासितुमित्यर्थः, न किल नैव क्षमाः शक्ताः भवन्ति ॥ १९ ॥

**प्राप्योत्तमं पदं पुत्रः सुनीत्या पालयन् प्रजाः।**
**पूर्वामात्येषु पितृवद्गौरवं सम्प्रधारयेत्॥ २० ॥**

**अन्वयः**—पुत्रः उत्तमं पदं प्राप्य सुनीत्या प्रजाः पालयन् पूर्वामात्येषु पितृवत् गौरवं सम्प्रधारयेत् ॥ २० ॥

**व्याख्या**—पुत्रः = राजपुत्रः, उत्तमम् = श्रेष्ठम्, पदम् = नृपत्वम्, प्राप्य = अधिगम्य, प्रजाः = जनाः, पालयन् = पालनं कुर्वन्, सुनीत्या = शोभनेन नयेन, पूर्वामात्येषु = पितृकालीनसचिवेषु, पितृवत् = पितेव, गौरवम् = आदरः, सम्प्रधारयेत् = सम्यग्रूपेण सम्पादयेत् ॥ २० ॥

**हिन्दी**—राजकुमार राजपद पाकर अच्छी नीति के साथ प्रजा का पालन करते हुए पिता के समकालीन मंत्रियों को पिता की तरह ही सम्मान प्रदान करे ॥ २० ॥

**प्राप्येति**। पुत्रः उत्तमं पदं राजपदं प्राप्य सुनीत्या प्रजाः पालयन् पूर्वामात्येषु पुरातनेषु अमात्येषु पितृवत् गौरवं गुरुभावं भक्तिमित्यर्थः, सम्प्रधारयेत् सम्यक् कुर्य्यादित्यर्थः ॥ २० ॥

**तस्यापि शासनं तैस्तु प्रधार्य्यं पूर्वतोऽधिकम्।**
**युक्तं चेदन्यथा कार्य्यं निषेध्यं काललम्बनैः ॥ २१ ॥**

**अन्वयः**—तैः तु तस्यापि शासनं चेत् युक्तं तदा पूर्वतोऽपि अधिकं प्रधार्यम्, अन्यथा काललम्बनैः कार्यं निषेध्यम् ॥ २१ ॥

**व्याख्या**—तैः = पुरातनैः सचिवैः, तस्याऽपि = राजकुमारस्यापि, शासनम् = आदेशम्, चेत् = यदि, युक्तम् = समुचितम्, तदा, पूर्वतोऽपि = पूर्वस्मादपि, अधिकम् = विशिष्टम्, यथा तथा, प्रधार्यम् = अनुपालनीयम्, अन्यथा = अनुपयुक्ते, काललम्बनैः = कालान्तरेऽयमादेशः पालनीय इत्युक्त्वा, कार्यम् = राजशासनीयकर्म, निषेध्यम् = प्रतिषेधनीयमिति ॥ २१ ॥

**हिन्दी**—और यदि राजकुमार का आदेश समुचित हो तो पूर्व मन्त्रियों का यह कर्त्तव्य होता है कि उस आदेश का अनुपालन पहले से भी अधिक मनोयोग से करे। किन्तु यदि आदेश उपयुक्त न हो तो 'बाद' में इसका अनुपालन होगा ऐसा कहकर टाल दे ॥ २१ ॥

**तस्येति**। तैः पूर्वैः अमात्यैः तस्य राजपुत्रस्यापि शासनं चेत् यदि युक्तं तदा पूर्वतः पूर्वस्मात् अधिकं यथा तथा प्रधार्य्यं प्रतिपालनीयम्, अन्यथा अयुक्तत्वे इत्यर्थः, काललम्बनैः कालाश्रयिभिः सद्भिः समयान्तरे एतत्प्रतिपालनीयमिति वादिभिरित्यर्थः कार्य्यं राजशासनीयं कर्म निषेध्यं निवारणीयम् ॥ २१ ॥

**तदनीत्या न वर्त्तेयुस्तेन साकं धनाशया।**
**वर्त्तन्ते यदनीत्या ते तेन साकं पतन्ति वै॥ २२॥**

**अन्वयः**—धनाशया तेन साकं तत् अनीत्या न वर्त्तेयुः। यत् ते अनीत्या वर्त्तन्ते तदा तेन साकं वै पतन्ति॥ २२॥

**व्याख्या**—धनाशया = अर्थलिप्सया, तेन = नूतनेन नृपेण, साकम् = सह, तस्य = नृपस्य, अनीत्या = दुर्नीत्या, न = नहि, वर्त्तेयुः = तिष्ठेयुः। यत् = यदि, ते = अमात्याः, अनीत्या = अनयेन, वर्त्तन्ते = तिष्ठन्ति, तदा, तेन = नृपेण सह, वै = इति निश्चयेन, पतन्ति = विनष्टा भवन्ति॥ २२॥

**हिन्दी**—और वे पुराने मंत्रीगण धन के लालच से नये राजा की अनीति का साथ न दे तथा यदि वे ऐसा करेंगे तो नये राजा के साथ उनका भी विनाश हो जायेगा॥ २२॥

**तदिति**। धनाशया अर्थलोभेन तेन नवेन राज्ञा साकं सह तस्य अनीत्या दुर्नयेन न वर्त्तेयुः न तिष्ठेयुः, ते इति शेषः। यत् यदि ते अनीत्या वर्त्तन्ते तदा तेन राज्ञा साकं सह वै निश्चितं पतन्ति विनाशं यान्ति॥ २२॥

**कुलभक्तांश्च यो द्वेष्टि नवीनं भजते जनम्।**
**स गच्छेच्छत्रुसाद्राजा धनप्राणैर्वियुज्यते॥ २३॥**

**अन्वयः**—यः कुलभक्तान् द्वेष्टि नवीनं जनं भजते सः शत्रुसात् गच्छेत् च धनप्राणैः वियुज्यते॥ २३॥

**व्याख्या**—यः = राजा, कुलभक्तान् = वंशानुरक्तान् सेवकान्, द्वेष्टि = विद्वेषं करोति, नवीनम् = नूतनम्, जनम् = लोकम्, भजते = सेवते, च, सः = भूपतिः, शत्रुसात् = रिपोरधीनताम्, गच्छेत् = याति, तथा धनप्राणैः = धनजीवनैः, वियुज्यते = विनाशं भजते॥ २३॥

**हिन्दी**—जो नया राजा राजकुल के भक्त पुराने मंत्रियों से द्वेष करता है तथा नये लोगों के कथनानुसार काम करता है, वह शत्रु के अधीन होकर धन और जान से हाथ धो बैठता है॥ २३॥

**कुलभक्तानिति**। यः कुलभक्तान् कुलक्रमेण अनुरक्तान् भृत्यान् द्वेष्टि, नवीनं जनं भजते च स राजा शत्रुसात् गच्छेत् शत्रोरधीनो भवेत्धनप्राणैः वियुज्यते च॥ २३॥

**गुणी सुनीतिर्नव्योऽपि परिपाल्यस्तु पूर्ववत्।**
**प्राचीनैः सह तं कार्य्ये ह्यनुभूय नियोजयेत्॥ २४॥**

**अन्वयः**—नव्योऽपि गुणी तथा सुनीतिः चेत् पूर्ववत् परिपाल्यः, अनुभूय प्राचीनैः सह तं नियोजयेत्॥ २४॥

**व्याख्या**—नव्योऽपि = नूतनोऽपि जनः, यदि गुणी = गुणज्ञः, तथा सुनीतिः = सुनीतिसम्पन्नः, तदा, पूर्ववत् = प्राचीनमन्त्रिगण इव, परिपाल्यः = प्रतिपालनीयो भवति, एवं जनम्, अनुभूय = सम्यग्रूपेण परीक्ष्य, प्राचीनैः = पुरातनैः, मन्त्रिभिः, सह = साकम्, तम् = अभिनवजनम्, नियोजयेत् = नियुक्तं कुर्य्यात्॥ २४॥

**हिन्दी**—और यदि नया होते हुए भी कोई अधिकारी गुणवान् एवं नीतिसम्पन्न हो तो

उसका भी पुराने अधिकारी की तरह सम्मान करना चाहिए तथा भलीभाँति उसके चरित्र का अध्ययन कर उसे पुराने लोगों के साथ राजकाज में नियुक्त करना चाहिए॥ २४ ॥

**गुणीति**। नव्योऽपि नवीनः अपि जनः गुणी गुणवान् तथा सुनीतिः सुनयसम्पन्नश्चेत् पूर्ववत् प्राचीनवत् परिपाल्यस्तु प्रतिपालनीय एव, अनुभूय तच्चरित्रं परीक्ष्य इत्यर्थः, प्राचीनैः पुरातनैः भृत्यैः सह कार्य्ये नियोजयेत्॥ २४ ॥

अतिमृदस्तुतिनतिसेवादानप्रियोक्तिभिः ।
मायिकैः सेव्यते यावत् कार्य्यं नित्यन्तु साधुभिः ॥ २५ ॥
प्रत्यक्षं वा परोक्षं वा सत्यवाग्भिर्नृपोऽपि च ।
याथार्थ्यतस्तयोरीदृगन्तरं खभुवोर्यथा ॥ २६ ॥

**अन्वयः**—मायिकैः यावत् कार्यं अतिमृदुस्तुतिनतिसेवादानप्रियोक्तिभिः नृपः सेव्यते, सत्यवाग्भिः साधुभिः नित्यं प्रत्यक्षं वा परोक्षं याथार्थ्यतः। खभुवोः यथा तयोः ईदृक् अन्तरम्॥ २५-२६ ॥

**व्याख्या**—मायिकैः = वञ्चकैः, यावत्, कार्यम् = आत्मनः स्वार्थम्, तावत्, अतिमृदुभिः = अत्यन्तकोमलैः, स्तुतिभिः = स्तवैः, नतिभिः = नमस्कारैः, सेवाभिः = सुश्रूषाभिः, दानैः = प्रदानैः, च = पुनः, प्रियोक्तिभिः = प्रियवचनैः, नृपः = राजा, सेव्यते = भजते, पुनः, सत्यवाग्भिः = सत्यवचनैः, साधुभिः = सज्जनैः, नित्यम् = सततम्, प्रत्यक्षम् = पुरःस्थितम्, वा = अथवा, परोक्षम् = अक्षणः परम्, याथार्थ्यतः = तत्त्वतः, सेव्यते। खभुवोः = आकाशभूम्योः, यथा = इव, तयोः = वञ्चकसज्जनयोः, ईदृक् = एतादृक्, अन्तरम् = भेदो भवति॥ २५-२६ ॥

**हिन्दी**—धूर्तों का जब तक अपना काम सधता है तभी तक वे मृदुभाषी, प्रशंसक, विनीत, दानी, सेवापरायण एवं प्रियवादी बनकर राजा की सेवा करते हैं तथा ठीक इसके विपरीत सज्जन लोग सत्य वचनों से सामने या पीठ पीछे राजा की सेवा करते हैं। यथार्थतः इन दोनों में आकाश और धरती जैसा अन्तर है॥ २५-२६ ॥

**अतीति। प्रत्यक्षमिति**। मायिकैः कापटिकैः जनैः यावत् कार्य्यम् आत्मन इति शेषः। तावत् अतिमृदुभिः स्तुतिभिः नतिभिः सेवाभिः, दानैः प्रियोक्तिभिः प्रियवचनैश्च नृपः सेव्यते, सत्यवाग्भिः सत्यवादिभिः, साधुभिस्तु नित्यं सततम् आत्मकार्य्याभावेऽपीत्यर्थः, प्रत्यक्षं वा परोक्षं वा याथार्थ्यतः तत्त्वतः सेव्यते इत्यर्थः, खभुवोर्यथा आकाशभूम्योरिव तयोः मायिकसाध्वोः ईदृक् अन्तरं प्रभेदः॥ २५-२६ ॥

मायाया जनका धूर्तजारचौरबहुश्रुताः ।
प्रतिष्ठितो यथा धूर्त्तो जारचौरौ तथा न हि॥ २७॥

**अन्वयः**—धूर्तजारचौरबहुश्रुताः मायायाः जनकाः। यथा धूर्तः प्रतिष्ठितः तथा जारचौरौ न हि॥ २७ ॥

**व्याख्या**—धूर्तः = कापटिकः, जारः = परदारलम्पटः, चौरः = तस्करः, एतद्रूपेण, बहुश्रुताः = बहुलेषु श्रवणगोचरतां गताः, मायायाः = वञ्चकत्वस्य, जनकाः = उत्पादकाः। यथा = येन प्रकारेण, धूर्तः = मायावी, प्रतिष्ठितः = विश्रुतः, तथा जारचौरौ = उपपतितस्करौ, न हि = नैव, भवतः॥२७ ॥

**हिन्दी**—वंचक, जार और चोर मायावी होते हैं, यह सर्वविदित है। किन्तु जार और चोर की अपेक्षा वंचक इस काम में सर्वाधिक श्रेष्ठ माना जाता है॥२७॥

**मायाया इति**। धूर्तः शठः जारः उपपतिः चौरस्तस्करः एतद्रूपेण बहुश्रुताः बहुशो विख्याता जना मायायाः कापट्यस्य जनकाः कारकाः। यथा धूर्तः प्रतिष्ठितः प्रतिपन्नः भवति इति यावत् तथा जारचौरौ न हि नैव भवतः॥२७॥

**परस्वहरणे लोके जारचौरौ तु निन्दितौ।**
**तावप्रत्यक्षं हरतः प्रत्यक्षं धूर्त एव हि॥२८॥**

**अन्वयः**—लोके परस्वहरणे जारचौरौ निन्दितौ। तौ अप्रत्यक्षं हरतः, धूर्तः प्रत्यक्षम् एव हि॥२८॥

**व्याख्या**—लोके = संसारे, परस्वहरणे = परस्त्री-परधनापहरणे, जारचौरौ = उपपतितस्करौ, निन्दितौ = गर्हितौ भवतः। किन्तु तौ = जारचौरौ, अप्रत्यक्षम् = अक्षणः परमिति यथा तथा, हरतः = हरणं कुरुतः, धूर्तस्तु = वञ्चकस्तु, प्रत्यक्षमेव = दृग्गोचरमेव, हरति = अपहरणङ्करोतीति॥२८॥

**हिन्दी**—संसार में दूसरे की स्त्री और धन अपहृत करने के कारण जार और चोर निन्दित होते हैं। किन्तु ये दोनों तो आँख के पीछे कुकर्म करते हैं परन्तु धूर्त तो आँखों में धूल झोंक कर सामने ही धन हर लेते हैं॥२८॥

**परस्वेति**। लोके जगति जारचौरौ परस्वस्य परधनस्य हरणे विषये निन्दितौ, किन्तु तौ अप्रत्यक्षं यथा तथा हरतः परस्वमिति भावः, धूर्त्तस्तु प्रत्यक्षमेव हरतीत्यर्थः॥२८॥

**हितं त्वहितवच्चान्ते अहितं हितवत् सदा।**
**धूर्त्ताः सन्दर्शयित्वाज्ञं स्वकार्य्यं साधयन्ति ते॥२९॥**

**अन्वयः**—ते अज्ञं हितम् अहितवत् तथा अहितं हितवत् दर्शयित्वा अन्ते सदा स्वकार्यं साधयन्ति॥२९॥

**व्याख्या**—ते = वञ्चकाः, अज्ञम् = ज्ञानहीनं जनम्, हितम् = लाभप्रदम्, अहितवत् = हानिकरमिव, तथा अहितम् = हानिकरम्, हितवत् = लाभप्रद इव, दर्शयित्वा = प्रदर्श्य, अन्ते = अन्तिमक्षणे, सदा = सर्वदा, स्वकार्यम् = आत्मकार्यम्, साधयन्ति = पूरयन्ति॥२९॥

**हिन्दी**—ये धूर्त्त हमेशा सीधे-सादे लोगों को लाभ में हानि और हानि में लाभ जैसी उलटी-सीधी बातें समझा कर अन्त में अपना काम साधते हैं॥२९॥

**हितमिति**। ते धूर्त्ता जनाः अज्ञं जनं हितम् अहितवत् तथा अहितं हितवत् दर्शयित्वा अन्ते अवसाने सदा स्वकार्य्यं साधयन्ति॥२९॥

**विश्रम्भयित्वा चात्यर्थं मायया घातयन्ति ते॥३०॥**

**अन्वयः**—ते अत्यर्थं विश्रम्भयित्वा मायया घातयन्ति॥३०॥

**व्याख्या**—ते = वञ्चकाः, अत्यर्थम् = अत्यधिकम्, विश्रम्भयित्वा = विश्वासमुत्पाद्य, मायया = कापट्येन, घातयन्ति = विनाशयन्ति॥३०॥

**हिन्दी**—और ये धूर्त पहले लोगों को पूरी तरह अपने विश्वास में लेकर बाद में नष्ट कर देते हैं॥३०॥

**विश्रम्भयित्वेति**। ते धूर्त्ताः अत्यर्थं विश्रम्भयित्वा विश्वास्य पश्चात् मायया छद्मना घातयन्ति ॥ ३० ॥

**यस्य चाप्रियमन्विछेत् तस्य कुर्य्यात् सदा प्रियम्।**
**व्याधो मृगवधं कर्त्तुं गीतं गायति सुस्वरम् ॥ ३१ ॥**

**अन्वयः**—यस्य अप्रियम् अन्विच्छेत् सदा तस्य प्रियं कुर्यात्। व्याधः मृगवधं कर्त्तुं सुस्वरं गीतं गायति ॥ ३१ ॥

**व्याख्या**—यस्य = जनस्य, अप्रियम् = अहितम्, अन्विच्छेत् = अभिलषेत्, सदा = सर्वदा, तस्य = जनस्य, प्रियम् = हितम्, कुर्यात् = सम्पादयेत्, यथा, व्याधः = लुब्धकः, मृगवधम्—मृगस्य = हरिणस्य, वधम् = हत्या, कर्त्तुम् = विधातुम्, सुस्वरम् = सुमधुरम्, गीतम् = गानम्, गायति = तमानन्दयति ॥ ३१ ॥

**हिन्दी**—ये दुष्ट जिनकी बुराई करना चाहते हैं पहले हमेशा उनकी भलाई करते हैं। उसी तरह जैसे व्याध पहले हिरण को मीठा गीत सुनाकर उन्हें मार डालते हैं ॥ ३१ ॥

**यस्येति**। यस्य अप्रियम् अनिच्छेत् अभिलषेत् सदा तस्य प्रियं कुर्य्यात्। व्याधः मृगवधं कर्त्तुं सुस्वरं गीतं गायति सुमधुरगीतेन मृगम् आनन्दयतीत्यर्थः ॥ ३१ ॥

**मायां विना महाद्रव्यं द्राङ् न सम्पाद्यते जनैः।**
**विना परस्वहरणान्न कश्चित् स्यात् महाधनः।**
**मायया तु विना तद्धि न साध्यं स्याद्यथेप्सितम् ॥ ३२ ॥**

**अन्वयः**—जनैः मायां विना द्राक् महाद्रव्यं न सम्पाद्यत। परस्वहरणात् विना कश्चित् महाधनः न स्यात्। मायया विना यत् ईप्सितं तत् न हि साध्यम् ॥ ३२ ॥

**व्याख्या**—जनैः = लोकैः, मायाम् = कापट्यम्, विना = विहाय, द्राक् = झटिति, महाद्रव्यम् = अत्यधिकधनम्, न = नहि, सम्पाद्यते = उत्पाद्यते। परस्वहरणात् = परधनहरणात्, विना = विहाय, कश्चित् = कोऽपि जनः, महाधनः = अतिसमृद्धशाली, न = नहि, स्यात् = भवेत्। मायया = कापट्येन, विना = विहाय, यथा यत् ईप्सितम् = अभिलषितम्, तत् न हि = नैव, साध्यम् = निष्पादनीयं भवति ॥ ३२ ॥

**हिन्दी**—बिना कपट के कोई शीघ्र बहुत धन इकट्ठा नहीं कर सकता है और दूसरों का धन बिना अपहृत किये कोई महाधनी नहीं बन सकता। बिना कपट के किसी के अभिलषित कार्य्य की सिद्धि नहीं हो सकती है ॥ ३२ ॥

**मायामिति**। जनैः मायां कापट्यं विना द्राक् झटिति महाद्रव्यं बहुधनं न सम्पाद्यते न सञ्चीयते, परस्वहरणात् विना कश्चित् जनः महाजनः न स्यात् मायया विना यथा यत् ईप्सितं तत् न हि नैव साध्यम् ॥ ३२ ॥

**स्वधर्मं परमं मत्वा परस्वहरणं नृपाः।**
**परस्परं महायुद्धं कृत्वा प्राणांस्त्यजन्त्यपि ॥ ३३ ॥**

**अन्वयः**—नृपाः परस्वहरणं परमं स्वधर्मं मत्वा परस्परं महायुद्धं कृत्वा प्राणानपि त्यजन्ति ॥ ३३ ॥

**व्याख्या**—नृपाः = भूपाः, परस्वहरणम् = परधनापहरणं, परमम् = अत्युत्कृष्टम्, स्वधर्मम् = आत्मकर्तव्यम्, मत्वा = परिज्ञाय, परस्परम् = अन्योऽन्यम्, महायुद्धम् = घोरसङ्ग्रामम्, कृत्वा = प्रारभ्य, तस्मिन् युद्धे प्राणानपि = असूनपि, त्यजन्ति = जहाति ॥ ३३ ॥

**हिन्दी**—एक राजा दूसरे राजा का सर्वस्व अपहृत करना अपना परम धर्म मानकर युद्ध के मैदान में परस्पर लड़कर अपनी जान तक दे डालते हैं ॥ ३३ ॥

**स्वधर्ममिति**। नृपाः परस्वहरणं परधनहरणं परमम् उत्कृष्टं स्वधर्मं मत्वा परस्परं महायुद्धं कृत्वा प्राणानपि त्यजन्ति ॥ ३३ ॥

**राज्ञो यदि न पापं स्याद्दस्यूनामपि नो भवेत्।**
**सर्वं पापं धर्मरूपं स्थितमाश्रयभेदतः ॥ ३४ ॥**

**अन्वयः**—यदि राज्ञः पापं न स्यात् तदा दस्यूनामपि पापं नो भवेत्। आश्रयभेदतः सर्वं पापं धर्मरूपं स्थितम् ॥ ३४ ॥

**व्याख्या**—यदि = चेत्, राज्ञः = नृपस्य, पापम् = अधर्मम्, न = नहि, स्यात् = भवेत्, तदा, दस्यूनामपि = लुण्ठकानामपि, पापम् = अधर्मम्, नो भवेत् = न स्यात्, आश्रयस्य = आधारस्य, भेदतः = भेदात्, सर्वम् = अखिलम्, पापम् = अपकर्म, धर्मरूपम् = धर्मस्वरूपेण, स्थितम् = विद्यमानम् अस्ति ॥ ३४ ॥

**हिन्दी**—यदि राजा को वैसा करने में पाप नहीं लगता है तो डाकुओं को भी दूसरों का धन अपहृत करने में पाप नहीं लगना चाहिए। क्योंकि आधार बदलते ही सभी पाप धर्म बन जाते हैं अर्थात् जो कर्म डाकुओं के लिए पाप है वही राजा के लिए पुण्य है ॥ ३४ ॥

**राज्ञ इति**। यदि राज्ञः पापं न स्यात् तदा दस्यूनामपि पापं नो स्यात्। आश्रयस्य भेदतः भेदात् सर्वं पापं धर्म्मरूपं स्थितं दस्युषु परस्वहरणं पापं परं राजनि धर्म एवेति आश्रयभेद इति भावः ॥ ३४ ॥

**बहुभिर्यः स्तुतो धर्मो निन्दितोऽधर्म एव सः।**
**धर्मतत्त्वं हि गहनं ज्ञातुं केनापि नोचितम् ॥ ३५ ॥**

**अन्वयः**—यः बहुभिः स्तुतः सः धर्मः एव, बहुभिः निन्दिनः अधर्म एव। धर्मतत्त्वं हि गहनं, केनापि ज्ञातुं न उचितम् ॥ ३५ ॥

**व्याख्या**—यः = कर्म, बहुभिः = अनेकैः, स्तुतः = प्रशंसितः, सः = कर्म, धर्म एव = पुण्यकर्म एव, यस्त्वनेकैः, निन्दितः = निर्भर्त्सितः, तत्कर्म, अधर्मः = पापमेव। धर्मतत्त्वम्—धर्मस्य = पुण्यकर्मणः, तत्त्वम् = सारम्, हि = यतः, गहनम् = दुर्ज्ञेयम्, केनापि = जनेन, ज्ञातुम् = बोद्धुम्, न = नहि, उचितम् = शक्तमिति ॥ ३५ ॥

**हिन्दी**—जिस काम की प्रशंसा बहुत सारे लोग करते हैं वह धर्म माना जाता है तथा जिस काम की लोग निन्दा करते हैं वह अधर्म माना जाता है। धर्म का तत्त्व दुर्ज्ञेय है, कोई इसका पार नहीं पा सकता है ॥ ३५ ॥

**बहुभिरिति**। यः व्यापारः बहुभिः स्तुतः प्रशंसितः सः धर्म एव, यस्तु बहुभिः निन्दितः सः अधर्म एव। धर्मतत्त्वं गहनं दुर्ज्ञेयमित्यर्थः, हिशब्दः अवधारणार्थः, केनापि ज्ञातुं न उचितं न शक्तमित्यर्थः ॥ ३५ ॥

**अतिदानं तपः सत्ययोगो दारिद्र्यकृत् त्विह।**
**धर्मार्थौ यत्र न स्यातां तद्वाक् कामं निरर्थिका॥ ३६ ॥**

**अन्वयः**—इह अतिदानं तपः सत्ययोगः दारिद्र्यकृत्। यत्र धर्मार्थौ न स्यातां तद्वाक् कामं निरर्थिका॥ ३६ ॥

**व्याख्या**—इह = संसारे, अतिदानम् = यस्मै कस्मै बहुप्रदानम्, तपः = तपस्या, सत्ययोगः = सत्येनान्वितः, दारिद्र्यकृत् = अकिञ्चनत्वविधायकम्। अर्थात् अतिदानेन, अनवरतप्रदानेन दारिद्र्यं भवत्येवेति सुप्रसिद्धम्, तपसा धार्मिककृत्येन धनव्ययात्, धनागमस्य प्रपञ्चसाध्यत्वात्, सत्यान्वये तदभावाच्चेति। यत्र = यस्मिन् कथने, धर्मार्थौ = पुण्यधने, न = नहि, स्याताम् = भवेताम्, तद्वाक् = सा वाणी, कामम् = यथेष्टम्, निरर्थिका = निष्फला॥ ३६ ॥

**हिन्दी**—संसार में अधिक दान, तपस्या एवं सत्य का सम्बन्ध—ये तीनों काम दरिद्रता पैदा करने वाले हैं। अधिक दान से दरिद्रता जगविदित है। इसी तरह तपजन्य धर्मानुष्ठान भी अर्थसाध्य है और धन की प्राप्ति धूर्तता से होती है। उसमें भी यदि सच्चाई हो तो दरिद्रता निश्चित है। अतः जिस वाणी में धर्म और धन की कमी हो वह वाणी निरर्थक है॥ ३६ ॥

**अतीति**। इह जगति अतिदानं तपः सत्ययोगश्च दारिद्र्यकृत् अतिदानेन दारिद्र्यं प्रसिद्धं तपसा धर्मानुष्ठानरूपेण अर्थव्ययात् धनागमस्य मायासाध्यत्वात् सत्ययोगे [illegible]भावाच्च दारिद्र्य-मित्यनुसन्धेयम्। यत्र यस्यां वाचि धर्मार्थौ धर्मः अर्थश्च न स्यातां तद्वाक् [illegible] वाणी कामं सम्यक् निरर्थका निष्फला॥ ३६ ॥

**अर्थे वा यदि वा धर्मे समर्थो देशकालवित्।**
**निःसंशयो नरः पूज्यो नेष्टः संशयिता सदा॥ ३७ ॥**

**अन्वयः**—अर्थे वा धर्मे वा समर्थः देशकालवित् निःसंशयः नरः पूज्यः। सदा संशयिता नरः न इष्टः॥ ३७ ॥

**व्याख्या**—अर्थे = धने, वा = अथवा, धर्मे = पुण्ये, वा धर्मानुसारेणार्थागमचातुर्येण, देशकालवित् = स्थानसमयानुसारेण कार्यविज्जनः, निःसंशयः = सन्देहशून्यः, नरः = जनः, पूज्यः = पूजनीयः। सदा = सततम्, संशयिता = सन्देहशीलः, नरः = मानवः, न = नहि, इष्टः = अभिप्रेतः॥ ३७ ॥

**हिन्दी**—धर्मानुसार अर्थोपार्जन करने में कुशल व्यक्ति, देश-काल के अनुसार काम करने वाला संशयरहित व्यक्ति सदा समाज में पूजनीय होता है। संशयालु व्यक्ति कभी भी मान्य नहीं होता॥ ३७ ॥

**अर्थे इति**। अर्थे वा धर्मे वा समर्थः धर्मानुसारेण अर्थागमकौशलज्ञ इत्यर्थः, देशकालवित् स्थानसमयानुसारेण कार्य्यज्ञ इत्यर्थः, निःसंशयः संशयरहितश्च नरः पूज्यः, सदा संशयिता संशयानः नरः न इष्टः, सम्मतः॥ ३७ ॥

**अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित्।**
**अतोऽर्थाय यतेतैव सर्वदा यत्नमास्थितः।**
**अर्थाद्धर्मश्च कामश्च मोक्षश्चापि भवेन्नृणाम्॥ ३८ ॥**

**अन्वयः**—पुरुषः अर्थस्य दासः, अर्थस्तु न कस्यचित् दासः। अतः यत्नमास्थितः सर्वदा अर्थाय यतेत एव। अर्थात् नृणां धर्मश्च कामश्च मोक्षश्च भवेत् ॥ ३८ ॥

**व्याख्या**—पुरुषः = मनुष्यः, अर्थस्य = धनस्य, दासः = सेवकः, भवति, अर्थस्तु = धनम्, न = नहि, कस्यापि = पुरुषविशेषस्यापि, दासः = सेवको भवति। अतः = अस्मात् कारणात्, यत्नमास्थितः = प्रयत्नशीलो भूत्वा, सर्वदा = सदा, अर्थाय = धनाय, यतेत एव = अध्यवसेदेव। अर्थात् = धनात्, नृणाम् = मनुष्याणाम्, धर्मश्च = पुण्यश्च, कामश्च = मनोरथश्च, मोक्षश्च = मुक्तिश्च, भवेत् = स्यात् ॥ ३८ ॥

**हिन्दी**—धन का गुलाम आदमी होता है, आदमी का गुलाम धन नहीं होता है। अतः धन के लिए सदैव व्यक्ति को प्रयत्न करना चाहिए, क्योंकि धन से धर्म, काम और मोक्ष की प्राप्ति होती है ॥ ३८ ॥

**अर्थस्येति**। पुरुषः अर्थस्य दासः, अर्थस्तु न कस्यचित् दासः, अतः अस्मात् कारणात् यत्नमास्थितः यत्नवान् सन् सर्वदा अर्थाय यतेत एव। अर्थात् धनात् नृणां धर्मश्च कामश्च मोक्षश्च भवेत् ॥ ३८ ॥

शस्त्रास्त्राभ्यां विना शौर्य्यं गार्हस्थ्यन्तु स्त्रियं विना।
ऐकमत्यं विना युद्धं कौशल्यं ग्राहकं विना।
दुःखाय जायते नित्यं सुसहायं विना विपत्।
न विद्यते तु विपदि सुसहायं सुहृत्समम् ॥ ३९ ॥

**अन्वयः**—शौर्य्यं शस्त्रास्त्राभ्यां विना, गार्हस्थ्यं स्त्रियं विना, युद्धम् ऐकमत्यं विना, कौशल्यं ग्राहकं विना तथा विपत् सुसहायं विना नित्यं दुःखाय जायते। विपदि सुहृत्समं सुसहायं न विद्यते ॥३९ ॥

**व्याख्या**—शौर्य्यं = वीरत्वम्, शस्त्रास्त्राभ्याम् = आयुधप्रहरणाभ्याम्, विना = विहाय, गार्हस्थ्यम् = द्वितीयाश्रमम्, स्त्रियम् = पत्नीम्, विना = मुक्त्वा, युद्धम् = सङ्ग्रामम्, ऐकमत्यम् = सैनिकानामेकताम्, विना = वर्जयित्वा, कौशल्यम् = चातुर्यम्, ग्राहकम् = योद्धारम्, विना = अन्तरेण, तथा विपद् = आपद्, सुसहायम् = सुन्दरसहायकम्, विना = विहाय, नित्यम् = सततम्, दुःखाय = कष्टाय, जायते = भवति। तथा विपदि = आपदि, सुहृत्समम् = मित्रतुल्यः, सुसहायम् = सुष्ठुसहायकः, न = नहि, विद्यते = भवति ॥ ३९ ॥

**हिन्दी**—हथियारों के बिना वीरता, पत्नी के बिना गृहस्थी, सैनिकों की एकता के बिना युद्ध, समझने वाले के बिना चतुराई तथा सुन्दर सहायक के बिना विपत्ति नित्य दुःख देने के लिए ही होती है। विपत्ति में मित्र के समान कोई सच्चा सहायक भी नहीं होता है ॥३९ ॥

**शस्त्रेति**। शौर्य्यं शस्त्रास्त्राभ्यां विना, गार्हस्थ्यं स्त्रियं भार्य्यां विना, युद्धम् ऐकमत्यं योद्धृणामेकतां विना, कौशल्यं नैपुण्यं ग्राहकं बोद्धारं विना, तथा विपत् सुसहायं विना नित्यं सततं दुःखाय जायते विपदि सुहृदा समः सुसहायः न विद्यते ॥ ३९ ॥

अविभक्तधनान् मैत्र्या भृत्या भक्तधनान् सदा।
मित्रं स्वसदृशैर्भोगैः सत्यैश्च परितोषयेत् ॥ ४० ॥

नृपसम्बन्धिस्त्रीपुत्रसुहृद्भृत्यगणान् तथा।
तोषयित्वा सुखी चैव भुङ्क्ते यस्तु स्वकं धनम्॥४१॥

**अन्वयः**—मैत्र्या अविभक्तधनान् भृत्या भक्तधनान् पृथक्स्थान् स्वसदृशैः भोगैः सत्यैश्च मित्रं परितोषयेत्। तथा नृपसम्बन्धिस्त्रीपुत्रसुहृद्भृत्यगणान् तोषयित्वा यस्तु स्वकं धन भुङ्क्ते सः एव सुखी॥४०-४१॥

**व्याख्या**—मैत्र्या = सख्यभावेन, अविभक्तधनान् = अविभाजितान् अर्थान्, गोत्रजान्, भृत्या = वेतनेन, भक्तधनान् = विभाजितार्थान्, पृथक्स्थान् दायादान्, तथा = स्वसदृशैः = आत्मतुल्यैः, भोगैः = उपभोगैः, सत्यैश्च, मित्रम् = सुहृदम्, परितोषयेत् = सन्तोषयेत्। तथा नृपसम्बन्धिस्त्रीपुत्रसुहृद्भृत्यगणान् = राजकुटुम्बपत्नीपुत्रमित्रसेवकवर्गान्, तोषयित्वा = सन्तुष्टं कृत्वा, यस्तु, स्वकम् = आत्मानम्, धनम् = द्रव्यम्, भुङ्क्ते = उपभोगं कुरुते, सः = असौ, सुखी = प्रसन्नः, भवति = जायते॥४०-४१॥

**हिन्दी**—जिनके साथ धन का बँटवारा हो चुका है ऐसे गोत्रज और जिनके साथ धन का बटँवारा नहीं हुआ है ऐसे पारिवारिक जन; इन्हें क्रमशः मासिक वेतन देकर तथा सौहार्दभाव से संतुष्ट करे और मित्रों को अपने सदृश भोग एवं सत्य वचन से सन्तुष्ट रखे। जो राजा अपने सम्बन्धी, स्त्री, पुत्र, मित्र एवं सेवक को सन्तुष्ट कर अपने धन का स्वयं उपभोग करता है, वह सुखी होता है॥४०-४१॥

**अविभक्तधनानिति**। मैत्र्या सौहृद्येन अविभक्तधनान् एकान्तवर्त्तिनः ज्ञातीनित्यर्थः, भृत्या मासिकादिवृत्तिविधानेन भक्तधनान् पृथक्स्थान् दायादान् तथा स्वसदृशैः आत्मतुल्यैः भोगैः सत्यैश्च मित्रं परितोषयेत्। तथा नृपसम्बन्धिस्त्रीपुत्रसुहृद्भृत्यगणान् तोषयित्वा यस्तु स्वकं धनं भुङ्क्ते चैव स सुखी भवति इति यावत्॥४०-४१॥

त्यक्त्वा तु दर्पकार्पण्यमानोद्वेगभयानि च।
कुर्वीत नृपतिर्नित्यं स्वार्थसिद्ध्यै तु नान्यथा।
विशेषभृतितो भृत्यं प्रेममानाधिकारतः॥४२॥

**अन्वयः**—नृपतिः दर्पकार्पण्यमानोद्वेगभयानि च त्यक्त्वा स्वार्थसिद्ध्यै विशेषभृतितः तथा प्रेममानाधिकारतः नित्यं भृत्यं कुर्यात्, अन्यथा न॥४२॥

**व्याख्या**—नृपतिः = राजा, दर्पम् = अहङ्कारम्, कार्पण्यम् = कृपणताम्, मानम् = सम्मानम्, उद्वेगम् = उद्विग्नताम्, भयञ्च = त्रासञ्च, त्यक्त्वा = परित्यज्य, स्वार्थसिद्ध्यै = स्वकार्यसाधनाय, विशेषभृतितः = विशिष्टवेतनेन, तथा प्रेम्णा = प्रीत्या, मानेन = सम्मानेन, अधिकारतः = अधिकार-प्रदानेन, नित्यम् = सततम्, भृत्यम् = सेवकम्, कुर्वीत = नियुञ्ज्यात्, अन्यथा = इतरथा, न = नहि॥४२॥

**हिन्दी**—राजा अपने स्वार्थ की सिद्धि के लिए अपना अहंकार, कृपणता, मान, उद्वेग एवं डर छोड़कर विशिष्ट जीवका देकर प्रेम से, सम्मान से तथा अधिकार प्रदान कर हमेशा सेवक को नियुक्त करे, अन्यथा नहीं॥४२॥

**त्यक्त्वेति**। नृपतिः दर्पं कार्पण्यं कृपणतां मानम् उद्वेगं भयञ्च त्यक्त्वा स्वार्थसिद्ध्यै स्वकार्य्यसिद्धये विशेषभृतितः विशिष्टया भृत्या तथा प्रेम्णा मानेन अधिकारतः अधिकारप्रदानेन

नित्यं सततं भृत्यं कुर्वीत नियुञ्ज्यात् अन्यथा स्वार्थसिद्ध्यै इत्यर्थः न ॥ ४२ ॥

**ब्राह्मणाग्निजलैश्चैव धनवान् भक्ष्यते सदा।**
**स सुखी मोदते नित्यमन्यथा दुःखमश्नुते ॥ ४३ ॥**

**अन्वयः**—धनवान् ब्राह्मणाग्निजलैश्चैव सदा भक्ष्यते, सः सुखी नित्यं मोदते; अन्यथा दुःखम् अश्नुते ॥ ४३ ॥

**व्याख्या**—धनवान् = धनी जनः, ब्राह्मणाग्निजलैश्चैव—ब्राह्मणेभ्यः = विप्रेभ्यः दानात्, अग्निभ्यः = वह्निभ्यः, अग्निसाध्ययज्ञानुष्ठानात्, जलेभ्यः = पिपासितजनेभ्यः पयशालानिर्माणात्, धनक्षयात्, सः = असौ ब्राह्मणाग्निजलसात्कृतधनो जनः, नित्यम् = सततम्, सुखी = मुदितः सन्, नित्यम्, मोदते = प्रसन्नो भवति, अन्यथा = इतरथा, दुःखम् = कष्टम्, अश्नुते = प्राप्यते ॥ ४३ ॥

**हिन्दी**—ब्राह्मणों को दान देने से, अग्नि में हवन करने से, प्याऊ बनवाने से जिस व्यक्ति का धन व्यय होता है वह धनी सदा सुखी रहता है, अन्यथा दुःखी होता है ॥ ४३ ॥

**ब्राह्मणेति।** धनवान् जनः ब्राह्मणाग्निजलैश्चैव सदा नित्यं भक्ष्यते, ब्राह्मणेभ्यः दानात् अग्निसाध्ययज्ञानुष्ठानात् पथिकानां श्रान्तिनिवारणार्थं पानीयशालाविधानाच्च धनक्षयादिति भावः, सः ब्राह्मणाग्निजलसात्कृतधनः पुरुष इत्यर्थः, सुखी सन् नित्यं मोदते आनन्दमनुभवति, अन्यथा दुःखम् अश्नुते लभते ॥ ४३ ॥

**दर्पस्तु परह्रासेच्छा मानोऽहं सर्वतोऽधिकः।**
**कार्पण्यन्तु व्यये दैन्यं भयं स्वोच्छेदशङ्कनम्।**
**मानसस्यानवस्थानमुद्वेगः परिकीर्त्तितः ॥ ४४ ॥**

**अन्वयः**—परह्रासेच्छा, दर्पः, अहं सर्वतोऽधिकः इति मानः, व्यये दैन्यं कार्पण्यं, स्वोच्छेदशङ्कनं भयं तथा मानसस्य अनवस्थानम् उद्वेगः परिकीर्तितः ॥ ४४ ॥

**व्याख्या**—अन्यस्य = अपरजनस्य, ह्रासेच्छा = अपकर्षेच्छा, दर्पः = अहङ्कारः, अहं सर्वतोऽधिकः—सर्वतः = सकलेभ्यः, अधिकः = विशिष्टः, इत्येवं मतिः, मानः = गर्वः, व्यये = धननिर्गमे, दैन्यम् = कातर्यम्, कार्पण्यम् = कृपणता, स्वस्य = आत्मनः, उच्छेदशङ्कनम् = विनाशसन्देहः, भयम् = त्रासम्, तथा मानसस्य = चित्तस्य, अनवस्थानम् = चाञ्चल्यम्, उद्वेगः = उद्विग्नता, परिकीर्तितः = कथितः ॥ ४४ ॥

**हिन्दी**—दूसरों की अवनति की इच्छा को दर्प, मैं सबसे अधिक हूँ इसे मान, खर्च में कंजूसी को कृपणता, अपने विनाश की आशंका को भय और मन की चञ्चलता को उद्वेग कहते हैं ॥ ४४ ॥

**दर्प इति।** परस्य ह्रासेच्छा खर्वीकरणाशयः दर्पः, अहं सर्वतः सर्वेभ्यः अधिकः इत्येवं बुद्धिः मानः, व्यये दैन्यं कातर्य्यं कार्पण्यं स्वस्य आत्मनः उच्छेदशङ्कनम् उच्छेदशङ्का भयम्, तथा मानसस्य चित्तस्य अनवस्थानम् अस्थिरतां चाञ्चल्यमित्यर्थः, उद्वेगः परिकीर्त्तितः ॥ ४४ ॥

**लघोरप्यपमानस्तु महावैराय जायते।**
**दानमानसत्यशौर्य्यमार्दवं सुसुहृत्करम् ॥ ४५ ॥**

**अन्वयः**—लघोरपि अपमानः महावैराय जायते। दानमानसत्यशौर्यमार्दवं सुसुहृत्करं भवति ॥ ४५ ॥

**व्याख्या**—लघोरपि = महत्त्वहीनस्यापि जनस्य, अपमानः = अनादरः, महावैराय = घोरविरोधाय, जायते = भवति, दानम् = प्रदानम्, मानः = सम्मानः, सत्यम्, शौर्यम् = वीरत्वम्, मार्दवम् = कोमलता, सुसुहृत्करम् = सुष्ठुमैत्रीसम्पादकं भवति ॥४५॥

**हिन्दी**—क्षुद्र लोगों के लिए भी किया गया अपमान बड़ी दुश्मनी का कारण बन जाता है। किसी को कुछ देना, सम्मान करना, सच्चाई का व्यवहार करना, वीरता एवं कोमलता- ये सभी मित्रता पैदा करने वाले होते हैं ॥४५॥

**लघोरिति**। लघोः क्षुद्रस्यापि जनस्य अपमानः मानहानिः महावैराय जायते प्रभवति। दानं मानः सत्यं शौर्य्यं मार्दवञ्च सुसुहृत्करं सुष्ठु सौहार्दविधायकं भवति ॥४५॥

**सर्वानापदि सदसि समाहूय बुधान् गुरून्।**
**भ्रातॄन् बन्धूंश्च भृत्यांश्च ज्ञातीन् सभ्यान् पृथक् पृथक्।**
**यथार्हं पूज्य विनतः स्वाभीष्टं याचयेत् नृपः ॥४६॥**

**अन्वयः**—नृपः विनतः आपदि सदसि सर्वान् बुधान् गुरून् भ्रातॄन् बन्धून् भृत्यान् ज्ञातीन् तथा सभ्यान् समाहूय पृथक् पृथक् यथार्हं पूज्य स्वाभीष्टं याचयेत् ॥४६॥

**व्याख्या**—नृपः = राजा, विनतः = विनम्रो भूत्वा, आपदि = विपदि, सदसि = सभाकक्षे, सर्वान् = सकलान्, बुधान् = पण्डितान्, गुरून् = आचार्यान्, भ्रातॄन् = सोदरान्, बन्धून् = बान्धवान्, भृत्यान् = सेवकान्, ज्ञातीन् = परिचितान्, तथा सभ्यान् = सभानियुक्तपुरुषान्, समाहूय = आह्वानं कृत्वा, पृथक् पृथक् = भिन्नं भिन्नम्, यथार्हं पूज्य = यथायोग्यं सम्पूज्य, स्वस्य = आत्मनः, अभीष्टम् = अभिलषितम्, याचयेत् = प्रार्थयेत् ॥४६॥

**हिन्दी**—विपत्ति आने पर राजा विनम्र होकर पण्डित, गुरु, भाई, बन्धु, नौकर एवं सभासद—इन्हें राजसभा में बुलाकर यथायोग्य सम्मान करने के बाद अपना अभीष्ट सिद्ध करने के लिए उनसे उपाय पूछे ॥४६॥

**सर्वानिति**। नृपः विनतः विनीतः सन् आपदि सदसि सभायां सर्वान् बुधान् पण्डितान् गुरून् भ्रातॄन् बन्धून् भृत्यान् ज्ञातीन् तथा सभ्यान् सभानियुक्तान् पुरुषान् समाहूय पृथक् पृथक् यथार्हं पूज्य पूजयित्वा पूज्येति यप्प्रत्यय आर्षः। स्वस्य अभीष्टं याचयेत् प्रार्थयेत् ॥४६॥

**आपदं प्रतरिष्यामो यूयं युक्त्या वदिष्यथ।**
**भवन्तो मम मित्राणि भवत्सु नास्ति भृत्यता ॥४७॥**

**अन्वयः**—आपदं प्रतरिष्यामः यथा यूयं तथा युक्त्या वदिष्यथ। भवन्तः मम मित्राणि भवत्सु भृत्यता नास्ति ॥४७॥

**व्याख्या**—आपदम् = विपदम्, प्रतरिष्यामः = पारं गमिष्यामः सन्तरिष्यामो वा, यथा, यूयम् = भवन्तः, तथा, युक्त्या = उपायाः, वदिष्यथ = उपदेक्ष्यथ, भवन्तः = यूयम्, मम = मे, मित्राणि = सुहृदः, भवत्सु = युष्मासु, भृत्यता = दासता, नास्ति = न भवति ॥४७॥

**हिन्दी**—मैं इस विपत्ति को पार कर जाऊँ, इसका उपाय आप लोग बतलायें। आप सभी मेरे मित्र हैं, दास नहीं ॥४७॥

याच्ञाप्रकारमाह—**आपदमिति**। आपदं प्रतरिष्यामः यथेति शेषः, यूयं तथा युक्त्या वदिष्यथ उपदेक्ष्यथ, भवन्तः मम मित्राणि सुहृदः भवत्सु भृत्यता किङ्करता नास्ति ॥४७॥

न भवत्सदृशास्त्वन्ये सहायाः सन्ति मे ह्यतः।
तृतीयांशं भृतेर्ग्राह्यमर्द्धं वा भोजनार्थकम्।
दास्याम्यापत्समुत्तीर्णः शेषं प्रत्युपकारवित्॥ ४८॥

**अन्वयः**—भवत्सदृशाः अन्ये सहायाः न सन्ति, अतः इदानीं भृतेः तृतीयांशं वा अर्द्धं भोजनार्थकं ग्राह्यम्। आपत्समुत्तीर्णः प्रत्युपकारवित् शेषं दास्यामि॥४८॥

**व्याख्या**—भवताम् = युष्माकम्, सदृशाः = तुल्याः, अन्ये = अपरे, मम = मे, सहायाः = सहायकाः, न = नहि, सन्ति = भवन्ति। अतः = अस्मात्कारणात्, इदानीम् = अधुना, भृतेः = वेतनस्य, तृतीयांशम् = तृतीयभागः, वा = अथवा, अर्द्धम् = वेतनस्यार्द्धभागः, भोजनार्थकम् = केवलजीविकासञ्चालनार्थम्, ग्राह्यम् = भवद्भिः स्वीकार्यम्। आपत्सु = विपत्तिकालेषु, सम्पूर्ण-वेतनदानेऽसमर्थत्वात्, अतः = अस्मात्कारणात्, प्रत्युपकारवित् = प्रत्युपकृतिज्ञः सन्, शेषम् = अवशिष्टम्, दास्यामि = अर्पयिष्यामि॥४८॥

**हिन्दी**—इस विपत्ति की स्थिति में आप लोगों के समान मेरा कोई दूसरा सहायक नहीं है, अतः इस स्थिति में केवल जीविका-निर्वाह के लिए आप वेतन का तीसरा भाग या आधा वेतन ही स्वीकार करे। विपत्ति पार कर जाने के बाद कृतज्ञभाव से मैं आपका शेष वेतन भी चुकता कर दूँगा॥४८॥

**नेति**। भवतां सदृशाः अन्ये मम सहाया न सन्ति हि नैव विद्यन्ते इत्यर्थः। अतः इदानीं भृतेः वृत्तिरूपस्य वेतनस्य तृतीयांशं वा अर्द्धं भोजनार्थकम् अन्नार्थं ग्राह्यं भवद्भिरिति शेषः, आपत्सु बहुव्ययसम्भवात् समग्रदाने अशक्तेरिति भावः। अतः आपदः समुत्तीर्णः अत एव प्रत्युपकारवित् कृतज्ञः सन्नित्यर्थः, शेषम् अवशिष्टं दास्यामि॥४८॥

भृतिं विना स्वामिकार्य्यं भृत्यः कुर्य्यात् समाष्टकम्।
षोडशाब्दधनी यः स्यादितरोऽर्थानुरूपतः॥ ४९॥

**अन्वयः**—यः भृत्यः षोडशाब्दधनी सः भृतिं विना समाष्टकं स्वामिकार्यं कुर्यात्, इतरः अर्थानुरूपतः॥४९॥

**व्याख्या**—यः भृत्यः = सेवकः, षोडशाब्दधनी = वेतनं विना षोडशवर्षपर्यन्तं जीविका-सञ्चालने सक्षमः, सः = असौ, भृतिम् = वेतनम्, विना = विहाय, समाष्टकम् = अष्टवर्षपर्यन्तम्, स्वामिकार्यम्—स्वामिनः = प्रभोः, कार्यम् = कृत्यम्, कुर्यात् = निष्पादयेत्, इतरः = तद्भिनस्तु, अर्थानुरूपतः = आर्थिकस्थित्यनुसारेण, स्वामिकार्यं कुर्यात्॥४९॥

**हिन्दी**—जो सेवक राजा से बिना वेतन लिये सोलह साल तक अपनी जीविका-संचालन में समर्थ हो, वह आठ साल तक बिना वेतन लिए राजा का काम करे और उससे भिन्न लोग अपनी आर्थिक स्थिति के अनुसार बिना वेतन पाये राजकार्य करे॥४९॥

**भृतिमिति**। यः भृत्यः षोडशाब्दधनी षोडशवर्षीयव्ययोपयोगिधनसम्पन्नः स्यात् सः भृतिं विना समाष्टकम् अष्टौ वत्सरान् स्वामिकार्य्यं कुर्य्यात्। इतरः तद्भिन्नस्तु अर्थानुरूपतः यावदर्थमित्यर्थः, स्वामिकार्य्यं कुर्य्यादिति शेषः॥४९॥

निर्धनैरन्नवस्त्रन्तु नृपाद् ग्राह्यं न चान्यथा।
यतो भुक्तं सुखं सम्यक् तद्दुःखैर्दुःखितो न चेत्।
विनिन्दति कृतघ्नन्तु स्वामी भृत्योऽन्य एव वा॥ ५०॥

**अन्वयः**—निर्धनैः नृपात् अन्नवस्त्रं ग्राह्यम्, अन्यथा न। यतः नृपात् सम्यक् सुखं भुक्तं चेत् तद्दुःखैः दुःखितः न भवेत् तदा स्वामी वा अन्यः कृतघ्नं भृत्यं विनिन्दति॥५०॥

**व्याख्या**—निर्धनैः= धनहीनैः सेवकैः, नृपात् = भूपालात्, विपन्नावस्थायामपि, अन्नवस्त्रम् = जीवनयापनार्थं भृतिम्, ग्राह्यम् = स्वीकार्यम्, अन्यथा = सशक्ते सति, न = ग्राह्यम्। यतः= यस्मात्, नृपात् = भूभृतः, सम्यक् = सुष्ठु, सुखम् = सौविध्यम्, भुक्तम् = उपभोगितम्, चेत् = यदि, तस्य = नृपस्य, दुःखैः = कष्टैः, दुःखितः = पीडितः, न = नहि, भवेत् = स्यात्, तदा, स्वामी = प्रभुः, वा अन्यः = कृतज्ञः सेवकः, कृतघ्नम् = कृतज्ञरहितम्, भृत्यम् = सेवकम्, विनिन्दति = विशेषेण गर्हितम्॥५०॥

**हिन्दी**—निर्धन सेवक ही राजा से ऐसी विपन्न स्थिति में अन्न-वस्त्र ले, अन्यथा न ले। जिस राजा से आज तक जिसने भलीभाँति सुखोपभोग किया है, आज यदि उसके दुःख से वह दुःखी न हो तो ऐसे कृतघ्न सेवक की राजा एवं अन्य कृतज्ञ सेवक भी निन्दा करते हैं॥

**निर्धनैरिति**। निर्धनैः दरिद्रैः भृत्यैः नृपात् तथा विपन्नादिति भावः, अन्नवस्त्रं ग्राह्यम् अन्यथा सधनत्वे न, यतः नृपात् सम्यक् सुखं भुक्तं चेत् यदि तस्य दुःखैः दुरवस्थाभिः दुःखितः न भवेत् तदा स्वामी वा अन्यः कृतज्ञः भृत्यः कृतघ्नम् अकृतज्ञं तादृशं भृत्यं विनिन्दति॥५०॥

सकृत् सुभुक्तं यस्यापि तदर्थं जीवितं त्यजेत्।
भृत्यः स एव सुश्लोको नापत्तौ स्वामिनं त्यजेत्।
स्वामी स एव विज्ञेयो भृत्यार्थे जीवितं त्यजेत्॥ ५१॥

**अन्वयः**—यस्य अन्नं सकृत् सुभुक्तं भृत्यः तदर्थं जीवितं त्यजेत्, स एव भृत्यः सुश्लोकः। यः आपत्तौ स्वामिनं न त्यजेत् तथा स एव स्वामी भृत्यार्थे जीवितं त्यजेत्॥५१॥

**व्याख्या**—यस्य = नृपस्य, अन्नम् = भोज्यपदार्थम्, सकृत् = एकवारमपि, सुभुक्तम् = सुष्ठुभोजनं कृतम्, भृत्यः = सेवकः, तदर्थम् = तन्निमित्तम्, जीवितम् = जीवनमपि, त्यजेत् = परित्यागं कुर्यात्, स एव = तदेव, भृत्यः = सेवकः, सुश्लोकः = पुण्यकीर्तिः। यः = सेवकः, आपत्तौ = विपदि, स्वामिनम् = प्रभुम्, न = नहि, त्यजेत् = जह्यात्, तथा स एव = तदेव, स्वामी = प्रभुः, यः, भृत्यार्थे = सेवकार्थे, जीवितम् = प्राणम्, त्यजेत् = जह्यात्॥५१॥

**हिन्दी**—जो सेवक ससम्मान दिये गये राजा का अन्न एक बार भी यथेष्ट खा ले तो उसके लिए समय पड़ने पर वह जान भी दे दे। वही सेवक सुन्दर यशवाला कहलाता है जो विपत्ति में राजा का साथ नहीं छोड़ता और वही राजा राजा है जो जरूरत पड़ने पर अपने सेवक के लिए प्राण भी दे डाले॥५१॥

**सकृदिति**। यस्य अन्नं सकृत् एकवारमपि सुभुक्तं भृत्यः तदर्थं जीवितं त्यजेत् स एव भृत्यः सुश्लोकः पुण्यकीर्तिः यः आपत्तौ आपदि स्वामिनं न त्यजेत्। तथा स एव स्वामी विज्ञेयः यः भृत्यार्थे भृत्यनिमित्तं जीवितं त्यजेत्। स्वामिभृत्याभ्यां परस्परानुरक्ताभ्यां भवितव्यमिति भावः॥५१॥

न रामसदृशो राजा पृथिव्यां नीतिमानभूत्।
सुभृत्यता तु यन्नीत्या वानरैरपि स्वीकृता ॥ ५२ ॥

**अन्वयः**—पृथिव्यां रामसदृशः नीतिमान् राजा न अभूत्। यन्नीत्या वानरैरपि सुभृत्यता स्वीकृता ॥ ५२ ॥

**व्याख्या**—पृथिव्याम् = भूम्याम्, रामेण = दाशरथिना, सदृशः = तुल्यः, नीतिमान् = नयसम्पन्नः, राजा = नरपतिः, न = नहि, अभूत् = बभूव, यस्य = रामस्य, नीत्या = नयेन, वानरैरपि = कपिभिरपि, सुभृत्यता = सुष्ठुसेवकत्वम्, स्वीकृता = अङ्गीकृता ॥ ५२ ॥

**हिन्दी**—राम की तरह नीतिसम्पन्न राजा इस धरती पर कोई दूसरा नहीं हुआ। क्योंकि इनकी सेवकाई वानर जैसे पशुओं ने भी कबूल की थी ॥ ५२ ॥

**नेति**। पृथिव्यां रामेण सदृशः नीतिमान् राजा न अभूत्। यस्य नीत्या सुनयेन वानरैरपि सुभृत्यता स्वीकृता ॥ ५२ ॥

अपि राष्ट्रविनाशाय चोराणामेकचित्तता।
शक्ता भवेन्न किं शत्रुनाशाय नृपभृत्ययोः ? ॥ ५३ ॥

**अन्वयः**—चोराणाम् एकचित्तता राष्ट्रविनाशाय शक्ता भवेत्, शत्रुनाशाय नृपभृत्ययोः किन्न भवेत् ॥ ५३ ॥

**व्याख्या**—चोराणाम् = तस्कराणाम्, एकचित्तता = अवधानम्, राष्ट्रविनाशाय—राष्ट्रस्य = देशस्य, विनाशाय = अवसादाय, शक्ता = समर्था, भवेत् = स्यात्, तदा शत्रुनाशाय = रिपुविध्वंसाय, नृपभृत्ययोः = भूपसेवकयोरैकमत्यम्, सा किं न भवेत् ? भवत्येवेति ॥ ५३ ॥

**हिन्दी**—जब चोरों का एकमत होना किसी राष्ट्र को विनष्ट करने में समर्थ हो सकता है तो राजा और सेवकों की एकचित्तता क्या शत्रुओं को विनष्ट नहीं कर सकती ? अर्थात् कर ही सकती है ॥ ५३ ॥

**अपीति**। चोराणां तस्कराणामपि एकचित्तता ऐकमत्यं राष्ट्रस्य विनाशाय उच्छेदाय शक्ता समर्था भवेत् शत्रुनाशाय नृपभृत्ययोः सा किं न भवेत् ? अपितु भवेदेवेत्यर्थः ॥ ५३ ॥

न कूटनीतिरभवच्छ्रीकृष्णसदृशो नृपः।
अर्जुने प्रापिता स्वस्य सुभद्रा भगिनी छलात् ॥ ५४ ॥

**अन्वयः**—कश्चिदपि नृपः श्रीकृष्णसदृशः कूटनीतिः न अभवत्। स्वस्य भगिनी सुभद्रा छलात् अर्जुने प्रापिता ॥ ५४ ॥

**व्याख्या**—कश्चिदपि नृपः = कोऽपि राजा, श्रीकृष्णेन = वासुदेवेन, सदृशः = तुल्यः, कूटनीतिः = कपटनीतिसम्पन्नः, न = नहि, अभवत् = बभूव, स्वस्य = आत्मनः, भगिनी = अनुजा, सुभद्रा, छलात् = कपटात्, अर्जुने = पार्थे, प्रापिता = विवाहिता ॥ ५४ ॥

**हिन्दी**—श्रीकृष्ण की तरह कूटनीतिज्ञ कोई दूसरा राजा नहीं हुआ, जिन्होंने छल से अपनी बहन सुभद्रा का विवाह अर्जुन के साथ कर दिया ॥ ५४ ॥

**नेति**। कश्चिदपि नृपः श्रीकृष्णेन सदृशः कूटनीतिः कपटनीतिमान् न अभवत्। येन स्वस्य भगिनी सुभद्रा छलात् अर्जुने प्रापिता ॥ ५४ ॥

निर्धनैरन्नवस्त्रन्तु नृपाद् ग्राह्यं न चान्यथा।
यतो भुक्तं सुखं सम्यक् तद्दुःखैर्दुःखितो न चेत्।
विनिन्दति कृतघ्नन्तु स्वामी भृत्योऽन्य एव वा॥५०॥

**अन्वयः**—निर्धनैः नृपात् अन्नवस्त्रं ग्राह्यम्, अन्यथा न। यतः नृपात् सम्यक् सुखं भुक्तं चेत् तद्दुःखैः दुःखितः न भवेत् तदा स्वामी वा अन्यः कृतघ्नं भृत्यं विनिन्दति॥५०॥

**व्याख्या**—निर्धनैः= धनहीनैः सेवकैः, नृपात् = भूपालात्, विपन्नावस्थायामपि, अन्नवस्त्रम् = जीवनयापनार्थं भृतिम्, ग्राह्यम् = स्वीकार्यम्, अन्यथा = सशक्ते सति, न = ग्राह्यम्। यतः= यस्मात्, नृपात् = भूभृतः, सम्यक् = सुष्ठु, सुखम् = सौविध्यम्, भुक्तम् = उपभोगितम्, चेत् = यदि, तस्य = नृपस्य, दुःखैः= कष्टैः, दुःखितः= पीडितः, न = नहि, भवेत् = स्यात्, तदा, स्वामी = प्रभुः, वा अन्यः= कृतज्ञः सेवकः, कृतघ्नम् = कृतज्ञरहितम्, भृत्यम् = सेवकम्, विनिन्दति = विशेषेण गर्हितम्॥५०॥

**हिन्दी**—निर्धन सेवक ही राजा से ऐसी विपन्न स्थिति में अन्न-वस्त्र ले, अन्यथा न ले। जिस राजा से आज तक जिसने भलीभाँति सुखोपभोग किया है, आज यदि उसके दुःख से वह दुःखी न हो तो ऐसे कृतघ्न सेवक की राजा एवं अन्य कृतज्ञ सेवक भी निन्दा करते हैं॥

**निर्धनैरिति**। निर्धनैः दरिद्रैः भृत्यैः नृपात् तथा विपन्नादिति भावः, अन्नवस्त्रं ग्राह्यम् अन्यथा सधनत्वे न, यतः नृपात् सम्यक् सुखं भुक्तं चेत् यदि तस्य दुःखैः दुरवस्थाभिः दुःखितः न भवेत् तदा स्वामी वा अन्यः कृतज्ञः भृत्यः कृतघ्नम् अकृतज्ञं तादृशं भृत्यं विनिन्दति॥५०॥

सकृत् सुभुक्तं यस्यापि तदर्थं जीवितं त्यजेत्।
भृत्यः स एव सुश्लोको नापत्तौ स्वामिनं त्यजेत्।
स्वामी स एव विज्ञेयो भृत्यार्थे जीवितं त्यजेत्॥५१॥

**अन्वयः**—यस्य अन्नं सकृत् सुभुक्तं भृत्यः तदर्थं जीवितं त्यजेत्, स एव भृत्यः सुश्लोकः। यः आपत्तौ स्वामिनं न त्यजेत् तथा स एव स्वामी भृत्यार्थे जीवितं त्यजेत्॥५१॥

**व्याख्या**—यस्य = नृपस्य, अन्नम् = भोज्यपदार्थम्, सकृत् = एकवारमपि, सुभुक्तम् = सुष्ठुभोजनं कृतम्, भृत्यः= सेवकः, तदर्थम् = तन्निमित्तम्, जीवितम् = जीवनमपि, त्यजेत् = परित्यागं कुर्यात्, स एव = तदेव, भृत्यः= सेवकः, सुश्लोकः= पुण्यकीर्तिः। यः= सेवकः, आपत्तौ = विपदि, स्वामिनम् = प्रभुम्, न = नहि, त्यजेत् = जह्यात्, तथा स एव = तदेव, स्वामी = प्रभुः, यः, भृत्यार्थे = सेवकार्थे, जीवितम् = प्राणम्, त्यजेत् = जह्यात्॥५१॥

**हिन्दी**—जो सेवक ससम्मान दिये गये राजा का अन्न एक बार भी यथेष्ट खा ले तो उसके लिए समय पड़ने पर वह जान भी दे दे। वही सेवक सुन्दर यशवाला कहलाता है जो विपत्ति में राजा का साथ नहीं छोड़ता और वही राजा राजा है जो जरूरत पड़ने पर अपने सेवक के लिए प्राण भी दे डाले॥५१॥

**सकृदिति**। यस्य अन्नं सकृत् एकवारमपि सुभुक्तं भृत्यः तदर्थं जीवितं त्यजेत् स एव भृत्यः सुश्लोकः पुण्यकीर्तिः यः आपत्तौ आपदि स्वामिनं न त्यजेत्। तथा स एव स्वामी विज्ञेयः यः भृत्यार्थे भृत्यनिमित्तं जीवितं त्यजेत्। स्वामिभृत्याभ्यां परस्परानुरक्ताभ्यां भवितव्यमिति भावः॥५१॥

न रामसदृशो राजा पृथिव्यां नीतिमानभूत्।
सुभृत्यता तु यन्नीत्या वानरैरपि स्वीकृता॥५२॥

**अन्वयः**—पृथिव्यां रामसदृशः नीतिमान् राजा न अभूत्। यन्नीत्या वानरैरपि सुभृत्यता स्वीकृता॥५२॥

**व्याख्या**—पृथिव्याम् = भूम्याम्, रामेण = दाशरथिना, सदृशः = तुल्यः, नीतिमान् = नय-सम्पन्नः, राजा = नरपतिः, न = नहि, अभूत् = बभूव, यस्य = रामस्य, नीत्या = नयेन, वानरैरपि = कपिभिरपि, सुभृत्यता = सुष्ठुसेवकत्वम्, स्वीकृता = अङ्गीकृता॥५२॥

**हिन्दी**—राम की तरह नीतिसम्पन्न राजा इस धरती पर कोई दूसरा नहीं हुआ। क्योंकि इनकी सेवकाई वानर जैसे पशुओं ने भी कबूल की थी॥५२॥

**नेति**। पृथिव्यां रामेण सदृशः नीतिमान् राजा न अभूत्। यस्य नीत्या सुनयेन वानरैरपि सुभृत्यता स्वीकृता॥५२॥

अपि राष्ट्रविनाशाय चोराणामेकचित्तता।
शक्ता भवेन्न किं शत्रुनाशाय नृपभृत्ययोः?॥५३॥

**अन्वयः**—चोराणाम् एकचित्तता राष्ट्रविनाशाय शक्ता भवेत्, शत्रुनाशाय नृपभृत्ययोः किन्न भवेत्॥५३॥

**व्याख्या**—चोराणाम् = तस्कराणाम्, एकचित्तता = अवधानम्, राष्ट्रविनाशाय—राष्ट्रस्य = देशस्य, विनाशाय = अवसादाय, शक्ता = समर्था, भवेत् = स्यात्, तदा शत्रुनाशाय = रिपुविध्वंसाय, नृपभृत्ययोः = भूपसेवकयोरैकमत्यम्, सा किं न भवेत्? भवत्येवेति॥५३॥

**हिन्दी**—जब चोरों का एकमत होना किसी राष्ट्र को विनष्ट करने में समर्थ हो सकता है तो राजा और सेवकों की एकचित्तता क्या शत्रुओं को विनष्ट नहीं कर सकती? अर्थात् कर ही सकती है॥५३॥

**अपीति**। चोराणां तस्कराणामपि एकचित्तता ऐकमत्यं राष्ट्रस्य विनाशाय उच्छेदाय शक्ता समर्था भवेत् शत्रुनाशाय नृपभृत्ययोः सा किं न भवेत्? अपितु भवेदेवेत्यर्थः॥५३॥

न कूटनीतिरभवच्छ्रीकृष्णसदृशो नृपः।
अर्जुने प्रापिता स्वस्य सुभद्रा भगिनी छलात्॥५४॥

**अन्वयः**—कश्चिदपि नृपः श्रीकृष्णसदृशः कूटनीतिः न अभवत्। स्वस्य भगिनी सुभद्रा छलात् अर्जुने प्रापिता॥५४॥

**व्याख्या**—कश्चिदपि नृपः = कोऽपि राजा, श्रीकृष्णेन = वासुदेवेन, सदृशः = तुल्यः, कूटनीतिः = कपटनीतिसम्पन्नः, न = नहि, अभवत् = बभूव, स्वस्य = आत्मनः, भगिनी = अनुजा, सुभद्रा, छलात् = कपटात्, अर्जुने = पार्थे, प्रापिता = विवाहिता॥५४॥

**हिन्दी**—श्रीकृष्ण की तरह कूटनीतिज्ञ कोई दूसरा राजा नहीं हुआ, जिन्होंने छल से अपनी बहन सुभद्रा का विवाह अर्जुन के साथ कर दिया॥५४॥

**नेति**। कश्चिदपि नृपः श्रीकृष्णेन सदृशः कूटनीतिः कपटनीतिमान् न अभवत्। येन स्वस्य भगिनी सुभद्रा छलात् अर्जुने प्रापिता॥५४॥

नीतिमतान्तु सा युक्तिर्या हि स्वश्रेयसेऽखिला ॥ ५५ ॥

**अन्वयः**—नीतिमतां सा युक्तिः या हि अखिला स्वश्रेयसे ॥ ५५ ॥

**व्याख्या**—नीतिमताम् = नीतिसम्पन्नानां जनानां, सा = सैव, युक्तिः = उपायः, या हि युक्तिः, अखिला = सकला, स्वस्य = आत्मनः, श्रेयसे = कल्याणाय भवति ॥ ५५ ॥

**हिन्दी**—नीतिनिपुण लोगों की वही युक्ति असली युक्ति है, जिससे अपना कल्याण सम्भव हो ॥ ५५ ॥

**नीतिमतामिति**। नीतिमतां नीतिज्ञानां सा युक्तिः हि सैव युक्तित्यर्थः, या अखिला समग्रा स्वस्य आत्मनः श्रेयसे भवतीति शेषः ॥ ५५ ॥

आदौ तद्धितकृत्स्नेहं कार्य्यं स्नेहमनन्तरम् ।
कृत्वा सधर्मवादञ्च मध्यस्थः साधयेद्धितम् ॥ ५६ ॥

**अन्वयः**—मध्यस्थः आदौ तद्धितकृत्स्नेहम् अनन्तरं कार्यम् । सधर्मवादं कृत्वा हितं साधयेत् ॥ ५६ ॥

**व्याख्या**—मध्यस्थः = तटस्थजनः, आदौ = प्रथमे, तद्धितकृत्स्नेहम्—तत् = तस्य आत्मनः, हितकृति = कल्याणकारिणीसुहृदि, स्नेहम् = प्रीतिः, अनन्तरम् = तत्पश्चात्, कार्यम् = कर्तव्यम्, सधर्मवादम् = धर्मवचनसहितम्, स्नेहम् = प्रीतिम्, च, कृत्वा = सम्पाद्य, हितम् = कल्याणम्, साधयेत् = निष्पादयेत् ॥ ५६ ॥

**हिन्दी**—तटस्थ व्यक्ति सर्वप्रथम किसी के हितैषी मित्र के साथ स्नेह, फिर बाद में कर्त्तव्यकर्म और धर्मकथनपूर्वक स्नेह प्रदर्शन कर आत्महित का साधन करे ॥ ५६ ॥

**आदाविति**। मध्यस्थः उदासीनः जनः आदौ अग्रतः तस्य आत्मनः हितकृति हितकारिणि मित्रे इत्यर्थः, स्नेहम् अनन्तरं कार्य्यं कर्त्तव्यं धर्मवादसहितं धर्मवचनसमन्वितं स्नेहञ्च कृत्वा हितं साधयेत् ॥ ५६ ॥

परस्परं भवेत् प्रीतिस्तथा तद्गुणवर्णनम् ।
इष्टान्नधनवसनैर्लोभनं कार्य्यसिद्धिदम् ॥ ५७ ॥

**अन्वयः**—परस्परं यथा प्रीतिः भवेत् तद्गुणवर्णनम् इष्टेन अन्नेन धनेन वसनेन च लोभनं कार्य्यं सिद्धिदं भवेत् ॥ ५७ ॥

**व्याख्या**—परस्परम् = अन्योऽन्यम्, यथा प्रीतिः = तृप्तिः, भवेत् = स्यात्, तथा = तेनैव प्रकारेण, तत् = तस्य, गुणवर्णनम् = गुणकथनम्, इष्टेन = वाञ्छितेन, अन्नेन = धान्येन, धनेन = द्रव्येण, वसनेन = वस्त्रेण, च, लोभनम् = लोभप्रदर्शनं कार्यम्, तदेव कार्यसिद्धिदम् = अभीप्सितसाधकम्भवतीति ॥

**हिन्दी**—परस्पर जैसी प्रीति हो वैसे ही उनके गुणों का वर्णन करे। फिर अभीष्ट अन्न, धन और वस्त्र का प्रलोभन देकर अपना कार्य्य साधे ॥ ५७ ॥

**परस्परमिति**। परस्परं यथा प्रीतिः भवेत् तथा तस्य प्रणयस्य गुणवर्णनम् इष्टेन अभिलषितेन अन्नेन धनेन वसनेन च लोभनं लोभप्रदर्शनं कार्य्यमिति शेषः ॥ ५७ ॥

दिव्यावलम्बनं मिथ्यासल्लापं धैर्य्यवर्द्धनम् ।
इमे उपाया मध्यस्थकुट्टिनीमायिनां मताः ॥ ५८ ॥

**अन्वयः**—मध्यस्थकुट्टिनीमायिनां दिव्यावलम्बनं मिथ्यासल्लापं धैर्यवर्द्धनम्—इमे उपायाः मताः ॥ ५८ ॥

**व्याख्या**—मध्यस्थानाम् = उदासीनानां जनानाम्, कुट्टिनीनाम् = सञ्चारिकानाम्, मायिनाम् = कपटिनाम्, दिव्यस्य = शपथस्य, अवलम्बनम् = आश्रयणम्, मिथ्यासल्लापम् = असत्यवार्त्तालापम्, धैर्य्यवर्द्धनम् = सन्तोषवृद्धिकरणम्, इमे = युक्तयः, मताः = कथिताः ॥ ५८ ॥

**हिन्दी**—मध्यस्थ, कुट्टिनी और धूर्त्त लोगों को शपथ का अवलम्बन, मनगढन्त बातें करना और धैर्य बँधाना—ये सभी उपाय इष्ट होते हैं ॥ ५८ ॥

**दिव्येति**। मध्यस्थानां कुट्टिनीप्रभृतीनां मायिनां कपटिनां कार्य्ययोजकानामित्यर्थः, दिव्यस्य शपथस्य अवलम्बनं मिथ्यासल्लापः असत्यशिष्टालापः धैर्य्यवर्द्धनं सन्तोषवृद्धिकरणञ्च इमे उपायाः मताः इष्टाः ॥ ५८ ॥

**यो नात्मगोपने युक्तिं चिन्तयेत् स पशोर्जडः।**
**जारसङ्गोपने छद्म संश्रयन्ति स्त्रियोऽपि च ॥ ५९ ॥**

**अन्वयः**—यः आत्मगोपने युक्तिं न चिन्तयेत् सः पशोः जडः। स्त्रियः अपि जारसङ्गोपने छद्म संश्रयन्ति ॥ ५९ ॥

**व्याख्या**—यः = पुरुषः, आत्मनः = स्वात्मानम्, गोपने = संरक्षणे, युक्तिम् = उपायः, न = नहि, चिन्तयेत् = विचारयेत्, सः = एतंविधो जनः, पशोः = पश्वपेक्षयाऽपि, जडः = मूर्खोऽस्ति। यतः, स्त्रियोऽपि = ज्ञानहीनाः नार्योऽपि, जारस्य = उपपतेः, सङ्गोपने = अन्तर्धाने, छद्म = कपटम्, संश्रयन्ति = आश्रयन्ति ॥ ५९ ॥

**हिन्दी**—जो अपनी रक्षा के लिए अपना उपाय नहीं सोचता, वह पशु से भी बदतर जड़ है। क्योंकि अज्ञानी और वे स्त्रियाँ भी अपने जारपति को छिपाने में छल का सहारा लेती हैं ॥५९ ॥

**नेति**। यः आत्मनः गोपने युक्तिं न चिन्तयेत् सः अनात्मगोपनार्थीत्यर्थः, पशोः पशुमपेक्ष्य पश्वपेक्षयापि अज्ञ इत्यर्थः। स्त्रियः अपि जारस्य उपपतेः सङ्गोपने छद्म छलं संश्रयन्ति ॥ ५९ ॥

**युक्तिश्छलात्मिका प्रायस्तथान्या सत्यरूपिका।**
**यश्छद्मचारी भवति तस्मिन् छद्म समाचरेत् ॥ ६० ॥**

**अन्वयः**—छलात्मिका प्रायः युक्तिः अन्या सत्यरूपिका। यः छद्मचारी भवति तस्मिन् छद्म समाचरेत् ॥ ६० ॥

**व्याख्या**—युक्तिः = द्विधा—प्रायः = अनेकशः, छलात्मिका = वञ्चनात्मिका, अन्या = अपरा, सत्यरूपिका = तथ्यात्मिका, यः = पुरुषः, छद्मचारी = कापटिकः, भवति = अस्ति, तस्मिन् = मायिके जने, छद्म = छलम्, समाचरेत् = संश्रयेत् ॥ ६० ॥

**हिन्दी**—सफलता के लिए दो तरह की युक्तियाँ बतलाई गयी हैं वञ्चनात्मक और तथ्यपरक। जो कपटाचारी है, उसके लिए छलात्मक युक्ति का ही प्रयोग करना चाहिए ॥ ६० ॥

**युक्तिरिति**। युक्तिः द्विधा प्रायः बाहुल्येन छलात्मिका कपटरूपा, अन्या अपरा सत्यरूपिका सत्यात्मिका इत्यर्थः। यः छद्मचारी कपटाचारः भवति तस्मिन् जने छद्म कपटं समाचरेत् ॥ ६० ॥

**अन्यथा शीलनाशाय महतामपि जायते।**
**अस्ति बुद्धिमतां श्रेणिर्न त्वेको बुद्धिमानतः ॥ ६१ ॥**
**देशे काले च पुरुषे नीतिं युक्तिमनेकधा।**
**कल्पयन्ति च कुशला दृष्ट्वा रुद्धान्तु तात्त्विकीम् ॥ ६२ ॥**

**अन्वयः**—अन्यथा महतामपि शीलनाशाय जायते, किञ्च बुद्धिमतां श्रेणिः अस्ति न तु एकः बुद्धिमान्। अतः कुशलाः तात्त्विकीं युक्तिं रुद्धां दृष्ट्वा तु देशे काले च अनेकधा नीतिं युक्तिञ्च कल्पयन्ति ॥ ६२ ॥

**व्याख्या**—अन्यथा = इतरथा, छद्म = छलम्, महतामपि = श्रेष्ठजनानामपि, शीलनाशाय = चरित्रविनाशाय, जायते = भवति, किञ्च, बुद्धिमताम् = ज्ञानिनाम्, श्रेणिः = समूहः, अस्ति = भवति, न तु एकः = अद्वितीयः एव। अतः = अस्मात् कारणात्, कुशलाः = चतुराः जनाः, तात्त्विकीम् = तथ्यात्मिकाम्, युक्तिम् = उपायम्, रुद्धाम् = स्तम्भिताम्, दृष्ट्वा = अवलोक्य, देशे = स्थाने, काले = समये, च, अनेकधा = बहुविधाम्, नीतिम् = नयम्, युक्तिञ्च = उपायञ्च, कल्पयन्ति = सृजन्ति ॥ ६१-६२ ॥

**हिन्दी**—ऊपरलिखित स्थिति से भिन्न स्तर पर छल का प्रयोग बड़े लोगों के चरित्र का हनन कर देता है। क्योंकि बुद्धिमानों का समूह होता है, कोई अकेला तो बुद्धिमान् होता नहीं। अतः चतुर लोग जहाँ तथ्यपरक युक्ति को असफल होते देखते हैं, वहाँ वे देश, काल और पात्र के अनुसार नीति और युक्ति की कल्पना कर लेते हैं ॥ ६१-६२ ॥

**अन्यथेति। देशे इति।** अन्यथा उक्तवैपरीत्ये छद्म समाचरणं महतामपि शीलनाशाय चरित्रविनाशाय जायते। किञ्च बुद्धिमतां श्रेणिः समूहः अस्ति न तु एक एव बुद्धिमान् अस्तीत्यर्थः। अतः अस्मात् कारणात् कुशला निपुणा जनाः तात्त्विकीं सत्यरूपिकां युक्तिं रुद्धां न्यक्कृताम् अफलामित्यर्थः, दृष्ट्वा देशे काले पुरुषे पात्रे इत्यर्थः, च अनेकधा बहुविधां नीतिं युक्तिञ्च कल्पयन्ति रचयन्ति ॥ ६१-६२ ॥

**मन्त्रौषधिपृथग्वेशकालवागर्थसंश्रयात्।**
**छद्म सञ्जनयन्तीह मायासु कुशला जनाः ॥ ६३ ॥**

**अन्वयः**—इह मायासु कुशलाः जनाः मन्त्रौषधिपृथग्वेशकालवागर्थसंश्रयात् छद्म सञ्जनयन्ति ॥ ६३ ॥

**व्याख्या**—इह = संसारे, मायासु = प्रवञ्चनेषु, कुशलाः = चतुराः जनाः, मन्त्राणाम् = विचारणानाम्, औषधीनाम् = भैषज्यानाम्, पृथक् = भिन्नानाम्, वेशानाम् = परिच्छदानाम्, कालानाम् समयानाम्, वाचाम् = वाणीम्, अर्थानाम् = धनानाम्, च, संश्रयात् = आश्रयणात्, छद्म = कपटम्, सञ्जनयन्ति = उत्पादयन्ति ॥ ६३ ॥

**हिन्दी**—इस संसार में कपटी व्यक्ति मंत्र, औषधि, वेष, समय, बोली और धन का आवश्यकतानुसार अवलम्बन कर छल का प्रयोग करते हैं ॥ ६३ ॥

**मन्त्रेति।** इह जगति मायासु कपटाचारेषु कुशला निपुणा जनाः मन्त्राणाम् औषधीनां पृथक् विभिन्नानां वेशानां परिच्छदानां कालानां वाचाम् अर्थानाञ्च संश्रयात् छद्म छलं सञ्जनयन्ति उत्पादयन्ति ॥ ६३ ॥

**लोकेऽधिकारिप्रत्यक्षं विक्रीतं दत्तमेव वा।**
**वस्त्रभाण्डादिकं क्रीतं स्वचिह्नै रङ्कयेच्चिरम्॥ ६४॥**

**अन्वयः**—लोके विक्रीतं वस्त्रभाण्डादिकं दत्तं तथा क्रीतम् अधिकारिप्रत्यक्षं स्वचिह्नैः चिरम् अङ्कयेत् ॥ ६४ ॥

**व्याख्या**—लोके = इह संसारे, विक्रीतम् = विपणायितम्, वस्त्रभाण्डादिकम् = वसनपात्रादिकम्, दत्तम् = पात्रसात्कृतं वस्तु, तथा क्रीतम् = क्रयीकृतम्, वस्त्रभाण्डादिकम्, अधिकारिणाम् = विक्रेतृणां, दातृणां तथा क्रेतृणाञ्च, प्रत्यक्षम् = समक्षम्, स्वचिह्नैः -- स्वस्य = आत्मनः, चिह्नैः = चिह्नविशेषैः, चिरम् = चिरकालव्यापिनम्, यथा स्यात्, अङ्कयेत् = चिह्नयेत् ॥ ६४ ॥

**हिन्दी**—लोक में वस्त्र, बर्त्तन प्रभृति बेची गई, दान दी गई एवं खरीदी गई वस्तु पर उनके अधिकारी विक्रेता, दाता एवं क्रेता के सामने ही अपनी टिकाऊ मुहर लगा दे ॥ ६४ ॥

**लोके इति**। लोके जगति विक्रीतं वस्त्रभाण्डादिकं दत्तं पात्रसात्कृतं वस्तु तथा क्रीतं वस्त्रभाण्डादिकम् अधिकारिणां विक्रेतृणां दातृणां क्रेतृणाञ्च प्रत्यक्षं स्वचिह्नैः आत्मचिह्नैः चिरं स्थायिरूपं तथा अङ्कयेत् अङ्कितं कुर्य्यात् भाविविसंवादनिराकरणार्थमिति भावः ॥ ६४ ॥

**स्तेनकूटनिवृत्त्यर्थं राजज्ञातं समाचरेत्।**
**जडान्धबालद्रव्याणां दद्याद् वृद्धिं नृपः सदा॥ ६५॥**

**अन्वयः**—स्तेनकूटनिवृत्त्यर्थं राजज्ञातं समाचरेत्। नृपः जडान्धबालद्रव्याणां सदा वृद्धिं दद्यात् ॥ ६५ ॥

**व्याख्या**—स्तेनानाम् = तस्कराणाम्, कूटस्य = मायायाः, निवृत्त्यर्थम् = निवारणाय, सकलक्रीतादिकम्, राजज्ञातम्—राज्ञः = नृपस्य, ज्ञातम् = ज्ञातसारेण, क्रीतादिकम्, समाचरेत् = कुर्यात्। नृपः = राजा, जडानाम् = निश्चेष्टाणाम्, अन्धानाम् = नेत्रहीनानाम्, बालानाम् = बालकानाम्, यानि द्रव्याणि = धनानि, नृपे न्यस्तानि, तेषाम् = द्रव्याणाम्, सदा = सर्वदा, वृद्धिम् = लाभः, दद्यात् = प्रयच्छेत् ॥ ६५ ॥

**हिन्दी**—चोरी के माल बिकने न पाये, इसलिए इसकी सूचना राजा को मिलनी चाहिए। जड़ अर्थात् निष्क्रिय अंधें एवं बालकों का धन जो राजा के पास हो, उसका सूद राजा को देना चाहिए ॥ ६५ ॥

**स्तेनेति**। स्तेनानां चौराणां कूटस्य कपटस्य निवृत्त्यर्थं निवारणाय सर्व्वं क्रीतादिकं राजज्ञातं समाचरेत् राज्ञः ज्ञातसारेण क्रीतादिकं कुर्य्यादित्यर्थः। नृपः जडानाम् अन्धानां बालानां शिशूनाञ्च यानि द्रव्याणि धनानि राजनि न्यस्तानीति भावः, तेषां सदा वृद्धिं दद्यात् ॥ ६५ ॥

**स्वीया तथा च सामान्या परकीया तु स्त्री यथा।**
**त्रिविधो भृतकस्तद्वदुत्तमो मध्यमोऽधमः ॥ ६६ ॥**

**अन्वयः**—स्त्री स्वीया सामान्या परकीया चेति त्रिविधा, तथा भृतकः उत्तमः मध्यमः अधमश्चेति त्रिविधः ॥ ६६ ॥

**व्याख्या**—स्त्री = नारी, स्वीया = स्वकीया, सामान्या = गणिकादयः, परकीया = अन्यजनस्य पत्नी, चेति त्रिविधा = त्रिप्रकारिका, तथा = तेनैव रूपेण, भृतकः = सेवकः, उत्तमः = श्रेष्ठः, मध्यमः = साधारणः, अधमः = नीचश्चेति, त्रिविधः = त्रिप्रकारको भवति ॥ ६६ ॥

सम्पाद्यते न पूर्वं हि नापरं लभ्यते यतः।
कृती तत् कुरुते नित्यं यत् समाप्तिं व्रजेत् सुखम् ॥७२॥

**अन्वयः**—यतः पूर्वं हि न सम्पाद्यते अपरं न लभ्यते तत् कृती तत् नित्यं कुर्यात् यत् समाप्तिं व्रजेत् ॥७२॥

**व्याख्या**—यतः = एकदैव बहुकार्यारम्भात्, न = नहि, सम्पाद्यते = निष्पाद्यते, पूर्वम् = प्रथमारब्धम्, अपरम् = अन्यारब्धं कार्य्यम्, न = नहि, लभ्यते = उपलब्धो भवति, तत् = तस्मात् कारणात्, कृती = पटुजनः, नित्यम् = सततम्, तत् = कार्यम्, कुर्यात् = निष्पादयेत्, यत् = कार्यम्, सुखम् = सहजम्, समाप्तिम् = निःशेषताम्, व्रजेत् = गच्छेत् ॥७२॥

**हिन्दी**—हाथ में लिया काम जब तक पूरा न हो जाय तब तक दूसरा काम शुरू नहीं करना चाहिए। क्योंकि दूसरा काम शुरू करने से पहला समाप्त तो नहीं ही होगा, दूसरा काम भी अधर में लटक जायेगा। अतः बुद्धिमान् व्यक्ति सदा उसी काम को प्रारम्भ करते हैं जो सहज भाव से सम्पन्न हो जाय ॥७२॥

**सम्पाद्यते इति**। यतः युगपद्बहुकार्य्यारम्भात् पूर्वं प्रथममारब्धमित्यर्थः, हि अपि अत्र हिशब्दोऽप्यर्थः। न सम्पाद्यते न निष्पाद्यते अपरं द्वितीयञ्च न लभ्यते न समाप्यते तत् तस्मात् कृती कार्य्यकुशलः जनः सततं तत् कुर्य्यात् यत् सुखं यथा तथा समाप्तिं व्रजेत् ॥७२॥

यदि सिद्ध्यति येनार्थः कलहेन वरस्तु सः।
अन्यथायुर्धनसुहृद्यशोधर्महरः सदा ॥७३॥

**अन्वयः**—येन कलहेन यदि अर्थः सिद्ध्यति सः वरः, अन्यथा सदा आयुर्धनसुहृद्यशोधर्म-हरः ॥७३॥

**व्याख्या**—येन कलहेन = विवादेन, यदि = चेत्, अर्थः = प्रयोजनम्, सिद्ध्यति = पूर्णो भवति, सः = कलहः, वरः = श्रेष्ठः, अन्यथा = इतरथा, आयुषः = जीवितस्य, धनस्य = द्रव्यस्य, सुहृदः = मित्रस्य, धर्मस्य = पुण्यस्य, च, हरः = विनाशको भवति ॥७३॥

**हिन्दी**—जिस झगड़े से अपना कोई मतलब सधता हो तो वह जरूर करना चाहिए। किन्तु निरर्थक झगड़े से आयु, धन, मित्र, धर्म तथा यश की हमेशा हानि होती है ॥७३॥

**यदीति**। येन कलहेन यदि अर्थः सिद्ध्यति, सः कलहः वरः श्रेष्ठः, अन्यथा अर्थासिद्धौ इत्यर्थः, आयुषः धनस्य सुहृदः धर्मस्य च हरः नाशकः भवति ॥७३॥

ईर्ष्या लोभो मदः प्रीतिः क्रोधो भीतिश्च साहसम्।
प्रवृत्तिच्छिद्रहेतूनि कार्य्ये सप्त बुधा जगुः ॥७४॥

**अन्वयः**—ईर्ष्या लोभः मदः प्रीतिः क्रोधः भीतिः साहसं च एतानि सप्त कार्ये प्रवृत्तिच्छिद्र-हेतूनि बुधाः जगुः ॥७४॥

**व्याख्या**—ईर्ष्या = द्वेषः, लोभः = लिप्सा, मदः = गर्वः, प्रीतिः = प्रेम, क्रोधः = कोपः, भीतिः = भयम्, साहसम् = निर्भीकता, च, एतानि = पूर्वोक्तानि सप्त, कार्ये = कृत्ये, प्रवृत्तेः कार्यनिवाहे, छिद्रस्य = दोषस्य, हेतूनि = कारणानि, बुधाः = विबुधाः, जगुः = कथयन्ति गायन्ति चेति ॥७४॥

**हिन्दी**—जलन, लालच, गर्व, प्यार, गुस्सा, डर और हिम्मत- इन सातों में किसी विषय की ओर मन का झुकाव चरित्रदोष के कारण है; ऐसी मान्यता बुद्धिमानों की है ॥७४॥

**ईर्ष्येति**। ईर्ष्या विद्वेषः लोभः लालसा, मदः गर्वः, प्रीतिः प्रणयः, क्रोधः कोपः, भीतिर्भयं, साहसं निर्भीकता च एतानि सप्त कार्य्ये प्रवृत्तेः छिद्रस्य दोषस्य च हेतूनि बुधाः पण्डिताः सर्वशास्त्रदर्शिनः जगुः गायन्तिस्म ॥७४॥

**यथाच्छिद्रं भवेत् कार्य्यं तथैव हि समाचरेत्।**
**अविसंवादि विदुषां कालेऽतीतेऽप्यनापदि ॥७५॥**

**अन्वयः**—यथा कार्यम् अच्छिद्रं भवेत् तथैव हि समाचरेत्। अनापदि काले अतीते अपि विदुषाम् अविसंवादि समाचरेत् ॥७५॥

**व्याख्या**—यथा = येन प्रकारेण, कार्यम् = कृत्यम्, अच्छिद्रम् = दोषरहितम्, भवेत् = स्यात्, तथैव = तेनैव प्रकारेण, हि = इति निश्चयेन, समाचरेत् = कुर्यात्, अनापदि = आपत्तिरहिते, काले = यथावसरे, अतीते = व्यतीते सति, विदुषाम् = बुद्धिमताम्, अविसंवादि = अभिमतमेव कार्यम्, समाचरेत् = सम्पादयेत् ॥७५॥

**हिन्दी**—दोष रहित काम ही करना चाहिए। बुद्धिमानों को समय बीत जाने पर भी आपत्ति रहित अभिमत काम करना चाहिए ॥७५॥

**यथेति**। यथा कार्य्यम् अच्छिद्रं छिद्ररहितं निर्दोषमित्यर्थः, भवेत् तथैव हि समाचरेत्। अनापदि अविपन्नावस्थायां काले अतीते समतिक्रान्ते अपि विदुषां पण्डितानाम् अविसंवादि सम्मतम् एव कार्य्यं समाचरेत् कुर्य्यात् ॥७५॥

**दशग्रामी शतानीकः परिचारकसंयुतौ।**
**अश्वस्थौ विचरेयातां ग्रामपा ह्यपि चाश्वगाः ॥७६॥**

**अन्वयः**—दशग्रामी शतानीकः परिचारकसंयुतौ अश्वस्थौ विचरेयाताम्। ग्रामपाः अपि हि अश्वगाः ॥७५॥

**व्याख्या**—दशग्रामी = दशनिवसथानामधिपतिः, शतानीकः = शतसंख्यकसैन्यानामधिपश्च, परिचारकैः = सेवकैः, संयुतौ = परिवेष्टितौ, तथा अश्वस्थौ = हयपृष्ठासीनौ सन्तौ, विचरेयातां = भ्राम्येयाताम्, ग्रामपाः = ग्रामस्यैकस्यापि स्वामी, अश्वगाः = अश्वगामिनो भूत्वा विचरेयुः ॥७६॥

**हिन्दी**—दस गाँवों के मालिक तथा एक सौ सैनिकों के नायक अपने-अपने सेवकों के साथ घोड़े पर चढकर घूमे। एक गाँव का जो मालिक है, वह भी घोड़े पर ही घूमे ॥७६॥

**दशेति**। दशग्रामी दशग्रामाधिपः शतानीकः शतसैन्याधिपश्च परिचारकैः भृत्यैः संयुतौ परिवृतौ तथा अश्वस्थौ अश्वारूढौ सन्तौ विचरेयाताम्। ग्रामपा एकग्रामाधिपतयः अपि अश्वगा अश्वारूढाः विचरेयुरित्यर्थः ॥७६॥

**साहस्रिकः शतग्रामी एकाश्वरथवाहनौ।**
**दशशस्त्रास्त्रिभिर्युक्तौ गच्छेतां वाश्वसङ्गतौ ॥७७॥**

**अन्वयः**—साहस्रिकः शतग्रामी दशशस्त्रास्त्रिभिः युक्तौ एकाश्वरथवाहनौ वा अश्वसङ्गतौ गच्छेताम् ॥७७॥

**व्याख्या**—साहस्रिकः = दशशतसेनानायकः, शतग्रामी = शतसंख्यकनिवसथानां स्वामी, दशस्त्रास्त्रिभिः—दशभिः, शस्त्रिभिः = आयुधिकैः, अस्त्रिभिः = प्रहारकैश्च, युक्तौ = सहितौ, एकाश्वरथवाहनौ = घोटकैकवाहितस्यन्दनारूढौ, वा = अथवा, अश्वसङ्गतौ = हयारूढौ, गच्छेताम् = व्रजेताम् ॥७७ ॥

**हिन्दी**—एक हजार सैनिकों के नायक तथा सौ गाँवों के मालिक सशस्त्रास्त्र दश अङ्गरक्षकों के साथ एक घोड़े वाले रथ पर या केवल घोड़े पर सवार होकर घूमे ॥७७ ॥

**साहस्रिक इति**। सहस्रसेनाधिपतिः शतग्रामी शतग्रामाधिपतिश्च दशशस्त्रास्त्रिभिः दशभिः शस्त्रिभिः अस्त्रिभिश्च युक्तौ एकाश्वरथवाहनौ एकाश्वयुतरथारूढौ वा अश्वसङ्गतौ अश्वारूढौ गच्छेताम् ॥७७ ॥

**सहस्रग्रामपो नित्यं नराश्वद्व्यश्वयानगः ।**
**आयुतिको विंशतिभिः सेवकैर्हस्तिना व्रजेत् ॥ ७८ ॥**

**अन्वयः**—सहस्रग्रामपः आयुतिकः विंशतिभिः सेवकैः नराश्वद्व्यश्वयानगः वा हस्तिना नित्यं व्रजते ॥७८ ॥

**व्याख्या**—सहस्रग्रामपः = दशशतनिवसथानां स्वामी, एवम्, आयुतिकः = दशसहस्रसैन्यनायकः, विंशतिभिः, सेवकैः = अङ्गरक्षकैः सहितः, नराश्वद्व्यश्वयानगः—नरयानम् = शिविका, तद्गामी अथवा द्व्यश्वयानगः = घोटकद्वयवाहितस्यन्दनगामी, वा = अथवा, हस्तिना = गजेन, व्रजेत् = गच्छेत् ॥७८ ॥

**हिन्दी**—एक हजार गाँवों का मालिक या दस हजार सैनिकों का नायक बीस अंगरक्षकों के साथ पालकी या दो घोड़े वाले रथ अथवा हाथी पर सवार होकर रोज घूमे ॥७८ ॥

**सहस्रेति**। सहस्रग्रामपः सहस्रग्रामाधिपतिः आयुतिकः दशसहस्रसैन्याध्यक्षश्च विंशतिभिः सेवकैः युतः तथा नराश्वद्व्यश्वयानगः नरयानं शिविका तद्गामी अश्वगामी वा द्व्यश्वयानगः अश्वद्वययुतरथगामी वा हस्तिना गजारूढः सन्नित्यर्थः, व्रजेत् गच्छेत् ॥७८ ॥

**अयुतग्रामपः सर्वयानैश्च चतुरश्वगः ।**
**पञ्चायुती सेनपोऽपि सञ्चरेद् बहुसेवकः ॥ ७९ ॥**

**अन्वयः**—अयुतग्रामपः पञ्चायुती सेनपोऽपि बहुसेवकः चतुरश्वगः सर्वयानैश्च सञ्चरेत् ॥७९ ॥

**व्याख्या**—अयुतग्रामपः = दशसहस्रनिवसथाधिपतिः, पञ्चायुतसेनपोऽपि = पञ्चाशत्सहस्रसेनाधिपतिः अपि, बहुसेवकः = बहुपरिचारकपरिवृतः, चतुरश्वगः = घोटकचतुष्टयवाहितस्यन्दनारूढः, वा, सर्वयानगः = सकलवाहनगश्च सन्, सञ्चरेत् = परिभ्रमेत् ॥७९ ॥

**हिन्दी**—दस हजार गाँवों का मालिक या पचास हजार सैनिकों का अधिपति अनेक रक्षकों या सेवकों से घिरा चार घोड़े वाला रथ या किसी भी सवारी से घूमे ॥७९ ॥

**अयुतेति**। अयुतग्रामपः दशसहस्रग्रामाधिपः पञ्चायुतसेनपः अपि बहुसेवकः बहुभृत्यपरिवृतः चतुरश्वगः अश्वचतुष्टययुतरथारूढः सन् सञ्चरेत् ॥७९ ॥

**यथाधिकाधिपत्यन्तु वीक्ष्याधिक्यं प्रकल्पयेत् ।**
**कल्पयेच्च यथाधिक्यं धनिकेषु गुणिष्वपि ॥ ८० ॥**

**अन्वयः**—यथाधिकाधिपत्यं वीक्ष्य आधिक्यं प्रकल्पयेत्, तथा धनिकेषु गुणिष्वपि यथाधिक्यं कल्पयेत् ॥८० ॥

**व्याख्या**—यथाधिकाधिपत्यम् = स्वामित्वानुसारेण, वीक्ष्य = अवलोक्य, आधिक्यम् = सम्मानाधिक्यम्, प्रकल्पयेत् = अनुचिन्तयेत्। तथा धनिकेषु = समृद्धजनेषु, गुणिष्वपि = गुणवन्तेष्वपि, यथाधिक्यम् = आधिक्यानुसारेण, मानम्, कल्पयेत् = विचारयेत् ॥८० ॥

**हिन्दी**—जैसा बहुसंख्यक गाँवों या सैनिकों पर आधिपत्य हो उसी के अनुसार सम्मान की कल्पना करनी चाहिए। इसी तरह धन के अनुसार धनिकों की तथा गुण के अनुसार गुणियों के सम्मान की कल्पना करनी चाहिए ॥८० ॥

**यथेति**। यथाधिकाधिपत्यं वीक्ष्य आधिक्यं सम्मानाधिक्यं प्रकल्पयेत्। तथा धनिकेषु धनवत्सु गुणिष्वपि यथाधिक्यम् आधिक्यानुसारेण कल्पयेच्च सम्मानमिति भावः ॥८० ॥

**श्रेष्ठो न मानहीनः स्यान्न्यूनो मानाधिकोऽपि न।**
**राष्ट्रे नित्यं प्रकुर्वीत श्रेयोऽर्थी नृपतिस्तथा ॥८१ ॥**

**अन्वयः**—यथा श्रेष्ठः मानहीनः न स्यात् न्यूनः मानाधिकोऽपि न श्रेयोऽर्थी नृपतिः राष्ट्रे तथा नित्यं प्रकुर्वीत ॥८१ ॥

**व्याख्या**— यथा = येन प्रकारेण, श्रेष्ठः = वरेण्यः, मानहीनः = सम्मानरहितः, न = नहि, स्यात् = भवेत्, न्यूनः = हीनजनः, मानाधिकः = अधिकसम्माननीयः, न = नहि, स्यात् = भवेत्, श्रेयोऽर्थी = मङ्गलाकाङ्क्षी, नृपः = राजा, राष्ट्रे = राज्ये, तथा = तेनैव प्रकारेण, नित्यम् = सततम्, प्रकुर्वीत = विदध्यात् ॥८१ ॥

**हिन्दी**—कल्याणकामी राजा अपने राज्य में हमेशा यह ध्यान रखे कि मानवीय व्यक्ति के सम्मान में कमी न हो तथा हीन व्यक्ति अधिक सम्माननीय न हो जाय ॥८१ ॥

**श्रेष्ठ इति**। यथा श्रेष्ठः मानहीनः न स्यात्, न्यूनः निकृष्टश्च मानाधिकः अधिकमानयुतः न स्यात् श्रेयोऽर्थी मङ्गलार्थी नृपतिः राष्ट्रे राज्ये तथा नित्यं प्रकुर्वीत ॥८१ ॥

**हीनमध्योत्तमानान्तु ग्रामे भूमिं प्रकल्पयेत्।**
**कुटुम्बिनां गृहार्थन्तु पत्तनेऽपि नृपः सदा ॥८२ ॥**

**अन्वयः**—नृपः ग्रामे हीनमध्योत्तमानां तथा कुटुम्बिनां गृहार्थं पत्तनेऽपि भूमिं प्रकल्पयेत् ॥८२ ॥

**व्याख्या**—नृपः = राजा, ग्रामे = निवसथे, हीनानाम् = नीचानाम्, मध्यानाम् = साधारणजनानाम्, उत्तमानाम् = श्रेष्ठानाम्, तथा = तेनैव प्रकारेण, कुटुम्बिनाम् = आत्मीयानाम्, गृहार्थम् = सदनाय, पत्तनेऽपि = नगरेऽपि, भूमिम् = वासस्थानम्, प्रकल्पयेत् = दद्यात् ॥८२ ॥

**हिन्दी**—राजा सदा नीच, साधारण एवं उत्तम कोटि के लोगों के लिए गाँव में तथा अपने आत्मीय जनों के निवास के लिए शहर में वासभूमि की व्यवस्था करे ॥८२ ॥

**हीनेति**। नृपः ग्रामे हीनानां मध्यानाम् उत्तमानाञ्च तथा कुटुम्बिनां स्वजनानां गृहार्थं पत्तनेऽपि नगरेऽपि भूमिं वासस्थानं प्रकल्पयेत् ॥८२ ॥

द्वात्रिंशत्प्रमितैर्हस्तैर्दीर्घार्द्धा विस्तृताधमा।
उत्तमा द्विगुणा मध्या सार्द्धमाना यथार्हतः।
कुटुम्बसंस्थितिसमा न न्यूना वाधिकापि न॥ ८३॥

**अन्वयः**—अधमा द्वात्रिंशत्प्रमितैः हस्तैः दीर्घा विस्तृतौ अर्द्धा उत्तमा यथार्हतः द्विगुणा मध्या सार्द्धमाना कुटुम्बसंस्थितिसमा न न्यूना वा अधिकाऽपि न॥ ८३॥

**व्याख्या**—अधमा = नीचनिवासभूमिः, द्वात्रिंशत्प्रमितैः = द्वात्रिंशत्परिमितैः, हस्तैः = करैः, दीर्घा = आयामा, विस्तृतौ = आयामविस्तारौ, अर्द्धा = तदर्द्धा, द्विगुणा = अधमात् द्विगुणा, चतुष्षष्टिहस्तदीर्घा तथा द्वात्रिंशत्हस्तविस्तृता, मध्या = सामान्यस्तरीया, निवासभूमिः, सार्द्धमाना = अर्द्धसहिताधमा, अष्टचत्वारिंशद्हस्तदीर्घा, चतुर्विंशतिहस्तविस्तृतेति यावत्, कुटुम्बानाम् = आत्मीयानाम्, संस्थितौ = निवासभूमिः, समा = तुल्या, सर्वेषामात्मीयानां समाना वासभूमिः विधेया, न्यूना = अल्पा, न = नहि, अधिकाऽपि = विशेषाऽपि, न = नहि, देया॥ ९३॥

**हिन्दी**—बत्तीस हाथ लम्बी और सोलह हाथ चौडी अधमा, चौसठ हाथ लम्बी और बत्तीस हाथ चौड़ी उत्तमा तथा अड़तालीस हाथ लम्बी और चौबीस हाथ चौडी सामान्य स्तर की वास-भूमि कहलाती है। राजा अपने आत्मीयों के लिए न कम न ज्यादा बिलकुल समान वासभूमि की व्यवस्था करे॥ ८३॥

वासभूमेर्मानमाह— **द्वात्रिंशदिति**। अधमा वासभूमिः द्वात्रिंशत्प्रमितैः हस्तैः दीर्घा, विस्तृतौ अर्द्धा तदर्द्धा षोडशहस्तपरिमिता इत्यर्थः। उत्तमा वासभूमिः यथार्हतः यथायोग्यं द्विगुणा अधमद्विगुणा चतुःषष्टिहस्तदीर्घा द्वात्रिंशद्धस्तविस्तृता इत्यर्थः। मध्या वासभूमिः सार्द्धमाना अर्द्धसहिताधमा इत्यर्थः, अष्टचत्वारिंशद्धस्तदीर्घा चतुर्विंशतिहस्तविस्तृतेति यावत् कुटुम्बानां संस्थितौ समा सर्वेषां कुटुम्बानां समाना वासभूमिः कार्य्या, न्यूना न, अधिकापि च न॥ ८३॥

ग्रामाद् बहिर्वसेयुस्ते ये ये त्वधिकृता नृपैः।
नृपकार्य्यं विना कश्चिन्न ग्रामं सैनिको विशेत्॥ ८४॥

**अन्वयः**—ये ये नृपैः अधिकृताः ते ग्रामात् बहिः वसेयुः। कश्चित् सैनिकः नृपकार्य विना ग्रामं न विशेत्॥ ८४॥

**व्याख्या**—ये ये = जनाः, नृपैः = राजभिः, अधिकृताः = कार्ये नियुक्ताः, ते = जनाः, ग्रामात् = निवसथात्, बहिः = बाह्यक्षेत्रे, वसेयुः = निवासं कुर्युः, कश्चित् = कोऽपि, सैनिकः = आयुधिकः, नृपकार्यम् = राज्ञानुदेशम्, विना = विहाय, ग्रामम् = निवसथे, न = नहि, विशेत् = प्रवेशं कुर्यात्॥ ८४॥

**हिन्दी**—राजा ने जिन अधिकारियों को नियुक्त किया है, उन्हें गाँव से बाहर निवास करना चाहिए। किसी भी सैनिक को राजकार्य के बिना ग्राम में प्रवेश नहीं करना चाहिए॥ ८४॥

**ग्रामादिति**। ये ये नृपैः अधिकृताः कार्य्ये नियुक्ताः ते ग्रामात् बहिः वसेयुः। कश्चित् सैनिकः नृपकार्य्यं विना ग्रामं न विशेत्॥ ८४॥

तथा न पीडयेत् कुत्र कदापि ग्रामवासिनः।
सैनिकैर्न व्यवहरेन्नित्यं ग्राम्यजनोऽपि च॥ ८५॥

**अन्वयः**—तथा सैनिकः कुत्र कदापि ग्रामवासिनं न पीडयेत्। ग्राम्यजनोऽपि नित्यं सैनिकैः न व्यवहरेत् ॥८५॥

**व्याख्या**—तथा = तेनैव प्रकारेण, सैनिकः = आयुधिकः, कुत्र = कस्मिन्नपि स्थाने, कदापि = कस्यामपि अवस्थायां, ग्रामवासिनः = ग्राम्यजनान्, न = नहि, पीडयेत् = क्लिश्येत्, ग्राम्यजनोऽपि = ग्रामीणजनोऽपि, नित्यम् = सततम्, सैनिकैः = आयुधिकैः, न = नहि, व्यवहरेत् = व्यवहारं कुर्यात् ॥८५॥

**हिन्दी**—और सैनिक कहीं किसी ग्रामीण को कभी कष्ट न दे और ग्रामीणों को भी चाहिए कि वे किसी सैनिक के साथ किसी प्रकार का व्यवहार न करे ॥८५॥

**तथेति**। तथा सैनिकः कुत्र कस्मिन्नपि स्थाने कदापि ग्रामवासिनः जनान् न पीडयेत् ग्राम्यजनोऽपि नित्यं सततं सैनिकैः न व्यवहरेत् ॥८५॥

**श्रावयेत् सैनिकान् नित्यं धर्मं शौर्य्यविवर्द्धनम्।**
**सुवाद्यनृत्यगीतानि शौर्य्यवृद्धिकराण्यपि ॥८६॥**

**अन्वयः**—नित्यं सैनिकान् शौर्यविवर्द्धनं धर्मं तथा शौर्यवृद्धिकराणि सुवाद्यनृत्यगीतानि च श्रावयेत् ॥८६॥

**व्याख्या**—नित्यम् = प्रतिदिनम्, सैनिकान् = सेनाचरान्, शौर्यविवर्द्धनम् = वीरत्वसंवर्धकम्, धर्मम् = धर्मयुद्धम्, तथा शौर्यवृद्धिकराणि = वीरत्ववर्द्धकाणि, सुवाद्यानि = सुष्ठु वादित्राणि, गीतानि = गायनानि, च = पुनः, नृत्यानि = नर्त्तनानि, श्रावयेत् = आकर्णयेत् ॥८६॥

**हिन्दी**—राजा सैनिकों की वीरता बढाने वाले धर्मयुद्ध की कथा सुनायें। प्रतिदिन शूरत्व-वर्द्धक बाजे, नृत्य-गीत भी सुनवाये ॥८६॥

**श्रावयेदिति**। नित्यं सततं सैनिकान् शौर्य्यविवर्द्धनं शौर्य्यवृद्धिकरं धर्मं युद्धधर्मं तथा शौर्य्यवृद्धिकराणि सुवाद्यानि नृत्यानि गीतानि च श्रावयेत् ॥८६॥

**युद्धक्रियां विना सैन्यं योजयेन्नान्यकर्मणि ॥८७॥**

**अन्वयः**—सैन्यं युद्धक्रियां विना अन्यकर्मणि न योजयेत् ॥८७॥

**व्याख्या**—सैन्यम् = सैनिकम्, युद्धक्रियाम् = साङ्ग्रामिककर्म, विना = विहाय, अन्यकर्मणि = अपरस्मिन् कार्ये, न = नहि, योजयेत् = नियुक्तं कुर्यात् ॥८७॥

**हिन्दी**—सैनिकों को युद्ध के अतिरिक्त किसी अन्य कार्य में न लगाये ॥८७॥

**युद्धक्रियामिति**। सैन्यं युद्धक्रियां साङ्ग्रामिकव्यापारं विना अन्यकर्मणि न योजयेत् न नियुक्तं कुर्य्यात् ॥८७॥

**सत्याचारास्तु धनिका व्यवहारे हता यदि।**
**राजा समुद्धरेत् तांस्तु तथान्यांश्च कृषीबलान् ॥८८॥**

**अन्वयः**—सत्याचाराः धनिकाः यदि व्यवहारे हताः, राजा तान् तथा अन्यान् कृषीबलान् समुद्धरेत् ॥८८॥

**व्याख्या**—सत्याचाराः = सत्यमार्गावलम्बिनः, धनिकाः = समृद्धिशालिनो जनाः, यदि = चेत्, व्यवहारे = व्यापारे, हताः = निहताः, क्षतिग्रस्ता भवेयुः, तदा राजा = नृपः, तान् = जनान्, तथा अन्यान् = अपरानपि जनान्, कृषीबलान् = कृषिकान्, समुद्धरेत् = निस्तारयेत् ॥८८॥

**हिन्दी**—यदि कोई ईमानदार व्यक्ति या किसान व्यवहार में विनष्ट हो जाय तो राजा उसकी सहायता कर उद्धार करे ॥८८॥

**सत्याचारा इति**। सत्याचाराः सत्यपथावलम्बिनः धनिकाः यदि व्यवहारे वाणिज्यादौ हताः विनष्टाः क्षतिग्रस्ता इत्यर्थः भवेयुः, तदा राजा तान् तथा अन्यान् तथाविधान् कृषीबलान् कृषिजीविनश्च समुद्धरेत् ॥८८॥

**ये सैन्यधनिकास्तेभ्यो यथार्हां भृतिमावहेत्।**
**पारदेश्यञ्च त्रिंशांशमधिकं तद्धनव्ययात् ॥८९॥**

**अन्वयः**—ये सैन्यधनिकाः तेभ्यः यथार्हां भृतिं तथा तद्धनव्ययात् अधिकं पारदेश्यं त्रिंशांशम् आवहेत् ॥८९॥

**व्याख्या**—ये = जनाः, सेन्येषु = सैनिकेषु, धनिकाः = धनवन्तः, तेभ्यः = धनिकेभ्यः, यथार्हाम् = यथायोग्याम्, भृतिम् = वेतनम्, तदा तस्य, धनव्ययात् = अर्थनिर्गमनात्, अधिकम् = विशेषम्, पारदेश्यम् = विदेशगमनार्थम्, त्रिंशांशम् = त्रिंशांशकम्, आवहेत् = निष्पादयेत् ॥८९॥

**हिन्दी**—धनी सैनिकों को उनकी योग्यता अनुसार वेतन निर्धारित करे। राजधानी से बाहर जाने पर मूल वेतन का तीसवाँ भाग भत्ता के रूप में दे ॥८९॥

**ये इति**। ये जनाः सैन्येषु मध्ये धनिकाः तेभ्यः यथार्हां यथायोग्यां भृतिं तथा तस्य धनव्ययात् अधिकं पारदेश्यं परदेशगमनार्थं त्रिंशांशञ्च आवहेत् दद्यात् ॥८९॥

**धनं संरक्षयेत्तेषां यत्नतः स्वात्मकोशवत्।**
**संहरेद्धनिकात् सर्वं मिथ्याचाराद्धनं नृपः ॥९०॥**

**अन्वयः**—स्वात्मकोशवत् तेषां धनं यत्नतः संरक्षेत्। किञ्च नृपः मिथ्याचारात् धनिकात् सर्वं संहरेत् ॥९०॥

**व्याख्या**— स्वात्मकोशवत् = स्वकीयवैभवमिव, तेषाम् = सैन्यानाम्, धनम् = वित्तम्, यत्नतः = सायासः, संरक्षेत् = सङ्गोपयेत्, किञ्च, नृपः = राजा, मिथ्याचारात् = कपटव्यवहारात्, धनिकात् = सम्पन्नजनात्, सर्वम् = निखिलं धनम्, संहरेत् = अपहरेत् ॥९०॥

**हिन्दी**—और सैनिकों के धन को अपने खजाने की तरह राजा को रक्षा करनी चाहिए। यदि कोई व्यक्ति धोखघड़ी से धन इकट्ठा करे तो राजा उसका सर्वस्व छीन ले ॥९०॥

**धनमिति**। आत्मकोशवत् निजधनमिव तेषां धनिकसैन्यानां धनं यत्नतः यत्नेन संरक्षेत्। किञ्च नृपः मिथ्याचारात् मायाव्यवहारिणः धनिकात् सर्वं धनं संहरेत् ॥९०॥

**यदा चतुगुर्णा वृद्धिर्गृहीता धनिकेन च।**
**अधमर्णान्न दातव्यं धनिने तु धनं तदा ॥९१॥**

**इति शुक्रनीतौ खिलनीतिनिरूपणं नाम पञ्चमोऽध्यायः।**

---

**अन्वयः**—यदा धनिकेन अधमर्णात् चतुर्गुणा वृद्धिः गृहीता तदा धनिने धनं न दातव्यम् ॥९१॥

**व्याख्या**—यदा = यस्मिन् काले, धनिकेन = उत्तमर्णेन, अधमर्णात् = धारकात्, चतुर्गुणा, वृद्धिः = वार्द्धुष्यम्, गृहीता = सम्प्राप्ता, तदा, धनिने = उत्तमर्णाय, धनम् = अर्थम्, न = नहि, दातव्यम् = प्रत्यर्पयितव्यम् ॥ ९१ ॥

**हिन्दी**—और जब मूल धन से सूद चौगुना अधिक दे दिया जाय तब महाजन को मूल धन भी वापस नहीं करना चाहिए ॥ ९१ ॥

**इस प्रकार शुक्रनीति में 'खिलनीतिनिरूपण' नामक पञ्चम अध्याय की 'विमला' संस्कृत-हिन्दी व्याख्या समाप्त हुई।**

---

**यदेति।** यदा धनिकेन उत्तमर्णेन अधमर्णात् चतुर्गुणा वृद्धिः गृहीता, तदा धनिने तस्मै उत्तमर्णाय धनं मूलमित्यर्थः, न दातव्यं अधमर्णेनेति शेषः ॥ ९१ ॥

**इति श्रीजीवानन्दविद्यासागरविरचिता पञ्चमाध्यायव्याख्या समाप्ता।**

समाप्तश्च ग्रन्थः।

---

## व्याख्यातुः परिचयः

मिथिलाया दक्षिणे भागे गङ्गायाश्चोत्तरे तटे।
अकबरपुरनामके ग्रामे सानुजः वसतो मुदा ॥ १ ॥
बेगूसरायनगरेऽस्मिन्त्यक्त्वा जाह्नवीतटम्
समागतोऽस्मि वासाय ग्रन्थनिर्माणहेतवे ॥ २ ॥
साक्षाच्छक्तिस्वरूपिणीं सुखमयीं सौभाग्यसंवर्द्धिनीं
माता मे च सरस्वती सुकृतिनीं धर्मैकनिष्ठामयीम्।
शास्त्रज्ञानप्रबुद्धशुद्धचरितः श्रीकीर्त्तिनाथः पिता,
तज्जोऽहं जगदीशचन्द्रमुदितः प्राप्तावकाशः गृही ॥ ३ ॥
चन्द्राङ्कवसुभूः शाके आषाढस्यासिते दले।
सप्तम्यां रविवारे च निशायाः पश्चिमे पले।
दत्वाशिषश्च मे तात क्षिप्त्वा गृहधुरम्मयि।
वैकुण्ठाधिपतिं ध्यात्वा वैकुण्ठञ्च समाययौ ॥ ४ ॥
बाणव्योमाङ्कचन्द्राऽब्दे शाके ज्येष्ठाऽसिते शनौ।
द्वितीयायां समाप्येहलीला मे जननीयजौ ॥ ५ ॥
शुक्राचार्यप्रणीतस्य शुक्रनीतेर्विशिष्टता।
विविच्य लिखिता व्याख्या नात्यल्पा नातिविस्तृता ॥ ६ ॥
खिष्ट्रे गुणाङ्कनिधिचन्द्रेशनावीषे सितान्विते।
समाप्तिरगमद्व्याख्या विमलेयं विचक्षणा ॥ ७ ॥

---

# श्लोकानुक्रमणिका

*____*____*

ग्रन्थरत्न अनेक संस्करणों में अनेक रूप में प्रकाशित हैं। इनमें ऑपर्ट (Oppert) महोदय का मद्रास से प्रकाशित संस्करण, जीवानन्द विद्यासगार द्वारा कलकत्ता से प्रकाशित संस्करण, प्राध्यापक विनय कुमार सरकार का 'Sacred Books of Hundu Series' में अंग्रेजी अनुवाद का संस्करण, पण्डित श्री ब्रह्मशङ्कर मिश्र द्वारा लिखित संस्करण जहाँ-तहाँ पूरे-अधूरे रूप में उपलब्ध है। परन्तु इस ग्रंथरत्न के विभिन्न संस्करणों को मिलाकर देखने पर इसमें अनेक विभिन्नताएँ दीख पड़ती है।

प्रस्तुत संस्करण लेखक ने जीवानन्द विद्यासागर द्वारा प्रकाशित संस्करण के मूल पाठ को अपनी संस्कृत-हिन्दी व्याख्या का आधार बनाया है। साथ ही जीवानन्द विद्यासागर की संस्कृत टीका को भी इसमें सम्मिलित किया गया है।

ISBN : 978-93-81484-43-2
(Set In Two Parts)

# योगवासिष्ठः
## (महारामायणम्)

भाषानुवादकारः
**पण्डित श्रीकृष्णपन्तशास्त्री**
पूर्वअध्यक्ष, अच्युतग्रन्थमाला-काशी

सम्पादकौ
**पण्डित श्रीकृष्णपन्तशास्त्री**
**पण्डित श्रीमूलशङ्करशास्त्री**

भूमिकालेखकः संशोधकश्च
**प्रोफेसर मदनमोहन अग्रवाल**

**योगवासिष्ठ** वेदान्तशास्त्र के मुख्य प्रमाणित ग्रन्थ प्रस्थानत्रयी = उपनिषद्, ब्रह्मसूत्र और गीतादि के समान संस्कृत भाषा में अद्वैतवेदान्त का बृहत् ग्रन्थ है । बृहद् योगवासिष्ठ में लगभग बत्तीस हजार (32000) या तैंतीस हजार (33000) श्लोक हैं । यह ग्रन्थ योगवासिष्ठमहारामायण, महारामायण, आर्षरामायण, वासिष्ठरामायण, ज्ञानवासिष्ठ और वासिष्ठ आदि नामों से भी ज्ञात है । यह ग्रन्थ अत्यन्त आदरणीय है, क्योंकि इसमें किसी सम्प्रदायविशेष का उल्लेख नहीं है । भारत के एक कोने से दूसरे कोने तक इसका पाठ, मूल तथा भाषानुवाद में, चिरकाल से होता चला आ रहा है । जो महत्त्व भगवद् भक्तों के लिए भागवतपुराण और रामचरितमानस का है, तथा कर्मयोगियों के लिए भगवद्गीता का है, वही महत्त्व ज्ञानियों के लिए योगवासिष्ठ का है । सहस्रों स्त्री-पुरुष–राजा से रङ्क तक–इस अद्भुत ग्रन्थ के अध्ययन से प्रतिदिन के जीवन में आनन्द और शान्ति प्राप्त करते रहे हैं । इस ग्रन्थ में प्रायः सभी प्रकार के पाठकों के अनुयोग के लिए सामग्री प्रस्तुत है । जहाँ अबोध बालक भी इसकी कहानियाँ सुनकर प्रसन्न होते हैं, वहा बड़े-बड़े विद्वानों के लिए गहनतम दार्शनिक सिद्धान्तों का इसमें प्रतिपादन है । ऐसा कोई भी प्रश्न नहीं है, जिसका समाधान इसमें प्राप्त न हो । यह ऐसा अद्भुत ग्रन्थ है कि इसमें काव्य, उपाख्यान तथा दर्शन—सभी का आनन्द वर्तमान है । यह सब श्रुतियों का सार एवं माण्डूक्यकारिका का वार्तिक = व्याख्यान ग्रन्थ है । महर्षि वसिष्ठ ने स्वयं कहा है—

**यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् । इमं समस्तविज्ञानशास्त्रकोशं विदुर्बुधाः ॥**

**योगवासिष्ठ** के प्रस्तुत संस्करण में संस्कृत के प्रत्येक श्लोकों की अत्यन्त सरल हिन्दी भाषा में सुन्दर विवेचना की गई है, जो इसकी प्रमुख विशेषता है । कोई भी व्यक्ति, जो संस्कृत से सर्वथा अपरिचित है, इसका सरलतापूर्वक अध्ययन कर योगवासिष्ठ के गूढ़दार्शनिक स्थलों को हृदयंगम कर सकेगा और उसको मुक्तिलाभ के लिए अन्य साधनों की अपेक्षा नहीं होगी । मोक्षप्राप्ति के उपाय ढूँढने की चेष्टा में व्यक्ति को आत्मानुभव होता है । इस ग्रन्थ के अध्ययन से व्यक्ति के सम्पूर्ण क्लेशों-दुःखों का अन्त होकर उसके हृदय में अपूर्व शान्ति प्राप्त होगी । अध्ययनार्थी सांसारिक सुख-दुःख की परिधि से बाहर निकलकर परम आनन्द का अनुभव करेगा । मनोयोगपूर्वक अध्ययन करनेवाले निश्चय ही इस जीवन में ब्रह्मज्ञान कर मुक्ति को प्राप्त करेंगे । यह ग्रन्थ ज्ञान का भण्डार है। वेदान्त के ग्रन्थों में यह चमकता हुआ रत्न है । मुमुक्षु के लिए यह ग्रन्थ नित्य स्वाध्याय-योग्य है । ग्रन्थ की मौलिक उपादेयता की दृष्टि से आशा की जा सकती है कि वेदान्त के सच्चे जिज्ञासुओं में इसका विशेष प्रचार-प्रसार होगा ।

प्रथम संस्करण : 2011 मूल्य : 10000 ( 1-6 भाग सम्पूर्ण )

**चौखम्बा सुरभारती प्रकाशन-वाराणसी**